प्राच्यभारतीग्रन्थमाला—१५

ऋग्वेदीयम्

# ऐतरेयब्राह्मणम्

श्रीमत्सायणाचार्यकृत–'वेदार्थप्रकाश'–नामभाष्येण सहितम्
'सरला'–ख्यया हिन्दीव्याख्यया चोपेतम्
टिप्पण्यादिसमन्वितम्

सम्पादकोऽनुवादकश्च

**डॉ० सुधाकर मालवीयः**
एम० ए०, पीएच० डी०, साहित्याचार्य
( संस्कृत विभाग काशी हिन्दू विश्वविद्यालय )

प्रास्ताविकम्
**डॉ० गौरीनाथ शास्त्री**
कुलपति
सम्पूर्णानन्दसंस्कृतविश्वविद्यालय

## द्वितीयो भागः

[ पञ्चमतः—अष्टमपञ्चिकान्तः ]

प्रकाशकः

**तारा प्रिंटिंग वर्क्स**
वाराणसी

१९८३ तमः ख्रिष्टाब्दः ]  [ २०४० तमो वैक्रमाब्दः

*Prāchyabhāratī Series—15*

# THE AITAREYA BRĀHMAṆA

OF

# THE ṚGVEDA



With the Commentary

VEDĀRTHA-PRAKĀŚA OF SĀYAṆĀCĀRYA

AND 'SARALĀ' HINDI TRANSLATION

*Edited & Translated by*

Dr. SUDHAKAR MALAVIYA

M. A., Ph. D., Sāhityācārya

DEPARTMENT OF SANSKRIT & PALI

BANARAS HINDU UNIVERSITY

*Foreword by*

Dr GAURI NATH SASTRI

VICE-CHANCELLOR, SAMPURNANAND SANSKRIT UNIVERSITY

VARANASI

**VOL. II**

TARA PRINTING WORKS

VARANASI

1983

प्रकाशकः
तारा प्रिंटिंग वर्क्स
कमच्छा
वाराणसी २२१०१० (उ० प्र०)

*Published by*
Tara Printing Works
Kamachha
Varanasi 221010 (U. P).

प्रथमं संस्करणम्
मूल्यम् ८५ ००
( पञ्चाशीतिः रूप्यकाणि )

**First Edition**
Price Rs. 85 00
(Rupees Eightyfive only)

मुद्रकः
चेतना प्रिंटर्स
पाण्डेयपुर, वाराणसी

*Printed at*
Chetana Printers
Pandeypur, Varanasi

॥ श्रीः ॥

श्रीमद्गुरुवर्यायाः मिश्रकुलालङ्कारमणिमालायाः

प्रोफ़सर डॉ० पद्मामिश्रमहोदयायाः

करकमले सादरं

समर्पितम्

  

गृह्णन्ति सर्वे गुणिनं सदैव
न निर्गुणं वाञ्छति कोऽपि किन्तु ।
यो निर्गुणञ्चापि गुणीकरोति
प्रकीर्त्यतेऽसौ भुवने गरीयान् ॥

—सुधाकर मालवीयः

# FOREWORD

Vedic literature represents the oldest Indo-European literary monument in which the culture and civilisation of the ancient Indian people are reflected According to Indian traditions it comprises two parts, Samhita (also called Mantra) and Brahmana Indian scholars have found it difficult to define them It is worthy of consideration that the author of the Mīmamsā sutras gives the following definitions Mantra is what reminds us of objects enjoined to be performed, the rest (of Vedic literature) is called Brāhmana

For obvious reasons the aforesaid definition of Mantra is inconclusive and, that being so, the definition of Brahmana also has no legs to stand upon It is for this reason that attempts have been made to frame precise descriptions of both so that they may be distinguished But unfortunately these descriptions, too, are found to be inexhaustive Finally, it is held that Mantras are those Vedic texts which are called so in Indian traditions In the same way, Brahmanas are those Vedic texts which Vedic scholars designate as such

For all practical purposes, however, Samhitas or Mantras may be described as collections of hymns, prayers, incantations, benedictions, sacrificial formulas and litanies And, Brahmanas are dissertations on *Brahman*, that is Mantra, they are voluminous prose texts containing theological matter specially observations on sacrifices and mystical significance of different sacrificial rites and ceremonies

The Brāhmana literature is divided into three parts, Pure Brahmaṇas, Āranyakas and Upanisads It may be noted that though Āranyakas and Upanisads form parts of Brahmana literature, yet some of them are independent texts But, whether they are parts of Brahmanas or independent texts, the fact remains that there is continuity of one thought current holding

them together and justifying their common designation as Brahmana It may be observed in passing that in spite of the rich variety of topics contained therein the entire Vedic literature Mantra and Brahmana reflects a unity of thought that has undergone change and development from the days they were first composed till the times they were completed Though Mantra literature and Pure Brahmanas are described as the Book of Work (*Karma kanda*) and Āranyaka and Upanisads are designated as the Book of Knowledge (*Jnana kanda*) and though we are prone to think in terms of antagonism between *karman* and *jñana* as means to the ultimate goal of life which is very much in evidence in works of later years we venture to state without any hesitation that *mantras* of the four Samhitas and texts of Brahmanas, Āranya kas and Upanisads breathe one single spirit of spiritual realisation on the part of Vedic seers, a band of inspired people endowed with the requisite power of transmission of their intuitive-knowledge through a medium of expression of unquestionable authority, sublime and eloquent It should be noted that Vedic sacrifices are not formal rituals intended to confer upon the performer a happy base of life in the heaven after death Their aim is to raise moral consciousness to the plane of undying eternal consciousness for which the name *svah* (heaven) is given—a state of perennial ecstasy where all thirsts are quenched Both *dravya yajña* and *jñāna yajña* can reach us to that height And, as such, it is almost futile to argue a case for contradiction between *karman* and *jnana* so far as Vedic literature and its purport are concerned This may be proved on the strength of the fact that Samhita, Brahmana and Upanisad texts are mixed up with one another leaving the impression that there is hardly any antagonism among them in respect of their purport It may be recalled in this context that the *Bhagavadgita* states

"सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते" ।

Among the three parts of the Brāhmana literature Pure Brahmanas confine themselves to matters relating to sacrifice

Although the sanctity of Mantra literature is somewhat unique and outstanding, it can be said expl citly that the utility of Brahmanas is never to be underestimated as aids to the under standing of *mantras* Brahmana means dissertation on *Brahman* or *Mantra which contain the two elements of karman and jnana* on which dissertation was felt necessary and the Brahmana literature came into being parts of it explaining matters relating to *karman* and parts again dealing with issues concerning *jna ia*

It cannot be es ablished that the whole of the Brahmana literature is posterior to Mantra literature because then it would be difficult to explain how the Mantras were under stood and employed in the days of their composition parti cularly again when it is admitted that Mantras were generally used in Vedic rituals Thus the Brahmanas are the earliest expositions of the meaning of Mantras but they do not explain Vedic texts word by word The aim of Brahmanas is to point *out the link between a mantra and its application to a ritual* and not to paraphrase and explain every word of every hymn The Pure Brahmanas chiefly enlighten us with the course of ritualistic activities and they do not advocate any bias against knowledge To the contrary they often declare that the knowledge of the purpose of a sacrifice is as much effective as its 'performance

The two extant Brahmanas of the Rgveda are called Aitareya and Sankhayana which is named Kausitaki as well Mahidasa Aitareya is the compiler of the Aitareya Brahmana The chapters of this Brahmana describe Agnistoma, Gava mayana Dvadasaha Agnihotra and Rajasuya sacrifices and thus it dea s with oma sacrifices only Prof A B Keith has made a comprehensive and comparative study of these two extant Brahmanas of Rgveda in his monumental work entitled Rigveda Brahmana The Aitareya and Kausitaki Brahmanas of the Rigveda '

The present edition of Aitareya Brāhmana in two volumes consists of the text with the Bhāsya written by Ācārya Sāyana together with its Hindi translation. The editor and translator, Dr Sudhakara Malaviya has carefully edited the text and its Bhasya providing notes wherever necessary and giving its exposition in Hindi. In the end the Aitareya Brāhmana Kroda Patra and index of *Pratikas* have been given which make this edition quite useful. I hope this edition of Aitareya Brahmana will be most helpful to the scholars engaged in Vedic Studies.

**Gaurinath Sastri**
*Vice-chancellor*
Sampurnanand Sanskrit University
Varanasi

15th August, 1983

# सम्पादकीयम्

अथेदानीं सामोदं प्राकाश्यं नीयते ऋग्वेदीयऐतरेयब्राह्मणस्य पञ्चमाद्यष्टमपञ्चिकान्त द्वितीयो भाग । १९८० तमे खिष्टाब्दे सितम्बरमासे मपरिष्कृत्य सायणभाष्यसहित हिन्दी॰व्याख्यासहितश्च चतुर्थपञ्चिकात्मक प्रथमो भाग सम्पादित । तामेव सरणीमनुसरन्नस्मिन् भागे श्रीमत्सायणाचार्यविरचित-'वेदार्थप्रकाश'-स्वभाष्यसहितो हिन्दी॰व्याख्यायुतश्चाऽय ग्रन्थ श्रीविश्वनाथकृपया सम्पूर्णतामगमत् ।

चत्वारिंशदध्यायोपेतस्य ब्राह्मणस्य विंशत्यध्यायोपेते प्रथमे खण्डे–चतु सस्थो ज्योतिष्टोम प्रथमत व्याख्यात । तत्रापि प्रथमाध्याये—दीक्षणीयेष्टि, द्वितीये—प्रायणीयेष्टि, उदयनीयेष्टिश्च, तृतीये—आतिथ्येष्टि, चतुर्थे—प्रवर्ग्याभिष्टव, उपसदिष्टिश्च, पञ्चमे—सोमक्रयाद्या —इत्येवमुत्तरत्र गवामयनमादित्यानामयनमङ्गिरसामयन चैते सवत्सरसत्रविशेषा । विंशत्यध्यायोपेतेऽस्मिन् द्वितीये खण्डे—अग्निहोत्रादिकम् पश्वङ्गविभागादिकम्, राजयज्ञे स्तोत्रशस्त्रयोर्विशेषादिकञ्च अनुक्रमेण वक्ष्यन्ते ।

अत्र ग्रन्थे 'ऐतरेय-ब्राह्मण क्रोडपत्रम्', ऐतरेयब्राह्मणखण्डान्तर्गतप्रतीकाना वर्णानुक्रमणिका, ऋग्वेदमन्त्राणा वर्णानुक्रमणिकादि चान्ते निवेशिता । अत आशासे सर्वमेवैतद् बहूपयोगि सम्पत्स्यते स्वाध्यायशीलेभ्य वैदिकशोधछात्रेभ्य ।

एव यत्र तत्रोपलब्धान् पाठभेदानधो निवेश्य, दुरूहस्थलेषु च टिप्पणमपि संयोज्य, अत्र प्रतीकनिर्दिष्टाना तत्तद् वेदस्थमन्त्राणा स्थानसकेतश्चाधो निवेश्य प्रकाश्यतेऽयम् ऋग्वेदीय ऐतरेयब्राह्मणस्य द्वितीयोभाग ।

अन्ते, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य 'कुलपति' पदमलङ्कुर्वाणा श्रद्धेया गुरुकल्पा प॰ श्रीगौरीनाथशास्त्रिमहोदय अस्य ग्रन्थस्य प्रास्ताविक विलिख्य माम् अनुगृहीतवन्त इति तेषाम्, एतस्य प्रकाशकाना—

काशीस्थ तारायन्त्रालयाधिपतीना दुर्लभप्राचीनसंस्कृतग्रन्थरत्नाना प्रकाशने रताना श्रीरमाशङ्करपण्ड्यामहोदयानाञ्च आभार मया हृदयेन स्वीक्रियते ।

उत्तरप्रदेश-संस्कृत-अकादमी द्वारा प्रथमभागमाश्रित्य प्रदत्तः पुरस्कारः तादृशस्यैव द्वितीयभागस्य प्रस्तुतसंस्करणस्यापि साधकस्यैव गौरवम्। अतस्तस्य कृतेऽपि सम्पादकः कृतज्ञतां ज्ञापयति।

ग्रन्थस्यास्य संशोधने भाषाभाष्ये च यासां सन्मन्त्रणया प्रवृत्तोऽहमभवम्, यासां च वेदशास्त्रार्थानुशीलनपद्धत्या बहुशोऽहमुपकृतो जातः, तासामेव विमलधीयुतानाम् अस्मद् गुरुचरणानां शिष्यानुकम्पिनीनां प्रोफेसर डॉ० पद्मामिश्र-महोदयानाम् आशीर्वादकामनया प्रणतिपुरस्सरं ता अभ्यर्थये—

चरन् वै मधु विन्दति चरन् स्वादुमुदुम्बरम्।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरंश्चरैवेति॥

—ऐ० ब्रा० ३३ ३

गङ्गादशहरा सं० २०४०
संस्कृत विभाग
कला संकाय
काशी हिन्दू विश्वविद्यालय

विदुषां वशंवदः
सुधाकर मालवीयः

# भूमिका

वेदस्य लक्षण प्रामाण्य तदर्थज्ञानस्य महत्त्वञ्चेत्यादयो बहवो विषया श्रीमत्सायणाचार्यैरेव ऐतरेयब्राह्मणभाष्यस्योपोद्घाते सविस्तर निरूपिता । अतस्तदधिकृत्यापरोपोद्घात पिष्टपषणमेव स्यात् तथापि अध्येतॄणा सौकर्याय सक्षेपेणैव व्युत्पत्तिपूर्वक वेदस्य ब्राह्मणशब्दस्य च यत्किञ्चिद् इतिवृत्तमधुना प्रस्तूयते । विद्' धातो करणार्थे घञ् प्रत्यये सति निष्पन्नो 'वेद'शब्दो विद्वद्भिरेव निरुच्यते—'विद्यन्ते धर्मादिपुरुषार्थचतुष्टयोपाया येन स वेद' इति । एतदेव विशदीकृतमत्र सायणाचार्ये 'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपाय यो ग्रन्थो वेदयति स वेद ' इति ।

अनित्येऽपि ससारेऽस्मिन् सर्वे लोका सुखावाप्तिसाधनेषु दु खपरिहारोपायेषु च व्यापृता दृश्यन्ते । पुत्रैषणा वित्तैषणा लोकैषणेति—एषणात्रयरूपेण परिणतोऽय तेषा मायास । यैरलौकिकैरुपायै साफल्य भजेत ते वेदाधिगमेनैव ज्ञातव्या इति वेदशब्दस्यैव व्युत्पत्तिरेव सूचयति । कि वा वेदस्य वेदत्वमित्युद्दिश्यदमपि स्मयते—

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एन विदन्ति वेदेन तस्माद् वेदस्य वेदता ॥"

तथाहि, प्रत्यक्षादिभि प्रमाणैर्यो नावगम्यते, त स्वर्गादि श्रेय साधनीभूतमुपाय य आवेदयति, स एव वेदशब्दस्य वाच्य । एवमलौकिकोपायप्रख्यापक कोऽय वेद ? इति जिज्ञासाया समाधानरूपा आपस्तम्बस्य तदीयश्रौतसूत्रे उक्तिरिय चिरकालादेव अद्यावधि प्रचलतीत्येव—

'मन्त्रब्राह्मणयोर्वेद नामधेयम्'[1] इति ।

अनेकैराचार्य वेदस्यायमेव स्वरूपबोध पुन पुनरनुमादित , अस्यैव तात्पर्य च शब्दा तरेण अनेकश प्रख्यापितम् । अधोनिर्दिष्टैरुल्लेखैरिद स्पष्टीभवति—

(1) 'मन्त्रब्राह्मणमित्याहु ' ।

(1) 'मन्त्रब्राह्मण वेद इत्याचक्षते' ।[2]

महर्षिणा कौशिकेनापि एव व्याख्यातोऽयमर्थ —

'आम्नाय पुनर्मन्त्राश्च ब्राह्मणानि च ।'[3]

---

१ आप० श्रौ० २४ १ ३० । सत्या० श्रौ० १ १ ७ । कात्या० परि० प्रयोगमाला ।

२ बौ० गृह्य० २ ६ २–३ । ३ कौ० सु० १ ३ ।

महाभागैः शौनकाचार्यैरपि ब्राह्मणानां वेदान्तर्गतत्वमेवं प्रतिपादितम्—

त्रिगुणं पठ्यते यत्र मन्त्रब्राह्मणयोः सह।
यजुर्वेदः स विज्ञेयः शेषाः शाखान्तराः स्मृताः॥[1]

कोशकारा[2] अपि ब्राह्मणनामस्य लोकप्रसिद्ध श्रुतित्वमेव प्रत्याययन्ति—'ब्राह्मणं ब्रह्मसङ्घाते वेदभागे नपुंसकम्'। षड्गुरुशिष्यैः ऋक्सर्वानुक्रमणीवृत्तेः भूमिकायां यदभिहितं तत्पूर्वाचार्याणामपि परम्परया प्रचलितम्—

मन्त्रब्राह्मणयोराहुः वेदशब्दं महर्षयः।[3]

अत एव—'तच्चोदकेषु मन्त्राख्या'[4] इति मन्त्रलक्षणमाचक्षाणो जैमिनिमुनिः 'शेषे ब्राह्मणशब्दः'[5]—इति ब्राह्मणलक्षणे शेषपदेन मन्त्रभागादवशिष्टे वेदैकदेशे ब्राह्मणशब्दं प्रयुज्यते इति सुस्पष्टमकरोत्। अतस्तन्मतेऽप्युभयोरेव वेदशब्दग्राह्यत्वम्। अन्यथा 'शेषे'—इति पदं व्यर्थमेव स्यात्।

तत्र ऋग्यजुःसामाथर्वभेदेन चतुर्धा विभक्तोऽपि संहिता शाखाभेदेनानन्तत्वमेव। तथा चाह भगवान् पतञ्जलिः—'एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वेदः'—इति।[6]

षड्गुरुशिष्योऽपि महाभाष्यकारस्यैव वचनमेव अनूद्य तत्राथर्वणः शाखाभेदे मतान्तरमेवमभिहितवान्—

एकविंशत्यध्वयुगमृग्वेदमृषयो विदुः।
सहस्राध्वा सामवेदो यजुरेकशताध्वकम्॥
नवाध्वाथर्वणोऽन्ये तु प्राहुः पञ्चदशाध्वकम्।[7]

पुराणपरम्परया सरक्षितः शाखाभेदो महाभाष्योक्तभेदसदृश एव। तथा चोक्तं कूर्मपुराणे—

एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा।
सामवेदं सहस्रेण शाखानां च विभेदतः।
आथर्वणमथो वेदं विभेद नवकेन तु॥[8]

---

१. चरणव्यूह। २. मेदिनीकोषः।
३. ऋक्सर्वानुक्रमणीवृत्ति, षड्गुरुशिष्यकृता भूमिका, श्लोक १२।
४. जै० सू० २.१.३२। ५. जै० सू० २.१.३३। ६. महाभाष्य (पस्पशा०)।
७. ऋक्सर्वा०, षड्गुरुशिष्यकृता भूमिका, श्लोक १८-१९।
८. कूर्म० १.४८.५१-५२।

एव प्रतिवेद बहुशाखाना ग्रन्थान्तरेषु यानि नामानि श्रूयन्ते, तासु निर्दिष्टासु शाखासु काश्चिदेवाधुना उपलभ्यन्तेऽन्याश्च विलुप्ता एव । यतस्तासा ब्राह्मणादिग्रन्था सम्प्रति दुर्लभा एव प्रतिशाख यानि ब्राह्मणान्यासन्, तेषु कानिचिदिह निर्दिश्यन्ते ।

ऋग्वेदीय ब्राह्मणम्—

(।) ऐतरेयब्राह्मणम्—अत्र अष्टौ पञ्चिका चत्वारिंशदध्याया:, पञ्चाशीत्युत्तरद्विशत खण्डा (२८५) सन्ति । तत्रादित पञ्चिकाषट्क मुख्यरूपेण सोमयागनिरूपणम् । अवशिष्टे पञ्चिकाद्वये च राज्याभिषेकवर्णनम् ।

(।।) शाङ्खायन ब्राह्मणम्—अत्र त्रिंशदध्याया सन्ति । अस्यैव कौषीतकीति नामान्तर केचन मन्यन्ते[1] । केचिच्च तस्य पृथगस्तित्व स्वीकुर्वते । इद तु शाङ्खायनशाखामवलम्ब्य प्रवृत्तम् ।

यजुर्वेदीय ब्राह्मणम्—

(।) माध्यन्दिनीय-शतपथब्राह्मणम—शत पन्थानो यस्येति व्युत्पत्त्यास्य शतपथाभिधेयता । 'पथि' शब्दस्यात्राध्यायपरत्वमङ्गीकार्यम् । ह्यस्मिन्नध्यायशतकम् । अत्र चतुर्दशकाण्डानि । शतमध्याया । अष्टषष्टिप्रपाठका । अष्टात्रिंशदुत्तरचतु शत (४३८) ब्राह्मणानि । चतुर्विंशत्युत्तरषट्शताधिकसहस्रसप्तक (७६२४) कण्डिकाश्च सन्ति । तत्र प्रथमकाण्ड—दर्शपूर्णमासयाग, द्वितीये—अग्निहोत्रम् पिण्डपितृयज्ञ, दाक्षायणयज्ञ, नवान्नेष्टि चातुर्मास्यानि च । तृतीयचतुर्थकाण्ड्यो—सोमयाग । पञ्चमकाण्डे—वाजपेयराजसूयौ । षष्ठादिदशमान्तकाण्डेषु चयनम् । एकादशे पशुबन्ध पञ्चमहायज्ञा मित्रविन्देष्टि, दर्शपूर्णमासादिशेषश्च । द्वादशे—द्वादशाहसत्रम् सवत्सरसत्रम् सौत्रामणी च । त्रयोदशे अश्वमेध पुरुषमेध, सर्वमेध, पितृमेधश्च । चतुर्दशे—प्रवर्ग्य, बृहदारण्यकञ्च ।

(।।) काण्वशतपथ ब्राह्मणम—अत्र सप्तदश काण्डानि । ४३९ ब्राह्मणानि, ६८०६ कण्डिकाश्च । अत्रापि माध्यन्दिनशतपथोक्ता एव विषया किञ्चिद् व्यत्ययेन प्रतिपादिता ।

(।।।) तैत्तिरीयब्राह्मणम—अत्र त्रीण्यष्टकानि । क्वचिदष्टकस्थाने काण्डशब्दोऽपि व्यवहृत । अष्टाविंशति प्रपाठका, त्रिपञ्चाशदुत्तरत्रिशतम् [३५३] अनुवाकाश्च तत्र विद्यन्ते ।

सामवेदीय ब्राह्मणम्—

(।) ताण्डयब्राह्मणम्—अत्र पञ्चविंशति प्रपाठका, सप्तचत्वारिंशदधिकत्रिशत [३४७] खण्डाश्च वर्तन्ते । सायणाचार्यस्तु प्रपाठकस्थानेऽध्यायशब्द प्रयुक्तवान् । अस्मिन्

---

१ 'कौषीतकिन समामनन्ति'—इति आप० श्रौ० १० १ १० ।

ह्यग्निष्टोमसंस्थाकं ज्योतिष्टोममारभ्य सहस्रसंवत्सरपर्यन्ताः सर्वे सोमयागाः प्रतिपादिताः। सामवेदीयब्राह्मणेषु सर्वातिशया ताण्ड्यब्राह्मणमेव महत्। अत एव तन्महाब्राह्मणमित्युच्यते। प्रौढब्राह्मण, पञ्चविंशब्राह्मणमित्यस्य नाम।

(ii) षड्विंशब्राह्मणम्—अत्र पञ्च प्रपाठकाः, अष्टचत्वारिंशत् खण्डाश्च सन्ति। केचित् ताण्ड्यब्राह्मणस्य परिशिष्टब्राह्मणं वदन्ति।

(iii) मन्त्रब्राह्मणम्—अस्मिन् द्वौ प्रपाठकौ, षोडश खण्डाश्च सन्ति।

(iv) दैवतब्राह्मणम्—अस्मिंस्त्रयः खण्डाः, द्विषष्टि कण्डिकाश्च सन्ति। अत्र विशेषतश्छन्दसामेव वर्णनम्।

(v) आर्षेयब्राह्मणम्—अत्र त्रय प्रपाठकाः, द्व्यशीति खण्डाश्च सन्ति। अस्मिन् ब्राह्मणे साम्नामार्षानुक्रमणी।

(vi) सामविधानब्राह्मणम्—अत्र त्रय प्रपाठकाः, पञ्चविंशति खण्डाश्च सन्ति। अस्मिन्नभिचारादिवर्णनम्।

(vii) संहितोपनिषद्ब्राह्मणम्—अत्रैव प्रपाठकः पञ्चखण्डाश्च।

(viii) वंशब्राह्मणम्—अत्र खण्डत्रयमस्ति। तत्र सामवेदाचार्याणां वंशपरम्परा निर्दिष्टा।

(ix) जैमिनीयब्राह्मणम्—अत्र द्व्यशीत्युत्तरैकादशशत [११८२] खण्डा विद्यन्ते। अस्यैव तलवकारब्राह्मणमित्यपि नामान्तरम्।

(x) जैमिनीयार्षेयब्राह्मणम्—अत्र चतुरशीति खण्डा सन्ति।

अथर्ववेदीय ब्राह्मणम्-

(i) गोपथब्राह्मणम्—अत्र भागद्वयम्—१ पूर्वभाग, २ उत्तरभागश्च। पूर्वभागे पञ्चप्रपाठकाः, उत्तरभागे षट् प्रपाठका सन्ति। 'तत्र गोपथः शतप्रपाठकं ब्राह्मणमासीत्। तस्यावशिष्टे द्वे ब्राह्मणे पूर्वमुत्तरं च'[१]—इत्युक्त्यानुमीयते यद्ब्राह्मणमिदं पुरा बृहदासीत्।

एतद् व्यतिरिक्तान्यन्यान्यपि ब्राह्मणान्यासन्, किन्तु तानि सर्वथा विलुप्तानि। बौधायनापस्तम्बादिभि महर्षिभि सूत्रकारैश्च यत्र यत्र उद्धृतानि, तान्यत्र निर्दिश्यन्ते—१ पैङ्गायनिब्राह्मणम्[२], २ शैलालिब्राह्मणम्[३], ३ शाट्यायनिब्राह्मणम्[४], ४. काठक०[५], ५ मैत्रायणीय०[६], ६ जाबाल०[७], ७ खाण्डिकेय०[८], ८ औखेय०[९], ९ हारिद्रविक०[१०],

१ आ० च०। २. आप० श्रौ० ५.१ १८। ३ आप० श्रौ० ६ ७ ४।
४ ब्र० शाङ्करभाष्य ३ ३ २५। ५ महा भा० ७ १.१३।
६. बौ० श्रौ० ३० ८। ७ ब्र० शा० ३ ४ २०।
८. भाषिक सूत्र ३ २६। ९. तत्रैव। १०. ऋ० ५ ४०.१ सा० भा०।

१० आह्वरक०[1], ११ कङ्कति०[2], १२ गालव०[3], १३ माल्लवि०[4], १४ शाट्यायन०[5], १५ कालबवि०[6], १६ रौरुकी[7], १७ तुम्बरु०[8], १८ आरुणेय०[9], १९ सौलभ०[10], २० पराशर०[11], २१ मापसराबि०[12], २२ कापेय०[13]। एवं २३. अन्वाख्यान०, २४ चरक०, २५ श्वेताश्वतरादिनि बहूनि ब्राह्मणानीत्यनुमीयते।

ऋग्वेदीय श्रौतसूत्रद्वयम्–

यदा च शक्ति क्रमशो ह्रासमुपयातुमारब्धा, तदा महर्षय तस्मिन् तस्मिन् वेदे तत्तच्छाखाध्यायिन वैदिकान् प्रति ता ता शाखामवलम्ब्य कल्पसूत्राण्यपि श्रौतसूत्रापर पर्यायाण्यरीरचन्।

तत्र ऋग्वेदसम्बन्धि तावन् श्रौतसूत्रद्वयमुपलभ्यते—१ आश्वलायनश्रौतसूत्रम्। २ शाङ्खायनश्रौतसूत्र चेति। 'आश्वलायनश्रौतसूत्रम्' आश्वलायनमहर्षिणा कृतम्, शाङ्खायन च तन्नाम्ना महर्षिणा।

तत्र पुरोऽनुवाक्या[14] याज्यादीनां[15] तत्तच्छस्त्राणा[16] चानुष्ठानप्रकार, तद्देशकालकर्त्रादीनां विधान, स्वर प्रतिगर[17] न्यूङ्ख[18] प्रायश्चित्तादीना च विधान प्राधान्येनाभिहितम्।

---

१ नारदीय शिक्षा टी०। २ आप० श्रौ० १४ २० ४। ३ महाभाष्य १ १ ३४।
४ तदेव ४ २ १०४। ५ ऋक्सर्वा० ३ ३२। ६ आप० श्रौ० २० ९ १।
७ गोभि० गृ० ३ २ ५। ८ ९ महाभाष्य ४ २ १०४। १० तदेव ४ २ ६३।
११ तन्त्रवा० पृ० ९६४। १२ द्राह्या० श्रौ० ८ २ ३० १। १३ सत्याषाढ श्रौ० १ ४।
१४ देवतायै हवि प्रदानकाले देवताया आवाहनार्थं या ऋक् पुर यागात् पूर्वं देवतामनुकूलयितुमनूच्यते, सा देवतास्मरणार्था 'पुरोऽनुवाक्या' इत्युच्यते।
१५ आवाहनानन्तर यया ऋचा देवता इज्यते, सा देवतायै हवि समर्पणार्था ऋक् 'याज्या' इत्युच्यते। 'सर्वेसामग्रेऽनुवाक्यास्ततो याज्या' (आश्व० श्रौ० ३ ७ ३)।
१६ साम्ना स्तुताया दवताया पुन ऋङमन्त्रेण सामरहितेन होत्रा क्रियमाण स्तवन शस्त्रमित्युच्यते। 'स्तुतमनुशसति' (ता० ब्रा० ९)।
१७ यज्ञ शस्त्र प्रयुञ्जानस्य होतुरुत्साहजनकमध्वर्योर्वचन प्रतिगर।
१८ नितराम् अत्यन्तविषमप्रकारेण ऊङ्खनमुच्चारण न्यूङ्ख। 'न्यूङ्खा षोडश ओकारा, तत्र केचिदुदात्ता केचिदनुदात्ता' इति (पा० सू० १ २ ३४)। 'न्यूङ्ख्यन्ते शब्द विशेष कुर्वन्ति इति न्यूङ्खा'—इति सायण (ऋ० १० ९४ ३)। तु० शाङ्खा० ब्रा० २२ ६, २५ १३, शाङ्खा० श्रौ० १० ५ २१, १२ १३ १ ५, ७, कात्या० श्रौ० १ ८ १९। ऐ० ब्रा० ५ १ ३, ६ १९ २९। ६ ३० ६ (पृ० १०५६)। ह्रस्वैस्त्रयोदशभिरोकारैर्युक्ता दीर्घास्त्रय ओकारा मिलित्वा न्यूङ्खा भवन्तीति निष्कर्ष। मन्त्रेषु प्रथमपादस्य तृतीयपादस्य च द्वितीयस्वरे त्रयोदशभिरोकारैस्तत्र चावसन कृत्वा त्रयाणा त्रिमात्राणामाकाराणामुच्चारण न्यूङ्ख।

ख

तत्सम्बन्धीनि यानि चनाङ्गानि च तत्र तत्र विधीयन्ते । इमे च पदार्था होतृसञ्ज्ञकेन ऋत्विजा इष्टिषु दर्शपूर्णमासादिषु उपरितनेषु च क्रतुषु सोमादिषु होत्रा तत्पुरुषैर्मैत्रावरुण-ब्राह्मणाच्छंस्यच्छावाकैश्च प्रतिनियतत्वेन वक्तव्यतया विहिता ।

अत्र आश्वलायन श्रौतसूत्रे—द्वादशाध्याया, प्रथमेऽध्याये—परिभाषा, दर्शपूर्णमासेष्टिः । द्वितीये—आन्याधेयम्, अग्निहोत्रहोम, उपस्थानम्, पिण्डपितृयज्ञ, अन्वारम्भणीया, आग्रयणम्, काम्या इष्टय वैमृधेष्टि ल्वेकेष्टि, मित्रविन्देष्टि, पवित्रेष्टि, कारीरीष्टि, वैश्वानरीष्टिः, इष्टयनम्, सांवत्सरिकाणि, तुरायणम् दाक्षायणयज्ञ, याज्या पुरोऽनुवाक्यालक्षणम् चातुर्मास्यानि । तृतीये—पशु पशुयाज्यापुरोऽनुवाक्या, निरूढपशु, सौत्रामणी, प्रायश्चित्तानि । चतुर्थपञ्चमयोरग्निष्टोम । षष्ठे—उक्थ्य, षोडशी, अतिरात्रस्य नैमित्तिकम् सोमप्रायश्चित्तानि, दीक्षितमरणप्रायश्चित्तादि, सोमयागशेष, अनूबन्ध्या, अवभृथ, उदयनीयादि । सप्तमे—सत्रधर्मा व्यूढ्‌ादि च । अष्टमे शस्त्राणि प्रतिगरादि, पृष्ठ्यादि । नवमे—राजसूय, एकाहा वाजपेय । दशमे अहीनानि द्वादशाह, अहीनसत्रयो समाना धर्मा, अश्वमेधः । एकादशे—रात्रिसत्राणि, गवामयनम् । द्वादशे—आदित्यानामयनम्, अङ्गिरसामयनम् दृतिवातवतोरयनम्, कुण्डपायिनामयनम्, तापश्चितामयनम्, प्रजापतेर्द्वादशसंवत्सरम् सारस्वतसत्त्राणि, मित्रावरुणयोरयनम्, सत्रोत्थानम्, सवनीयपशव सत्रिधर्मा, अयनानि, सवनीयपशुविभाग ऋत्विजाम्, प्रवरा, सत्राणि, पृष्ठ्यशमनीय इति ।

शाङ्खायनश्रौतसूत्रे—अष्टादशाध्याया सन्ति ।

ब्राह्मणग्रन्थे विधिभेद —

विधिभागश्चतुर्धा विभक्त —१ तत्र ब्राह्मणे यानि वाक्यानि इद कर्म एव कर्तव्यमिति कर्मस्वरूपमात्रवबोधने प्रवृत्तानि, तानि उत्पत्तिविधिम् इत्युच्यन्ते । २ यानि तु तद्वाक्यविहितकर्मसम्बन्धि द्रव्यदेवतादिविषायकानि, तानि गुणविषयो विनियोगविधय इति चोच्यन्ते । ३ यानि च तत्ताद्दशेषु कर्मसु कस्याधिकार. ? किंफलमुद्दिश्य तत् कर्तव्यम्—इत्यादिकमवबोधयन्ति तान्यधिकारविधय इत्युच्यन्ते । ४. एतेषामनुष्ठानक्रमादिक योऽवबोधयति स प्रयोगविधिरित्युच्यते ।

अर्थवादभेदः—अस्यैव शेषभूतोऽर्थवादभाग येन च विधिसन्निहितेन विहित स्तूयते, निषिद्ध च निन्द्यते । सोऽपि निन्दा प्रशसा-परकृति पुराकल्पभेदेन चतुर्धा विभक्त ।

१ निन्दा—दर्शपूर्णमासाद्यास्विष्टिषु दक्षिणात्वेन प्रसक्तस्य रजतदानस्य निषेध 'बर्हिषि रजत न दद्यात्' (तै० स० १ ५ १) इत्यनेन क्रियते[१] । तत्समीपे श्रुतेनानेनार्थ-

१ 'यो बर्हिषि रजत ददाति पुराऽस्य सवत्सराद् गृहे रुदन्ति' इति (तै० स० १ ५ १) । अत्र बर्हि शब्देन तत्सम्बन्धिकर्मोपलक्ष्यते । अतो बर्हिसाध्येषु कर्मसु दक्षिणात्वेन रजत न दद्यात्–इत्यर्थ ।

वादेन रजतदानं निन्द्यते। यदिकश्चिन्निषेधमितिक्रम्य रजतं दद्यात् तस्य गृहे संवत्सरात् पूर्वं रोदनं भविष्यतीति। २ प्रशंसा तु—पूर्वं 'वायव्यं श्वेतमालभेत भूतिकाम' (तै० सं० २ १ १) इति वाक्येन वायुदेवताको भूतिफलकः पशुद्रव्यकः कश्चन यागो विहितः। तत्सन्निहितेनानेन[1] वाक्येनार्थवादेन तदेव कर्म प्रशस्यते क्षिप्रगामिवायुदेवताकमिदं कर्म शीघ्रफलदम्, अतोऽतिप्रशस्तमिति। ३ अयमेवार्थवादो निन्दारूपः प्रशंसारूपो वा अन्यकृत इति यत्रोपवर्ण्यते स परकृतिरित्युच्यते। यथा—'अग्निर्वा अकामयत अन्नादो देवानां स्याम्' (तै० ब्रा० ३ १ ४) 'बबरः प्रावाहणिरकामयत' (तै० सं० ७ १ १०), 'उल्मुकैः सत्राजघ्नुः' (श० ब्रा० ३ ४ २२) इत्याद्यन्यकर्तृकोपाख्यानं परकृतिः। ४ पुराकल्पः—पुरावृत्तकथनम्। यथा 'पुरा ब्राह्मणा अभैषुः' (तै० सं० १ ५ ७) इदं वा अग्रे नैव किञ्चनासीत् (तै० ब्रा० २ २ ९ १) माषान् मे पचतेति ह स्माह बर्कुर्वार्ष्णिः' (शत० ब्रा० १ १ १ ८) इत्यादि पुरावृत्तकथनम्।

इदं सर्वमभिप्रेत्य भगवताऽऽपस्तम्बेनापि स्वयज्ञपरिभाषायां सूत्रितम्—

'कर्मचोदना ब्राह्मणानि, ब्राह्मणशेषोऽर्थवादो, निन्दा प्रशंसा-परकृति-पुराकल्पश्च'[2]—इति।

इत्थं विधिभेदः—

'हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः।
परक्रिया पुराकल्पो व्यवधारणकल्पना॥
उपमानं दशैते तु विधयो ब्राह्मणस्य तु।
एतद्वै सर्ववेदेषु नियतं विधिलक्षणम्॥'

इत्यादिना शबरादिभिर्ब्राह्मणभेदा निरूपिताः[3]।

ऋग्वेदीयम् ऐतरेयब्राह्मणम्-

यद्यप्येवं तथापि ब्राह्मणग्रन्थेषु सर्वत्रैव प्रधानतो यागविधय एवोपलभ्यन्ते। तत्र यागेषु यागाङ्गद्रव्यदेवतामन्त्रादिषु प्रवृत्त्याद्युत्पादनार्थाः स्तुत्यादयः स्तुत्यादिपरा आख्यायिकाश्च बह्व्यः आख्याताः श्रूयन्ते। ता एव अर्थवादा अप्युच्यन्ते। तत्प्रसङ्गत बहूनां मन्त्राणां मन्त्रांशानां वा प्रायोऽधियज्ञपरव्याख्यानानि क्वचिदन्यान्यपि विषयाणि समाम्नातानीति।

---

१ 'वायुर्वै क्षेपिष्ठा देवता' (तै० सं० २ १ १)।
२ आप० श्रौ० यज्ञपरि० २४ १ ३१ ३३
३ जै सू० २ १ ८, शाबरभाष्य।

पुत्रो महिदासाख्य कुमार । " ब्राह्मणमाविरभूत्'–इति । तथा चेतराशब्दात् शुभ्रादिभ्यश्च'[1]–इत्यपत्यार्थे ढकि सम्पाद्यमिद रूपमैतरेय इति ।

एष हि महिदासोऽभूद् दीर्घजीवी, तच्छ्रूयते छान्दोग्यब्राह्मणे–'स ह षोडश वर्षशत-मजीवत्'[2]–इति । अनेनैव महिदासेन आरण्यकग्रन्थोऽप्येक प्रोक्त । स हि पञ्चधा विभक्तोऽधीयते । तत्र सायणाचार्येण प्रथम–द्वितीय–तृतीयांशानामेव तत्प्रोक्तत्व स्वीकृतम्[3] । चतुर्थारण्यकविषये तूक्तम्–तदिद नवसख्याकानामृचा पुरीषपदानाञ्च प्रतिपादक ग्रन्थजात यद्यपि कर्मकाण्डे पठितु युक्तम्, तथाप्यरण्य एवाध्येतव्यमित्यभिप्रेत्य चतुर्थारण्यकत्वेनात्र पठितम्'[4]–इति । पञ्चमस्यान्तिमस्य त्वाश्वलायनकृतसूत्रत्वमेवामानि तेन । इत्थ प्रथममारण्यकत्रयस्य महिदासप्रोक्तत्वम्, चतुर्थस्य सहितान्तराद् सङ्गृह्य पठितत्वम्, पञ्चमारण्यकस्य तत्परभवत्व च स्फुटम् ।

ऐतरेयोपनिषद् प्रपञ्चस्त्वेतदारण्यकान्तर्गत एव, पर तत्राप्यस्ति मतान्तरता । इदानी-मैतरेयोपनिषदिति प्रसिद्ध शाङ्करभाष्यादिसमन्वितो योऽय ग्रन्थोऽधीयते सर्वत्र, ततोऽधिकतर सायणसम्मत । तेन ह्याचार्येण 'एष पन्था ' ' अचार्या '[5]–इत्यन्तश्च द्वितीय-तृतीयारण्यकात्मक समग्र एव ग्रन्थ उपनिषदित्यवादि ।

एव सोऽयमेक एवैतरेयो महिदास चत्वारिंशदध्यायात्मकस्य ब्राह्मणप्रपञ्चस्य तथोप-निषद्गर्भस्यारण्यकत्रयस्य च द्रष्टा बभूव–इति सिद्धम् ।

कस्या शाखाया इदमैतरेयकं ब्राह्मणम् ?

अत्र यदिदानीमुपलभ्यते 'ऐतरेयब्राह्मणम्', तत् तु—शाकलशाखासबन्धि[7]—इत्यध्येतृणा सुदृढो विश्वास । परन्तु तत्त्वतो विचार्यमाणे न केवलमेकामेव शाखामवलम्ब्य प्रवृत्तमिद ब्राह्मणम्, किन्तु शाखान्तराण्यप्यवलम्बत इति—

---

१ पा० सू० ४ १ १२३ २ छा० ब्रा० ५ १६ ७ ।

३ तस्य महिदासस्य मनसा 'अग्निर्वै स्तृणुते'–इत्यन्त चत्वारिंशदध्यायोपेत ब्राह्मण प्रादुरभूत् । तत ऊर्ध्वम् 'अथ महाव्रतम् ' 'आचार्या:' (ऐ० आ० ३ २ ६)–इत्यन्तमारण्यकव्रतरूपञ्च ब्राह्मणमाविरभूत्' इत्युक्तम् ।

४ ऐ० आ० ४ १ १.१५ सा० मा० । ५ ऐ० आ० २ १ १ १ ।

६ ऐ० आ० ३ २ ६ ९ ।

७ पूर्वम् ऋग्वेद एकविंशतिशाखाप्रकारमित्त इत्युक्तम् । तत्रेदानी शाखाद्वयमेवोपलभ्यते । तत्रैका बाष्कलशाखा, अपरा शाकला इति । ते अपि न परस्पर विविक्ते उपलभ्यते, अल्पीयानेव भेदस्तत्रापि । यत्तु मण्डलसूक्तादिना विभाग कृत , सा शाकलसहिता, यत्र च अध्यायवर्गादिना विभाग सा बाष्कलसहितेति । अर्वाचीनकाले तयोर्भेद मुपेक्ष्यैव मण्डलसङ्ख्याऽध्यायसङ्ख्या चैकत्रैव निवेशिता—इति विवेक ।

(क) अत्र हि ब्राह्मणे 'ब्रह्म जज्ञानं प्रथमम्[१]', 'त्वमग्ने प्रवभृत्[२]' इति मन्त्रौ प्रतीकग्रहणेन विनियुक्तौ[३]। नेदं मन्त्रद्वयं शाकलसंहितायां समाम्नातम्।

(ख) एवं सन्त्यन्ये मन्त्रा विनियुक्ता बहवः प्रतीकग्रहणेन येषां नोपलभ्यते पाठः शाकलशाखामध्ये। केषाञ्चन 'आ ते पितः[४]' इत्यादीनां मन्त्राणां शाकलशाखान्तर्वर्तिनां नोक्तो विनियोगः, सैव ऋक् शाखान्तरोक्ताऽत्र विनियुक्ता[५]।

वस्तुतस्तु ब्राह्मणग्रन्थस्य सूत्रग्रन्थस्य वाऽयं नियमः—यदा यामेकां शाखामवलम्ब्य तानि प्रवर्तन्ते तदा तत्रत्यान् मन्त्रान् प्रतीकमात्रं गृहीत्वा विनियोजयन्ति। शाखान्तरस्थानां सत्यावश्यके विनियोगप्रसङ्गे समग्रं मन्त्रं पठित्वैव विनियोजयन्ति—इति।

तत्र प्रतीकमात्रेण यथा—'त्वमग्ने सप्रथा असि, सोम यास्ते मयोभुव इत्याज्यभागयोः पुरोऽनुवाक्ये'[६]—इति। आम्नातौ चैतौ मन्त्रावाश्वलायन्याम्[७]। नामग्रहणमात्रेण यथा—'सुकीर्तिं शंसति'—इति, पुनस्तदुत्तरत्र—'वृषाकपिं शंसति' इति च[८]। वस्तुतस्तु सुकीर्तिनाम सप्तर्चं सूक्तम्, वृषाकपिनाम त्रयोदशर्चं सूक्तमिहाश्वलायन्याम्[९]। आम्नातायाः प्रपठ्यविधानं यथा—'यस्माद् भीषा निषीदसि ततो नो अभयं कृधि। पशून् नः सर्वान् गोपाय नमो रुद्राय मीळ्हुषे इति तामुत्थापयेत्'—इति[१०]। न ह्येषा ऋगिहाश्वलायन्यामाम्नाता।

प्रतीयते त्वेतद् व्यतिक्रमोऽपि। तद्यथेहानाम्नातानामपि मन्त्राणां प्रतीकग्रहणमात्रेण विधानम्— अग्निर्मुखं प्रथमो देवतानाम् अग्निश्च विष्णो तप उत्तमं मह इत्याग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवतः'—इति,[११] तथा 'सावीर्हि देव प्रथमाय पित्रे इति सावित्रीमन्वाह'[१२]—इति। नैते मन्त्रा इहाश्वलायन्यामाम्नाताः। तद्यदेतस्या आश्वलायन्या एतद् ब्राह्मणं स्यात्, तर्ह्येषां मन्त्राणां नूनं प्रपठ्य विधानं दृश्येत। एवमिहानाम्नातानामपि मन्त्राणां नामग्रहणमात्रेण विधानमस्ति, यथा—तिस्रः सामिधेनीरनूच्य तिस्रो देवता

१ ऐ० ब्रा० १ ४ २, पृ० ११९। २ ऐ० ब्रा० ६ २ ७, पृ० १११७।
३ आश्व० श्रौ० २ १२ १३–१५। ४ ऐ० ब्रा० ३ ३ १०, पृ० ५०२।
५ मुद्रित संहितापाठस्तु—'अभि नो वीरो अर्वति क्षमेत प्र जायेमहि रुद्र प्रजाभिः' (ऋ० २ ३३ १) यदा अत्र ब्राह्मणे विधीयमानपाठस्तु त्वं नो वीरो अर्वति क्षमेथाः प्र जायेमहि रुद्रिय प्रजाभिः।'
६ ऐ० ब्रा० १ १ ४ पृ० ३५। ७ ऋ० ५ १३ ४, १ ९१ ९।
८ ऐ० ब्रा० ६ ५ ३ पृ० १०४१। ९ ऋ० १० १३१, १० ८६।
१० ऐ० ब्रा० ५ ५ २ पृ० ८६०। ११ ऐ० ब्रा० १ १.४ पृ० ३७।
१२. ऐ० ब्रा० १ ५ ४ पृ० १८१।

यजन्ति'—इति[1]। ता एतास्तिस्र सामिधेन्य ऋचोऽश्वलायन्यां न दृश्यन्ते। यथाऽश्वलायन्याम्नातानामपि प्रपठ्य विधानं कृतमैतरेयेण। तद्यथा—'इन्द्राग्नी आगतं सुतं, गीर्भिर्नभो वरेण्यम् अस्य पातं धियेषितेत्यैन्द्राग्नमध्वर्युर्ग्रहं गृह्णाति'[2]—इति। आम्नातैवैषा आश्वलायन्याम्[3]।

अस्ति च ऋक्परिशिष्टो नामैको ग्रन्थः। तदीयर्ड् मन्त्रा अपि केचनेह ब्राह्मणे नामग्रहणमात्रेण विहिता श्रूयन्ते। तद्यथा—प्रवह्लिकाः शसति' 'आजिज्ञासेन्याः शसति', 'अतिवादं शसति'[4]—इति। परिशिष्टग्रन्थीयश्रुतमन्त्रेभ्योऽप्यधिकमन्त्राणां विधानं चेह श्रूयते यथा—'आहनस्याः शसति ता दश शसति'[5]—इति। ऋक्परिशिष्टे खल्वाहनस्यानामृचर्चोऽष्टावेव श्रूयन्ते इह तु दशानां विधानमाम्नातम्।

एवं देवनीथाख्य सप्तदशपदानि प्रपठ्यात्र ब्राह्मणे विहितानि[6] ततोऽवगम्यते यस्याः शाखाया एतद् ब्राह्मणमैतरेयकं नाम, न तस्याम् इमानि पठितानीति। किन्तु अस्मद्दृष्ट-संहितापरिशिष्टे तु पठितान्येव आश्वलायनेनापि प्रतीकग्रहणमात्रेणैवेमानि विहितानि[7]।

अत्र तु ब्राह्मणे शाखान्तरीयाऽपि मन्त्रा प्रतीकमात्रग्रहणेन विनियुक्ता। अतो न एकामेव शाखामेकां ततोऽवलम्ब्यते ब्राह्मणमिदम् किं तु शाखान्तराण्यपीति स्पष्टमवगम्यते। तत्र या इतरा बाष्कलशाखोपलभ्यते तत्रत्या मन्त्रा अत्र विनियुक्ता एवेति तच्छाखावलम्बित्वमप्यस्य सुस्पष्टमेव। अयमेवाशय ऋग्वेदकल्पद्रुमकारेणाप्यादृतः।

अस्य ब्राह्मणस्य प्रतिपाद्यविषयाः —

अथ सर्वक्रतुप्रधानभूतो ज्योतिष्टोमः सप्तसंस्थ इति याज्ञिकप्रसिद्धिः संस्थाविधस्यनयान्तरम्। सप्तसंस्थैकस्यैव ज्योतिष्टोमस्य सप्तविधत्वात्—१ अग्निष्टोम, २ अत्यग्निष्टोम, ३ उक्थ्य, ४ षोडशी, ५ अतिरात्र ६ वाजपेय ७ आप्तोर्यामश्चेति सप्त नामानि सम्पन्नानि। तत्र यज्ञायज्ञीयाख्येनाग्निष्टोमसाम्ना यत्र समाप्तिः, स आद्योऽग्निष्टोमः। स एवात्यग्निष्टोमादीनां षण्णामादर्शरूपोऽतो याज्ञिकैः प्रकृतियाग इत्युच्यते। स खल्वैतरेयके आदितश्चतुःखण्डाधिकचतुर्दशाध्यायैर्विहितः। ततः पञ्चदशाध्यायान्तर्गतयोः खण्डयोरुक्थ्यक्रतोः विशेषा उक्ताः। ततः षोडशाध्यायीयाद्यचतुःखण्डेषु षोडशिसंस्थस्य सस्य विशेषविषयोऽभिहितः। ततः ऊर्ध्वं सप्तदशाध्यायीयपञ्चमखण्डान्तमतिरात्रविषय उपदिष्टः। एवं सार्द्धेनाध्यायषोडशकेन चतुःसंस्थो ज्योतिष्टोमः समाम्नातः।

---

१ ऐ० ब्रा० ३ ५ १ पृ० ५५०। २ ऐ० ब्रा० २ ५ ६ पृ० ३६०।
३ ऋ० ३ १२ १। ४ ऐ० ब्रा० ६ ५ ७ पृ० १०६६।
५ ऐ० ब्रा० ६ ५ १० पृ० १०८१। ६ ऐ० ब्रा० ६ ५ ९, पृ० १०७४–१०७९।
७ आश्व० श्रौ० ८ ३ २५।

एतच्चतुष्टयमुपजीव्यैव गवामयनम्, अङ्गिरसामयनम्, आदित्यानामयनं चेति त्रीणि सत्राणि प्रवर्तन्त इति तानि तत ऊर्ध्वं सार्द्धैकाध्यायेनोक्तानि। तत्रापि गवामयनं प्रकृतिः।

ततः पञ्चभिरध्यायैर्विधेयो द्विविधोऽपि द्वादशाहस्तूनविंशाध्यायस्यादित एवारब्धः।

अथ पञ्चमषष्ठपञ्चिकाद्वये आदितश्चतुरध्यायपर्यन्तं द्वादशाहविधिः समाम्नातः। ततोऽध्यायेनैकेन अग्निहोत्रविधिर्बोधितः, प्रसङ्गसङ्गत्यान्ततोऽत्रैव व्याहृतिब्रह्मत्वविवेकश्चोपदिष्टः, ततः पञ्चभिरध्यायैः प्रधानतो होतृहोत्रकगोचरं शस्त्रादिकं वर्णितम्।

तदेतस्यैतरेयकस्यादितः पञ्चविंशत्यध्यायाः एकाहाहीनसत्रलक्षणसर्वविधयागविषया इति पञ्चपञ्चिकात्मक आद्यो 'यागकाण्डः' तत एषा पञ्चाध्यायी षष्ठपञ्चिका तु 'शस्त्रकाण्डः' इति सुवचम्।

अथ सप्तमाष्टमपञ्चिकाद्वये पश्वङ्गविभागादिकम्, आहिताग्नेः प्रायश्चित्तानि, शौनःशेपाख्यानम्, राजसूयक्रतुः (सोमयागविशेषः) सर्वयज्ञसाधारणविषयः। ततश्चान्ते समाम्नातः 'ब्रह्मणः परिमरः' इति।

आम्नातास्त्विह उपदेशाः; तत्र ऐतरेय-ब्राह्मणकाले तदानीमपि कर्मठत्वं श्रमकारित्वमुद्योगित्वञ्चैवासीत् प्रशंसनीयम्। तदुक्तम् ( ऐ० ब्रा० ३३.३ )—

नानाश्रान्ताय श्रीरस्ति, इति रोहित शुश्रुम।
पापो नृषद्वरो जनः, इन्द्र इच्चरतः सखा॥ १॥
पुष्पिण्यौ चरतो जङ्घे, भूष्णुरात्मा फलेग्रहिः।
शेरेऽस्य सर्वे पाप्मानः, श्रमेण प्रपथे हताः॥ २॥
आस्ते भग आसीनस्य, ऊर्ध्वस्तिष्ठति तिष्ठतः।
शेते निपद्यमानस्य, चराति चरतो भगः॥ ३॥

इति शम्।

गङ्गादशहरा १९८३
३१।२१ लंका, वाराणसी,
२२१००५

विदुषां वशंवदः
सुधाकर मालवीयः

# अग्निष्टोमीयानुष्ठेयानां संक्षेपः

अथाग्निष्टोमीयानुष्ठेयानामिष्टयाद्यङ्गकर्मणा कारिकोपनिबद्ध सङ्क्षेपतः क्रमवर्णनं यद् 'क्रतुसंग्रहे' विद्यते, तदपीहाग्निष्टोमीयकर्मणां पौर्वापर्यपरिव्यक्तये सूचीत्वेनात्र सङ्गृह्यते—

अथाग्निष्टोमसञ्ज्ञेन ज्योतिष्टोमेन यो यजेत् ।
स पूर्वमृत्विजो वृत्वा देवयजनं विनिश्चयेत् ॥ १ ॥
दीक्षणीया निर्वपेत् सोऽपि पत्नीसयाजसंस्थितिम् ।
कृते प्राचीनवंशेऽथ संस्कारा वपनादयः ॥ २ ॥
हुत्वा दीक्षाहुतीः, कार्या दीक्षा कृष्णाजिनादिभिः ।
दीक्षितो नियमैर्युक्तो भवेत् क्षीरव्रतादिभिः ॥ ३ ॥
द्वादशाह दीक्षितोऽथ भिक्षित्वा द्रव्यमानयेत् ।
सोम चर्मण्यवस्थाप्य विवक्षेत् सोमविक्रयी ॥ ४ ॥
शम्यवन्ता प्रायणीया स्याद्, गृह्णीयात् क्रयणीपदम् ।
क्रीत्वा सोम रथे क्षिप्त्वा प्राग्वंशाग्रे समानयेत् ॥ ५ ॥
आतिथ्या निर्वपेत् सोममासन्द्यामुपसादयेत् ।
आतिथ्येष्टिरिडान्ता स्यात्, तानूनप्त्रमवद्यति ॥ ६ ॥
दीक्षामवान्तरामेति, प्रवर्ग्योपसदो. कृतिः ।
दिनत्रये तत् कृतं स्यात्, वेदिर्मध्यदिने भवेत् ॥ ७ ॥
षट्त्रिंशत् पददीर्घैषा प्राग्वंशात् पूर्वतः स्थिता ।
प्रात. प्रवर्ग्यमुद्वास्य, पश्चादुत्तरवेदितः ॥ ८ ॥
शकटे द्वे हविर्द्धाने, हविर्द्धानं च मण्डपम् ।
पश्चात् सदस्तस्य मध्ये निखातौदुम्बरी मिता ॥ ९ ॥
दक्षिणस्यानसोऽधस्ताद् गर्त्तानुपरवान् खनेत् ।
विधाय फलकाभ्या तानग्रे कुर्यान्मृदा खरम् ॥ १० ॥
निर्वपेद्धिष्ण्यगानग्नीषोमीय पशुमाचरेत् ।
प्रयुज्याचित्रपात्राणि दर्शवत् सर्वमाचरेत् ॥ ११ ॥
आज्य आसादिते वेद्यामन्ते यूप समुच्छ्रयेत् ।
यूपस्योच्छ्रयणादूर्ध्वं समापय्य पशु ततः ॥ १२ ॥
वैसर्जनानि हुत्वाग्निं सोम ग्रावादि चानयेत् ।
हविर्द्धाने स्थापयित्वा गृह्णीयाद् वसतीवरीः ॥ १३ ॥

प्रयुञ्ज्यात् सोमपात्राणि महारात्रे खरादिषु ।
प्रावनु स्थापिते सोमे पक्षिणा ध्वनितः पुरा ॥ १४ ॥
स्यात् प्रातरनुवाकार्थमुपाकरणमादरात् ।
वसतीवरीणां ग्राहो प्रचारः स्याद् दधिग्रहे ॥ १५ ॥
उपांशु अदाभ्यौ हुत्वा च महाभिषवनाचरेत् ।
उपांशुमन्तर्यामं च हुत्वा रिक्तं तु सादयेत् ॥ १६ ॥
वधैन्द्रवायव पात्रैर्गृहीत्वा सादयेत् खरे ।
यो मैत्रावरुणस्तं तु धीपाति पयसा ग्रहम् ॥ १७ ॥
शुक्रः श्रृतो हिरण्येन, श्रृतो मन्थी तु सक्तुभिः ।
गृहीत्वाग्रयणं गृह्णात्यभिप्राह्यानिधान् ग्रहान् ॥ १८ ॥
गृहीत्वौक्थ्यं ध्रुवो ग्राह्यः पवमानग्रहास्तयः ।
पूतभृद् द्रोणकलशोऽपरस्त्वाधवनीयकः ॥ १९ ॥
ते बहिष्पवमानाय प्रवर्त्यन्त्र पञ्च ते ।
गृहीत्वाश्विनमाग्नेयं पशोः कुर्यादुपाकृतिम् ॥ २० ॥
सवनीयपुरोडाशैर्धरित्वा ह्यैन्द्रवायवम् ।
हुत्वा ग्रहं, द्वयोर्मैत्रावरुणाश्विनयोर्हुतौ ॥ २१ ॥
शुक्रमन्थ्यादिकान् हुत्वा चमसानपि जुह्वति ।
सरस्यतुंग्रहैन्द्राग्नसोमप्रतिगरास्ततः ॥ २२ ॥
आज्यस्तोत्रेभ्य ऊर्ध्वं हि प्रातस्सवनसंस्थितिः ।
माध्यन्दिने तु सवने पुरोडाशः पशोर्भवेत् ॥ २३ ॥
ग्रहो मरुत्वतीयः स्यात् पवनानेन सत्स्तुतिः ।
दधिघर्मे हुते दद्यात् दक्षिणास्ते यथायथम् ॥ २४ ॥
मरुत्वतीयास्ताद् हुत्वा माहेन्द्रेण समाप्यते ।
तृतीयसवनारम्भ आदित्यग्रहमाचरेत् ॥ २५ ॥
आर्भवैर्ण स्तुवीताय पशवङ्गैः प्रचरत्ययम् ।
सावित्रवैश्वदेवाख्यौ ग्रहौ, सौम्यचरुस्तथा ॥ २६ ॥
पात्नीवतग्रहादूर्ध्वं यज्ञायज्ञीयसंस्तवम् ।
आग्निमारुतशस्त्रं स्याद् गृह्णीयाद्धारियोजनम् ॥ २७ ॥
समाप्ते सवने पश्चाद् कुर्यादवभृथं ततः ।
कुर्यादुदयनेष्टिमनुबन्ध्या यजेत गाम् ॥ २८ ॥
देविका निर्वपेद् देवमुवासापि यजूंष्यथ ।
उपोष्य वेदिमाग्नेयमिष्ट्वाग्निष्टोमसंस्थितिः ॥ २९ ॥

—•—

# सायणभाष्यसहित-ऐतरेयब्राह्मणस्य विषय-सूची


[२१] पञ्चमपञ्चिकायाः प्रथमोऽध्यायः ७११–७४५

| | | | |
|---|---|---|---|
| ( i ) | तृतीयेऽहनि | देवता-स्तोम-साम च्छन्दसा विधानम् | ७१२ |
| ( ii ) | | मन्त्राणा लक्षणतो नामत. प्रतीकादिभिश्च विधि. | ७२० |
| ( iii ) | चतुर्थेऽहनि | न्यूङ्खविधानाय प्रस्ताव. | ७२६ |
| | | न्यूङ्खस्य विधानम् | ७२७ |
| | | आश्वलायनेन प्रोक्त न्यूङ्खस्वरूपम् | ७२८ |
| | | अर्द्धौकारविवरणम् | ७२८ |
| | | तस्य न्यूङ्खस्य प्रशंसनम् | ७२९ |
| | | न्यूङ्खस्य मन्त्रमध्ये स्थानविशेषविधानम् | ७२९ |
| | | स्थाननिर्णये पक्षचतुष्टयवर्णनम् | ७२९ |
| | | प्रातरनुवाके स्थानविशेषविधानम् | ७३० |
| | | आज्यशस्त्रे स्थानविशेषविधानम् | ७३१ |
| | | माध्यन्दिने सवने स्थानविशेषविधानम् | ७३१ |
| ( iv ) | | देवता स्तोम-साम च्छन्दसा विधानम् | ७३२ |
| | | मन्त्राणा लक्षणतो नामत प्रतीकादिभिश्च विधि | ७३३ |
| ( v ) | | विमदेन महर्षिणा दृष्ट न्यूङ्खसहित सूक्तविधानम् | ७४० |

[२२] पञ्चमपञ्चिकायाः द्वितीयोऽध्यायः ७४६–७८८

| | | | |
|---|---|---|---|
| ( i ) | पञ्चमेऽहनि | देवता-स्तोम साम च्छन्दसा विधानम् | ७४६ |
| | | मन्त्राणा लक्षणतो नामत. प्रतीकादिभिश्च विधिः | ७४७ |
| ( ii ) | | महानाम्नीषु शाक्वरसामविधौ महानाम्नीशब्दनिर्वचनम् | ७५२ |
| | | प्रसङ्गतो दाशतयीनामाद्यन्तयोर्मन्त्रमागयोरुल्लेख. | ७५४ |
| ( iii ) | | पञ्चपादोपेततया पाङ्क्तत्वलिङ्गयुक्तसूक्त विधत्ते | ७५६ |
| ( iv ) | | पष्ठस्याह्नो देवक्षेत्रत्ववर्णनम् | ७६० |
| | षष्ठेऽहनि | ऋतुप्रैषेषु ऋतुयाज्यासूक्ते विशेषविधि., तत्र विचारश्च | ७६० |
| ( v ) | | प्रातस्सवने माध्यन्दिनसवने च पारुच्छेपीविधानम् | ७६४ |
| ( vi ) | आख्यायिका— | विहितानां पारुच्छेपीनामुपाख्यानेन प्रशसार्था | ७६६ |
| ( vii ) | | देवता-स्तोम-साम-च्छन्दसा विधानम् | ७६८ |
| | | मन्त्राणा लक्षणतो नामतः प्रतीकादिभिश्च विधिः | ७६८ |

(viii) पाङ्क्तेपत्वादिलिङ्गत्रयापेत सूक्त विपत्ते ७७४

( ix ) आख्या’दिका—विहितनामानदिष्टसूक्तीयनामानेदिष्टवर्णनार्या ७७८

प्रसङ्गत 'सत्यमेव वदितव्यम्'-इति विधि ७८४

( x ) नामानेदिष्टवालखिल्यवृषाकप्यय्यामरुन्नामम न्त्राणा सहचारित्वम् ७८४

[२३] पञ्चमपञ्चिकाया तृतीयोऽध्याय ७८९–८१६

( i ) द्वादशाहक्रतौ द्वितीयादि-नवरात्रिगतास्त्रयस्त्र्यहा , तत्र प्रथम-द्वितीय त्र्यहाभ्यामक पृष्ठ्य षडह सम्पद्यते, अन्तिमस्त्र्य ह छन्दोमाख्य , तस्य प्रथमेऽहनि नवरात्रिगते

सप्तमेऽहनि म न्त्राणा लक्षणतो नामत: प्रतीकादिभिश्च विधि ७८९

( ii ) प्रागुक्तलिङ्गक सूक्त विपत्ते ७९९

( iii ) चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशाख्याना छन्दोमस्तोमानाम्

अष्टमेऽहनि मन्त्राणा लक्षणतो नामत प्रतीकादिभिश्च विधि ८०३

( iv ) महच्छन्दयुक्तसूक्तचतुष्टय विपत्ते ८१०

[२४] पञ्चमपञ्चिकाया चतुर्थोऽध्याय ८१७–८५५

( i,ii ) नवमेऽहनि मन्त्राणा लक्षणतो नामत प्रतीकादिभिश्च विधि ८१७

पृष्ठ्यषडहस्य, छन्दामस्त्र्यहस्य, दशमस्याह्नश्च (प्रायणीयेन सह गणिते तु एकादशस्याह्नश्च) मुखादि साम्यन, नाभिरादिसाम्यन, अक्ष्यादिसाम्यन, वर्णादि

( iii ) साम्यन च प्रशसा ८३०

दशमेऽहनि नियमविशेषस्य विधानम् ८३३

मानसग्रहाय प्रसर्पणविधि ८३४

तीर्थदेशे मार्जनविधि ८३४

होमार्थ पत्नीशाला गमनविधि ८३४

पत्नीशालागताना होमविधिस्त म न्त्रादि विधिश्च ८३४

( iv ) कृतहोमाना तेपा पुन सद प्रवेशविध्यादि ८३७

सदोमण्डपस्थिताना सामगाना सार्पराज्ञीपु स्तोत्रगानविधि ८३७

मानसग्रहाय साम्ना प्रस्तावाद्गीथप्रतिहारोपगाना मनसैव गेयत्वम्, शस्त्राणा तु वाचा शसनविधि ८४०

सार्पराज्ञा शसनादूर्ध्व चतुर्होतृम न्त्राणा शसनविधि ८४०

शस्ताना चतुर्होतृम न्त्राणा व्याख्यानप्रयास ८४१

| | | |
|---|---|---|
| ( v ) | औदुम्बरीशाखाया सम्मृयोपस्पर्शनविधि | ८४२ |
| | औदुम्बरीस्पर्शादनन्तर वाग्विसर्गविधि | ८४३ |
| | वाग्विसर्गस्य कालविशेषविधि | ८४४ |
| | — देशविशेषविधि | ८४५ |
| | — मन्त्रविशेषविधि। | ८४५ |
| ( vi ) | चतुर्होतृम न्त्रव्याख्यानाय होतुराह्वविधि | ८४६ |
| | — अध्वर्यो प्रतिगरविधि | ८४७ |
| | दशपदात्मकचतुर्होतृसञ्ज्ञकम न्त्रसङ्घातस्य स्वरूपप्रदर्शनम् | ८४७ |
| | ग्रहसञ्ज्ञकमन्त्रस्य स्वरूपप्रदर्शनम् | ८५० |
| | प्रजापतितनुसञ्ज्ञकाना द्वादशम न्त्राणा विधि | ८५१ |
| | — स्वरूपप्रदर्शनम् | ८५१ |
| | ग्रह्योग्यसञ्ज्ञकम न्त्रस्य विधि | ८५३ |
| | — स्वरूपप्रदर्शनम | ८५३ |
| | द्वादशाहयागीयविशेषवक्तव्यानि समाप्तानि | ८५४ |
| [२५] पञ्चमपञ्चिकाया पञ्चमोऽध्याय | | ८५६–८९८ |
| ( i ) | अथाग्निहोत्रयागस्य विषय | ८५६ |
| | अग्निहोत्रस्य सायकालीन यजमानकर्त्तव्यम् | ८५६ |
| | अग्निहोत्रस्य प्रात कालीन यजमानकर्तव्यम् | ८५७ |
| | आहवनीयोद्धरणस्य प्रशसा | ८५७ |
| | क्षीरादिरूपस्य होमद्रव्यस्य प्रशसा | ८५७ |
| | होमद्रव्यस्य ( क्षीरस्य ) अवस्थाभेदात् षोडशदेवतात्वम् | ८५७ |
| ( ii ) प्रायश्चित्तम | अग्निहोत्री यदि दुह्यमाना उपविशेत् तत्र | ८५९ |
| | ध्वनिकुर्यात् तत्र | ८६१ |
| | दोह्यमानस्य क्षीरस्य अग्निहोत्र्याश्चलनेन भूमिपतने | ८६१ |
| | सर्वस्य भूमिपतने उपाया-तररूपम् | ८६२ |
| ( iii ) | अग्निहोत्रसिद्धये क्षीरद्रव्यभावे श्रद्धाहोमस्य विधानम् | ८६३ |
| | तत्तद्भावनारूपमानसाग्निहोत्रहोमस्य स्वरूप विधिश्च | ८६४ |
| | मानुषदैवतभेदाद् दक्षिणाद्वैविध्यवर्णनम् | ८६४ |
| | अग्निहोत्रानुष्ठानस्य सर्वधनदानफलसाम्येन प्रशसा | ८६६ |
| | गवामयनसत्रसाम्येन प्रशसा | ८६६ |

| | | |
|---|---|---|
| (iv) | आख्यायिका—अनुदितहोमनिन्दोदितहोमप्रशंसार्था | ८६९ |
| | उदितहोमस्य दृष्टान्तपूर्विका प्रशंसा | ८७१ |
| | पुनः प्रकारान्तरेण प्रशंसा | ८७३ |
| (v) | यज्ञगाथा—उदितहोमस्य प्रशंसार्था | ८७४ |
| | बृहद्रथन्तरसम्बन्धेन दिवाहोमस्य रात्रिहोमस्य च प्रशंसापूर्वकम् उदितहोमनिगमनम् | ८७४ |
| | यज्ञगाथा—अनुदितहोमनिन्दार्था | ८७५ |
| | आदित्यदेवप्रशंसार्था (विश्वस्तैन्यशपथोपाख्यानम्) | ८७६ |
| | आदित्यदेवस्य प्रशंसा, प्रकारान्तरेण पुनः प्रशंसा, एकातिथित्वं च | ८७६ |
| | विश्वस्तैन्यगाथाया भागविशेषस्य तात्पर्यव्याख्यानम् | ८७८ |
| | अग्निहोत्रस्यावश्यकत्ववर्णनप्रसङ्गे सायमविधिनिराकरणनिषेधः | ८७९ |
| (vi) | अनुदितहोमनिन्दा उदितहोमप्रशंसा च प्रकारान्तरेण | ८८० |
| | दृष्टान्तान्तरेण, पुनः प्रकारान्तरेण युक्त्यन्तरेण च | ८८१ |
| | यज्ञगाथा—उदितहोमप्रशंसार्था अनुदितहोमनिन्दार्था च | ८८२ |
| (vii) | आख्यायिका सर्वप्रायश्चित्तसम्पादनस्य व्याहृतित्रयस्य सृष्टिवर्णनार्था | ८८३ |
| | प्रणवस्योत्पत्तिवर्णनार्था | ८८४ |
| | ऋग्यजुस्सामवयीनिर्होत्राध्वर्यवोद्गातृब्रह्मत्वविधिः | ८८५ |
| | यज्ञदोषप्रायश्चित्ताय गार्हपत्यादिषु व्याहृतिहोमविधिः | ८८७ |
| | व्याहृतीनां वेदान्तःश्लेषणत्वम् | ८८८ |
| | विश्लिष्टोऽपि यज्ञो व्याहृतिभिरेव संश्लिष्टो भवतीत्यत्र दृष्टान्तप्रदर्शनम् | ८८८ |
| | प्रश्नोत्तराभ्यां ब्रह्मण आर्त्विज्यनिरूपणम् | ८८९ |
| (viii) | ब्रह्मणः मनसा संकल्पराहित्यानुसन्धानविधिः | ८९० |
| | वाग्व्यवहारे बाधप्रदर्शनम् | ८९१ |
| | उपाकृते प्रातरनुवाके उपांश्वन्तर्यामहोमं यावत् मौनविधिः | ८९२ |
| (ix) | दक्षिणाग्रहणे विचारः | ८९३ |
| | यज्ञभिषक्त्वेन दक्षिणाग्रहणं न्याय्यमिति सिद्धान्तः | ८.४ |
| | मानसानुष्ठानकारित्वेनैव दक्षिणाबाहुल्यम् | ८९४ |
| | व्याहृतिप्रायश्चित्तानुष्ठानविधिः | ८९५ |
| | आर्त्विज्यकर्तव्यान्तराणि | ८९६ |

[२६] षष्ठपञ्चिकायाः प्रथमोऽध्यायः ८९९-९१४

(१) आख्यायिका ग्रावस्तुत् कर्तव्यविधानार्था ८९९

ग्रावस्तुत्सूक्तेन ग्राव्णामभिष्टवविधिः ९०१

ग्रावस्तुदभिष्टवदृष्टान्तप्रसङ्गेन अर्बुदोदासर्पणीनामप्रपत्कथा ९०१

अभिष्टवकाले ग्रावस्तुत उष्णीषेण नेत्रवेष्टनविधिः ९०१

ग्रावस्तुतोऽभिष्टवार्थमन्यासामप्यृचां विधानम् ९०२

ग्रावस्तुदभिष्टवकृता पापशान्तिविषये दृष्टान्तप्रदर्शनम् ९०३

(१) ग्रावस्तुदभिष्टवगतानाम् ऋचां शतसंख्याकत्वविधानम् ९०४

त्रयस्त्रिंशत् सङ्ख्याकत्वविधानम् ९०४

अपरिमितसङ्ख्याकत्वविधानम् ९०५

पाठप्रकारविधानम् ९०६

मध्यन्दिनकालीनाभिष्टवस्य विशेषतः प्रशंसा ९०७

ग्रावस्तुतः सम्प्रैषनिरपेक्षत्वविधानम् ९०८

सुब्रह्मण्याख्यस्य ऋत्विजः कर्तव्यनिरूपणम् ९०८

(iii) — प्रशंसा, स्त्रीलिङ्गशब्दवाच्यत्वे हेतुश्च ९०९

— समीपे दक्षिणात्वेन वृषमानयनविधिः ९११

सुब्रह्मण्याह्वानस्य देशविशेषनिरूपणम् ९१०

— विहितस्य उत्करदेशस्य प्रश्नोत्तराभ्यां प्रशंसा ९११

आग्नीध्रस्य ऋत्विजः आर्त्विज्यकर्तव्यविधानम् ९१२

पात्नीवतग्रहे अनुवषट्कारनिषेधः ९१२

— अनुवषट्कारनिषेधे यज्ञगाथा ९१२

नेष्टुरुपस्थासीनस्य पात्नीवतग्रहभक्षणविधिः ९१३

सुब्रह्मण्यायै दक्षिणासु नीतासु यज्ञसमाप्तिः ९१४

[२७] षष्ठपञ्चिकायाः द्वितीयोऽध्यायः ९१५-९३४

(१) आख्यायिका—मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां शस्त्रविधानार्था ९१५

मैत्रावरुणस्य शस्त्रविधिः ९१५

ब्राह्मणाच्छंसिनः शस्त्रविधिः ९१६

अच्छावाकस्य शस्त्रविधिः ९१७

प्रातस्सवनाभिमानिनोऽग्निदेवस्य प्रशंसा ९१७

तृतीयसवनाभिमानिनां विश्वेषां देवानां प्रशंसा ९१८

(ii) होत्रकाणामहर्गणेषु यत्नेषु प्रातःसवने प्रकारविशेषविधिः ९२०
माध्यन्दिनसवने तन्निषेधः ९२०
तृतीयसवने माध्यन्दिनन्यायातिदेशः ९२१
(iii) होत्रकाणामारम्भणीयानामृचां विधानप्रस्तावः ९२१
— प्रशंसा ९२२
आरम्भणीयाविधिः मैत्रावरुणस्य होत्रकस्य ९२२
ब्राह्मणाच्छंसिनो होत्रकस्य ९२२
अच्छावाकस्य होत्रकस्य ९२३
होत्रकाणां परिधानीयानामृचां विधानप्रस्तावः ९२३
(iv) परिधानीयाविधिः मैत्रावरुणस्य होत्रकस्य ९२४
ब्राह्मणाच्छंसिनः होत्रकस्य ९२४
परिधानीयाविधिः अच्छावाकस्य होत्रकस्य ९२७
(v) होत्रकाणां त्रयाणां सवनद्वये परिधानीयाद्वैविध्योपदेशः ९२७
मैत्रावरुणस्य ऐकाहिकाभिरेव परिधानीयाविधिः ९२८
अच्छावाकस्य सवनद्वये प्रकृतिविलक्षणपरिधानीयाद्वयविधिः ९२९
ब्राह्मणाच्छंसिनः अहीनगताभिरैकाहिकाभिश्चोभयीभिरेव परिधानीयाभिः परिधानविधिः ९३०
तृतीयसवनगतानां त्रयाणामेव होत्रकाणां परिधानीयानां प्रशंसा ९३१
प्रातस्सवनगतानां याज्यादीनां मध्ये अनवानविधिः ९३२
स्तोमवृद्धौ नियमविशेषस्य विधानम् ९३२
प्रातस्सवने अतिशंसननिषेधः ९३२
माध्यन्दिनसवनतृतीयसवनयोरतिशंसनविधिः ९३३
यत्रातिशंसनं कर्तव्यं भवति, तत्र तदर्थं यासामृचामानयनं कर्तव्यम्, तासामृचां देवविशेषोपदेशः ९३३
होत्रकाणां विहितानां परिधानीयानां स्तुतिः ९३४

[२८] षष्ठपञ्चिकायाः तृतीयोऽध्यायः ९३५-९७३
(i) प्रातस्सवने उन्नीयमानसूक्तस्य विधानम् ९३५
उन्नीयमानसूक्तगतानामृचां देवताद्वारा प्रशंसा ९३६
छन्दोद्वारा प्रशंसा ९३६
ऋक्सङ्ख्याद्वारा प्रशंसा ९३६
माध्यन्दिनसवने उन्नीयमानसूक्तगतानां दशानामृचां विधिः ९३६

तृतीयसवने उद्गीयमानसूक्तगताना नवानामृचा विधि ९३७
सम्पूर्णसूक्तानुवचन कर्त्तव्यमिति प्रथममतस्य प्रशसा ९३७
प्रतिसूक्त सप्तानामेवर्चामनुवचनीयत्वमिति द्वितीयमतस्य प्रशसा ९३७
प्रथमसूक्तगताना नवाना, द्वितीयसूक्तगताना दशाना, तृतीयसूक्तगताना नवानामेवानुवचनीयत्वमिति तृतीयमतस्य प्रशसाधिक्यम् ९३८
(ii) प्रस्थितयाज्यानामैन्द्रत्व कथमिति विचारारम्भ ९४०
याज्याया ऐन्द्रत्वसम्पादनप्रकारोपदेश मैत्रावरुणस्य ९४०
पोतु ९४१
नेष्टु ९४१
आग्नीध्रस्य ९४२
अच्छावाकस्य ९४२
(iii) माध्यदिन सवने उद्गीयमानसूक्तस्य विधानम् ९४३
देवताद्वारा छन्दोद्वारा च तत्सूक्तीयानामृचा प्रशसा ९४४
होत्रादीना सप्तानामेवर्त्विजा प्रस्थितयाज्याविधि ९४५
याज्याया उपदेश होतु, मैत्रावरुणस्य ब्राह्मणाच्छसिन ९४५
पोतु, नेष्टु, अच्छावाकस्य, आग्नीध्रस्य ९४६
(iv) तृतीयसवने उद्गीयमानसूक्तस्य विधानम् ९४७
पवमानस्तोत्रे देवताविषयको विचार ९४८
छन्दोविषयको विचार ९४९
प्रस्थितयाज्याविषयको विचार ९५०
याज्याया ऐन्द्रार्भवत्वप्रदर्शनम्—होतु, मैत्रावरुणस्य, ब्राह्मणाच्छसिन ९५०
पोतु नेष्टु अच्छावाकस्य आग्नीध्रस्य ९५१
याज्यास्ववस्थितस्य छन्दस प्रशसा ९५३
(v) होत्रकाणा परस्पर साम्य वैषम्य च विवेक्तु विचार: ९ ४
मैत्रावरुणब्राह्मणाच्छस्यच्छावाकाना शसनविचार ९५५
होतृहोत्रकयो द्वयुक्थत्वेन साम्य कथमिति विचार ९५६
(v) पोतृनेष्ट्राग्नीध्रीयाणामपि होत्रा उक्थित्य कथमिति विचार ९५७
द्विप्रैष पोता द्विप्रैषो नेष्टा, अन्ये एकप्रैषा इत्यत्र विचार ९५८

साम्प्रदायविद्भिः पठितं प्रैषसूत्रम् ९५९
होतॄणामपि मैत्रावरुणादीनां कथं होतृत्वव्यपदेश इति विचारः ९६०
उद्गातृविषये कश्चिद् विशेष विचारः ९६१
अच्छावाकविषयेऽपि कश्चिद् विशेष विचारः ९६२
उक्थसंस्थेष्वहस्सु मैत्रावरुणशस्त्रविषयको विचारः ९६३
ब्राह्मणाच्छंस्यच्छावाकशस्त्रविषयको विचारः ९६३

(vii) तृतीयसवनगतानां मैत्रावरुणादिशस्त्राणां छन्दोदैवतविचारः ९६४
आरम्भणीयानां छन्दोदैवतविचारः ९६५
परिधानीयानां छन्दोदैवतविचारः ९६६
होत्रच्छावाकयोरुक्थेऽन्यासविधानम् ९७०
षोडशिसंस्थायां चतुरक्षराभ्यासविधिः ९७०

(viii) अच्छावाकः तृतीयसवने शिल्पेषु नाराशंसी ऋचः कथं शंसति ९७१
इदतायै शंसति ९७२
प्रसङ्गतो गर्भोपनिषद्वचनोदाहरणम् ९७२

[२९] षष्ठपञ्चिकायाः चतुर्थोऽध्यायः ९७४–१०२१

(i) अथाहर्गणेषु होत्रकाणां माध्यन्दिनीयशस्त्रक्लृप्तिविचारः ९७४
माध्यन्दिनीयशस्त्रक्लृप्तिविधानम् ९७५

(ii) आख्यायिका सम्पातसूक्तानामुत्पत्तिख्यापनकाख्यायिका ९७७
विश्वामित्रदृष्टानां सम्पातसूक्तानां वामदेवकर्तृकापहरणम् ९७७
सम्पातसूक्तानां वामदेवदृष्टत्वं विश्वामित्रवर्णनादिकम् ९७८
भारद्वाजवासिष्ठनौधससूक्तानां वर्णनम् ९७९
अहर्गणेषु प्रातःसवने अहीनसूक्तानां विधिः ९८०
तेषामेवाहीनसूक्तानां स्वरूपोपदेशः ९८०
गवामयने हि द्विविधान्यहानि,—चतुर्विंशादीन्यावृत्तिरहितानि, षडहगतान्यावृत्तिसहितानि चेति, तत्रोभयत्रैव वह्निवत् सूक्तं कः कथं शंसतीति विचारः ९८१
आवृत्तिरहितेष्वहस्सु विहितसूक्तानां शंसनप्रशंसा ९८२

( iii ) मैत्रावरुणो यास्त्रीन् सम्पातसूक्तान् विपर्यस्य शंसेत्, तत्प्रदर्शनम् ९८४
ब्राह्मणाच्छंसी यास्त्रीन् सम्पातसूक्तान् विपर्यस्य शंसेत्, तत्प्रदर्शनम् ९८५
अच्छावाकः यांस्त्रीन् सम्पातसूक्तान् विपर्यस्य शंसेत्, तत्प्रदर्शनम् ९८५
प्रतिदिनं पुरस्ताच्छंसनीयानां त्रयाणां सूक्तानां विधानम् ९८६
पृष्ठ्यषडहस्य उत्तरस्मिंस्त्र्यहे कासांचिदृचामावापविधिः ९८६
कस्मिन् दिने का ऋच आवपनीया इति विचार्य तन्निर्णयः ९८७
स्तोमवृद्धावतिशंसनार्थानामावपनीयानां सूक्तानां प्रदर्शनम् ९८८
( iv ) विश्वामित्रशब्दनिरुक्तिः ९८९
सूक्तस्य पुरस्ताच्छंसनीय सूक्तम्—मैत्रावरुणस्य ९८९
ब्राह्मणाच्छंसिनः ९९०
अच्छावाकस्य ९९१
अनिर्दिष्टदेवताकसूक्तादीनां प्राजापत्यत्वविधानम् ९९३
( v ) प्रतिदिनं शंसनीया ये कद्वन्तः प्रगाथास्तेषां विधिः ९९५
कद्वत्प्रगाथेभ्य ऊर्ध्वं शंसनीयानां सूक्तप्रतिपदां शंसनविधिः ९९७
सूक्तप्रतिपद्भ्यः पूर्वं व्याहावनिषेधः १०००
त्रिष्टुप्छन्दस्कानां सूक्तप्रतिपन्नामकानामृचां प्रशंसा १०००
( vi ) — स्वरूपाणि व्याख्यानानि च १००१
परिधानीया ऋचः स्तोतुमुपक्रमः १००३
दृष्टान्तद्वयपूर्वकं परिधानीयानां शंसनविधानम् १००४
अग्निष्टोमसूक्तस्य परिधानीयाविधौ विशेषोपदेशः १००४
( vii ) परिधानीयामुपजीव्य क्रतोर्योगविमोकौ ब्राह्मणाच्छंसिनः १००६
अच्छावाकस्य १००६
मैत्रावरुणस्य १००७
यथोक्तयोगविमोकज्ञानस्य प्रशंसा १००७
अहस्समूहमपेक्ष्य योगविमोकयोरुपदेशः १००८
योगविमोकहेतूनां परिधानीयानाम् एकैकविधत्वस्य निन्दा १००८

'तत्सवितुः' आदि तृच और 'अद्या नो देव' आदि तृच वैश्वदेव के प्रतिपद् एवं अनुचर हैं। रथन्तर साम सम्बन्धी दिन तृतीय दिन में यह तृतीय दिन का निरूपक है।

सवितृदेवताकं सूक्तान्तरं दर्शयति—

**तद्देवस्य सवितुर्वार्यं महदिति सावित्रम् ॥** इति।

'तत्' एतत् 'सावित्रं' सवितृदेवताकम्[1]। तत्र हि सवितुर्देवस्य सम्बन्धि 'वार्यं' वरणीयं 'महत्' अधिकं तेज इत्ययमर्थः श्रूयते। अत सवितृसम्बन्धश्रवणात् सावित्रम् ॥

उस 'सविता देव का वरणीय महान् तेज' आदि [अर्थ के श्रवण से] 'तद्देवस्य' इत्यादि सूक्त [सवितृ देव से सम्बन्धित होने से] सवितृ देवताक है।

पूर्वत्र तृचे रथन्तरसम्बन्धरूपं लिङ्गमुक्तम्, अत्र तु लिङ्गान्तरं दर्शयति—

**अन्तो वै महदन्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति।

अत्र प्रथमपादे महच्छब्दोऽस्ति, महच्च वस्तु काम्यमानानां वस्तूनामन्तो भवति, न खलु महतोऽप्यधिकं केनचित् क्वचित् किंचिदधिकं काम्यते तादृशस्याभावात्। तस्मान्महदस्त्वेवान्तो भवति। इदं च तृतीयमहः प्रथमस्य त्र्यहस्यान्तः। अतः 'अन्तः' अन्तत्व-साम्यात् तृतीयेऽहनि 'तद्देवस्य' इत्यादिकं योग्यम्। यद्यप्यन्तशब्दोऽत्र नास्ति, तथाप्युक्त-रीत्यान्तशब्दार्थस्य सद्भावाद् अन्तवल्लिङ्गमस्ति ॥

[इसके प्रथम पाद में] यद्यपि तृतीय दिन का लक्षक 'अन्त' शब्द नहीं है तथापि 'महत्' शब्द है। वस्तुतः इच्छित वस्तु में महान् वस्तु की ही कामना होने से] 'महत्' ही अन्त है, तृतीय दिन [प्रथम त्र्यह का] अन्त है। अतः तृतीय दिन में यह [सूक्त अन्त साम्य के कारण] तृतीय दिन का निरूपक है।

तृचान्तरं विधत्ते—

**'घृतेन द्यावापृथिवी अभीवृते'[2] इति द्यावापृथिवीयं घृतश्रिया घृतपृचा घृतावृधेति पुनरावृत्तं पुनर्निनृत्तं तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति।

द्यावापृथिवीदेवताकमिदं विस्पष्टम्। घृतश्रियेत्यादिः द्वितीयः पादः, तत्र घृतशब्दस्य पुनः पुनरावृत्तिरेव लिङ्गम्। तया चावृत्त्या नृत्तगतावानुकरणप्रतीतिः 'पुनर्निनृत्तं' लिङ्गान्तरम् ॥

'घृतेन द्यावापृथिवी' आदि द्यावापृथिवी देवताक तृच [के द्वितीय पाद] में 'घृतश्रिया', 'घृतपृचा' और 'घृतावृध' आदि पदों में ['घृत' शब्द की] पुनरावृत्ति है और [उस आवृत्ति के कारण] यह पुनः निनृत्त है; अतः [पृष्ठ्यषडह के] तृतीय दिन में यह तृतीय दिन का निरूपक है।

---

१. ऋ० ४.५३।    २. ऋ० ६.७०।

ऋभुदेवताक सूक्तान्तर विधत्ते—

**'अनश्वो जातो अनभीशुरुक्थ्य' इत्यार्भव[1], रथस्त्रिचक्र इति त्रिवत्, तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति ।

द्वितीयस्या ऋचश्चतुर्थपादे 'ऋभवो वेदयामसि' इति श्रवणात् ऋभुदेवताकत्वम् । प्रथमाया ऋचो द्वितीयपादे 'रथस्त्रिचक्र' इति त्रिशब्दोपेत लिङ्गम् ॥

**'अनश्वो जातो' इत्यादि सूक्त [की द्वितीय ऋचा के चतुर्थ पाद में 'ऋभव' शब्द होने से] ऋभु देवताक है। [प्रथम ऋचा के द्वितीय पाद के] 'रथस्त्रिचक्र' शब्द के 'त्रि' शब्द से युक्त होने से [पृष्ठ्यषडह के] तृतीय दिन में यह तृतीय दिन का चिह्न है।**

बहुदेवताक सूक्तान्तर विधत्ते—

**'परावतो ये दिधिषन्त आप्यमिति' वैश्वदेवम्, अन्तो वै परावतोऽन्तस्तृतीय-महस्तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति ।

द्वितीयस्या ऋच पूर्वार्धं एव पठ्यत—'विश्वा हि वो नमस्यानि वद्या नामानि देवा उत यज्ञियानि व' इति । तत्र देवा इति बहुवचनम् अत्र प्रथमाया ऋचश्चतुर्थपादे 'देवा आसते' इति बहुवचनम्, तेन वैश्वदेव बहुदेवताकम् इदम् । 'परावत' इत्यनेन शब्देन दूरदेशोऽभिधीयते, स च निवासदेशापेक्षयाऽन्तो भवति । तृतीयमहश्च त्र्यहस्यान्त । अत पूर्ववत् अर्थतोऽन्तवल्लिङ्गमस्ति[3] ॥

**'परावत' इत्यादि सूक्त [के द्वितीय ऋचा के पूर्वार्ध में 'देवा' और प्रथम ऋचा के चतुर्थ पाद में 'देवा आसते' यह बहुवचनान्त पद होने से] वैश्वदेव देवताक अर्थात् बहु देवताक है। 'परावत' [शब्द का अर्थ 'दूर देश' है वस्तुत यह निवासस्थल की अपेक्षा] अन्त वाला है, और तृतीय दिन [त्र्यह का] अन्तिम दिन है। अत [पृष्ठ्यषडह के] तृतीय दिन में यह तृतीय दिन का निरूपक है।**

तदत्र वैश्वदेवसूक्त प्रशसति—

**तदु गायमेतेन वै गय प्लातो विश्वेषा देवाना प्रिय धामोपागच्छत् स परम लोकमजयत् ॥** इति ।

'तदु' तदेतत्सूक्त 'गाय' गयेन दृष्टम् । प्लतनामकस्य पुत्रो गयनामको महर्षि 'एतेन' परावत इत्यादिसूक्तेन विश्वेषा देवाना प्रिय स्थान प्राप्य तैरनुगृहीत उत्तम लोक जितवान् ॥

---

१ ऋ० ४ ३६ । २ ऋ० १० ६३ ।

३ 'अन्तपरावच्छब्दो दूरार्थो'—इति षड्गुरुशिष्य ।

४ गयो नाम प्लते पुत्रो न तु प्लतस्य, 'एवा प्लत सूनु रवीवृधदिति' (१० ६३ १७) लिङ्गात् । प्लातवचन स्वामन गय (सून ५ ९) इति वदस्यात्रेयत्व मा भूत् ।— इति ऋक्सर्वानुक्रमण्या १० ६३ सूत्रे षड्गुरुशिष्य ।

यह सूक्त गय ऋषि द्वारा दृष्ट है। इससे प्लत के पुत्र गय नामक महर्षि ने विश्वेदेवों के प्रिय धाम को प्राप्त किया और उससे अनुगृहीत होकर उत्तम लोक को जीता।

वेदनं प्रशंसति—

**उप विश्वेषां देवानां प्रियं धाम गच्छति, जयति परमं लोकं य एवं वेद ॥ इति ।**

जो इस प्रकार जानता है वह विश्वेदेवों के प्रिय धाम को जाता है और उत्तम लोक को जीता है।

शस्त्रान्तरस्य प्रतिपत्सूक्तं विधत्ते—

**वैश्वानराय धिषणामृतावृध इत्याग्निमारुतस्य प्रतिपद्[1]; अन्तो वै धिषणाऽन्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥ इति ।**

अत्र धिषणेत्यन्तःकरणवाचकः श्रूयते। अन्तःकरणं च भूम्यादन्तं प्राप्तुं शक्नोति। तथा चान्यत्र श्रूयते—'न वा इमामश्वो न वाऽश्वतरोऽस्य सद्यः पर्याप्तुम् अर्हति, मनो वा इमां सद्यः पर्याप्तुमर्हति'—इति। 'अन्तः सद्मा' भूम्याद्यन्तप्राप्तिहेतुत्वाद् 'धिषणा'[2]-शब्दोऽन्तस्योपलक्षकः। अन्तस्तृतीयमित्यादि पूर्ववत् ॥

'वैश्वानराय' इत्यादि ऋचा आग्निमारुत शस्त्र की प्रतिपत् है। 'धिषणा' [शब्द का अर्थ] 'स्तुति' है [क्योंकि यह अन्तःकरण से उद्भूत होती है अतः] अन्त वाली है, और तृतीय दिन [त्र्यह का] अन्तिम दिन है। अतः [पृष्ठ्यषडह के] तृतीय दिन में यह तृतीय दिन का निरूपक है।

मरुद्देवताकं सूक्तं विधत्ते—

**'धारावरा मरुतो धृष्ण्वोजस'[3] इति मारुतं वह्वभिव्याहृत्यमन्तो वै वह्वन्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥ इति ।**

मारुतत्वमत्र विस्पष्टम्। बहुविधम् 'अभिव्याहृत्यम्' अभिव्याहरणीयं शसनीयमृग्जातं यस्मिन् सूक्ते तद् 'वह्वभिव्याहृत्यम्'। अत्र हि पञ्चदशर्चं समाम्नाया इति बहुत्वम्। बहूनां

---

१. ऋ० ३.२.१।

२. (i) 'वाग् धिषणा।अन्तो निर्णयः।

मनोगतं ह्यर्थरूपं वाचा निर्णयते खलु।

वाग्घ्यत (ऐ० आ० २.१.१) हि वक्ष्यते—मनसा अग्रे सङ्कल्पयत्यथ वाचा व्याहरतीति—इति षड्गुरुशिष्यः।

(ii) अन्तो वै विपरीतलक्षणा। नहि वाचोऽन्तोऽस्ति। नहि वै वागपक्षीयते'—इति लिङ्गाद्'—इति गोविन्दस्वामी।

३. ऋ० २.३४।

देवानामभिव्याहरणीयाना विद्यमानत्वाद् बहुत्वम् । तस्य बहुत्वस्य अनेकत्वद्वित्वापेक्षयान्त त्वम् । अतोऽन्तवल्लिङ्गमस्ति ॥

'धारावरा' इत्यादि बहुत प्रकार से शसनीय सूक्त मरुद्देवताक है। [क्योंकि इस सूक्त की पन्द्रह ऋचाएँ शसनीय हैं और बहुत देवताओ को अभिव्याहरणीय है, अत यह बहुत्व अनेक और द्वित्व की अपेक्षा] अन्त वाला है, और तृतीय दिन [त्र्यह का] अन्तिम दिन है। अत. [पृष्ठयषडह के] तृतीय दिन में यह तृतीय दिन का निरूपक है।

अनन्तर विधत्ते—

**'जातवेदसे सुनवाम सोममिति'[1] जातवेदस्याऽच्युता ॥ इति ।**

अच्युतत्व सर्वेषामह्ना साधारण लिङ्गम् ॥

'जातवेदसे सुनवाम' आदि जातवेद अग्नि देवताक अच्युत [अर्थात् सभी अह में साधारण] ऋचा है।

जातवेदोदेवताकं सूक्तं विधत्ते—

**'त्वमग्ने प्रथमो अङ्गिरा ऋषिरिति'[2] जातवेदस्य पुरस्तादुदर्कं तृतीयेऽहनि तृतीयस्याह्नो रूपम्, त्वं त्वमित्युत्तर त्र्यहमभिवदति सन्तत्यै ॥ इति ।**

यद्यपि 'त्वमग्ने' इत्यग्निरेव देवता प्रतीयते, तथाऽप्यसौ जातवेद शब्दवाच्यो भवति । जातस्य सर्वस्य जगतो वेदितृत्वात् । तस्मादेतत् सूक्त 'जातवेदस्यम्' । तच्च 'पुरस्तादुदर्कम्' उदर्कशब्दोऽवसानवचन, अवसान च विच्छेद । सोऽपि द्विविध — पुरस्ताद् उपरिष्टाच्च । उपक्रमात् पूर्वं शसनीयस्याभावात् अय पूर्वकालीनो विच्छेद पुरस्ता दुदर्क इत्युच्यते । शसनादूर्ध्वकालीनो विच्छेद उपरिष्टादुदर्क । समानोदर्कत्व च तृतीय स्याह्नो लिङ्ग युक्तम् । तत्रोपरिष्टादुदर्कसाम्य सजनीयादिपूदाहृतम्[3] । अत्र पुरस्तादुदर्क साम्य लिङ्गत्वेनोदाह्रियते । तथा ह्यस्मिन् सूक्ते सर्वास्वप्यृक्षु 'त्वमग्ने' इति पदद्वय समाम्नातम् । तदिद समानोदर्कत्वमेक लिङ्गम् । असकृदभिधानादेव पुनरावृत्तलिङ्ग च वक्तु शक्यम् । किंच, लोके कश्चित्पुरुष सर्वोन्यामिमुखीकृत्य त्वमिति वदति, एवमश्वाप्युत्तरन्त्र्यहमभिमुखीकृत्यैव प्रत्यृच त्व त्वमिति शब्द प्रयुज्यते, तच्च प्रथमद्वितीययोस्त्र्यहयोश्च 'सन्तत्यै' विच्छेदराहित्याय भवति ॥

'त्वमग्ने प्रथम ' आदि सूक्त जातवेद [= सभी जगत् के ज्ञाता अग्नि] देवताक है। [प्रत्येक मन्त्र के] प्रारम्भ में ['त्वमग्ने' होने से] समानता है जो तृतीय दिन में प्रयुक्त तृतीय दिन का लक्षक है। 'त्वं त्व' इस प्रकार का प्रत्येक ऋचा में अभिधान अगले त्र्यह

१ ऋ० १.९९ ।　　२ ऋ० १ ३१ ।　　३ द्र० इत पूर्वम् (२१ २) पृ० ७२० ।

[चौथे, पांचवें और छठे दिन] को लक्ष्य करके किया गया है, जो [प्रथम और द्वितीय त्र्यह की] निरन्तरता के लिए [अर्थात् विच्छेदराहित्य के लिए] होता है।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

**संततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति ॥ २ ॥** इति ।

'ये' पुरुषाः प्रत्यृचं त्वं-शब्देन सूचितं त्र्यहयोः सातत्यं विद्वांसोऽनुतिष्ठन्ति, ते पुरुषाः 'सततैः' परस्परसम्बद्धैः, अत एव विच्छेदरहितैस्त्र्यहैरनुतिष्ठन्ति, तेषां विघ्नो न भवतीत्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया प्रथमाध्याये (एकविंशाध्याये) द्वितीयः खण्डः ॥ २ ॥ [१५५]

जो इस प्रकार ['त्व' शब्द से सूचित] निरन्तरता को जानते हुए अनुष्ठान करते, वे परस्पर सम्बन्धित अतएव विच्छेदरहित त्र्यह के द्वारा अनुष्ठान करते हैं।

॥ इस प्रकार इक्कीसवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

द्वादशाहमध्यवर्तिनो नवरात्रस्य 'त्रयश्च वा एते त्र्यहाः' इति यत्पूर्वमुक्तम्[1], तत्र प्रथमस्त्र्यहोऽभिहितः । स च पृष्ठ्यषडहस्य पूर्वो भागः । अथ तस्योत्तरो भागो नवरात्रे मध्यमस्त्र्यहो वक्तव्यः । तस्मिंश्च यत्प्रथममहस्तन्नवरात्रे चतुर्थमहर्भवति । तत्र शस्त्रकर्माणि उपरिष्टाद् विधास्यते । आदौ तावत्त्र्यह्णो वक्तव्यमन्तरर्थं प्रस्तौति—

**आप्यन्ते वै स्तोमा आप्यन्ते छन्दांसि तृतीयेऽहन्येतदेव तन उच्छिष्यते वागित्येव तदेतदक्षरं त्र्यक्षरं वागित्येकमक्षरमक्षरमिति त्र्यक्षरम् ॥** इति ।

पूर्वोक्तेषु त्र्यहेषु त्रिवृत्-पञ्चदश-सप्तदशाख्याः 'स्तोमाः' 'आप्यन्ते' समाप्ता इत्यर्थः । तथा गायत्रीत्रिष्टुब्जगतीत्येतानि 'छन्दांस्याप्यन्ते' समाप्तानि । तत ऊर्ध्वम् 'एतदेव' वक्ष्यमाणम् 'उच्छिष्यते' पूर्वमनुक्तत्वाद् उत्कर्षेणावशिष्यते । तस्यैवावशिष्टस्य 'वागिति' निर्देशः । एवकारस्तु पूर्वोक्तदेवताव्यावृत्त्यर्थः । 'अग्निर्वै देवता', 'इन्द्रो वै देवता', 'विश्वे वै देवा देवता'—इत्येवं तस्य तस्याह्नो निर्वाहकं देवतात्रयं पूर्वमुक्तत्वात्[2] नावशिष्टम् । वाग्देवता पूर्वमनुक्तत्वादवशिष्टा । तस्य वाचकं 'वागित्येतत्' शब्दरूपं 'तदेतदक्षरं' वकारादिवर्णात्मकं पुनरपि 'त्र्यक्षरं' त्रिभिरक्षरैरुपेतम् । कथमेतदिति ? तदेतत् स्पष्टीक्रियते— वागित्युक्ते सत्येकाक्षरं भवति । वकारगकाराक्षराभ्यां युक्तस्याकाराक्षरस्यैकत्वात् । तदेवाक्षरमिति वाग्देवतानाम्न्याम्नायमाणं त्र्यक्षरं भवति । अतो वाग्देवताया नाम्न्येकरूपत्वं त्रिरूपत्वं च सम्पन्नम् ॥

---

१. द्र० इतः पूर्वम्, पृ० ६६६ ।  २. द्र० इतः पूर्वम्, पृ० ६८९, ६९९, ७११ ।

v ३ [xx। ३] [पूर्वोक्त] त्र्यह में [सभी त्रिवृत्-पञ्चदश-सप्तदश नामक] स्तोम समाप्त हो जाते हैं और [गायत्री, त्रिष्टुप्, जगती—ये] छन्द भी समाप्त हो जाते हैं। इसके बाद [अर्थात् पूर्वोक्त अग्नि, इन्द्र और विश्वेदेव के बाद] मात्र एक ही अवशिष्ट रहता है वह है 'वाक्'। 'वाक्' यह शब्द [वकारादिवर्णात्मक] तीन अक्षरों से युक्त है। 'वाक्' यह [वकार-गकार से युक्त केवल आकार रूप अक्षर के होने से] एक अक्षर है। [अत वाग्देवता के नाम में एकरूपत्व और त्रिरूपत्व होने से] वही अक्षर वाग्देवता नाम से अभिहित त्र्यक्षर होता है।

तत्र रूपत्रयसपत्तौ प्रयोजनमाह्—

**स एवैष उत्तरस्त्र्यहो वागेक गौरेक द्यौरेकम्** ॥ इति ।

वाग्देवताया अक्षरत्रयब्देन व्यवहार सति योऽयमकारादीना त्रयाणा समूह, स एप एव 'उत्तरस्त्र्यह' चतुर्थपञ्चमषष्ठाहरूपो भवत्। उत्तरस्याहस्त्रयस्य निर्वाहक देवतात्रयस्वरूप सम्पन्नमित्यर्थ। तत्र लोकत्रयप्रसिद्धा या वाग्देवता तदेक स्वरूपम्, या च गौर्देवता तद्द्वितीय स्वरूपम्, याऽपि द्यौर्देवता तत्तृतीय स्वरूपम्।

[वाग्देवता का जो त्र्यक्षर समूह है] वह यह ही बाद के [चौथे, पांचवें और छठवें दिन रूपी] त्र्यह हैं। [लोकत्रय में प्रसिद्ध] जो वाग्देवता है, वह एक स्वरूप है और जो गौ देवता है वह एक [दूसरा] स्वरूप है और जो द्यौ देवता है वह एक [तीसरा] स्वरूप है।

एव सति किं फलितमित्याशङ्क्य फलित दर्शयति—

**ततो वै वागेव चतुर्थमहर्वहति** ॥ इति ।

यस्माद्देवतात्रय निष्पन्न 'ततो वै' तस्मादेव कारणाद् वागेव प्रथमदेवता मध्यमत्र्यहस्य प्रथम नवरात्रापेक्षया चतुर्थमहर्वहति ॥

[क्योंकि तीन देव हैं] इसीलिए वस्तुत वाक् ही [मध्यम त्र्यह के प्रथम देवता हैं जो प्रथम नवरात्र की अपेक्षा] चतुर्थ अह के निर्वाहक हैं।

एतस्मिन्नहनि न्यूङ्ख विधत्ते—

**तद यच्चतुर्थमहर्न्यूङ्खयन्त्येतदेव तदक्षरमभ्यायच्छन्त्येतद्वर्धयन्त्येतत्प्रविभावयिपन्ति चतुर्थस्याह्न उद्यत्यै** ॥ इति ।

यस्मात्कारणाद् वागेव चतुर्थस्याह्नो निर्वाहिका, तस्मात्कारणाद् यदि चतुर्थमहरुपेता न्यूङ्खयन्ति, ओकारस्य सूत्रोक्तप्रकारेणोच्चारणविशेष कुर्यु, तदानीमेतदेव वागित्यतदक्षर देवताया वाचकम् 'अभि' लक्ष्य 'आयच्छन्ति' उद्यम कुर्वन्ति। न केवलमुद्यम किं त्वेतदक्षर 'वर्धयन्ति'। वृद्धिप्रकार एव 'प्रविभावयिपन्ति' इत्यनेन स्पष्टीक्रियते। प्रभुत्व विभुत्व वागक्षरस्य कर्तुमिच्छन्ति। प्रभुत्व = सामर्थ्यं, विभुत्व = विशालत्वम् ॥

न्यूङ्खस्वरूपम् आश्वलायनेन वर्णितम्—'चतुर्थेऽहनि प्रातरनुवाकस्यार्धर्चयोर्न्यूङ्खः। द्वितीयं स्वरमोकारं त्रिमात्रमुदात्तं त्रिः। तस्य तस्य चोपरिष्टाद् अपरिमितान् पञ्च वार्धौकारान् अनुदात्तान् उत्तमस्य तु त्रीन्, पूर्वमक्षरं निहन्यते न्यूङ्खयमाने'[1] इति। अस्यायमर्थः—चतुर्थेऽहनि प्राप्ते सति प्रातरनुवाकस्य येयमृक्त्रयमास्ति, तस्या ऋचो यौ द्वावर्धर्चौ तयोरर्धर्चयोर्याबादी, तयोरादौ न्यूङ्खः कर्तव्यः। नितरामत्यन्तविरामप्रकारेण 'ऊङ्खनम्' उच्चारणं 'न्यूङ्खः'[2]। कथमिति ? तदेव स्पष्टीक्रियते—'आपो रेवतीः क्षयथेति'[3] प्रातरनुवाकस्य प्रतिपद्। तस्याः पूर्वार्धस्याऽऽदौ योऽयं द्वितीयः स्वर ओकारः पकारादूर्ध्वभावी, तं त्रिमात्रोपेतमुदात्तस्वरयुक्तं त्रिवारमुच्चारयेत्। त एते त्रय ओङ्काराः सम्पद्यन्ते। तत्रैकैकस्योकारस्योपरि पुनरप्योकारा अर्धस्वरूपा ह्रस्वमात्रा अपरिमिताः पञ्च वोच्चारणीयाः। ते चार्धौकाराः सर्वेऽप्यनुदात्ताः। उत्तमस्य तु त्रिमात्रस्योकारस्योपरि त्रीनर्धौकारानुच्चारयेत्। तेष्वर्धौकारेषु प्रथममक्षरं 'निहन्यात्' अत्यन्तनीचस्वरेणानुदात्तं कुर्यादिति। एवं सति उदात्तास्त्रिमात्रास्त्रय ओकारा अर्धौकारास्त्रयोदश इत्येकमोकाराः षोडश सम्पद्यन्ते। प्रथमद्वितीययोस्त्रिमात्रयोर्मध्ये पञ्चानुदात्ता अर्धौकाराः, द्वितीयतृतीययोस्त्रिमात्रयोर्मध्ये पञ्चानुदात्ता अर्धौकाराः, तृतीयस्य त्रिमात्रस्योपरिष्टाद् अनुदात्ता अर्धौकारास्त्रयः; सोऽयमुच्चारणविशेषो न्यूङ्ख इत्युच्यते। सोऽयं न्यूङ्खश्चतुर्थस्याह्न 'उद्यन्त्यै' उद्यमनाय सर्वस्मादुत्कर्षाय भवति ॥

[क्योंकि चतुर्थ दिन के निर्वाहक देवता वाक् हैं] इसीलिए जो चतुर्थ दिन न्यूङ्ख [आश्वलायन सूत्र (७-११) के अनुसार ओकार का विशेष प्रकार से उच्चारण] करते हैं; वह इसी [वाग्देवता] के वाचक अक्षर को लक्ष्य करके उद्यम करते हैं।[4] [न केवल उद्यम ही किन्तु] इसे बढ़ाते भी हैं; और इस [अक्षर] के सामर्थ्य[5] और विभुत्व की इच्छा करते हैं जो [न्यूङ्ख] चतुर्थ दिन के उत्कर्ष के लिए ही होता है।

---

१. आश्व० श्रौ० ७.११.१–५।

२. तदपि निदर्शनायोदाहरिष्यामः—
'आपो ३ ओ ओ ओ ओ ओ ओ ३ ओ ओ ओ ओ ओ ओ ३ रेवती क्षयथा हि वस्व. क्रतुञ्च भद्रं बिभृथामृतञ्च। रायो ३ ओ ओ ओ ओ ओ ओ ३ ओ ओ ओ ओ ओ ओ ३ ओ ओ ओथ स्थः स्वपत्यस्य पत्नीः सरस्वती तद् गृणते वयोधा३त्'
—इति आश्व० श्रौ० ७.११.७।

३ ऋ० १०.३०.१२।

४. 'आयच्छन्ति=दीर्घयन्ति। आयामो हि दैर्घ्यम्'—इति षड्गुरुशिष्य.।

५. विभाल कर्तुमिच्छन्ति प्रकर्षेण हि वाङ्मयम्।
भुवो णिचः सनि द्वित्वं न छन्दस्त्वाद्, गुणः प इट् ॥
उर्वातिरयमो दैर्घ्यम्—इति षड्गुरुशिष्यः।

तमिम न्यूङ्खं प्रशंसति—

**अन्नं वै न्यूङ्खो यदेळवा अभिगेष्णाश्चरन्त्यथान्नाद्यं प्रजायते, तद्यच्चतुर्थमहर्न्यूङ्खयन्त्यन्नमेव तत्प्रजनयन्त्यन्नाद्यस्य प्रजात्यै, तस्माच्चतुर्थमहर्जातवद्भवति ॥** इति ।

योऽयमुक्तो न्यूङ्खोऽस्ति, तदेतत् 'अन्नं वै' अन्नसाधनत्वादन्नस्वरूपमेव । कथमेतदिति तदुच्यते—इळाशब्दोऽन्नवाची, तदेषां कर्षकाणामस्ति, ते कर्षका. 'इळवा' । ते च वर्षन्तं पर्जन्यम् 'अभि' लक्ष्य 'गेष्णा.' हर्षेण गायन्तो यदा चरन्ति, अथ तदानीमन्नाद्यं प्रजायते । स्वकालवृष्टिसमृद्धिं च दृष्ट्वा कर्षका हृष्यन्ति । हृष्टाश्च गायन्तीति यदस्ति, तत्सदृशमिदं चतुर्थेऽहनि न्यूङ्खरूपमुच्चारणम् । अतोऽनेनोच्चारणेनान्नमुत्पादयन्ति । तदेवमन्नाद्यस्य 'प्रजात्यै' उत्पादनार्थं सपद्यते । 'तस्मात्' अन्नप्रजातियुक्तत्वादेव चतुर्थमहः 'जातवद्भवति' । जातवत्त्वमेतस्मिन्नहनि मन्त्रवचनेनोपरिष्टाद् वक्ष्यते ॥

अन्न ही न्यूङ्ख है । [अन्न का वाचक 'इळा' शब्द कृषकों से सम्बन्धित होने से इळवा अर्थात्] कृषक जैसे वर्षा करने वाले पर्जन्य को लक्ष्य करके हर्ष से गान करते हुए जब विचरण करते हैं और जो वे अन्न का उत्पादन करते हैं वैसे ही चतुर्थ दिन जो न्यूङ्ख करते हैं तो मानो वे इस [उच्चारण] से अन्न का ही उत्पादन करते हैं । इस प्रकार यह अन्न के उत्पादनार्थ होता है । इसलिए [अन्न उत्पादन से युक्त] चतुर्थ दिन जातवद् अर्थात् 'जात' [= उत्पत्ति] शब्द से युक्त होता है ।

न्यूङ्खस्य मन्त्रमध्ये स्थानविशेषं विधत्ते—

**चतुरक्षरेण न्यूङ्खयेदित्याहुश्चतुष्पादा वै पशवः पशूनामवरुद्ध्यै ॥** इति ।

मन्त्रे योऽयमादौ चतुरक्षरो भाग, तेन 'न्यूङ्खयेत्' चत्वार्यक्षराण्युच्चार्य तदन्ते यथोक्तं न्यूङ्खं प्रयुञ्ज्यादिति केचिद्याज्ञिका आहुः । चतुःसङ्ख्यया पादचतुष्टयोपेतानां पशूनां प्राप्तिर्भवतीति तदभिप्रायः ॥

कुछ याज्ञिक कहते हैं कि [मन्त्र के आदि के] चार अक्षर के द्वारा [अर्थात् चार अक्षर का उच्चारण करने के बाद] न्यूङ्ख करना चाहिए, क्योंकि पशु चार पैर से युक्त होते हैं; अतः यह पशुओं की प्राप्ति कराने के लिए होता है ।

पक्षान्तरं विधत्ते—

**त्र्यक्षरेण न्यूङ्खयेदित्याहुस्त्रयो वा इमे त्रिवृतो[1] लोका[2] एषामेव लोकानामभिजित्यै ॥** इति ।

---

१. (i) 'भूर्भुवःस्वस्त्रयो लोका अन्योन्यस्योपकारिणः'—इति षड्गुरुशिष्यः । (ii) 'लोकानां त्रिवृत्त्वं पृथिव्यप्तेजसां त्रिवृत्करणात् । तथाहि श्रुतिः—'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि'—(छा० उ० ६.३)—इति गोविन्दस्वामी । (iii) 'इमे हि लोकाः त्रयो भवन्ति, त्रिवृतश्च भवन्ति, प्रत्येकं पार्थिवाप्यतैजसस्वमात्रत्वादित्रिगुणाश्च भवन्ति'—भट्टभास्करः ।          २. द्र० इतः पूर्वम्, पृ० २७९ ।

पूर्ववद् व्याख्येयम् ॥

कुछ याज्ञिक कहते हैं कि [मन्त्र के आदि के] तीन अक्षर के द्वारा न्यूङ्ख [=ओंकार का विशेष उच्चारण] करना चाहिए; क्योंकि ये त्रिवृत लोक तीन ही हैं। यह वस्तुतः इन्हीं लोकों को जीतने के लिए होता है।

पक्षद्वयमुक्त्वा तृतीयपक्षं विधत्ते—

**एकाक्षरेण न्यूङ्खयेदिति ह स्माऽऽह लाङ्गलायनो ब्रह्मा मौद्गल्य एकाक्षरा वै वागेष वाव सम्प्रति न्यूङ्खं न्यूङ्खयति य एकाक्षरेण न्यूङ्खयतीति ॥** इति।

लाङ्गलाख्यस्य महर्षेः पौत्रो 'लाङ्गलायनः'। मुद्गलाख्यस्य पुत्रो 'मौद्गल्यः'। स च 'ब्रह्मा' इत्येतन्नामको ब्राह्मणः। स ह्येवमक्षरमुच्चारयन्न्यूङ्खयेदिति वक्ति। तत्रेयमुपपत्तिः,—यद् वागहर्देवतेति पूर्वमुक्ता, सेयमेकाक्षरा, तथा सति यः पुमानेकाक्षरेण न्यूङ्खयति, एष एव संप्रति सम्यङ्न्यूङ्खमनुतिष्ठति। अक्षरसंख्याया देवतानुसारित्वादिति तस्य महर्षेरभिप्रायः ॥

[मन्त्र के आदि के] एक अक्षर के द्वारा न्यूङ्ख करना चाहिए—ऐसा [लाङ्गल ऋषि के पौत्र] लाङ्गलायन ब्रह्मणा [मुद्गल के पुत्र] मौद्गल्यका कथन है; क्योंकि वाग्देवता एक अक्षर से युक्त हैं। इस प्रकार जो एक अक्षर से न्यूङ्ख करता है वही सम्यक् रूप से न्यूङ्ख का अनुष्ठान करता है।

तदेतत्पक्षत्रयमङ्गीकृत्य स्वाभिप्रेतपक्षं विधत्ते—

**द्व्यक्षरेणैव न्यूङ्खयेत् प्रतिष्ठाया एव; द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति, तस्माद् द्व्यक्षरेणैव न्यूङ्खयेत् ॥** इति।

एवकारः पूर्वोक्तपक्षत्रयव्यावृत्त्यर्थः। 'प्रतिष्ठाया एव' यजमानस्य प्रतिष्ठार्थमेव हि द्विसंख्या, द्वाभ्यां पादाभ्यामवस्थितत्वात् पुरुषो 'द्विप्रतिष्ठः'[1]। स्पष्टमन्यत् ॥

[सिद्धान्त पक्ष यह है कि] दो अक्षरों के द्वारा न्यूङ्ख करना चाहिए, क्योंकि यह [यजमान की] प्रतिष्ठा के लिए ही है; वस्तुतः पुरुष दो पैरों से अवस्थित है और पशु चार पैर से अवस्थित हैं; अतः इस प्रकार वह वस्तुतः उस द्विप्रतिष्ठ यजमान को ही चौपाए पशुओं में प्रतिष्ठित करता है। इसलिए [मन्त्र के आदि के] दो अक्षरों के द्वारा न्यूङ्ख [=ओंकार का विशेष उच्चारण] करना चाहिए।

प्रातरनुवाके विशेषेण स्थानं विधत्ते—

**मुखतः प्रातरनुवाके न्यूङ्खयति; मुखतो वै प्रजा अन्नमदन्ति, मुखत एव तदन्नाद्यस्य यजमानं दधाति ॥** इति।

---

१. द्र० इतः पूर्वम् २८०। 'पुरुषस्य द्विप्रतिष्ठत्वमैहिकामुष्मिकसम्पदा'—इति गोविन्दस्वामी।

प्रातरनुवाके मुखत अर्धर्चस्याऽऽदौ द्वितीयस्मिन्नक्षरे न्यूङ्खयेत् । प्रजाना सर्वासा मुखेनैवान्नादनात् । तथा सति यजमानमन्नाद्यस्य 'मुखत एव समीप एव स्थापयति ॥

प्रातरनुवाक में मुखत अर्थात अधर्च के आदि के द्वितीय अक्षर में न्यूङ्ख करना चाहिए, क्योंकि मुख से ही प्रजा अन्न का भक्षण करती है। इस प्रकार वस्तुत वह उस [यजमान] को खाद्यान्न के प्रारम्भ में ही स्थापित करता है।

आज्यशस्त्रे स्थानविशेष विधत्ते—

**मध्यत आज्ये न्यूङ्खयति, मध्यतो वै प्रजा अन्न धिनोति, मध्यत एव तदन्नाद्यस्य यजमान दधाति ॥** इति ।

'मध्यत ' तृतीयपादे इत्यर्थ । तथा च आश्वलायन आह—'अग्नि न स्ववृक्तिभि ' इत्याज्य[1], तस्योत्तमावर्जं तृतीयेषु पादेषु न्यूङ्ख [2] इति । अन्न हि मध्यमागे धृतम् । तच्च प्रजा 'धिनोति' प्रीणयति । ततस्तत्पाठेनान्नाद्यस्य मध्यतो धारणे यजमानमवस्थापयति ॥

आज्य [शस्त्र] में मध्यत अर्थात् तृतीय पाद में न्यूङ्ख करना चाहिए, क्योंकि प्रजा अन्न को [मुख के] मध्य भाग से ही अनुप्राणित करती है। इस प्रकार वह वस्तुत उस [यजमान] को खाद्यान्न के मध्य भाग में ही स्थापित करता है।

माध्यदिने सवने स्थानविशेष विधत्ते—

**मुखतो मध्यदिने न्यूङ्खयति, मुखतो वै प्रजा अन्नमदन्ति, मुखत एव तदन्नाद्यस्य यजमान दधाति ॥** इति ।

मुखत ' अर्धर्चादौ । तथा च आश्वलायनो मरुत्वतीय निष्केवल्य च निरूप्य पश्चादिदमाह—'अधीद्धवीयस्य तु तृच[3] आद्येऽर्धर्चादिषु न्यूङ्ख [4] इति ॥

मध्यन्दिन में अधर्च के आदि के द्वितीय अक्षर में न्यूङ्ख करना चाहिए, क्योंकि मुख से ही प्रजा अन्न का भक्षण करती है। इस प्रकार वस्तुत वह उस [यजमान] को खाद्यान्न के प्रारम्भ में ही स्थापित करता है।

सवनद्वयगत न्यूङ्ख प्रशसति—

**तदुभयतो न्यूङ्ख परिगृह्णाति सवनाभ्यामन्नाद्यस्य परिगृहीत्यै ॥ ३ ॥** इति ।

'उभयत ' प्रात सवने माध्यदिनसवने च[5] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया प्रथमाध्याय (एकविंशाध्याय) तृतीय खण्ड ॥ ३ ॥ [ १५६ ]

---

१ ऋ० १० २१ १ ।　　२ आश्व० श्रौ० ७ ११ ८, ९ ।
३ ऋ० २ ११ १ ।　　४ आश्व० श्रौ० ७ ११ २८ ।
५ 'न्यूङ्खा षोडश ओकारास्तत्र केचिदुदात्ता केचिदनुदात्ता '—इति पा० सू० १ २ ३४। न्यूङ्खयन्ते अधिपक्व आमिषि —इति (ऋ० १० ९४ ३) ऋचो व्याख्याने 'न्यूङ्खयन्ते शब्दविशेष कुर्वन्ति'—इति सा०भा० । शाङ्खा०ब्रा० २२ ६, २५ १३ । शाङ्खा० श्रौ० १० ५ २१, १२ १३ १, ५, ७ । कात्या० श्रौ० १ ८ १९, ६ १९, २९ ।

इस प्रकार दोनों ही [सवनों] में वट् वाला सवनों के द्वारा न्यूङ्ख [ओंकार] को परिगृहीत करता है, जो सावधान के ग्रहण के लिए होता है।

॥ इस प्रकार इक्कीसवें अध्याय के तीसरे खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

---

## अथ चतुर्थः खण्डः

चतुर्थमहर्विधत्ते—

**वाग्वै देवता चतुर्थमहर्वहत्येकविंशस्तोमो वैराजं सामानुष्टुप्छन्दो यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद ॥** इति।

पूर्ववद् व्याख्येयम् ॥

५.४ [xxi. ४] [द्वादशाहगत नवरात्र के] चतुर्थ दिन के निर्वाहक देवता वाक् हैं, एकविंश स्तोम, वैराज साम और अनुष्टुप् छन्द [निर्वाहक] हैं। जो इस प्रकार जानता है वह इससे देवता, स्तोम, साम और छन्द का अनतिक्रमण कर समृद्ध होता है।

चतुर्थस्याह्नो यमवानि न नमवानि लिङ्गानि दर्शयति—

**यद्वा एति च प्रेति च तच्चतुर्थस्याह्नो रूपं, यद्ध्येव प्रथममहस्तदेतत्पुनर्यच्चतुर्थं यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते यदयं लोकोऽभ्युदितो यज्जातवद्यद्धववद्यच्छुक्रवद्यद्वाचो रूपं यद्वैमदं यद्विरिफितं यद्विच्छन्दा यदूनातिरिक्तं यद्वैराजं यदानुष्टुभं यत्करिष्यद्यत्प्रथमस्याह्नो रूपमेतानि वै चतुर्थस्याह्नो रूपाणि ॥** इति।

आकार प्रशब्दश्चेति यदत्र पूर्वं प्रथमस्याह्नो निरूपकमुक्तम्[1]। तदत्र चतुर्थस्याह्नो रूपकम्। प्रथमत्र्यहापेक्षया प्रथममहः पूर्वं यदुक्तं, तदेतत्पुनरपि मध्यमत्र्यहापेक्षया प्रथममहरुच्यते, अतो नवरात्रापेक्षया यत् चतुर्थम्, तस्य त्र्यहापेक्षया प्रथमत्वात् प्रथमस्याह्नो लिङ्गान्यत्र योग्यानि। अत एव तद्युक्तवदित्यारभ्याय लोकोऽभ्युदित इत्यन्तानि पूर्वोक्तान्यभिहितानि[2]। 'जातवत्' जनिधातुयुक्तम्। 'हवयत्' इति ह्वयतिधातुयुक्तम्। 'शुक्रवत्' शुक्रशब्दयुक्तम्। 'वाचो रूपं' वाक्प्रतिपादकशब्दयुक्तम्। 'वैमदं' विमदाख्येन महर्षिणा दृष्टम्। रिफतिधातुः क्लेशार्थे वर्तते। विशेषक्लेशेन न्यूङ्खेनोच्चारितं 'विरिफितम्'। 'विच्छन्दाः' इति विविधच्छन्दसा युक्तम्। तदूनं चातिरिक्तं च 'ऊनातिरिक्तम्'। अपर-

---

१ विमर्देनापि वा इष्ट रिफे क्लेशार्थकात् क्त इट्।
स्थितं क्लेशाच्चारणीयं विच्छन्दा छान्दसत्विहान् ॥—इति षड्गुरुशिष्यः।

२ द्र० इतः पूर्वम्, पृ० ६८९।

ह्रासवृद्धी इत्यर्थः । वैराजाख्यसामसम्बद्धं 'वैराजम्' । अनुष्टुप्छन्दसबद्धम् 'आनुष्टुभम्' । जातवदित्यादीन्यत्र विशेषलिङ्गानि । भविष्यदर्थवाचिप्रत्ययोपेतं धातुरूपं करिष्यन्' इत्युच्यते । अत्र यन्नूतनं यच्च पूर्वोक्तं प्रथमस्याह्नो रूपमस्ति, तानि सर्वाण्यपि चतुर्थस्याह्नो निरूपकाणि ॥

जिस [मन्त्र] में 'आङ्' और 'प्र' उपसर्ग हों वह मन्त्र चतुर्थ दिन का रूप [ = निरूपक] है । जो [प्रथम त्र्यह के] प्रथम दिन का रूप कहा गया है वह पुनः इस [मध्यम त्र्यह के प्रथम दिन अर्थात्] चतुर्थ दिन का निरूपक है । जो मन्त्र 'युक्त' 'रथ' तथा 'आशु' शब्द और पानार्थक 'पा' धातु से युक्त हो और जिस मन्त्र के प्रथम पाद में देवता निर्दिष्ट हों और जिसमें यह [भू] लोक उक्त हो और जो [मन्त्र] 'जनि' धातु युक्त, 'ह्वय' धातु युक्त, 'शुक्र' शब्द युक्त, वाक् प्रतिपादक शब्द युक्त हो और जो विमदाख्य महर्षि से युक्त हो, जो विशेषक्लेशपूर्वक न्यूह्व से उच्चरित 'वि' उपसर्ग पूर्वक 'रिफ्' धातु से युक्त हो, जो [सूक्त] विविध छन्द से युक्त हो, जो [अक्षर सम्पदा में] ऊन अर्थात् कम हो और अधिक हो, जो वैराज साम से सम्बद्ध हो, जो अनुष्टुभ् छन्द से सम्बद्ध हो और कृ धातु का भविष्य काल का रूप जिसमें हो—[इन 'जातवद्' इत्यादि विशेषताओं के साथ जो नूतन और] जो प्रथम दिन का रूप [ = चिह्न] है वे सभी चतुर्थ दिन के निरूपक हैं ।

इदानीमाज्यशस्त्रं विधत्ते—

**'आग्निं न स्ववृक्तिभिरिति' चतुर्थस्याह्न आज्यं भवति; वैमदं विरिफितं विरिफितस्य ऋपेश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति ।

'आग्निम्' इत्यादिकं सूक्तं[1] 'वैमदं' विमदाख्येन महर्षिणा दृष्टम् । 'विरिफितं' न्यूह्वरूपेण विशेषक्लेशेनोच्चारितम् । अत एव 'विरिफितस्य' विशेषक्लेशरूपतया युक्तस्य विमदाख्यस्य महर्षेः सम्बन्धि । अतो विमदेन दृष्टत्वं विरिफितत्वं चेति लिङ्गद्वयसद्भावाच्चतुर्थेऽह्न्येतत् सूक्तं योग्यम् । तस्माच्चतुर्थस्याह्नो निरूपकम् ॥

[आज्यशस्त्र]—

'आग्निं न' इत्यादि विमद ऋषि द्वारा दृष्ट और न्यूह्व रूप विशेषक्लेश से उच्चरित यह सूक्त चतुर्थ दिन में [आज्य] शस्त्र होता है; जो विशेषक्लेशरूप से युक्त होने से और [विमदाख्य] महर्षि से सम्बन्धित होने से चतुर्थ दिन में चतुर्थ दिन का लक्षण है ।

ऋक्संख्या छन्दश्चोपजीव्यसूक्तं प्रशंसति—

**अष्टर्चं पाङ्क्तं, पाङ्क्तो यज्ञः, पाङ्क्ताः पशवः, पशूनामवरुद्ध्यै ॥** इति ।

1. ऋ० १०.२१ ।

ऋवसल्योत्तरत्रोपयुज्यते । पङ्क्तिच्छन्दोयोगात् 'पाङ्क्तम्' । 'पूर्वोक्तहविष्पङ्क्त्यादिभिर्यज्ञस्य पाङ्क्तत्वम् । ननुभि पादैर्मुखेन च, पञ्चावयवं 'पशव पाङ्क्ता' । तस्मादे तच्छसनं पशुप्राप्त्यं भवति ॥

यह पंक्ति छन्द में निबद्ध आठ ऋचाओं का सूक्त है। यह यज्ञ भी [हविष्पंक्ति आदि] पाँच अवयवों वाला है और पशु भी [चार पैर और मुँह से युक्त होकर] पाँच अवयवों वाले हैं। अत इसका शसन पशुओं की प्राप्ति के लिए होता है।

जगतीद्वारा पुन प्रशसति—

ता उ दश जगत्यो जगत्प्रात सवन एष त्र्यहस्तेन चतुर्थस्याह्नो रूपम् ॥ इति ।

'ता उ' तास्तु सूक्तगता अष्टावृचो 'दश जगत्य' सपद्यन्ते । कथ सम्पत्तिरिति ? तदुच्यते—सूक्तस्याद्यन्तयोर्ऋचोस्त्रिरावृत्त्या द्वादश पङ्क्तयो भवन्ति, पङ्क्तिश्चैकचत्वारिंशदक्षरा, ततो मिलित्वा अशीत्यधिकचतु शताक्षराणि सम्पद्यन्ते । अष्टाचत्वारिंशदक्षराणां जगतीनां दशसंख्याकानां तावन्त्येवाक्षराणि । एव जगतीसम्पत्ति । जगतीच्छन्दोयुक्त प्रात सवनं यस्य मध्यमस्य त्र्यहस्य सोऽयं 'जगत्प्रात सवन' । पूर्वमेव च्छन्दसां विपर्यये जगत्या प्रात सवनस्थानमुक्तम् ।[2] अत प्रात सवने जगतीसम्बन्धश्चतुर्थस्याह्नो निरूपक ॥

[सूक्तगत] उन [आठ ऋचाओं] के दस जगती छन्द सपादित होते हैं क्योंकि इस त्र्यह का प्रात सवन जगती से सम्बन्धित है अत उस [स्थान रूप सम्बन्ध] से यह चतुर्थ दिन का रूप है।

अनुष्टुप्सम्बन्धेन प्रशसति—

ता उ पञ्चदशानुष्टुभ आनुष्टुभ ह्येतदहस्तेन चतुर्थस्याह्नो रूपम् ॥ इति ।

तास्तु दश जगत्य 'पञ्चदशानुष्टुभ' सम्पद्यन्ते । तथा हि,—अष्टाचत्वारिंशदक्षरा जगती, द्वात्रिंशदक्षरानुष्टुप्, तया सत्यर्धका जगती सार्धानुष्टुब् भवति । अहश्चैतदनुष्टुभ सम्बन्धि, अनुष्टुभो निर्वाहकत्वस्योक्तत्वात्[3] । तेनेदं सूक्तमनुष्टुब्द्वारा चतुर्थस्याह्नो निरूपकम् ॥

और, वे [दस जगती मिलकर] पन्द्रह अनुष्टुभ् छन्द सपादित होते हैं। क्योंकि यह अह अनुष्टुभ् छन्द से [निर्वाहकतया] सम्बद्ध है, अत उससे यह चतुर्थ दिन का रूप है।

गायत्रीद्वारा प्रशसति—

ता उ विंशतिर्गायत्र्यः पुन प्रायणीयं ह्येतदहस्तेन चतुर्थस्याह्नो रूपम् ॥ इति ।

---

१ द्र० इत पूर्वम्, पृ० ३०८, ४६५ । २ द्र० इत पूर्वम्, पृ० ४८० ।
३ 'चतुर्थमहर्वहति' 'अनुष्टुप् छन्द' इत्युक्ति ७३२ पृष्ठे द्रष्टव्या ।

तास्तु दश जगत्य पुनरपि प्रत्येकं द्वेधा विभज्यमानाश्चतुर्विंशत्यक्षरा गायत्र्यो विंशति भवन्ति। गायत्रीसम्बन्ध चान्यत्र—प्रायणीय प्रथममह, गायत्रो वा ऐन्द्रवायवो गायत्र प्रायणीयमह इति श्रुत्यन्तरात्। इद चाहर्मध्यमे त्र्यहे प्रथमत्वात् प्रायणीयम्। अतो गायत्रीद्वारा सम्बन्धस्य वक्तु शक्यत्वात् एतत्सूक्त[1] चतुर्थस्याह्नो निरूपकम् ॥

पुन, वे [दस जगती मिलकर] बीस गायत्री छन्द सम्पादित होते हैं [मध्यम त्र्यह में यह अह प्रथम होने से] यह दिन प्रारम्भिक [प्रायणीय] है। अत उससे यह चतुर्थ दिन का रूप है।

सारयुक्तत्वेन पुन प्रशसति—

**तदेतदस्तुतमशस्तमयातयामसूक्तं यज्ञ एव साक्षात् तद्यदेतच्चतुर्थस्याह्न आज्य भवति, यज्ञादेव तद् यज्ञ तन्वते, वाचमेव तत्पुनरुपयन्ति सतत्यै ॥ इति।**

तदेतत् 'आग्निम्' इत्यादिसूक्तम्[2] उद्गातृभि पूर्वमस्तुत होतृभिरप्यशस्तम् तस्मात् अयातयाम गतसार न भवतीति साक्षाद् यज्ञ एव यज्ञमध्ये सारत्वात्। तथा सति यदे तत्सूक्तमत्राज्य भवेत् तदानी यज्ञरूपादेव सूक्ताद् यज्ञरूपमह तन्वते विस्तारयन्ति। किंचाप्तदेवता वाचमेव तेन सारयुक्तेन पुन प्राप्नुवन्ति। तच्च मध्यमस्य त्र्यहस्य सतत्यै विच्छेदराहित्याय भवति ॥

यह ['आग्निम' इत्यादि] सूक्त [उद्गाताओं के द्वारा पूर्व में] न तो स्तुत है और न [होताओं द्वारा] शसित है अत यह नि सार न होने से [यज्ञ के मध्य] साक्षात् यज्ञ ही है। इस प्रकार यदि यह सूक्त इस चतुर्थ दिन में आज्य होता है तो यज्ञ [रूप सूक्त] से ही वे यज्ञ रूप अह का विस्तार करते हैं और उस [सारयुक्त मन्त्र] से वाग्देवता को भी पुन प्राप्त करते हैं, [मध्यम त्र्यह के] निरन्तरता के लिए होता है।

वेदनपूर्वकमनुष्ठान प्रशसति—

**सततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एव विद्वासो यन्ति ॥ इति।**

पूर्ववद्व्याख्येयम् ॥

जो इस प्रकार निरन्तरता को जानते हुए अनुष्ठान करते हैं वे परस्पर सम्बन्धित अत एव विच्छेदरहित त्र्यह के द्वारा अनुष्ठान करते हैं।

अथ प्रउगशस्त्र विधत्ते—

**वायो शुक्रो अयामि ते, विहि होत्रा अवीता, वायो शत हरीणा,मिन्द्रश्च वायवेषा सोमानाम्, आ चिकितान सुक्रतू, आ नो विश्वाभिरूतिभिर,स्यमु वो अप्रहण,मपत्य वृजिन रिपु,मम्बितमे नदीतम इत्यानुष्टुभ प्रउगमेति च प्रेति च शुक्रवच्च चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।**

---

१ २ ऋ० १०.२१।

'वायो शुक्र' इत्याद्यं प्रतीकम्[१]। 'विहि होत्रा' इति द्वितीयम्[२]। 'वायो शतमिति' तृतीयम्[३]। 'इन्द्रश्चेति' चतुर्थम्[४]। 'आ चिकितानेति' पञ्चमम्[५]। 'आ नो विश्वाभिरिति' षष्ठम्[६]। 'त्यमु वः' इति सप्तमम्[७]। 'अप त्यमित्यष्टमम्'[८]। 'अम्बितम' इति नवमम्[९]। अत्राद्यैस्त्रिभिः प्रतीकैरेकम्तृच , इतरैः षट्प्रतीकैः षड्तृचाः। एतत्सर्वमनुष्टुप्छन्दस्कं प्रउगशस्त्र कार्यम्। अत्र आकारः, प्रशब्दः, शुक्रशब्दश्चेति लिङ्गानि द्रष्टव्यानि। वायो, इत्यत्र शुक्र-वल्लिङ्गम्। विहि होत्रेत्यस्यामृचि 'वायवाचन्द्रेण'-इत्याकारः। वायो शतमित्यत्र 'रथ आ यातु'—इत्याकारः। इन्द्रश्चेत्यत्र द्वितीयस्यामृचि 'आयातम्' इत्याकार.। आ चिकितानेत्यत्र, आ नो विश्वाभिरित्यत्र चाऽऽकारो स्पष्टो। त्य मु वो अप्रहणमित्यत्र प्रशब्दः। अपत्यं वृजिनमित्यत्र तृतीयस्यामृचि 'आ सुगम्' इत्याकारः। अम्बितम इत्यत्र 'प्रशस्तिमम्ब' इति प्रशब्दः। अतो लिङ्गसद्भावेन चतुर्थेऽहनि योग्यत्वात् इद सर्वं चतुर्थस्याह्नो निरूपम्॥

[प्रउगशस्त्र]—

'वायो शुक्र', 'विहि होत्रा', 'वायो शतम्', 'इन्द्रश्च', आ चिकितान', 'आ नो विश्वाभिः', 'त्यमु वः', 'अप त्यम्', और 'अम्बितमे' इत्यादि नौ अनुष्टुप् छन्द में निबद्ध प्रउग [शस्त्र] हैं और 'आ' [ = इधर] 'प्र' [ = आगे] और शुक्र [ = शुद्ध] शब्द से युक्त ये [तृच] चतुर्थ दिन में चतुर्थ दिन के लक्षक हैं।

मरुत्वतीयशस्त्रस्य प्रतिपदं विधत्ते—

**'तं त्वा यज्ञेभिरीमहे'[१०] इति मरुत्वतीयस्य प्रतिपदीमह इत्यभ्यायाम्यमिवैतदहस्तेन चतुर्थस्याह्नो रूपम्॥ इति।**

अत्र यज्ञेरीमह इति पदमस्ति, तद् याचामह इत्यस्मिन्नर्थे वर्तते, याच्ञा च दीर्घकालेन फलप्रदा, तस्मादेतदहः 'अभ्यायाम्यमिव'[११] अभितो दीर्घं कर्तव्यमिव प्रयोगबाहुल्येन दृश्यते। तेन याच्ञार्थवाचिधातुद्वारेण दीर्घत्वेन साम्यप्रतीतेरिदं मन्त्रवाक्यं चतुर्थस्याह्नो निरूपम्॥

[मरुत्वतीयशस्त्र]—

'तं त्वा यज्ञेभिरीमहे' आदि ऋचा मरुत्वतीय शस्त्र की प्रतिपद् है। [क्योंकि याचना दीर्घकाल से ही फलप्रद होती है अतः याचनार्थक] 'ईमहे' पद युक्त यह अहः प्रयोगबाहुल्य के द्वारा चारो ओर से दीर्घ करने के समान है। उस [याचनार्थक धातु के द्वारा दीर्घ-साम्य रूप प्रतीति] से यह [मन्त्र वाक्य] चतुर्थ दिन का रूप है।

---

१. ऋ० ४.४७.१। २. ऋ० ४.४८.१। ३. ऋ० ४.४८.५।
४. ऋ० ४.४७.२। ५. ऋ० ५.६६.१। ६. ऋ० ८.८.१ (७.२४.४)।
७. ऋ० ६.४४.४। ८. ऋ० ६.५१.१३। ९. ऋ० २.४१.१६।
१०. ऋ० ८.६८.१०।
११. (i) आयाम्यमायामयुक्तम्, दीर्घीकृत न्यूङ्खादिना'—इति षड्गुरुशिष्यः।
(ii) अभ्यायाम्यं दीर्घं कर्तव्यमिव। एतच्चतुर्थमहर्भवति। ईमह इत्यनेन च तद् भवति। कथं दीर्घाक्षरयुक्तत्वादस्य पदस्य। ईमह इत्यस्य याच्ञाकर्मत्वाद् वा। याचितो ही पुरुषो दीर्घेण कालेन प्रयच्छति—इति गोविन्दस्वामी।

मन्त्रान्तराणि विधत्ते—

**इद वसो सुतमन्ध[1], इन्द्र नेदीय एदिहि[2], प्रैतु ब्रह्मणस्पति[3], अग्निर्नेता[4], त्व सोम क्रतुभि[5], पिन्वन्त्यप[6], प्र व इन्द्राय बृहत[7], इति प्रथमेनाह्ना समान आतानश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम ॥** इति।

'आतान' शस्त्रक्लृप्ति[8]। सा चेद वसो सुतमित्यादिका। अस्मिश्चतुर्थेऽहनि पूर्वोक्तेन प्रथमेनाह्ना समानात् साम्य चैक लिङ्गम् ॥

'इद वसो सुतमन्ध', 'इन्द्र नेदीय', 'प्रैतु ब्रह्मणस्पति', 'अग्निर्नेता', 'त्व सोम-क्रतुभि', 'पिन्वन्त्यप' और 'प्र व इन्द्राय' इत्यादि प्रथम दिन के ही समान [मरुत्वतीय] शस्त्र की क्लृप्ति [अर्थात् क्रमागत] हैं जो चतुर्थ दिन में चतुर्थ दिन के लक्षक हैं।

सूक्तान्तर विधत्ते—

**'श्रुधी हवमिन्द्र मा रिषण्य'[9] इति सूक्त हववच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति।

हवशब्दोपेतमेतस्याह्नो विशेषलिङ्गमिति पूर्वमुक्तम् ॥

'श्रुधी हवम' (हे इन्द्र ! मेरे आह्वान को सुनो, हमें हानि न पहुँचाओ) आदि सूक्त 'हव' [=आह्वान] शब्द से युक्त है जो चतुर्थ दिन में चतुर्थ दिन का चिह्न है।

अन्यस्मिन्नपि सूक्ते तल्लिङ्ग दर्शयति—

**'मरुत्वाँ इन्द्र वृषभो रणायेति'[10] सूक्तमुग्र सहोदामिह त हुवेमेति हववच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति।

मरुत्वानित्यस्य सूक्तस्य 'उग्रम्' इत्यादिरन्तिम पाद, तत्र 'हुवेमति' हवशब्दार्थवाची धातुर्दृश्यते, अतो लिङ्गसद्भावादह्नो निरूपकम् ॥

'मरुत्वाँ इन्द्र' (मरुद्गणों के साथ हे इन्द्र, वृषभ, प्रसन्नता के लिए) आदि सूक्त का 'उग्र सहोदामिह' (उग्र और बल के प्रदाता उसको हम बुलावें) इत्यादि पाँचवें मन्त्र का अन्तिम पाद हव' शब्दार्थक धातु से युक्त है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है।

एतत्सूक्त प्रशसति—

**तद्ु त्रैष्टुभ तेन प्रतिष्ठितपदेन सवन दाधारायतनादेवैतेन न प्रच्यवते॥** इति।

---

१ ऋ० ८ २ १ १।   २ ऋ० ८ ५३ ५।   ३ ऋ० १ ४० ३।
४ ऋ० ३ २० ४।   ५ ऋ० १ ९१ २।   ६ ऋ० १ ६४ ६।
७ ऋ० ८ ८९ ३।
८ 'शस्त्रेषु सूक्तादन्यस्तु भाग आतानसज्ञक'—इति षड्गुरुशिष्य।
९ ऋ० २ ११ १।   १० ऋ० ३ ४७ १।

'तदु' तत् सूक्तं त्रिष्टुप्छन्दस्कम् । प्रतिष्ठितानि पदानि प्रतिनियताक्षरसङ्ख्यायुक्ताः पादाः यस्मिन् सूक्ते तत्सूक्तं 'प्रतिष्ठितपदम्' । तादृशेन तेन सूक्तेन 'सवनं' माध्यन्दिनसवनगतं मरुत्वतीयशस्त्रं 'दाधार' धारितवान्भवति । एतेन सूक्तेन स्वयम् 'आयतनात्' स्वकीयगृहाद् कदाचिदपि न प्रच्यवते ॥

यह सूक्त त्रिष्टुप् छन्दस्क है । प्रतिष्ठित-पद [अर्थात् नियत अक्षर संख्या] से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत मरुत्वतीय शस्त्र] धारित होता है । अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है ।

अन्त्य तृचं विधत्ते—

**'इमं नु मायिनं हुव' इति पर्यासो हववांश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति ।**

'इमं नु' इत्यादितृचविशेष [1] पर्यासः [2] पूर्वोक्तानामन्ते प्रक्षेपणीयः । तत्र 'हुवे' इति ह्वयशब्दार्थे धातुरस्ति, अतश्चतुर्थस्याह्नो निरूपकस्तृचः ॥

'इमं नु मायिनम्' इत्यादि तृच-विशेष पर्यास [पूर्वोक्त ऋचाओं के अन्त में प्रक्षेपणीय] है । यह 'हव' शब्दार्थक धातु से युक्त है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है ।

तदेतत्प्रशंसति—

**ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति ॥ इति ।**

'ता उ' ताः सूक्तगता ऋचो गायत्रीछन्दस्का, गायत्र्यश्च 'एतस्य' मध्यमस्य त्र्यहस्य 'मध्यन्दिनं' सवनं वहन्ति ॥

उस [सूक्त] की ऋचाएँ गायत्री छन्दस्क हैं और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं ।

पूर्वोक्तनिर्वाहक्रमेण जगत्याः प्रातःसवनवाहित्वं गायत्र्या माध्यन्दिनसवनवाहित्वं च दर्शितम् । अस्मिन्तृचे निविद्धानं विधत्ते—

**तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते, तस्माद् गायत्रीषु निविदं दधाति ॥ इति ।**

'यस्मिन्' छन्दसि 'निविद्' पदसमूहः प्रक्षिप्यते, तदेतच्छन्दो 'वहति' सवनस्य निर्वाहकं भवति । तस्मान्निर्वाहणाय तासु गायत्रीषु निविदं दध्यात् ॥

जिस [छन्द] में निविद् [पद समूह] प्रक्षिप्त होते हैं, वही छन्द [सवन का] निर्वाहक होता है । इस [निर्वाहकत्व] के कारण गायत्री ऋचाओं में निविद् प्रक्षिप्त होते हैं ।

---

१. ऋ० ८.७६.१–३ ।

२. 'पर्यस्यतेः समाप्त्यर्थाद् करणे घञ् कृतस्त्विह'—इति षड्गुरुशिष्यः ।

अथ वैराजसामसम्बद्ध तृचद्वय विधत्ते—

**'पिबा सोममिन्द्र मन्दतु त्वा', 'श्रुधी हव विपिपानस्याद्रेरिति' वैराज पृष्ठ भवति, बार्हतेऽहनि चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति ।

पृष्ठस्तोत्रसाधनस्य वैराजसाम्न आधार 'पिबा सोमम्'[1] इत्यादि स्तोत्रियस्तृच, 'श्रुधी हवम्' इत्याद्यनुरूप[2] अतो वैराजसामसम्बन्धो लिङ्गम् । किञ्च बृहत्साम्नोऽत्य वैराज साम । इद चाहर्युग्मरूपत्वाद् बृहत्सामसम्बन्धि[3] । अतोऽपि कारणात् अस्मिन्नहन्यतत्तृच-द्वय युक्तम् ॥

[निष्केवल्यशस्त्र]—

'पिबा सोमम' (हे इन्द्र सोम का पान करो, यह तुम्हें प्रसन्न करे) इत्यादि [स्तोत्रिय तृच] और 'श्रुधी हवम्' (अत्यन्त पान करने वाले अद्रि का आह्वान सुनो) इत्यादि [अनुरूप] तृच वैराज [साम] युक्त पृष्ठ [स्तोत्र] होता है, जो बृहत् साम सम्बन्धी दिन चतुर्थ दिन में चतुर्थ दिन का रूप है ।

अनन्तर विधत्ते—

**यद्वावानेति धाय्याऽच्युता ॥** इति ।

अच्युतत्व सर्वसम्बन्धिलिङ्गमित्युक्तम्[4] ॥

'यद्वावान'[5] इत्यादि धाय्या [प्रथम दिन विहित होने से] अच्युत है ।

तस्मात्तृच ऊर्ध्वमन्य प्रगाथ विधत्ते—

**'त्वामिद्धि हवामह' इति[6] बृहतो योनिमनुनिवर्तयति, बार्हत ह्येतदहरा-यतनेन ॥** इति ।

त्वामिद्धीत्यस्यामृचि बृहत्सामोत्पन्नम्, तस्मादेत योनिभूत प्रगाथ पूर्वोक्तधाय्याम् 'अनु' पश्चाच्छमेत् । 'एतदहरायतनेन' युग्माहस्वरूपस्थानेन 'बार्हत' बृहत्सामसम्बन्ध लिङ्गमित्युक्तम् ॥

'त्वामिद्धि हवामहे' (हम तुम्हें बुलाते हैं) इत्यादि ऋचा में बृहत्साम [उत्पन्न है अत ] योनिभूत इस प्रगाथ का [पूर्वोक्त धाय्या के] बाद में शसन करता है । [युग्म अह-स्वरूप] स्थान के द्वारा यह दिन बृहत्साम सम्बन्धी है ।

वैराजसाम्न सम्बन्धिन प्रगाथ विधत्ते—

**'त्वमिन्द्र प्रतूर्तिष्विति'[7] सामप्रगाथः ॥** इति ।

'त्वमिन्द्र प्रतूर्तिषु' (तुम, हे इन्द्र ! सघर्षों में) इत्यादि साम प्रगाथ है ।

---

१ ऋ० ७ २२ १–३ । २ ऋ० ७ ३२ ४–६ ।
३ द्र० इत पूर्वम्, पृ० ६८६ । ४ द्र० इत पूर्वम्, पृ० ६९३ ।
५ ऋ० १० ७४ ६ । ६ ऋ० ६ ४६ १, २ । ७ ऋ० ८ ९९ ५, ६ ।

तत्र लिङ्गं दर्शयति—

**'अशस्तिहा जनितेति' जातवाच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति ।**

उक्ते प्रगाथे तृतीयपादोऽयम् । अत्र 'अशस्तिहा जनितेति', ततोऽयं जातवान् । 'जनि' धातुयुक्तं जातवत्त्वं चैतस्याह्नो लिङ्गम् ॥

[उक्त प्रगाथ का तृतीय पाद] 'अशस्तिहा जनिता' 'जनि' धातु युक्त है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है ।

त्यम् ष्विति' सूक्तविषयस्याच्युतत्वं लिङ्गं दर्शयति—

**'त्यमू षु वाजिनं देवजूतमिति'[1] तार्क्ष्योऽच्युतः ॥ ४ ॥ इति ।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया प्रथमाध्याये (एकविंशाध्याये) चतुर्थः खण्डः ॥४॥ [ १५७ ]

'त्यमू षु' इत्यादि तार्क्ष्य देवताक सूक्त [प्रथम दिन विहित होने से] अच्युत है ।

॥ इस प्रकार इक्कीसवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

---

## अथ पञ्चमः खण्डः

विमदेन महर्षिणा दृष्टं न्यूङ्खसहितं सूक्तं विधत्ते—

**'कुह श्रुत इन्द्रः कस्मिन्नद्येति'[2] सूक्तं वैमदं विरिफितं विरिफितस्य रूपे-ऽश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति ।**

पूर्ववद् व्याख्येयम् ॥

[अवशिष्ट निष्केवल्य शस्त्र और सायसवन के अन्य शस्त्र]—

२१.५ [xxi ५] 'कुह श्रुत' (इन्द्र कहाँ प्रसिद्ध हैं और किन कार्य में ?) इत्यादि सूक्त विमद ऋषि द्वारा दृष्ट एवं न्यूङ्ख रूप विराम क्लेश से उच्चरित है जो विराम क्लेश रूप से युक्त होने से और [विमद नामक] ऋषि से सम्बन्धित होने से चतुर्थ दिन में, चतुर्थ दिन का रूप है ।

सूक्तान्तर विधत्ते—

**'युध्मस्य ते वृषभस्य स्वराज'[3] इति सूक्तमुग्रं गभीरं जनुषाऽभ्युग्रमिति जात-वच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति ।**

---

१ ऋ० १०.१७८। २ ऋ० १०.२२। ३ ऋ० ३.४६.१।

'युष्मस्येति'[1] सूक्ते 'उरु गभीरम्' इति य पाद, तत्र 'जनुषा' इति श्रवणात् 'जातवत्' 'जनि' धातुयुक्त लिङ्गमस्ति ॥

'युष्मस्य ते' (हे युद्ध करने वाले, कामवर्षी, स्वशासक तुम्हारे) इत्यादि सूक्त का चतुर्थ ऋचा का 'उरु गभीर' (हे महान्, गम्भीर, स्वभाव से ही उग्र) इत्यादि पाद 'जनि' धातु युक्त है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है।

सूक्तगत छन्दोऽवलम्ब्य प्रशसति—

तद् त्रैष्टुभ तेन प्रतिष्ठितपदेन सवन दाधारायतनादेवैतेन न प्रच्यवते ॥ इति।

पूर्ववद् व्याख्येयम् ॥

वह सूक्त त्रिष्टुप् छन्दस्क है। प्रतिष्ठित-पद अर्थात् नियत अक्षर सख्या से युक्त उस सूक्त से [सार्य] सवन [गत निष्केवल्य शस्त्र] धृत होता है। अत इस सूक्त से वह अपने स्थान से कभी भी च्युत नहीं होता है।

तृतीय तृच विधत्ते—

'त्य मु व. सत्रासाहमिति'[2] पर्यासो विश्वासु गीर्ष्वायतमित्यभ्यायाम्यमिवै-तदहस्तेन चतुर्थस्याह्नो रूपम् ॥ इति।

परित प्रक्षेपणीय 'पर्यास' अन्तिमस्तृच। तस्मिन् 'विश्वासु' इति य पाद, तत्र 'आयतम्' इति शब्दो दीर्घत्ववाचक श्रूयते। अहश्चैतत् 'अभ्यायाम्यमिव' प्रयोगाधिक्याद् अतिदीर्घमिव, अतोऽत्र दीर्घत्व लिङ्गम् ॥

'त्यम् व सत्रासाह्' (सबको दबाने वाले, तुम्हारे सारे स्तोत्रों में विस्तृत) इत्यादि पर्यास [उपसहारक तृच] है। इसके 'विश्वासु गीर्ष्वायतम्' इस पाद में 'आयतम्' शब्द दीर्घत्व का वाचक है। उस [प्रयोगाधिक्य के कारण] से यह दिन अति दीर्घ के समान होने से चतुर्थ दिन का लक्षक है।

छन्दोद्वारा प्रशसति—

ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य माध्यदिन वहन्ति, तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते; तस्माद् गायत्रीषु निविद दधाति ॥ इति।

पूर्ववद् व्याख्येयम् ॥

उस सूक्त की ऋचाएँ गायत्री छन्दस्क हैं और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं। जिस छन्द में निविद् [पद समूह] प्रक्षिप्त होते हैं, वही छन्द [सवन

---

१ ऋ० ३ ४६।  २ ऋ० ८ ८१ ७–९।

का] निर्वाहक होता है। इस [निर्वाहकत्व] के कारण गायत्री ऋचाओं में निविद् प्रशित होते हैं।

शस्त्रान्तर विधत्ते—

**विभो देवस्य नेतुस्, तत्सवितुर्वरेण्य,मा विश्वदेव सत्पतिमिति वैश्वदेवस्य प्रतिपदनुचरौ, बार्हतेऽहनि चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।**

'विभो देवस्य' इति[1] ऋगेका, 'तत्सवितुरिति'[2] द्वे ऋचौ। एष तृचो बृहत्साम सम्बन्धी, वैश्वदेवस्य प्रतिपत्। आ विश्वदेवमिति'[3] तृचोऽनुचरः। अह्नो युग्मत्वाद् बार्हतत्वम्। बृहत्सामसम्बन्ध एव मन्त्रलिङ्गम् ॥

**'विभो देवस्य', 'तत्सवितुर्वरेण्यम्' और 'आ विश्वदेवम्' इत्यादि वैश्वदेवशस्त्र की प्रतिपद् और अनुचर ऋचाएँ हैं, जो बृहत्साम सम्बन्धी दिन चतुर्थ दिन में चतुर्थ दिन का रूप है।**

सावितृदेवताकं सूक्तं विधत्ते—

**'आ देवो यातु सविता सुरत्न'[4] इति सावित्रमेति चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।**

आकारोऽत्र लिङ्गम् ॥

**'आ देवो यातु' (सविता देव सुन्दर रत्न के साथ यहाँ आवें) इत्यादि सवितृदेवताक सूक्त में 'आ' है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है।**

प्र-शब्दलिङ्गोपेतं सूक्तं विधत्ते—

**'प्र द्यावा यज्ञैः पृथिवी नमोभिरिति'[5] द्यावापृथिवीयं प्रेति चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।**

**'प्र द्यावा यज्ञैः' (जिन द्यावा-पृथिवी को स्तोताओं ने स्तुति और यज्ञों से) इत्यादि द्यावापृथिवी-देवताक सूक्त में 'प्र' शब्द है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है।**

प्र शब्दो वाक्सम्बन्धश्चेति लिङ्गद्वयोपेतं सूक्तं विधत्ते—

**'प्र ऋभुभ्यो दूतमिव वाचमिष्य'[6] इत्यार्भवं, प्रेति च वाचमिष्य इति च चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।**

ऋभुदेवताकत्वं स्पष्टम्। प्रशब्दो वाक्सम्बन्धश्च प्रेति चेत्यादिना प्रदर्श्यते ॥

---

१ ऋ० ५ ५० १। २ ऋ० ३ ६२ १०–११। ३ ऋ० ५ ८२ ७–९।
४ ऋ० ७ ४५। ५ ऋ० ७ ५३। ६ ऋ० ४ ३३ १।

'प्र' ऋभुभ्यो दूतमिव' (में ऋभुओं के लिए दूत के समान स्तुति रूपी वाणी प्रेरित करता हूँ) इत्यादि ऋभु देवताक सूक्त में 'प्र' शब्द और वाक सम्बन्धी 'वाचमिष्ये' शब्द है जो चतुर्थ दिन में चतुर्थ दिन का रूप है।

प्रशब्देन शुक्रशब्देन चोपेत सूक्तान्तर विधत्ते—

**'प्र शुक्रैतु देवी मनीषेति'[1] वैश्वदेवं, प्रेति च शुक्रवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति।

अत्र बहुदेवताकत्वाद् वैश्वदेवत्वम् ॥

'प्र शुक्रैतु' (दीप्त और अभीष्टप्रद स्तुति देवों के पास जाय) इत्यादि वैश्वदेव देवताक सूक्त में 'प्र' शब्द है और वह 'शुक्र' शब्द से युक्त है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है।

नानाविधच्छन्दोयुक्तत्वरूप लिङ्गान्तर दर्शयति—

**ता उ विच्छन्दस. सन्ति द्विपदा. सन्ति चतुष्पदास्तेन चतुर्थस्याह्नो रूपम् ॥** इति।

'ता उ' तास्तु सूक्तगता ऋचो 'विच्छन्दस' विविधच्छन्दोयुक्ता, तत्रैकविंशतिर्द्विपदा सन्ति, अवशिष्टाश्चतुष्पदा सन्ति। 'तेन' विच्छन्दस्त्वेनाह्नो निरूपकम् ॥

वे सूक्तगत ऋचाएँ विविध छन्दों से युक्त हैं। [उनमें इक्कीस] द्विपदा ऋचाएँ हैं, और अवशिष्ट चतुष्पदा हैं। इस [विविध छन्दों से युक्त होने] के कारण यह चतुर्थ दिन का निरूपक है।

शस्त्रान्तरस्य प्रतिपत्सूक्त विधत्ते—

**'वैश्वानरस्य सुमतौ स्यामेत्याग्निमारुतस्य प्रतिपद्, इतो जात इति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति।

तस्य सूक्तस्य[2] प्रथमाया ऋचस्तृतीयपाद 'इतो जात' इति श्रवणाज्जातवच्छब्दोपेत लिङ्गमस्ति ॥

**'वैश्वानरस्य सुमतौ'** (हम वैश्वानर अग्नि के अनुग्रह में रहें) इत्यादि सूक्त आग्निमारुत शस्त्र का प्रतिपत् सूक्त है। [इस सूक्त के प्रथम ऋचा के तृतीय पाद में] 'इतो जात' में 'जात' शब्द होने से चतुर्थ दिन में यह चतुर्थ दिन का रूप है।

मरुद्देवताक सूक्त विधत्ते—

**'क ईं व्यक्ता नरः सनीळा' इति मारुतं; नकिर्ह्येषां जनूंषि वेदेति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति।

---

1. ऋ० ७ ३४।　　　　2 ऋ० १.९८।

अस्मिन् सूक्ते[1] तृतीयस्यामृचि[2] 'मरुद्भिरस्तु' इति श्रवणान्मारुतम्। नविर्हव्यदिकः प्रथमाया[3] ऋचस्तृतीय पादः, तत्र 'जनूपीति' 'जनि' धातुयुक्तत्वं लिङ्गम्॥

'क ईं व्यक्ता नरः' (कान्ति युक्त नेता, समानगृह-निवासी) इत्यादि मरुद्देवताक सूक्त के प्रथम ऋचा के तृतीय पाद में 'जनूंषि' शब्द 'जनि' धातु युक्त होने से चतुर्थ दिन में यह चतुर्थ दिन का रूप है।

विविधच्छन्दस्त्व लिङ्गान्तर दर्शयति—

**ता उ विच्छन्दसः सन्ति द्विपदाः सन्ति चतुष्पदास्तेन चतुर्थस्याह्नो रूपम्॥ इति।**

अस्मिन् सूक्ते एकादश द्विपदाः, इतराश्चतुष्पदाः[4]॥

वे सूक्तगत ऋचाएँ विविध छन्दों से युक्त हैं। [उनमें ग्यारह] द्विपदा ऋचाएँ हैं। अन्य चतुष्पदा हैं। इस [विविधछन्दस्कत्व] के कारण चतुर्थ दिन में यह चतुर्थ दिन का रूप है।

अच्युतत्वलिङ्गोपेतामृच विधत्ते—

**'जातवेदसे सुनवाम सोममिति'[5] जातवेदस्याऽच्युता॥ इति।**

'जातवेदसे सुनवाम' (हम सभी को जानने वाले अग्नि को उद्देश्य कर सोम का अभिषव करते हैं) इत्यादि जातवेद देवताक ऋचा [पहले विहित होने से] अच्युत है।

जातवेदोदेवताकमन्यत् सूक्त विधत्ते—

**'अग्नि नरो दीधितिभिररण्योरिति'[6] जातवेदस्यम्; हस्तच्युती जनयन्तेति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्॥ इति।**

जातस्य जगतो वेदितृत्वात् अग्निरेव 'जातवेदाः'। हस्तच्युतीत्यादिर्द्वितीयः पादः, तत्र 'जनयन्तेति' श्रवणाज्जनिधातुयुक्तं लिङ्गम्॥

'अग्नि नरो' (नेता ऋत्विज प्रशस्त, दूरस्थित, गृहपति और गतिशील अग्नि को दो काष्ठों से हस्तगति और अंगुलियों के द्वारा उत्पन्न करते हैं) इत्यादि जातवेद देवताक सूक्त में जनयन्त शब्द 'जनि' धातु युक्त होने से चतुर्थ दिन में यह चतुर्थ दिन का रूप है।

---

१. ऋ० ७.५६। २ पञ्चम्यामृचीति वक्तुमुचितम्।

३. द्वितीयाया इति वक्तव्यम्, न हि प्रथमा ऋक् चतुष्पदा।

४. क ईं व्यक्ता इति पञ्चविंशत्यृच सूक्तम्। तत्र आद्या एकादश द्विपदाः, विराट्क्षरा विराज, शिष्टाश्चतुर्दश त्रिष्टुभ। तदिह यदुक्त पुरस्तात् 'तृतीयस्यामृचि' इति, यच्चोक्तं 'प्रथमाया ऋच'—इति, तदुभयमेव भाष्यकारस्यैतस्य भ्रममावेदयतीति स्फुटम्।

५. ऋ० १.९९। ६. ऋ० ७.१।

विविधच्छन्दोरूप लिङ्गान्तर दर्शयति—

**ता उ विच्छन्दसः सन्ति विराजः सन्ति त्रिष्टुभस्तेन चतुर्थस्याह्नो रूपमह्नो रूपम् ॥ ५ ॥ इति ।**

अत्राष्टादश विराज, इतरास्त्रिष्टुभ । अभ्यासोऽध्यायपरिसमाप्त्यर्थ ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' एतरेयब्राह्मणभाष्ये पञ्चम-पञ्चिकाया प्रथमाध्याये (एकविंशाध्याय) पञ्चम· खण्ड ॥ ५ ॥ [१५८]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरधर-माधवाचार्यादेशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'–नाम भाष्य ऐतरेयब्राह्मणभाष्यस्य कृतौ पञ्चमपञ्चिकाया प्रथमोऽध्याय (एकविंशोऽध्याय) समाप्त ॥ १ ॥

**वे सूक्तगत ऋचाएँ विविध छन्दों से युक्त हैं । [उनमें अट्ठारह] विराज हैं और अन्य त्रिष्टुभ हैं । इस [विविधछन्दस्कत्व] के कारण चतुर्थ दिन में यह चतुथ दिन का रूप है ।**

**॥ इस प्रकार ऐतरेय ब्राह्मण की पाँचवीं पञ्चिका के प्रथम (इक्कीसवें) अध्याय की हिन्दी पूर्ण हुई ॥ १ ॥**

---

# अथ द्वितीयोऽध्यायः

## प्रथमः खण्डः

—:०:—

# [अथ द्वाविंशोऽध्यायः

## प्रथमः खण्डः]

अथ नवरात्रापेक्षया पञ्चमं मध्यमत्र्यहापेक्षया द्वितीयमहर्विधत्ते—

**गौर्वै देवता पञ्चममहर्वहति त्रिणवः स्तोमः शाक्वरं साम पङ्क्तिश्छन्दो यथा-देवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद ॥** इति ।

पूर्वत्र वागेव गौरेव द्यौरेवमिति देवताया रूपत्रयमुक्तम्, तत्र वागात्मकं रूपं चतुर्थेऽह्न्युक्तम्, पञ्चमस्याह्नो गौरेव[1] देवता निर्वाहिका । स्तोमानां मध्ये त्रिणवो निर्वाहकः । तस्य त्रिणवस्य स्तोमस्य स्वरूपं छन्दोगैरेवमाम्नातम्—'नवभ्यो हिं करोति स तिसृभिः स पञ्चभिः स एकया । नवभ्यो हिं करोति स एकया स तिसृभिः स पञ्चभिः । नवभ्यो हिं करोति स पञ्चभिः स एकया स तिसृभिः । वज्रो वै त्रिणव'[2] इति । अस्यायमर्थः—एकस्तृचस्त्रिभिः पर्यायैरावर्तनीयः, तत्र प्रथमायास्त्रिः पाठः, द्वितीयायाः पञ्चकृत्वः पाठः, तृतीयस्याः सकृदेव पाठः । द्वितीयपर्याये प्रथमायाः सकृत्पाठः, द्वितीयस्यास्त्रिः पाठः, तृतीयस्याः पञ्चकृत्वः पाठः । तृतीयपर्याये प्रथमायाः पञ्चकृत्वः पाठः, द्वितीयस्याः सकृत्पाठः, तृतीयस्यास्त्रिः पाठः । एवमावृत्ताभिः सप्तविंशतिसंख्याकाभिर्ऋग्भिस्त्रिणवः स्तोमो भवति । अन्यत् पूर्ववद् व्याख्येयम् ॥

पृष्ठ्यषडह (क्रमागत)—[पञ्चम और षष्ठ दिन]

V. १ [XXII. १] गौ [द्वादशाहगत नवरात्र के] पञ्चम दिन की निर्वाहक देवता है; त्रिणव [३ × ९ = २७] स्तोम है, शाक्वर साम और पंक्ति छन्द [निर्वाहक] हैं; जो इस प्रकार जानता है वह इससे देवता, स्तोम, साम और छन्द का अनतिक्रमण कर समृद्ध होता है।

---

१. 'गौस्तु मुर्धामर्यदा ब्रह्मपत्नी सरस्वती'—इति षड्गुरुशिष्यः।

२. ता० ब्रा० ३.१,२ ।

पञ्चमस्याह्नो मन्त्रलिङ्गानि दर्शयति—

**यद्वै नेति न प्रेति यत्स्थितं तत्पञ्चमस्याह्नो रूपम् ॥** इति ।

आकार प्रशब्दश्च नात्र लिङ्गमिति नकारद्वयेन प्रतिषिध्यते । यत्तु 'स्थित' तिष्ठति-धात्वर्थरूपमप्रचलित तत्पञ्चमस्याह्नो निरूपकम् ॥

**जो [चतुर्थ दिन के सूचक] 'आ' और 'प्र' [पहले कहे गए] हैं वे [पञ्चम दिन के सूचक] नहीं हैं, अपितु जो [मन्त्र] 'स्था' धातु के रूप से युक्त है वह पञ्चम दिन का निरूपक है ।**

द्वितीयेऽह्न्युक्त लिङ्गजातं पञ्चमेऽह्न्यतिदिशति—

**यद्वेव द्वितीयमहस्तदेतत् पुनर्यत्पञ्चमम् ॥** इति ।

नवरात्रापेक्षया यत्पञ्चममहर्विद्यते, तत्पृथङ् न भवति । किन्तु यदेव द्वितीयमहस्तदेव पञ्चमत्वेन पुनः क्रियते, तत्रत्य लिङ्गजातमत्रानुसन्धेयमित्यर्थः[1] ॥

**[नवरात्र का जो पाँचवाँ दिन है वह पृथक् नहीं होता है अपितु प्रथम त्र्यह के] द्वितीय दिन का जो रूप कहा गया है वह पुन. इस [मध्यम त्र्यह के द्वितीय दिन अर्थात्] पाँचवें दिन का निरूपक है ।**

तानि लिङ्गानि दर्शयति—

**यदूर्ध्ववद्यत् प्रतिवद्यदन्तर्वद् यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्षमभ्युदितम् ॥** इति ।

पूर्ववद्व्याख्येयम् ॥

**जो 'ऊर्ध्व' शब्द से युक्त, जो 'प्रति' शब्द से युक्त, जो 'अन्त' शब्द से युक्त, जो 'वृषन्' शब्द से युक्त और जो [मन्त्र] 'वृधन्' शब्द से युक्त आम्नात है और जिसके मध्यम पद में देवता का अभिधान किया गया हो, और जहाँ अन्तरिक्ष की ओर संकेत हो,—**

अथ विशेषलिङ्गानि दर्शयति—

**यद्दुग्धवद् यद्दूधवद्यद्धेनुमद्यत्पृश्निमद्यन्मद्वद्यत्पशुरूप यदध्यासवद् विक्षुद्रा इव हि पशवो, यज्जागतं जागता हि पशवो, यद्बार्हतं बार्हता हि पशवो, यत्पाङ्क्तं पाङ्क्ता हि पशवो, यद्वामं वामं हि पशवो, यद्धविष्मद्धविर्हि पशवो, यद्वपुष्मद्वपुर्हि पशवो, यच्छाक्वर यत्पाङ्क्त यत्कुर्वद्, यद्द्वितीयस्याह्नो रूपमेतानि वै पञ्चमस्याह्नो रूपाणि ॥** इति ।

---

१. द्र० इत· पूर्वम्, पृ० ६९९ ।

दुग्धोधधेनुपृश्निमच्छब्दैर्युक्तं यदस्ति, तत्सर्वं लिङ्गम्। तथाविधं च पशुरूपं यदस्ति, तदपि लिङ्गम्। पशुरूपस्य बहुविधत्वमेव यदभ्यासवदित्यादिना प्रपञ्च्यते। अधिकस्य पादस्य प्रक्षेपः 'अभ्यासः'। प्रकृतौ यावदस्ति, तावतोऽप्यधिकपादोपेतम् 'अभ्यासवत्'। पशूनामपि चातुर्थ्यं पादस्याधिकं मुखमेव परिगण्यते। अतोऽभ्यासवत् पशुरूपं भवति। तदेव 'विक्षुद्रा इव' इत्यनेन स्पष्टीक्रियते। विविधाः क्षुद्राः 'विक्षुद्राः'। एकस्मादन्यो न्यूनः, तस्मादप्यन्यो न्यून:, गजापेक्षयाऽश्वः क्षुद्रः, तदपेक्षया महिषः क्षुद्रः, ततो गौः, ततोऽजेत्येवं पशुषु क्षुद्रत्वं द्रष्टव्यम्। 'जागत' जगतीसम्बद्धं यदस्ति, तदपि पशुरूपम्, सोमाहरणप्रसङ्गे[1] जगत्या पशूनामानीतत्वाज्जागतत्वम्। तथा 'बार्हतं' बृहतीसम्बद्धं पशुरूपम्। पशुविषये छन्दसामाजिधावने[2] बृहत्या विजयेन पशूना बार्हतत्वम्। पङ्क्तिच्छन्दःसम्बद्धमपि पशुरूपम्, पङ्क्तिरूपत्वं पञ्चावयवरूपता पशवः पाङ्क्ताः। यत् 'वामं' रमणीयं सूक्तं स्वरवर्णादिभिः श्राव्यं भवति, तदपि पशुरूपम् लोकेऽपि गवाश्वादिपशव इति यदस्ति, तद् 'वामं' रमणीयं दृश्यते। 'हविष्मत्' हविः शब्दोपेतं यदस्ति, तदपि पशुस्वरूपम्, पशवो हि देवतासंबद्धहविःस्वरूपेण हूयन्ते।[3] 'वपुष्मद्' वपुः शब्दोपेतं यदस्ति, तदपि पशुस्वरूपम्, पशवो हि वपुःपुष्टाङ्गभूता दृश्यन्ते। 'विदा मघवन्'-इत्यादिषु महानाम्नीपूर्वपदं 'शाक्वरं' साम[4], तत्सम्बद्धमेकं लिङ्गम्। पाङ्क्तमिति यत्पुनर्वचनं, तत्पञ्चसंख्यायुक्तं, पूर्वं तु पङ्क्तिच्छन्दःसम्बद्धमिति विशेषः। 'कुर्वत्'-इति वर्तमानार्थवाचिप्रत्ययोपेतं धातुमात्रं विवक्षितम्। एतच्च द्वितीयस्याह्नो रूपमिति पूर्वमुक्तम्[5]। एवं च सति यानि द्वितीयेऽह्न्युक्तानि लिङ्गानि, यानि चात्र नूतनानि एतानि सर्वाण्यपि पञ्चमस्याह्नो निरूपकाणि द्रष्टव्यानि ॥

जो [मन्त्र] 'दुग्ध' शब्द से युक्त, जो 'ऊध' शब्द से युक्त, जो 'धेनु' शब्द से युक्त, जो 'पृश्नि' शब्द से युक्त, जो 'मद्' शब्द से युक्त, जो पशु का निरूपक हो, जो अभ्यास [वृद्धि अर्थात् अधिक पाद के प्रक्षेप] से युक्त हो, [पशुओं को भी चार पैर से अधिक एक मुख होना है अतः वह अभ्यास से युक्त है]और, क्योंकि पशु एक दूसरे से विक्षुद्र अर्थात् छोटे-बड़े होते हैं, जो मन्त्र जगती से सम्बद्ध हो; क्योंकि पशु जगती से सम्बन्धित है [अर्थात् चलने-फिरने हैं], जो बृहती से सम्बद्ध हो, क्योंकि पशु बृहती से सम्बन्धित हैं, जो पंक्ति से सम्बद्ध हो,

---

१. द्र० इतः पूर्वम्, पृ० ४७२। २. द्र० इतः पूर्वम्, पृ० ५८०, पं० २२।

३. तथा चोक्तं महाभारते—

ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतम्।
एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति ॥

(अनु० पर्व, ८६ अध्याये)।

४. सामसंहितायां महानाम्नीसाम पृथगेव ग्रन्थः, तच्चारण्यकाध्ययनान्तेऽध्यापयन्ति।

५. द्र० इतः पूर्वम्, पृ० ६३९।

क्योंकि पशु [चार पैर और एक मुख इन पाँच के होने से] पंक्ति से सम्बन्धित हैं, जो [सूक्त स्वरवर्णादि के द्वारा] रमणीय हो, क्योंकि [लोक में गौ आदि] पशु भी रमणीय होते हैं, जो 'हवि' संज्ञा से युक्त हो, क्योंकि पशु [देवता से सम्बद्ध हवि-स्वरूप के द्वारा] हवि हैं, जो 'वपु' संज्ञा से युक्त हो, क्योंकि पशु [पुष्ट अङ्ग से] वपु हैं, जो शाक्वर [साम] से सम्बद्ध हो, जो पंक्ति [छन्द] से सम्बद्ध हो, जो वर्तमान कालिक क्रिया से युक्त हो, और जो द्वितीय दिन के निरूपक चिह्न हैं—ये सब पञ्चम दिन के निरूपक हैं।

आज्यशस्त्र विधत्ते—

**'इमम् षु वो अतिथिमुषर्बुधमिति' पञ्चमस्याह्न आज्य भवति, जागतमध्यासवत् पशुरूप, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति।**

'इमम् षु' इत्यादिसूक्ते[1] जगतीछन्दोयुक्ता आद्या नवर्च शसनीया।[2] तत्र तृतीयस्यामृचि जगतीछन्दस्केभ्यश्चतुर्थपादेभ्योऽधिक पादो भरद्वाजाय सप्रथ' इत्येष समाम्नायते। अतोऽधिकपादयुक्तत्वात् इदमध्यासवल्लिङ्गम्।[3] तत्र पशुरूपम्, पशोरपि पादचतुष्टयादधिकस्य मुखस्य विद्यमानत्वात्। तदेतल्लिङ्गयुक्त पञ्चमेऽहनि विनियोक्तु युक्त योग्यम् तस्मादेतत् पञ्चमस्याह्नो 'रूप' निरूपकम् ॥

'इमम् षु व' (तुम उषाकाल में प्रबुद्ध अतिथि रूप इस [अग्नि] को ) इत्यादि पञ्चम दिन का आज्य [सूक्त] है। यह जगती छन्द से युक्त है, [अधिक पादों से युक्त होने से] यह वृद्धि से युक्त है। [चार पैर और मुख की अधिकता से] यह पशु का लक्षक है, जो पञ्चम दिन में [विनियोग के योग्य होने से] पञ्चम दिन का निरूपक है।

अथ प्रउगशस्त्र विधत्ते—

**'आ नो यज्ञ दिविस्पृश,मा नो वायो महेतने, रथेन पृथुपाजसा, बह्व सूरचक्षस, इमा उ वा दिविष्टय, पिबा सुतस्य रसिनो, देव देव वोऽवसे देव देव,[4] बृहद्गायिषे वच इति' बार्हत प्रउग पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति।**

---

१ ऋ० ६ १५।

२ 'इमम् षु व इत्येकोनविंशऋच सूक्तम्। तत्रादितो नवर्च एवात्र शसनीया भवन्ति, 'इमम् षु वो अतिथिमुषर्बुधमिति नवाज्यम्'—इति कल्पोक्ते ७ १२।

३ 'अधिता सप्त शाक्वर महापङ्क्त्य तमिति'—सर्वानुक्रमण्यापाङ्क्तमित्यन्वयमात्रम्। 'महापङ्क्तेश्चाणि पूर्वपदलोप'—इति षड्गुरुशिष्य।

४ द्वादशसूक्तीयर्चो ग्रहणवारणायेह पादाधिकप्रतीकग्रहणम्।

'आ नो यज्ञमिति'[1] द्वे ऋचौ । 'आ नो वायो',[2] इत्येका । सोऽयं प्रथमस्तृचः; 'रथेन'इत्यादिः[3] द्वितीयो 'बह्वः'[4] इत्यादिस्तृतीय 'इमा उ वाम्'[5]-इत्यादिश्चतुर्थः; 'पिबा सुतस्य'[6]—इत्यादिः पञ्चम, 'देवं देवमिति'[7] षष्ठः, 'बृहदिति'[8] सप्तमः । तदेतत्सप्त बृहतीछन्दोयोगाद् 'बार्हतम्' । अतो लिङ्गसद्भावात् पञ्चमेऽहनि योग्यतया तस्य निरूपकम् ॥

'आ नो यज्ञ', 'आ नो वायो', रथेन पृथुपाजसा', बह्वः सूरचक्षसः, 'इमा उ वां दिविष्टयः', पिबा सुतस्य, 'देवं देवं' और 'बृहद्गायिषे' इत्यादि बृहती छन्दस्क प्रउग [शस्त्र] हैं, जो पञ्चम दिन में पञ्चम दिन का निरूपक है ।

अथ शस्त्रान्तरस्य प्रतिपदं विधत्ते—

**'यत्पाञ्चजन्यया विशेति' मरुत्वतीयस्य प्रतिपत्पाञ्चजन्ययेति पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।**

अस्मिस्तृचे प्रथमायामृचि[9] पाञ्चजन्ययति पदे पञ्चशब्दयोगो लिङ्गम् ॥

'यत्पाञ्चजन्यया' इत्यादि मरुत्वतीय शस्त्र की प्रतिपद् ऋचा है । इसमें 'पाञ्चजन्यया' [ = पाँच जनों के] यह शब्द पञ्चम दिन में पञ्चम दिन का रूप है ।

अथ द्वितीयेनाह्ना समानन्यलिङ्गयुक्त शस्त्रक्लृप्ति विधत्ते—

**'इन्द्र इत्सोमपा एक',[10] 'इन्द्र नेदीय एदिहि',[11] 'उत्तिष्ठ ब्रह्मणस्पते'[12] 'अग्निर्नेता',[13] 'त्वं सोम क्रतुभिः',[14] 'पिन्वन्त्यपो',[15] बृहदिन्द्राय गायतेति',[16] द्वितीयेनाह्ना समान आतानः, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।**

'आतानः' शस्त्रक्लृप्तिः ॥

'इन्द्र इत्सोमपा', 'इन्द्र नेदीय', उत्तिष्ठ ब्रह्मणस्पते', 'अग्निर्नेता', 'त्वं सोम क्रतुभिः', ,पिन्वन्त्यपो' और 'बृहद् इन्द्राय' इत्यादि द्वितीय दिन के ही समान शस्त्र की क्लृप्ति [अर्थात् क्रमागत मन्त्र] हैं, जो पञ्चम दिन में पञ्चम दिन के निरूपक हैं ।

---

१. ऋ० ८.१०१.९, १० । २. ऋ० ८.४६.२५ ।
३. ऋ० ४.४६.५–७ । ४. ऋ० ७.६६.१०–१२ ।
५. ऋ० ७.७४.१–३ । ६. ऋ० ८.३.१–३ ।
७. ऋ० ८.२७.१३–१५ । ८. ऋ० ७.९६.१–३ ।
९. ऋ० ८.६३.७ । १०. ऋ० ८.२.४ । ११. ऋ० ८.५३.५ ।
१२. ऋ० १.४०.१ । १३. ऋ० ३.२०.४ । १४. ऋ० १.९१.२ ।
१५. ऋ० १.६४.६ । १६. ऋ० ८.८९.१ ।

अथ मदशब्दलिङ्गेन पञ्चपादोपेतपाङ्क्तत्वलिङ्गेन चोपेत सूक्त विधत्ते—

**'अवितासि सुन्वतो वृक्तबर्हिष'[1] इति सूक्त मद्वत् पाङ्क्त पञ्चपद, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

अत्र द्वितीयपादे 'पिबा सोम मदाय'–इति श्रवणात् इद सूक्त मद्वद्भवति । पञ्च पादा विस्पष्टा ॥

*'अवितासि सुन्वत'* [इन्द्र सोम का अभिषव करने वाले और कुश फैलाने वाले यजमान के तुम रक्षक हो] इत्यादि सूक्त [के द्वितीय पाद में 'मदाय' शब्द होने से] मद् शब्द से युक्त है, जो पांच पादों वाले पङ्क्ति छन्द से युक्त पञ्चम दिन में पञ्चम दिन का रूप है ।

तादृशमेवान्यत्सूक्त विधत्ते—

**'इत्था हि सोम इन्मद'[2] इति सूक्त मद्वत् पाङ्क्त पञ्चपद, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

*'इत्था हि सोम' इत्यादि सूक्त 'मद' शब्द से युक्त, पङ्क्ति छन्दस्क, पांच पादों का* पञ्चम दिन में पञ्चम दिन का निरूपक है ।

पुनरपि मदशब्दलिङ्गोपेत त्रिष्टुप्छन्दस्क सूक्त विधत्ते—

**'इन्द्र पिब तुभ्य सुतो मदायेति'[3] सूक्त मद्वत् त्रैष्टुभ, तेन प्रतिष्ठितपदेन सवन दाधारायतनादेवैतेन न प्रच्यवते ॥** इति ।

पूर्ववद्व्याख्येयम् ॥

'इन्द्र पिब' [हे इन्द्र तुम्हारे मदयुक्त होने के लिए यह सोम अभिषुत हुआ है, इसका पान करो] इत्यादि सूक्त 'मद' शब्द से युक्त है । त्रिष्टुप् छन्दस्क है, नियताक्षर सख्या से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत मरुत्वतीय शस्त्र] धृत होता है । अत इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है ।

आकार प्रशब्दवजितत्वमरु वतीयशस्त्रस्यान्ते प्रक्षेपणीय तृच विधत्ते—

**'मरुत्वाँ इन्द्र मीढ्व'[4] इति पर्यासो नेति न प्रेति, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

परितोऽन्ते प्रक्षेपणीय पर्यास ॥

---

१ ऋ० ८ ३६ ।
२ ऋ० १ ८० ।
३ ऋ० ६ ४०
४ ऋ० ८ ७६ ७ ।

'मरुत्वाँ इन्द्र' [मरुद्गण के साथ हे इन्द्र, हे अत्यन्त प्रदाता] इत्यादि ऋचा [मरुत्वतीय शस्त्र के] अन्त में प्रक्षेपणीय है। इसमें न तो 'आ' [= इधर] शब्द है और न तो 'प्र' [= आगे] शब्द है, जो पाँचवे दिन में पाँचवें दिन का रूप है।

तस्मिन्नृचे निविद्धाने विधत्ते—

**ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते, तस्माद् गायत्रीषु निविदं दधाति ॥ ६ ॥** इति।

पूर्ववद्व्याख्येयम् ॥

॥इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम-पञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) प्रथमः खण्डः ॥ १ ॥ (६) [१५९]

उस सूक्त की ऋचाएँ गायत्री छन्दस्क हैं और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं। जिस [छन्द] में निवित् [पद समूह] प्रक्षिप्त होते हैं, वही छन्द [सवन का] निर्वाहक होता है। इस [निर्वाहकत्व] के कारण गायत्री ऋचाओं में निविद् प्रक्षिप्त होते हैं।

॥ इस प्रकार बाइसवें अध्याय से प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

अथ शाक्वरसामसम्बन्धेन लिङ्गेन युक्ता ऋचो विधत्ते—

**महानाम्नीष्वत्र स्तुवते शाक्वरेण साम्ना रायन्तरेऽहनि पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति।

'विदा मघवन्'-इत्यादयो नववी महानाम्नीसंज्ञकाः।[1] तासूद्गातारः शाक्वराख्येन साम्ना[2] स्तुवते। अहर्भेदमयुग्मत्वाद् रायंतरं शाक्वरं च साम रथंतरस्वजन्यत्वाद् रायंतरम्, अतस्ता ऋचो योग्याः ॥

१, ७ [xxii. २] यहाँ वे ['विदा मघवन्' इत्यादि नौ] महानाम्नी ऋचाओं का शाक्वर नामक साम के द्वारा पाठ करते हैं, जो रथन्तर दिन, पञ्चम दिन में पञ्चम दिन का रूप है।

'महानाम्नी' शब्द निर्वक्ति—

**इन्द्रो वा एतामिर्महानात्मानं निरमिमीत, तस्मान्महानाम्न्योऽथो इमे वै लोका महानाम्न्य इमे महान्तः ॥** इति।

---

१. ऐ० आ० ४.१–१५, महानाम्न्यार्चिकः १–९।

२. तच्च साम अनुर्न्यो गानमन्त्रेभ्यः पृथगेवाम्नातम्।

पुरा कदाचिदिन्द्र स्वयमवैश्वर्यादिगुणैर्महान् भविष्यामीति विचार्य 'विदा मघवन्'-इत्यादिभिर्ऋग्भिः स्वात्मानं गुणैर्महान्तं निर्मितवान्। तस्मान्महत्त्वनिर्माणसाधनत्वान्महानाम्नीशब्दवाच्या सम्पन्ना। अपि च महानाम्न्यो भूरादिलोकत्रयस्वरूपा, लोकाश्च महान्त, तस्मादप्यासां महानाम्नीत्वम् ॥

[पहले किसी समय] इन्द्र ने ['अपने ऐश्वर्यादि गुणों से महान् होऊँगा'—ऐसा विचार कर 'विदा मघवन्' इत्यादि] इन [ऋचाओं] से अपने को महान बनाया। इसलिए [महत्वनिर्माण के साधनत्व के कारण] इनका नाम 'महानाम्नी' हुआ और ये [तीनों] लोक महानाम्नी हैं तथा ये महान् हैं [इससे भी इनका नाम 'महानाम्नी' हुआ]।

ननु शक्वरीपूत्पन्नं साम शाक्वरमिति वक्तव्यम्,—शक्वरी च सप्तपादोपेता, न चैता ऋचस्तथाविधा, किन्तु पादचतुष्टयोपेता अनुष्टुभः तत्कथमासां शक्वरीत्वमित्याशङ्क्य शक्तिप्रदत्वाच्छक्वरीत्वमिति निर्वचनं दर्शयति—

**इमान् वै लोकान् प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद् यदिदं किंच, यदिमाँल्लोकान् प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद् यदिदं किंच, तच्छक्वर्योऽभवंस्तच्छक्वरीणां शक्वरीत्वम् ॥ इति।**

पुरा प्रजापतिः 'विदा मघवन्'-इत्यादिका महानाम्नीरनुसंधाय, तदात्मकाँल्लोकान् प्रजापतिः सृष्ट्वा, ताभिर्महानाम्नाभिरनुगृहीतः पश्चाद् एषु लोकेषु यत्किञ्चित् स्थावरं जङ्गमं प्राणिजातं स्रष्टव्यमस्ति, तत्सर्वं स्रष्टुमशक्नोच्छक्तिमानभूत्।[1] यस्मादेव प्रजापतिरकरोत्, तस्माच्छक्तिहेतुत्वात् एता ऋचः शक्वरीनामिका अभवन्। अनेन प्रकारेण तासां शक्वरीत्वं सम्पन्नम् ॥

[प्राचीन काल में] प्रजापति ने [('विदा मघवन्' इत्यादि महानाम्नी का अनुसन्धान करके] इन लोकों की सृष्टि करके [इन लोकों में] जो कुछ भी [स्थावर या जङ्गम प्राणिजात] सृष्टि के योग्य हैं उन सब कुछ की सृष्टि करने में शक्तिमान् हुए। क्योंकि प्रजापति इन लोको की सृष्टि करके, जो कुछ भी [प्राणिजात] हैं उन सब की सृष्टि करने में समर्थ हुए, इसलिए ये 'शक्वरी' ऋचाएँ हुईं। इस प्रकार शक्वरी ऋचाओं का शक्वरीत्व सम्पादित हुआ।

---

१ 'इमाँ लोकोपमा दृष्ट्वा जगत् सर्वं प्रजापतिः।
शक्तोऽभूद् रक्षितुं तासां विकल्पेन स चाप्यृषिः ॥
वैश्वामित्र्यो महानाम्न्य ऐन्द्रयो वैके प्रजापतिः।
इति ह्यार्षानुक्रमण्यां शौनकः समब्रवीद्दरात् ॥'
—इति षड्गुरुशिष्यः। किन्तु पद्यमिदं मुद्रितार्षानुक्रमण्यां नोपलभ्यते।

प्रकारान्तरेण महानाम्नी प्रशंसति—

**ता ऊर्ध्वा. सीम्नोऽभ्यसृजत; यदूर्ध्वाः सीम्नोऽभ्यसृजत, तत्सिमा अभवस्त-त्सिमानां सिमात्वम् ॥** इति ।

या एता महानाम्न्यः सन्ति, ता 'सीम्न ऊर्ध्वा अभ्यसृजत'। 'अग्निमीळे'-इत्यारभ्य 'यथा व. सु सहासति'-इत्यन्ता दाशतयीना सीमा, तस्या. 'सीम्न.' ऊर्ध्वभाविनीः कृत्वा प्रजापतिरभितः सृष्टवान्। अत एवैता संहिता संहिताया नाऽम्नायन्ते। किन्त्वारण्य-काण्ड[1] आम्नायन्ते। अथवा, नवैता ऋचस्त्रिवेदस्य उपरिस्थितत्वेन प्रयुज्यन्ते। तथा च आश्वलायन आह—'शाक्वरं चेत्पृष्ठं महानाम्न्य स्तोत्रिय.। ता अध्यर्धकारं नव प्रकृत्या तिस्रो भवन्ति'[2] इति। अस्यायमर्थ —यदा शाक्वरसाम्ना पृष्ठस्तोत्रं निष्पाद्यते, तदानी महानाम्न्य ऋच स्तोत्रियस्तृचो भवति। तास्तु 'प्रकृत्या' स्वभावेन नवसंख्यावास्तथाऽपि तिस्र कर्तव्या। अध्यर्धकारमिति तत्रोपाय उच्यते। अर्धिर्च्नार्धेन युक्तामेकामृचमेकमर्धर्चं कृत्वेत्युक्त भवति। ततस्त्रयाणामर्धर्चानामेकार्थत्वे सति तिस्र ऋचो भवन्तीति। सोऽय सीम्न, उल्लङ्घनप्रकार। यस्मात् सीम्न ऊर्ध्वाः सती· प्रजापतिरसृजत, तस्मात् 'सिमा' इत्येतन्नामिका अभवन्। महानाम्नीनामेतेन प्रकारेण सिमानामकत्वं विज्ञेयम्[3] ॥

उन [महानाम्नी ऋचाओं] को [दाशतयी की] सीमा से बाहर [प्रजापति ने] रचा। क्योंकि उन्होंने सीमा से परे इसकी रचना की, इसलिए वह 'सिमा' हुई। इसीलिए सिमा [रूप महानाम्नी] ऋचाओं का 'सिमा' नाम हुआ।

स्तोत्रियमुक्त्वाऽनुरूप तृच विधत्ते—

**स्वादोरित्था विषूवत, उप नो हरिभिः सुत,मिन्द्रं विश्वा अवीवृधन्नित्यनु-रूपो वृषण्वान् पृश्निमान् मद्वान् वृधन्वान् पञ्चमेऽहनि पञ्चम-स्याह्नो रूपम् ॥** इति ।

---

१. चतुर्थं इति शेष.।

२. आश्व० श्रौ० ७ १२.१०।
'ता महानाम्नीरध्यर्धकार शंसेत्, त्रिभिस्त्रिभिरध्यर्धैरवसानं प्रणव च कुर्यात्-इत्यर्थ.। ता अध्यर्धकारं शंसेत्—यथा प्रकृत्या नव सत्यस्ता एव तिस्रो भवन्तीति सूत्रार्थः' (इति तत्र नारायणीयावृत्ति)।

३. अथ सामब्राह्मणयो —इन्द्र प्रजापतिमुपाधावत् वृत्रं हनानीति, तस्मा एतच्छन्दोम्य इन्द्रियं वीर्यं निर्मात्र प्रायच्छदनेन शक्नुहीति, तच्छक्वरीणां शक्वरीत्वम्। सामानमभिनत् तत् सिमा। महद्धामकरात् तन्महा। महान् घोष असीत्तन्महा-नाम्न्यः'—इति ता० ब्रा० १३ ४। ऐन्द्रो महानाम्न्य. प्रजापतेर्वा विष्णोर्वा विश्वा-मित्रस्य वा सिमा वा मन्हा वा शक्वर्यो वा'—इति आर्षेय ब्रा० ३.२९।

स्वादोरित्यादिरध्ययनप्रकारेणैकस्तृच[1] उप न इत्यादिर्द्वितीय[2] इन्द्र विश्वा[3] इति तृतीय । एतत्त्रय मिलित्वा पूर्वोक्तस्तोत्रियसादृश्यादनुरूपस्तृचो भवति । तत्र स्वादोरित्येतस्मिन् वृष्णा मदन्ति इति वृषण्वत्त्व मद्वत्त्व च दृश्यते 'सोम श्रीणन्ति पृश्नय' इति पृश्निमत्त्वम्, 'इन्द्र विश्वा अवीवृधन्निति' वृधन्वत्त्वम् तान्येतानि पञ्चमेऽहनि योग्यत्वात् पञ्चमस्य रूपाणि ॥

'स्वादोरित्या' आदि एक तृच, 'उप न' इत्यादि द्वितीय तृच और 'इन्द्र विश्वा' आदि तृतीय तृच [पूर्वोक्त स्तोत्रिय सादृश्य से] अनुरूप हैं, जो वृषन शब्द से युक्त 'मद्' शब्द से युक्त, 'पश्नि' शब्द से युक्त और 'वृधन्' शब्द से युक्त होने से पञ्चम दिन में पञ्चम दिन का रूप है।

अच्युतत्वलिङ्गेन धाय्या विधत्ते—

**'यद्वावानेति'[4] धाय्याऽच्युता ॥ इति ।**

'यद्वावान' इत्यादि धाय्या [पूर्व में विहित होने से] अच्युत है।

ता धाय्यामनु रथन्तरसामयोने शसन विधत्ते—

**'अभि त्वा शूर नोनुम'[5] इति रथन्तरस्य योनिमनु निवर्तयति, रथन्तर ह्येतदहरायतनेन ॥ इति ।**

अयुग्मत्वाद् अह्नो रथन्तरायतनत्वमेतदेव तल्लिङ्गम् ॥

'अभि त्वा शूर' इत्यादि रथन्तर [नामक साम] में उत्पन्न [प्रगाथ] का [पूर्वोक्त धाय्या के] पश्चाद् शसन करता है, क्योंकि यह [=पञ्चम] दिन-स्थान के द्वारा रथन्तर सम्बन्धी है।

शाक्वरसामसम्बन्धि सामप्रगाथ विधत्ते—

**'मो षु त्वा वाघतश्चनेति'[6] सामप्रगाथोऽध्यासवान्, पशुरूप, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।**

ऋग्द्वयमेव सर्वत्र प्रगाथस्य स्वरूपम् । अत्र तु 'रायस्काम'[7] इत्येषा द्विपदाधिक्त्वेन प्रक्षिप्ता,[8] तस्मादय प्रगाथोऽध्यासवान् । तच्च पशुरूपत्वात् पञ्चमेऽहनि योग्यम् ॥

---

१ ऋ० १ ८४ १० ।     २ ऋ० ८ ९३ ३१ ।     ३ ऋ० १ ११ १ ।

४ ऋ० १० ७४ ६ ।     ५ ऋ० ७ ३२ २२ ।

६ ऋ० ७ ३२ १ ।     ७ ऋ० ७ ३२ ३ ।

८ तदय प्रगाथस्तृच एवेति फलितम् । 'मोषु वा वाघतश्चनेति सद्विपद उपसमस्येद् द्विपदाम्'—इति आश्व० श्रौ० ७ ३ । सामसहितायां तु (उ० आ० ८ २ ६ १,२) द्वृच एवेत्यस्य सामप्रगायत्वमव्याहृतम् ।

'मो षु त्वा' आदि साम प्रगाथ है। [यहाँ 'रायस्काम.' इत्यादि द्विपदा ऋचा का अधिक रूप में प्रक्षेप होने से] यह अभ्यास [= आधिक्य] से युक्त है; जो पञ्चरूप होने से पञ्चम दिन में पञ्चम दिन का रूप है।

अच्युतत्वलिङ्गेन सूक्तविशेष विधत्ते—

**'त्यमू षु वाजिन देवजूतमिति'[1] तार्क्ष्योऽच्युतः ॥ ७ ॥ इति ।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्यायं (द्वाविंशाध्याय) द्वितीय खण्डः ॥२॥ (७) [१६०]

'त्यमू षु' इत्यादि तार्क्ष्य देवताक सूक्त [प्रथम दिन विहित होने से] अच्युत है।

॥ इस प्रकार बाइसवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

पञ्चपादोपेततया पाङ्क्तत्वलिङ्गयुक्तं सूक्त विधत्ते—

**'प्रेद ब्रह्म वृत्रतूर्येष्वाविथेति' सूक्त[2] पाङ्क्तं; पञ्चपदं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।**

[अवशिष्ट निष्केवल्यशस्त्र और सायसवन के शस्त्र]—

१. ८ [xxii. ३] 'प्रेदं ब्रह्म' आदि सूक्त पंक्ति छन्दस्क है, जो पाँच पादों से युक्त पञ्चम दिन में पञ्चम दिन का रूप है।

मदशब्देन पाङ्क्तत्वेन च लिङ्गद्वयेनोपेत सूक्त विधत्ते—

**'इन्द्रो मदाय वावृधे'[3] इति सूक्तं मद्वत् पाङ्क्तं, पञ्चपदं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।**

'इन्द्रो मदाय' आदि सूक्त 'मद्' शब्द से युक्त पंक्ति छन्दस्क है, जो पाँच पादों से युक्त पञ्चम दिन में पञ्चम दिन का रूप है।

मदिषातुलिङ्गकं त्रिष्टुप्छन्दस्कं सूक्त विधत्ते—

**'सत्रा मदासस्तव विश्वजन्या'[4] इति सूक्तं मद्वत् त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधाराऽऽयतनादेवैतेन न प्रच्यवते ॥ इति ।**

'सत्रा मदासस्तव' आदि सूक्त 'मद्' धातु से युक्त त्रिष्टुप् छन्दस्क है। नियत अक्षर संख्या से युक्त उस [सूक्त] से सवन गत [निष्केवल्य] शस्त्र धारित होता है। अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

१. ऋ० १०.१७८। २. ऋ० ८.३७। ३. ऋ० १.८१। ४. ऋ० ३.३६।

शस्त्रान्ते प्रक्षेपणीय तृच विधत्ते—

**'तमिन्द्र वाजयामसीति'[1] पर्यास, स वृषा वृषभो भुवदिति पशुरूप, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

स वृषेत्यादिस्तृतीय पाद, तत्र वृषभशब्दश्रवणात् पशुरूपत्वम् ॥

'तमिन्द्र वाजयामसि' आदि तृचविशेष पर्यास [ = शस्त्र के अन्त में प्रक्षेपणीय] है। [इस ऋचा के] 'स वृषा' इत्यादि [तृतीय पाद में 'वृषभ' शब्द के होने से यह] पशु रूप हैं, जो पञ्चम दिन में पञ्चम दिन का रूप है।

तस्मिंस्तृचे निविद्धान विधत्ते—

**ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यदिन वहन्ति तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते, तस्माद् गायत्रीषु निविद दधाति ॥** इति ।

उस [तृच] की ऋचाएँ गायत्री छन्दस्क हैं और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं। उस [छन्द] में निवित्पद [समूह] प्रक्षिप्त होते हैं, वही छन्द [सवन का] निर्वाहक होता है। उस [निर्वाहकत्व] के कारण गायत्री ऋचाओं में निविद प्रक्षिप्त होते हैं।

वैश्वदेवशस्त्रस्य तृचद्वय विधत्ते—

**'तत्सवितुर्वृणीमहे'ऽद्या नो देव सवितरिति, वैश्वदेवस्य प्रतिपदनुचरौ, राथन्तरेऽहनि पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

'तत्सवितुरिति'[2] तृच प्रतिपद्। 'अद्या न'[3] इति तृचोऽनुचर। तावुभौ रथन्तर-सम्बन्धिनौ। अहश्चायुग्मत्वाद् राथन्तरम् एव लिङ्ग सम्पादनीयम् ॥

[वैश्वदेवशस्त्र]—

'तत्सवितु' और अद्या न' इत्यादि दोनों तृच वैश्वदेवशस्त्र के प्रतिपत् और अनुचर हैं। [वे दोनों ही रथन्तर साम से सम्बन्धित हैं अत] यह रथन्तर साम से सम्बद्ध [अयुग्म] दिन पञ्चम दिन में पञ्चम दिन का रूप हैं।

रमणीयत्ववाचकेन वामशब्दलिङ्गेन युक्त तृच विधत्ते—

**'उदुष्य देव सविता दमूना'[4] इति सावित्र, मा दाशुषे सुवति भूरि वाममिति वाम पशुरूप, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

---

१ ऋ० ८ ९२ ७–९ ।
२ ऋ० ५ ८२ १–३ ।
३ ५ ८२ ४–६ ।
४ ऋ० ६ ७१ ४-६ ।

सावित्रत्व स्पष्टम् । 'आ दाशुषे' इति चतुर्थ पाद । तत्र 'भूरि वाममिति'—वामशब्द रूप लिङ्ग पशुरूपमस्ति ॥

'उदुष्य देव सविता' इत्यादि तृच सवितृदेवताक है। [इसका] 'आ दाशुषे' आदि [चतुर्थ पाद 'भूरि वाम' इस] रमणीय शब्द से युक्त पशुरूप है, जो पञ्चम दिन में पञ्चम दिन का निरूपक है।

पशुवाचकेनोक्षशब्दरूपेण लिङ्गेन युक्तं चतुर्ऋचं विधत्ते—

**'मही द्यावापृथिवी इह ज्येष्ठे'[1] इति द्यावापृथिवीय, रुवद्धोक्षेति पशुरूप पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति।**

रुवदित्यादिश्चतुर्थ पाद, तत्रोक्षेति पुगवाभिधायक शब्दोऽस्ति ॥

'मही द्यावापृथिवी' इत्यादि द्यावापृथिवी देवताक चतुर्ऋच[2] [के चतुर्थ पाद] 'रुव द्धोक्षा' आदि [में वृषभ वाचक 'उक्ष' शब्द होने से] पशुरूप है जो पञ्चम दिन में पञ्चम दिन का रूप है।

ऋभुदेवताक सूक्त विधत्ते—

**'ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेत्यार्भव',[3] वाजो वै पशव· पशुरूप, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति।**

पशोर्हविष्ट्वेन देवताक्षत्वादन्नवाची वाजशब्द पशुरूप लिङ्गम् ॥

'ऋभुर्विभ्वा वाज' (= ऋभु, विभ्वा, वाज और इन्द्र हमारे इस यज्ञ के अभिमुख) इत्यादि ऋभुदेवताक सूक्त है, पशु [देवता के लिए हवि रूप अन्न होने से] वाज[4] है, जो [वाज शब्द] पशु का लक्षक है, वह पञ्चम दिन में पञ्चम दिन का निरूपक है।

अभ्यासलिङ्गक सूक्त विधत्ते—

**'स्तुषे जन सुव्रत नव्यसीभिरिति'[5] वैश्वदेवमभ्यासवत् पशुरूप, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति।**

---

१ ऋ० ४ ५६ १ ४।

२ चतुर्ऋच निविद्धानम्। मृग्यते हि—'उदुष्य देव सविता दमूना इति तिस्रो मही द्यावापृथिवी इह ज्येष्ठे'—'इति चतस्र' इति आश्व० श्रौ० ८ ८ ६।

३ ऋ० ४ ३४ १

४ (i) वाजस्यान्नस्य मुक्तिर्हि गव्यैं क्षीरघृतादिभि —इति षड्गुरुशिष्य ।
(ii) 'Strength' इति कोषमहोदय ।

५ ऋ० ६ ४९।

त्रिष्टुप्छन्दस्के सूक्ते 'विश आ देवी' इत्येक पादोऽधिक प्रक्षिप्यते,[1] सोऽयमभ्यासो लिङ्गम् ॥

'स्तुषे जन सुव्रतम्' (= मैं नूतन स्तुतियों के द्वारा शोभन कर्म वाले देवों की स्तुति करता हूँ) इत्यादि वैश्वदेव देवताक [त्रिष्टुप् छन्दस्क सूक्त में 'विश आ देवी' आदि एक पाद अधिक प्रक्षिप्त होता है वह] सूक्त अभ्यास से युक्त तथा पशु रूप है जो पञ्चम दिन में पञ्चम दिन का रूप है।

शस्त्रान्तरस्य प्रतिपद सूक्त विधत्ते—

हविष्पान्तमजर स्वर्विदीत्याग्निमारुतस्य प्रतिपद्धविष्मद् पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति।

हवि शब्दोपेतत्वमत्र[2] लिङ्गम् ॥

[आग्निमारुतशस्त्र]—

'हविष्पान्तमजर' (= पान के योग्य जरारहित एवं देवों के प्रिय सोमरस रूपी हवि) आदि आग्निमारुतशस्त्र का प्रतिपद् सूक्त है, जो 'हवि' शब्द से युक्त पञ्चम दिन में पञ्चम दिन का रूप है।

वपु शब्दोपेत मरुद्देवताक सूक्त विधत्ते—

'वपुर्नु तच्चिकितुषे चिदस्त्विति'[3] मारुत, वपुष्मत् पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति।

'मरुतो वावृधन्त' इति श्रवणात् तत्सूक्त मारुतम्। वपु शब्दलिङ्ग तु स्पष्टम् ॥

'वपुर्नु तच्चिकितुषे' इत्यादि मरुद्देवताक सूक्त है, वपु शब्द से युक्त जो पञ्चम दिन में पञ्चम दिन का रूप है।

अच्युतत्वलिङ्गयुक्तामृच विधत्ते—

'जातवेदसे सुनवाम सोममिति'[4] जातवेदस्याऽच्युता ॥ इति।

'जातवेदसे सुनवाम' इत्यादि जातवेददेवताक ऋचा [पूर्व में विहित होने से] अच्युत है।

अभ्यासलिङ्गेन युक्त जातवेदोदेवताक तृच विधत्त—

'अग्निर्होता गृहपति स राजेति'[5] जातवेदस्यमभ्यासवत् पशुरूप, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ ८ ॥ इति।

---

१ विश आ देवीरम्य ? स्नवाम' इति ऋ० ६ ४९ १५। २ ऋ० १० ८८।
३ ऋ० ६ ६६। ४ ऋ० १ ९९ १। ५ ऋ० ६ १५ १३ १५।

त्रिष्टुप्छन्दस्कस्य तृचस्यावसाने 'ता तरेम'—इत्यधिकः पादोऽभ्यासः[1] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम-पञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) तृतीयः खण्डः ॥३॥ (८) [१६१]

'अग्निर्होता गृहपतिः' (=देवों को बुलाने वाले, गृहस्वामी एवं दीप्तिमान् अग्नि) इत्यादि जातवेद देवताक [त्रिष्टुप् छन्दस्क] तृच [कि अन्त में 'ता तरेम' आदि पाद अधिक हे अतः] अभ्यास युक्त यह पञ्चरूप है, जो पञ्चम दिन में पञ्चम दिन का रूप है।

॥ इस प्रकार बाइसवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथ षष्ठमहरारभ्यते—

**देवक्षेत्रं वा एतद् यत् षष्ठमहर्देवक्षेत्रं वा एत आगच्छन्ति, ये षष्ठमहरा गच्छन्ति ॥ इति ।**

द्वादशाहमध्ये नवरात्रान्तर्गते पृष्ठ्यषडहे यत् षष्ठमहरस्ति, तदेतत् 'देवक्षेत्रं वै' देवानां निवासस्थानमेव । एवं सति 'ये' यजमानाः षष्ठमहरनुतिष्ठन्ति, एते देवानां निवासस्थानमागच्छन्ति ॥

[षष्ठ अहः के ऋतुयाज]—

v. ९ [xxii. ४] [द्वादशाह के मध्य नवरात्रान्तर्गत पृष्ठ्यषडह में] जो यह छठ दिन है वह देवों का निवासस्थान ही है। [इस प्रकार] जो [यजमान] षष्ठ अहः का अनुष्ठान करते हैं वे देवों के निवासस्थान पर आ जाते हैं।

अथास्मिन् षष्ठेऽहनि ऋतुप्रैषेषु ऋतुयाज्यासूक्ते कंचिद् विशेष विधातुं प्रस्तौति—

**न वै देवा अन्योऽन्यस्य गृहे वसन्ति, नर्तुर्ऋतोर्गृहे वसतीत्याहुस्तद्यथायथ मृत्विज ऋतुयाजान् यजन्त्यसंप्रदायं तद्यथर्तूनृतून् कल्पयन्ति यथाय जनताः ॥ इति ।**

देवाः सर्वेऽप्यन्योऽन्यस्य गृहे वासं नैव कुर्वन्ति, किंतु स्वे स्व एव गृहे । एवं सत्यृतुरप्यृतोरन्यस्य स्थाने न वसति, किंतु सर्वोऽपि वसन्तादृतुः स्वे स्व एव स्थ निवसति । तस्मात् कारणात् 'यथायथं' स्वस्वस्थानमनतिक्रम्य सर्वेऽप्यृत्विज ऋतुयाज यजेयुः, 'असंप्रदायम्' अन्यस्मै अदत्वा । अयमर्थः—ऋतुग्रहाणां प्रचारो यदा वर्त तदानीं मैत्रावरुणः प्रैषसूक्तगतेन मन्त्रेण होत्रादीन् प्रैष्यति, अन्ते च याज्यया वषट्कुर्वन्ति अध्वर्युयजमानौ तु प्रेषितौ स्वस्वयाज्या होत्रे प्रयच्छतः । तदिदं प्रदानादनुष्ठानम् । अत्र

1. 'ता तरेम तवावसा तरेम'-इति ऋ० ६.१५.१५ ।

तौ होत्रे न प्रयच्छत, किंतु स्वयमेव याज्या पठत इति। तथा सति 'यथर्तु' त तमृतुमनतिक्रम्य सर्वानृतूनृत्विज 'कल्पयन्ति' स्वस्वप्रयोजनसमर्थान् कुर्वन्ति।[1] ऋतूना तथा कल्पने सति 'जनता' जनसमूहा[2] 'यथायथ' स्व स्व स्थानमनतिक्रम्य व्यवस्थिता सुखिनो भवन्ति। एवमृतुयाजा अत्र प्रस्तुता, तत्रैतच्चिन्त्यते—किमृतुयाजषु प्रैषवषट्कारौ प्रकृतिवत्र कर्तव्यावुत कर्तव्यौ ? आहोस्वित् ? प्रकारान्तरेण कर्तव्यौ ? इति ॥

देवता एक दूसरे के घर पर निवास नहीं करते और एक ऋतु अन्य ऋतु के स्थान पर नहीं होती [अपितु वसन्त आदि ऋतु अपने-अपने समय पर ही होती है]—ऐसा [ब्रह्मवादियों का] कथन है। इसलिए ऋत्विज लोग व्यवस्था के अनुसार अपना-अपना ऋतु-याज बिना किसी दूसरे को दिए हुए स्वय ही करते हैं। इस प्रकार वे उन-उन ऋतु के अनुसार सभी ऋतुओं को स्वप्रयोजन में समर्थ बनाते हैं। ऋतुओं के इस प्रयोजन में समर्थ होने पर जन समूह अपने-अपने स्थान के अनुसार सुखी होते हैं।

तत्र वाक्यदकरणपक्षमुपन्यस्यति—

**तदाहुर्नर्तुप्रैषैः प्रेषितव्य नर्तुप्रैषैर्वषट्कृत्य, वाग्वा ऋतुप्रैषा आप्यते वै वाक् षष्ठेऽहनीति ॥ इति।**

ऋतुयाजार्थं मैत्रावरुणन पठितव्या मन्त्रा 'ऋतुप्रैषा'। तैः प्रैषमन्त्रैर्होत्रादीन् प्रति च न प्रेषितव्यम्। 'होता यक्षदि इन्द्रमित्यादिभि[3] प्रैषण न कर्तव्यम्। होत्रादिभिश्चर्तुप्रैषमन्त्रैर्न वषट्कर्तव्यम्। याज्यात्वेन न पठितव्या इत्यर्थः। तत्रेयमुपपत्ति—य ऋतुप्रैषा ते सर्वेऽपि 'वाग्वै' वाग्रूपा एव। वाक्च षष्ठेऽहनि 'आप्यते' समाप्यते। न हि समाप्ताया वाचि मन्त्रप्रयोगो युज्यत इति निषेधवादिनामभिप्राय ॥

[प्रश्न यह है कि क्या ऋतुयाजों में प्रैष और वषट्कार प्रकृतिवत् नहीं करना चाहिए या करना चाहिए अथवा प्रकारान्तर से करना चाहिए ?]—

---

१ तत्तत्र ऋतुयाजान् द्वादश। असम्प्रदायम् = स्वार्थे णमुल्। (अद्य वै मम मदत्त्वा ? अन्यस्मा अदत्त्वा) यजन्ति, यद्, ऋतून् वसन्तादीन् यथर्तु ऋत्वनतिक्रमेण यथायथ यथास्व कल्पयन्ति तद्। जनता = जनसङ्घाश्च।

अध्वर्युयजमानौ स्वौ होत्रे दातु न चाहॅव।
प्रकृताविवर्तुयाजौ किं तत्र यजता स्वयम् ॥

सूत्र्यते हि—'होताध्वर्युगृहपतिभ्या होतरेतद्यजेत्युक्त। स्वय षष्ठे पृष्ठ्याहनि'—(आश्व० श्रौ० ५ ८ ५, ६) इति। इति षड्गुरुशिष्य।

२. अत्र जनशब्दो देवेषु वर्तते। न वै देवा इत्युपक्रमवशात्। तथाहि जनशब्दो देववचन ऊर्जादं उत यज्ञियास. पञ्चजना इति'—इति गोविन्दस्वामी।

३ द्र० इत. पूर्वम्, पृ० ५६८-५७१।

वहां [इस सम्बन्ध में याज्ञिकों का] कथन है कि 'ऋतु प्रैष [= ऋतुयजन के लिए मैत्रावरुण द्वारा पठित] मन्त्रों के द्वारा [होता आदि के प्रति] प्रैष [= निर्देश] नहीं करना चाहिए और न तो ऋतुप्रैष के द्वारा [होता आदि द्वारा] वषट्कार ही करना चाहिए [अर्थात् याज्यात्वेन पाठ न करे]। वस्तुतः ऋतुप्रैष वाणी [रूप] हैं, और छठें दिन वाणी समाप्त हो जाती है [अतः वाणी की समाप्ति के बाद मन्त्र प्रयोग युक्तियुक्त नहीं है]।

तेषामेव मतमाश्रित्य विधिवादिना पक्षे दोषं दर्शयति—

**यदृतुप्रैषैः प्रेष्येयुर्यदृतुप्रैषैर्वषट्कुर्युर्वाचमेव तदाप्तां श्रान्तामृक्णवाहीं वहराविणीमृच्छेयुः ॥ इति।**

ये ऋतुप्रैषास्तत्पूर्वको वषट्कारश्चानुष्ठीयेरन्, तदानीम् 'आप्तां' समाप्तां वाचम् ऋच्छेयुः। कीदृशीं वाचम्, 'ऋक्णवाहीं', 'वह' बलीवर्दस्य लाङ्गलादिवहनप्रदेशः, 'वृक्ण' भग्न। वृजो भङ्ग इति धातुः। वृक्णो भग्नो वहो वहनप्रदेशो यस्या वाचः, सा 'ऋक्णवाही' श्रान्तत्वाद् यज्ञभारं वोढुमशक्तेत्यर्थः। 'वहराविणीम्' अयज्ञवहनेन निःसृतो रावो रोदनरूपो ध्वनिर्यस्याः, सा 'वहराविणी' तादृशीम् उपद्रवद्वययुक्तां कृत्वा एव विनाशयेयुः[२] ॥

[विधिवादियों के पक्ष में दोष यह है कि] जो ऋतुप्रैष के द्वारा प्रैष करते हैं और जो ऋतुप्रैष के द्वारा वषट्कार करते हैं तो वे [अभिभूत] वाणी को ही समाप्त करते हैं श्रान्त करते हैं, [अर्थात् वह वाणी यज्ञरूपी भार को ढोने में असमर्थ हो जाती है] उसे कन्धा कटे वाला कर देते हैं और [असमर्थता वश रुदन के कारण] जुए में जुते हुए ही आर्तनाद करने वाली करते हैं तथा [दो उपद्रवों से युक्त करके उस वाणी का अन्ततः] विनाश करते हैं।

एवमनुष्ठानपक्षे बाधमुक्त्वा निषेधपक्षे व्यवस्थिते सति विधिवादी स्वाभिप्रेतमनुष्ठानं हृदि निधाय निषेधपक्षे बाधमुपन्यस्यति—

**यद्वैनैर्न प्रेष्येयुर्यद्वैनैर्न वषट्कुर्युरच्युताद् यज्ञस्य च्यवेरन् यज्ञात् प्राणात् प्रजापतेः पशुभ्यो जिह्मा ईयुः ॥ इति।**

---

१ अत्र सम्प्रसारणं छान्दसम्।

२ 'यद् = यदि, आप्तामनुच्चारणेनाभिभूताम्। श्रान्ता = श्रमयोगिनीम्। ऋक्णवहाम् = वहः स्कन्धः। वृश्चेः क्तः, वृक्णः।

बलात्संछान्दसा दीर्घे छिन्नस्कन्धामिव सतीम्।

वहराविणी = वहनं वहनेन, भावे घञ्, (अ) वृद्धिः, राविणी आर्तशब्दयुक्ता। ऋच्छेयुः = प्राप्नुयुः'—इति षड्गुरुशिष्यः।

'यद्' यदि वा 'एमि' मन्त्रैर्न प्रेष्येयु, यदि वा एभिर्याज्यामन्त्रैर्न वषटकुर्यु तदानीं मृत्विजो यज्ञस्य 'अच्युतात्' अविनश्वात् प्रयोगात् 'च्यवेरन्' विनश्येयु, यज्ञप्रयोग साङ्गो न भवेदित्यर्थं । किंचैतस्माद् यज्ञात् स्वकीयप्राणात् प्रजापते' स्वकीययजमानाद् गवादि-पशुभ्यश्च 'जिह्मा ईयु' ऋत्विज सर्वेऽपि कुटिला भूत्वा गच्छेयु' यज्ञप्राणयजमानपशुभ्यो भ्रष्टा भवेयुरित्यर्थं ॥

[निषेधपक्ष में बाधा यह है कि] यदि वे इन [ऋतुप्रैष मन्त्रों] से प्रैष नहीं करते, अथवा, यदि वे इन [याज्यामन्त्रों] से वषट्कार नहीं करते तो वे [ऋत्विज] नष्ट न हुए यज्ञ प्रयोग से च्युत हो जाते हैं। [अर्थात् साङ्ग यज्ञ-प्रयोग नहीं करते हैं], और वे यज्ञ से स्वकीय प्राणों से, प्रजापति से [स्वकीय यजमान से] और गौ आदि पशुओं से [च्युत हो जाते हैं], और वे सभी ऋत्विज से टेढ़े होकर चलते हैं [अर्थात् यज्ञ, प्राण, यजमान और पशुओं से भ्रष्ट हो जाते हैं]।

इत्थं विधिनिषेधपक्षयोरुभयोरपि बाधमुक्त्वा प्रकारान्तरेण अनुष्ठानं सिद्धान्तयति—

**तस्मादृग्मेभ्य एवाधि प्रेषितव्यमृग्मेभ्योऽधि वषट्कृत्य, तन्न वाचमाप्ना श्रान्तामृवणवहीं वहराविणीमृच्छन्ति, नाच्युताद् यज्ञस्य च्यवन्ते, न यज्ञात् प्राणात् प्रजापते. पशुभ्यो जिह्मा यन्ति ॥ ९ ॥** इति ।

यस्मादनुष्ठानपक्षे श्रान्तामित्याद्युक्तदोष, परित्यागपक्षे तु अच्युताद् इत्याद्युक्तदोष, 'तस्माद्' दोषद्वयपरिहाराय प्रकारान्तरेणानुष्ठेयम्। प्रकृतौ हि मैत्रावरुण त त प्रैषमन्त्र पठित्वा, होतर्यजेत्यादिना प्रेष्यति, होत्रादयश्च तत ऊर्ध्वं याज्या प्रैषरूपामेव पठित्वा, तदन्ते वौषडिति वषट्कुर्वन्ति, अत्र तु न तथा कर्तव्यम्। किं तर्हि ? ऋग्मेभ्य' एव 'अधि' ऋक्शिरस्केभ्यो होत्रादिविषयप्रैषेभ्य एवोर्ध्वं मैत्रावरुणो होतर्यजेत्यादिना प्रेष्यत्, होत्रादयश्च तथैव ऋग्मेभ्योऽधि वषट्कृत्य 'तुभ्य हिन्वान' इत्याद्यृक्शिरस्कं प्रैषं यजेयु। तथा सति प्रकृतिवदनुष्ठानाभावाद् वाचमाप्नामित्यादिरनुष्ठानपक्षे प्रोक्तो दोषो न भवति। अनुष्ठानपरित्यागस्याप्यभावात् प्रतिषेधपक्षे प्रोक्तोऽच्युतादित्यादिदोषोऽपि न भविष्यति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम-पञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) चतुर्थं खण्ड ॥४॥ (९) [१६२]

---

१ (i) यद् = यदि, उ = खलु यज्ञात् = यजे कर्मणि नङ्, यष्टव्यात् पूज्याद् अच्युताद् निश्चलात्। प्राणाद् यज्ञस्य सम्बन्धित ऋत्विज च्यवेरन्। प्रजापते सम्बन्धिभ्य पशुभ्यश्च जिह्मा कुटिलगतय' ईयु गमिता स्यु।' इति षड्गुरुशिष्य। (ii) 'अच्यु-ताद् यज्ञस्य प्रयोगात् प्रच्यवेरन् ऋत्विज, तथा च यज्ञात् प्राणाच्च। किञ्च प्रजापते यजमानात् पशुभ्यश्च जिह्मा कुटिला वक्रा ईयु। अनवधृतविशेषत्वात् सन्निधानात् सामर्थ्याच्च प्राणा ईयु—इति द्रष्टव्यम्'—इति गोविन्दस्वामी।

[अत: प्रकारान्तर से सिद्धान्त पक्ष यह है कि] [क्योंकि अनुष्ठान पक्ष में श्रान्तत्वादि दोष है और परित्याग पक्ष में यज्ञादि से प्रच्युति दोष है] इसलिए [जैसा कि मैत्रावरुण उन उन प्रैषमन्त्र को पढ़कर 'होतर्यज' आदि के द्वारा प्रैष करता है और होता भी उसके बाद प्रैषरूप में ही याज्या का पाठ करके अन्त में 'वौषट्' कहता है, वैसा यहां न करके होता आदि विषयक प्रैष के बाद मैत्रावरुण को] एक ऋक् से पुरस्कृत ['होतर्यज' आदि] के द्वारा प्रैष करना चाहिए, [और होता आदि को उसी प्रकार 'तुभ्यं हिन्वान' इत्यादि] ऋक्-शिरस्क-प्रैष के बाद ही वषट्कार करना चाहिए।[1] इस [प्रकृतवत् अनुष्ठान के अभाव] से [अनुष्ठान पक्ष में कहे गये दोष नहीं होते] ये वाणी को समाप्त नहीं करते हैं, क्लान्त नहीं करते हैं, भग्न-स्कन्ध युक्त नहीं करते हैं, जुए में जुने हुए आर्तध्वनि युक्त नहीं करते हैं और न तो विनष्ट ही करते हैं। इस प्रकार न तो ये नष्ट न हुए यज्ञ से च्युत ही होते हैं तथा न तो वे यज्ञ से, प्राणों से, प्रजापति से और [गौ आदि] पशुओं से ही च्युत होते हैं। [अत: वे सभी ऋत्विजों से] कुटिल होकर नहीं चलते हैं।

॥ इस प्रकार बाइसवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

अथ सवनद्वये काश्चिद्धविर्विशेषान् विधत्ते—

**पारुच्छेपीरुपदधाति पूर्वयोः सवनयोः पुरस्तात् प्रस्थितयाज्यानां रोहितं वै नामैतच्छन्दो यत्पारुच्छेपमेतेन वा इन्द्रः सप्त स्वर्गांल्लोकानरोहत् ॥** इति।

प्रातःसवने माध्यंदिनसवने च याः प्रस्थितयाज्याः चोदकेन प्रकृतितः प्राप्ताः तासां पुरस्तात् 'पारुच्छेपी:' परुच्छेपाख्येन महर्षिणा[2] दृष्टा ऋच उपदध्युः—एकैका पारुच्छेपी

1. (i) तस्मादेव सतारम्यं। अधि=उपरि। ऋग्मेभ्यः ऋचो मतुपि तलोप। भिसो भ्यस्।

ऋग्मभि: प्रेषणं कुर्युः प्रैषयाग च ऋत्विज:।

सूत्र्यते हि—'उपरिष्टात् त्वृच ऋतुयाजानाम्। प्रैषमृतेऽसौयजमृचं चानवानमुक्त्वा ऋगन्तैरसौ यजेति प्रेष्यत्। एवमेव यजन्ति। तुभ्य हिन्वानो वसिष्ट गा अप इति द्वादशे'ति (आश्व० श्रौ० ८.१.५–८)–इति षड्गुरुशिष्य:। अत्र 'गा अप इति'—इत्येव मुद्रितपाठ:, एवं 'द्वादश' इति तु सूत्रे न दृश्यते। (ii) द्र० आश्व० श्रौ० ८.१.५–८, 'ऋतुप्रैषान् होतर्यजेत्यादिशब्दरहितानुक्त्वा तंऋचं सधाय ऋगन्ते होतर्यजेत्यादिशब्दान् सधाय तंमैत्रावरुण: प्रेष्यति'–इति तत्र वृत्तिः नारायणीया। एवं प्रैषरूपं तु=होता यक्षत् + प्रैष + ऋच् + होतर्यज–इति, याज्यारूपं तु=ये यजामहे + याज्या + ऋक् + वौषट्–इति विवेक:।

2. परुच्छेप ऋषि:, पर्ववच्छेप: परुषिपरुषि शेपोऽस्यति वा इति निरु० १०, ४५। 'परुच्छेपो दैवोदासि'–इति ऋक्सर्वा०।

मृचमुक्त्वा पश्चादेकैका प्रस्थितयाज्या पठेत् । 'वृषन्निन्द्र वृषपाणास इन्दव '[1] इत्याद्या 'पिबा सोममिन्द्र सुवानमद्रिभिः '[2]–इत्याद्याश्च पारुच्छेप्य ऋचः[3] सूत्रकारेण विस्पष्टमुदाहृता[4]। पारुच्छेपीष्वृक्षु यच्छन्दोऽस्ति, तदिदं रोहितनामकम् । कथमिति ? तदुच्यते,—'एतेन' पारुच्छेपीयेन च्छन्दसा पुरा कदाचिदिन्द्र 'सप्त स्वर्गाल्लोकान् अरोहत्' उत्तमाधमभोगावस्थानविशेषाः सप्तसंख्याकाः स्वर्गाः । रोहत्यनेन च्छन्दसेति 'रोहित' नाम सम्पन्नम् ॥

१० [xxii ५] प्रथम दो [प्रातः और माध्यन्दिन] सवनों में [प्रक्रांत. प्राप्त] प्रस्थित याज्या के पहले परुच्छेप ऋषि द्वारा दृष्ट ऋचाओं को रखता है। [अर्थात् एक-एक परुच्छेप ऋषि द्वारा दृष्ट ऋचा को बोलकर एक-एक प्रस्थित याज्या का पाठ करना चाहिए] । इन परुच्छेप ऋषि द्वारा दृष्ट ऋचाओं का रोहित [=चढ़ता] नामक छन्द है, क्योंकि इन्हीं [छन्दों] के द्वारा इन्द्र ने [पहले] सात स्वर्ग लोकों पर आरोहण किया।

वेदनं प्रशंसति—

**रोहति सप्त स्वर्गांल्लोकान् य एवं वेद ॥** इति ।

जो इस प्रकार जानता है वह सात स्वर्ग लोकों पर आरोहण करता है।

तस्मिंश्छन्दसि चोद्यमुद्भावयति—

**तदाहुर्यत् पञ्चपदा एव पञ्चमस्याह्नो रूपं, षट्पदा, षष्ठस्याथ कस्मात् सप्तपदाः षष्ठेऽहञ्छस्यन्त इति ॥** इति ।

संख्यासाम्यात् पञ्चपदोपेता ऋचः पञ्चमेऽहनि युक्ताः, षट्पदोपेताः षष्ठेऽहनि, पारुच्छेप्यस्तु सप्तपदोपेताः, अतः षष्ठेऽहनि तच्छंसनमयुक्तमिति चोद्यवादिनामभिप्रायः ॥

उन [छन्दों] के विषय में याज्ञिकों का कथन है कि जब पाँच पादों की ऋचा ही पञ्चम दिन का रूप है और छः पादों की ऋचा छठवें दिन का, तो [परुच्छेप ऋषि द्वारा दृष्ट] सात पादों की ऋचा का छठवें दिन शंसन क्यों किया जाता है?

तत्रोत्तरमाह—

**षड्भिरेव पदैः षष्ठमहराप्नुवन्त्यपच्छिद्यैवैतदहर्यत्सप्तमं, तदेव सप्तमेन पदेनाभ्यारम्भ्यवसन्ति, वाचमेव तत्पुनरुपयन्ति संतत्यै ॥** इति ।

---

१　ऋ० १ १३९ ६ ।　　२　ऋ० १ १३० २ ।

३　ता' सर्वा ऋ० १ १२७-१३९ सूक्तगता' द्रष्टव्या ।

४. 'पञ्चस्य प्रातःसवने प्रस्थितयाज्यानां पुरस्तात्'–इत्युपक्रम्य 'वृषन्निन्द्र वृषपाणास इन्दव ' 'पिबा सोममिन्द्र सुवानमद्रिभिः' पारुच्छेप्य '–इति आश्व० श्रौ० ८ १ १–११ ।

एकैकस्यामृचि य एते प्रथममाविन. षट्पादास्ते सर्वेदा षष्ठमहःप्राप्नुवन्ति, तदानी-मुपरितम यत्सप्तमह, तत् 'अपच्छिद्यैव' पृथक्त्वेन तस्य विच्छेद कृत्वैव प्राप्नोति[1], तस्मात् विच्छिन्न सप्तममहस्तेन सप्तमेन पादेनाऽभिमुखेनोपक्रम्य वदन्ति । तथा सति विच्छिन्ना वाचमेव पुनरपि प्राप्नुवन्ति । तच्च मध्यमयास्त्र्यहयोः 'सतत्यै' सपद्यते ॥

[उत्तर यह है कि—] [एक ऋचा के प्रथम] छ. पादों के द्वारा जब षष्ठ अहः को प्राप्त करते हैं तब बाद का जो सप्तम-अहः है उसका पृथक् रूप से विच्छेद करके ही प्राप्त करते हैं। इसलिए वे विच्छिन्न-सप्तम-अहः का ही सप्तम पाद से अभिमुखेन उपक्रम करके वाद करते हैं। वस्तुत. इस प्रकार वे वाणी को ही पुनः प्राप्त करते हैं जो मध्यम त्र्यह की निरन्तरता के लिए ही होता है।

वेदनपूर्वकमनुष्ठान प्रशसति—

संततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति ॥ १० ॥ इति ।

पूर्ववद् व्याख्येयम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवाय 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम-पञ्चिकाया द्वितीयाध्याय (द्वाविंशाध्याये) पञ्चम खण्ड ॥ ५ ॥ (१०) [१६३]

जो इस प्रकार निरन्तरता को जानते हुए अनुष्ठान करते हैं वे परस्पर सम्बन्धित, अतएव विच्छेदरहित त्र्यह के द्वारा अनुष्ठान करते हैं।

॥ इस प्रकार बाइसवें अध्याय के पांचवें खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्ड.

पारुच्छेपीय छन्द उपाख्यानेन प्रशसति—

देवासुरा वा एषु लोकेषु समयतन्त, ते वै देवाः षष्ठेनैवाह्नैभ्यो लोकेभ्योऽसुरान् प्राणुदन्त; तेषां यान्यन्तर्हस्तीनानि वसून्यासंस्तान्यादाय समुद्रं प्रौप्यन्त; त एतेनैव च्छन्दसाऽनुहायान्तर्हस्तीनानि वसून्याददत तद् यदेतत् पदं पुनःपदं स एवाङ्कुश आसञ्जनाय ॥ इति ।

देवाश्चासुराश्च लोकविषये यदा 'समयतन्त' सङ्ग्राममकुर्वत, तदानीं 'ते' देवा षष्ठ महरनुष्ठाय तत्सामर्थ्येनासुरांल्लोकेभ्यो निःसारितवन्तः । तदानीं 'तेषाम्' असुराणा सम्बन्धीनि 'वसूनि' धनानि बहून्यासन् । कीदृशानि ? 'अन्तर्हस्तीनानि' हस्तिना गजानामुपरि भारवहनाय स्थापितानि, यद्वा, स्वकीयस्य हस्तस्यान्तर्मध्ये गोप्यत्वेन स्थापितानि 'अन्तर्हस्तीनानि', तानि सर्वाण्यादायासुरा. 'समुद्रं' 'प्रौप्यन्त' समुद्रं गतवन्तिरसुरैः तस्मिन्

1. 'अपच्छिद्य क्त्वो ल्यप् । अपच्छिन्न गलितम् । इव=एव । एतत् सप्तममहः ।' इति षड्गुरुशिष्य. ।

समुद्रे तानि धनानि प्रक्षिप्तानि। ततो 'ते' देवा एतत्पारुच्छेपीय छन्दोऽनुष्ठाय तस्मात् सामर्थ्यात् 'अनुहाय' पृष्ठतो गत्वा हस्तिनामुपरि स्थितानि तदीयहस्तेऽवस्थितानि वा सर्वाणि धनानि 'आददत' स्वीकृतवन्त। समुद्रमध्यस्थिताना धनानामाकर्षण कि साधनमिति ? *तदुच्यते— तत्' तत्र पारुच्छेपीयास्वृक्षु यदेतत्पद पाठोऽस्ति, कीदृशम् ? 'पुन पद'* पत्सु पादेषु समाप्तेषु पुन पश्चादुच्चार्यमाण [1] 'सुमृळीको न आगहि'—इत्येवविध सप्तम पाद।[2] स एव धनानाम् 'आसञ्जनाय' आसक्तानि कृत्वा समाकर्षणाय अङ्कुशोऽभूत्। *यथा लोकेऽङ्कुशेनाऽऽकृष्यते*, तद्वत्सप्तमेन पादेनासुरधनान्याकृष्टानि ॥

v ११ [xxii. ६] इन [तीनों] लोकों के विषय में जब देव और असुरों ने परस्पर युद्ध किया तब उन देवों ने षष्ठ अह का ही अनुष्ठान करके [उसकी सामर्थ्य से] असुरों को इन लोकों से निकाल दिया।[3] उन [असुरों] के जो कुछ भी हाथियों के ऊपर लदे हुए [अथवा हाथ में रखकर छिपाए हुए] धन थे इनको लेकर [स्वयं ही असुरों ने] समुद्र में फेंक दिया। तब देवों ने इन [परुच्छेप ऋषि द्वारा दृष्ट] छन्दों से ही [अनुष्ठान करके उसकी सामर्थ्य से] उनके पीछे अनुगमन करके हाथियों के ऊपर स्थित अथवा उनके हाथ में अवस्थित [समुद्रस्थ] धन को ले लिया। उन [परुच्छेप ऋषि द्वारा दृष्ट ऋचाओं] में जो यह पाद है और जो [छ पादों की समाप्ति पर] पुन उच्चार्यमाण ['सुमृळीको न आगहि' आदि जो सातवां] पाद है वही धनों को आकर्षित करने का अङ्कुश [मच्छली आदि फँसाने की कटिया] है।

वेदन प्रशसति—

**आ द्विषतो वसु दत्ते निरेनमेभ्य सर्वेभ्यो लोकेभ्यो नुदते, य एव वेद ॥ ११ ॥** इति।

वेदिता 'द्विषत' शत्रो सम्बन्धि वसु' धन सर्वमादत्ते। एन च 'द्विषन्त' शत्रु लोकेभ्यो 'निर्णुदते' नि सारयति[4] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) षष्ठ खण्ड ॥ ६ ॥ (११) [१६४]

---

१ अभ्यासे भूयासमर्थं मन्यन्ते, यथाहो दर्शनीयाहो दर्शनीयेति, तत् परुच्छेपस्य शीलम्' इति निरु० १० ४ ५।

२ 'वृषन्निन्द्र सुमृळीको न आ गहि'—इति ऋ० १ १३९ ६। इह 'आ-गहि'—पदाभ्यास।

३ द्र० इत पूर्वम्, १३८ पृ०।

४ द्र० इत पूर्वम्, पृ० ५९३।

जो इस प्रकार जानता है वह शत्रु सम्बन्धी सभी धन को ले लेता है और वह उस शत्रु को इन सभी लोकों से निकाल देता है ।

॥ इस प्रकार बाइसवें अध्याय के षष्ठ खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्ड

इदानीं षष्ठमहर्विधत्ते—

**द्यौर्वै देवता षष्ठमहर्वहति त्रयस्त्रिंशः स्तोमो रैवतं सामातिच्छन्दाश्छन्दो यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद ॥** इति ।

पूर्वत्र वागेकं गौरेकं द्यौरेकमिति यत्तृतीयं देवतास्वरूपमुक्तं[1] सेयं देवता षष्ठमहर्निर्वहति । तथा स्तोमानां मध्ये त्रयस्त्रिंशः स्तोमो निर्वाहकः । तस्य स्तोमस्य स्वरूपं छन्दोगैरेवमाम्नायते—'एकादशभ्यो हिं करोति स तिसृभिः स सप्तभिः स एकया, एकादशभ्यो हिं करोति स एकया स तिसृभिः स सप्तभिरेकादशभ्यो हिं करोति स सप्तभिः स एकया स तिसृभिरस्तो वै त्रयस्त्रिंशः'[2] इति । अस्यायमर्थः—एक एव तृचस्त्रिभिः पर्यायैरावर्तनीयः; तत्र प्रथमे पर्याये प्रथमायास्त्रिरभ्यासः, मध्यमायाः सप्तकृत्वोऽभ्यासः, उत्तमायाः सकृत्पाठः । द्वितीयपर्याये प्रथमायाः सकृत्पाठः, मध्यमायास्त्रिरभ्यासः, उत्तमायाः सप्तकृत्वोऽभ्यासः । तृतीयपर्याये प्रथमायाः सप्तकृत्वोऽभ्यासः, मध्यमायाः सकृत्पाठः, उत्तमायास्त्रिरभ्यासः । एवं 'त्रयस्त्रिंशस्तोम' निष्पत्तिरिति । 'रेवतीर्नः सधमादे' इत्यस्यामृच्युत्पन्नं साम 'रैवतम्'[3] । गायत्र्यादिभ्यश्छन्दोभ्योऽक्षरैरधिकत्वाद् 'अतिच्छन्दाः' इति कस्यचिच्छन्दसो नामधेयम् । अन्यत् पूर्ववद् व्याख्येयम् ॥

४.१२ [xxii.७] द्यौ [द्वादशाहगत नवरात्र के] षष्ठ दिन के निर्वाहक देवता हैं; [स्तोमों के मध्य] त्रयस्त्रिंश स्तोम, रैवत साम और [छन्दों के मध्य] अतिच्छन्द नामक छन्द [निर्वाहक] हैं, जो इस प्रकार जानता है वह इससे देवता, स्तोम, साम और छन्द का अनतिक्रमण कर समृद्ध होता है ।

अत्र शस्त्रगतमन्त्रलिङ्गानि दर्शयति—

**यद्वै समानोदर्कं तत्षष्ठस्याह्नो रूपं; यद्ध्येव तृतीयमहस्तदेतत्पुनर्यत्षष्ठं; यदश्ववद्यदन्तवद् यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रतवद् यत्पर्यस्तवद् यत्त्रिवद्यदन्तरूपं, यदुत्तमे पदे देवता निरुच्यते, यदसौ लोकोऽभ्युदितः ॥** इति ।

---

१. द्र० इतः पूर्वम् पृ० ७२७ ।

२. ता० ब्रा० ३.३–७ ख० । त्रयस्त्रिंशस्तोमस्य विष्टुतयः पञ्च; तत्राद्या [illegible], सैवेयम् ।

३. द्र० इतः पूर्वम्, पृ० ६२५, टि० २ ।

'समानोदर्क' तुल्यसमाप्तिक यदस्ति, तत्षष्ठस्याह्नो रूपम्। 'यद्वि एव' यदप्य यत् पूर्वत्र प्रथमे त्र्यहे तृतीयमहरस्ति तदेतत्पुनरत्रानुसधेयम्—यदिदानी पष्ठमह प्रस्तूयते, तत् तदेव भवति पूर्वस्मिस्तृतीयेऽहनि, यद्यल्लिङ्गमुक्त, तत्षष्ठेऽपि द्रष्टव्यमित्यर्थ । यदश्ववदित्यादिना यदसौ लोकोऽभ्युदित इत्यन्तेन तान्येतानि लिङ्गानि दर्शितानि ॥[1]

जिस [मन्त्र] में समान समाप्ति हैं, वह षष्ठ दिन का रूप है, जो [प्रथम त्र्यह के] तृतीय दिन का रूप कहा गया है वह पुन इस [मध्यम त्र्यह के तृतीय दिन अर्थात्] षष्ठ दिन का निरूपक है। जो [ऋचा] 'अश्व' शब्द से युक्त और 'अन्त' शब्द से युक्त हो, जिसमें पुनरावृत्ति [=पठित का ही पुन पाठ] हो और जिसमें स्वरविशेष के द्वारा बार-बार अक्षरों की आवृत्ति हो, जो सहवास से युक्त हो, जो 'पर्यास' शब्द से युक्त हो, जो 'त्रि' शब्द से युक्त एव अन्त शब्द से युक्त हो और जिनके अन्तिम पाद में देवता का *अभिधान हो तथा जिस [ऋचा] में यह [स्वर्ग] लोक उक्त हो—[वे सब षष्ठ दिन के निरूपक हैं]।*

अथ विशेषलिङ्गानि दर्शयति—

**यत्पारुच्छेप, यत्सप्तपद, यन्नाराशस, यन्नाभानेदिष्ठ, यद्रैवत, यदतिच्छन्दा, यत्कृत, यत्तृतीयस्याह्नो रूपमेतानि वै षष्ठस्याह्नो रूपाणि ॥** इति।

परुच्छेपेन दृष्ट 'पारुच्छेपम्'। सप्तभि पादैरुपेत 'सप्तपदम्'। नराशसाख्यमन्त्रसम्बन्धि 'नाराशसम्'। नाभानेदिष्ठेन दृष्ट 'नाभानेदिष्ठम्'। रैवतसामसम्बन्धि 'रैवतम्'। सप्तस्यश्छन्दोभ्योऽधिकाक्षरत्वाद् 'अतिच्छन्दा'। भूतार्थवाचिप्रत्यययुक्त धातुमात्र 'कृत' तदप्युक्तम् अनुक्त वा तृतीयस्याह्नो निरूपकम्। एतानि सर्वाणि षष्ठस्याह्नो निरूपकाणि वेदितव्यानि ॥

जो परुच्छेप ऋषि द्वारा दृष्ट है, जो सात पादों से युक्त है, जो नाराशस अर्थात् नराशस नामक मन्त्र सम्बन्धी है, जो नाभानेदिष्ठ ऋषि द्वारा दृष्ट है, जो रैवत-साम सम्बन्धी है, जो [सात छन्दों के अक्षरों से अधिक अक्षरों वाले] अतिच्छन्द नामक छन्द से युक्त है, जो भूतकालिक प्रत्यय या धातु से युक्त है और [कुछ कहा गया हो या न कहा गया *हो वह सभी] जो तृतीय दिन के रूप हैं—ये सभी षष्ठ दिन के निरूपक हैं।*

अथाज्यशस्त्र विधत्ते—

**'अय जायत मनुषो धरीमणीति'[2] षष्ठस्याह्न आज्य भवति, पारुच्छेपमतिच्छन्दा सप्तपद षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति।

परुच्छेपेन दृष्टत्वमेक लिङ्गम्, अतिच्छन्दस्त्व द्वितीय, सप्तपादोपेतत्व तृतीयम्। एतेन लिङ्गत्रयेण षष्ठस्याह्नो निरूपकम् ॥

---

१. द्र० इत पूर्वम्, पृ० ७१३। २ ऋ० १ १२८।

'अय जायत' आदि ऋचा षष्ठ अह की आज्यशस्त्र होती है।[1] परुच्छेप ऋषि द्वारा दृष्ट, अतिच्छन्द नामक छन्द से युक्त एवं सात पादों से युक्त [यह ऋचा] षष्ठ दिन में षष्ठ दिन का रूप है।

अथ प्रउगशस्त्रं विधत्ते—

स्तीर्णं बर्हिरुप नो याहि वीतय आ वां रथो नियुत्वान्वक्षदवसे सुषुमा यातमद्रिभिर्युवां स्तोमेभिर्देवयन्तो अश्विनाऽवर्मह इन्द्र वृषन्निन्द्रास्तु श्रौषडो षू णो अग्ने शृणुहि त्वमीळितो ये देवासो दिव्येकादश स्थेयमददाद्रभसमृणच्युतमिति प्रउगं पारुच्छेपमतिच्छन्दाः सप्तपदं षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।

'स्तीर्णं बर्हि'[2]—इत्याद्यस्तृचः 'आ वां रथ'[3] इति द्वितीयः 'सुषुमा यातमद्रि'[4] तृतीयो 'युवां स्तोमेभिरिति'[5] चतुर्थो 'अवर्मह'[6] इति द्वे ऋचौ 'वृषन्निन्द्र'[7] इत्येका उभाभ्यां पञ्चमस्तृचः। 'अस्तु श्रौषट्'[8] इत्येका। 'ओ षू णः'[9] इत्येका। 'ये देवासः'[10] इत्येका। एतत्त्रितयं षष्ठः। 'इयमददात्'[11] इति सप्तमः। इत्येतत् सर्वं प्रउगशस्त्रं कुर्यात्। लिङ्गानि पूर्ववत् ॥

'स्तीर्णं बर्हिरुप' (हे वायु, हमारे बिछे हुए कुशों की ओर आनन्द के लिए आओ), 'आ वां रथ' (हे वायु नियुत नामक घोड़ों से युक्त रथ तुम्हारे साथ-साथ इन्द्र को भी हमारी रक्षा के लिए लावे), 'सुषुमायातम' (हे मित्र एवं वरुण! हम पत्थरों से सोम कूटते हैं अतः तुम हमारे यज्ञ में आओ), 'युवां स्तोमेभि' (हे अश्विनो, स्तुतियों से तुम्हें अनुकूल करने की इच्छा वाले यजमान), 'अवर्मह' (हे इन्द्र तुम महान् मेघ का विदारण करो), 'वृषन्निन्द्र' (हे कामवर्षक इन्द्र), 'अस्तु श्रौषट्' (ऐसा होवे), 'ओ षू णो अग्ने' (हे अग्नि तुम हमारे द्वारा स्तुत होकर हमारा आह्वान सुनो), 'ये देवासो' (स्वर्ग में जो ग्यारह देव हैं) और 'इयमददाद्रभस' (इन सरस्वती ने शीघ्रगामी एवं ऋण से छुटकारा दिलाने वाले को दिया)—ये सभी प्रउगशस्त्र की ऋचाएँ हैं, परुच्छेप ऋषि द्वारा दृष्ट, अतिच्छन्द नामक छन्द से युक्त एवं सात पादों से युक्त [ऋचाएँ] छठवें दिन में छठवें दिन का रूप है।

---

१ 'षष्ठर्चस्य परस्तात् स्यात् तूष्णींशंसो निविद्धया।'—इति षड्गुरुशिष्यः।
२ ऋ० १।१३५।१-३। ३ ऋ० १।१३५।४-६। ४ ऋ० १।१३७।१-३।
५ ऋ० १।१३९।३-५। ६ ऋ० १।१३३।६-७। ७ ऋ० १।१३९.६।
८ ऋ० १।१३९।१। ९ ऋ० १।१३९।७। १० ऋ० १।१३९।११।
११ ऋ० ६।६१।१-३।

शस्त्रान्तरस्य प्रतिपद तृच विधत्ते—

**'स पूर्व्यो महानामिति,[1] मरुत्वतीयस्य प्रतिपदन्तो वै महदन्त षष्ठमह. षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।**

अत्र महानामिति महच्छब्द पादस्यान्ते दृश्यते, षष्ठ चाह पृष्ठ्यास्यस्य षडहस्यान्तो भवति, तस्मादन्तत्वलिङ्गेन षष्ठेऽहनि योग्यम्। यद्वा महतोऽप्यधिकस्यानस्याभावात् महदन्त इत्यन्तवत्त्व व्याख्येयम् ॥

'स पूर्व्यो महानाम' (वह महान् में प्रथम) आदि मरुत्वतीयशस्त्र की प्रतिपद् है [यद्यपि तृतीय दिन का लक्षक 'अन्त' शब्द इसमें नहीं है तथापि 'महत्' शब्द है और [इच्छित वस्तु में महान वस्तु की ही कामना होने से अथवा महान से अधिक अन्य का अभाव होने से] 'महत्' ही अन्त है तथा छठवां दिन भी [पृष्ठ्यषडह् के अन्त में होता है। अत ] छठे दिन में [यह अन्त साम्य के कारण] छठवें दिन का रूप है।

तृतीयनाम्ना सह समानशस्त्रकलृप्तियुक्त मन्त्रजात दर्शयति—

**'अय इन्द्रस्य सोमा[2]' 'इन्द्र नेदीय एदिहि[3]' 'प्र नून 'ब्रह्मणस्पतिरग्निर्नेता[4]' 'त्व सोम क्रतुभि[5]' 'पिन्वन्त्यपो[6]' 'नकि सुदासो रथमिति[7]' तृतीयेनाह्ना समान आतान षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।**

'अय इन्द्रस्य सोमा', 'इन्द्र नेदीय', 'प्र नून', 'अग्निर्नेता', 'त्व सोम', 'पिन्वन्त्यपो' और 'नकि सुदासो' आदि ऋचाएँ तृतीय दिन के समान क्रमागत षष्ठ दिन में षष्ठ दिन का रूप हैं।

परुच्छेपेन दृष्ट सूक्त दर्शयति—

**'य त्व रथमिन्द्र मेधसातय इति[8]' सूक्तं पारुच्छेपमतिच्छन्दा. सप्तपद षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।**

'य त्व रथम्' इत्यादि सूक्त परुच्छेप ऋषि द्वारा दृष्ट, अतिच्छन्द नामक छन्द में निबद्ध एव सात पादों से युक्त सूक्त छठवें दिन में छठवें दिन का रूप है।

तुल्यावसानत्वलिङ्गोपेत सूक्त दर्शयति—

**'स यो वृषा वृष्ण्येभि समोका इति[10]' सूक्त समानोदर्कं, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।**

---

१ ऋ० ८६३१।
२ ऋ० ८२।　३ ऋ० ८५३।　४ ऋ० १४०।
५ ऋ० ३२०।　६ ऋ० १९१।　७ ऋ० १६४।
८ ऋ० ७३२।　९ ऋ० ११२९।　१० ऋ० ११००।

'मरुत्वान्नो भवतु'-इत्यस्य चतुर्थपादस्य सर्वास्वृक्षु विद्यमानत्वात् समानोदर्कत्वम् ॥

'स यो वृषा' इत्यादि सूक्त [की सभी ऋचाओं में 'मरुत्वान्नो भवतु' आदि पद पुनरुक्त होने से] समान समाप्ति छठवें दिन में छठवें दिन का रूप है।

वृत्रखादं सूक्तान्तरं विधत्ते—

'इन्द्र मरुत्व इह पाहि सोममिति'[1] सूक्तं; तेभिः साकं पिबतु वृत्रखाद इत्यन्तो वै खादोऽन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।

अस्मिन् सूक्ते 'तेभिः साकम्'-इत्यादिस्तृतीयस्यामृचि तृतीयः पादः । तत्र वृत्रं खादति भक्षयतीति 'वृत्रखाद' तेन भक्षणेन वृत्रस्यावसानं मरणं सम्पद्यते । तस्मात् खादो वृत्रस्यान्तः । षष्ठस्यान्त्यत्वं पूर्वमेवोक्तम्, अतोऽन्तवत्त्वलिङ्गम् । यद्यपीदं सूक्तं न भवति[2], तथापि सूक्तस्थानापन्नत्वात् सूक्तमित्युक्तम् ॥

'इन्द्र मरुत्व इह' आदि सूक्त में 'तेभिः साकं पिबतु वृत्रखाद' आदि [तृतीय ऋचा के तृतीय पाद] में ['वृत्र का भक्षण करता है' यह वृत्रखाद शब्द वृत्र के अवसान का वाचक होने से] खादः अर्थात् भक्षण ही अन्त है और छठवां दिन पृष्ठ्यषडह के अन्त में होने से छठें दिन में छठे दिन का रूप है।

सूक्तगतं छन्दः प्रशंसति—

तद् त्रैष्टुभं, तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते ॥ इति ।
पूर्ववद् व्याख्येयम् ॥

वह त्रिष्टुप् छन्दस्क सूक्त है। प्रतिष्ठित पद [अर्थात् नियत अक्षर संख्या] से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत मरुत्वतीय शस्त्र] धारित होता है। अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

शस्त्रस्यान्तिमं तृचं विधत्ते—

'अयं ह येन वा इदमिति'[3] पर्यासः; स्वर्मरुत्वता जितमित्यन्तो वै जितमन्तः षष्ठमहः, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।

'स्वर्मरुत्वता जितम्'-इति द्वितीयः पादः तत्र भूतार्थवाचि-क्त-प्रत्ययान्तो जयतिधातुरेवं लिङ्गम्, किञ्च जयस्य युद्धावसानत्वाज्जितमिति शब्दोऽन्तप्रतिपादकः, तदेतदन्तवत्त्व-परं लिङ्गम् ॥

---

१. ऋ० ३.५१.७-९ ।

२. अस्ति दाशतय्यां तृतीयस्य चतुर्थे चर्षणीधृतमिति द्वादशर्चं मघोदयं सूक्तम्, तदीय तृतीयमृचमेवात्र ग्रहणमिष्टम् । तदेतत् 'षष्ठेऽहनि षष्ठस्य'—इति खण्डे (८.१) आश्वलायनेन स्पष्टीकृतम्—'इन्द्र मरुत्व इति तिस्र इति मरुत्वतीयम्'—इति ।

३. ऋ० ८.६५ ।

'अथ ह येन' इत्यादि तृच विशेष पर्यास [पूर्वोक्त ऋचाओं के अन्त में प्रक्षेपणीय] है। इसके 'स्वर्भरत्वता जितम्' आदि द्वितीय पाद में [भूतार्थ का वाचक 'जय' धातु का रूप है वस्तुत जय युद्ध के अवसान का सूचक होने से] 'जितम' ही अन्त है और छठवाँ दिन [पृष्ठ्यषडह के] अन्त में होने से छठें दिन में छठे दिन का रूप है।

तत्रावस्थितच्छन्द प्रसशाद्वारा निविद्धान विधत्ते—

**ता उ गायत्र्यो, गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिन वहन्ति, तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते, तस्माद् गायत्रीषु निविद दधाति ॥** इति।

पूर्ववद् व्याख्येयम् ॥

उस [सूक्त] की ऋचाएँ गायत्री छन्दस्क हैं और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं। जिस [छन्द] में निविद् [पद समूह] प्रक्षिप्त होते हैं, वही छन्द [सवन का] निर्वाहक होता है। इस निर्वाहकत्व के कारण गायत्री ऋचाओं में निविद् प्रक्षिप्त होते हैं।

रैवतसामसाध्यपृष्ठस्तोत्रस्याधारभूत स्तोत्रिय तृचमनुरूप तृच च विधत्ते—

**'रेवतीर्न सधमादे' रेवाँ इद्रेवत स्तोतेति रैवत पृष्ठ भवति, बार्हतेऽहनि षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति।

'रेवतीर्न सधमादे'[1] इति स्तोत्रियतृचो 'रेवान्' इत्यनुरूप[2]। रैवत साम बृहत्साम्न उत्पन्नम्[3], अहश्च युग्मत्वाद् बार्हतम्[4]। सोऽयं बृहत्सम्बन्धो भवति लिङ्गम् ॥

[निष्केवल्यशस्त्र]—'रेवतीर्न' इत्यादि स्तोत्रिय तृच और 'रेवाँ इद्रेवत' आदि अनुरूप तृच रैवत [साम] युक्त पृष्ठ [स्तोत्र] होता है जो बृहत् साम सम्बन्धी दिन [युग्म] षष्ठ दिन में षष्ठ दिन का रूप है।

अच्युतत्वलिङ्गोपेतामृच विधत्ते—

**'यद्वावानेति'[5] धाय्याऽच्युता ॥** इति।

'यद्वावान' इत्यादि धाय्या [प्रथम दिन विहित होने से] अच्युत है।

ता धाय्यामनु बृहत्साम्नो योनिभूत प्रगाथ विधत्ते—

**'त्वामिद्धि हवामह इति'[6] बृहतो योनिमनु निवर्तयति, बार्हत ह्येतद-हरायतनेन ॥** इति।

अह्नो बार्हतत्व पूर्वमेवोक्तम्, अतएव बृहत्सामसम्बन्धरूप लिङ्गम् ॥

१ ऋ० १ ३० १३-१५।

२ ऋ० ८ २ १३-१५।

३ द्र० इत पूर्वम्, पृ० ६८६।

४ द्र० इत पूर्वम्, ६८७ पृ० टि०।

५ ऋ० १० ७४ ६।

६ ऋ० ६.४६ १,२।

'त्वामिद्धि हवामहे' ( = हम तुम्हें बुलाते हैं) इत्यादि ऋचा में बृहत् साम [उत्पन्न है अतः] योनिभूत इस प्रगाथ का [पूर्वोक्त व्याख्या के] बाद में शंसन करता है [पुनः यह स्वरूप] स्थान के द्वारा यह दिन बृहत्साम सम्बन्धी है।

रैवतसामसम्बन्धिन सामप्रगाथं विधत्ते—

**'इन्द्रमिद्देवतातय इति'**[1] **सामप्रगाथो निनृत्तवान् षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति ।

अस्य प्रगाथस्य सर्वेष्वपि पादेषु 'इन्द्र'शब्दावृत्तेस्तालध्वनिसदृशत्वान्निनृत्तवल्लिङ्गम् ॥

'इन्द्रमिद्देवतातय' इत्यादि साम प्रगाथ है। [इसके सभी पादों में 'इन्द्र' शब्द की आवृत्ति होने से] ताल और ध्वनि की समानता युक्त यह षष्ठ दिन में षष्ठ दिन का रूप है।

अच्युतत्वलिङ्गकं सूक्तविशेषं विधत्ते—

**'त्यमू षु वाजिनं देवजूतमिति'**[2] **तार्क्ष्योऽच्युतः ॥ १२ ॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीय वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) सप्तमः खण्डः ॥ ७ ॥ (१२) [१६५]

'त्यमू षु' इत्यादि तार्क्ष्य देवताक सूक्त [प्रथम दिन विहित होने से] अच्युत है।

॥ इस प्रकार बाइसवें अध्याय के सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथ अष्टमः खण्डः

पारुच्छेपत्वादिलिङ्गत्रयोपेतं सूक्तं विधत्ते—

**'एन्द्र याह्युप नः परावत इति'**[3] **सूक्तं, पारुच्छेपमतिच्छन्दाः सप्तपदं, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति ।

१. १३ [xxii. ८] 'एन्द्र याह्युप' इत्यादि सूक्त परुच्छेप ऋषि द्वारा दृष्ट, अतिच्छन्द नामक छन्द में निबद्ध एवं सात पादों से युक्त षष्ठ दिन में षष्ठ दिन का रूप है।

तुल्यसमाप्तित्वलिङ्गोपेतं सूक्तं विधत्ते—

**'प्र घा न्वस्य महतो महानीति'**[4] **सूक्तं, समानोदर्कं, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति ।

---

१. ऋ० ८.३५,६ ।  २. ऋ० १० १७८.१ ।
३. ऋ० १.१३० ।  ४. ऋ० २.१५ ।

'सोमस्य ता मद इन्द्रश्चकार'-इत्यस्य चतुर्थपादस्य बहुष्वक्षु[1] विद्यमानत्वात् समानोदर्कत्वम् ॥

'प्र घा न्वस्य' इत्यादि सूक्त की [अनेक ऋचाओं में 'सोमस्य ता मद इन्द्रश्चकार' आदि पाद पुनरुक्त होने से] समान समाप्ति छठवें दिन में छठवें दिन का रूप है।

तिष्ठतिधातुरूपलिङ्गयुक्त सूक्त विधत्ते—

'अभूरेको रयिपते रयीणामिति'[2] सूक्त, रयमा तिष्ठ तुविनृम्ण भीममित्यन्तो वै स्थितमन्त षष्ठमह षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।

'अभूरेक' इत्यस्य सूक्तस्य पञ्चम्यामृचि रथमा तिष्ठेति द्वितीय पाद तत्र स्थित-शब्दार्थवाची तिष्ठतिधातुर्विद्यते, स च गतिनिवृत्तिरूपत्वादन्तो भवति षष्ठस्याह्नोऽन्तत्व पूर्वमुक्तम्, अतोऽन्तवत्त्व लिङ्गम् ॥

'अभूरेको रयिपते' इत्यादि सूक्त के [पाचवीं ऋचा के] 'रयमातिष्ठ' आदि द्वितीय पाद में [स्थित शब्दार्थ वाचक 'स्था' धातु के गतिरोधक होने से] स्थितम् अर्थात 'रुक जाना' ही अन्त है और छठवां दिन पृष्ठषपडह के अन्त में होने से यह छठे दिन में छठे दिन का रूप है।

तत्रत्य छन्द प्रशसति—

तदु त्रैष्टुभ तेन प्रतिष्ठितपदेन सवन दाधारायतनादेवैतेन न प्रच्यवते ॥ इति।

पूर्ववद् व्याख्येयम् ॥

वह त्रिष्टुप् छन्दस्क सूक्त है प्रतिष्ठित पद [अर्थात् नियताक्षर सख्या] से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत निष्केवल्यशस्त्र] धारित होता है, अत इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

निष्केवल्यस्य शस्त्रस्यान्तिम तृच विधत्ते—

उप नो हरिभि सुतमिति पर्यास, समानोदर्क, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।

तिसृष्वप्यृक्षु 'उप नो हरिभि' इति पादस्यैकत्वात् समानोदर्कत्वम् ॥

'उप नो हरिभि' इत्यादि तृचविशेष पर्यास [पूर्वोक्त ऋचाओं के अन्त में प्रक्षेपणीय] है, इसके [तीनों ऋचाओं में 'उप नो हरिभि' आदि] पाद की समानता [के कारण] यह षष्ठ दिन में षष्ठ दिन का रूप है।

---

१ प्र घा न्वस्येति दशर्चं सूक्तम् तत्र द्वितीयादृक्षु सर्वत्रैवास्त्येष पाद ।
२ ऋ० ६ ३१।

तत्र निविद्धानं विधत्ते—

ता उ गायत्र्यो, गायत्र्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति; तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते; तस्माद् गायत्रीषु निविदं दधाति ॥ इति ।

पूर्ववद् व्याख्येयम् ॥

उस [सूक्त] की ऋचाएं गायत्री छन्दस्क हैं, और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं। जिस [छन्द] में निविद् [पद-समूह] प्रक्षिप्त होते हैं; वही छन्द [सवन का] निर्वाहक होता है। इस निर्वाहकत्व के कारण गायत्री ऋचाओं में निविद् प्रक्षिप्त होते हैं।

शस्त्रान्तरस्य प्रतिपदेकामृचं विधत्ते—

'अभि त्यं देवं सवितारमोण्योरिति'[1] वैश्वदेवस्य प्रतिपदतिच्छन्दाः; षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।

अतिच्छन्दस्त्वमत्र लिङ्गम् ॥

'अभि त्यं देवं' इत्यादि वैश्वदेव [शस्त्र] की प्रतिपद् ऋचा है, अतिच्छन्द में निबद्ध यह षष्ठ दिन में षष्ठ दिन का रूप है।

प्रतिपच्छेषमृग्द्वयमनुचरतृचं च विधत्ते—

तत्सवितुर्वरेण्यं, दोषो आगादित्यनुचरोऽन्तो वै गतमन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।

'तत्सवितुः' इति[2] द्वे ऋचौ, प्रतिपच्छेषभूते। 'दोषो आगात्' इत्येष सूत्रे पठित[3] तृचोऽनुचरः। अत्र गत्यर्थवाची 'अगि' धातुर्योऽस्ति, तस्यार्थः आगादिति शब्देनोच्यते। गत्यर्थवाचित्वाद् गतं गमनसमाप्तिरन्तो भवति। तदेतदन्तवत्त्वं लिङ्गम्। सूत्रकारोऽपि त्यमित्येकामृचं तत्सवितुरिति द्वे ऋचौ मिलित्वा प्रतिपत्तृचत्वेनोक्त्वा दोषो आगादित्यादिकस्तृचोऽनुचर इत्युक्तवान्[4], तस्मादस्मानिस्तत्सवितुरिति वाक्यं पूर्वेणान्वेव विच्छेदनीयम् ॥

---

1. सा० छ० आ० ५.२.३.८, वाज० स० ४.२५; अथर्व० ११.४.२।
2. ऋ० ३.६२.१०, ११।
3. आश्व० श्रौ० ८.१.१८ (सा० छ० आ० २.२.४.३)।
4. 'अभि त्यं देवं सवितारमोण्योरित्येका, तत् सवितुर्वरेण्यमिति द्वे, दोषो आगाद् बृहद् गाय द्युमद्गेह्याथर्वण। स्तुहि देवं सवितारम् ॥ ...वैश्वदेवस्य प्रतिपदनुचरौ'—इति आश्व० श्रौ० ८.१.१८।

'तत्सवितु' इत्यादि दो प्रतिपद् ऋचा और 'वोयो अगात्' आदि [आश्व० श्रौ० सूत्र में पठित] अनुचर तृच हैं [भूतार्थवाचक गम धातु का अर्थ 'आगात्' शब्द से उक्त है अत गमनसमाप्ति होने से] 'गतम' अर्थात् चला जाना ही अन्त है, और छठवां दिन पृष्ठ्य षडह के अन्त में होने से यह छठें दिन में छठे दिन का रूप है।

सवितृदेवताक सूक्त विधत्ते—

'उदु ष्य देव सविता सवायेति[1]' सावित्र, शश्वत्तम तदपा वह्निरस्थादिस्यन्तो वै स्थितमन्त षष्ठमह षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।

शश्वत्तममित्यादिद्वितीय पाद तस्मिन्नस्थादिति भूतार्थवाचिप्रत्ययान्तस्तिष्ठतिधातु श्रुत तच्च स्थितत्व गमनस्यान्त तदिदमन्तवत्त्व लिङ्गम् ॥

'उदुष्य देव' आदि सवितृ देवताक सूक्त के [द्वितीय पाद] 'शश्वत्तम' आदि के 'अस्थात्' शब्द में [भूतार्थवाचक 'स्था' धातु के होने से] स्थित होना ही गमन का अन्त है और षष्ठ दिन पृष्ठ्यषडह के अन्त में होने से यह छठवें दिन में छठें दिन का रूप है।

तुल्यसमाप्तिलिङ्गक सूक्त विधत्ते—

'कतरा पूर्वा कतरापरयोरिति[2]' द्यावापृथिवीय, समानोदर्कं, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।

द्वितीयस्या ऋचश्चतुर्थे पाद द्यावा रक्षत पृथिवी—इत्युक्तत्वात् इद सूक्त द्यावापृथिवीयम् तत्र द्यावा रक्षतमिति पादस्य बहुषु ऋक्षु विद्यमानत्वात् समानोदर्कत्वम् ॥

'कतरा पूर्वा' आदि सूक्त द्यावापृथिवी देवताक सूक्त [जो बहुत ऋचाओं में 'द्यावा रक्षतम्' आदि पाद की पुनरुक्ति होने से] समान समाप्ति से युक्त यह षष्ठ दिन में षष्ठ दिन का रूप है।

ऋभुदेवताक सूक्तद्वय विधत्ते—

'किमु श्रेष्ठ किं यविष्ठो न आजगन्नुप नो वाजा अध्वरमृभुक्षा' इत्यार्भव, नाराशस त्रिवत् षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।

किमु श्रेष्ठ[3] इत्यस्मिन् सूक्ते त्रयोदशर्च शसनीया। तत्र चतुर्थ्या ऋच प्रथमपदे 'चकृवास ऋभव –इति श्रुतत्वादिदमार्भवम्। 'उप न[4] इति सूक्ते चतस्र तत्र प्रथम पादे 'ऋभुक्षा' इति श्रुतत्वात् तदप्यार्भवम्। ऋभवो हि नरा मनुष्या, अत एव

१ ऋ० २ ३८। २ ऋ० १ १८५।
३ ऋ० १ १६१। ४ ऋ० ४ ३७।

मनुष्यानन्तः प्रवेशयितुमसहमाना अग्निवत्स्वादय सोमपानवेलायामृभून् निःसारितवन्तः। एतच्च 'आर्भवं शसति। ऋभवो वै देवेषु' इत्यादावुपाख्यानेन[1] तृतीयपञ्चिकायां स्पष्टम्। ते च नाम ऋभव 'तस्तष्टे' शब्दे यस्मिन् सूक्ते, तन्नाराशंसं, तदेव लिङ्गम्। तथैव 'उप नो वाजा' इति सूक्तस्य तृतीयायामृचि 'त्रिदिवम्'-इति त्रिशब्दः श्रुत, तदेतच्च द्वितीय लिङ्गम् ॥

'विभु धेष्ट' आदि ऋभु देवताक [जिस सूक्त में ऋभु आदि नर का स्तवन होता है वह] नाराशंस सूक्त है। ['उप नो वाजा' आदि सूक्त के तृतीय ऋचा में 'त्रिदिवम्' में त्रिशब्द होने से] 'त्रि' शब्द युक्त षष्ठ दिन में यह षष्ठ दिन का रूप है।

अथ बहुदेवताक सूक्त विधत्ते—

'इदमित्था रौद्रं गूर्तवचा, ये यज्ञेन दक्षिणया समक्ता' इति वैश्वदेवम् ॥ १३ ॥ इति।

'इदमित्था[2]'-इत्येक सूक्त 'य यज्ञेन[3]'-इत्यपरम् ॥

'इदमित्था' आदि और 'ये यज्ञेन' आदि वैश्वदेवताक सूक्त हैं।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणाख्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) अष्टम खण्ड. ॥ ८ ॥ (१३) [१६६]

॥ इस प्रकार बाइसवें अध्याय के आठवें खण्ड की हिन्दी पूर्ण हुई ॥ ८ ॥

## अथ नवमः खण्ड·

पूर्वोक्ते सूक्तद्वय लिङ्ग दर्शयति—

नाभानेदिष्ठं शसति ॥ इति।

नाभानेदिष्ठाख्य कश्चिन्महर्षि., तेन दृष्टम्, पूर्वोक्तं[4] सूक्तद्वय 'नाभानेदिष्ठं' तच्छंसेत्। अतो महर्षिसम्बन्ध एवात्र लिङ्गम् ॥

१. १४ [xxii. ९] नाभानेदिष्ठ [ऋषि द्वारा दृष्ट पूर्वोक्त सूक्त द्वय] का स्तवन करता है[5]।

तदेतत्सूक्तद्वय प्रशंसितुमुपाख्यानमाह—

नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन् सोऽब्रवीदेत्य किं मह्यमभाक्तेत्येतमेव निष्ठावमववदितारमित्यब्रुवंस्तस्माद्धाप्येतर्हि पितरं पुत्रा निष्ठावोऽववदितेत्येवाचक्षते ॥ इति।

१. द्र० इत पूर्वम्, ४८५ पृ०, ६ खण्डे। २. ऋ० १०.६१।
३. ऋ० १०.६२। ४. द्र० इदमेव पृष्ठे १० प०। ५. तु० ऐ०ब्रा० ५.२७।

मनो पुत्रो नाभानेदिष्ठो नाम बालको गुरुगृहे ब्रह्मचर्यं वसति'—उपनीत सन् वेदमध्येतु तत्र निष्ठति। तदानी तस्य ज्येष्ठभ्रातरो मनो पितुर्धन स्वार्थं विभजन्त, त बालक 'निरभजन्' भागरहितमकुर्वन्। बालोऽय ब्रह्मचारी वेदमेवाभ्यस्यतु किं तस्य धनेनेति मत्वा भाग न दत्तवन्त। तदानी 'स' नाभानेदिष्ट 'एत्य वेदाभ्यास कृत्वा समागत्य भ्रातॄनिदमब्रवीत्—हे भ्रातर, मह्य किम् अभाक्त' किं नाम वस्तु भागत्वेन यूय पृथक्त्वेन कृतवन्त इति। ते च भ्रातर एतमेत्र' मनु पितर हस्तेन प्रदर्श्य हे नाभानेदिष्ठ! वय नो जानीमस्त्वमव पृच्छेत्यब्रुवन्। कीदृश मनुम्? निष्ठावम् धनविभागादेर्धर्मरहस्य नि रूपण स्थितिर्निर्णयो निष्ठा, सा यस्मिन्नस्ति स निष्ठाव तादृश धर्मरहस्यस्य निर्णेतारमित्यर्थं। 'अववदितारम्' ज्यष्ठपुत्रस्यैतावत्, द्वितीयस्यैतावत्, अन्यस्यैतावत्, इत्यवच्छिद्य वेदितु समर्थोऽववदिता तादृशम्। अयमर्थं—अय मनुर्धर्मशास्त्रकर्तृत्वाद्धर्मरहस्यनिर्णयवान् पितृत्वेन तवैतावदित्यवच्छिद्य वक्तु समर्थश्च। तस्मान्मदीयो भाग क इति मनुमव पृच्छेत्यब्रुवन्। यस्मादस्य भ्रातर एवमुक्तवन्त, तस्मादिदानीमपि पितर पुत्रा इत्यनेन प्रकारेण आचक्षते। केन प्रकारेणेति? सोऽभिधीयते—अय पिता 'निष्ठाव, निर्णयवान्' अस्यैतावदित्यवच्छिद्य वदिता चेति॥

[मनु के पुत्र] नाभानेदिष्ठ मानव जब [वेद पढ़ने के लिए] ब्रह्मचर्याश्रम में निवास कर रहे थे तब उनके [बड़े] भाई ने पिता के धन में भाग देने से उन्हें निराकृत कर दिया। वह [वेदाभ्यास से] आकर [भाइयों से इस प्रकार] बोले—हे भाइयो! मेरे लिए कौन सा भाग अलग किया गया है? [उन भाइयों ने अपने पिता मनु की ओर हाथ दिखाकर] 'इन्हीं धर्मरहस्य निर्णेता और न्यायप्रदाता [पिता से पूछो']'—ऐसा कहा। इसीलिए अभी भी यहाँ पिता को पुत्र इस प्रकार ही 'धर्माधर्म निर्णेता और फैसला करने वाला' कहते हैं।

तत ऊर्ध्वं नाभानेदिष्ठस्य कृत्य दर्शयति—

**स पितरमेत्याब्रवीत्,—त्वा ह वाव मह्य तताभाक्षुरिति त पिताऽब्रवीन्मा पुत्रक तदादृथा,—अङ्गिरसो वा इमे स्वर्गाय लोकाय सत्रमासते, ते षष्ठ षष्ठमेवाहरागत्य मुह्यन्ति, तानेते सूक्ते षष्ठेऽहनि शसय, तेषा यत्सहस्र सत्रपरिवेषण, तत्ते स्वर्यन्तो दास्यन्तीति, तथेति॥ इति।**

---

१ 'एतमेव पितर निष्ठावमववदितारम्। तुभ्यमभक्ष्महीति वाक्यशेष। निष्ठावो धर्माधर्मानुष्ठानाननुष्ठानव्यवस्थापक। अववधिवा शासिता धाता'—

पिता निष्ठाव इत्युक्तो निष्ठा कार्यव्यवस्थितिम्।
वाति प्रापयति प्यर्याद् वातेरनुपसर्गकात्॥
मत्वर्थे वाववदिता शिक्षकोऽवेति सान्त्वने।
भजेति शेष पितर भज पृच्छेति तेऽब्रुवन्॥
—इति षड्गुरुशिष्य।

'स' नाभानेदिष्ठो भ्रातृभिस्तथोक्तः सन् पितरं प्रत्यागत्यैदमब्रवीत्,—हे पितर्मह्यं 'त्वां ह वाव' त्वामेव भ्रातरः सर्वेऽपि 'अभाक्षु' भागमकार्षुः अतो मदीयो भागस्त्वय्यस्ति, तं मे देहीत्यभिप्रायः । ततः 'तं' नाभानेदिष्ठं 'पिता' मनुरेवमब्रवीत्—हे 'पुत्रक' बालक भ्रातृणां वचनं 'मा आदृथाः' तस्मिन् वचने आदरं मा कार्षीः । नास्त्येव मद्धस्ते त्वदीयो भागः, सर्वमपि धनं त्वद्भ्रातृभिर्गृहीतम् । तव तु धनप्राप्त्यर्थमेकमुपायं कथयिष्यामि,—अङ्गिरोनामका महर्षय इमे समीपदेशवर्तिनः स्वर्गार्थं सत्रमनुतिष्ठन्ति, त पुनः पुनः सत्रमुपक्रम्य, तदा तदा प्राप्तं तत्तत् षष्ठमहरागत्य तत्र तत्र मन्त्रबाहुल्यं 'मुह्यन्ति' भ्रान्ताः सन्तः सत्रसमाप्तिमप्राप्य सर्वदा क्लिश्यन्ति 'तान्' महर्षीन् षष्ठेऽहनि, त्वं गत्वा 'इदमित्था'—इति 'ये यज्ञेन' चैते उभे सूक्ते शंसय । 'तत्' तेषाम् ऋषीणां 'यत्' सहस्रसंख्याकं धनं सत्रपरिवेषणं सत्राधारत्वेन संपादितमस्ति, तत्सर्वमनुष्ठानादूर्ध्वम् अवशिष्टं धनं 'ते' तुभ्यमङ्गिरसो महर्षयः स्वर्गं प्राप्नुवन्तो दास्यन्तीति । 'तथा' अस्त्विति तत् पितृवचनं नाभानेदिष्ठोऽङ्गीचकार ॥

वह [नाभानेदिष्ठ] पिता के पास आकर बोले—हे तात ! मेरे भाइयों ने सभी कुछ सम्पत्ति का भाग बाँट लिया है और मेरा भाग आपके पास है, उसे दे देवें । उससे पिता [मनु] बोले—हे बालक ! भाइयों के वचन का आदर मत करो [मेरे पास तुम्हारा भाग नहीं है, तुम्हारे भाइयों के द्वारा सभी ले लिया गया है । तुम्हारे लिए धन प्राप्त्यर्थ मैं एक उपाय बताता हूँ—] 'ये अङ्गिरा नामक महर्षि [समीपवर्ती देश में] स्वर्ग लोक के लिए सत्र का अनुष्ठान कर रहे हैं । वे पुनः पुनः सत्र का उपक्रम करके [उस-उस समय प्राप्त] उस-उस षष्ठ अह पर आकर [मन्त्रबाहुल्य के कारण] भ्रान्त हो जाते हैं [अतः सत्र का उपसंहार नहीं कर पाते] । उन महर्षियों को षष्ठ अह में तुम जाकर इन दो ['इदमित्था' और 'ये यज्ञेन'] सूक्त का शंसन कराओ । उन [ऋषियों] की जो सहस्र संख्याक सत्र की दक्षिणा है[1] उसे [सत्रावसान के बाद] स्वर्गलोक को प्राप्त करते हुए वे तुम्हें [अवशिष्ट धन] दे देंगे ।' [उसने कहा—] 'ठीक है ।'

अङ्गीकारादूर्ध्वं किं कृतवानित्याशङ्क्य तद्वृत्तान्तं दर्शयति—

तानुपेत्यप्रतिगृभ्णीत मानवं सुमेधस इति, तमब्रुवन्, किंकामो वदसीतीदमेव वः षष्ठमहः प्रज्ञापयानीत्यब्रवीदथ यद्वा, एतत्सहस्रं सत्रपरिवेषणं, तन्मे स्वर्यन्तो दत्तेति, तथेति, तानेते सूक्ते षष्ठेऽहन्यशंसयत्,—ततो वै ते प्र यज्ञमजानन् प्र स्वर्गं लोकम् ॥ इति ।

---

१ 'परिवेषणं भाजनं' तदुपायां पात्रं परिवेषणशब्देन लक्ष्यन्ते, सम्राड् घृतं इत्यत्र भाष्य'—इति भाविस्वामी ।

'तान्' अङ्गिरसो महर्षीन् 'उपेत्' नामानेदिष्ठ समीप प्राप्तवान् प्राप्य च प्रति गृभ्णीत'-इत्यादिमन्त्रपादेनैव महर्षीणामग्रे किंचिद्वचनमुक्तवान् । तस्य पादस्यायमर्थ — हे 'सुमेधस ' शोभनमेधायुक्ता अङ्गिरस 'मानव' मनो पुत्र नाभानेदिष्ठाख्य मा 'प्रति गृभ्णीत' यूय स्वीकुरुतेति । तथा वदन्त नाभानेदिष्ठ प्रति मुनय इदमब्रुवन् —हे नाभानेदिष्ठ ! किंकाम ' कीदृगपेक्षायुक्त सन्नस्मान् प्रत्यव वदसि ? इति । तत स नाभानेदिष्ठोऽब्रवीत्,—हे महर्षय व ' युष्माकमिदमव षष्ठमह प्रज्ञापयानि प्रकर्षेण बोधयामीति, 'अथ' बोधनानन्तर 'सत्रपरिवेषण' मदङ्गि सत्रार्थं सपादितमनुष्ठानादूर्ध्वमवशिष्ट यदेतत्सहस्रसख्याक धनमस्ति तत् सर्व यूय मे मह्य स्वर्गं प्रति गच्छन्तो दत्तेति । 'तथेति' मुनिभिरङ्गीकृते सति 'तान्' मुनीन् 'एते' उभे सूक्ते षष्ठेऽहन्यशसयत् तत एव ते' मुनयो यज्ञ प्रकर्षेण 'अजानन्' ज्ञातवन्त तदनुष्ठानेन स्वर्गं लोकमपि प्राजानन् ॥

उन [महर्षियों] के पास [नाभानेदिष्ठ] गए और इस प्रकार कहा—हे शोभन मेधा वाले अङ्गिरसो, मनु के पुत्र [नाभानेदिष्ठ] को आप स्वीकार करें । [इस प्रकार कहते हुए] उनसे मुनियों ने कहा—किस अपेक्षा बुद्धि से तुम इस प्रकार कह रहे हो ? तब नाभानेदिष्ठ ने कहा—हे महर्षियों, आप लोगों को 'यही षष्ठ अह है' ऐसा ज्ञान कराऊँगा और षष्ठ अह के ज्ञान के बाद आप द्वारा सत्रार्थ सम्पादित अनुष्ठान के बाद अवशिष्ट जो सहस्र सख्याक धन है उस सबको मुझे स्वर्ग के प्रति जाते हुए देवें । उन्होंने कहा—'ठीक है ।' उन मुनियो ने इन दोनों सूक्तों को छठवें दिन शसन किया । उसके बाद से ही उन मुनियों को यज्ञ का प्रकृष्ट रूप से ज्ञान हुआ और उस अनुष्ठान से स्वर्ग लोक का भी ज्ञान हुआ ।

सूक्तद्वय प्रशस्य तद्विधि निगमयति—

**तद्यदेते सूक्ते[1] षष्ठेऽहनि शसति, यज्ञस्य प्रज्ञात्यै, स्वर्गस्य लोकस्यानुख्यात्यै ॥** इति ।

यस्मात् सूक्तद्वयशसनेनाङ्गिरोभिर्यज्ञ स्वर्गश्च प्रज्ञात, तस्माद्धोता तदुभय शसेत्, तच्च यज्ञस्वर्गयोरवगमाय भवति ॥

[ क्योकि सूक्त द्वय के शसन के द्वारा अङ्गिराओं ने यज्ञ और स्वर्ग का ज्ञान प्राप्त किया । इसलिए होता ] इन दोनों सूक्तों का शसन करता है जो यज्ञ के प्रकृष्ट रूप से ज्ञान के लिए और स्वर्गलोक के अवगम के लिए होता है ।[2]

पुनरपि सूक्तयोर्महिमान दर्शयितुमुपाख्यानमेवाह—

**त स्वर्यन्तोऽब्रुवन्नेतत् ते ब्राह्मण सहस्रमिति, तदेन समाकुर्वाण पुरुष कृष्णशवास्युत्तरत उपोत्थायाब्रवीन्मम वा इद मम वै वास्तुहमिति, सोऽ-**

---

1 ऋ० १० ६१,६२ । 2 द्र० इव पूर्वम्, पृ० ६२ ।

ब्रवीन्मह्यं वा इदमदुरिति, तमब्रवीत् तद्वै नो तवैव पितरि प्रश्न इति, स पितरमैत् तं पिताऽब्रवीन्ननु ते पुत्रकादुरित्यदुरेव म इत्यब्रवीत् तत्तु मे पुरुषः कृष्णशवास्युत्तरत उपोदतिष्ठन्मम वा इदं मम वै वास्तुहमित्यादितेति, तं पिताऽब्रवीत्—तस्यैव पुत्रक तत्तत्तु स तुभ्यं दास्यतीति, स पुनरेत्याब्रवीत्—तव ह वाव किल भगव इदमिति मे पिताऽऽहेति सोऽब्रवीत्—तदहं तुभ्यमेव ददामि य एव सत्यमवादीरिति ॥ इति ।

'तं' नाभानेदिष्ठं 'स्वर्यन्तः' स्वर्गं प्राप्नुवन्तोऽङ्गिरसोऽब्रुवन्—हे 'ब्राह्मण' नाभानेदिष्ठ 'एतद्' गोसहस्रं यज्ञभूमाववशिष्टं 'ते' तुभ्यं दत्तमिति शेषः । अत्र शाखान्तरानुसारेण गोसहस्रमित्यर्थो लभ्यते । शाखान्तरे चैवमाम्नायते—'ते सुवर्गं लोकं यन्तो य एषां पशव आसंस्तानस्मा अददुः[1] इति । 'तद्' गोसहस्रं 'समाकुर्वाणं' सम्यगात्मसात्कुर्वन्तम् 'एनं' नाभानेदिष्ठं कश्चित्पुरुषो यज्ञभूमेरुत्तरत 'उपोत्थाय' समीप एवोत्थितो नूत्वेदमब्रवीत्—कीदृशः पुरुषः ? 'कृष्णशवासी' अतिशयेन कृष्णं मलिनं वस्त्रं 'कृष्णशं' तद्वस्ते आच्छादयतीति कृष्णशवासी[2] । अत्रायं मलिनवस्त्रः पुरुषः पशुस्वामी रुद्र इत्यवगन्तव्यम् । तथा च शाखान्तरे पठ्यते—'तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत्[3]' इति । स रुद्रः किमब्रवीदिति, तदभिधीयते—हे नाभानेदिष्ठ 'इदं' पशुसहस्रं ममैव स्वम् । तत्रेयमुपपत्तिः, 'वास्तुहं' वास्तौ यज्ञभूमौ हीनं कर्मान्ते परित्यक्तं वास्तुहं, तादृशं सर्वं ममैव स्वमिति सर्वत्र सम्प्रतिपन्नमिति । एवं पुरुषेणोक्तः स नाभानेदिष्ठः पुनरेनमब्रवीत्—हे रुद्र मह्यमेवेदं सहस्रमङ्गिरसो दत्तवन्त इति । तं तथा वदन्तं नाभानेदिष्ठं पुनः पुरुषोऽब्रवीत्—हे नाभानेदिष्ठ, 'तद्वै' तस्मिन्नेव त्वदीयं मदीयमिति सन्देहे सति 'नौ' आवयोरुभयोरपि 'तवैव पितरि' मनो निर्णयार्थं प्रश्नोऽस्त्विति । ततः 'सः' नाभानेदिष्ठः पितरं प्रष्टुम् 'ऐत्' आगतवान् । स पिता तेन पृष्टस्तमब्रवीत्—हे 'पुत्रक' बालक तुभ्यमङ्गिरसो महर्षयः 'अदुः' ननु दत्तवन्तः किम् ? प्लुतिः प्रश्नार्था । एवं पित्रा पृष्टः स नाभानेदिष्ठः 'मे' मह्यम् 'अदुरेव' दत्तवन्त एवेत्यब्रवीत् । तर्हि कस्तव विचारः ? इत्याशङ्कितः स नाभानेदिष्ठ एवमुवाच—ते महर्षयो दत्तवन्त एव, किं तु तद्गोसहस्रं कश्चित्पुरुषो मलिनवस्त्रः सन् यज्ञभूमेरुत्तरत उत्थाय, 'इदं' गोसहस्रं ममैव स्वं, यज्ञवास्तौ हीनत्वादित्यभिधाय 'आदित' आदानं कृतवान्, अपहृतवानित्यर्थः । तथा ब्रुवन्तं पुत्रं प्रति पिता अब्रवीत्—हे 'पुत्रक' ननु 'तद्' यज्ञवास्तौ हीनं गोसहस्रं तस्यैव रुद्रस्य स्वं, पशुपतित्वात् यज्ञावशिष्टस्वामित्वाच्च, किन्तु तथा सत्यपि तव हानिर्नास्ति, 'सः' रुद्रः 'तद्' गोसहस्रं तुभ्यं दास्यतीति । यज्ञकाले तत्सर्वमङ्गिरसां धनं भवति, समाप्ते तु यज्ञे यदवशिष्टं, तस्य रुद्र एव

१ तै० सं० ३ १ ९ ५ ।

२ सामश्रमिमते तु 'कृष्णशवासी'-इत्यव्याख्यानं कृष्णवर्णं शवच्छादकश्च कृष्णशवासी कश्चिदनार्यः, 'रुद्र' भयानकाकृतिः स्यात् । तदयोरेतत्त्व छान्दसम् ।

स्वामीति नाङ्गिरसा दातुमधिकारोऽस्तीत्यभिप्रायः। तथा रुद्रवचनं शाखान्तर एवमाम्नायते—'न वै तस्य तदीशत इत्यब्रवीद् यज्ञवास्तौ हीयते मम वै तत्'[1] इति। ततो दास्यतीति वचनं श्रुत्वा 'स' नाभानेदिष्ठ पुनरपि रुद्रस्य समीपमेत्येदमब्रवीत्—हे 'भगवन्' पूज्य! रुद्र! 'तव ह वाव किल' तवैव सर्वम् 'इद' स्वमिति मदीय पिता प्राहेति। तत 'स' रुद्रोऽब्रवीत्—हे नाभानेदिष्ठ! 'तत्' सर्वं तुभ्यमेव ददामि, यस्त्व सत्यमेवावादी., न त्वनृतमुक्तवानसि, तस्मात् परितोषात् सत्यवादिने तुभ्यमेव ददामीति[2]॥

उस [नाभानेदिष्ठ] से स्वर्ग को जाने के लिए उद्युक्त हुए अङ्गिराओं ने कहा—हे ब्राह्मण! यह [यज्ञभूमि में अवशिष्ट गौ-] सहस्र तुम्हारे लिए है। [गो-सहस्र को] सम्यक् रूप से इकठ्ठा करने वाले इस [नाभानेदिष्ठ] से अत्यन्त काला कपड़ा पहने हुए[3] यज्ञभूमि के उत्तर की ओर समीप ही उठकर कोई पुरुष बोला—यह मेरा है, यज्ञभूमि में परित्यक्त वस्तु सभी मेरी हैं[4]। तब उस [नाभानेदिष्ठ] ने कहा—'यह मुझे उन [अङ्गिराओं] ने दिया है।' उससे [पुनः पुरुष ने] कहा—हे नाभानेदिष्ठ, तब 'यह हम दोनों का है'—इस सदेह के निर्णयार्थ तुम्हारे पिता से प्रश्न किया जाय। वह पिता के पास आया। [पूंछने पर] पिता ने कहा—हे बालक, तुम्हें क्या अङ्गिराओं ने नहीं दिया? [पिता के इस प्रकार पूंछने पर उसने] 'मुझे दिया ही था'—इस प्रकार कहा। [तब क्या हुआ? ऐसा पूंछने पर उसने कहा]—'एक पुरुष काला वस्त्र पहने हुए उत्तर की ओर से समीप ही उठकर—'यह मेरा है, यज्ञभूमि में परित्यक्त सभी वस्तु मेरी हैं'—ऐसा कहते हुए उसे ले लिया। उससे पिता ने कहा—[पशुपति होने से] हे बालक वह [गो सहस्र] उन्हीं [रुद्र] का है। [फिर भी कोई हानि नहीं है] वह तुम्हें ही दे देंगे। वह पुनः रुद्र के समीप आकर बोला—'हे भगवन् रुद्र! तुम्हारी ही सभी वस्तु हैं'—ऐसा मेरे पिता ने कहा है। तब उन [रुद्र] ने कहा—'हे नाभानेदिष्ठ, उस सभी को मैं तुम्हें ही देता हूँ क्योंकि तुमने सत्य कहा है।

---

१. तै० सं० ३.१.९.६।

२. ऋ० १० ६१, ६२ सूक्तयो. सोपक्रम सायणीय भाष्य सर्वमिहालोच्यम्। शा० ब्रा० २८.४ ता० ब्रा० २०.९.२।

३. 'कृष्णश नीलवस्त्र स्यान्मलिनं त्वपरेऽवदन्॥
शुक्ल कृष्णदशं चान्ये कृष्णवर्णोल्वण परे
छन्दोगसूत्रे बहुधा कृष्णशं तु निरुच्यते.—
कृष्णश वास इति। कृष्णं कटुमिश्रितमिति शाण्डिल्य.। शुक्ल कृष्ण दशमिति गौतमः। कृष्णमित्येव मन्य इति धानजय्य'—इति षड्गुरुशिष्यः।
(ii) 'मलीमसवासा. कृत्तिवासा वा'—इति गोविन्दस्वामी।
(iii) द्राह्या० श्रौ० २३.२।

४. तु० इतः पूर्वम्, 'मम वा इदमिति' पृ० ५०१।

इत्थमुपाख्यानं परिसमाप्य प्रसङ्गात् पुरुषार्थत्वेन सत्यवदनं विधत्ते—

**तस्मादेवंविदुषा सत्यमेव वदितव्यम् ॥ इति ।**

'एवं विदुषा' सत्यस्य श्रेयोहेतुत्वं जानता ॥

इसलिए विद्वान् को सदैव सत्य ही बोलना चाहिए ।

उपाख्यानस्य सर्वस्य तात्पर्यं दर्शयति—

**स एष सहस्रसनिर्मन्त्रो यन्नाभानेदिष्ठः ॥ इति ।**

नाभानेदिष्ठेन महर्षिणा दृष्टो यो मन्त्रसमूहः, स एष 'सहस्रसनिः' सहस्रसंख्याकस्य वस्तुनः सनिर्लाभो यस्मिन् मन्त्रे सोऽयं सहस्रसनिः ॥

जो नाभानेदिष्ठ महर्षि द्वारा दृष्ट मन्त्रसमूह हैं वह यह सहस्र [संख्याक वस्तु] का लाभ कराने वाले हैं ।

वेदनं प्रशंसति—

**उपैनं सहस्रं नमति प्र षष्ठेनाह्ना स्वर्गं लोकं जानाति य एवं वेद ॥ १४ ॥ इति ।**

'एनं' वेदितारं सहस्रसंख्यं धनम् 'उपनमति' प्राप्नोति, स च कालान्तरे षष्ठमहरनुष्ठाय तेन स्वर्गं लोकं प्रजानाति ॥

जो इस प्रकार जानता है वह सहस्रसंख्याक धन प्राप्त करता है और षष्ठ अह का अनुष्ठान करके उससे स्वर्ग लोक का ज्ञान प्राप्त करता है ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) नवमः खण्डः ॥ ९ ॥ (१४) [१६७]

॥ इस प्रकार बाइसवें अध्याय के नौवें खण्ड की हिन्दी पूर्ण हुई ॥ ९ ॥

## अथ दशमः खण्डः

अथ नाभानेदिष्ठीयेन सूक्तद्वयेन सह पठितव्यानि मन्त्रान्तराणि विधत्ते—

**तान्येतानि सहचराणीत्याचक्षते,—नाभानेदिष्ठं वालखिल्या वृषाकपिमेवयामरुत्तानि सहैव शंसेत् ॥ इति ।**

'तान्येतानि' वक्ष्यमाणानि चतुर्विधमन्त्रजातानि 'सहचराणि' प्रयोगकाले सहैव वर्तन्ते—इत्येवं याज्ञिका आचक्षते । तत्र 'नाभानेदिष्ठं' सूक्तद्वयं यदस्ति[1], वालखिल्यैर्महर्षिभिर्दृष्टा 'अभि प्र व सुराधसम्'[2] इत्याद्या वालखिल्यनामका मन्त्रा ये सन्ति, वृषाकपिना महर्षिणा दृष्टं 'वि हि सोतोरसृक्षतेति' सूक्तं[3] यदस्ति, एवयामरुन्नाम्ना महर्षिणा दृष्टं 'प्र वो महे मतयो यन्तु विष्णवे' इति सूक्तं[4] यदस्ति, तानि चत्वारि सहैव शंसेत् ॥

---

१. ऋ० १०.६१, ६२ । २. ऋ० ८.४९–५९ ।
३. ऋ० १०.८६ । ४. ऋ० ५.८७ ।

v. १५ [xxii. १०] वे [वक्ष्यमाण] ये [चार प्रकार के मन्त्र प्रयोगकाल में] साथ ही रहते हैं—ऐसा अभिज्ञजन कहते हैं—१. नाभानेदिष्ठ, २. वालखिल्य,[1] ३. वृषाकपि[2] और ४. एवयामरुन्नामक[3] महर्षियों द्वारा दृष्ट सूक्त [साथ ही शसित होते हैं]।

सहशंसनाभावे बाधं दर्शयति—

**यदेषामन्तरियात् तद् यजमानस्यान्तरियात् ॥** इति।

यदि कथचित् 'एषां' चतुर्णां मध्ये एकमपि 'अन्तरियाद्' अन्तरितं लुप्तं कुर्यात् तदानीं यजमानस्य सम्बन्धि श्रेय 'अन्तरियाद्' विनाशयेत् ॥

**यदि इन चारों में से किसी प्रकार एक को भी लुप्त कर दे तो वह [होता] यजमान के श्रेय का विनाश ही करे।**

सामान्याकारेण बाधमुक्त्वा पुनर्विशेषाकारेण बाधं दर्शयति—

**यदि नाभानेदिष्ठं, रेतोऽस्यान्तरियाद्; यदि वालखिल्याः, प्राणानस्यान्तरियाद्; यदि वृषाकपिमात्मानमस्यान्तरियाद्; यद्येवयामरुतं, प्रतिष्ठाया एनं च्यावयेद्दैव्यै च मानुष्यै च ॥** इति।

यद्ययं होता नाभानेदिष्ठमन्त्रान् विलोपयेत् तदानीमस्य यजमानस्य पुत्राद्युत्पादकं रेतो विलोपयेत्। वालखिल्यानामन्तराये यजमानस्य प्राणविच्छेदः। वृषाकपिसूक्तस्यान्तराये यजमानस्य 'आत्मानं' मध्यदेहं विच्छिन्द्यात्। एवयामरुतस्य अन्तराये यजमानं दैव्या मानुष्याश्च प्रतिष्ठायाः प्रच्यावयेत्। अविघ्नेन कर्मसमाप्तिर्दैवी प्रतिष्ठा, तत्साधनभूतधनादिसंपत्तिर्मानुषी प्रतिष्ठा ॥

**यदि यह होता नाभानेदिष्ठ को छोड दे तो [यजमान के पुत्रोत्पादक] वीर्य का मानो लोप करे, यदि बालखिल्य को छोड दे तो उस [यजमान] के प्राणों का विच्छेद करे, यदि वृषाकपि को छोड दे तो इस [यजमान] को आत्मा[4] अर्थात् मध्यदेह ही विच्छिन्न करे और यदि एवयामरुत् को छोड दे तो इस [यजमान] को वह दैवी [निर्विघ्नकर्मसमाप्ति] और मानवी[5] [धनादि सम्पत्ति रूप] प्रतिष्ठा से च्युत करे।**

अन्तराये बाधमुक्त्वा, तदनुष्ठाने लाभं दर्शयति—

**नाभानेदिष्ठेनैव रेतोऽसिञ्चत्, तद्वालखिल्याभिर्व्यकरोत्, सुकीर्तिना काक्षीवतेन योनिं व्यहापयदुरौ यथा तव शर्मन् मदेमेति, तस्माज्ज्यायान् सन् गर्भः कनीयांस सन्तं योनिं न हिनस्ति; ब्रह्मणा हि स क्लृप्त एवयामरुतैतेवै करोति, तेनेदं सर्वमेतवै कृतमेति यदिदं किंच ॥** इति।

---

१. द्र० इत. परम् v. २८।

२. द्र० इत परम् vi. २९। ३ द्र० इतः परम् v. ३०, ३१।

४. आत्माक्षेत्रज्ञः परमात्मा वा। तस्यान्तरयः शरीरवियोग –इति गोविन्दस्वामी।

५. दैवी प्रतिष्ठा वैदिककर्मानुष्ठानम्, मानुषी तु प्रतिष्ठा प्रसिद्धैव'—इति गोविन्दस्वामी।

देवैरश्वरूपैः कृतं व्यापारमिदानीन्तनेष्वश्वेषु दर्शयति—

**तस्मादश्वः पशूनां जविष्ठस्तस्मादश्वः प्रत्यङ्पदा हिनस्ति ॥ इति ।**

यस्मादश्वरूपैर्देवैर्वेगेन गमनं पद्भिस्ताडनं चाचरितम्, तस्माल्लोकेऽपि 'पशूनां' मध्येऽश्वोऽत्यन्तं वेगवान् । 'तस्माद्' तस्मादेव कारणाल्लौकिकोऽश्वः 'प्रत्यङ्' पृष्ठतः पादेन पुरुषं हिनस्ति ताडयति ॥

[क्योंकि अश्व रूप देवों ने वेग से पैरों से उन्हें कुचल दिया] इसीलिए अश्व सभी पशुओं में अत्यन्त वेगवान है और इसीलिए [लोक में भी] अश्व [पुरुष को] पिछले पैरों से [अर्थात दुलत्ती से] ही मारता है ।

उक्तार्थवेदनं प्रशंसति—

**अप पाप्मानं हते य एवं वेद ॥ इति ।**

जो इस प्रकार जानता है, वह [अपने] पापों को नष्ट करता है ।

युक्ष्वा हीति सूक्तं प्रशंसयाऽऽज्यविधिं निगमयति—

**तस्मादेतदश्ववदाज्यं भवति तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥ इति ।**

यस्मादश्वस्य ईदृशो महिमा, तस्मात् 'अश्ववत्' अश्वशब्दोपेतं युक्ष्वा हि' इति सूक्तं तृतीयेऽहन्याज्यशस्त्रं भवति । यदश्ववदिति पूर्वं लक्षणमस्योक्तवान् इदमश्वशब्दोपेतं सूक्तं तृतीयस्याह्नो रूपम् ॥

[क्योंकि अश्व की महिमा इस प्रकार है] इसीलिए यह तृतीय दिन का आज्य [शस्त्र] ['युक्ष्वा हि' आदि सूक्त] अश्व के समान शब्द से युक्त होता है । [जो यह सूक्त अश्व शब्द से युक्त है] वही तृतीय दिन का रूप है ।

अथ प्रउगशस्त्रं विधत्ते—

**वायवा याहि वीतये, वायो याहि शिवा दिव, इन्द्रश्च वायवेषां सुतानां, आ मित्रे वरुणे वयं,मश्विनावेह गच्छतं,आ याह्यद्रिभिः सुतं, सजूर्विश्वेभिर्देवेभिः,रुत नः प्रिया प्रियास्वित्यौष्णिहं प्रउगं समानोदर्कं तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥ इति ।**

'वायवा याहि वीतय'[२] इत्येका । 'वायो याहि शिवा दिव'[३] इत्यादिके द्वे ऋचौ मिलित्वा तार्च्यमेकस्तृचः, इन्द्रश्च वायवेषां सुतानाम्' इत्यादिके द्वे ऋचौ, तृचत्वसंपादनाय तयोरन्यतरा द्विरावर्तनीया, 'आ मित्रे वरुणे वयम्'[५] इत्यादिकस्तृचः 'अश्विनावेह गच्छतम्'[६] इत्यादिकस्तृचः, 'आ याह्यद्रिभिः सुतम्'[७] इत्यादिकस्तृचः 'सजूर्विश्वेभिर्देवेभिः'[८] इत्यादिकस्तृचः, 'उत नः प्रिया प्रियासु'[९] इत्यादिकस्तृचः, त एते सप्त तृचा उष्णिक्छन्दस्का ।

---

१ ऋ० ८।७१। २ ऋ० ५।५१।५। ३ ऋ० ८।२६।२३, २४।
४ ऋ० ५।५१।६, ७। ५ ऋ० ५।७२।१–३। ६ ऋ० ५।७५।७–९।
७ ऋ० ५।४०।१–३। ८ ऋ० ५।५१।८–१०। ९ ऋ० ६।६१।१०–१२।

तत्सर्वमौष्णिह प्रउगशस्त्र कुर्यात् । तत्र समानोदर्कत्व तृतीयस्याह्नो लिङ्गम् । 'आ मित्रे वरुण' इति सूक्ते तिसृष्वप्यृक्षु 'नि बर्हिषि' इत्यादिकोऽन्तिम पादएक एव । 'अश्विनावेहेति' सूक्तेऽपि 'हसाविव' इत्यादिकोऽन्तिम पाद एक एव । 'आ याहीति' सूक्तेऽपि 'वृषन्निन्द्रे' त्यन्तिम पाद एक एव । 'सजोषा इति' तृचेऽपि 'आ याह्यग्ने' इत्यन्तिम पाद एक एव । एव कतिपयेषु समानोदर्कत्व लिङ्गम्[1] ॥

'हे वायु ! आनन्द के लिए आओ', 'हे वायु ! स्वर्ग से यहाँ आओ, कल्याणकारी', 'हे वायु और इन्द्र ! इस निचोडे हुए सोम का', 'इन्द्र और वरुण को हम', 'हे अश्विनो ! यहाँ आओ', 'पत्थरो से अभिसुत सोम के प्रति आओ', 'सभी देवो के साथ' 'प्रिया के सख्य हम लोगो के प्रिय'—आदि उष्णिक छन्द में निबद्ध ये सात तृच प्रउग [शस्त्र] हैं। तृतीय दिन में प्रयुक्त इनमें समान समाप्ति है [अर्थात इन तृचो में सभी अन्तिम पाद एक-ही हैं] अत यह तृतीय दिन का निरूपक है ।

अथ मरुत्वतीयशस्त्रस्य तृचद्वय विधत्ते—

**त तमिद्राधसे महे, त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ, निनृत्तवत् त्रिवत् तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति ।

'त तम्' इत्यादिकस्तृचो मरुत्वतीयशस्त्रस्य प्रतिपत्[2] । तस्योपक्रमे 'त तम्'-इति द्विरावृत्त शब्दो नृत्तगततालानुकरणसदृश , अन्ते च 'कृष्टीना नृतु '-इति नर्तनवाची शब्द श्रूयते, तदिद निनृत्तवल्लिङ्गम् । 'त्रय इन्द्रस्य'-इत्ययमनुचरस्तृच[3] । तस्यादौ त्रिशब्द-श्रवणात् इद त्रिवल्लिङ्गम् ॥

'त तमिद्राधसे' आदि तृच और 'त्रय इन्द्रस्य' आदि तृच मरुत्वतीय [शस्त्र] की प्रतिपत और अनुचर ऋचाएँ हैं निनृत्त [अर्थात् 'त त'-इस द्विरावृत्त शब्द के नृत्तगत-ताल के अनुरूप होने से और 'कृष्टीना नृतु ' में नर्तन वाचक 'नृतु ' शब्द] होने से और 'त्रि' शब्द से युक्त होने के कारण यह ततीय दिन में प्रयुक्त हैं । अत यह तृतीय दिन का निरूपक है ।

अथ प्रगाथद्वय विधत्ते—

**इन्द्र नेदीय एदिहीत्यच्युत प्रगाथ , प्र नून ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यो, निनृत्तवास्तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति ।

इन्द्र नेदीय ' इति प्रगाथस्य[4] पूर्वयोरप्यह्नोर्विहितत्वाद् अच्युतत्वम् । अथ प्रग्रथनेन तृचत्व सपादयितु चतुर्थ पाद पद पादश त्रिस्त्रिरभ्यस्यते । तस्य नृत्तसमानत्वाद् अथ

१ 'वायवा याहि'–इत्यस्यामृचि, इन्द्रश्चेति द्वृचोधान्तिम वाक्यम् 'अभि प्रय '-इति समानम्, उत न प्रियेति तृचे तु समानोदर्कत्व वचनादेव ।

२ ऋ० ९ २२ ६-८ । ३ ऋ० ८ २ ७-९ । ४ ऋ० ८ २३ ५,६ ।

प्रगाथो निनृत्तलिङ्गवान् । एवं ब्राह्मणस्यान्यत्रगाथेऽपि[1] द्रष्टव्यम् । यद्वा, यस्मिन् 'इन्द्र वरुणो मित्रो अर्यमा'–इत्यादावस्य त्रिरभ्यासो नतममान ॥

'इन्द्र नेदीय' आदि अच्युत [अर्थात पूर्व दिनों में विहित] प्रगाथ है। [तृच सपादन के लिए चतुर्थ और षष्ठ पाद की आवृत्ति करनी चाहिए] 'प्र नून' आदि ब्रह्मणस्पति देवताक प्रगाथ है। [इनमें चतुर्थ और षष्ठ पाद की आवृत्ति होने से] तृतीय दिन में प्रयुक्त यह निनृत्त से युक्त है, अत यह तृतीय दिन का उपलक्षण है।

अन्यास्तिस्र ऋचा विधत्ते—

अग्निर्नेता, त्व सोम क्रतुभि, पिन्वन्त्यप इति धाय्या अच्युता ॥ इति।

यद्यप्यत्र्यन एव द्वितीयस्याह्नो लिङ्ग[2] तथाप्यत्र वाचनिक प्रयोगो द्रष्टव्य ॥

'अग्निर्नेता', 'त्व साम क्रतुभि' और 'पिन्वन्त्यप' आदि मन्त्र [पूर्व दिन में विहित होने से] अच्युत [= अर्थात वही] धाय्या हैं।

अथान्य प्रगाथ विधत्ते—

'नहि सुदासो रथ पर्यास न रीरमदिति' मरुत्वतीय प्रगाथ, पर्यस्तवा-स्तृतीयेऽहनि तृतीयस्याह्नो रूपम ॥ इति।

अस्मिन् प्रगाथे यस्य मरुत इति तृतीयपाद श्रवणाद् अय मरुत्वतीय। अत्र 'पर्यास' इति श्रुतत्वाद् अय पर्यस्तलिङ्गवान् ॥

'नहि सुदासो रथ' आदि [के 'तृतीय' पाद में मरुत शब्द होने से] मरुत्वतीय प्रगाथ है। तृतीय दिन में प्रयुक्त यह ['पर्यास' शब्द होने से] पर्यस्त युक्त है। अत यह तृतीय दिन का रूप है।

सूक्तान्तर विधत्ते—

'त्र्यर्यमा मनुषो देवतातेति' सूक्त त्रिवत् तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥ इति।

आदौ त्रिशब्दस्य श्रुतत्वात् त्रिवल्लिङ्गयुक्तमिद सूक्तम्[3] ॥

'त्र्यर्यमा मनुष' आदि तृतीय दिन में प्रयुक्त सूक्त 'त्रि' शब्द से युक्त होने से तृतीय दिन का निरूपक है।

अथ निष्केवल्यशस्त्र स्तोत्रियानुरूपौ प्रगाथौ विधत्ते—

यद्द्याव इन्द्र ते शत, यदिन्द्र यावतस्त्वमिति वैरूप पृष्ठ भवति राथन्तरेऽहनि तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥ इति।

---

१ ऋ० १ ४० ५ ६।
२ द्र० अत्र पूर्वम् पृ० ७०१, पं० २५।
३ ऋ० ७ ३२ १० ११।
४ ऋ० ५ २९ १,२।

वैरूपसाम्ना निष्पाद्य तृतीयेऽहनि पृष्ठस्तोत्रम् तस्य च साम्न आधारभूतो 'यद्द्याव'[1] इति प्रगाथ स्तोत्रिय, 'यदिन्द्र'-इति[2] प्रगाथोऽनुरूप । तदुभय रथन्तरसामसबन्धिनि तृतीयेऽहनि युक्तम्। प्रथमतृतीयपञ्चमान्यहानि राथन्तराणि[3] रथन्तरसाम्ना पृष्ठस्तोत्रस्य गातव्यत्वात् । वैरूपसाम्नाऽप्यत्र पृष्ठस्तोत्र गातव्यम्। वैरूपशाक्वरयो रथन्तरपृष्ठत्वेन[4] तदीयेऽहनि युक्तत्वात् । तस्मात् तृतीयेऽहनि एव प्रगाथद्वय शसनीयम्। वैरूपसामसबन्धस्य तृतीयदिवसलिङ्गस्य विद्यमानत्वात् ॥

**'यद्द्याव इन्द्र ते शत' आदि प्रगाथ [स्तोत्रिय है] और 'यदिन्द्र' आदि प्रगाथ [अनुरूप है], रथन्तर साम सम्बन्धी तृतीय दिन में प्रयुक्त ये दोनो वैरूप [साम] और पृष्ठ [स्तोत्र] होते हैं [वस्तुत प्रथम तृतीय और पञ्चम दिन रथन्तर हैं] अत ये तृतीय दिन के निरूपक हैं।**

ऋगन्तर विधत्ते—

**'यद्वावानेति'[5] धाय्याऽच्युता ॥** इति ।

सर्वेष्वहस्वच्युतत्व सर्वस्याप्यह्नो लिङ्ग भवतीति तृतीयेऽह्न्यपि तद्युक्तम् ॥

***'यद्वावान्' आदि धाय्या [पूर्व दिन विहित होने से] अच्युत है।***

अपर प्रगाथद्वय विधत्ते—

**'अभि त्वा शूर नोनुम' इति रथन्तरस्य योनिमनु निवर्तयति, राथन्तर ह्येतदहरायतनेन ॥** इति ।

'अभि त्वा शूर' -इत्यपा रथन्तरसाम्नो योनि[6], ता पूर्वोक्ताया धाय्याया 'अनु पश्चाद् 'निवर्तयति' शसेदित्यर्थ । एतच्च तृतीयमह 'आयतनेन' स्थानेन 'राथन्तरम्' प्रयुज्यमानामह्ला रथन्तरसम्बन्धित्वात् ॥

**'अभि त्वा शूर' आदि इस रथन्तर की योनि [अर्थात् रथन्तर नामक साम में उत्पन्न प्रगाथ] का [पूर्वोक्त धाय्या के] पश्चात् शसन करके मानो वह उसे पुन उलट देता है। क्योंकि यह [ = तृतीय] दिन स्थान के द्वारा रथन्तर सम्बन्धी है।**

अथान्य प्रगाथ विधत्ते—

**'इन्द्र त्रिधातु शरणमिति' सामप्रगाथस्त्रिवांस्तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति ।

अत्रत्यस्य वैरूपसाम्न सम्बन्धी 'इन्द्र त्रिधातु' इति प्रगाथ[8] । स च त्रिशब्दयुक्तत्वात् त्रिवान् । अतो लिङ्गसद्भावात् तृतीयेऽहनि योग्य ॥

---

१ ऋ० ८ ७० ५,६ ।　　२ ऋ० ७ ३२ १८,१९ ।
३ द्र० इत पूर्वम्, पृ० ६८७ टि० १ ।　　४ द्र० इत पूर्वम्, पृ० ६८५-६८७ ।
५ ऋ० १० ७४ ६ ।　　६ ऋ० ७ ३२ २२ ।
७ द्र० इत पूर्वम्, पृ० ६०८, टि० २, पृ० ६९२ ।　　८ ऋ० ६ ४६ ९,१० ।

'इन्द्र त्रिधातु शरणम्' आदि [वैरूप] साम सम्बन्धी प्रगाथ है। 'त्रि' शब्द से युक्त होने से तृतीय दिन में प्रयुक्त यह तृतीय दिन का रूप है।

सूक्तान्तरं विधत्ते—

**'त्यमू षु वाजिनं देवजूतमिति'[1] तार्क्ष्योऽच्युतः ॥ १ ॥** इति।

तार्क्ष्यनाम्नः सूक्तविशेषस्याच्युतत्वं सर्वदिनसम्बन्धि लिङ्गम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया प्रथमाध्याये (एकविंशाध्याये) प्रथमः खण्डः ॥ १ ॥ [१५४]

'त्य मू षु वाजिनम्' आदि तार्क्ष्य देवताक सूक्त [पूर्व में (६९३ पृ०) विहित होने से] अच्युत है।

॥ इस प्रकार इक्कीसवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

अथ निविद्धानीयं सूक्तं विधत्ते—

**'यो जात एव प्रथमो मनस्वानिति' सूक्तं समानोदर्कं तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति।

अस्मिन् सूक्ते 'नृम्णस्य मह्ना स जनास इन्द्रः' इत्यन्तिमः पादः सर्वास्वृक्षु[2] समानः, तस्मादिदं सूक्तं समानोदर्कलिङ्गोपेतम् ॥

२ [२१.२] तृतीय दिन में प्रयुक्त 'यो जात एव प्रथमः' इत्यादि सूक्त की [सभी ऋचा के अन्तिम पाद 'नृम्णस्य मह्ना स जनास इन्द्रः' होने से] समान समाप्ति तृतीय दिन का निरूपक है।

एतत्सूक्तं प्रशंसति—

**तदु सजनीयमेतद्वा इन्द्रस्येन्द्रियं यत्सजनीयमेतस्मिन् वै शस्यमान इन्द्रमिन्द्रियमाविशति ॥** इति।

'तदु' तच्च सूक्तं 'सजनीयं' सजनशब्दोपेतं 'स जनास इन्द्रः' इति श्रुतत्वात्। बहुजनयुक्तत्वमेवैतन्मुख्यपर्वकारणम्। किञ्च, यत् 'सजनीयं' सूक्तमस्ति, एतदेवेन्द्रस्येन्द्रियमुच्यते। कथं तत्? उच्यते—पुरा कदाचिदेतस्मिन्नेव सूक्ते शस्यमाने सति 'इन्द्रियं' चक्षुरादिपाटवम् 'इन्द्रं' देवमाविशति। तस्मादिन्द्रियप्रवेशहेतुत्वादिदं प्रशस्तम् ॥

---

१. ऋ० १०.१७८। २. ऋ० २.१२.१–१५।

यह [सूक्त] 'स जन' शब्द से युक्त है, जो 'स जन' शब्द से युक्त है वही इन्द्र की इन्द्रिय [शक्ति] है क्योंकि इसके शसन करने से इन्द्र में [चक्षु आदि] इन्द्रिय की पटुता का प्रवेश होता है।

शाखान्तराध्येतृप्रसिद्धया प्रशंसति—

**तद्धाप्याहुश्छन्दोगास्तृतीयेऽहनि बह्वृचा इन्द्रस्येन्द्रियं शंसन्तीति ॥ इति ।**

'तद्ध' तस्मिन्नेव सजनीयसूक्ते 'छन्दोगा' छन्दांसि गायन्तीति सामवेदिनः परस्परमेवमाहुः—पृष्ठ्यस्य षडहस्य तृतीयेऽहनि 'बह्वृचा' ऋग्वेदाध्यायिनो होतार इन्द्रस्य सम्बन्धीन्द्रियरूपं सजनीयसूक्तं शंसन्तीति । अतोऽस्य सूक्तस्येन्द्रियप्रदत्वप्रसिद्धिर्महती ॥

उसी [ 'स जन' शब्द से युक्त सूक्त] में सामवेद का गान करने वाले [परस्पर] कहते हैं—[पृष्ठ्यषडह के] तृतीय दिन ऋग्वेद का पाठ करने वाले [होता] इन्द्र सम्बन्धी इन्द्रिय रूप 'स जन' शब्द से युक्त सूक्त का शसन करते हैं।

ऋषिसम्बन्धमुपजीव्य प्रशंसति—

**तदु गार्त्समदमेतेन वै गृत्समद इन्द्रस्य प्रियं धामोपागच्छत् स परमं लोकमजयत् ॥ इति ।**

गृत्समदो नाम कश्चिदृषिः, तेन दृष्टत्वाद् इदं सूक्तं 'गार्त्समदम्'। कथमिति ? तदुच्यते—'एतेनैव' सजनीयसूक्तेन गृत्समदाख्यो महर्षिः इन्द्रं तोषयित्वा, तस्येन्द्रस्य प्रियं स्थानं प्राप्य ततः स तेनेन्द्रेणानुगृहीत उत्तमं लोकं जितवान् ॥

यह गृत्समद ऋषि द्वारा दृष्ट [सूक्त] है। इस [सूक्त] के द्वारा गृत्समद [इन्द्र को प्रसन्न कर उन] इन्द्र के परम धाम को गए और उन्होंने [उन इन्द्र से अनुगृहीत हो] उत्तम लोक को जीता।

वेदनं प्रशंसति—

**उपेन्द्रस्य प्रियं धाम गच्छति, जयति परमं लोकं य एवं वेद ॥ इति ।**

जो इस प्रकार जानता है, वह उपेन्द्र के प्रिय धाम को जाता है और [उनके] उत्तम लोक को जीतता है।

वैश्वदेवस्य शस्त्रे तृचद्वयं विधत्ते—

**तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ, राथन्तरेऽहनि तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥ इति ।**

'तत्सवितुः'-इति तृचः[1] प्रतिपत्, स च रथन्तरसामसम्बन्धी । 'अद्या नो देव सवितः'[2] इत्यनुचरः । तदेतद् उभयं रथन्तरसम्बन्धि यस्मिन् योग्यम् ॥

१ ऋ० ५.८२.१-३ । २ ऋ० ५.८२.४-६ ।

'तत्सवितुः' आदि तृच और 'अद्या नो देव' आदि तृच वैश्वदेव के प्रतिपद् एवं अनुचर हैं। रथन्तर साम सम्बन्धी दिन तृतीय दिन में यह तृतीय दिन का निरूपक है।

सवितृदेवताकं सूक्तान्तरं दर्शयति—

**तद्देवस्य सवितुर्वार्यं महदिति सावित्रम् ॥** इति ।

'तत्' एतत् 'सावित्रं' सवितृदेवताकम्[1]। तत्र हि सवितुर्देवस्य सम्बन्धि 'वार्यं' वरणीयं 'महत्' अधिकं तेज इत्ययमर्थः श्रूयते। अतः सवितृसम्बन्धश्रवणात् सावित्रम् ॥

उस 'सविता देव का वरणीय महान् तेज' आदि [अर्थ के श्रवण से] 'तद्देवस्य' इत्यादि सूक्त [सवितृ देव से सम्बन्धित होने से] सवितृ देवताक है।

पूर्वत्र तृचे रथन्तरसम्बन्धरूपं लिङ्गमुक्तम्, अत्र तु लिङ्गान्तरं दर्शयति—

**अन्तो वै महदन्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति ।

अत्र प्रथमपादे महच्छब्दोऽस्ति। महच्च वस्तु काम्यमानानां वस्तूनामन्तो भवति, न खलु महतोऽप्यधिकं केनचित् क्वचित् किंचिदधिकं काम्यते तादृशस्याभावात्। तस्मान्महद्वस्त्वेवान्तो भवति। इदं च तृतीयमहः प्रथमस्य त्र्यहस्यान्तः। अतः 'अन्तः' अन्तत्वसाम्यात् तृतीयेऽहनि 'तद्देवस्य' इत्यादिकं योग्यम्। यद्यप्यन्तशब्दोऽत्र नास्ति, तथाप्युक्तरीत्यान्तशब्दार्थस्य सद्भावाद् अन्तवल्लिङ्गमस्ति ॥

[इसके प्रथम पाद में] यद्यपि तृतीय दिन का लक्षक 'अन्त' शब्द नहीं है तथापि 'महत्' शब्द है। वस्तुतः इच्छित वस्तु में महान् वस्तु की ही कामना होने से] 'महत्' ही अन्त है, तृतीय दिन [प्रथम त्र्यह का] अन्त है। अतः तृतीय दिन में यह [सूक्त अन्त साम्य के कारण] तृतीय दिन का निरूपक है।

तृचान्तरं विधत्ते—

**'घृतेन द्यावापृथिवी अभीवृते'[2] इति द्यावापृथिवीयं घृतश्रिया घृतपृचा घृतावृधेति पुनरावृत्तं पुनर्निनृत्तं तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति ।

द्यावापृथिवीदेवताकत्वं विस्पष्टम्। घृतश्रियेत्यादिः द्वितीयः पादः, तत्र घृतशब्दस्य पुनः पुनरावृत्तिरेव लिङ्गम्। तथा चावृत्त्या नृत्तगततानुकरणप्रतीतेः 'पुनर्निनृत्तं' लिङ्गान्तरम् ॥

'घृतेन द्यावापृथिवी' आदि द्यावापृथिवी देवताक तृच [के द्वितीय पाद] में 'घृतश्रिया', 'घृतपृचा' और 'घृतावृध' आदि पदों में ['घृत' शब्द की] पुनरावृत्ति है और [उस आवृत्ति के कारण] यह पुनः निनृत्त है; अतः [पृष्ठ्यषडह के] तृतीय दिन में यह तृतीय दिन का निरूपक है।

---

१. ऋ० ४.५३।        २. ऋ० ६.७०।

ऋभुदेवताक सूक्तान्तर विधत्ते—

**'अनश्वो जातो अनभीशुरुक्थ्य' इत्यार्भव[1], रथस्त्रिचक्र इति त्रिवत्, तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति ।

द्वितीयस्या ऋचश्चतुर्थपादे 'ऋभवो वेदयामसि' इति श्रवणात् ऋभुदेवताकत्वम् । प्रथमाया ऋचो द्वितीयपादे 'रथस्त्रिचक्र' इति त्रिशब्दोपेत लिङ्गम् ॥

'अनश्वो जातो' इत्यादि सूक्त [की द्वितीय ऋचा के चतुर्थ पाद में 'ऋभव' शब्द होने से] ऋभु देवताक है। [प्रथम ऋचा के द्वितीय पाद के] 'रथस्त्रिचक्र' शब्द के 'त्रि' शब्द से युक्त होने से [पृष्ठ्यषडह के] तृतीय दिन में यह तृतीय दिन का चिह्न है।

बहुदेवताक सूक्तान्तर विधत्ते—

**'परावतो ये दिधिषन्त आप्यमिति' वैश्वदेवम्, अन्तो वै परावतोऽन्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥** इति ।

द्वितीयस्या ऋच पूर्वार्ध एव पठयते— विश्वा हि वो नमस्यानि वन्द्या नामानि देवा उत यज्ञियानि व इति । तत्र देवा इति बहुवचनम् अत्र प्रथमाया ऋच चतुर्थपादे 'देवा आसत' इति बहुवचनम् तेन वैश्वदेव बहुदेवताकम् इदम् । परावत इत्यनेन शब्देन दूरदेशोऽभिधीयते, स च निवासदेशापेक्षयाऽन्तो भवति । तृतीयमहश्च त्र्यहस्यान्त । अत पूर्ववत् अयतोऽन्तवल्लिङ्गमस्ति[3] ॥

'परावत' इत्यादि सूक्त [के द्वितीय ऋचा के पूर्वार्ध में 'देवा' और प्रथम ऋचा के चतुर्थ पाद में 'देवा आसते' यह बहुवचनान्त पद होने से] वैश्वदेव देवताक अर्थात् बहु देवताक है। 'परावत' [शब्द का अर्थ 'दूर देश' है वस्तुत यह निवासस्थल की अपेक्षा] अन्त वाला है, और तृतीय दिन [त्र्यह का] अन्तिम दिन है। अत [पृष्ठ्यषडह के] तृतीय दिन में यह तृतीय दिन का निष्पक है।

तदेतत् वैश्वदेवसूक्त प्रशसति—

**तदु गयमेतेन वै गय प्लातो विश्वेषा देवाना प्रिय धामोपागच्छत् स परम लोकमजयत् ॥** इति ।

'तदु' तदेतत्सूक्त 'गाय' गयेन दृष्टम् । प्लतनामकस्य[4] पुत्रो गयनामको महर्षि 'एतेन' परावत इत्यादिसूक्तेन विश्वेषा देवाना प्रिय स्थान प्राप्य तैरनुगृहीत उत्तम लोक जितवान् ॥

---

१ ऋ० ४ ३६ ।  २ ऋ० १० ६३ ।

३ 'अन्तपरावच्छब्दौ दूरार्थौ'—इति षड्गुरुशिष्य ।

४ गयो नाम प्लते पुत्रा न तु प्लतस्य, 'एवा प्लत सूनु रवीवृधदिति' (१० ६३ १७) लिङ्गात् । प्लातवचन स्वामग्ने गय (सूत्र ५ ९) इति वदस्यात्रेयत्व मा भूत् ।— इति ऋक्सर्वानुक्रमण्या १० ६३ सूत्रे षड्गुरुशिष्य ।

यह सूक्त गय ऋषि द्वारा दृष्ट है। इससे प्लत के पुत्र गय नामक महर्षि ने विश्वेदेवों के प्रिय धाम को प्राप्त किया और उनसे अनुगृहीत होकर उत्तम लोक को जीता।

वेदनं प्रशंसति—

**उप विश्वेषां देवानां प्रियं धाम गच्छति, जयति परमं लोकं य एवं वेद ॥ इति।**

जो इस प्रकार जानता है वह विश्वेदेवों के प्रिय धाम को जाता है और उत्तम लोक को जीता है।

शस्त्रान्तरस्य प्रतिपत्सूक्तं विधत्ते—

**वैश्वानराय धिषणामृतावृध इत्याग्निमारुतस्य प्रतिपद्[1], अन्तो वै धिषणाऽन्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥ इति।**

अत्र धिषणेत्यन्तःकरणवाचकः श्रूयते। अन्तःकरणं च भूम्यादरन्तं प्राप्तुं शक्नोति। तथा चान्यत्र श्रूयते—'न वा इमाम् अग्नयो न वाऽवकारोरस्य सद्यः पर्याप्तुम् अर्हति, मनो वा इमां सद्यः पर्याप्तुमर्हति'—इति। 'अन्तं महमा' भूम्याद्यन्तप्राप्तिहेतुत्वाद् 'धिषणा'[2]-शब्दोऽन्तस्यापलक्षकः। अन्तस्तृतीयमित्यादि पूर्ववत् ॥

'वैश्वानराय' इत्यादि ऋचा आग्निमारुत शस्त्र की प्रतिपत् है। 'धिषणा' [शब्द का अर्थ] 'स्तुति' है [क्योंकि यह अन्तःकरण से उद्भूत होती है अतः] अन्तवाली है, और तृतीय दिन [त्र्यह का] अन्तिम दिन है। अतः [पृष्ठ्यषडह के] तृतीय दिन में यह तृतीय दिन का निरूपक है।

मरुद्देवताकं सूक्तं विधत्ते—

**'धारावरा मरुतो धृष्ण्वोजस'[3] इति मारुतं वह्वभिव्याहृत्यमन्तो वै वह्वन्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपम् ॥ इति।**

मारुतत्वमत्र विस्पष्टम्। वहुविधम् 'अभिव्याहृत्यम्' अभिव्याहरणीयं शंसनीयमृग्जातं यस्मिन् सूक्ते तद् 'वह्वभिव्याहृत्यम्'। अत्र हि पञ्चदशर्चं शंसनाया नास्ति बहुत्वम्। बहूनां

---

१. ऋ० ३.२.१।

२ (i) 'वाग् धिषणा। अन्तो निर्णयः।

मनोगतं स्वरूपं वाचा निर्णीयते खलु।

आरण्यक (ऐ० आ० ३.१.१) हि वक्ष्यते—मनसा अग्रे संकल्पयत्यथ वाचा व्याहरतीति—इति षड्गुरुशिष्यः।

(ii) अन्तो वै विपरीतलक्षणा। नहि वाचोऽन्तोऽस्ति। नहि वै वागपरीमिते'—इति लिङ्गाद्'—इति गोविन्दस्वामी।

३. ऋ० २.३४।

देवानामभिव्याहरणीयाना विद्यमानत्वाद् बहुत्वम् । तस्य बहुत्वस्य अनेकत्वद्वित्वापेक्षयाऽन्तत्वम् । अतोऽन्तवल्लिङ्गमस्ति ॥

'धारावरा' इत्यादि बहुत प्रकार से शसनीय सूक्त मरुद्देवताक है। [क्योंकि इस सूक्त की पन्द्रह ऋचाएँ शसनीय हैं और बहुत देवताओं को अभिव्याहरणीय है, अत यह बहुत्व अनेक औरद्वित्व की अपेक्षा] अन्त वाला है, और तृतीय दिन [त्र्यह का] अन्तिम दिन है। अत. [पृष्ठ्यषडह के] तृतीय दिन में यह तृतीय दिन का निरूपक है।

ऋगन्तर विधत्ते—

**'जातवेदसे सुनवाम सोममिति'[1] जातवेदस्याऽच्युता ॥** इति ।

अच्युत व सर्वेषामह्ना साधारण लिङ्गम् ॥

'जातवेदसे सुनवाम' आदि जातवेद अग्नि देवताक अच्युत [अर्थात् सभी अह के साधारण] ऋचा है।

जातवेदोदेवताक सूक्त विधत्ते—

**'त्वमग्ने प्रथमो अङ्गिरा ऋषिरिति'[2] जातवेदस्य पुरस्तादुदर्क तृतीयेऽहनि तृतीयस्याह्नो रूपम, त्व त्वमित्युत्तर त्र्यहमभिवदति सन्तत्यै ॥** इति ।

यद्यपि 'त्वमग्ने' इत्यग्निरेव देवता प्रतीयते, तथाप्यसौ जातवेद शब्दवाच्यो भवति । जातस्य सर्वस्य जगतो वेदितत्वात् । तस्मादेतत् सूक्त 'जातवेदस्यम्' । तच्च 'पुरस्तादुदर्कम्' उदर्कशब्दोऽवसानवचन, अवसान च विच्छेद । सोऽपि द्विविध — पुरस्ताद् उपरिष्टाच्च । उपक्रमात् पूर्व शसनीयस्याभावात् अय पूर्वकालीनो विच्छेद पुरस्तादुदर्क इत्युच्यते । शसनादूर्ध्वकालीनो विच्छेद उपरिष्टादुदर्क । समानोदर्कत्व च तृतीयस्याह्नो लिङ्ग युक्तम् । तत्रोपरिष्टादुदर्कसाम्य सजनीयादिषूदाहृतम्[3] । अत्र पुरस्तादुदर्कसाम्य लिङ्गत्वेनोदाह्रियते । तथा ह्यस्मिन् सूक्ते सर्वास्वप्यृक्षु 'त्वमग्ने' इति पदद्वय समाम्नातम् । तदिद समानोदर्कत्वमेव लिङ्गम् । असकृदभिधानादेव पुनरावृत्तलिङ्ग च वक्तु शक्यम् । किच, लोके कश्चित्पुरुष सर्वोन्याभिमुखीकृत्य त्वमिति वदन्ति, एवमत्राप्युत्तरत्र्यहमभिमुखीकृत्यैव प्रत्यृच त्व त्वमिति शब्द प्रयुज्यते, तच्च प्रथमद्वितीययोस्त्र्यहयोश्च 'सततत्यै' विच्छेदराहित्याय भवति ॥

'त्वमग्ने प्रथम' आदि सूक्त जातवेद [= सभी जगत् के ज्ञाता अग्नि] देवताक है। [प्रत्येक मन्त्र के] प्रारम्भ में ['त्वमग्ने' होने से] समानता है जो तृतीय दिन में प्रयुक्त तृतीय दिन का लक्षक है। 'त्व त्व' इस प्रकार का प्रत्येक ऋचा में अभिधान अगले त्र्यह

---

१ ऋ० १ ९९ ।　　२ ऋ० १ ३१ ।　　३ द्र० इत पूर्वम् (२१ २) पृ० ७२० ।

[चौथे, पांचवें और छठें दिन] को लक्ष्य करके किया गया है, जो [प्रथम और द्वितीय त्र्यह को] निरन्तरता के लिए [अर्थात् विच्छेदराहित्य के लिए] होता है।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

**संततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति ॥ २ ॥** इति ।

'ये' पुरुषा प्रत्यूचं त्वं-शब्दैः सूचितं त्र्यहयोः सातत्यं विद्वांसोऽनुतिष्ठन्ति, ते पुरुषाः 'संततैः' परस्परसम्बद्धैः, अत एव विच्छेदरहितैस्त्र्यहैरनुतिष्ठन्ति, तेषां विघ्नो न भवतीत्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम-पञ्चिकायाः प्रथमाध्याये (एकविंशाध्याये) द्वितीयः खण्डः ॥ २ ॥ [१५५]

जो इस प्रकार ['त्वं' शब्द से सूचित] निरन्तरता को जानते हुए अनुष्ठान करते हैं वे परस्पर सम्बन्धित अतएव विच्छेदरहित त्र्यह के द्वारा अनुष्ठान करते हैं।

॥ इस प्रकार इक्कीसवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

द्वादशाहमध्यवर्तिनो नवरात्रस्य 'त्रयस्त्र वा एते त्र्यहाः' इति यत्पूर्वमुक्तम्[1], तत्र प्रथमस्त्र्यहोऽभिहितः। स च पृष्ठ्यषडहस्य पूर्वो भागः। अथ तस्योत्तरो भागो नवरात्रे मध्यमस्त्र्यहो वक्तव्यः। तस्मिंश्च यत्प्रथममहस्तन्नवरात्रे चतुर्थमहर्भवति। तत्र शस्त्रक्लृप्ति-मुपरिष्टाद् विधास्यते। आदौ तावन्न्यूङ्खो वक्तव्यस्तदर्थं प्रस्तौति—

**आप्यन्ते वै स्तोमा आप्यन्ते छन्दांसि तृतीयेऽहन्यैतदेव तत उच्छिष्यते वागित्येव तदेतदक्षरं त्र्यक्षरं वागित्येकमक्षरमक्षरमिति त्र्यक्षरम् ॥** इति ।

पूर्वोक्तेषु त्र्यहेषु त्रिवृत्-पञ्चदश सप्तदशाख्याः 'स्तोमाः' 'आप्यन्ते' समाप्ता इत्यर्थः। तथा गायत्रीत्रिष्टुब्जगतीत्येतानि 'छन्दांस्याप्यन्ते' समाप्तानि। तत ऊर्ध्वम् 'एतदेव' वक्ष्यमाणम् 'उच्छिष्यते' पूर्वमनुक्तत्वाद् उत्कर्षेणावशिष्यते। तस्यैवावशिष्टस्य 'वागिति' निर्देशः। एवकारस्तु पूर्वोक्तदेवताव्यावृत्त्यर्थः। 'अग्निर्वै देवता', 'इन्द्रो वै देवता', 'विश्वे वै देवा देवता'—इत्येवं तस्य तस्याह्नो निर्वाहकं देवतात्रयं पूर्वमुक्तत्वात्[2] नावशिष्टम्। वाग्देवता पूर्वमनुक्तत्वादवशिष्टा। तस्य वाचकं 'वागित्येतत्' शब्दरूपं 'तदेतदक्षरं' वका-रादिवर्णात्मकं पुनरपि 'त्र्यक्षरं' त्रिभिरक्षरैरुपेतम्। कथमेतदिति ? तदेतत् स्पष्टीक्रियते— वागित्युक्ते सत्येकाक्षरं भवति। वकारगकाराक्षराभ्यां युक्तस्याकाराक्षरस्यैकत्वात्। तदेवाक्षरमिति वाग्देवतानाम्नोच्चार्यमाणं त्र्यक्षरं भवति। अतो वाग्देवताया नाम्न्येक-रूपत्वं त्रिरूपत्वं च सम्पन्नम् ॥

---

१. द्र० इतः पूर्वम्, पृ० ६६६ ।   २. द्र० इतः पूर्वम्, पृ० ६८९, ६९९, ७११ ।

v. ३ [xxi. ३] [पूर्वोक्त] त्र्यह में [सभी त्रिवृत्-पञ्चदश-सप्तदश नामक] स्तोम समाप्त हो जाते हैं और [गायत्री, त्रिष्टुप्, जगती—ये] छन्द भी समाप्त हो जाते हैं। इसके बाद [अर्थात् पूर्वोक्त अग्नि, इन्द्र और विश्वेदेव के बाद] मात्र एक ही अवशिष्ट रहता है वह है 'वाक्'। 'वाक्' यह शब्द [वकारादिवर्णात्मक] तीन अक्षरों से युक्त है। 'वाक्' यह [वकार-ककार से युक्त केवल आकार रूप अक्षर के होने से] एक अक्षर है। [अतः वाग्देवता के नाम में एकरूपत्व और त्रिरूपत्व होने से] वही अक्षर वाग्देवता नाम से अभिहित त्र्यक्षर होता है।

तत्र रूपत्रयसपत्तौ प्रयोजनमाह—

**स एवैष उत्तरस्त्र्यहो वागेक गौरेकं द्यौरेकम् ॥ इति ।**

वाग्देवताया अक्षरशब्देन व्यवहारे सति योऽयमकारादीना त्रयाणा समूह, स एष एव 'उत्तरस्त्र्यह' चतुर्थपञ्चमषष्ठाहरूपोऽभवत्। उत्तरस्त्र्याहस्त्रयस्य निर्वाहकं देवतात्रयस्वरूप सम्पन्नमित्यर्थः। तत्र लोकत्रयप्रसिद्धा या वाग्देवता तदेकं स्वरूपम्, या च गौर्देवता तद्द्वितीय स्वरूपम्, याऽपि द्यौर्देवता तत्तृतीय स्वरूपम्।

[वाग्देवता का जो त्र्यक्षर समूह है] वह यह ही बाद के [चौथे, पांचवें और छठें दिन रूपी] त्र्यह हैं। [लोकत्रय में प्रसिद्ध] जो वाग्देवता है, वह एक स्वरूप है और जो गौ देवता है वह एक [दूसरा] स्वरूप है और जो द्यौ देवता है वह एक [तीसरा] स्वरूप है।

एव सति किं फलितमित्याशङ्क्य फलित दर्शयति—

**ततो वै वागेव चतुर्थमहर्वहति ॥ इति ।**

यस्माद्देवतात्रय निष्पन्न 'ततो वै' तस्मादेव कारणाद् वागेव प्रथमदेवता मध्यमत्र्यहस्य प्रथम नवरात्रापेक्षया चतुर्थमहर्वहति ॥

[क्योंकि तीन देव हैं] इसीलिए वस्तुत वाक् ही [मध्यम त्र्यह के प्रथम देवता हैं जो प्रथम नवरात्र की अपेक्षा] चतुर्थ अह. के निर्वाहक हैं।

एतस्मिन्नहनि न्यूङ्ख विधत्ते—

**तद् यच्चतुर्थमहर्न्यूङ्खयन्त्येतदेव तदक्षरमभ्यायच्छन्त्येतद्वर्धयन्त्येतत्प्रविभावयिषन्ति चतुर्थस्याह्न उद्यत्यै ॥ इति ।**

यस्मात्कारणाद् वागेव चतुर्थस्याह्नो निर्वाहिका, तस्मात्कारणाद् यदि चतुर्थमहरुपेता न्यूङ्खयन्ति, ओकारस्य सूत्रोक्तप्रकारेणोच्चारणविशेष कुर्यु., तदानीमेतदेव वागित्येतदक्षरं देवताया वाचकम् 'अभि' लक्ष्य 'आयच्छन्ति' उद्यम कुर्वन्ति। न केवलमुद्यमः किं त्वेतदक्षर 'वर्धयन्ति'। वृद्धिप्रकार एव 'प्रविभावयिषन्ति' इत्यनेन स्पष्टीक्रियते। प्रभुत्व विभुत्व वागक्षरस्य कर्तुमिच्छन्ति। प्रभुत्व = सामर्थ्यं, विभुत्व = विशालत्वम् ॥

न्यूह्नस्वरूपम् आश्वलायनेन वर्णितम्—'चतुर्थेऽह्नि प्रातरनुवाकप्रतिपदर्धर्चयोर्न्यूह्व.। द्वितीय स्वरमोकार त्रिमात्रमुदात्त त्रि । तस्य तस्य चोपरिष्टाद् अपरिमितान् पञ्च वाऽर्धौकाराननुदात्तान् उत्तमस्य तु त्रीन्, पूर्वमक्षरं निह्नुते न्यूह्वमाने'[1] इति । अस्यायमर्थः—चतुर्थेऽह्नि प्राप्ते सति प्रातरनुवाकस्य येयमृक्प्रथमाऽस्ति, तस्या ऋचो यौ द्वावर्धर्चौ तयोरर्धर्चयोर्यावादी, तयोराद्योर्न्यूह्व. कर्तव्य । नितरामत्यन्तविषमप्रकारेण 'ऊह्वनम्' उच्चारण 'न्यूह्व'[2]। कथमिति ? तदेव स्पष्टीक्रियते—'आपो रेवती क्षयथेति'[3] प्रातरनुवाकस्य प्रतिपत् । तस्या पूर्वार्धस्याऽऽद्यो योऽय द्वितीय स्वर ओकार पकारादूर्ध्वभावी, त त्रिमात्रोपेतमुदात्तस्वरयुक्त त्रिवारमुच्चारयेत् । त एते त्रय ओङ्कारा सपद्यन्ते। तत्रैकैकस्यौकारस्योपरि पुनरप्योकारा अर्धस्वरूपा ह्रस्वमात्रा अपरिमिता पञ्च वोच्चारणीया.। ते चार्धौकारा सर्वेऽप्यनुदात्ता । उत्तमस्य तु त्रिमात्रस्योकारस्योपरि त्रीनर्धौकारानुच्चारयेत् । तेष्वर्धौकारेषु प्रथममक्षर 'निह्नुयात्' अत्यन्तनीचस्वरेणानुदात्त कुर्यादिति । एव सति उदात्तास्त्रिमात्रास्त्रय आकारा अर्धौकारास्त्रयोदश इत्येवमोकारा· षोडश सपद्यन्ते । प्रथमद्वितीययोस्त्रिमात्रयोर्मध्ये पञ्चानुदात्ता अर्धौकारा , द्वितीयतृतीययोस्त्रिमात्रयोर्मध्ये पञ्चानुदात्ता अर्धौकारा , तृतीयस्य त्रिमात्रस्योपरिष्टाद् अनुदात्ता अर्धौकारास्त्रय , सोऽयमुच्चारणविशेषो न्यूह्न इत्युच्यते। सोऽयं न्यूह्वश्चतुर्थस्याह्न 'उद्यत्यै' उद्यमनाय सर्वस्मादुत्कर्षाय भवति ॥

[क्योंकि चतुर्थ दिन के निर्वाहक देवता वाक् हैं] इसीलिए जो चतुर्थ दिन न्यूह्व [आश्वलायन सूत्र (७-११) के अनुसार ओकार का विशेष प्रकार से उच्चारण] करते हैं, वह इसी [वाग्देवता] के वाचक अक्षर को लक्ष्य करके उद्यम करते हैं ।[4] [न केवल उद्यम ही किन्तु] इसे बढाते भी हैं; और इस [अक्षर] के सामर्थ्य[5] और विभुत्व की इच्छा करते हैं जो [न्यूह्व] चतुर्थ दिन के उत्कर्ष के लिए ही होता है ।

---

१. आश्व० श्रौ० ७ ११ १–५ ।
२. तदपि निदर्शनायोदाहरिष्याम —
'आपो ३ ओ आ आ ओ ओ ओ ३ ओ आ ओ ओ ओ ओ ३ रेवती क्षयथा हि वस्व क्रतुश्च भद्र बिभृथामृतञ्च । रायो ३ ओ ओ आ ओ आ ओ ३ ओ आ ओ आ आ ओ ३ ओ ओ आश्च स्थ स्वपत्यस्य पत्नी सरस्वती तद् गृणते वयाधो३मापो३' —इति आश्व० श्रौ० ७ ११.७ ।
३ ऋ० १० ३०.१२ ।
४ 'आयच्छन्ति=दीर्घयन्ति । आयामो हि दैर्घ्यम्'—इति षड्गुरुशिष्य ।
५. विशाल वर्तुमिच्छन्ति प्रकर्षेण हि वाङ्मयम् ।
भुवो णिच. सनि द्वित्व न छन्दस्त्वाद्, गुण. च इट् ॥
उद्यतिरुद्यमो दैर्घ्यम्—इति षड्गुरुशिष्य· ।

तमिमं न्यूङ्खं प्रशंसति—

**अन्नं वै न्यूङ्खो यदेळवा अभिगेष्णाश्चरन्त्ययान्नाद्यं प्रजायते, तद्यच्चतुर्थं-महर्न्यूङ्खयन्त्यन्नमेव तत्प्रजनयन्त्यन्नाद्यस्य प्रजात्यै; तस्माच्चतुर्थमहर्जातवद्भवति ॥** इति ।

योऽयमुक्तो न्यूङ्खोऽस्ति, तदेतत् 'अन्नं वै' अन्नसाधनत्वादन्नस्वरूपमेव । कथमेतदिति तदुच्यते—इळाशब्दोऽन्नवाची, तद्येषां कर्षकाणामस्ति, ते कर्षका 'इळवा' । ते च वर्षन्तं पर्जन्यम् 'अभि' लक्ष्य 'गेष्णा' हर्षेण गायन्तो यदा चरन्ति, अथ तदानीमन्नाद्यं प्रजायते । स्वकालवृष्टिसमृद्धिं च दृष्ट्वा कर्षका हृष्यन्ति । हृष्टाश्च गायन्तीति यदस्ति, तत्सदृशमिदं चतुर्थेऽहनि न्यूङ्खरूपमुच्चारणम् । अतोऽनेनोच्चारणनान्नमुत्पादयन्ति । तदेवमन्नाद्यस्य 'प्रजात्यै' उत्पादनार्थं सपद्यते । 'तस्मात्' अन्नप्रजातियुक्तत्वादेव चतुर्थमहः 'जातवद्भवति' । जातवत्त्वमेतस्मिन्नहनि मन्त्रवचनेनोपरिष्टाद् वक्ष्यते ॥

**अन्न ही न्यूङ्ख है । [अन्न का वाचक 'इळा' शब्द कृषकों से सम्बन्धित होने से इळवा अर्थात्] कृषक जैसे वर्षा करने वाले पर्जन्य को लक्ष्य करके हर्ष से गान करते हुए जब विचरण करते हैं और जो वे अन्न का उत्पादन करते हैं वैसे ही चतुर्थ दिन जो न्यूङ्ख करते हैं तो मानो वे इस [उच्चारण] से अन्न का ही उत्पादन करते हैं । इस प्रकार यह अन्न के उत्पादनार्थ होता है । इसलिए [अन्न उत्पादन से युक्त] चतुर्थ दिन जातवद् अर्थात् 'जात' [ = उत्पत्ति] शब्द से युक्त होता है ।**

न्यूङ्खस्य मन्त्रमध्ये स्थानविशेषं विधत्ते—

**चतुरक्षरेण न्यूङ्खयेदित्याहुश्चतुष्पादा वै पशवः पशूनामवरुद्ध्यै ॥** इति ।

मन्त्रे योऽयमादौ चतुरक्षरो भाग, तेन 'न्यूङ्खयेत्' चत्वार्यक्षराण्युच्चार्य तदन्ते यथोक्त न्यूङ्खं प्रयुञ्ज्यादिति केचिद्याज्ञिका आहु । चतु सख्यया पादचतुष्ट्योपेताना पशूना प्राप्तिर्भवतीति तदभिप्रायः ॥

**कुछ याज्ञिक कहते हैं कि [मन्त्र के आदि के] चार अक्षर के द्वारा [अर्थात् चार अक्षर का उच्चारण करने के बाद] न्यूङ्ख करना चाहिए; क्योंकि पशु चार पैर से युक्त होते हैं; अतः यह पशुओं की प्राप्ति कराने के लिए होता है ।**

पक्षान्तरं विधत्ते—

**त्र्यक्षरेण न्यूङ्खयेदित्याहुस्त्रयो वा इमे त्रिवृतो[1] लोका[2] एषामेव लोकानाम-भिजित्यै ॥** इति ।

---

१. (i) 'बुभूखाख्यास्त्रयो लोका अन्योन्यस्योपकारिण.'—इति षड्गुरुशिष्यः । (ii) 'लोकाना त्रिवृत्त्व पृथिव्यप्तेजसा त्रिवृत्करणात् । तथाहि श्रुति.—'तासा त्रिवृत त्रिवृतमेकैका करवाणि'—(छा० उ० ६ ३)—इति गोविन्दस्वामी । (iii) 'इमे हि लोका. त्रयो भवन्ति, त्रिवृतश्च भवन्ति, प्रत्येक पार्थिवाप्यतैजसस्वभावत्वादिगुणाश्च भवन्ति'—भट्टभास्करः ।   २. द्र० इतः पूर्वम्, पृ० २७९ ।

पूर्ववद् व्याख्येयम् ॥

कुछ याज्ञिक कहते हैं कि [मन्त्र के आदि के] तीन अक्षर के द्वारा न्यूङ्ख [=ओकार का विशेष उच्चारण] करना चाहिए, क्योंकि ये त्रिवृत लोक तीन ही हैं। यह वस्तुत इन्हीं लोकों को जीतने के लिए होता है।

पक्षद्वयमुक्त्वा तृतीयपक्ष विधत्ते—

**एकाक्षरेण न्यूङ्खयेदिति ह स्माऽऽह लाङ्गलायनो ब्रह्मा मौद्गल्य एकाक्षरा वै वागेष वाव सम्प्रति न्यूङ्ख न्यूङ्खयति य एकाक्षरेण न्यूङ्खयतीति ॥** इति।

लाङ्गलाख्यस्य महर्षे पौत्रो 'लाङ्गलायन'। मुद्गलाख्यस्य पुत्र 'मौद्गल्य'। स च 'ब्रह्मा' इत्येतन्नामको ब्राह्मण। स होकमक्षरमुच्चारयन्न्यूङ्खयेदिति वक्ति। तत्रेयमुपपत्ति,—यय वागहर्देवतेति पूर्वमुक्ता, सयमेकाक्षरा, तथा सति य पुमानेकाक्षरेण न्यूङ्खयति, एप एव सम्प्रति सम्यङ्न्यूङ्खमनुतिष्ठति। अक्षरसङ्ख्याया देवतानुसारित्वादिति तस्य महर्षेरभिप्राय ॥

[मन्त्र के आदि के] एक अक्षर के द्वारा न्यूङ्ख करना चाहिए—ऐसा [लाङ्गल ऋषि के पौत्र] लाङ्गलायन ब्रह्मा [मुद्गल के पुत्र] मौद्गल्यका कथन है, क्योंकि वाग्देवता एक अक्षर से युक्त है। इस प्रकार जो एक अक्षर से न्यूङ्ख करता है वही सम्यक् रूप से न्यूङ्ख का अनुष्ठान करता है।

तदेतत्पक्षत्रयमङ्गीकृत्य स्वाभिप्रेतपक्ष विधत्ते—

**द्व्यक्षरेणैव न्यूङ्खयेत् प्रतिष्ठाया एव, द्विप्रतिष्ठो वै पुरुषश्चतुष्पादा पशवो यजमानमेव तद्द्विप्रतिष्ठ चतुष्पात्सु पशुषु प्रतिष्ठापयति, तस्माद् द्व्यक्षरेणैव न्यूङ्खयेत् ॥** इति।

एवकार पूर्वोक्तपक्षत्रयव्यावृत्त्यर्थ। 'प्रतिष्ठाया एव' यजमानस्य प्रतिष्ठार्थमेव हि द्विसख्या, द्वाभ्या पदाभ्यामवस्थितत्वात् पुंसो 'द्विप्रतिष्ठ'[1]। स्पष्टमन्यत् ॥

[सिद्धान्त पक्ष यह है कि] दो अक्षरों के द्वारा न्यूङ्ख करना चाहिए, क्योंकि यह [यजमान की] प्रतिष्ठा के लिए ही है, वस्तुत पुरुष दो पैरों से अवस्थित है और पशु चार पैर से अवस्थित हैं, अत इस प्रकार वह वस्तुत उस द्विप्रतिष्ठ यजमान को ही चौपाए पशुओं में प्रतिष्ठित करता है। इसलिए [मन्त्र के आदि के] दो अक्षरों के द्वारा न्यूङ्ख [=ओकार का विशेष उच्चारण] करना चाहिए।

प्रातरनुवाक विशेषण स्थान विधत्ते—

**मुखत प्रातरनुवाके न्यूङ्खयति, मुखतो वै प्रजा अन्नमदन्ति, मुखत एव तदन्नाद्यस्य यजमान दधाति ॥** इति।

---

१ द्र० इत पूर्वम् २८०। 'पुरुपस्य द्विप्रतिष्ठत्वमैहिकामुष्मिकसम्पदा'—इति गोविन्दस्वामी।

प्रातरनुवाके मुखत अर्धर्चस्यादौ द्वितीयस्मिन्नक्षरे न्यूङ्खयेत् । प्रजाना सर्वासा मुखेनैवान्नादनात् । तथा सति यजमानमन्नाद्यस्य 'मुखत एव' समीप एव स्थापयति ॥

प्रातरनुवाक में मुखत अर्थात अर्धर्च के आदि के द्वितीय अक्षर में न्यूङ्ख करना चाहिए, क्योंकि मुख से ही प्रजा अन्न का भक्षण करती है । इस प्रकार वस्तुत वह उस [यजमान] को खाद्यान्न के प्रारम्भ में ही स्थापित करता है ।

आज्यशस्त्रे स्थानविशेष विधत्ते—

**मध्यत आज्ये न्यूङ्खयति, मध्यतो वै प्रजा अन्न धिनोति, मध्यत एव तदन्नाद्यस्य यजमान दधाति ॥ इति ।**

'मध्यत ' तृतीयपाद इत्यर्थ । तथा च आश्वलायन आह—'अग्नि न स्ववृक्तिभि ' इत्याज्य[1], तस्योत्तमावर्जं तृतीयेषु पादेषु न्यूङ्ख '[2] इति । अन्न हि मध्यमागे धृतम् । तच्च प्रजा 'धिनोति' प्राणयति । ततस्तत्पाठेनान्नाद्यस्य मध्यतो धारणे यजमानमवस्थापयति ॥

आज्य [शस्त्र] में मध्यत अर्थात तृतीय पाद में न्यूङ्ख करना चाहिए, क्योंकि प्रजा अन्न को [मुख के] मध्य भाग से ही अनुप्राणित करती है । इस प्रकार वह वस्तुत उस [यजमान] को खाद्यान्न के मध्य भाग में ही स्थापित करता है ।

माध्यदिने सवने स्थानविशेष विधत्ते—

**मुखतो मध्यदिने न्यूङ्खयति, मुखतो वै प्रजा अन्नमदन्ति, मुखत एव तदन्नाद्यस्य यजमान दधाति ॥ इति ।**

'मुखत ' अर्धर्चादौ । तथा च आश्वलायनो मरुत्वतीय निष्केवल्य च निरूप्य पश्चादिदमाह—'श्रुधीहवीयस्य तु तृच[3] आद्येऽर्धर्चादिषु न्यूङ्ख '[4] इति ॥

मध्यन्दिन में अर्धर्च के आदि के द्वितीय अक्षर में न्यूङ्ख करना चाहिए, क्योंकि मुख से ही प्रजा अन्न का भक्षण करती है। इस प्रकार वस्तुत वह उस [यजमान] को खाद्यान्न के प्रारम्भ में ही स्थापित करता है ।

सवनद्वयगत न्यूङ्ख प्रशसति—

**तदुभयतो न्यूङ्ख परिगृह्णाति सवनाभ्यामन्नाद्यस्य परिगृहीत्यै ॥ ३ ॥ इति ।**

'उभयत ' प्रात सवने माध्यदिनसवने च[5] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया प्रथमाध्याय (एकविंशाध्याय) तृतीय खण्ड ॥ ३ ॥ [ १९६ ]

---

१ ऋ० १० २१ १ । २ आश्व० श्रौ० ७ ११ ८, ९ ।
३ ऋ० २ ११ १ । ४ आश्व० श्रौ० ७ ११ २८ ।
५ 'न्यूङ्खा षोडश ओकारास्तत्र केचिदुदात्ता केचिदनुदात्ता '—इति पा० सू० १ २ ३४ । न्यूङ्खयन्ते अधिपक्व आमिषि'—इति (ऋ० १० ९४ ३) ऋचो व्याख्याने 'न्यूङ्खयन्ते ' 'शब्दविशेष कुर्वन्ति'—इति सा०भा० । शाङ्खा०ब्रा० २२ ६, २५ १३ । शाङ्खा० श्रौ० १० ५ २१, १२ १३ १, ५, ७ । कात्या० श्रौ० १ ८ १९, ६ १९, २९ ।

इस प्रकार दोनों ही [सवना] में वह दाता सवनों के द्वारा न्यूह्व [ओकार] को परिगृहीत करता है, जो खाद्यान्न के ग्रहण के लिए होता है।

॥ इस प्रकार इक्कीसवें अध्याय के तीसरे खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

---

## अथ चतुर्थः खण्डः

चतुर्थमहर्विधत्ते—

**वाग्वै देवता चतुर्थमहर्वहत्येकविंशस्तोमो वैराजं सामानुष्टुप्छन्दो यथा-देवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद ॥** इति।

पूर्ववद् व्याख्येयम् ॥

५.४ [xxi. ४] [द्वादशाहगत नवरात्र के] चतुर्थ दिन के निर्वाहक देवता वाक् हैं, एकविंश स्तोम, वैराज साम और अनुष्टुप् छन्द [निर्वाहक] हैं। जो इस प्रकार जानता है वह इससे देवता, स्तोम, साम और छन्द का अनतिक्रमण कर समृद्ध होता है।

चतुर्थस्याह्नो गमकानि गम्यगतानि लिङ्गानि दर्शयति—

**यद्वा एति च प्रेति च तच्चतुर्थस्याह्नो रूपं, यद्ध्येव प्रथममहस्तदेतत्पुनर्य-च्चतुर्थं यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते यदयं लोकोऽभ्युदितो यज्जातवद्यद्धववद्यच्छुक्रवद्यद्वाचो रूपं यद्वैमदं यद्विरिफितं[1] यद्विच्छन्दा यदूनातिरिक्तं यद्वैराजं यदानुष्टुभं यत्करिष्यद्यत्प्रथमस्याह्नो रूपमेतानि वै चतुर्थस्याह्नो रूपाणि ॥** इति।

आकार प्रशब्दश्चेति यदेव पूर्वेन प्रथमस्याह्नो निरूपकमुक्तम्[2]। तदत्र चतुर्थस्याह्नो निरूपकम्। प्रथमत्र्यहापेक्षया प्रथममहः पूर्वं यदुक्तं, तदेतत्पुनरपि मध्यमत्र्यहापेक्षया प्रथममहरुच्यते, अतो नवरात्रापेक्षया यत् चतुर्थम्, तस्य त्र्यहापेक्षया प्रथमत्वात् प्रथमस्याह्नो लिङ्गान्यत्र योग्यानि। तत एव तद्युक्तवदित्यारभ्याय लोकोऽभ्युदित इत्यन्तानि पूर्वोक्तान्य-त्राभिहितानि[3]। 'जातवत्' जनिधातुयुक्तम्। 'हववत्' इति ह्वयतिधातुयुक्तम्। 'शुक्रवत्' शुक्रशब्दयुक्तम्। 'वाचो रूपं' वाक्प्रतिपादकशब्दयुक्तम्। 'वैमदं' विमदाख्येन महर्षिणा दृष्टम्। रिफतिधातुः कत्थनार्थे वर्तते। विप्रकर्षेण न्यूह्वेनोच्चारितं 'विरिफितम्'। 'विच्छन्दा' इति विविधच्छन्दसा युक्तम्। तद्वत् चातिरिक्तं च 'ऊनातिरिक्तम्'। अक्षर-

---

1 विमदेनर्षिणा दृष्टं रिफे कत्थनार्थकात् क्त इट्।
न्यूङ्खः कत्थनोच्चारणीयं विच्छन्दा छान्दसस्त्विह ॥—इति षड्गुरुशिष्यः।

२ ३ द्र० इत पूर्वम्, पृ० ६८९।

ह्रासवृद्धी इत्यर्थः । वैराजाख्यसामसम्बद्धं 'वैराजम्' । अनुष्टुप्छन्दः सबद्धम् 'आनुष्टुभम्' । जातवदित्यादीन्यत्र विशेषलिङ्गानि । भविष्यदर्थवाचिप्रत्ययोपेत धातुरूप 'करिष्यन्' इत्युच्यते । अत्र यन्नूतन यच्च पूर्वोक्त प्रथमस्याह्नो रूपमस्ति, तानि सर्वाण्यपि चतुर्थस्याह्नो निरूपकाणि ॥

जिस [मन्त्र] में 'आङ्' और 'प्र' उपसर्ग हों वह मन्त्र चतुर्थ दिन का रूप [=निरपक] है। जो [प्रथम त्र्यह के] प्रथम दिन का रूप कहा गया है वह पुन इस [मध्यम त्र्यह के प्रथम दिन अर्थात्] चतुर्थ दिन का निरूपक है। जो मन्त्र 'युक्त' 'रथ' तथा 'आशु' शब्द और पानार्थक 'पा' धातु से युक्त हो और जिस मन्त्र के प्रथम पाद में देवता निर्दिष्ट हों और जिसमें यह [भू] लोक उक्त हो और जो [मन्त्र] 'जनि' धातु युक्त, 'ह्वय' धातु युक्त, 'शुक्र' शब्द युक्त, वाक् प्रतिपादक शब्द युक्त हो और जो विमदाख्य महर्षि से युक्त हो, जो विशेषक्लेशपूर्वक न्यूङ्ख से उच्चरित 'वि' उपसर्ग पूर्वक 'रिफ' धातु से युक्त हो, जो [सूक्त] विविध छन्द से युक्त हो, जो [अक्षर सम्पदा में] ऊन अर्थात् कम हो और अधिक हो, जो वैराज साम से सम्बद्ध हो, जो अनुष्टुभ् छन्द से सम्बद्ध हो और कृ धातु का भविष्य काल का रूप जिसमें हो—[इन 'जातवद्' इत्यादि विशेषताओं के साथ जो नूतन और] जो प्रथम दिन का रूप [=चिह्न] है वे सभी चतुर्थ दिन के निरूपक हैं।

इदानीमाज्यशस्त्रं विधत्ते—

'आग्निं न स्वयुक्तिभिरिति' चतुर्थस्याह्न आज्यं भवति, येमद विरिफित विरिफितस्य ऋषेश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति ।

'आग्निम्' इत्यादिकं सूक्त[1] 'वैमद' विमदाख्येन महर्षिणा दृष्टम् । 'विरिफित' न्यूङ्खरूपेण विशेषक्लेशेनोच्चारितम् । अत एव 'विरिफितस्य' विशेषक्लेशरूपतया युक्तस्य विमदाख्यस्य महर्षे सम्बन्धि । अतो विमदेन दृष्टत्व विरिफितत्व चेति लिङ्गद्वयसद्भावाच्चतुर्थेऽह्न्येतत् सूक्त योग्यम् । तस्माच्चतुर्थस्याह्नो निरूपकम् ॥

[आज्यशास्त्र]—

'आग्निं न' इत्यादि विमद ऋषि द्वारा दृष्ट और न्यूङ्ख रूप विशेषक्लेश से उच्चरित यह सूक्त चतुर्थ दिन में [आज्य] शास्त्र होता है; जो विशेषक्लेशरूप से युक्त होने से और [विमदाख्य] महर्षि से सम्बन्धित होने से चतुर्थ दिन में चतुर्थ दिन का लक्षण है।

ऋक्सङ्ख्यां छन्दश्चोपजीव्यसूक्त प्रशसति—

अष्टर्चं पाङ्क्तं, पाङ्क्तो यज्ञ, पाङ्क्ताः पशवः, पशूनामवरुद्ध्यै ॥ इति ।

---

१ ऋ० १० २१।

ऋक्सस्योत्तरत्रोपयुज्यते । पङ्क्तिच्छन्दोयोगात् 'पाङ्क्तम्' । [1]पूर्वोक्तहविष्पङ्क्त्यादिनिर्वर्त्यस्य पाङ्क्तत्वम् । चतुर्भिः पादैर्मुखेन च, पञ्चावयवैः 'पशवः पाङ्क्ताः' । तस्मादेतच्छंसनं पशुप्राप्त्यै भवति ॥

यह पंक्ति छन्द में निबद्ध आठ ऋचाओं का सूक्त है । यह यज्ञ भी [हविष्पङ्क्ति आदि] पांच अवयवों वाला है और पशु भी [चार पैर और मुंह से युक्त होकर] पांच अवयवों वाले हैं । अतः इसका शंसन पशुओं की प्राप्ति के लिए होता है ।

*जगतीद्वारा पुनः प्रशंसति—*

**ता उ दश जगत्यो जगत्प्रातःसवन एष त्र्यहस्तेन चतुर्थस्याह्नो रूपम् ॥** इति ।

'ता उ' तास्तु सूक्तगता अष्टावृचो 'दश जगत्यः' सम्पद्यन्ते । कथं सम्पत्तिरिति? तदुच्यते—सूक्तस्याद्यन्तयोर्ऋचोस्त्रिरावृत्त्या द्वादश पङ्क्तयो भवन्ति, पङ्क्तिश्चैकचत्वारिंशदक्षरा; ततो मिलित्वा अशीत्यधिकचतुःशताक्षराणि सम्पद्यन्ते । अष्टाचत्वारिंशदक्षराणां जगतीनां दशसंख्याकानां तावन्त्येवाक्षराणि । एवं जगतीसम्पत्तिः । जगतीच्छन्दोयुक्तं प्रातःसवनं यस्य मध्यमस्य त्र्यहस्य सोऽयं 'जगत्प्रातःसवनः' । पूर्वमेव च्छन्दसां विवादे जगत्याः प्रातःसवनस्थानमुक्तम् ।[2] अतः प्रातःसवने जगतीसम्बन्धश्चतुर्थस्याह्नो निरूपकः ॥

[सूक्तगत] उन [आठ ऋचाओं] में दस जगती छन्द संपादित होते हैं क्योंकि इस त्र्यह का प्रातःसवन जगती से सम्बन्धित है अतः उस [स्थान रूप सम्बन्ध] से यह चतुर्थ दिन का रूप है ।

*अनुष्टुप्सम्बन्धेन प्रशंसति—*

**ता उ पञ्चदशानुष्टुभ आनुष्टुभं ह्येतदहस्तेन चतुर्थस्याह्नो रूपम् ॥** इति ।

तास्तु दश जगत्यः 'पञ्चदशानुष्टुभः' सम्पद्यन्ते । तथा हि,—अष्टाचत्वारिंशदक्षरा जगती, द्वात्रिंशदक्षरानुष्टुप्, तथा सत्येकैका जगती सार्धानुष्टुब् भवति । अहश्चैतदनुष्टुभः सम्बन्धि, अनुष्टुभा निर्वाहकत्वस्योक्तत्वात्[3] । तेनेदं सूक्तमनुष्टुब्द्वारा चतुर्थस्याह्नो निरूपकम् ॥

और, वे [दस जगती मिलकर] पन्द्रह अनुष्टुभ् छन्द संपादित होते हैं । क्योंकि यह अहः अनुष्टुभ् छन्द से [निर्वाहकतया] सम्बद्ध है, अतः उससे यह चतुर्थ दिन का रूप है ।

*गायत्रीद्वारा प्रशंसति—*

**ता उ विंशतिर्गायत्र्यः पुनः प्रायणीयं ह्येतदहस्तेन चतुर्थस्याह्नो रूपम् ॥** इति ।

---

१. द्र० इत पूर्वम्, पृ० ३०८, ४६५ । २. द्र० इत. पूर्वम्, पृ० ४८० ।

३ 'चतुर्थमहर्वहति''''अनुष्टुप् छन्दः' इत्युक्ति ७३२ पृष्ठे द्रष्टव्या ।

तास्तु दश जगत्य पुनरपि प्रत्यक द्वेधा विभज्यमानाश्चतुर्विंशत्यक्षरा गायत्र्यो विंशति भवन्ति । गायत्रीसम्बन्ध चान्यत्र—प्रायणीय प्रथममह, गायत्रो वा ऐन्द्रवायवो गायत्र प्रायणीयमह' इति श्रुत्यन्तरात । इद चाहर्मध्यमे त्र्यहे प्रथमत्वात् प्रायणीयम् । अतो गायत्रीद्वारा सम्बन्धस्य वक्तु शक्यत्वात् एतत्सूक्त[1] चतुर्थस्याह्नो निरूपकम् ॥

पुन, वे [दस जगती मिलकर] बीस गायत्री छन्द सपादित होते हैं [मध्यम त्र्यह में यह अह प्रथम होने से] यह दिन प्रारम्भिक [प्रायणीय] है। अत उससे यह चतुर्थ दिन का रूप है।

सारयुक्तत्वेन पुन प्रशसति—

**तदेतदस्तुतमशस्तमयातयामसूक्त यज्ञ एव साक्षात् तद्यदेतच्चतुर्थस्याह्न आज्य भवति, यज्ञादेव तद् यज्ञ तन्वते, वाचमेव तत्पुनरुपयन्ति सतत्यै ॥** इति ।

'तदेतत्' 'आग्निम्' इत्यादिसूक्तम्[2] उद्गातृभि पूर्वमस्तुत होतृभिरप्यशस्तम् तस्मात् अयातयाम गतसार न भवतीति साक्षाद् यज्ञ एव यज्ञमध्ये सारत्वात् । तथा सति यद्येतत्सूक्तमत्राज्य भवेत् तदानी यज्ञरूपादेव सूक्ताद् यज्ञरूपमह तन्वते विस्तारयन्ति । किंचाहर्देवता वाचमेव' तेन सारयुक्तेन पुन प्राप्नुवन्ति । तच्च मध्यमस्य त्र्यहस्य सतत्यै' विच्छेदराहित्याय भवति ॥

यह ['आग्निम' इत्यादि] सूक्त [उद्गाताओं के द्वारा पूर्व में] न तो स्तुत है और न [होताओं द्वारा] शसित है अत यह नि सार न होने से [यज्ञ के मध्य] साक्षात यज्ञ ही है। इस प्रकार यदि यह सूक्त इस चतुर्थ दिन में आज्य होता है तो यज्ञ [रूप सूक्त] से ही वे यज्ञ रूप अह का विस्तार करते हैं, और उस [सारयुक्त यज्ञ] से वाग्देवता को भी पुन प्राप्त करते हैं, [मध्यम त्र्यह के] निरन्तरता के लिए होता है।

वेदनपूर्वकमनुष्ठान प्रशसति—

**सततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एव विद्वांसो यन्ति ॥** इति ।

पूर्ववद्व्याख्येयम् ॥

जो इस प्रकार निरन्तरता को जानते हुए अनुष्ठान करते हैं वे परस्पर सम्बन्धित अत एव विच्छेदरहित त्र्यह के द्वारा अनुष्ठान करते हैं।

अथ प्रउगशस्त्र विधत्ते—

**वायो शुक्रो अयामि ते, विहि होत्रा अवीता, वायो शत हरीणा,मिन्द्रश्च वायवेषा सोमानाम्, आ चिकितान सुक्रतू, आ नो विश्वाभिरूतिभिः,त्यमु वो अप्रहण,मपत्य वृजिन रिपु,मम्बितमे नदीतम इत्यानुष्टुभ प्रउगमेति च प्रेति च शुक्रवच्च चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति ।

---

१, २ ऋ० १०२१ ।

'वायो शुक्र' इत्याद्य प्रतीकम्[1]। 'विहि होत्रा' इति द्वितीयम्[2]। 'वायो शतमिति' तृतीयम्[3]। 'इन्द्रश्चेति' चतुर्थम्[4]। 'आ चिकितानेति' पञ्चमम्[5]। 'आ नो विश्वाभिरिति' षष्ठम्[6]। 'त्वमु षु ' इति सप्तमम्[7]। अप त्वमित्यष्टमम्[8]। 'अम्बितम' इति नवमम्[9]। तत्रा ऽऽद्यंस्त्रिभि प्रतीकैरेकमृच , इतरै षट्प्रतीकै षडृचा । एतत्सर्वमनुष्टुप्छन्दस्कं प्रउगशस्त्र कार्यम् । अत्र आकार , प्रशब्द , शुक्रशब्दश्चेति लिङ्गानि द्रष्टव्यानि। वायो, इत्यत्र शुक्र-वल्लिङ्गम् । विहि होत्रेत्यस्यामृचि 'वायवाचन्द्रेण' इत्याकार । वायो शतमित्यत्र 'रथ आ यातु'—इत्याकार । इन्द्रश्चेत्यत्र द्वितीयस्यामृचि 'आयातम्' इत्याकार । आ चिकितानेत्यत्र, आ नो विश्वाभिरित्यत्र चाऽऽकारो स्पष्टो । त्व गु षो अप्रहणमित्यत्र प्रशब्द । अपत्य वृजिनमित्यत्र तृतीयस्यामृचि 'आ सुगम्' इत्याकार । अम्बितम इत्यत्र 'प्रशस्तिमम्ब' इति प्रशब्द । अतो लिङ्गसद्भावेन चतुर्थेऽहनि योग्यत्वात् इद सर्वं चतुर्थस्याह्नो निरूपकम् ॥

[प्रउगशस्त्र]—

'वायो शुक्र', 'विहि होत्रा', 'वायो शतम', 'इन्द्रश्च', आ चिकितान', 'आ नो विश्वाभि', 'त्वमु षु ', 'अप त्वम्', और 'अम्बितमे' इत्यादि नौ अनुष्टुप छन्द में निबद्ध प्रउग [शस्त्र] हैं और 'आ' [ = इधर] 'प्र' [ = आगे] और शुक्र [ = शुद्ध] शब्द से युक्त ये [तृच] चतुर्थ दिन में चतुर्थ दिन के लक्षक हैं।

मरुत्वतीयशस्त्रस्य प्रतिपद विधत्ते—

**'त त्वा यज्ञेभिरीमह'[10] इति मरुत्वतीयस्य प्रतिपदीमह इत्यभ्यायाम्यमिवैतदहस्तेन चतुर्थस्याह्नो रूपम् ॥ इति ।**

अत्र यदेतदीमह इति पदमस्ति, तद् याचामह इत्यस्मिन्नर्थे वर्तते, याच्ञा च दीर्घकालेन फलप्रदा तस्मादेतदह 'अभ्यायाम्यमिव'[11] अभितो दीर्घं कर्तव्यमिव प्रयोगबाहुल्येन दृश्यते। तेन याच्ञार्थवाचिधातुद्वारेण दीर्घत्वेन साम्यप्रतीतिरिद मन्त्रवाक्य चतुर्थस्याह्नो निरूपकम् ॥

[मरुत्वतीयशस्त्र]—

'त त्वा यज्ञभिरीमहे' आदि ऋचा मरुत्वतीय शस्त्र की प्रतिपद् है। [क्योंकि याचना दीर्घकाल से ही फलप्रद होती है अत याचनार्थक] 'ईमहे' पद युक्त यह अह प्रयोगबाहुल्य के द्वारा चारो ओर से दीर्घ करने के समान है। उस [याचनार्थक धातु के द्वारा दीर्घ-साम्य रूप प्रतीति] से यह [मन्त्र वाक्य] चतुर्थ दिन का रूप है।

---

१ ऋ० ४.४७.१। २ ऋ० ४.४८.१। ३ ऋ० ४.४८.५।
४ ऋ० ४.४७.२। ५ ऋ० ५.६६.१। ६ ऋ० ८.८.१ (७.२४.४)।
७ ऋ० ६.४४.४। ८ ऋ० ६.५१.१३। ९ ऋ० २.४१.१६।
१० ऋ० ८.६८.१०।
११ (i) आयाम्यमायामयुक्तम्, दीर्घीकृत न्यूङ्खादिना'—इति षड्गुरुशिष्य । (ii) अभ्यायाम्य दीर्घं कर्तव्यमिव। एतच्चतुर्थमहर्भवति । ईमह इत्यनेन च तद् भवति। कथ दीर्घाभरयुक्तत्वादस्य पदस्य। ईमह इत्यस्य याच्ञार्थत्वाद् वा। याचितो हि पुरुषो दीर्घेण कालेन प्रयच्छति—इति गोविन्दस्वामी।

मन्त्रान्तराणि विधत्ते—

**इद वसो सुतमन्ध[1], इन्द्र नेदीय एदिहि[2], प्रैतु ब्रह्मणस्पति[3], अग्निर्नेता[4], त्व सोम क्रतुभि[5], पिन्वन्त्यप[6], प्र व इन्द्राय बृहत[7], इति प्रथमेनाह्ना समान आतानश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम ॥** इति ।

'आतान' शस्त्रवलृप्ति[8]। सा चेद वसो सुतमित्यादिका। अस्मिश्चतुर्थेऽहनि पूर्वोक्तेन प्रथमेनाह्ना समानात् साम्य चैक लिङ्गम् ॥

'इद वसो सुतमध', 'इन्द्र नेदीय', 'प्रैतु ब्रह्मणस्पति', 'अग्निर्नेता', 'त्व सोम-क्रतुभि', 'पिन्वन्त्यप' और 'प्र व इन्द्राय' इत्यादि प्रथम दिन के ही समान [मरुत्वतीय] शस्त्र की क्लृप्ति [अर्थात् क्रमागत] हैं जो चतुर्थ दिन में चतुर्थ दिन के लक्षक हैं।

सूक्तान्तर विधत्ते—

**'श्रुधी हवमिन्द्र मा रिषण्य'[9] इति सूक्त हववच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति ।

हवशब्दोपेतमेतस्याह्नो विधयलिङ्गमिति पूर्वमुक्तम् ॥

'श्रुधी हवम्' (हे इन्द्र ! मेरे आह्वान को सुनो, हमें हानि न पहुँचाओ) आदि सूक्त 'हव' [= आह्वान] शब्द से युक्त है जो चतुर्थ दिन में चतुर्थ दिन का चिह्न है।

अन्यस्मिन्नपि सूक्ते तल्लिङ्ग दर्शयति—

**'मरुत्वाँ इन्द्र वृषभो रणायेति'[10] सूक्तमुग्र सहोदामिह त हुवेमेति हववच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति ।

मरुत्वानित्यस्य सूक्तस्य 'उग्रम्' इत्यादिरन्तिम पाद, तत्र हुवेमेति' हवशब्दार्थवाची धातुर्दृश्यते, अतो लिङ्गसद्भावादह्नो निरूपकम् ॥

'मरुत्वाँ इन्द्र' (मरुद्गणों के साथ हे इन्द्र, वृषभ, प्रसन्नता के लिए) आदि सूक्त का 'उग्र सहोदामिह' (उग्र और बल के प्रदाता उसको हम बुलावें) इत्यादि पाँचवें मन्त्र का अन्तिम पाद हव' शब्दार्थक धातु से युक्त है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है।

एतत्सूक्त प्रशसति—

**तद्‌ु त्रैष्टुभ तेन प्रतिष्ठितपदेन सवन दाधारायतनादेवैतेन न प्रच्यवते ॥** इति।

---

१ ऋ० ८ २ ११ । २ ऋ० ८ ५३ ५ । ३ ऋ० १ ४० ३ ।
४ ऋ० ३ २० ४ । ५ ऋ० १ ९१ २ । ६ ऋ० १ ६४ ६ ।
७ ऋ० ८ ८९ ३ ।
८ 'शस्त्रेषु सूक्तादन्यस्तु भाग आतानसञ्ज्ञक '—इति षड्गुरुशिष्य ।
९ ऋ० २ ११ । १० ऋ० ३ ४७ ।

'तद्' तत् सूक्तं त्रिष्टुप्छन्दस्कम् । प्रतिष्ठितानि पदानि प्रतिनियताक्षरसंख्यायुक्ताः पादाः यस्मिन् सूक्ते तत्सूक्तं 'प्रतिष्ठितपदम्' । तादृशेन तेन सूक्तेन 'सवनं' माध्यंदिनसवनगतं मरुत्वतीयशस्त्रं 'दाधार' धारितवान्भवति । एतेन सूक्तेन स्वयम् 'आयतनात्' स्वकीयगृहात् कदाचिदपि न प्रच्यवते ॥

वह सूक्त त्रिष्टुप् छन्दस्क है । प्रतिष्ठित-पद [अर्थात् नियत अक्षर संख्या] से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत मरुत्वतीय शस्त्र] धारित होता है । अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है ।

अत्र तृचं विधत्ते—

'इमं नु मायिनं हुव' इति पर्यासो हववांश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति ।

'इम नु' इत्यादितृचविशेषः[1] परितः[2] पूर्वोक्तानामन्ते प्रक्षेपणीयः । तत्र 'हुवे' इति हवशब्दार्थे धातुरस्ति, अतश्चतुर्थस्याह्नो निरूपकस्तृचः ॥

'इमं नु मायिनम्' इत्यादि तृच-विशेष पर्यास [पूर्वोक्त ऋचाओं के अन्त में प्रक्षेपणीय] है । यह 'हव' शब्दार्थक धातु से युक्त है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है ।

तदेतत्प्रशंसति—

ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति ॥ इति ।

'ता उ' ताः सूक्तगता ऋचो गायत्रीछन्दस्काः; गायत्र्यश्च 'एतस्य' मध्यमस्य त्र्यहस्य 'मध्यंदिनं' सवनं वहन्ति ॥

उस [सूक्त] की ऋचाएँ गायत्री छन्दस्क हैं और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं ।

पूर्वोक्तनिर्वाहक्रमेण जगत्याः प्रातःसवनवाहित्वं गायत्र्या माध्यंदिनसवनवाहित्वं च दर्शितम् । अस्मिंस्तृचे निविद्धानं विधत्ते—

तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते, तस्माद् गायत्रीषु निविदं दधाति ॥ इति ।

'यस्मिन्' छन्दसि 'निविद्' पदसमूहः प्रक्षिप्यते, तदेतच्छन्दो 'वहति' सवनस्य निर्वाहकं भवति । तस्मान्निर्वाहणाय तासु गायत्रीषु निविदं दध्यात् ॥

जिस [छन्द] में निविद् [पद समूह] प्रक्षिप्त होते हैं, वही छन्द [सवन का] निर्वाहक होता है । इस [निर्वाहकत्व] के कारण गायत्री ऋचाओं में निविद् प्रक्षिप्त होते हैं ।

---

१. ऋ० ८.७६.१–३ ।

२. 'पर्यस्यतेः समाप्त्यर्थात् करणे घञ् कृतस्त्विह'—इति षड्गुरुशिष्यः ।

अथ वैराजसामसम्बद्धं तृचद्वयं विधत्ते—

**'पिबा सोममिन्द्र मन्दतु त्वा', 'श्रुधी हव विपिपानस्याद्रेरिति' वैराजं पृष्ठं भवति, बार्हतेऽहनि चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति ।

पृष्ठस्तोत्रसाधनस्य वैराजसाम्न आधार 'पिबा सोमम्'[1] इत्यादि स्तोत्रियस्तृच, 'श्रुधी हवम्' इत्याद्यनुरूप[2] अतो वैराजसामसम्बन्धो लिङ्गम् । किञ्च बृहत्साम्नोपत्यं वैराजसाम । इदं चाहर्युग्मरूपत्वाद् बृहत्सामसम्बन्धि[3] । अतोऽपि कारणात् अस्मिन्नहन्येतत्तृचद्वयं युक्तम् ॥

[निष्केवल्यशस्त्र]—

'पिबा सोमम्' (हे इन्द्र सोम का पान करो, यह तुम्हें प्रसन्न करे) इत्यादि [स्तोत्रिय तृच] और 'श्रुधी हवम्' (अत्यन्त पान करने वाले अद्रि का आह्वान सुनो) इत्यादि [अनुरूप] तृच वैराज [साम] युक्त पृष्ठ [स्तोत्र] होता है, जो बृहत् साम सम्बन्धी दिन चतुर्थ दिन में चतुर्थ दिन का रूप है ।

धाय्यान्तरं विधत्ते—

**यद्वावानेति धाय्याऽच्युता ॥** इति ।

अच्युतत्वं सर्वशाम्बन्धिलिङ्गमित्युक्तम्[4] ॥

'यद्वावान'[5] इत्यादि धाय्या [प्रथम दिन विहित होने से] अच्युत है ।

तस्मात्तृच ऊर्ध्वमन्यं प्रगाथं विधत्ते—

**'त्वामिद्धि हवामहे' इति[6] बृहतो योनिमनुनिर्वर्तयति, बार्हतं ह्येतदहरायतनेन ॥** इति ।

त्वामिद्धीत्यस्यामृचि बृहत्सामोत्पन्नम्, तस्मादेतं योनिभूतं प्रगाथं पूर्वोक्तधाय्याम् 'अनु' पश्चाच्छंसेत् । 'एतदहरायतनेन' युग्माहस्वरूपस्थानेन 'बार्हतं' बृहत्सामसम्बन्धं लिङ्गमित्युक्तम् ॥

त्वामिद्धि हवामहे' (हम तुम्हें बुलाते हैं) इत्यादि ऋचा में बृहत्साम [उत्पन्न है अतः] योनिभूत इस प्रगाथ का [पूर्वोक्त धाय्या के] बाद में शंसन करता है । [युग्म अह - स्वरूप] स्थान के द्वारा यह दिन बृहत्साम सम्बन्धी है ।

वैराजसाम्नः सम्बन्धिनं प्रगाथं विधत्ते—

**'त्वमिन्द्र प्रतूर्तिष्विति'[7] सामप्रगाथः ॥** इति ।

'त्वमिन्द्र प्रतूर्तिषु' (तुम, हे इन्द्र ! संघर्षों में) इत्यादि साम प्रगाथ है ।

---

१ ऋ० ७ ३२ १–३ । २ ऋ० ७ ३२ ४–६ ।
३ द्र० इत पूर्वम्, पृ० ६८६ । ४ द्र० इत पूर्वम्, पृ० ६९३ ।
५ ऋ० १० ७४ ६ । ६ ऋ० ६ ४६ १, २ । ७ ऋ० ८ ९९ ५, ६ ।

तत्र लिङ्गं दर्शयति—

**'अशस्तिहा जनितेति' जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति ।

उक्ते प्रगाथे तृतीयपादोऽयम् । अत्र 'अशस्तिहा जनितेति', ततोऽयं जातवान् । 'जनि' धातुयुक्तं जातवत्त्वं चैतस्याह्नो लिङ्गम् ॥

[उक्त प्रगाथ का तृतीय पाद] 'अशस्तिहा जनिता' 'जनि' धातु युक्त है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है ।

त्यमू ष्विति' सूक्तविशेषस्याच्युतत्वं लिङ्गं दर्शयति—

**'त्यमू षु वाजिनं देवजूतमिति'[1] तार्क्ष्योऽच्युत- ॥ ४ ॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकायां प्रथमाध्याये (एकविंशाध्याये) चतुर्थः खण्डः ॥४॥ [ १५७ ]

**'त्यमू षु'** इत्यादि तार्क्ष्य देवताक सूक्त [प्रथम दिन विहित होने से] अच्युत है ।

॥ इस प्रकार इक्कीसवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

---

## अथ पञ्चमः खण्डः

विमदेन महर्षिणा दृष्टं न्यूङ्खसहितं सूक्तं विधत्ते—

**'कुह श्रुत इन्द्र कस्मिन्नद्येति'[2] सूक्तं वैमदं विरिफितं विरिफितस्य रूपे-श्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति ।

पूर्ववद् व्याख्येयम् ॥

[अवशिष्ट निष्केवल्य शस्त्र और सायसवन के अन्य शस्त्र]—

५ [xxi ५] **'कुह श्रुत'** (इन्द्र कहाँ प्रसिद्ध हैं और किस कार्य में ?) इत्यादि सूक्त विमद ऋषि द्वारा दृष्ट एवं न्यूङ्ख रूप विशेष क्लेश से उच्चरित है जो विशेष क्लेश रूप से युक्त होने से और [विमद नामक] ऋषि से सम्बन्धित होने से चतुर्थ दिन में, चतुर्थ दिन का रूप है ।

सूक्तान्तर विधत्ते—

**'युष्मस्य ते वृषभस्य स्वराज'[3] इति सूक्तमुरुं गभीरं जनुषाऽभ्युग्रमिति जात-वच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥** इति ।

---

१ ऋ० १० १७८ । २ ऋ० १० २२ । ३ ऋ० ३ ४६ १ ।

'युध्मस्येति'[1] सूक्ते 'उरु गभीरम्' इति य पाद, तत्र 'जनुषा' इति श्रवणात् 'जातवत्' 'जनि' धातुयुक्त लिङ्गमस्ति ॥

'युध्मस्य ते' (हे युद्ध करने वाले, कामवर्षी, स्वशासक तुम्हारे) इत्यादि सूक्त का चतुर्थ ऋचा का 'उरु गभीर' (हे महान, गम्भीर, स्वभाव से ही उग्र) इत्यादि पाद 'जनि' धातु युक्त है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है।

सूक्तगत छन्दोऽवलम्ब्य प्रशसति—

तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवन दाधारायतनादेवैतेन न प्रच्यवते ॥ इति।

पूर्ववद् व्याख्येयम् ॥

वह सूक्त त्रिष्टुप् छन्दस्क है। प्रतिष्ठित-पद अर्थात् नियत अक्षर सख्या से युक्त उस सूक्त से [सायं] सवन [गत निष्केवल्य शस्त्र] धृत होता है। अत इस सूक्त से वह अपने स्थान से कभी भी च्युत नहीं होता है।

तृतीय तृच विधत्ते—

'त्य मु व. सत्रासाहमिति'[2] पर्यासो विश्वासु गीर्ष्वायतमित्यभ्यायाम्यमिवैतदहस्तेन चतुर्थस्याह्नो रूपम् ॥ इति।

परित प्रक्षेपणीय 'पर्यास' अन्तिमस्तृच। तस्मिन् 'विश्वासु' इति य पाद, तत्र 'आयतम्' इति शब्दो दीर्घत्ववाचक श्रूयते। अहश्चैतत् 'अभ्यायाम्यमिव' प्रयोगाधिक्याद् अतिदीर्घमिव, अतोऽत्र दीर्घत्व लिङ्गम् ॥

'त्यमु व. सत्रासाह' (सबको दबाने वाले, तुम्हारे सारे स्तोत्रों में विस्तृत) इत्यादि पर्यास [उपसहारक तृच] है। इसके 'विश्वासु गीर्ष्वायतम्' इस पाद में 'आयतम्' शब्द दीर्घत्व का वाचक है। उस [प्रयोगाधिक्य के कारण] से यह दिन अति दीर्घ के समान होने से चतुर्थ दिन का लक्षक है।

छन्दोद्वारा प्रशसति—

ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य माध्यदिन वहन्ति, तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते, तस्माद् गायत्रीषु निविद दधाति ॥ इति।

पूर्ववद् व्याख्येयम् ॥

उस सूक्त की ऋचाएँ गायत्री छन्दस्क हैं और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं। जिस छन्द में निविद् [पद समूह] प्रक्षिप्त होते हैं, वही छन्द [सवन

---

१. ऋ० ३ ४६।   २ ऋ० ८ ८१ ७–९।

का] निर्वाहक होता है। इस [निर्वाहकत्व] के कारण गायत्री ऋचाओं में निविद् प्रक्षिप्त होते हैं।

शस्त्रान्तरं विधत्ते—

विश्वो देवस्य नेतुस्, तत्सवितुर्वरेण्य,मा विश्वदेवं सत्पतिमिति वैश्वदेवस्य प्रतिपदनुचरौ; वार्हतेऽहनि चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।

'विश्वो देवस्य' इति[1] ऋगेका, 'तत्सवितुरिति'[2] द्वे ऋचौ। एष तृचो बृहत्साम-सम्बन्धी, वैश्वदेवस्य प्रतिपत्। आ विश्वदेवमिति'[3] तृचोऽनुचरः। अह्नो चतुर्थत्वाद् बार्हतत्वम्। बृहत्सामसम्बन्ध एव मन्त्रलिङ्गम् ॥

'विश्वो देवस्य', 'तत्सवितुर्वरेण्यम्' और 'आ विश्वदेवम्' इत्यादि वैश्वदेवशस्त्र की प्रतिपद् और अनुचर ऋचाएँ हैं, जो बृहत्साम सम्बन्धी दिन चतुर्थ दिन में चतुर्थ दिन का रूप है।

सावित्रदेवताकं सूक्तं विधत्ते—

'आ देवो यातु सविता सुरत्न'[4] इति सावित्रमेति चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।

आकारोऽत्र लिङ्गम् ॥

'आ देवो यातु' (सविता देव सुन्दर रत्न के साथ यहाँ आवें) इत्यादि सवितृदेवताक सूक्त में 'आ' है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है।

प्र-शब्दलिङ्गोपेतं सूक्तं विधत्ते—

'प्र द्यावा यज्ञैः पृथिवी नमोभिरिति'[5] द्यावापृथिवीयं प्रेति चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।

'प्र द्यावा यज्ञैः' (जिस द्यावा-पृथिवी की स्तोताओं ने स्तुति और यज्ञों से) इत्यादि द्यावापृथिवी-देवताक सूक्त में 'प्र' शब्द है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है।

प्र-शब्दो वाक्सम्बन्धश्चेति लिङ्गद्वयोपेतं सूक्तं विधत्ते—

'प्र ऋभुभ्यो दूतमिव वाचमिष्य'[6] इत्यार्भवं; प्रेति च वाचमिष्य इति च चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।

ऋभुदेवताकत्वं स्पष्टम्। प्रशब्दो वाक्सम्बन्धश्च प्रेति चेत्यादिना प्रदर्श्यते ॥

---

१. ऋ० ५.५०.१। २. ऋ० ३.६२.१०–११। ३. ऋ० ५.८२.७–९।
४. ऋ० [illegible].८१। ५ ऋ० ७.५३। ६. ऋ० ४.३३.१।

'प्र' ऋभुभ्यो दूतमिव' (मैं ऋभुओं के लिए दूत के समान स्तुति रूपी वाणी प्रेरित करता हूँ) इत्यादि ऋभु देवताक सूक्त में 'प्र' शब्द और वाक सम्बन्धी 'वाचमिष्ये' शब्द है जो चतुर्थ दिन में चतुर्थ दिन का रूप है।

प्रशब्देन शुक्रशब्देन चोपेतं सूक्तान्तरं विधत्ते—

'प्र शुक्रैतु देवी मनीषेति'[1] वैश्वदेवं, प्रेति च शुक्रवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।

अत्र बहुदेवताकत्वाद् वैश्वदेवत्वम् ॥

'प्र शुक्रैतु' (दीप्त और अभीष्टप्रद स्तुति देवों के पास जाय) इत्यादि वैश्वदेव देवताक सूक्त में 'प्र' शब्द है और वह 'शुक्र' शब्द से युक्त है, जो चतुर्थ दिन में चतुर्थ दिन का रूप है।

नानाविधच्छन्दोयुक्तत्वरूपं लिङ्गान्तरं दर्शयति—

ता उ विच्छन्दसः सन्ति द्विपदाः सन्ति चतुष्पदास्तेन चतुर्थस्याह्नो रूपम् ॥ इति।

'ता उ' तासु सूक्तगता ऋचो विच्छन्दसः' विविधच्छन्दोयुक्ताः, तत्रैकविंशतिर्द्विपदाः सन्ति, अवशिष्टाश्चतुष्पदाः सन्ति। 'तेन' विच्छन्दस्त्वेनाह्नो निरूपकम् ॥

वे सूक्तगत ऋचाएँ विविध छन्दों से युक्त हैं। [उनमें इक्कीस] द्विपदा ऋचाएँ हैं, और अवशिष्ट चतुष्पदा हैं। इस [विविध छन्दों से युक्त होने] के कारण यह चतुर्थ दिन का निरूपक है।

शस्त्रान्तरस्य प्रतिपत्सूक्तं विधत्ते—

'वैश्वानरस्य सुमतौ स्यामेत्याग्निमारुतस्य प्रतिपद्, इतो जात इति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।

तस्य सूक्तस्य[2] प्रथमाया ऋचस्तृतीयपादे 'इतो जात' इति श्रवणाज्जातवच्छब्दोपेतं लिङ्गमस्ति ॥

'वैश्वानरस्य सुमतौ' (हम वैश्वानर अग्नि के अनुग्रह में रहें) इत्यादि सूक्त आग्निमारुत शस्त्र का प्रतिपद सूक्त है। [इस सूक्त के प्रथम ऋचा के तृतीय पाद में] 'इतो जात' में 'जात' शब्द होने से चतुर्थ दिन में यह चतुर्थ दिन का रूप है।

मरुद्देवताकं सूक्तं विधत्ते—

'क ईं व्यक्ता नरः सनीळा' इति मारुतं; नकिर्ह्येषां जनूंषि वेदेति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम् ॥ इति।

---

१. ऋ० ७ ३४।　　　　२ ऋ० १ ९८।

अस्मिन् सूक्ते[1] तृतीयस्यामृचि[2] 'मरुद्भिरस्तु' इति श्रवणान्मारुतम्। नकिर्ह्येषादिकः प्रथमाया[3] ऋचस्तृतीय. पादः, तत्र 'जनूंषीति' 'जनि' धातुयुक्तत्वं लिङ्गम्॥

'क ईं व्यक्ता नरः' (कान्ति युक्त नेता, समानगृह-निवासी) इत्यादि मरुद्देवताक सूक्त के प्रथम ऋचा के तृतीय पाद में 'जनूंषि' शब्द 'जनि' धातु युक्त होने से चतुर्थ दिन में यह चतुर्थ दिन का रूप है।

विविधच्छन्दस्त्व लिङ्गान्तरं दर्शयति—

**ता उ विच्छन्दसः सन्ति द्विपदाः सन्ति चतुष्पदास्तेन चतुर्थस्याह्नो रूपम्॥** इति।

अस्मिन् सूक्ते एकादश द्विपदाः, इतराश्चतुष्पदाः[4]॥

वे सूक्तगत ऋचाएँ विविध छन्दों से युक्त हैं। [उनमें ग्यारह] द्विपदा ऋचाएँ हैं। अन्य चतुष्पदा हैं। इस [विविधछन्दस्कत्व] के कारण चतुर्थ दिन में यह चतुर्थ दिन का रूप है।

अच्युतत्वलिङ्गोपेतामृचं विधत्ते—

**'जातवेदसे सुनवाम सोममिति'[5] जातवेदस्याऽच्युता॥** इति।

'जातवेदसे सुनवाम' (हम सभी को जानने वाले अग्नि को उद्देश्य कर सोम का अभिषव करते हैं) इत्यादि जातवेद देवताक ऋचा [पहले विहित होने से] अच्युत है।

जातवेदोदेवताकमन्यत् सूक्तं विधत्ते—

**'अग्निं नरो दीधितिभिररण्योरिति'[6] जातवेदस्यम्; हस्तच्युती जनयन्तेति जातवच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्॥** इति।

जातस्य जगतो वेदितत्वात् अग्निरेव 'जातवेदाः'। हस्तच्युतीत्यादिर्द्वितीय. पादः, तत्र 'जनयन्तेति' श्रवणाज्जनिधातुयुक्तं लिङ्गम्॥

'अग्निं नरो' (नेता ऋत्विज प्रशस्त, दूरस्थित, गृहपति और गतिशील अग्नि को दो काष्ठों से हस्तगति और अंगुलियों के द्वारा उत्पन्न करते हैं) इत्यादि जातवेद देवताक सूक्त में जनयन्त शब्द 'जनि' धातु युक्त होने से चतुर्थ दिन में यह चतुर्थ दिन का रूप है।

---

१. ऋ० ७.५६। २. पञ्चम्यामृचीति वक्तुमुचितम्।

३. द्वितीयाया इति वक्तव्यम्, न हि प्रथमा ऋक् चतुष्पदा।

४. क ईं व्यक्ता इति पञ्चविंशत्यृचं सूक्तम्। तत्र आद्या एकादश द्विपदाः, विराट्स्थाना विराजः, शिष्टाश्चतुर्दश. त्रिष्टुभः। तदिह यदुक्तं पुरस्तात् 'तृतीयस्यामृचि' इति, यच्चोक्तं 'प्रथमाया ऋचः'—इति, तदुभयमेव भाष्यकारस्यैतस्य भ्रमभावेदयतीति स्फुटम्।

५. ऋ० १.९९। ६. ऋ० ७.१।

विविधच्छन्दोरूप लिङ्गान्तर दर्शयति—

**ता उ विच्छन्दस. सन्ति विराज सन्ति त्रिष्टुभस्तेन चतुर्थस्याह्नो रूपमह्नो रूपम् ॥ ५ ॥ इति ।**

अत्राष्टादश विराज, इतरास्त्रिष्टुभ । अभ्यासोऽध्यायपरिसमाप्त्यर्थ ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाश' ऐतरेयब्राह्मणभाष्ये पञ्चम पञ्चिकाया प्रथमाध्याये (एकविंशाध्याय) पञ्चम खण्ड ॥ ५ ॥ [१५८]

वेदार्थस्य प्रकाशेन तमोहार्द निवारयन् ।
पुमर्थाश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरधर माधवाचार्यादेशतो सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश'–नाम भाष्ये ऐतरेयब्राह्मणभाष्यस्य वृतौ पञ्चमपञ्चिकाया प्रथमोऽध्याय ( एकविंशोऽध्याय ) समाप्त ॥ १ ॥

वे सूक्तगत ऋचाएँ विविध छन्दो से युक्त हैं। [उनमें अट्ठारह] विराज हैं और अन्य त्रिष्टुभ हैं। इस [विविधछन्दस्कत्व] के कारण चतुर्थ दिन में यह चतुर्थ दिन का रूप है।

॥ इस प्रकार ऐतरेय ब्राह्मण की पांचवीं पञ्चिका के प्रथम (इक्कीसवें) अध्याय की हिन्दी पूर्ण हुई ॥ १ ॥

———

# अथ द्वितीयोऽध्यायः

## प्रथमः खण्डः

—: ० :—

# [अथ द्वाविंशोऽध्यायः

## प्रथमः खण्डः]

*अथ नवरात्रापेक्षया पञ्चमं मध्यमत्र्यहापेक्षया द्वितीयमहर्विधत्ते—*

**गौर्वै देवता पञ्चममहर्वहति त्रिणवः स्तोमः शाक्वरं साम पङ्क्तिश्छन्दो यथा-देवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद ॥** इति ।

पूर्वत्र वागेव गौरेव द्यौरेवमिति देवताया रूपत्रयमुक्तम्, तत्र वागात्मकं रूपं चतुर्थेऽह्न्युक्तम्, पञ्चमस्याह्नो गौरेव[1] देवता निर्वाहिका । स्तोमानां मध्ये त्रिणवो निर्वाहकः । तस्य त्रिणवस्य स्तोमस्य स्वरूपं छन्दोगैरेवमाम्नातम्—'नवभ्यो हि करोति स तिसृभिः स पञ्चभिः स एकया । नवभ्यो हि करोति स एकया स तिसृभिः स पञ्चभिः । नवभ्यो हि करोति स पञ्चभिः स एकया स तिसृभिः । वज्रो वै त्रिणव'[2] इति । अस्यायमर्थः—एकस्मृचस्त्रिभिः पर्यायैरावर्तनीयः, तत्र प्रथमायास्त्रिः पाठः, द्वितीयायाः पञ्चकृत्वः पाठः, तृतीयस्याः सकृदेव पाठः । द्वितीयपर्याये प्रथमायाः सकृत्पाठः, द्वितीयस्यास्त्रिः पाठः, तृतीयस्याः पञ्चकृत्वः पाठः । तृतीयपर्याये प्रथमायाः पञ्चकृत्वः पाठः, द्वितीयस्याः सकृत्पाठः, तृतीयस्यास्त्रिः पाठः । एवमावृत्तानि सप्तविंशतिसंख्याकाभिर्ऋग्भिस्त्रिणवः स्तोमो भवति । अन्यत् पूर्ववद् व्याख्येयम् ॥

**पृष्ठ्यषडह (क्रमागत)—[पञ्चम और षष्ठ दिन]**

**२. ६ [xxii. १] गौ [द्वादशाहगत नवरात्र के] पञ्चम दिन की निर्वाहक देवता है, त्रिणव [३ × ९ = २७] स्तोम है, शाक्वर साम और पंक्ति छन्द [निर्वाहक] है; जो इस प्रकार जानता है वह इससे देवता, स्तोम, साम और छन्द का अनतिक्रमण कर समृद्ध होता है ।**

---

१. 'गौरव गुरुर्नियंत्रा वह्नपत्नी सरस्वती'—इति षड्गुरुशिष्यः ।

२. ता० ब्रा० ३ १.३ ।

पञ्चमस्याह्नो मन्त्रलिङ्गानि दर्शयति—

**यद्वै नेति न प्रेति यत्स्थित तत्पञ्चमस्याह्नो रूपम् ॥** इति ।

आकार. प्रशब्दश्च नात्र लिङ्गमिति नकारद्वयेन प्रतिषिध्यते । यत्तु 'स्थित' तिष्ठति-धात्वर्थरूपमप्रचलित तत्पञ्चमस्याह्नो निरूपकम् ॥

जो [चतुर्थ दिन के सूचक] 'आ' और 'प्र' [पहले कहे गए] हैं वे [पञ्चम दिन के सूचक] नहीं हैं, अपितु जो [मन्त्र] 'स्था' धातु के रूप से युक्त हैं वह पञ्चम दिन का निरूपक है ।

द्वितीयेऽह्न्युक्त लिङ्गजात पञ्चमेऽह्न्यतिदिशति—

**यद्धेव द्वितीयमहस्तदेतत् पुनर्यत्पञ्चमम् ॥** इति ।

नवरात्रापेक्षया यत्पञ्चममहर्विद्यते, तत्पृथड् न भवति । किन्तु यदेव द्वितीयमहस्तदेव पञ्चमत्वेन पुनः क्रियते, तत्रत्य लिङ्गजातमत्रानुसन्धेयमित्यर्थः[१] ॥

[नवरात्र का जो पाँचवाँ दिन है वह पृथक् नहीं होता है अपितु प्रथम त्र्यह के] द्वितीय दिन का जो रूप कहा गया है वह पुनः इस [मध्यम त्र्यह के द्वितीय दिन अर्थात्] पाँचवें दिन का निरूपक है ।

तानि लिङ्गानि दर्शयति—

**यदूर्ध्ववद्यत् प्रतिवद्यदन्तर्वद् यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्षमभ्युदितम् ॥** इति ।

पूर्ववद्व्याख्येयम् ॥

जो 'ऊर्ध्व' शब्द से युक्त, जो 'प्रति' शब्द से युक्त, जो 'अन्त' शब्द से युक्त, जो 'वृषन्' शब्द से युक्त और जो [मन्त्र] 'वृधन्' शब्द से युक्त आम्नात है और जिसके मध्यम पद में देवता का अभिधान किया गया हो, और जहाँ अन्तरिक्ष की ओर संकेत हो,—

अथ विशेषलिङ्गानि दर्शयति—

**यद्दुग्धवद् यदूधवद्यद्धेनुमद्यत्पृश्निमद्यन्मद्वद्यत्पशुरूप यदध्यासवद् विक्षुद्रा इव हि पशवो, यज्जागत जागता हि पशवो, यद्बार्हत बार्हता हि पशवो, यत्पाङ्क्तं पाङ्क्ता हि पशवो, यद्वाम वामं हि पशवो, यद्धविष्मद्धविर्हि पशवो, यद्वपुष्मद्वपुर्हि पशवो, यच्छाक्वरं यत्पाङ्क्त यत्कुर्वद्, यद्द्वितीयस्याह्नो रूपमेतानि वै पञ्चमस्याह्नो रूपाणि ॥** इति ।

---

१. द्र० इतः पूर्वम्, पृ० ६९९ ।

दुग्धाधधेनुपृश्निमच्छब्दैरुपेतं यद्यदस्ति, तत्सर्वं लिङ्गम्। तथाविधं च पशुरूपं यदस्ति, तदपि लिङ्गम्। पशुरूपस्य बहुविधत्वमेव यदध्यासवदित्यादिना प्रपञ्च्यते। अधिकपादस्य प्रक्षेपः 'अध्यासः'। प्रकृतौ यावदस्ति, तावतोऽप्यधिकपादोपेतम् 'अध्यासवत्'। पशूनामपि चतुर्भ्यः पादेभ्योऽधिकं मुखमेव परिगण्यते। अतोऽध्यासवत् पशुरूपं भवति। तदेव 'विशुद्रा इव' इत्यनेन स्पष्टीक्रियते। विविधा क्षुद्रा 'विशुद्रा'। एकस्मादन्यो न्यूनः, तस्मादप्यन्यो न्यूनः, गजापेक्षयाऽश्वः क्षुद्रः, तदपेक्षया महिषः क्षुद्रः, ततो गौः ततोऽजेत्येवं पशुषु क्षुद्रत्वं द्रष्टव्यम्। 'जागतं' जगतीसम्बद्धं यदस्ति तदपि पशुरूपम्, सोमाहरणप्रसङ्गे[1] जगत्या पशूनामानीतत्वाज्जागतत्वम्। तथा 'बार्हतं' बृहतीसंबद्धं पशुरूपम्। पशुविषये छन्दसां माजिधावने[2] बृहत्या विजयेन पशूनां बार्हतत्वम्। पङ्क्तिच्छन्दःसंबद्धमपि पशुरूपम्, पङ्क्तिरूपेण पञ्चावयवैरुपेताः पशवः पाङ्क्ताः। यत् 'वामं' रमणीयं सूक्तं स्वरवर्णादिभिः श्राव्यं भवति, तदपि पशुरूपम्, लोकेऽपि गवाश्वादिपशवः इति यदस्ति, तद् 'वामं' रमणीयं दृश्यते। 'हविष्मत्' हविःसंज्ञापनं यदस्ति, तदपि पशुस्वरूपम्, पशवो हि देवतासंबद्धहविःस्वरूपेण हूयन्ते।[3] 'वपुष्मद्' वपुःसंज्ञोपेतं यदस्ति, तदपि पशुस्वरूपम्, पशवो हि वपुःपुष्टाङ्गभूता दृश्यन्ते। 'विदा मघवन्' इत्यादिषु महानाम्नीषूत्पन्नं 'शाक्वरं' साम[4], तत्संबद्धमेकं लिङ्गम्। पाङ्क्तमिति यत्पुनर्वचनं, तत्पञ्चसंख्यायुक्तं, पूर्वत्र पङ्क्तिच्छन्दःसंबद्धमिति विवेकः। 'कुर्वत्' इति वर्तमानार्थवाचिप्रत्ययोपेतं धातुमात्रं विवक्षितम्। एतच्च द्वितीयस्याह्नो रूपमिति पूर्वमुक्तम्[5]। एवं च सति यानि द्वितीयेऽह्न्युक्तानि लिङ्गानि, यानि चात्र नूतनानि एतानि सर्वाण्यपि पञ्चमस्याह्नो निरूपकाणि द्रष्टव्यानि॥

जो [मन्त्र] 'दुग्ध' शब्द से युक्त, जो 'ऊध' शब्द से युक्त, जो 'धेनु' शब्द से युक्त, जो 'पृश्नि' शब्द से युक्त, जो 'मद्' शब्द से युक्त, जो पशु का निरूपक हो, जो अध्यास [वृद्धि अर्थात् अधिक पाद के प्रक्षेप] से युक्त हो, [पशुओं को भी चार पैर से अधिक एक मुख होता है अतः वह अध्यास से युक्त है]और, क्योंकि पशु एक दूसरे से विशुद्र अर्थात् छोटे-बड़े होते हैं, जो मन्त्र जगती से सम्बद्ध हो, क्योंकि पशु जगती से सम्बन्धित हैं [अर्थात् चलने-फिरते हैं], जो बृहती से सम्बद्ध हो, क्योंकि पशु बृहती से सम्बन्धित हैं, जो पङ्क्ति से सम्बद्ध हो,

---

१ द्र० इत पूर्वम्, पृ० ४७२।  २ द्र० इत पूर्वम्, पृ० ५८०, पं० २२।

३ तथा चोक्तं महाभारते—

ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतम्।
एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति॥
(अनु० पर्व, ८६ अध्याय)।

४ सामसंहितासु महानाम्नीसाम पृथगेव ग्रन्थः, तच्चारण्यकाध्ययना ऽध्यापयन्ति।

५ द्र० इत पूर्वम्, पृ० ६९९।

क्योंकि पशु [चार पैर और एक मुख इन पांच के होने से] पंक्ति से सम्बन्धित हैं, जो [सूक्त स्वरवर्णादि के द्वारा] रमणीय हो, क्योंकि [लोक में गौ आदि] पशु भी रमणीय होते हैं, जो 'हवि' सत्ता से युक्त हो, क्योंकि पशु [देवता से सम्बद्ध हवि स्वरूप के द्वारा] हवि हैं, जो 'वपु' सत्ता से युक्त हो, क्योंकि पशु [पुष्ट अङ्ग से] वपु हैं, जो शाक्वर [साम] से सम्बद्ध हो, जो पंक्ति [छन्द] से सम्बद्ध हो, जो वर्तमान कालिक क्रिया से युक्त हो, और जो द्वितीय दिन के निरूपक चिह्न हैं—ये सब पञ्चम दिन के निरूपक हैं।

आज्यशस्त्रं विधत्ते—

'इममू षु वो अतिथिमुषर्बुधमिति' पञ्चमस्याह्न आज्यं भवति, जागतमध्यासवत् पशुरूपं, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।

'इममू षु' इत्यादिसूक्ते[1] जगतीछन्दोयुक्ता आद्या नवर्चं शंसनीया ।[2] तत्र तृतीयस्यामृचि जगतीछन्दस्केभ्यश्चतुर्थपादेभ्योऽधिक पादो 'भरद्वाजाय सप्रथः' इत्ययं समाम्नायते । अतोऽधिकपादयुक्तत्वात् इदमध्यासवल्लिङ्गम् ।[3] तत्र पशुस्वरूपम् पशोरपि पादचतुष्टयादधिकस्य मुखस्य विद्यमानत्वात् । तदेतल्लिङ्गयुक्तं पञ्चमेऽहनि विनियोक्तुं युक्तं योग्यम् तस्मादेतत् पञ्चमस्याह्नो 'रूप' निरूपकम् ॥

'इममू षु व' (तुम उषाकाल में प्रबुद्ध अतिथि रूप इस [अग्नि] को ) इत्यादि पञ्चम दिन का आज्य [सूक्त] है। यह जगती छन्द से युक्त है, [अधिक पादों से युक्त होने से] यह वृद्धि से युक्त है। [चार पैर और मुख की अधिकता से] यह पशु का लक्षक है, जो पञ्चम दिन में [विनियोग के योग्य होने से] पञ्चम दिन का निरूपक है।

अथ प्रउगशस्त्रं विधत्ते—

'आ नो यज्ञं दिविस्पृशं,मा नो वायो महेतने, रथेन पृथुपाजसा, बहवः सूरचक्षसः, इमा उ वां दिविष्टय , पिबा सुतस्य रसिनो, देवं देवं वोऽवसे देवं देवं,[4] बृहदुगायिषे वच इति' बार्हतं प्रउगं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।

---

१ ऋ० ६ १५ ।

२ 'इममू षु व इत्येकोनविंशत्यृचं सूक्तम् । तत्रादितो नवर्चं एवात्र शंसनीया भवन्ति, 'इममू षु वो अतिथिमुषर्बुधमिति नवाज्यम्'—इति कल्पोक्ते ७ १२ ।

३ 'अविता सख शाक्वरं महापङ्क्त्यन्तमिति'—सर्वानुक्रमण्यापाङ्क्तमित्यन्वयमात्रम् । 'महापङ्क्तेश्चापि पूर्वपदलोप'—इति षड्गुरुशिष्य ।

४ द्वादशसूक्तीयर्चो ग्रहणवारणायेह पादाधिकप्रतीकग्रहणम् ।

'आ नो यज्ञमिति'[१] द्वे ऋचौ । 'आ नो वायो',[२] इत्येका । सोऽयं प्रथमस्तृच, 'श्येन'इत्यादि '[३] द्वितीयो 'बट्व'[४] इत्यादिस्तृतीय 'इमा उ वाम्'[५]-इत्यादिश्चतुर्थ., 'पिबा सुतस्य'[६]-इत्यादि पञ्चम, 'देव देवमिति'[७] षष्ठ, 'बृहदिति'[८] सप्तम. । तदेतत्सप्तम बृहतीछन्दोयोगाद् 'बार्हतम्' । अतो लिङ्गसद्भावात् पञ्चमेऽहनि योग्यतया तस्य निरूपकम् ॥

'आ नो यज्ञ', 'आ नो वायो', श्येन पृथुपाजसा', बट्व सूरचक्षसः, 'इमा उ वा दिविष्टयः', पिबा सुतस्य, 'देव देवं' और 'बृहदुगायिषे' इत्यादि बृहती छन्दस्क प्रउग [शस्त्र] हैं, जो पञ्चम दिन में पञ्चम दिन का निरूपक है ।

अथ शस्त्रान्तरस्य प्रतिपद विधत्ते—

**'यत्पाञ्चजन्यया विशेति' मरुत्वतीयस्य प्रतिपत्पाञ्चजन्ययेति पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।**

अस्मिंस्तृचे प्रथमायामृचि[९] पाञ्चजन्ययति पदे पञ्चशब्दयोगो लिङ्गम् ॥

'यत्पाञ्चजन्यया' इत्यादि मरुत्वतीय शस्त्र की प्रतिपद् ऋचा है । इसमें 'पाञ्चजन्यया' [ = पांच जनों के] यह शब्द पञ्चम दिन में पञ्चम दिन का रूप है ।

अथ द्वितीयनाह्ना समानत्वलिङ्गयुक्त शस्त्रक्लृप्ति विधत्ते—

**'इन्द्र इत्सोमपा एक',[१०] 'इन्द्र नेदीय एदिहि',[११] 'उत्तिष्ठ ब्रह्मणस्पते'[१२] 'अग्निर्नेता',[१३] 'त्वं सोम क्रतुभिः',[१४] 'पिन्वन्त्यपो',[१५] बृहदिन्द्राय गायतेति',[१६] द्वितीयेनाह्ना समान आतानः, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।**

'आतान.' शस्त्रक्लृप्ति. ॥

'इन्द्र इत्सोमपा', 'इन्द्र नेदीय', उत्तिष्ठ ब्रह्मणस्पते', 'अग्निर्नेता', 'त्वं सोम क्रतुभिः', ,पिन्वन्त्यपो' और 'बृहद् इन्द्राय' इत्यादि द्वितीय दिन के ही समान शस्त्र की क्लृप्ति [अर्थात् क्रमागत मन्त्र] हैं, जो पञ्चम दिन में पञ्चम दिन के निरूपक हैं ।

---

१. ऋ० ८.१०१.९, १० । २. ऋ० ८.४६.२५ ।
३. ऋ० ४.४६.५–७ । ४. ऋ० ७.६६.१०–१२ ।
५. ऋ० ७.७४.१–३ । ६. ऋ० ८.३.१–३ ।
७. ऋ० ८.२७.१३–१५ । ८. ऋ० ७.९६.१–३ ।
९. ऋ० ८.६३.७ । १०. ऋ० ८.२.४ । ११. ऋ० ८.५३.५ ।
१२. ऋ० १.४०.१ । १३. ऋ० ३.२०.४ । १४. ऋ० १.९१.२ ।
१५. ऋ० १.६४.६ । १६. ऋ० ८.८९.१ ।

अथ मदशब्दलिङ्गेन पञ्चपादोपेतपाङ्क्तत्वलिङ्गेन चोपेतं सूक्तं विधत्ते—

**'अविताऽसि सुन्वतो वृक्तबर्हिषः'[1] इति सूक्तं मद्वत् पाङ्क्तं पञ्चपदं, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।**

अत्र द्वितीयपादे 'पिबा सोमं मदाय'—इति श्रवणात् इदं सूक्तं मद्वद्भवति । पञ्च पादा विस्पष्टा ॥

'अविताऽसि सुन्वतः' [इन्द्र सोम का अभिषव करने वाले और कुश फैलाने वाले यजमान के तुम रक्षक हो] इत्यादि सूक्त [के द्वितीय पाद में 'मदाय' शब्द होने से] मद् शब्द से युक्त है, जो पाँच पादों वाले पङ्क्ति छन्द से युक्त पञ्चम दिन में पञ्चम दिन का रूप है।

तादृशमेवान्यत्सूक्तं विधत्ते—

**'इत्था हि सोम इन्मदः'[2] इति सूक्तं मद्वत् पाङ्क्तं पञ्चपदं, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।**

'इत्था हि सोम' इत्यादि सूक्त 'मद' शब्द से युक्त, पङ्क्ति छन्दस्क, पाँच पादों का पञ्चम दिन में पञ्चम दिन का निरूपक है।

पुनरपि मदशब्दलिङ्गोपेतं त्रिष्टुप्छन्दस्कं सूक्तं विधत्ते—

**'इन्द्र पिब तुभ्यं सुतो मदायेति'[3] सूक्तं मद्वत् त्रैष्टुभं, तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते ॥ इति ।**

पूर्ववद्व्याख्येयम् ॥

'इन्द्र पिब' [हे इन्द्र तुम्हारे मदयुक्त होने के लिए यह सोम अभिषुत हुआ है, इसका पान करो] इत्यादि सूक्त 'मद्' शब्द से युक्त है। त्रिष्टुप् छन्दस्क है, नियताक्षर संख्या से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत मरुत्वतीय शस्त्र] धृत होता है। अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

आकारं प्रशब्दवर्जितत्वमरुत्वतीयशस्त्रस्यान्ते प्रक्षेपणीयं तृचं विधत्ते—

**'मरुत्वाँ इन्द्र मीढ्वः'[4] इति पर्यासो नेति न प्रेति, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।**

परितोऽन्ते प्रक्षेपणीयः पर्यासः ॥

---

१ ऋ० ८.३६ ।    २ ऋ० १.८० ।
३ ऋ० ६.४०    ४ ऋ० ८.७६.७ ।

'मरुत्वाँ इन्द्र' [मरुद्गण के साथ हे इन्द्र, हे अत्यन्त प्रदाता] इत्यादि ऋचा [मरुत्वतीय शस्त्र के] अन्त में प्रक्षेपणीय है। इसमें न तो 'आ' [=इधर] शब्द है और न तो 'प्र' [=आगे] शब्द है, जो पाँचवें दिन में पाँचवें दिन का रूप है।

तस्मिन्सूक्ते निविद्धानं विधत्ते—

**ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते, तस्माद् गायत्रीषु निविदं दधाति ॥ ६ ॥** इति।

पूर्ववद्व्याख्येयम् ॥

॥इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) प्रथमः खण्डः ॥ १ ॥ (६) [१९९]

उस सूक्त की ऋचाएँ गायत्री छन्दस्क हैं और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं। जिस [छन्द] में निवित् [पद समूह] प्रक्षिप्त होते हैं, वही छन्द [सवन का] निर्वाहक होता है। इस [निर्वाहकत्व] के कारण गायत्री ऋचाओं में निविद् प्रक्षिप्त होते हैं।

॥ इस प्रकार बाइसवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

अथ शाक्वरसामसम्बन्धेन लिङ्गेन युक्ता ऋचो विधत्ते—

**महानाम्नीष्वत्र स्तुवते शाक्वरेण साम्ना रायन्तरेऽहनि पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति।

'विदा मघवन्'-इत्यादयो नवर्चो महानाम्नीसंज्ञकाः।[1] तासूद्गातारः शाक्वराख्येन साम्ना[2] स्तुवते। ऋग्वेदमुख्यत्वाद् रायंतरं शाक्वरं च साम रथंतरस्यजन्यत्वाद् रायंतरम्, अतोऽत्र ता ऋचो योग्याः ॥

v. ७ [xxii. २] यहाँ वे ['विदा मघवन्' इत्यादि नौ] महानाम्नी ऋचाओं का शाक्वर नामक साम के द्वारा पाठ करते हैं, जो रथन्तर दिन, पञ्चम दिन में पञ्चम दिन का रूप है।

'महानाम्नी' शब्द निर्वक्ति—

**इन्द्रो वा एताभिर्महानात्मानं निरमिमीत, तस्मान्महानाम्न्योऽथो इमे वै लोका महानाम्न्य इमे महान्तः ॥** इति।

---

१. ऐ० आ० ४.१-१५, महानाम्न्याविवः १-९।

२. तच्च साम चतुर्भ्यो गानग्रन्थेभ्यः पृथगेवाम्नातम्।

पुरा कदाचिदिन्द्रः स्वयमेवैश्वर्यादिगुणैर्महान् भविष्यामीति विचार्य 'विदा मघवन्'-इत्यादिभिर्ऋग्भिः स्वात्मानं गुणैर्महान्तं निर्मितवान् । तस्मान्महत्त्वनिर्माणसाधनत्वान्महानाम्नीशब्दवाच्याः सम्पन्नाः । अपि च महानाम्न्यो भूरादिलोकत्रयस्वरूपाः, लोकाश्च महान्तः, तस्मादप्यासां महानाम्नीत्वम् ॥

[पहले किसी समय] इन्द्र ने ['अपने ऐश्वर्यादि गुणों से महान् होऊँगा'-ऐसा विचार कर 'विदा मघवन्' इत्यादि] इन [ऋचाओं] से अपने को महान् बनाया। इसलिए [महत्वनिर्माण के साधनत्व के कारण] इनका नाम 'महानाम्नी' हुआ और ये [तीनों] लोक महानाम्नी हैं तथा ये महान् हैं [इससे भी इनका नाम 'महानाम्नी' हुआ]।

ननु शक्वरीपूत्पन्नं साम शाक्वरमिति वक्तव्यम्,—शक्वरी च सप्तपादोपेता, न चैता ऋचस्तथाविधाः, किन्तु पादचतुष्टयोपेता अनुष्टुभः, तत्कथमासां शक्वरीत्वमित्याशङ्क्य शक्तिप्रदत्वाच्छक्वरीत्वमिति निर्वचनं दर्शयति—

**इमान् वै लोकान् प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद् यदिदं किंच, यदिमांल्लोकान् प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद् यदिदं किंच, तच्छक्वर्योऽभवंस्तच्छक्वरीणां शक्वरीत्वम् ॥** इति ।

पुरा प्रजापतिः 'विदा मघवन्'-इत्यादिका महानाम्नीरनुसधाय, तदात्मकांल्लोकान् प्रजापतिः सृष्ट्वा, ताभिर्महानाम्नीभिरनुगृहीतः पश्चाद् एषु लोकेषु यत्किञ्चित् स्थावरं जङ्गमं प्राणिजातं स्रष्टव्यमस्ति, तत्सर्वं स्रष्टुमशक्नोच्छक्तिमानभूत् ।[1] यस्मादेव प्रजापतिरकरोत् तस्माच्छक्तिहेतुत्वात् एता ऋचः शक्वरीनामिका अभवन् । अनेन प्रकारेण तासां शक्वरीत्वं सम्पन्नम् ॥

[प्राचीन काल में] प्रजापति ने ['विदा मघवन्' इत्यादि महानाम्नी का अनुसधान करके] इन लोकों की सृष्टि करके [इन लोकों में] जो कुछ भी [स्थावर या जङ्गम प्राणिजात] सृष्टि के योग्य हैं उन सब कुछ की सृष्टि करने में शक्तिमान् हुए। क्योंकि प्रजापति इन लोकों की सृष्टि करके, जो कुछ भी [प्राणिजात] हैं उन सब की सृष्टि करने में समर्थ हुए, इसलिए ये 'शक्वरी' ऋचाएँ हुईं। इस प्रकार शक्वरी ऋचाओं का शक्वरीत्व सम्पादित हुआ।

---

१ 'इमाँल्लोकोपमां दृष्ट्वा जगत् सर्वं प्रजापतिः ।
शक्तोऽभूद् रक्षितुं तासां विकल्पेन स चाप्यृषिः ॥
वैश्वामित्र्यो महानाम्न्य ऐन्द्रयो वैके प्रजापतिः ।
इति ह्यार्षानुक्रमण्यां शौनकः समदीदृशत् ॥'
—इति षड्गुरुशिष्यः । किन्तु पद्यमिदं मुद्रितार्षानुक्रमण्यां नोपलभ्यते ।

प्रकारान्तरेण महानाम्नीः प्रशंसति—

**ता ऊर्ध्वाः सीम्नोऽभ्यसृजत; यदूर्ध्वाः सीम्नोऽभ्यसृजत, तत्सिमा अभवंस्त-त्सिमानां सिमात्वम् ॥ इति ।**

या एता महानाम्न्यः सन्ति, ता 'सीम्न ऊर्ध्वा अभ्यसृजत' । 'अग्निमीळे'-इत्यारभ्य 'यथा वः सुसहासति'-इत्यन्ता दाशतयीना सीमा, तस्याः 'सीम्नः' ऊर्ध्वभाविनीः कृत्वा प्रजापतिरभितः सृष्टवान् । अत एवैता संहिता संहितायां नाऽऽम्नायन्ते । किन्त्वारण्य-काण्डे[1] आम्नायन्ते । अथवा, नवैता ऋचस्त्रिवेदस्य उपरिस्थितत्वेन प्रयुज्यन्ते । तथा च आश्वलायन आह—'शाक्वरं चेत्पृष्ठं महानाम्न्यः स्तोत्रियः । ता अभ्यर्धकारं नव प्रकृत्या तिस्रो भवन्ति'[2] इति । अस्यायमर्थः—यदा शाक्वरसाम्ना पृष्ठस्तोत्रं निष्पाद्यते, तदानीं महानाम्न्य ऋचः स्तोत्रियस्तृचो भवति । तास्तु 'प्रकृत्या' स्वभावेन नवसंख्याकान्यपि तिस्रः कर्तव्याः । अभ्यर्धकारमिति तत्रोपाय उच्यते । अर्धर्चेनार्धर्चेन युक्तामेकामृचमेकमर्धर्चं कृत्वेत्युक्तं भवति । ततस्त्रयाणामर्धर्चानामेकार्थत्वे सति तिस्र ऋचो भवन्तीति । सोऽयं सीम्नः, उल्लङ्घनप्रकार । यस्मात् सीम्नः ऊर्ध्वाः सतीः प्रजापतिरसृजत, तस्मात् 'सिमा' इत्येतन्नामिका अभवन् । महानाम्नीनामेतेन प्रकारेण सिमानामत्वं विज्ञेयम्[3] ॥

उन [महानाम्नी ऋचाओं] को [दाशतयी की] सीमा से बाहर [प्रजापति ने] रचा । क्योंकि उन्होंने सीमा से परे इसको रचना की, इसलिए वह 'सिमा' हुई । इसीलिए सिमा [रूप महानाम्नी] ऋचाओं का 'सिमा' नाम हुआ ।

स्तोत्रियमुक्त्वानुरूपं तृचं विधत्ते—

**स्वादोरित्था विषूवत, उप नो हरिभिः सुत,मिन्द्रं विश्वा अवीवृधन्नित्यनु-रूपो वृषण्वान् पृश्निमान् मद्वान् वृषन्वान् पञ्चमेऽहनि पञ्चम-स्याह्नो रूपम् ॥ इति ।**

---

१. चतुर्थे इति शेषः ।

२. आश्व० श्रौ० ७.१२.१० ।

'ता महानाम्नीरभ्यर्धकारं शंसेत्, त्रिभिस्त्रिभिरभ्यर्धर्चशः प्रणवं च कुर्यात्-इत्यर्थः । ता अभ्यर्धकारं शंसेत्—यथा प्रकृत्या नव सन्त्यस्ता एव तिस्रो भवन्तीति सूत्रार्थः' (इति तत्र नारायणीयावृत्तिः) ।

३. अथ सामब्राह्मणयो—'इन्द्रः प्रजापतिमुपाधावत् वृत्रं हनानीति, तस्मा एतच्छन्दोऽस्य इन्द्रियं वीर्यं निर्माय प्रायच्छदेतेन शक्नुहीति, तच्छक्वरीणां शक्वरीत्वम् । सामानमभिनत् तत् सिमा । मद्भुतामभवत् तन्महा । महान् घोष अभूत्तन्महा-नाम्न्यः'—इति ता० ब्रा० १३.४ । ऐन्द्रो महानाम्न्यः प्रजापतेर्वा विष्णोर्वा विश्वा-मित्रस्य वा सिमा वा महा वा शक्वर्यो वा'—इति आर्षेय ब्रा० ३.२१ ।

स्वादोरित्यादिरध्ययनप्रकारेणैकस्तृच[1] उप न इत्यादिर्द्वितीय[2] इन्द्र विश्वा[3] इति तृतीय। एतत्त्रय मिलित्वा पूर्वोक्तस्तोत्रियसादृश्यादनुरूपस्तृचो भवति। तत्र स्वादोरित्येतस्मिन् वृष्णा मदन्ति इति वृषण्वत्त्व मद्वत्त्व च दृश्यते, 'सोम श्रीणन्ति पृश्नय' इति पृश्निमत्त्वम्, 'इन्द्र विश्वा अवीवृधन्निति' वृधन्वत्त्वम्, तान्येतानि पञ्चमेऽहनि योग्यत्वात् पञ्चमस्य गमकानि॥

'स्वादोरित्था' आदि एक तृच, 'उप न' इत्यादि द्वितीय तृच और 'इन्द्र विश्वा' आदि तृतीय तृच [पूर्वोक्त स्तोत्रिय सादृश्य से] अनुरूप हैं, जो वृषन् शब्द से युक्त, 'मद्' शब्द से युक्त, 'पृश्नि' शब्द से युक्त और 'वृधन्' शब्द से युक्त होने से पञ्चम दिन में पञ्चम दिन का रूप है।

अच्युतत्वलिङ्गेन धाय्या विधत्ते—

**'यद्वावानेति'[4] धाय्याऽच्युता॥** इति।

'यद्वावान' इत्यादि धाय्या [पूर्व में विहित होने से] अच्युत है।

तां धाय्यामनु रथन्तरसामयोने शसन विधत्ते—

**'अभि त्वा शूर नोनुम'[5] इति रथन्तरस्य योनिमनु निवर्तयति, रथन्तरं ह्येतदहरायतनेन॥** इति।

अयुग्मत्वाद् अह्नो रथन्तरायतनत्वमेतदेव तल्लिङ्गम्॥

'अभि त्वा शूर' इत्यादि रथन्तर [नामक साम] में उत्पन्न [प्रगाथ] का [पूर्वोक्त धाय्या के] पश्चाद् शसन करता है, क्योंकि यह [= पञ्चम] दिन-स्थान के द्वारा रथन्तर सम्बन्धी है।

शाक्वरसामसम्बन्धि सामप्रगाथ विधत्ते—

**'मो षु त्वा वाघतश्चनेति'[6] सामप्रगाथोऽभ्यासवान्, पशुरूपं, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्॥** इति।

ऋग्द्वयमेव सर्वत्र प्रगाथस्य स्वरूपम्। अत्र तु 'रायस्काम'[7] इत्येषा द्विपदाऽधिकत्वेन प्रक्षिप्ता,[8] तस्मादय प्रगाथोऽभ्यासवान्। तच्च पशुरूपत्वात् पञ्चमेऽहनि योग्यम्॥

---

१ ऋ० १ ८४ १०।  २ ऋ० ८ ९३ ३१।  ३ ऋ० १ ११.१।
४ ऋ० १० ७४ ६।  ५ ऋ० ७ ३२ २२।
६ ऋ० ७ ३२ १।  ७ ऋ० ७ ३२.३।
८ तदय प्रगायस्तृच एवेति फलितम्। 'मोषु वा वाघतश्चनेति सद्विपद उपसमस्येद् द्विपदाम्'—इति आश्व० श्रौ० ७ ३। सामसहितायां तु (उ० आ० ८.२.६.१,२) द्वृच एवेत्यस्य सामप्रगाथत्वमभ्याहृतम्।

'मो षु त्वा' आदि साम प्रगाथ है। [यहाँ 'दावस्त्वामः' इत्यादि द्विपदा ऋचा का अधिक रूप में प्रक्षेप होने से] यह अच्यान [= आविरव] से युक्त है; जो पञ्चम होने से पञ्चम दिन में पञ्चम दिन का रूप है।

लच्युतत्वलिङ्गेन सूक्तविशेषं विधत्ते—

**'त्यमू षु वाजिनं देवजूतमिति'[1] तार्क्ष्योऽच्युतः ॥ ७ ॥ इति।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) द्वितीयः खण्डः ॥२॥ (७) [१६०]

'त्यमू षु' इत्यादि तार्क्ष्य देवताक सूक्त [प्रथम दिन विहित होने से] अच्युत है।

॥ इस प्रकार बाइसवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

पञ्चपादोपेततया पाङ्क्तत्वलिङ्गयुक्तं सूक्तं विधत्ते—

**'प्रेदं ब्रह्म वृत्रतूर्येष्वाविथेति' सूक्तं[2] पाङ्क्तं; पञ्चपदं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति।**

[अवशिष्ट निष्केवल्यशस्त्र और सायंसवन के शस्त्र]—

१. ८ [xxii. ३] 'प्रेदं ब्रह्म' आदि सूक्त पंक्ति छन्दस्क है, जो पांच पादों से युक्त पञ्चम दिन में पञ्चम दिन का रूप है।

मदशब्देन पाङ्क्तत्वेन च लिङ्गद्वयेनोपेतं सूक्तं विधत्ते—

**'इन्द्रो मदाय वावृधे'[3] इति सूक्तं मद्वत् पाङ्क्तं, पञ्चपदं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति।**

'इन्द्रो मदाय' आदि सूक्त 'मद्' शब्द से युक्त पंक्ति छन्दस्क है, जो पांच पादों से युक्त पञ्चम दिन में पञ्चम दिन का रूप है।

मदिधातुलिङ्गकं त्रिष्टुप्छन्दस्कं सूक्तं विधत्ते—

**'सत्रा मदासस्तव विश्वजन्या'[4] इति सूक्तं मद्वत् त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधाराऽऽयतनादेवैतेन न प्रच्यवते ॥ इति।**

'सत्रा मदासस्तव' आदि सूक्त 'मद्' धातु से युक्त त्रिष्टुप् छन्दस्क है। नियत अक्षर संख्या से युक्त उस [सूक्त] से सवन सब [निष्केवल्य] शास्त्र धारित होता है। अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

---

१. ऋ० १०.१७८। २. ऋ० ८.३७। ३. ऋ० १.८१। ४. ऋ० ३.३६।

शस्त्रान्ते प्रक्षेपणीय तृच विधत्ते—

**'तमिन्द्र वाजयामसीति'[1] पर्यास, स वृषा वृषभो भुवदिति पशुरूप, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

स वृषेत्यादिस्तृतीय पाद, तत्र वृषभशब्दश्रवणात् पशुरूपत्वम् ॥

'तमिन्द्र वाजयामसि' आदि तृचविशेष पर्यास [ = शस्त्र के अन्त में प्रक्षेपणीय] है। [इस ऋचा के] 'स वृषा' इत्यादि [तृतीय पाद में 'वृषभ' शब्द के होने से यह] पशु रूप है, जो पञ्चम दिन में पञ्चम दिन का रूप है।

तस्मिंस्तृचे निविद्धान विधत्ते—

**ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यदिन वहन्ति तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते, तस्माद् गायत्रीषु निविद दधाति ॥** इति ।

उस [तृच] की ऋचाएँ गायत्री छन्दस्क हैं और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं। उस [छन्द] में निवित्पद [समूह] प्रक्षिप्त होते हैं, वही छन्द [सवन का] निर्वाहक होता है। उस [निर्वाहकत्व] के कारण गायत्री ऋचाओं में निविद् प्रक्षिप्त होते हैं।

वैश्वदेवशस्त्रस्य तृचद्वय विधत्ते—

**'तत्सवितुर्वृणीमहे'ऽद्या नो देव सवितरिति, वैश्वदेवस्य प्रतिपदनुचरौ, राथन्तरेऽहनि पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

'तत्सवितुरिति'[2] तृच प्रतिपत्। 'अद्या न'[3] इति तृचोऽनुचर। तावुभौ रथन्तर-सम्बन्धिनी। अहश्चायुग्मत्वाद् राथन्तरम् एव लिङ्ग सम्पादनीयम् ॥

[वैश्वदेवशस्त्र]—

'तत्सवितु' और अद्या न' इत्यादि दोनों तृच वैश्वदेवशस्त्र के प्रतिपत् और अनुचर हैं। [वे दोनों ही रथन्तर साम से सम्बन्धित हैं अत ] यह रथन्तर साम से सम्बद्ध [अयुग्म] दिन पञ्चम दिन में पञ्चम दिन का रूप है।

रमणीयत्ववाचकेन वामशब्दलिङ्गेन युक्त तृच विधत्ते—

**'उदुष्य देव सविता दमूना'[4] इति सावित्र, मा दाशुषे सुवति भूरि वाममिति वाम पशुरूप, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

---

1 ऋ० ८।९३।७-९।  2 ऋ० ५।८२।१-३।

3 ५।८२।४-६।  4 ऋ० ६।७१।४-६।

सावित्रत्वं स्पष्टम् । 'आ दाशुषे' इति चतुर्थः पादः । तत्र 'भूरि वाममिति'–वामशब्द-रूपं लिङ्गं पशुरूपमस्ति ॥

'उदुष्य देवः सविता' इत्यादि तृच सवितृदेवताक है। [इसका] 'आ दाशुषे' आदि [चतुर्थ पाद 'भूरि वामं' इस] रमणीय शब्द से युक्त पशुरूप है, जो पञ्चम दिन में पञ्चम दिन का निरूपक है।

पशुवाचकेनोक्षशब्दरूपेण लिङ्गेन युक्तं चतुर्ऋचं विधत्ते—

**'मही द्यावापृथिवी इह ज्येष्ठे'**[1] **इति द्यावापृथिवीयं; रुवद्धोक्षेति पशुरूपं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

रुवदित्यादिश्चतुर्थः पादः, तत्रोक्षेति पुंगवाभिधायकः शब्दोऽस्ति ॥

'मही द्यावापृथिवी' इत्यादि द्यावापृथिवी देवताक चतुर्ऋच[2] [के चतुर्थ पाद] 'रुवद्धोक्षा' आदि [में वृषभ वाचक 'उक्ष' शब्द होने से] पशुरूप है जो पञ्चम दिन में पञ्चम दिन का रूप है।

ऋभुदेवताकं सूक्तं विधत्ते—

**'ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेत्यार्भवं'**,[3] **वाजो वै पशवः पशुरूपं, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

पशोर्हविष्ट्वेन देवतान्नत्वादन्नवाची वाजशब्दः पशुरूपं लिङ्गम् ॥

'ऋभुर्विभ्वा वाज' ( = ऋभु, विभ्वा, वाज और इन्द्र हमारे इस यज्ञ के अभिमुख) इत्यादि ऋभुदेवताक सूक्त है; पशु [देवता के लिए हवि रूप अन्न होने से] वाज[4] है, जो [वाज शब्द] पशु का लक्षक है, वह पञ्चम दिन में पञ्चम दिन का निरूपक है।

अभ्यासलिङ्गकं सूक्तं विधत्ते—

**'स्तुषे जनं सुव्रतं नव्यसीभिरिति'**[5] **वैश्वदेवमभ्यासवत् पशुरूपं, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥** इति ।

---

१. ऋ० ४.५६.१-४ ।
२. चतुर्ऋच निविद्धानम् । सूत्र्यते हि—'उदुष्य देवः सविता दमूना इति तिस्रो मही द्यावापृथिवी इह ज्येष्ठे'—'इति चतस्र' इति आश्व० श्रौ० ८.८.६ ।
३. ऋ० ४.३४ ।
४. (i) वाजस्यान्नस्य भुक्तिर्हि गव्यैः क्षीरघृतादिभिः—इति षड्गुरुशिष्य. ।
(ii) 'Strength' इति वीयमहोदय ।
५. ऋ० ६.४९ ।

त्रिष्टुप्छन्दस्के सूक्ते 'विश आ देवी' इत्येक पादोऽधिक प्रक्षिप्यते,[1] सोऽयमभ्यासो लिङ्गम् ॥

'स्तुषे जन सुव्रतम्' (= मैं नूतन स्तुतियों के द्वारा शोभन कर्म वाले देवों की स्तुति करता हूँ) इत्यादि वैश्वदेव देवताक [त्रिष्टुप् छन्दस्क सूक्त में 'विश आ देवी' आदि एक पाद अधिक प्रक्षिप्त होता है वह] सूक्त अभ्यास से युक्त तथा पशु रूप है जो पञ्चम दिन में पञ्चम दिन का रूप है।

शस्त्रान्तरस्य प्रतिपद सूक्त विधत्ते—

हविष्पान्तमजर स्वर्विदीत्याग्निमारुतस्य प्रतिपद्धविष्मद् पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।

हवि शब्दोपेतत्वमत्र[2] लिङ्गम् ॥

[आग्निमारुतशस्त्र]—

'हविष्पान्तमजर' (= पान के योग्य जरारहित एव देवों के प्रिय सोमरस रूपी हवि) आदि आग्निमारुतशस्त्र का प्रतिपद् सूक्त है, जो 'हवि' शब्द से युक्त पञ्चम दिन में पञ्चम दिन का रूप है।

वपु शब्दोपेत मरुद्देवताक सूक्त विधत्ते—

'वपुर्नु तच्चिकितुषे चिदस्त्विति'[3] मारुत, वपुष्मत् पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ इति ।

'मरुतो वावृधन्त' इति श्रवणात् तत्सूक्त मारुतम् । वपु शब्दलिङ्ग तु स्पष्टम् ॥

'वपुर्नु तच्चिकितुषे' इत्यादि मरुद्देवताक सूक्त है, वपु शब्द से युक्त जो पञ्चम दिन में पञ्चम दिन का रूप है।

अच्युतत्वलिङ्गयुक्तामृच विधत्ते—

'जातवेदसे सुनवाम सोममिति'[4] जातवेदस्याऽच्युता ॥ इति ।

'जातवेदसे सुनवाम' इत्यादि जातवेददेवताक ऋचा [पूर्व में विहित होने से] अच्युत है।

अभ्यासलिङ्गेन युक्त जातवेदोदेवताक तृच विधत्ते—

'अग्निर्होता गृहपति स राजेति'[5] जातवेदस्यमभ्यासवत् पशुरूप, पञ्चमेऽहनि पञ्चमस्याह्नो रूपम् ॥ ८ ॥ इति ।

---

1 विश आ देवीरम्य ? हनवाम' इति ऋ० ६ ४९ १५ ।　२ ऋ० १० ८८ ।
३ ऋ० ६ ६६ ।　४ ऋ० १ ९९ १ ।　५ ऋ० ६ १५ १३ १५ ।

त्रिष्टुप्छन्दस्कस्य तृचस्यावसाने 'ता तरेम'-इत्यधिकः पादोऽभ्यासः[1] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम-पञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) तृतीयः खण्डः ॥३॥ (८) [१६१]

'अग्निर्होता गृहपतिः' ( =देवों को बुलाने वाले, गृहस्वामी एवं दीप्तिमान् अग्नि) इत्यादि जातवेद देवताक [त्रिष्टुप् छन्दस्क] तृच [के अन्त में 'ता तरेम' आदि पाद अधिक है अतः] अभ्यास युक्त यह पशुरूप है, जो पञ्चम दिन में पञ्चम दिन का रूप है।

॥ इस प्रकार बाइसवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथ षष्ठमहरारभ्यते—

देवक्षेत्रं वा एतद् यत् षष्ठमहर्देवक्षेत्रं वा एत आगच्छन्ति, ये षष्ठमहरागच्छन्ति ॥ इति ।

द्वादशाहमध्ये नवरात्रान्तर्गते पृष्ठ्यषडहे यत् षष्ठमहरस्ति, तदेतद् 'देवक्षेत्रं वै' देवाना निवासस्थानमेव । एवं सति 'ये' यजमाना. षष्ठमहरनुतिष्ठन्ति, एते देवाना निवासस्थानमागच्छन्ति ॥

[षष्ठ अहः के ऋतुयाज]—

५. १ [xxii. ४] [द्वादशाह के मध्य नवरात्रान्तर्गत पृष्ठ्यषडह में] जो यह छठवाँ दिन है वह देवों का निवासस्थान ही है। [इस प्रकार] जो [यजमान] षष्ठ अहः का अनुष्ठान करते हैं वे देवों के निवासस्थान पर आ जाते हैं।

अथास्मिन् षष्ठेऽहनि ऋतुप्रैषेषु ऋतुयाज्यासूक्ते कंचिद् विशेषं विधातुं प्रस्तौति—

न वै देवा अन्योऽन्यस्य गृहे वसन्ति, नर्तुॠतोर्गृहे वसतीत्याहुस्तद्यथायथमृत्विज ऋतुयाजान् यजन्त्यसंप्रदायं तद्यथर्तूनृतून् कल्पयन्ति यथायथं जनताः ॥ इति ।

देवाः सर्वेऽप्यन्योऽन्यस्य गृहे वासं नैव कुर्वन्ति, किंतु स्वे स्व एव गृहे । एवं च सत्यृतुरप्यृतोरन्यस्य स्थाने न वसति, किंतु सर्वोऽपि वसन्ताद्यृतुः स्वे स्व एव स्थाने निवसति । तस्मात् कारणात् 'यथायथं' स्वस्वस्थानमनतिक्रम्य सर्वेऽप्यृत्विज ऋतुयाजान् यजेयुः, 'असंप्रदायम्' अन्यस्मै अदत्वा । अयमर्थः—ऋतुग्रहाणां प्रचारे यदा वर्तेरे, तदानीं मैत्रावरुणः प्रैषसूक्तगतेन मन्त्रेण होत्रादीन् प्रेष्यति, अन्ते च याज्यया वषट्कुर्वन्ति । अध्वर्युयजमानौ तु प्रैषितौ स्वस्वयाज्या होत्रे प्रयच्छतः । तदिदं प्रदत्तावनुष्ठानम् । अत्र तु

1. 'ता तरेम तवावसा तरेम'-इति ऋ० ६.१५.१५ ।

तौ होत्रे न प्रयच्छत , किंतु स्वयमेव याज्या पठत इति । तथा सति 'यथर्तु' त तमृतु मनतिक्रम्य सर्वानृतूनृत्विज 'कल्पयन्ति' स्वस्वप्रयोजनसमर्थान् कुर्वन्ति ।[1] ऋतूना तथा कल्पने सति 'जनता.' जनसमूहा[2] 'यथायथ' स्व स्व स्थानमनतिक्रम्य व्यवस्थिता सुखिनो भवन्ति । एवमृतुयाजा अत्र प्रस्तुता , तत्रैतच्चिन्त्यते—किमृतुयाजेषु प्रैषवषट्कारौ प्रकृतिवत्र कर्तव्यावुत कर्तव्यौ ? आहोस्वित् ? प्रकारान्तरेण कर्तव्यौ ? इति ॥

देवता एक दूसरे के घर पर निवास नहीं करते और एक ऋतु अन्य ऋतु के स्थान पर नहीं होती [अपितु वसन्त आदि ऋतु अपने-अपने समय पर ही होती है]—ऐसा [ब्रह्मवादियों का] कथन है। इसलिए ऋत्विज लोग व्यवस्था के अनुसार अपना-अपना ऋतु-याज बिना किसी दूसरे को दिए हुए स्वय ही करते हैं। इस प्रकार वे उन उन ऋतु के अनुसार सभी ऋतुओं को स्वप्रयोजन में समर्थ बनाते हैं। ऋतुओं के इस प्रयोजन में समर्थ होने पर जन समूह अपने-अपने स्थान के अनुसार सुखी होते हैं।

तत्र वावदकरणपक्षमुपन्यस्यति—

**तदाहुर्नर्तुप्रैषैः प्रेषितव्यं नर्तुप्रैषैर्वषट्कृत्य, वाग्वा ऋतुप्रैषा आप्यते वै वाक् षष्ठेऽहनीति ॥ इति ।**

ऋतुयाजार्थं मैत्रावरुणेन पठितव्या मन्त्रा 'ऋतुप्रैषा' । तैः प्रैषमन्त्रैर्होत्रादीन् प्रति च न प्रेषितव्यम् । 'होता यक्षदिन्द्रमित्यादिभि[3] प्रैषण न कर्तव्यम् । होत्रादिभिश्चर्तुप्रैषमन्त्रैर्न वषट्कर्तव्यम् । याज्यात्वेन न पठितव्या इत्यर्थ । तत्रेयमुपपत्ति —य ऋतुप्रैषा ते सर्वेऽपि 'वाग्वै' वाग्रूपा एव । वाक्च षष्ठेऽहनि 'आप्यते' समाप्यते । न हि समाप्ताया वाचि मन्त्रप्रयोगो युज्यत इति निषेधवादिनामभिप्राय ॥

[प्रश्न यह है कि क्या ऋतुयाजों में प्रैष और वषट्कार प्रकृतिवत् नहीं करना चाहिए या करना चाहिए अथवा प्रकारान्तर से करना चाहिए ?]—

---

१ तत्तत्र ऋतुयाजान् द्वादश । असम्प्रदायम् = ल्यबर्थे णमुल् । (अद्य वै मम मदत्त्वा ? अन्यस्मा अदत्त्वा) यजन्ति, यद्, ऋतून् वसन्तादीन् यथर्तु ऋत्वनतिक्रमेण यथायथ यथास्व कल्पयन्ति तद् । जनता = जनसङ्घाश्च ।

अध्वर्युयजमानौ स्वौ होत्रे दातु न चार्हत ।
प्रकृताविवर्तुयाजौ किं तत्र यजता स्वयम् ॥

सूत्र्यते हि—'होताध्वर्युगृहपतिस्या होतरेतद्यजेत्युक्त । स्वय षष्ठे पृष्ठ्याहनि'—(आश्व० श्रौ० ५ ८ ५, ६) इति । इति षड्गुरुशिष्य ।

२ अत्र जनशब्दो देवेषु वर्तते । न वै देवा इत्युपक्रमवशात् । तथाहि जनशब्दो देववचन ऊर्जादं उत यज्ञियास पञ्चजना इति'—इति गोविन्दस्वामी ।

३ द्र० इत. पूर्वम्, पृ० ५६८-५७१ ।

वहाँ [इस सम्बन्ध में याज्ञिकों का] कथन है कि 'ऋतु प्रैष [ = ऋतुयजन के लिए मैत्रावरुण द्वारा पठित] मन्त्रों के द्वारा [होता आदि के प्रति] प्रैष [ = निर्देश] नहीं करना चाहिए और न तो ऋतुप्रैष के द्वारा [होता आदि द्वारा] वषट्कार ही करना चाहिए [अर्थात् याज्यात्वेन पाठ न करे]। वस्तुतः ऋतुप्रैष वाणी [रूप] हैं, और छठें दिन वाणी समाप्त हो जाती है [अतः वाणी की समाप्ति के बाद मन्त्र प्रयोग युक्तियुक्त नहीं है]।

तेषामेव मतमाश्रित्य विधिवादिना पक्षे दोषं दर्शयति—

**यदृतुप्रैषैः प्रेष्येयुर्यदृतुप्रैषैर्वषट्कुर्युर्वाचमेव तदाप्ता श्रान्तामृक्णवहीं वहराविणीमृच्छेयुः ॥ इति ।**

य ऋतुप्रैषास्तत्पूर्वको वषट्कारश्चानुष्ठीयेरन्, तदानीम् 'आप्ता' समाप्ता वाचमेव ऋच्छेयु। कीदृशीं वाचम्, 'ऋक्णवहीं', 'वह' बलीवर्दस्य लाङ्गलादिवहनप्रदेश, 'वृक्ण:' भग्न। वृजी मङ्ग इति धातु। वृक्णो भग्नो वहो वहनप्रदेशो यस्या वाच, सा 'ऋक्णवही' श्रान्तत्वाद् यज्ञभार वोढुमशक्तेत्यर्थ। 'वहराविणीम्' अशक्यवहननिमित्तो रावो रोदनरूपो ध्वनिर्यस्या, सा 'वहराविणी' तादृशीम्, उपद्रवद्वययुक्ता कृत्वा वाच विनाशयेयु[२] ॥

[विधिवादियों के पक्ष में दोष यह है कि] जो ऋतुप्रैष के द्वारा प्रैष करते हैं और जो ऋतुप्रैष के द्वारा वषट्कार करते हैं तो वे [अभिभूत] वाणी को ही समाप्त करते हैं श्रान्त करते हैं, [अर्थात् वह वाणी यज्ञरूपी भार को ढोने में असमर्थ हो जाती है] उसे व्रणयुक्त कन्धे वाला कर देते हैं और [असमर्थता वश रुदन के कारण] जुए में जुते हुए ही आर्तनाद करने वाली करते हैं तथा [दो उपद्रवों से युक्त करके उस वाणी का अन्ततः] विनाश करते हैं।

एवमनुष्ठानपक्षे दोषमुक्त्वा निषेधपक्षे व्यवस्थिते सति विधिवादी स्वाभिप्रेतमनुष्ठानं हृदि निधाय निषेधपक्षे बाधमुपन्यस्यति—

**यद्वैभिर्न प्रेष्येयुर्यद्वैभिर्न वषट्कुर्युरच्युताद् यज्ञस्य च्यवेरन् यज्ञात् प्राणात् प्रजापतेः पशुभ्यो जिह्मा ईयुः ॥ इति ।**

---

१. अत्र सम्प्रसारणं छान्दसम्।

२. 'यद् = यदि, वाचामत्युच्चारणेनाभिभूताम्। श्रान्ता = श्रमयोगिनीम्। ऋक्णवहीम् = वह. स्कन्ध। वृश्चे क्त', वृक्ण:।
वलोपश्छान्दसो दीर्घं छिन्नस्कन्धान्विता वहीम्।
वहराविणी = वहेन वहनेन, भावे घञ्, (अ) वृद्धि-, राविणीमार्तध्वन्युक्ताम्। ऋच्छेयुः = बाधेरन्'—इति षड्गुरुशिष्य।

'यदु' यदि वा 'एभि ' मन्त्रैर्न प्रेष्येयु , यदि वा एभिर्याज्यामन्त्रैर्न वषट्कुर्यु तदानीमृत्विजो यज्ञस्य 'अच्युतात्' अविनष्टात् प्रयोगात् 'च्यवेरन्' विनश्येयु , यज्ञप्रयोग साङ्गो न भवेदित्यर्थ । किञ्चतस्माद् यज्ञात् स्वकीयप्राणात् प्रजापते ' स्वकीययजमानाद् गवादि पशुभ्यश्च 'जिह्मा ईयु ' ऋत्विज सर्वेऽपि कुटिला भूत्वा गच्छेयु [1] यज्ञप्राणयजमानपशुभ्यो भ्रष्टा भवेयुरित्यर्थ. ॥

[निषेधपक्ष में बाधा यह है कि] यदि वे इन [ऋतुप्रैष मन्त्रों] से प्रैष नहीं करते, अथवा, यदि वे इन [याज्यामन्त्रों] से वषट्कार नहीं करते तो वे [ऋत्विज] नष्ट न हुए यज्ञ प्रयोग से च्युत हो जाते हैं । [अर्थात् साङ्ग यज्ञ प्रयोग नहीं करते हैं], और वे यज्ञ से स्वकीय प्राणों से, प्रजापति से [स्वकीय यजमान से] और गौ आदि पशुओं से [च्युत हो जाते हैं], और वे सभी ऋत्विज से टेढ़े होकर चलते हैं [अर्थात् यज्ञ, प्राण, यजमान और पशुओं से भ्रष्ट हो जाते हैं ] ।

इत्थं विधिनिषेधपक्षयोरुभयोरपि बाधमुक्त्वा प्रकारान्तरेण अनुष्ठानं सिद्धान्तयति—

**तस्मादृग्मेभ्य एवाधि प्रेषितव्यमृग्मेभ्योऽधि वषट्कृत्य, तन्न वाचमाप्ता श्रान्तामृवणवर्ही वहराविणीमृच्छन्ति, नाच्युताद् यज्ञस्य च्यवन्ते, न यज्ञात् प्राणात् प्रजापते. पशुभ्यो जिह्मा यन्ति ॥ ९ ॥** इति ।

यस्मादनुष्ठानपक्षे श्रान्तामित्याद्युक्तदोष , परित्यागपक्षे तु अच्युताद् इत्याद्युक्तदोष , तस्माद् दोषद्वयपरिहाराय प्रकारान्तरेणानुष्ठेयम् । प्रकृतौ हि मैत्रावरुण त त प्रैषमन्त्र पठित्वा, होतर्यजेत्यादिना प्रेष्यति, होत्रादयश्च तत ऊर्ध्वं याज्या प्रैषरूपामेव पठित्वा, तदन्ते वौषडिति वषट्कुर्वन्ति, अत्र तु न तथा कर्तव्यम् । किं तर्हि ? 'ऋग्मेभ्य ' एव 'अधि' अवशिरस्केभ्यो होत्रादिविषयप्रैषेभ्य एवोर्ध्वं मैत्रावरुणो होतर्यजेत्यादिना प्रेष्येत्, होत्रादयश्च तथैव ऋग्मेभ्योऽधि वषट्कृत्य 'तुभ्य हिन्वानः' इत्याद्यवशिरस्के प्रैषैर्यजेयु । तथा सति प्रकृतिवदनुष्ठानाभावाद् वाचमाप्तामित्यादिरनुष्ठानपक्षे प्रोक्तो दोषो न भवति । अनुष्ठानपरित्यागस्याप्यभावात् प्रतिषेधपक्षे प्रोक्तोऽच्युतादित्यादिदोषोऽपि न भविष्यति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याय (द्वाविंशाध्याये) चतुर्थं खण्ड ॥४॥ (९) [१६२]

---

१ (i) यद् = यदि, उ = खलु यज्ञाद् = यज्ञे कर्माणि नष्ट, यष्टव्यात् पूज्याद् अच्युताद् निश्चलात् । प्राणाद् यज्ञस्य सम्बन्धिन ऋत्विज च्यवेरन् । प्रजापते सम्बन्धिभ्य पशुभ्यश्च जिह्मा कुटिलगतय ईयु गच्छेता स्यु ।' इति षड्गुरुशिष्य । (ii) 'अच्युताद् यज्ञस्य प्रयोगात् प्रच्यवेरन् ऋत्विज , तथा च यज्ञात् प्राणाच्च । किञ्च प्रजापतेयजमानात् पशुभ्यश्च जिह्मा कुटिला वक्रा ईयु । अनवधृतविशेष्यत्वात् संनिधानात् सामर्थ्याच्च प्राणा ईयु —इति द्रष्टव्यम्'—इति गोविन्दस्वामी ।

[अत. प्रकारान्तर से सिद्धान्त पक्ष यह है कि] [क्योंकि अनुष्ठान पक्ष में श्रान्तत्वादि दोष है और परित्याग पक्ष में यज्ञादि से प्रच्युति दोष है] इसलिए [जैसा कि मैत्रावरुण उन उन प्रैषमन्त्र को पढ़कर 'होतर्यज' आदि के द्वारा प्रैष करता है और होता आदि उसके बाद प्रैषरूप में ही याज्या का पाठ करके अन्त में 'वौषट्' कहता है, वैसा यहाँ न करके होता आदि विषयक प्रैष के बाद मैत्रावरुण को] एक ऋक् से पुरस्कृत ['होतर्यज' आदि] के द्वारा प्रैष करना चाहिए, [और होता आदि को उसी प्रकार 'तुभ्यं हिन्वान' इत्यादि] ऋक्-शिरस्क-प्रैष के बाद ही वषट्कार करना चाहिए।[1] इस [प्रकृतवद् अनुष्ठान के अभाव] से [अनुष्ठान पक्ष में कहे गये दोष नहीं होते] वे वाणी को समाप्त नहीं करते हैं, क्लान्त नहीं करते हैं, भग्न-स्कन्ध युक्त नहीं करते हैं, जुए में जुते हुए आर्तध्वनि युक्त नहीं करते हैं और न तो विनष्ट ही करते हैं। इस प्रकार न तो वे नष्ट न हुए यज्ञ से च्युत ही होते हैं तथा न तो वे यज्ञ से, प्राणों से, प्रजापति से और [गौ आदि] पशुओं से ही च्युत होते हैं। [अत. वे सभी ऋत्विजों से] कुटिल होकर नहीं चलते हैं।

॥ इस प्रकार बाइसवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

अथ सवनद्वये काश्चिद्विशेषान् विधत्ते—

**पारुच्छेपीरुपदधाति पूर्वयोः सवनयोः पुरस्तात् प्रस्थितयाज्यानां रोहितं वै नामैतच्छन्दो यत्पारुच्छेपमेतेन वा इन्द्रः सप्त स्वर्गाँल्लोकानरोहत् ॥ इति।**

प्रात सवने माध्यंदिनसवने च याः प्रस्थितयाज्या.' चोदकेन प्रकृतिव प्राप्ताः, तासां पुरस्तात् 'पारुच्छेपीः' परुच्छेपाख्येन महर्षिणा[2] दृष्टा ऋच उपदध्युः—एवंका पारुच्छेपी-

---

१ (१) तस्मादेव सर्वोत्तरस्यं.। अधि=उपरि। ऋग्मेभ्य. ऋचो मतुपि तयोर.। भिसो भ्यस्।

ऋग्मभि प्रेषणं कुर्युः प्रैषयाग च ऋत्विज.।

सूत्र्यते हि—'उपरिष्टात् स्तृच ऋतुयाजानाम्। प्रैषकृतेऽसौयजमृचं चानवानमुक्त्वा ऋगन्तेऽसौ यजेति प्रेष्येत्। एवमेव यजन्ति। तुभ्य हिन्वानो वसिष्ट गा अप इति द्वादशे'ति (आश्व० श्रौ० ८ १.५–८)–इति षड्गुरुशिष्यः। अत्र 'गा अप इति'—इत्येव मुद्रितपाठः, एवं 'द्वादश' इति तु सूत्रे न दृश्यते। (।।) द्र० आश्व० श्रौ० ८ १.५–८, 'ऋतुप्रैषान् होतर्यजेत्यादिशब्दरहितानुक्त्वा तेष्वेव सधाय ऋगन्ते होतर्यजेत्यादिशब्दान् सधाय तैर्मैत्रावरुण. प्रेष्यति'–इति तत्र वृत्ति नारायणीया। एव प्रैषरूपं तु = होता यक्षत् + प्रैष + ऋच् + होतर्यज–इति, याज्यारूपं तु = ये यजामहे + याज्या + ऋक् + वौषट्–इति विवेकः।

२. परुच्छेप ऋषि, पर्वच्छेप: परुषिपरुषि शेपोऽस्येति वा इति निरु० १०, ४.५। 'परुच्छेपो दैवोदासि'–इति ऋक्सर्वा०।

मृचमुक्त्वा पश्चादेकैका प्रस्थितयाज्या पठेत्। 'वृषन्निन्द्र वृषपाणास इन्दव'[1] इत्याद्या 'पिबा सोममिन्द्र सुवानमद्रिभि'[2]-इत्याद्याश्च पारुच्छेप्य ऋच[3] सूत्रकारेण विस्पष्टमुदाहृता[4]। पारुच्छेपीष्वृक्षु यच्छन्दोऽस्ति, तदिदं रोहितनामकम्। कथमिति? तदुच्यते,—'एतेन' पारुच्छेपीयेन च्छन्दसा पुरा कदाचिदिन्द्र 'सप्त स्वर्गांल्लोकान् अरोहत्' उत्तमाधममोगावस्थानविशेषाः सप्तसङ्ख्याकाः स्वर्गाः। रोहयनेन च्छन्दसेति 'रोहित' नाम सम्पन्नम्॥

१ १० [xxii ५] प्रथम दो [प्रातः और माध्यन्दिन] सवनों में [प्रकृतित प्रास] प्रस्थित याज्या के पहले परुच्छेप ऋषि द्वारा दृष्ट ऋचाओं को रखता है। [अर्थात् एक-एक परुच्छेप ऋषि द्वारा दृष्ट ऋचा को बोलकर एक एक प्रस्थित याज्या का पाठ करना चाहिए]। इन परुच्छेप ऋषि द्वारा दृष्ट ऋचाओं का रोहित [=चढना] नामक छन्द है, क्योंकि इन्हीं [छन्दों] के द्वारा इन्द्र ने [पहले] सात स्वर्ग लोकों पर आरोहण किया।

वेदनं प्रशंसति—

**रोहति सप्त स्वर्गांल्लोकान् य एवं वेद ॥** इति।

जो इस प्रकार जानता है वह सात स्वर्ग लोकों पर आरोहण करता है।

तस्मिश्छन्दसि चोद्यमुद्भावयति—

**तदाहुर्यत् पञ्चपदा एव पञ्चमस्याह्नो रूपं, षट्पदा, षष्ठस्याथ कस्मात् सप्तपदाः षष्ठेऽहञ्छस्यन्त इति ॥** इति।

सङ्ख्यासाम्यात् पञ्चपदोपेता ऋचः पञ्चमेऽहनि युक्ताः, षट्पदोपेताः षष्ठेऽहनि, पारुच्छेप्यस्तु सप्तपदोपेताः, अतः षष्ठेऽहनि तच्छसनमयुक्तमिति चोद्यवादिनामभिप्रायः॥

उन [छन्दों] के विषय में याज्ञिकों का कथन है कि जब पाँच पादों की ऋचा ही पञ्चम दिन का रूप है और छः पादों की ऋचा छठवें दिन का, तो [परुच्छेप ऋषि द्वारा दृष्ट] सात पादों की ऋचा का छठवें दिन शसन क्यों किया जाता है?

तत्रोत्तरमाह—

**षड्भिरेव पदैः षष्ठमहराप्नुवन्त्यवच्छिद्यैवैतदहर्यत्सप्तमं, तदेव सप्तमेन पदेनाप्यारभ्यवसन्ति, वाचमेव तत्पुनरुपयन्ति सततत्यै ॥** इति।

---

१ ऋ० १।१३९।६।   २ ऋ० १।१३०।२।

३ ताः सर्वा ऋ० १।१२७-१३९ सूक्तगता द्रष्टव्याः।

४ 'षष्ठस्य प्रातःसवने प्रस्थितयाज्यानां पुरस्तात्'—इत्युपक्रम्य 'वृषन्निन्द्र वृषपाणास इन्दव' 'पिबा सोममिन्द्र सुवानमद्रिभि' पारुच्छेप्य'—इति आश्व० श्रौ० ८।१।१-११।

एकैकस्यामृचि य एते प्रथममाविनः षट्पादास्तैः सर्वयदा पष्ठमहराप्नुवन्ति, तदानीमुपरितनं यत्सप्तमहः, तत् 'अपच्छिद्यैव' पृथक्त्वेन तस्य विच्छेदं कृत्वैव प्राप्नोति[1], तस्माद् विच्छिन्नं सप्तममहर्लेन सप्तमेन पादेनाऽनिरुक्तेनोपक्रम्य वसन्ति। तथा सति विच्छिन्नां वाचमेव पुनरपि प्राप्नुवन्ति। तच्च मध्यमयाऽस्त्यहया 'सतृण्णं' संपद्यत॥

[उत्तर यह है कि—] [एक ऋचा के प्रथम] छः पादों के द्वारा जब षष्ठ अह को प्राप्त करते हैं तब बाद का जो सप्तम-अह है उसका पृथक् रूप से विच्छेद करके ही प्राप्त करते हैं। इसलिए वे विच्छिन्न-सप्तम-अह का ही सप्तम पाद से अनिरुक्तेन उपक्रम करके वास करते हैं। वस्तुतः इस प्रकार वे वाणी को ही पुनः प्राप्त करते हैं जो मध्यम त्र्यह की निरन्तरता के लिए ही होता है।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

**सततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति ॥ १० ॥ इति।**

पूर्ववद् व्याख्येयम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ (१०) [१६३]

जो इस प्रकार निरन्तरता को जानते हुए अनुष्ठान करते हैं वे परस्पर सम्बन्धित, अतएव विच्छेदरहित त्र्यह के द्वारा अनुष्ठान करते हैं।

॥ इस प्रकार बाइसवें अध्याय के पांचवें खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

पारुच्छेपीयं छन्द उपाख्यानेन प्रशंसति—

**देवासुरा वा एषु लोकेषु समयतन्त, ते वै देवाः षळहैनैवाह्नेभ्यो लोकेभ्योऽसुरान् प्राणुदन्त, तेषां यान्यन्तर्हस्तीनानि वसून्यासंस्तान्यादाय समुद्रं प्रौप्यन्त, त एतेनैव च्छन्दसाऽनुहायान्तर्हस्तीनानि वसून्याददत तद् यदेतत् पदं पुनःपदं स एवाङ्कुश आसञ्जनाय ॥ इति।**

देवाश्चासुराश्च लोकविषये यदा 'समयतन्त' युद्धप्रयत्नमकुर्वत, तदानीं 'ते' देवाः षळहमनुष्ठाय तत्सामर्थ्यमासुरांल्लोकेभ्यो निःसारितवन्तः। तदानीं 'तेषाम्' असुराणां सम्बन्धीनि 'वसूनि' धनानि बहून्यासन्। कीदृशानि? 'अन्तर्हस्तीनानि' हस्तिना गजानामुपरि भारवहनाय स्थापितानि, यद्वा, स्वकीयस्य हस्तस्यान्तर्मध्ये गोप्यत्वेन स्थापितानि 'अन्तर्हस्तीनानि', तानि सर्वाण्यादायासुराः 'समुद्रं' 'प्रौप्यन्त' समुद्रं गतवद्भिरसुरैः तस्मिन्

---

१ 'अपच्छिद्य छार्यं ल्यप्। अपच्छिन्न गलितम्। इव=एव। एवं सप्तममहः'। इति षड्गुरुशिष्यः।

समुद्रे तानि धनानि प्रक्षिप्तानि । ततो 'ते' देवा एतत्पारुच्छेपीय छन्दोऽनुष्ठाय तस्मात् सामर्थ्यात् 'अनुहाय' पृष्ठतो गत्वा हस्तिनामुपरि स्थितानि तदीयहस्तेऽवस्थितानि वा सर्वाणि धनानि 'आददत' स्वीकृतवन्त । समुद्रमध्यस्थिताना धनानामाकर्षणे किं साधनमिति ? तदुच्यते—'तत्' तत्र पारुच्छेपीयास्वृक्षु यदेतत्पद पाठोऽस्ति, कीदृशम् ? 'पुन पद' पट्सु पादेषु समाप्तेषु पुन पश्चादुच्चार्यमाण [1] 'सुमृळीको न आगहि'—इत्येवंविध सप्तम पाद ।[2] स एव धनानाम् 'आसञ्जनाय' आसक्तानि कृत्वा समाकर्षणाय अङ्कुशोऽभूत् । यथा लोकेऽङ्कुशेनाऽऽकृष्यते, तद्वत्सप्तमेन पादेनासुरधनान्याकृष्टानि ॥

v ११ [xxii. ६] इन [तीनों] लोकों के विषय में जब देव और असुरों ने परस्पर युद्ध किया तब उन देवों ने षष्ठ अह का ही अनुष्ठान करके [उसकी सामर्थ्य से] असुरों को इन लोकों से निकाल दिया ।[3] उन [असुरों] के जो कुछ भी हाथियों के ऊपर लदे हुए [अथवा हाथ में रखकर छिपाए हुए] धन थे इनको लेकर [स्वयं ही असुरों ने] समुद्र में फेंक दिया । तब देवों ने इन [परुच्छेप ऋषि द्वारा दृष्ट] छन्दों से ही [अनुष्ठान करके उसकी सामर्थ्य से] उनके पीछे अनुगमन करके हाथियों के ऊपर स्थित अथवा उनके हाथ में अवस्थित [समुद्रस्थ] धन को ले लिया । उन [परुच्छेप ऋषि द्वारा दृष्ट ऋचाओं] में जो यह पाद है और जो [छ पादों की समाप्ति पर] पुन उच्चार्यमाण ['सुमृळीको न आगहि' आदि जो सातवाँ] पाद है वही धनों को आकर्षित करने का अङ्कुश [मच्छली आदि फँसाने की कटिया] है ।

वेदन प्रशसति—

**आ द्विषतो वसु दत्ते निरेनमेभ्य सर्वेभ्यो लोकेभ्यो नुदते, य एव वेद ॥ ११ ॥** इति ।

वेदिता 'द्विषत ' शत्रो सम्बन्धि 'वसु' धन सर्वमादत्ते । एन च 'द्विषन्त' शत्रु लोकेभ्यो 'निर्णुदते' निःसारयति[4] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) षष्ठ खण्ड ॥ ६ ॥ (११) [१६४]

---

१ अभ्यासे भूयासमर्थं मन्यन्ते, यथाहो दर्शनीयाहो दर्शनीयेति, तत् परुच्छेपस्य शीलम्' इति निरु० १० ४ ५ ।

२ 'वृषन्निन्द्र सुमृळीको न आ गहि'—इति ऋ० १ १३९ ६ । इह 'आ-गहि'—पदाभ्यास. ।

३ द्र० इत पूर्वम्, १३८ पृ० ।

४ द्र० इत पूर्वम्, पृ० ५९३ ।

जो इस प्रकार जानता है वह शत्रु सम्बन्धी सभी धन को ले लेता है और वह उस शत्रु को इन सभी लोकों से निकाल देता है।

॥ इस प्रकार बाइसवें अध्याय के षष्ठ खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्ड

इदानीं षष्ठमहर्विवृणुते—

**द्यौर्वै देवता षष्ठमहर्वहति त्रयस्त्रिंश स्तोमो रैवतं सामातिच्छन्दाश्छन्दो यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद ॥ इति।**

पूर्वत्र वागेव गौरेव द्यौरेवमिति यत्तुरीयं देवतास्वरूपमुक्तं'[1] सैव देवता षष्ठमहर्निर्वहति। तथा स्तोमानां मध्ये त्रयस्त्रिंशः स्तोमो निर्वाहकः। तस्य स्तोमस्य स्वरूपं छन्दोगैरेवमाम्नायते—'एकादशभ्यो हिं करोति स तिसृभिः स सप्तभिः स एकया, एकादशभ्यो हिं करोति स एकया स तिसृभिः स सप्तभिरेकादशभ्यो हिं करोति स सप्तभिः स एकया स तिसृभिरन्त्यो वै त्रयस्त्रिंशः'[2] इति। अस्यायमर्थः—एक एव तृचस्त्रिभिः पर्यायैरावर्तनीयः तत्र प्रथमे पर्याये प्रथमायास्त्रिरभ्यासः, मध्यमायाः सप्तकृत्वोऽभ्यासः, उत्तमायाः सकृत्पाठः। द्वितीयपर्याये प्रथमायाः सकृत्पाठः मध्यमायास्त्रिरभ्यासः, उत्तमायाः सप्तकृत्वोऽभ्यासः। तृतीयपर्याये प्रथमायाः सप्तकृत्वोऽभ्यासः, मध्यमायाः सकृत्पाठः, उत्तमायास्त्रिरभ्यासः। एवं 'त्रयस्त्रिंशस्तोम' निष्पत्तिरिति। 'रेवतीर्नः सधमाद' इत्यस्यामृच्युत्पन्नं साम 'रैवतम्'[3]। गायत्र्यादिभ्यश्छन्दोभ्योऽक्षरैरधिकत्वाद् 'अतिच्छन्दाः' इति कस्यचिच्छन्दसो नामधेयम्। अन्यत् पूर्ववद् व्याख्येयम् ॥

४.१२ [xxii ७] द्यौ [द्वादशाहगत नवरात्र के] षष्ठ दिन के निर्वाहक देवता हैं, [स्तोमों के मध्य] त्रयस्त्रिंश स्तोम, रैवत साम और [छन्दों के मध्य] अतिच्छन्द नामक छन्द [निर्वाहक] हैं, जो इस प्रकार जानता है वह इससे देवता, स्तोम, साम और छन्द का अनतिक्रमण कर समृद्ध होता है।

अथ शस्त्रगतमन्त्रलिङ्गानि दर्शयति—

**यद्वै समानोदर्कं तत्षष्ठस्याह्नो रूपं, यद्ध्येव तृतीयमहस्तदेतत्पुनर्यत्षष्ठं, यदश्ववद्यदन्तवद् यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रतवद् यत्पर्यस्तवद् यत्त्रिवद्यदन्तरूपं, यदुत्तमे पदे देवता निरुच्यते, यदसौ लोकोऽभ्युदितः ॥ इति।**

---

१ द्र० इतः पूर्वम् पृ० ७२७।

२ ता० ब्रा० ३.३-७ ख०। त्रयस्त्रिंशस्तोमस्य विष्टुतयः पञ्च, तत्राद्या समन्यवाख्या, सैवेयम्।

३ द्र० इतः पूर्वम्, पृ० ६२५, टि० २।

'समानोदर्कं' तुल्यसमाप्तिक यदस्ति, तत्षष्ठस्याह्नो रूपम् । 'यद्वि एव' यदप्यन्यत् पूर्वत्र प्रथमे त्र्यहे तृतीयमहरस्ति तदेतत्पुनरत्रानुसधेयम्—यदिदानी षष्ठमह प्रस्तूयते तत् तदेव भवति पूर्वस्मिंस्तृतीयेऽहनि यत्लिङ्गमुक्त, तत्षष्ठेऽपि द्रष्टव्यमित्यर्थ । यदश्ववदित्या दिना यदसौ लोकोऽभ्युदित इत्यन्तेन तान्येतानि लिङ्गानि दर्शितानि ॥[1]

जिस [मन्त्र] में समान समाप्ति है, वह षष्ठ दिन का रूप है, जो [प्रथम त्र्यह के] तृतीय दिन का रूप कहा गया है वह पुन इस [मध्यम त्र्यह के तृतीय दिन अर्थात्] षष्ठ दिन का निरूपक है। जो [ऋचा] 'अश्व' शब्द से युक्त और 'अत' शब्द से युक्त हो, जिसमें पुनरावृत्ति [= पठित का ही पुन पाठ] हो और जिसमें स्वरविशेष के द्वारा बार-बार अक्षरों की आवृत्ति हो, जो सहवास से युक्त हो, जो 'पर्यास' शब्द से युक्त हो, जो 'त्रि' शब्द से युक्त एव अन्त शब्द से युक्त हो और जिसके अन्तिम पाद में देवता का अभिधान हो गया जिस [ऋचा] में यह [स्वर्ग] लोक उक्त हो—[वे सब षष्ठ दिन के निरूपक हैं]।

अथ विशेषलिङ्गानि दर्शयति—

**यत्पारुच्छेप, यत्सप्तपद, यन्नाराशस, यन्नाभानेदिष्ठ, यद्रैवत, यदतिच्छन्दा, यत्कृत, यत्तृतीयस्याह्नो रूपमेतानि वै षष्ठस्याह्नो रूपाणि ॥ इति ।**

परुच्छेपेन दृष्ट 'पारुच्छेपम्' । सप्तभि पादैरुपेत सप्तपदम्' । नराशसाख्यमन्त्र-सम्बन्धि नाराशसम्' । नाभानेदिष्ठेन दृष्ट 'नाभानेदिष्ठम् । रैवतसामसम्बन्धि 'रैवतम्' । सप्तम्यच्छन्दोभ्योऽधिकाक्षरत्वाद् 'अतिच्छन्दा' । भूतार्थवाचिप्रत्यययुक्त धातुमात्र 'कृत' तदप्युक्तम् अनुक्त वा तृतीयस्याह्ना निरूपकम् । एतानि सर्वाणि षष्ठस्याह्नो निरूपकाणि वेदितव्यानि ॥

जो परुच्छेप ऋषि द्वारा दृष्ट है, जो सात पादों से युक्त है, जो नाराशस अर्थात नराशस नामक मन्त्र सम्बन्धी है, जो नाभानेदिष्ठ ऋषि द्वारा दृष्ट है, जो रैवत-साम सम्बन्धी है, जो [सात छन्दों के अक्षरों से अधिक अक्षरों वाले] अतिच्छन्द नामक छन्द से युक्त है, जो भूतकालिक प्रत्यय या धातु से युक्त है और [कुछ कहा गया हो या न कहा गया हो वह सभी] जो तृतीय दिन के रूप हैं—ये सभी षष्ठ दिन के निरूपक हैं।

अथाज्यशस्त्र विधत्ते—

**'अय जायत मनुषो धरीमणीति'[2] षष्ठस्याह्न आज्य भवति, पारुच्छेपमति-च्छन्दा' सप्तपद षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।**

परुच्छेपेन दृष्टत्वमेक लिङ्गम्, अतिच्छन्दस्त्व द्वितीय, सप्तपादोपेतत्व तृतीयम् । एतेन लिङ्गत्रयेण षष्ठस्याह्नो निरूपकम् ॥

---

१ द्र० इत पूर्वम्, पृ० ७१३ । २ ऋ० १ १२८ ।

'अयं जायत' आदि ऋचा षष्ठ अहः की आज्यशस्त्र होती है।[1] परुच्छेप ऋषि द्वारा दृष्ट, अतिच्छन्द नामक छन्द से युक्त एवं सात पादों से युक्त [यह ऋचा] षष्ठ दिन में षष्ठ दिन का रूप है।

अथ प्रउगशस्त्रं विधत्ते—

स्तीर्णं बर्हिरुप नो याहि वीतय आ वां रथो नियुत्वान्वक्षदवसे सुषुमायातमद्रिभिर्युवां स्तोमेभिर्देवयन्तो अश्विनाऽवर्मह इन्द्र वृषन्निन्द्रास्तु श्रौषळो षू णो अग्ने शृणुहि त्वमीळितो ये देवासो दिव्येकादशस्थेयमददाद्रभसमृणच्युतमिति प्रउगं; पारुच्छेपमतिच्छन्दाः सप्तपदं षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।

'स्तीर्णं बर्हिः'[2]–इत्याद्यस्तृच 'आ वां रथ'[3] इति द्वितीय. 'सुषुमायातमिति'[4] तृतीयो 'युवां स्तोमेभिरिति'[5] चतुर्थो 'अवर्महः'[6] इति द्वे ऋचौ 'वृषन्निन्द्र'[7] इत्येका, उभाभ्यां पञ्चमस्तृच । 'अस्तु श्रौषट्'[8] इत्येका। 'ओ षू ण'[9] इत्येका । 'ये देवास'[10] इत्येका । एतत्त्रितयं षष्ठ । 'इयमददात्'[11] इति सप्तमः । इत्येतत् सर्वं प्रउगशस्त्रं कुर्यात् । लिङ्गानि पूर्ववत् ॥

'स्तीर्णं बर्हिरुप' (हे वायु, हमारे बिछे हुए कुशों की ओर आनन्द के लिए आओ), 'आ वां रथ.' (हे वायु नियुत नामक घोड़ों से युक्त रथ तुम्हारे साथ-साथ इन्द्र को भी हमारी रक्षा के लिए लावे), 'सुषुमायातम्' (हे मित्र एवं वरुण ! हम पत्थरों से सोम कूटते हैं अतः तुम हमारे यज्ञ में आओ), 'युवां स्तोमेभिः' (हे अश्विनो, स्तुतियों से तुम्हें अनुकूल करने की इच्छा वाले यजमान), 'अवर्महः' (हे इन्द्र तुम महान् मेघ का विदारण करो), 'वृषन्निन्द्र' (हे कामवर्षक इन्द्र), 'अस्तु श्रौषट्' (ऐसा होवे), 'ओ षू णो अग्ने' (हे अग्नि तुम हमारे द्वारा स्तुत होकर हमारा आह्वान सुनो), 'ये देवासो' (स्वर्ग में जो ग्यारह देव हैं) और 'इयमदाद्रभसं' (इन सरस्वती ने शीघ्रगामी एवं ऋण से छुटकारा दिलाने वाले को दिया)—ये सभी प्रउगशस्त्र की ऋचाएं हैं; परुच्छेप ऋषि द्वारा दृष्ट, अतिच्छन्द नामक छन्द से युक्त एवं सात पादों से युक्त [ऋचाएं] छठवें दिन में छठवें दिन का रूप है।

---

१. 'अष्टर्चस्य पुरस्तात् स्यात् तूष्णींशंसो निविस्तया ।'—इति षड्गुरुशिष्य. ।
२. ऋ० १.१३५ १–३ । ३. ऋ० १.१३५.४–६ । ४. ऋ० १.१३७.१–३ ।
५ ऋ० १.१३९ ३–५ । ६. ऋ० १.१३३.६–७ । ७ ऋ० १.१२९ ६ ।
८. ऋ० १.१३९.१ । ९. ऋ० १.१३९.७ । १०. ऋ० १.१३९.११ ।
११. ऋ० ६.६१.१–३ ।

शस्त्रान्तरस्य प्रतिपद तृच विधत्ते—

**'स पूर्व्यो महानामिति,'[1] मरुत्वतीयस्य प्रतिपदन्तो वै महदन्त' षष्ठमह षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।**

अत्र महानामिति महच्छब्द पादस्यान्ते दृश्यते, षष्ठ चाह पृष्ठ्याख्यस्य षडहस्यान्तो भवति तस्मादन्तत्वलिङ्गेन षष्ठेऽहनि योग्यम् । यद्वा महतोऽप्यधिकस्यान्यस्याभावात् महदन्त इत्यन्तवत्त्व व्याख्येयम् ॥

'स पूर्व्यो महानाम्' (वह महान् में प्रथम) आदि मरुत्वतीयशस्त्र की प्रतिपद है [यद्यपि तृतीय दिन का लक्षक 'अन्त' शब्द इसमें नहीं है तथापि 'महत्' शब्द है और [इच्छित वस्तु में महान वस्तु की ही कामना होने से अथवा महान् से अधिक अन्य का अभाव होने से] 'महत्' ही अन्त है तथा छठवां दिन भी [पृष्ठ्यषडह के अन्त में होता है। अत ] छठे दिन में [यह अन्त साम्य के कारण] छठवें दिन का रूप है।

तृतीयेनाह्ना सह समानत्वलक्षणयुक्त मन्त्रजात दर्शयति—

**'त्रय इन्द्रस्य सोमा'[2] 'इन्द्र नेदीय एदिहि'[3] 'प्र नून 'ब्रह्मणस्पतिरग्निर्नेता'[4] 'त्व सोम क्रतुभि'[5] 'पिन्वन्त्यपो'[6] 'नकि सुदासो रथमिति ' तृतीयेनाह्ना समान आतान षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।**

'त्रय इन्द्रस्य सोमा', 'इन्द्र नेदीय' 'प्र नून', 'अग्निर्नेता', 'त्व सोम', 'पिन्वन्त्यपो' और 'नकि सुदासो' आदि ऋचाएँ तृतीय दिन के समान क्रमागत षष्ठ दिन में षष्ठ दिन का रूप हैं।

परुच्छेपेन दृष्ट सूक्त दर्शयति—

**'य त्व रथमिन्द्र मेधसातय इति'[9] सूक्त पारुच्छेपमतिच्छन्दा सप्तपद षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।**

'य त्व रथम' इत्यादि सूक्त परुच्छेप ऋषि द्वारा दृष्ट, अतिच्छन्द नामक छन्द में निबद्ध एव सात पादों से युक्त सूक्त छठवें दिन में छठवें दिन का रूप है।

तुल्यावसानत्वलिङ्गोपेत सूक्त दर्शयति—

**'स यो वृषा वृष्ण्येभि समोका इति'[10] सूक्त समानोदर्कं, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति ।**

---

१ ऋ० ८ ६३ १ ।
२ ऋ० ८ २ ।　३ ऋ० ८ ५३ ।　४ ऋ० १ ४० ।
५ ऋ० ३ २० ।　६ ऋ० १ ९१ ।　७ ऋ० १ ६४ ।
८ ऋ० ७ ३२ ।　९ ऋ० १ १२९ ।　१० ऋ० १ १०० ।

'मरुत्वान्नो भवतु'-इत्यस्य चतुर्थपादस्य सर्वास्वृक्षु विद्यमानत्वात् समानोदर्कत्वम् ॥

'स यो वृषा' इत्यादि सूक्त [की सभी ऋचाओं में 'मरुत्वान्नो भवतु' आदि पाद पुनरुक्त होने से] समान समाप्ति छठवें दिन में छठवें दिन का रूप है।

तृचात्मकं सूक्तान्तरं विधत्ते—

'इन्द्र मरुत्व इह पाहि सोममिति'[1] सूक्तं, तेभिः साकं पिबतु वृत्रखाद इत्यन्तो वै खादोऽन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।

अस्मिन् सूक्ते 'तेभिः साकम्' इत्यादिस्तृतीयस्यामृचि तृतीयः पादः। तत्र वृत्रं खादति भक्षयतीति 'वृत्रखादः' तेन भक्षणेन वृत्रस्यावसानं मरणं सम्पद्यते। तस्मात् खादो वृत्रस्यान्तः। षष्ठस्यान्तत्वं पूर्वमेवोक्तम्, अतोऽन्तवत्त्वलिङ्गम्। यद्यपीदं सूक्तं न भवति[2], तथापि सूक्तस्थानापन्नत्वात् सूक्तमित्युक्तम् ॥

'इन्द्र मरुत्व इह' आदि सूक्त में 'तेभिः साकं पिबतु वृत्रखाद' आदि [तृतीय ऋचा के तृतीय पाद] में ['वृत्र का भक्षण करता है' यह वृत्रखाद शब्द वृत्र के अवसान का वाचक होने से] खाद अर्थात् भक्षण ही अन्त है और छठवां दिन पृष्ठ्यषडह के अन्त में होने से छठें दिन में छठे दिन का रूप है।

सूक्तगतं छन्दः प्रशंसति—

तद् त्रैष्टुभं, तेन प्रतिष्ठितपदेन सवनं दाधार यतनादेवैतेन न प्रच्यवते ॥इति।

पूर्ववद् व्याख्येयम् ॥

वह त्रिष्टुप् छन्दस्क सूक्त है। प्रतिष्ठित पद [अर्थात् नियत अक्षर सख्या] से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत मरुत्वतीय शस्त्र] धारित होता है। अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

शस्त्रस्यान्तिमं तृचं विधत्ते—

'अयं ह येन वा इदमिति'[3] पर्यासः, स्वर्मरुत्वता जितमित्यन्तो वै जितमन्तः षष्ठमहः, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।

'स्वर्मरुत्वता जितम्' इति द्वितीयः पादः तत्र भूतार्थवाचि क्त-प्रत्ययान्तो जयतिधातुरेव लिङ्गम् किञ्च जयस्य युद्धावसानत्वाज्जितमिति शब्दोऽन्तप्रतिपादकः, तदेतदन्तवत्त्वं परं लिङ्गम् ॥

---

१ ऋ० ३.५१.७-९।

२ अस्ति दाशतय्यां तृतीयस्य चतुर्थे चर्षणीधृतमिति द्वादशर्चं त्रयोदशं सूक्तम्, तदीय तृतीयतृचस्यैवात्र ग्रहणमिष्टम्। तदेतद् 'षष्ठेऽहनि षष्ठस्य'-इति खण्डे (८.१) आश्वलायनेन स्पष्टीकृतम्—'इन्द्र मरुत्व इति तिस्र इति मरुत्वतीयम्'-इति।

३ ऋ० ८.९६.१।

'अयं ह येन' इत्यादि तृच विशेष पर्यास [पूर्वोक्त ऋचाओं के अन्त में प्रक्षेपणीय] है। इसके 'स्वर्मरुत्वता जितम्' आदि द्वितीय पाद में [भूतार्थ का वाचक 'जय' धातु का रूप है वस्तुत. जय युद्ध के अवसान का सूचक होने से] 'जितम्' ही अन्त है और छठवाँ दिन [पृष्ठ्यपडह के] अन्त में होने से छठें दिन में छठे दिन का रूप है।

तत्रावस्थितच्छन्द प्रसगाद्वारा निविद्धान विधत्ते—

**ता उ गायत्र्यो, गायत्र्यो वा एतस्य त्र्यहस्य मध्यदिन वहन्ति, तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते, तस्माद् गायत्रीषु निविद दधाति ॥ इति।**

पूर्ववद् व्याख्येयम् ॥

उस [सूक्त] की ऋचाएँ गायत्री छन्दस्क हैं और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं। जिस [छन्द] में निविद् [पद समूह] प्रक्षिप्त होते हैं, वही छन्द [सवन का] निर्वाहक होता है। इस निर्वाहकत्व के कारण गायत्री ऋचाओं में निविद् प्रक्षिप्त होते हैं।

रैवतसामसाध्यपृष्ठस्तोत्रस्याधारभूत स्तोत्रिय तृचमनुरूप तृच च विधत्ते—

**'रेवतीर्नः सधमादे' रेवाँ इद्रेवत स्तोतेति रैवत पृष्ठ भवति, बार्हतेऽहनि षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।**

'रेवतीर्नः सधमादे '[1] इति स्तोत्रियतृचो 'रेवान्' इत्यनुरूप[2]। रैवत साम बृहत्साम्न उत्पन्नम्[3], अहश्च युग्मत्वाद् बार्हतम्[4]। सोऽयं बृहत्सम्बन्धो भवति लिङ्गम् ॥

[निष्केवल्यशस्त्र]—'रेवतीर्न.' इत्यादि स्तोत्रिय तृच और 'रेवाँ इद्रेवत' आदि अनुरूप तृच रैवत [साम] युक्त पृष्ठ [स्तोत्र] होता है जो बृहत साम सम्बन्धी दिन [युग्म] षष्ठ दिन में षष्ठ दिन का रूप है।

अच्युतत्वलिङ्गोपेतामृच विधत्ते—

**'यद्वावानेति'[5] धाय्याऽच्युता ॥ इति।**

'यद्वावान' इत्यादि धाय्या [प्रथम दिन विहित होने से] अच्युत है।

ता धाय्यामनु बृहत्साम्नो योनिभूत प्रगाथ विधत्ते—

**'त्वामिद्धि हवामह इति'[6] बृहतो योनिमनु निवर्तयति, बार्हत ह्येतद-हरायतनेन ॥ इति।**

अह्नो बार्हतत्व पूर्वमेवोक्तम्, तदेवात्र बृहत्सामसम्बन्धरूप लिङ्गम् ॥

1 ऋ० १ ३० १३–१५।
2 ऋ० ८ २ १३–१५।
3 द्र० इत पूर्वम्, पृ० ६८६।
4 द्र० इत पूर्वम्, ६८७ पृ० टि०।
5 ऋ० १० ७४ ६।
6 ऋ० ६.४६ १,२।

'त्वामिद्धि हवामहे' (= हम तुम्हें बुलाते हैं) इत्यादि ऋचा में बृहत् साम [उत्पन्न है अतः] योनिभूत इस प्रगाथ का [पूर्वोक्त धाय्या के] बाद में शंसन करना है [इस प्रकार स्वरूप] स्थान के द्वारा यह दिन बृहत्साम सम्बन्धी है।

रैवतसामसम्बन्धिनं सामप्रगाथं विधत्ते—

**'इन्द्रमिद्देवतातय इति'[1] सामप्रगाथो निनृत्तवान् षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।**

अस्य प्रगाथस्य सर्वेष्वपि पादेषु 'इन्द्र'शब्दावृत्तेस्तालध्वनिकृद्गानात्मनिनृत्तवत्त्वलिङ्गम् ॥

'इन्द्रमिद्देवतातय' इत्यादि साम प्रगाथ है। [इसके सभी पादों में 'इन्द्र' शब्द की आवृत्ति होने से] ताल और ध्वनि की समानता युक्त यह षष्ठ दिन में षष्ठ दिन का रूप है।

अच्युतत्वलिङ्गं सूक्तविशेषं विधत्ते—

**'त्यमू षु वाजिनं देवजूतमिति'[2] तार्क्ष्योऽच्युतः ॥ १२ ॥ इति।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) सप्तमः खण्डः ॥ ७ ॥ (१२) [१६५]

'त्यमू षु' इत्यादि तार्क्ष्य देवताक सूक्त [प्रथम दिन विहित होने से] अच्युत है।

॥ इस प्रकार बाइसवें अध्याय के सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथ अष्टमः खण्डः

पारुच्छेपत्वादिलिङ्गद्वयोपेतं सूक्तं विधत्ते—

**'ऐन्द्र याह्युप नः परावत इति'[3] सूक्तं, पारुच्छेपमतिच्छन्दाः सप्तपदं, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।**

१. १३ [xxii.८] 'ऐन्द्र याह्युप' इत्यादि सूक्त परुच्छेप ऋषि द्वारा दृष्ट, अतिच्छन्द नामक छन्द में निबद्ध एवं सात पादों से युक्त षष्ठ दिन में षष्ठ दिन का रूप है।

तुल्यसमानोदर्कत्वलिङ्गोपेतं सूक्तं विधत्ते—

**'प्र घा न्वस्य महतो महानीति'[4] सूक्तं, समानोदर्कं, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।**

---

१. ऋ० ८.३.५,६।        २. ऋ० १०.१७८.१।
३. ऋ० १.१३०।        ४. ऋ० २.१५।

'सोमस्य वा मद इन्द्रश्चकार'-इत्यस्य चतुर्थपादस्य बहुष्वृक्षु[1] विद्यमानत्वात् समानोदर्कत्वम् ॥

'प्र घा न्वस्य' इत्यादि सूक्त की [अनेक ऋचाओं में 'सोमस्य वा मद इन्द्रश्चकार' आदि पाद पुनरुक्त होने से] समान समाप्ति छठवें दिन में छठवें दिन का रूप है।

तिष्ठतिधातुरूपलिङ्गयुक्तं सूक्तं विधत्ते—

'अभूरेको रयिपते रयीणामिति'[2] सूक्तं, रथमा तिष्ठ तुविनृम्ण भीममित्यन्तो वै स्थितमन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।

'अभूरेकः' इत्यस्य सूक्तस्य पञ्चम्यामृचि 'रथमा तिष्ठेति' द्वितीय पाद, तत्र स्थित-शब्दार्थवाची तिष्ठतिधातुर्विद्यते, स च गतिनिवृत्तिरूपत्वादन्तो भवति, षष्ठस्याह्नोऽन्तत्वं पूर्वमुक्तम्, अतोऽन्तवत्त्वं लिङ्गम् ॥

'अभूरेको रयिपते' इत्यादि सूक्त के [पांचवीं ऋचा के] 'रथमातिष्ठ' आदि द्वितीय पाद में [स्थित शब्दार्थ वाचक 'स्था' धातु के गतिरोधक होने से] स्थितम् अर्थात् 'रुक जाना' ही अन्त है और छठवां दिन पृष्ठ्यषडह के अन्त में होने से यह छठे दिन में छठे दिन का रूप है।

तत्रत्यं छन्द प्रशंसति—

तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते ॥ इति।

पूर्ववद् व्याख्येयम् ॥

वह त्रिष्टुप् छन्दस्क सूक्त है, प्रतिष्ठित पद [अर्थात् नियताक्षर संख्या] से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत निष्केवल्यशस्त्र] धारित होता है; अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

निष्केवल्यस्य शस्त्रस्यान्तिमं तृचं विधत्ते—

उप नो हरिभिः सुतमिति पर्यासः, समानोदर्कः, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥ इति।

तिसृष्वप्यृक्षु 'उप नो हरिभिः'-इति पादस्यैकत्वात् समानोदर्कत्वम् ॥

'उप नो हरिभिः' इत्यादि तृचविशेष पर्यास [पूर्वोक्त ऋचाओं के अन्त में प्रक्षेपणीय] है, इसके [तीनों ऋचाओं में 'उप नो हरिभि' आदि] पाद की समानता [के कारण] यह षष्ठ दिन में षष्ठ दिन का रूप है।

---

१. प्र घा न्वस्येति दशर्चं सूक्तम्, तत्र द्वितीयादृक्षु सर्वत्रैवास्त्येष पाद।
२. ऋ० ६.३१।

तत्र निविद्धानं विधत्ते—

**ता उ गायत्र्यो, गायत्र्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति; तद्वै तच्छन्दो वहति, यस्मिन्निविद्धीयते; तस्माद् गायत्रीषु निविदं दधाति ॥** इति ।

पूर्ववद् व्याख्येयम् ॥

उस [सूक्त] की ऋचाएं गायत्री छन्दस्क हैं, और गायत्री ही इस त्र्यह के मध्यन्दिन सवन के वाहक हैं। जिस [छन्द] में निविद् [पद-समूह] प्रक्षिप्त होते हैं; वही छन्द [सवन का] निर्वाहक होता है। इस निर्वाहकत्व के कारण गायत्री ऋचाओं में निविद् प्रक्षिप्त होते हैं।

वैश्वदेवस्य प्रतिपदमृचं विधत्ते—

**'अभि त्वं देवं सवितारमोण्योरिति'[1] वैश्वदेवस्य प्रतिपदतिच्छन्दाः; षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति ।

अतिच्छन्दस्त्वमेव लिङ्गम् ॥

'अभि त्वं देवं' इत्यादि वैश्वदेव [शस्त्र] की प्रतिपद् ऋचा है, अतिच्छन्द में निबद्ध यह षष्ठ दिन में षष्ठ दिन का रूप है।

प्रतिपच्छेषमृग्द्वयमनुचरतृचं च विधत्ते—

**तत्सवितुर्वरेण्यं, दोषो आगादित्यनुचरोऽन्तो वै गतमन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति ।

'तत्सवितुः' इति[2] द्वे ऋचौ, प्रतिपच्छेषभूते। 'दोषो आगात्' इत्यस्मिन् सूक्ते पठितः[3] तृचोऽनुचरः। अत्र सूत्रार्थवाची 'गमि' धातुरस्ति, तस्यार्थः आगादिति शब्देनोच्यते। सूत्रार्थवाचित्वाद् गतं गमनसमाप्तिरन्तो भवति। तदन्तवत्त्वं लिङ्गम्। अस्मादेव सूत्रकारोऽपि त्वभिलेखानृचं तत्सवितुरिति द्वे ऋचौ निर्दिश्य प्रतिपच्छेषत्वेनोक्त्वा दोषो आगादित्यादिकस्तृचोऽनुचर इत्युक्तवान्[4], तस्मादस्मानिन्तत्सवितुरिति वाक्यं पूर्वभागेन विच्छेदनीयम् ॥

---

१. सा० छ० आ० ५.२.३.८, वाज० सं० ४.२५; अथर्व० ११.४.२ ।

२. ऋ० ३.६२.१०, ११ ।

३. आश्व० श्रौ० ८.१.१८ (सा० छ० आ० २.२.४.३) ।

४. 'अभि त्वं देवं सवितारमोण्योरिति तिस्रः, तत् सवितुर्वरेण्यमिति द्वे; दोषो आगाद् बृहद् गाय द्युमद्देहाथर्वण । स्तुहि देवं सवितारम् ॥ ...वैश्वदेवस्य प्रतिपदनुचरौ'— इति आश्व० श्रौ० ८.१.१८ ।

'तत्सवितु' इत्यादि वो प्रतिपद् ऋचा और बोधो अगात्' आदि [आश्व० श्रौ० सूत्र में पठित] अनुचर तृच हैं [भूतार्थवाचक गम् धातु का अर्थ 'आगात्' शब्द से उक्त है अत गमनसमाप्ति होने से] 'गतम्' अर्थात् चला जाना ही अन्त है, और छठवां दिन पृष्ठ्य षडह के अन्त में होने से यह छठें दिन में छठे दिन का रूप है।

सवितृदेवताक सूक्त विधत्ते—

**'उदु ष्य देव' सविता सवायेति[1]' सावित्र, शश्वत्तम तदपा वह्निरस्थादि-त्यन्तो वै स्थितमन्त. षष्ठमह. षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति।

शश्वत्तममित्यादिर्द्वितीय पाद, तस्मिन्नस्थादिति भूतार्थवाचिप्रत्ययान्तस्तिष्ठतिधातु श्रुत, तच्च स्थितत्व गमनस्यान्त, तदिदमन्तवत्त्व लिङ्गम् ॥

'उदुष्य देव' आदि सवितृ देवताक सूक्त के [द्वितीय पाद] 'शश्वत्तम' आदि के 'अस्थात्' शब्द में [भूतार्थवाचक 'स्था' धातु के होने से] स्थित होना ही गमन का अन्त है और षष्ठ दिन पृष्ठ्यषडह के अन्त में होने से यह छठवें दिन में छठें दिन का रूप है।

तुल्यसमाप्तिलिङ्गक सूक्त विधत्ते—

**'कतरा पूर्वा कतरापरायोरिति[2]' द्यावापृथिवीय, समानोदर्कं, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति।

द्वितीयस्या ऋचश्चतुर्थे पादे 'द्यावा रक्षत पृथिवी'-इत्युक्तत्वात् इद सूक्त द्यावा-पृथिवीयम्, तत्र द्यावा रक्षतमिति' पादस्य बह्वृषु ऋक्षु विद्यमानत्वात् समानोदर्कत्वम् ॥

'कतरा पूर्वा' आदि सूक्त द्यावापृथिवी देवताक सूक्त [की बहुत ऋचाओं में 'द्यावा रक्षतम्' आदि पाद की पुनरुक्ति होने से] समान समाप्ति से युक्त यह षष्ठ दिन में षष्ठ दिन का रूप है।

ऋभुदेवताक सूक्तद्वय विधत्ते—

**'किमु श्रेष्ठ किं यविष्ठो न आजगन्नुप नो वाजा अध्वरमृभुक्षा' इत्यार्भव, नाराशस त्रिवत् षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति।

'किमु श्रेष्ठ[3]' इत्यस्मिन् सूक्ते त्रयोदशर्च शसनीया। तत्र चतुर्थ्या ऋच प्रथमपदे 'चकृवास ऋभव -इति श्रुतत्वादिदमार्भवम्। 'उप न[4]' इति सूक्ते चतस्र, तत्र प्रथम-पादे 'ऋभुक्षा' इति श्रुतत्वात् तदप्यार्भवम्। ऋभवो हि नरा मनुष्या, अत एव

---

१. ऋ० २ ३८।  २ ऋ० १ १८५।
३ ऋ० १ १६१।  ४ ऋ० ४ ३७।

मनुष्यानन्व. प्रवेशयितुमसहमाना अग्निवस्वादयः सोमपानवेलायामृभून् निवारितवन्तः । एतच्च 'आर्भवं शंसति । ऋभवो वै देवेषु' इत्यादावुपाख्यानेन[1] तुल्यमवगम्यते । ते च नरा ऋभव 'शस्यन्ते' कथ्यन्ते यस्मिन् सूक्ते, तन्नाराशंसं, तदेकं लिङ्गम् । तथैव 'उप नो वाजा.' इति सूक्तस्य तृतीयायामृचि 'त्र्युदयम्'–इति त्रिशब्दः श्रुतः, तदेतत्त्रित्वं द्वितीयं लिङ्गम् ॥

'विभु श्रेष्ठः' आदि ऋभु देवताक [जिन सूक्त में ऋभु आदि नर का शंसन होता है वह] नाराशंस सूक्त है । ['उप नो वाजा' आदि सूक्त के तृतीय ऋचा में 'त्र्युदयम्' में त्रिशब्द होने से] 'त्रि' शब्द युक्त षष्ठ दिन में यह षष्ठ दिन का रूप है ।

अथ बहुदेवताकं सूक्तं विधत्ते—

**'इदमित्था रौद्रं गूर्तवचा, ये यज्ञेन दक्षिणया समक्ता' इति वैश्वदेवम् ॥ १३ ॥** इति ।

'इदमित्था[2]'–इत्येकं सूक्तं 'ये यज्ञेन[3]'–इत्यपरम् ॥

**'इदमित्था' आदि और 'ये यज्ञेन' आदि वैश्वदेवताक सूक्त हैं ।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) अष्टमः खण्डः ॥ ८ ॥ (१३) [१६६]

॥ इस प्रकार बाइसवें अध्याय के आठवें खण्ड की हिन्दी पूर्ण हुई ॥ ८ ॥

## अथ नवमः खण्डः

पूर्वोक्ते सूक्तद्वये लिङ्गं दर्शयति—

**नाभानेदिष्ठं शंसति ॥** इति ।

नाभानेदिष्ठाख्यः कश्चिन्महर्षिः, तेन दृष्टम्, पूर्वोक्तं[4] सूक्तद्वयं 'नाभानेदिष्ठं' तच्छंसेत् । अतो महर्षिसम्बन्ध एवात्र लिङ्गम् ॥

**V. 14 [XXII. 9] नाभानेदिष्ठ [ऋषि द्वारा दृष्ट पूर्वोक्त सूक्त द्वय] का शंसन करता है[5] ।**

तदेतत्सूक्तद्वयं प्रशंसितुमुपाख्यानमाह—

**नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन् सोऽब्रवीदेत्य किं मह्यमभाक्तेत्येतमेव निष्ठावमववदितारमित्यब्रुवंस्तस्माद्धाप्येतर्हि पितरं पुत्रा निष्ठावोऽववदितेत्येवाचक्षते ॥** इति ।

---

१. द्र० इतः पूर्वम्, ४८५ पृ०, ६ खण्डे । २. ऋ० १०.६१ ।
३. ऋ० १०.६२ । ४. द्र० इदमेव पृष्ठे १० प० । ५. तु० ऐ०ब्रा० vi. २७ ।

मनो पुत्रो नामानेदिष्ठो नाम बालको गुरुगृहे 'ब्रह्मचर्यं वसति'—उपनीतः सन् वेदमध्येतुं तत्र निवसति । तदानीं तस्य ज्येष्ठभ्रातरो मनोः पितुर्धनं स्वार्थं विभजन्तः, तं बालकं 'निरभजन्' भागरहितमकुर्वन् । बालोऽयं ब्रह्मचारी वेदमेवाभ्यस्यतु किं तस्य धनेनेति मत्वा भागं न दत्तवन्तः । तदानीं 'स' नाभानेदिष्ठ 'एत्य' वेदाभ्यासं कृत्वा समागत्य भ्रातॄनिदमब्रवीत्—हे भ्रातरः, मह्यं 'किम् अभाक्त' किं नाम वस्तु भागत्वेन यूयं पृथक्त्वेन कृतवन्त इति । ते च भ्रातरः 'एतमेव' मनुं पितरं हस्तेन प्रदर्श्य हे नाभानेदिष्ठ ! वयं नो जानीमस्त्वमेव पृच्छेत्यब्रुवन् । कीदृशं मनुम् ? 'निष्ठावम्' धनविभागादेर्धर्मरहस्य निःशेषेण स्थितिर्निर्णया निष्ठा, सा यस्मिन्नस्ति स निष्ठावः, तादृशं धर्मरहस्यस्य निर्णेतारमित्यर्थः । 'अववदितारम्' ज्येष्ठपुत्रस्यैतावत्, द्वितीयस्यैतावत्, अयस्यैतावत्, इत्यवच्छिद्य वेदितुं समर्थोऽववदिता तादृशम् । अयमर्थः—अयं मनुर्धर्मशास्त्रकर्तृत्वाद्धर्मरहस्यनिर्णयवान् पितृत्वेन तवैतावदित्यवच्छिद्य वक्तुं समर्थश्च । तस्मान्मदीयो भागः क इति मनुमेव पृच्छेत्यब्रुवन् । यस्मादस्य भ्रातर एवमुक्तवन्तः, तस्मादिदानीमपि पितरं पुत्रा इत्यनेन प्रकारेण आचक्षते । केन प्रकारेणेति ? सोऽभिधीयते—अयं पिता 'निष्ठावः, निर्णयवान्' अस्यैतावदित्यवच्छिद्य वदिता चेति ॥

[मनु के पुत्र] नाभानेदिष्ठ मानव जब [वेद पढने के लिए] ब्रह्मचर्याश्रम में निवास कर रहे थे तब उनके [बडे] भाई ने पिता के धन में भाग देने से उन्हें निराकृत कर दिया। वह [वेदाभ्यास से] आकर [भाइयों से इस प्रकार] बोले—हे भाइयो ! मेरे लिए कौन सा भाग अलग किया गया है ? [उन भाइयों ने अपने पिता मनु की ओर हाथ दिखाकर] 'इन्हीं धर्मरहस्य-निर्णेता और न्यायप्रदाता [पिता से पूछो[1]]'—ऐसा कहा। इसीलिए अभी भी यहाँ पिता को पुत्र इस प्रकार ही 'धर्माधर्म निर्णेता और फैसला करने वाला' कहते हैं।

तत ऊर्ध्वं नाभानेदिष्ठस्य कृत्यं दर्शयति—

**स पितरमेत्याब्रवीत्,–त्वां ह वाव मह्यं तताभाक्षुरिति तं पिताऽब्रवीन्मा पुत्रक तदादृथा.,–अङ्गिरसो वा इमे स्वर्गाय लोकाय सत्रमासते, ते षष्ठं षष्ठमेवाहरागत्य मुह्यन्ति, तानेते सूक्ते षष्ठेऽहनि शंसय, तेषां यत्सहस्रं सत्रपरिवेषणं, तत्ते स्वर्यन्तो दास्यन्तीति, तथेति ॥** इति ।

१ 'एतमेव पितरं निष्ठावमववदितारम् । तुभ्यमभक्ष्महीति वाक्यशेषः । निष्ठावो धर्माधर्मानुष्ठानाननुष्ठानव्यवस्थापकः । अववधिता शासिता धाता'—

पिता निष्ठाव इत्युक्तो निष्ठा कार्यव्यवस्थितिम् ।
वाति प्रापयति प्ण्यर्थाद् वातेरनुपसर्गकात् ॥
मत्वर्थे वाववदिता शिक्षकोऽवेति सान्त्वने ।
भजेति शेषः पितरं भज पृच्छेति तेऽब्रुवन् ॥
—इति षड्गुरुशिष्यः ।

'स' नाभानेदिष्ठो भ्रातृभिस्तथोक्तः सन् पितरं प्रत्यागत्येदमब्रवीत्,—हे पितर्मह्यं 'त्वा ह वाव' त्वामेव भागत्वेन सर्वेऽपि 'त्वागुः' नाभानेदिष्ठः, मदीया भ्रातरो ब्रुवन्ति, तं मे देहीत्यनिमायाद । तत्र 'स' नाभानेदिष्ठं 'पिता' मनुरेवमब्रवीत्—हे 'पुत्रक' बालक भ्रातृणां वचनं 'मा आद्रथाः' तस्मिन् वचने आदरं मा कार्षीः । नास्त्येव मदस्त त्वदीयो भागः, सर्वमपि धनं त्वद्भ्रातृभिर्हृतम् । तत्र नु धनप्राप्त्यर्थमेकमुपायं कथयिष्यामि,— अङ्गिरोनामका महर्षय 'इमे' समीपवर्तदेशे स्वर्गार्थं सत्रमनुतिष्ठन्ति, ते पुनः पुनः सत्रमुपक्रम्य, तदा तदा प्राप्तं तत्तत् षष्ठमहराप्य तत्र तत्र मन्त्रबाहुल्याद् 'मुह्यन्ति' भ्रान्ताः सन्तः सत्रसमाप्तिमप्राप्य सर्वदा क्लिश्यन्ति 'तान्' महर्षीन् षष्ठेऽहनि, त्वं गत्वा 'इदमित्था'–इति 'ये यज्ञेन' इति च द्वे सूक्ते शंसय, तत्र 'तेषाम्' ऋषीणां 'यद्' सहस्रसङ्ख्याकं धनं 'सत्रपरिवेषणं' सत्रार्थं परिवेषणं सम्पादितमस्ति, तत्सर्वमनुष्ठानादूर्ध्वमवशिष्टं धनं 'ते' तुभ्यमङ्गिरसो महर्षयः स्वर्गं गच्छन्तो दास्यन्तीति । 'तथा' अस्त्विति तत् पितृवचनं नाभानेदिष्ठोऽङ्गीचकार ॥

वह [नाभानेदिष्ठ] पिता के पास आकर बोले—हे तात ! मेरे भाइयों ने सभी कुछ सम्पत्ति का भाग बाँट लिया है और मेरा भाग आपके पास है, उसे दे देवें । उनसे पिता [मनु] बोले—हे बालक ! भाइयों के वचन का आदर मत करो [मेरे पास तुम्हारा भाग नहीं है, तुम्हारे भाइयों के द्वारा सभी ले लिया गया है । तुम्हारे लिए धन प्राप्त्यर्थ मैं एक उपाय बताता हूँ—] 'ये आङ्गिरस नामक महर्षि [समीपवर्ती देश में] स्वर्ग लोक के लिए सत्र का अनुष्ठान कर रहे हैं । वे पुनः पुनः सत्र का उपक्रम करके [उस-उस समय प्राप्त] उस-उस षष्ठ अहः पर आकर [मन्त्रबाहुल्य के कारण] भ्रान्त हो जाते हैं [अतः सत्र का उपसंहार नहीं कर पाते] । उन महर्षियों को षष्ठ अहः में तुम जाकर इन दो ['इदमित्था' और 'ये यज्ञेन'] सूक्त का शंसन कराओ । उन [ऋषियों] की जो सहस्र सङ्ख्याक सत्र की दक्षिणा है[1] उसे [समापन के बाद] स्वर्गलोक को प्राप्त करते हुए वे तुम्हें [अवशिष्ट धन] दे देंगे ।' [उसने कहा—] 'ठीक है ।'

अङ्गीकारादूर्ध्वं किं कृतवानित्याशङ्क्य तद्वृत्तान्तं दर्शयति—

तानुपेत्य प्रतिगृभ्णीत मानवं सुमेधस इति, तमब्रुवन्, किंकामो वदसीतीदमेव वः षष्ठमहः प्रज्ञापयानीत्यब्रवीदथ यद्वा, एतत्सहस्रं सत्रपरिवेषणं, तन्मे स्वर्यन्तो दत्तेति; तथेति, तानेते सूक्ते षष्ठेऽहन्यशंसयत्,—ततो वै ते प्र यज्ञमजानन् प्र स्वर्गं लोकम् ॥ इति ।

---

१. 'परिवेषणं भाजनं' तदुपात्तं धनं परिवेषणशब्देन लक्ष्यन्ते, सत्राद् धृष्ट इत्यवमादयः।'—इति गोविन्दस्वामी ।

'तान्' अङ्गिरसो महर्षीन् 'उपेत्' नाभानेदिष्ठ समीप प्राप्तवान् प्राप्य च प्रति गृम्णीत'–इत्यादिम्रपादेनैव महर्षीणामग्रे किंचिद्वचनमुक्तवान् । तस्य पादत्रयायमयं — हे 'सुमेधस' शोभनमेधायुक्ता अग्निरस, 'मानव' मनो पुत्र नाभानेदिष्ठाख्य मा 'प्रति गृम्णीत' यूय स्वीकुरुवेति । तथा वदन्त नाभानेदिष्ठ प्रति मुनय इदमब्रुवन्,—हे नाभा नेदिष्ठ ! किंकाम ' कीदृगपेक्षायुक्त सन्नस्मान् प्रत्येव वदसि ? इति । तत स नाभा नेदिष्ठोऽब्रवीत्,—हे महर्षय व ' युष्माकमिदमेव षष्ठमह प्रज्ञापयानि प्रकर्षेण बोधया मीति, 'अथ' बोधनानन्तर 'सत्रपरिवेषण मन्त्रि सत्रार्थं सपादितमनुष्ठानादूर्ध्वमवशिष्ट यदेतत्सहस्रसख्याक धनमस्ति तत् सर्वं यूय मे मह्य स्वर्गं प्रति गच्छन्तो दत्तेति । 'तथेति' मुनिभिरङ्गीकृते सति 'तान्' मुनीन् 'एते उभे सूक्ते षष्ठेऽहन्यशसयत् तत एव 'ते' मुनयो यज्ञ प्रकर्षेण 'अजानन्' ज्ञातवन्त तदनुष्ठानेन स्वर्गं लोकमपि प्राजानन् ।।

उन [महर्षियों] के पास [नाभानेदिष्ठ] गए और इस प्रकार कहा—हे शोभन मेधा वाले अङ्गिराओ, मनु के पुत्र [नाभानेदिष्ठ] को आप स्वीकार करें । [इस प्रकार कहते हुए] उनसे मुनियों ने कहा—किस अपेक्षा बुद्धि से तुम इस प्रकार कह रहे हो ? तब नाभानेदिष्ठ ने कहा—हे महर्षियों, आप लोगों को 'यही षष्ठ अह है' ऐसा ज्ञान कराऊँगा और षष्ठ अह के ज्ञान के बाद आप द्वारा सत्रार्थ सम्पादित अनुष्ठान के बाद अवशिष्ट जो सहस्र सख्याक धन है उस सबको मुझे स्वर्ग के प्रति जाते हुए देवें । उन्होंने कहा—'ठीक है ।' उन मुनियों ने इन दोनों सूक्तों को छठवें दिन शसन किया । उसके बाद से ही उन मुनियों को यज्ञ का प्रकृष्ट रूप से ज्ञान हुआ और उस अनुष्ठान से स्वर्ग लोक का भी ज्ञान हुआ ।

सूक्तद्वय प्रशस्य तद्विधि निगमयति—

**तद्यदेते सूक्ते[1] षष्ठेऽहनि शसति, यज्ञस्य प्रज्ञात्यै, स्वर्गस्य लोकस्यानुख्यात्यै ।। इति ।**

यस्मात् सूक्तद्वयशसनेनाङ्गिरोभिर्यज्ञ स्वर्गश्च प्रज्ञात, तस्माद्धोता तदुभय शंसेत्, तच्च यज्ञस्वर्गयोरवगमाय भवति ।।

[ क्योंकि सूक्त द्वय के शसन के द्वारा अङ्गिराओं ने यज्ञ और स्वर्ग का ज्ञान प्राप्त किया । इसलिए होता ] इन दोनों सूक्तों का शसन करता है जो यज्ञ के प्रकृष्ट रूप से ज्ञान के लिए और स्वर्गलोक के अवगम के लिए होता है ।[2]

*पुनरपि सूक्तमहिमान दर्शयितुमुपाख्यानमेवाह—*

**त स्वर्यन्तोऽब्रुवन्नेतत् ते ब्राह्मण सहस्रमिति, तदेन समाकुर्वाण पुरुष कृष्णशवास्युत्तरत उपोत्यायाब्रवीन्मम वा इद मम वै वास्तुहमिति, सोऽ-**

1. ऋ० १० ६१,६२ । 2 द्र० इतः पूर्वम्, पृ० ६२ ।

**ब्रवीन्मह्यं वा इदमदुरिति, तमब्रवीत् तद्वै नौ तवैव पितरि प्रश्न इति; स पितरमैत् तं पिताऽब्रवीन्नतु ते पुत्रकादुरित्यदुरेव म इत्यब्रवीत् तत्तु मे पुरुषः कृष्णशवासुत्तरत उपोदतिष्ठन्मम वा इदं मम वै वास्तुहमित्यादितेति; तं पिताऽब्रवीत्—तस्यैव पुत्रक तत्तत्तु स तुभ्यं दास्यतीति; स पुनरेत्याब्रवीत्—तव ह वाव किल भगव इदमिति मे पिताऽऽहेति सोऽब्रवीत्—तदहं तुभ्यमेव ददामि य एव सत्यमवादीरिति ॥ इति ।**

'ते' नाभानेदिष्ठ 'स्वर्यन्तः' स्वर्गं प्राप्नुवन्तोऽङ्गिरसोऽब्रुवन्—हे 'ब्राह्मण' नाभानेदिष्ठ 'एतद्' गोसहस्रं यज्ञभूमाववशिष्टं 'ते' तुभ्यं दत्तमिति शेषः । अत्र शाखान्तरानुसारेण गोसहस्रमित्यर्थो लभ्यते । शाखान्तरे चैवमाम्नायते—'ते सुवर्गं लोकं यन्तो य एषां पशव आसंस्तानस्मा अददुः[1]' इति । 'तद्' गोसहस्रं 'समाकुर्वाणं' सम्यगात्मसात्कुर्वन्तम् 'एनं' नाभानेदिष्ठं कश्चित्पुरुषो यज्ञभूमेरुत्तरत 'उपोत्थाय' समीप एवोत्थितो भूत्वेदमब्रवीत्—कीदृशः पुरुषः ? 'कृष्णशवासी' अतिशयेन कृष्णं मलिनं वस्त्रं 'कृष्णशं' तद्वस्ते आच्छादयतीति कृष्णशवासी[2] । अयमाय मलिनवस्त्रः पुरुषः पशुस्वामी रुद्र इत्यवगन्तव्यम् । तथा च शाखान्तरे पठ्यते—'तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत्[3]' इति । स रुद्रः किमब्रवीदिति, तदभिधीयते—हे नाभानेदिष्ठ 'इदं' पशुसहस्रं ममैव स्वम् । तत्रैवमुपपत्तिः, 'वास्तुहं' वास्तौ यज्ञभूमौ हीनं कर्मान्ते परित्यक्तं वास्तुहं, तादृशं सर्वं ममैव स्वमिति सर्वत्र सम्प्रतिपन्नमिति । एवं पुरुषेणोक्तः स नाभानेदिष्ठः पुनरेनमब्रवीत्—हे रुद्र मह्यमेवेदं सहस्रमङ्गिरसो दत्तवन्त इति । तं तथा वदन्तं नाभानेदिष्ठं पुनः पुरुषोऽब्रवीत्—हे नाभानेदिष्ठ, 'तद्वै' तस्मिन्नेव त्वदीयं मदीयमिति सन्देहे सति 'नौ' आवयोरुभयोरपि 'तवैव पितरि' मनौ निर्णयार्थं प्रश्नोऽस्त्विति । ततः 'स' नाभानेदिष्ठः पितरं प्रष्टुम् 'एत्' आगतवान् । स पिता तेन पृष्टस्तमब्रवीत्—हे 'पुत्रक' बालक तुभ्यमङ्गिरसो महर्षयः 'अदुः' ननु दत्तवन्तः किम् ? प्लुतिः प्रश्नार्था । एवं पित्रा पृष्टः स नाभानेदिष्ठः 'मे' मह्यम् 'अदुरेव' दत्तवन्त एवेत्यब्रवीत् । तर्हि कस्तव विवादः ? इत्याशङ्किते स नाभानेदिष्ठ एवमुवाच—ते महर्षयो दत्तवन्त एव, किं तु तद्गोसहस्रं कश्चित्पुरुषो मलिनवस्त्रः सन् यज्ञभूमेरुत्तरत उत्थाय, 'इदं' गोसहस्रं ममैव स्वं, यज्ञवास्तौ हीनत्वादित्यभिधाय 'आदित' आदानं कृतवान्, अपहृतवानित्यर्थः । तथा ब्रुवन्तं पुत्रं प्रति पिता अब्रवीत्—हे 'पुत्रक' सिद्धो 'तद्' यज्ञवास्तौ हीनं गोसहस्रं वस्तुं रुद्रस्य स्वं, पशुपतित्वाद् यज्ञावशिष्टस्वामित्वाच्च, किन्तु तथा सत्यपि तव हानिर्नास्ति, 'सः' रुद्रः 'तद्' गोसहस्रं तुभ्यं दास्यतीति । यज्ञकाले तत्सर्वमङ्गिरसां धनं भवति, समाप्ते तु यज्ञे यदवशिष्टं, तस्य रुद्र एव

---

१. तै० सं० ३.१.९.५ ।

२. सायणाभिमते तु 'कृष्णशवासी'-इत्यभ्याख्याने कृष्णवर्णः शवच्छादकश्च कृष्णशवासी वक्षिदनार्थः, 'रुद्रः' भयानकाकृतिः स्यात् । सवयोरेकत्वं छान्दसम् ।

स्वामीति नाङ्गिरसा दातुमधिकारोऽस्तीत्यभिप्रायः । तथा रुद्रवचनं शाखान्तरे एवमाम्नायते—'न वै तस्य तदीशत इत्यब्रवीद् यज्ञवास्तौ हीयते मम वै तत्'[1] इति । ततो दास्यतीति वचनं श्रुत्वा 'स' नाभानेदिष्ठः पुनरपि रुद्रस्य समीपमेत्येदमब्रवीद्—हे 'भगवन्' पूज्य ! रुद्र ! 'तव ह वाव किल' तवैव सर्वम् 'इदं' स्वमिति मदीयः पिता माहेति । ततः 'स' रुद्रोऽब्रवीत्—हे नाभानेदिष्ठ ! 'तत्' सर्वं तुभ्यमेव ददामि, यस्त्वं सत्यमेवावादीः, न त्वनृतमुक्तवानसि, तस्मात् परितोषात् सत्यवादिने तुभ्यमेव ददामीति[2] ॥

उस [नाभानेदिष्ठ] से स्वर्ग को जाने के लिए उद्युक्त हुए अङ्गिराओं ने कहा—हे ब्राह्मण ! यह [यज्ञभूमि में अवशिष्ट गो-] सहस्र तुम्हारे लिए है । [गो-सहस्र को] सम्यक् रूप से इकठ्ठा करने वाले इस [नाभानेदिष्ठ] से अत्यन्त काला कपड़ा पहने हुए[3] यज्ञभूमि के उत्तर की ओर समीप ही उठकर कोई पुरुष बोला—यह मेरा है, यज्ञभूमि में परित्यक्त वस्तु सभी मेरी है[4] । तब उस [नाभानेदिष्ठ] ने कहा—'यह मुझे उन [अङ्गिराओं] ने दिया है ।' उससे [पुनः पुरुष ने] कहा—हे नाभानेदिष्ठ, तब 'यह हम दोनों का है'—इस सन्देह के निर्णयार्थ तुम्हारे पिता से प्रश्न किया जाय । वह पिता के पास आया । [पूँछने पर] पिता ने कहा—हे बालक, तुम्हें क्या अङ्गिराओं ने नहीं दिया ? [पिता के इस प्रकार पूँछने पर उसने] 'मुझे दिया ही था'—इस प्रकार कहा । [तब क्या हुआ ? ऐसा पूँछने पर उसने कहा ]—'एक पुरुष काला वस्त्र पहने हुए उत्तर की ओर से समीप ही उठकर—'यह मेरा है, यज्ञभूमि में परित्यक्त सभी वस्तु मेरी है'—ऐसा कहते हुए उसे ले लिया । उससे पिता ने कहा—[पशुपति होने से] हे बालक वह [गो सहस्र] उन्हीं [रुद्र] का है । [फिर भी कोई हानि नहीं है] वह तुम्हें ही दे देंगे । वह पुनः रुद्र के समीप आकर बोला—'हे भगवन् रुद्र ! तुम्हारी ही सभी वस्तु है'—ऐसा मेरे पिता ने कहा है । तब उन [रुद्र] ने कहा—'हे नाभानेदिष्ठ, उस सभी को मैं तुम्हें ही देता हूँ क्योंकि तुमने सत्य कहा है ।

---

१. तै० सं० ३.१.९ ६ ।

२. ऋ० १० ६१, ६२ सूक्तयो सोपक्रम सायणीय भाष्य सर्वमिहालोच्यम् । शा० ब्रा० २८.४ ता० ब्रा० २०.९ २ ।

३. 'कृष्णश नीलवस्त्र स्यान्मलिनं त्वपरेऽवदत् ॥
शुक्ल कृष्णदशं चान्ये कृष्णवर्णाल्बिण परे
छन्दोगसूत्रे बहुधा कृष्णश तु निरुच्यते ।—
कृष्णश वास इति । कृष्णं कद्रुमिश्रितमिति शाण्डिल्य. । शुक्ल कृष्ण दशमिति गौतमः । कृष्णमित्येव मन्य इति धानजय्य'—इति षड्गुरुशिष्यः ।
(ii) 'मलीमसवासा. कृत्तिवासा वा'—इति गोविन्दस्वामी ।
(iii) ब्राह्म० श्रौ० २३.२ ।

४. तु० इतः पूर्वम्, 'मम वा इदमिति' पृ० ५०१ ।

इत्थमुपाख्यानं परिसमाप्य प्रसङ्गात् पुरुषार्थत्वेन सत्यवदनं विधत्ते—

**तस्मादेवंविदुषा सत्यमेव वदितव्यम् ॥** इति ।

'एवं विदुषा' सत्यस्य श्रेयोहेतुत्वं जानता ॥

**इसलिए विद्वान् को सदैव सत्य ही बोलना चाहिए ।**

उपाख्यानस्य सर्वस्य तात्पर्यं दर्शयति—

**स एष सहस्रसनिर्मन्त्रो यन्नाभानेदिष्टः ॥** इति ।

नाभानेदिष्ठेन महर्षिणा दृष्टो यो मन्त्रसमूहः, स एषः 'सहस्रसनिः' सहस्रसंख्याकस्य वस्तुनः सनिर्लाभो यस्मिन् मन्त्रे सोऽयं सहस्रसनिः ॥

**जो नाभानेदिष्ठ महर्षि द्वारा दृष्ट मन्त्रसमूह हैं वह यह सहस्र [संख्याक वस्तु] का लाभ कराने वाले हैं ।**

वेदनं प्रशंसति—

**उपैनं सहस्रं नमति प्र षष्ठेनाह्ना स्वर्गं लोकं जानाति य एवं वेद ॥ १४ ॥** इति ।

'एनं' वेदितारं सहस्रसंख्याकं धनम् 'उपनमति' प्राप्नोति, स च कालान्तरे षष्ठमहरनुष्ठाय तेन स्वर्गं लोकं प्रजानाति ॥

**जो इस प्रकार जानता है वह सहस्रसंख्याक धन प्राप्त करता है और षष्ठ अहः का अनुष्ठान करके उससे स्वर्ग लोक का ज्ञान प्राप्त करता है ।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) नवमः खण्डः ॥ ९ ॥ (१४) [१६७]

**॥ इस प्रकार बाइसवें अध्याय के नौवें खण्ड की हिन्दी पूर्ण हुई ॥ ९ ॥**

## अथ दशमः खण्डः

अथ नाभानेदिष्ठीयेन सूक्तद्वयेन सह पठितव्यानि मन्त्रान्तराणि विधत्ते—

**तान्येतानि सहचराणीत्याचक्षते,—नाभानेदिष्ठं वालखिल्या वृषाकपिमेवयामरुतं तानि सहैव शंसेत् ॥** इति ।

'तान्येतानि' वक्ष्यमाणानि चतुर्विधमन्त्रजातानि 'सहचराणि' प्रयोगकाले सहैव वर्तन्ते—इत्येवं याज्ञिका आचक्षते । तत्र 'नाभानेदिष्ठं' सूक्तद्वयं यदस्ति[1], वालखिल्यैर्महर्षिभिर्दृष्टाः 'अभि प्र वः सुराधसम्'[2] इत्याद्या वालखिल्यनामका मन्त्रा ये सन्ति, वृषाकपिना महर्षिणा दृष्टं 'वि हि सोतोरसृक्षतेति' सूक्तं[3] यदस्ति, एवयामरुन्नाम्ना महर्षिणा दृष्टं 'प्र वो महे मतयो यन्तु विष्णवे' इति सूक्तं[4] यदस्ति, तानि चत्वारि सहैव शंसेत् ॥

---

१. ऋ० १०.६१, ६२ ।  २. ऋ० ८.४९–५९ ।
३. ऋ० १०.८६ ।  ४. ऋ० ५.८७ ।

v १५ [xxv। १०] वे [वक्ष्यमाण] ये [चार प्रकार के मन्त्र प्रयोगकाल में] साथ ही रहते हैं---ऐसा अभिज्ञजन कहते हैं---१ नाभानेदिष्ट, २ वालखिल्य,[1] ३ वृषाकपि[2] और ४ एवयामरुन्नामक[3] महर्षियों द्वारा दृष्ट सूक्त [साथ ही शंसित होते हैं]।

सहशंसनाभावे बाधं दर्शयति---

**यदेषामन्तरियात् तद् यजमानस्यान्तरियात्** ॥ इति।

यदि कथंचित् 'एषां' चतुर्णां मध्य एकमपि 'अन्तरियाद्' अन्तरितं लुप्तं कुर्यात् तदानीं यजमानस्य सर्वमपि श्रेयः 'अन्तरियाद्' विनाशयेत् ॥

यदि इन चारों में से किसी प्रकार एक को भी लुप्त कर दे तो वह [होता] यजमान के श्रेय का विनाश ही करे।

सामान्याकारेण बाधमुक्त्वा पुनर्विशेषाकारेण बाधं दर्शयति---

**यदि नाभानेदिष्ठं, रेतोऽस्यान्तरियाद्, यदि वालखिल्याः, प्राणानस्यान्तरियाद्, यदि वृषाकपिमात्मानमस्यान्तरियाद्, यद्येवयामरुतं, प्रतिष्ठाया एनं च्यावयेद्दैव्ये च मानुष्ये च** ॥ इति।

यद्ययं होता नाभानेदिष्ठम् त्यजन् विलोपयेत् तदानीमस्य यजमानस्य पुत्राद्युत्पादकं रेतो विलोपयेत्। वालखिल्यानामन्तराये यजमानस्य प्राणविच्छेदः। वृषाकपिसूक्तस्यान्तराये यजमानस्य आत्मानं' मध्यदेहं विच्छिन्द्यात्। एवयामरुतस्य अन्तराये यजमानं दैव्या मानुष्याश्च प्रतिष्ठायाः प्रच्यावयेत्। अविघ्नेन कर्मसमाप्तिर्दैवी प्रतिष्ठा, तत्साधनभूतधनादिसंपत्तिर्मानुषी प्रतिष्ठा ॥

यदि यह होता नाभानेदिष्ठ को छोड दे तो [यजमान के पुत्रोत्पादक] वीर्य का मानो लोप करे, यदि वालखिल्य को छोड दे तो उस [यजमान] के प्राणों का विच्छेद करे, यदि वृषाकपि को छोड दे तो इस [यजमान] की आत्मा[4] अर्थात् मध्यदेह ही विच्छिन्न करे और यदि एवयामरुत् को छोड दे तो इस [यजमान] को वह दैवी [निर्विघ्नकर्मसमाप्ति] और मानवी[5] [धनादि सम्पत्ति रूप] प्रतिष्ठा से च्युत करे।

अन्तराये बाधमुक्त्वा तदनुष्ठाने लाभं दर्शयति---

**नाभानेदिष्ठेनैव रेतोऽसिञ्चत्, तद्वालखिल्याभिर्व्यकरोत्, सुकीर्तिना काक्षीवतेन योनिं व्यहापयद्गुरौ यथा तव शर्मन् मदेमेति, तस्माज्ज्यायान् सन् गर्भः कनीयांसं सन्तं योनिं न हिनस्ति, ब्रह्मणा हि स क्लृप्त एवयामरुतैवैतं करोति, तेनेदं सर्वमेतवै कृतमेति यदिदं किंच** ॥ इति।

---

१ द्र० इतः परम् v। २८।

२ द्र० इतः परम् v। २९। ३ द्र० इतः परम् v। ३०, ३१।

४ आत्मा क्षेत्रज्ञः परमात्मा वा। तस्यान्तरयः शरीरवियोग --इति गोविन्दस्वामी।

५ दैवी प्रतिष्ठा वैदिककर्मानुष्ठानम्, मानुषी तु प्रतिष्ठा प्रसिद्धैव'---इति गोविन्दस्वामी।

अत्र मन्त्रसमूहात् यजमानस्य नूतनं जन्म वर्ण्यते। यद्वा, पुत्रोत्पादनं वर्ण्यते। यन्नाभानेदिष्ट सूक्तद्वयमस्ति, तेनैव होता रेतः सिक्तवान् भवति। यास्तु वालखिल्या ऋचस्ताभिस्तद्रेतो 'व्यकरोत्', विकृतं गर्भाकारमकरोत्। कक्षीवानित्यभिहितः कश्चिदृषिः, तस्य पुत्रः सुकीर्तिनामकः तेन दृष्टम् 'अप प्राच इन्द्र'–इति[1] सूक्तमपि तन्नामकम्। तच्च वृषाकपिसूक्तात् 'प्रागेव' समीपे शंसनीयम्। तेन 'सुकीर्तिना' होता योनिं 'व्यह्वापयत्' गर्भनिर्गमाय विवृतमकरोत्। अत एव तस्या ऋचश्चतुर्थपादे 'उरौ यथा'—इत्यादिराम्नायते। तस्यायमर्थः—हे, इन्द्र यथा जनः 'उरौ' विस्तीर्णे 'शर्मन्' शर्मणि सुखहेतौ गृहे विसम्भेण तिष्ठति, तथा तव प्रसादाद् वयं विस्तीर्णे योनिप्रदेशे 'मदेम' संकोचाभावेन हृष्टाः स्मः[2]। इत्येष पादो योनिविवृत्तेर्गमकः। यस्मादनेन विवृतिः कृता, तस्माल्लोके जायमानो गर्भो 'ज्यायान् सन्' योनिद्वारापेक्षयाऽत्यन्त प्रौढः सन्नपि, स्वापेक्षया 'कनीयासम्' अत्यल्पं सन्तं योनिं 'न हिनस्ति' न विनाशयति। यस्माद् 'ब्रह्मणा' सुकीर्तिनामकेन मन्त्रेण 'सा' योनिः 'क्लृप्तः' निर्मित तस्मादविनाशो युक्तः। एवयामरुन्नामकेन सूक्तेन यजमानम् 'एतवै' सर्वत्र गन्तुं समर्थं करोति 'यदिदं किंच' जगदस्ति, तदिदं सर्वं 'तेन' सूक्तेन 'एतवै कृतं' गन्तु समर्थं कृत सत् पश्चाद् 'एति' गच्छति, तस्मात् इदमेव सूक्तं यजमानस्यापि गमनसामर्थ्यं प्रयच्छति॥

नाभानेदिष्ट [सूक्त द्वय] से ही [होता ने] रेत का सिञ्चन किया, और उस वालखिल्य ऋचाओं से [रेत को] गर्भाकार रूप में परिणत किया। कक्षीवान् के पुत्र सुकीर्ति द्वारा दृष्ट सूक्त से होता ने गर्भ के निर्गमन के लिए योनि को यह कहते हुए विस्तृत किया कि 'उरौ यथा'—हे इन्द्र, जैसे मनुष्य विस्तृत गृह में सुख के लिए रहता है वैसे ही तुम्हारे प्रसाद से हम [विस्तृत योनिप्रदेश में संकोच रहित हो] हृष्ट होवें।' [क्योंकि इस पाद के द्वारा विवृति की गयी है] इसलिए [लोक में जायमान] गर्भ योनि द्वार की अपेक्षा अत्यन्त प्रौढ होकर भी अत्यन्त अल्प [= संकुचित] योनि को क्षतिग्रस्त नहीं करता, क्योंकि ब्रह्मा ने सुकीर्ति नामक मन्त्र से उस [योनि] को निर्मित किया। [होता] एवयामरुन्नामक सूक्त से यजमान को सर्वत्र गमन के योग्य करता है और इस [सूक्त] से जो कुछ भी जगत् में है। उन सभी को गमन के योग्य किया तब, चलायमान हुआ; अतः यह सूक्त यजमान को भी गमन सामर्थ्य प्रदान करता है]।

आग्निमारुतशस्त्रस्य प्रतिपत्सूक्तं विधत्ते—

अहश्च कृष्णमहरर्जुनं चेत्याग्निमारुतस्य[3] प्रतिपदहरहश्चाहरहश्चेति पुनरावृत्तं पुनर्निनृत्तं षष्ठेऽहनि षष्ठस्याह्नो रूपम्॥ इति।

---

१. ऋ० १०.१३१।

२. एतेनैव भाष्यकारेण अस्य पादस्य संहितायाम् अन्यविधोऽर्थः कृतः।

३. ऋ० ६.९।

अह शब्दोऽत्र पुन पुन पठ्यमानत्वात् पुनरावृत्तमित्युच्यते तालध्वनिसमानत्वाच्च पुनर्निनृत्तमिति लिङ्गद्वयम् ॥

[आग्निमारुतशस्त्र]—

'अहश्च कृष्णमहर्जुन च' आदि आग्निमारुतशस्त्र का प्रतिपद् सूक्त है, 'अह' शब्द का पुन पुन पाठ होने से यह पुनरावृत्त है और [ताल एव ध्वनि समान होने से] पुनर्निनृत्त है[1] जो षष्ठ दिन में षष्ठ दिन का रूप है।

मरुद्देवताक सूक्त विधत्ते—

**'मध्वो वो नाम मारुत यजत्रा इति'[2] मारुत बह्वभिव्याहृत्यमन्तो वै बह्वन्त षष्ठमह षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति ।

अस्मिन् सूक्ते मरुद्विषयमभिव्याहरणीयमर्थजात बह्वस्ति बहुत्व चैकत्वद्वित्वापेक्षया, सख्यायामवसानत्वाद् अन्तो भवति, तदेतदन्तत्वरूप लिङ्गम् ॥

'मध्वो वो नाम' इत्यादि मरुद्देवताक सूक्त में मरुत के सम्बन्ध में बहुत से अर्थ प्रतिपादित हैं। [सख्या के अवसान से] बहुत्व ही अन्त है, षष्ठ दिन भी [पृष्ठ्यषडह का] अन्त का दिन है, जो षष्ठ दिन में षष्ठ दिन का रूप है।

अच्युतत्वलिङ्गयुक्तामृच विधत्ते—

**'जातवेदसे सुनवाम सोममिति'[3] जातवेदस्याऽच्युता ॥** इति ।

'जातवेदसे' इत्यादि जातवेददेवताक ऋचा अच्युत है।

जातवेदोदेवताक सूक्त विधत्ते—

**'स प्रत्नथा सहसा जायमान इति'[4] जातवेदस्य, समानोदर्कं, षष्ठेऽहनि षष्ठस्याह्नो रूपम् ॥** इति ।

'देवा अग्निम्' इत्यस्य चतुर्थपादस्य सर्वास्वप्यृक्षु पठितत्वात् समानोदर्कत्वम् ॥

'स प्रत्नथा' इत्यादि जातवेद देवताक सूक्त [के 'देवा अग्निम्' आदि पाद के सभी ऋचाओं में पुनरावृत्त होने से] समान समाप्ति से युक्त षष्ठ दिन में षष्ठ दिन का रूप है।

धारयन्नित्येतस्य पुन पुन पठितस्यानुवादेन तदभिप्राय सदृष्टान्त दर्शयति—

**धारयन् धारयन्निति शसति, प्रस्रसाद्वा अन्तस्य बिभाय, तद्यथा—पुनराग्रन्थ्य पुनर्निग्रन्थ्यमन्त बध्नीयान्मयूख वाऽन्ततो धारणाय निहन्यात् तादृक्-तद्धारयन् धारयन्निति शसति, सतत्यै ॥** इति ।

होताऽस्मिन् सूक्ते चतुर्थेषु पादेषु 'धारयन् धारयन्'–इति पुन पुन पठित्वा शसति, तस्य कोऽभिप्राय ? इति सोऽभिधीयते,—'अन्तस्य' शस्त्रस्यावसानप्रदेशस्य 'प्रस्रसात्'

---

१ अक्षरं पुनरावृत्त पदावृत्या निनृत्तकम् ।
निविद्वैश्वानरीयात्र पर षष्ठ्या निधीयते ॥—इति षड्गुरुशिष्य ।

२ ऋ० ७ ५७ । ३ ऋ० १ ९९ । ४ ऋ० १ ९६ ।

प्रवर्पेण संततार्धर्चमित्यादि अयं होता 'विनाय' नीति मालवान् । संतननविहारार्थे दृष्टान्तोऽभिधीयते,—यथा लोके रज्जु निर्मिमाणः पुरुषः 'पुनराग्रन्थं' पुनः पुनराग्रथ्याग्रथ्य 'पुनर्निग्रन्थं' पुनः पुनर्निर्ग्रथ्य निर्ग्रथ्य तस्या रज्जोरन्तं बध्नीयात्, दीर्घरज्ज्वा अग्रे सूक्ष्मं पुनः पृष्ठतः प्रस्थाद्गम्य वेष्टन कृत्वा ग्रथनं नाम, तस्य दृढीभावो निर्ग्रन्थनमवरोधेत् । अन्योऽपि दृष्टान्तः, अभिधीयते—यथा वा लोके चर्मकार आर्द्रस्य चर्मणः संकोचनिवारणाय भूमौ तत्प्रसार्य हस्ताभ्यां चर्मणोऽन्ते 'मयूखं' शङ्कुं चर्मणो धारणाय 'भूमौ निहन्यात्' दृढं भूमिप्रविष्टं कुर्यात् होतुः पुनर्धारयन्निति शंसनं यदस्ति, तदेतत्तादृशं पूर्वोक्तदृष्टान्तसमानं द्रष्टव्यम् । तदेतच्छंसनं यज्ञस्य 'संतत्यै' भवति ॥

[होता इस सूक्त के चौथे पादों में] 'धारयन् धारयन्' आदि पुनः पुनः पाठ करके शंसन करता है, क्योंकि वह शस्त्र के अन्त में शैथिल्य से डरता है; जैसे लोक में कोई रस्सी बनाने वाला पुरुष पुनः पुनः बटकर उस रज्जु के अन्त को बांधता है उसी प्रकार 'धारयन् धारयन्' आदि पुनः पाठ शस्त्र की मजबूती के लिए रस्सी के निर्ग्रन्थ [= आगे के पतले भाग को पिछले मोटे भाग से बांधना 'ग्रथन' है और उसको दृढ करना 'निर्ग्रन्थ' है] के समान है अथवा जैसे लोक में चर्मकार चर्म को सिकुड़न हटाने के लिए भूमि में चर्म के कोनों को कील से ठोंक देता है इसी प्रकार होता का 'धारयन्' 'धारयन्' करके शंसन करना शस्त्र के दृढीकरण के लिए होता है। वस्तुतः यह [शंसन सम्पन्न यज्ञ] की निरन्तरता के लिए ही होता है।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

संततैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति, यन्ति ॥ १५ ॥ इति ।

पूर्ववद् व्याख्येयम् । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

जो इस प्रकार निरन्तरता को जानते हुए अनुष्ठान करते हैं वे परस्पर सम्बन्धित, अत एव विच्छेदरहित स्नेह के द्वारा अनुष्ठान करते हैं।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया द्वितीयाध्याये (द्वाविंशाध्याये) दशमः खण्डः ॥१०॥ (१५) [१६८]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपाल साम्राज्यधुरंधर-
सायणाचार्यविरचिते श्रीमत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाशे'
नामभाष्ये ऐतरेयब्राह्मणभाष्यस्य पञ्चमपञ्चिकायाः
द्वितीयोऽध्यायः ॥ २ ॥

॥ इस प्रकार ऐतरेय ब्राह्मण की पाँचवीं पञ्चिका के द्वितीय (बाइसवें) अध्याय
की सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ २ ॥

# अथ तृतीयोऽध्यायः

## प्रथम. खण्डः

— ० —

# [अथ त्रयोविंशोऽध्यायः

## प्रथमः खण्डः]

द्वादशाहगते नवरात्रे त्र्यस्त्र्यहा । तत्र प्रथमद्वितीयौ त्र्यहावुक्तौ[1] । तावता पृष्ठ्य षडहः समाप्तः । यस्तु तृतीयस्त्र्यहस्तत्र यानि त्रीण्यहानि, तानि च्छन्दोमनामकानि । तत्र प्रथम नवरात्रापेक्षया सप्तम यदहरस्ति, तत्र मन्त्रलिङ्ग दर्शयति—

**यद्वा एति च प्रेति च तत्सप्तमस्याह्नो रूपम् ॥** इति ।

आकार प्रशब्दश्चेति लिङ्गद्वय सप्तमस्याह्नो निरूपकम् ॥

['छन्दोम' नामक (७–९) दिन के मन्त्रों के रूप]—

v १६ [xxiii १] जिस [मन्त्र] में 'आङ्' और 'प्र' उपसर्ग हों, वह मन्त्र *[द्वादशाहगत नवरात्र के] सप्तम दिन का निरूपक है ।*

प्रथमेऽहनि यल्लिङ्गजातमस्ति तदस्मिन्नतिदिशति—

**यद्ध्येव प्रथममहस्तदेवैतत् पुनर्यत्सप्तमम् ॥** इति ।

नवरात्रे प्रथममहर्यादृग्लिङ्गोपेत तदेवैतत् पुनरनुसधीयमान यत्सप्तममहस्तद्भवति ॥

जो [प्रथम त्र्यह का] प्रथम दिन का रूप कहा गया है, वही पुन इस [छन्दोम दिन के प्रथम अर्थात्] सप्तम दिन का निरूपक है ।

तान्यतिदिष्टानि लिङ्गानि दर्शयति—

**यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्, यत्प्रथमे पदे देवता निरुच्यते, यदयं लोकोऽभ्युदित ॥** इति ।

एतानि प्रथमादह्नोऽत्रातिदिष्टानि लिङ्गानि[2] ॥

जो मन्त्र 'युक्त' [='युजिर्' धातु युक्त], 'रथ' तथा 'आशु' शब्द और पानार्थक 'पा' धातु से युक्त हो और जिस मन्त्र के प्रथम पद में देवता का निर्देश हो तथा जिसमें यह [भू] लोक उक्त हो [वह सप्तम दिन का रूप है] ।

---

१ द्र० इत पूर्वम्, पृ० ६८९, ३९० । २ द्र० इतः पूर्वम् पृ० ६८९ ।

नूतनमपि लिङ्गं दर्शयति—

**यज्जातवद्यदनिरुक्तम् ॥ इति ।**

'जातवद्' 'जनि' धातुयुक्तम् 'अनिरुक्तम्' अस्पष्टदेवताकम् ॥

**जो ऋचा [प्रादुर्भावार्थक] 'जनी' धातु युक्त और अस्पष्टदेवताक हो [वह सप्तम दिन का रूप है] ।**

अतिदिष्टेन लिङ्गजातेन सह सर्वं लिङ्गजातमुपसंहरति—

**यत्करिष्यद्यत्प्रथमस्याह्नो रूपमेतानि वै सप्तमस्याह्नो रूपाणि ॥ इति ।**

भविष्यदर्थवाचिप्रत्ययान्त धातुमात्र 'करिष्यद्' इत्युच्यते । एतच्चान्यच्च यत्प्रथमस्याह्नो लिङ्गजातमस्ति, तेन सह सर्वाण्येतानि सप्तमस्याह्नो रूपाणि ॥

**जिस ऋचा में 'कृ' धातु के भविष्य काल का रूप हो और जो भी प्रथम दिन के रूप [ = चिह्न] हैं वे सभी सप्तम दिन के निरूपक हैं ।**

आज्यशस्त्र विधत्ते—

**'समुद्रादूर्मिर्मधुमाँ उदारदिति' सप्तमस्याह्न आज्य भवत्यनिरुक्तं, सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति ।**

नि शेषेण स्पष्टमुक्त देवतास्वरूप 'निरुक्तम्', तद्विपरीतम् 'अनिरुक्तम्' । समुद्रादिति सूक्ते[1] न काचिद्देवता विस्पष्टा । तस्माद् इद लिङ्गसद्भावात् सप्तमेऽहनि योग्यतया सप्तमस्याह्नो निरूपकम् ॥

[आज्यशस्त्र]—

**'समुद्रादूर्मि' आदि सूक्त सप्तम दिन का आज्यशस्त्र होता है, अस्पष्टदेवताक[2] यह सूक्त सप्तम दिन में सप्तम दिन का रूप है ।**

तदेतत्सूक्त प्रशंसति—

**वाग्वै समुद्रो, न वै वाक्क्षीयते, न समुद्रः क्षीयते, तद्यदेतत्सप्तमस्याह्न आज्यं भवति, यज्ञादेव तद्यज्ञं तन्वते, वाचमेव तत्पुनरुपयन्ति, सन्तत्यै ॥ इति ।**

समुद्रादूर्मिरित्यत्र य समुद्र प्रोक्त , सोऽयं वाक्स्वरूप एव, तयोर्वाक्समुद्रयोरक्षयत्व साम्यात् । एकैकस्य वस्तुन कविभिर्बहुधा वर्ण्यमानत्वान्नास्ति वाच क्षय', समुद्रेऽपि जल न शुष्यति । तस्मात् समुद्रस्य वाग्रूपत्वाद् यदेतत् समुद्रादिति सूक्तमत्राज्यशस्त्र भवति, तदानीं वाङ्निष्पाद्यमन्त्रात्मकाद् 'यज्ञादेव' अनुष्ठानरूप 'यज्ञ' 'तन्वते' विस्तारयन्ति ।

---

१ ऋ० ४५८ ।

२. 'समुद्रादेवादयाग्नेय अग्रयन्त सौर्यं वाप वा गव्य वा घृतस्तुतिर्वा' इति हि ऋक्सर्वानुक्रमणीति (ऋ० ४५८) देवतानिर्णयाभावादनिरुक्तत्वम् ।

तद्विस्तारे च मन्त्राणां बहुधा पठितव्यत्वात् पुनः पुनर्वाचमेव प्राप्नुवन्ति । तच्च यज्ञसन्तत्यै सम्पद्यते ॥

['समुद्राद्रूर्मि' इत्यादि ऋचा में जो] समुद्र है वह वाक् स्वरूप ही है, क्योंकि न तो [कवियों द्वारा बहुधा वर्णित] वाक् का ही क्षय होता है, और न तो समुद्र ही क्षीण होता है। अतः यह जो सप्तम दिन का आज्य [शस्त्र] होता है तो [वाक् के निष्पादक रूप मन्त्रात्मक] यज्ञ से ही उस [अनुष्ठान रूप] यज्ञ का विस्तार करते हैं। [उसके विस्तार से मन्त्र के बारम्बार पाठ से] पुनः पुनः वाणी को ही प्राप्त करते हैं; जो यज्ञ की निरन्तरता के लिए ही होता है।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

सन्ततैरव्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति ॥ इति ।

पूर्ववद् व्याख्येयम् ॥

जो इस प्रकार निरन्तरता को जानते हुए अनुष्ठान करते हैं वे परस्पर सम्बन्धित अत एव विच्छेदरहित व्यह के द्वारा अनुष्ठान करते हैं।

अस्मिन्नाज्यशस्त्रे 'घृतस्य नाम गुह्यमिति' यो घृतशब्दः श्रुतः, तमभिप्रेत्य तद्वद्दृष्टान्तपूर्वकमाज्यशस्त्रं प्रशंसति—

आप्यन्ते वै स्तोमा, आप्यन्ते छन्दांसि षष्ठेऽहनि, तद्यथैवाद आज्येनावदानानि पुनः प्रत्यभिघारयन्त्ययातयामताया, एवमेवैतत् स्तोमांश्च च्छन्दांसि च पुनः प्रत्युपयन्त्ययातयामतायै यदेतत्साप्तमस्याह्न आज्यं भवति ॥ इति ।

त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाख्या ये स्तोमा ते सर्वेऽपि षष्ठेऽहनि 'आप्यन्ते' समाप्ताः । गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्यतिच्छन्दोभिधानि सर्वाणि च्छन्दांसि च समाप्तानि । तथा सति 'यथैवाद' वक्ष्यमाणं निदर्शनम् । तथैव सप्तमस्याह्नः प्रवृत्तिर्द्रष्टव्या । किं निदर्शनमिति ? तदुच्यते—यथा दर्शपूर्णमासादिषु पुरोडाशादिद्रव्याण्यवदाय पश्चात्तान्यवदानस्थानान्याज्यस्थाल्या आज्येन पुनः प्रत्यभिघारयन्ति । किमर्थमिति ? तदुच्यते—'अयातयामतायै' गतसारत्वपरिहाराय, पुनरपि हविष्ट्वयोग्यतार्थम् एतमेवैतस्मिन् सप्तमेऽहनि स्तोमाश्छन्दांसि च पुनरपि 'प्रत्युपयन्ति' प्रतिपद्यानुतिष्ठन्ति । तथा सत्यनुष्ठितस्य पुनरनुष्ठानं चर्वितचर्वणसमानमिति 'यातयामत्वं गतसारत्वं भवेत् । अतो यदेतत् समुद्राद्रूर्मिरित्यादिकं सप्तमस्याह्न आज्यं भवति, तदेतद् 'अयातयामतायै' पुनरपि सारत्वसिद्ध्यर्थं भवति । तस्मिञ्छस्त्रे 'घृतस्य नाम गुह्यमिति'[1] घृतशब्दस्य विद्यमानत्वात् प्रत्यभिघारणसाम्यं भवति । यद्यपि त्रिवृदादयः स्तोमाः सप्तमेऽहनि पुनर्नानुष्ठीयन्ते, तथापि चतुर्विंशादयश्छन्दोमनामकाः[2] अनुष्ठास्यन्ते । तस्मादयातयामत्वं स्तोमत्वसाम्येनाभिहितम् ॥

---

१ ऋ० ४.५८.१ ।　　　२ इहैवाग्रे क्रमाद् व्यक्तीभविष्यन्ति ।

[त्रिवृत्, पञ्चदश, सप्तदश, एकविंश, त्रिणव, त्रयस्त्रिंशत् नामक] सभी स्तोम षष्ठ दिन में समाप्त हो जाते हैं और [गायत्री, त्रिष्टुप्, जगती, अनुष्टुप्, पङ्क्ति और अतिच्छन्द नामक] सभी छन्द भी समाप्त हो जाते हैं। [जैसे दर्शपूर्णमास आदि में] पुरोडाश [आदि हविर्द्रव्यों] का अवदान करके पुनः अवदान स्थलों को [आज्यस्थाली के] आज्य से सारविहीन न होने के लिए पुनः प्रत्यभिघारण [= सिंचन] करते हैं, इसी प्रकार जो यह ['समुद्रादूर्मि' आदि] सप्तम दिन का आज्यशस्त्र होता है, [उससे] इस [सप्तम दिन] में इन स्तोमों और छन्दों को पुनः हवि के योग्य बनाने के लिए [सारसिद्ध्यर्थ] पुनः प्रतिपादन करके अनुष्ठान करते हैं।

आज्यशस्त्रगतं छन्दः प्रशंसति—

**तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः ॥ इति ।**

'तदु' तदपि 'समुद्रादूर्मि' इत्यादिकं शस्त्रं त्रिष्टुप्छन्दस्कम्, प्रातःसवने त्रिष्टुप्छन्दो यस्मिंस्तृतीये त्र्यहे सोऽयं 'त्रिष्टुप्प्रातःसवनः'। यथा प्रथमस्य त्र्यहस्य प्रातःसवने गायत्री, यथा वा मध्यमस्य त्र्यहस्य प्रातःसवने जगती, एवमुत्तमस्य त्र्यहस्य प्रातःसवने त्रिष्टुप् अवगन्तव्या। एतच्छन्दसा विवादे निर्णीतम् ॥[1]

वह ['समुद्रादूर्मि' इत्यादि शस्त्र] भी त्रिष्टुप् छन्दस्क है, और [छन्दोम नामक तृतीय] त्र्यह का प्रातःसवन भी त्रिष्टुप् से सम्बन्धित है।

अथ प्रउगशस्त्रं विधत्ते—

**'आ वायो भूष शुचिपा उप नः' 'प्र याभिर्यासि दाश्वांसमच्छा, नो नियुद्भिः शतिनीभिरध्वरं' 'प्र सोता जीरो अध्वरेष्वस्थात्', 'ये वायव इन्द्रमादनासो' 'या वां शतं नियुतो याः सहस्रं' 'प्र यद्वां मित्रावरुणा स्पूर्धन्, गोमता नासत्या रथेनाऽऽ नो देव शवसा याहि शुष्मिन्' 'प्र वो यज्ञेषु देवयन्तो अर्चन्' 'प्र क्षोदसा धायसा सस्र एषेति' प्रउगमेति च प्रेति च सप्तमेऽहनि सप्तमस्याह्नो रूपं, तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः ॥ इति ।**

'आ वायो भूष'[2] इति प्रथमं प्रतीकं, तस्मिन्नाकारो लिङ्गम्। 'प्र याभि'[3]-इति द्वितीयम्। तत्र प्रशब्दो लिङ्गम्। 'आ नो नियुद्भिः'[4]-इति तृतीयम्। तस्मिन्नाकारः। 'प्र सोता' इति[5] चतुर्थं प्रशब्दः। 'ये वायव इन्द्रेति'[6] पञ्चमं, तत्र द्वितीयपादे 'आ ददाने' इत्याकारः। 'या वां शतमिति'[7] षष्ठं, तस्य तृतीयपादादावाकारः श्रुतः। 'प्र यद्वामिति'[8]

1. द्र० द्र० पूर्वम्, पृ० ६८० ।    2. ऋ० ७.९२.१ ।    3. ऋ० ७.९२.३ ।
4. ऋ० ७.९२.५ ।    5. ऋ० ७.९२.२ ।    6. ऋ० ७.९२.४ ।
7. ऋ० ७.९१.६ ।    8. ऋ० ६.६७.९–११ ।

सप्तमे प्रशब्द । 'आ गोमता' इत्यष्टम[1] आकार । 'आ नो देवेति'[2] नवमेऽप्याकार । 'प्र वो यज्ञेष्विति'[3] दशमे प्रशब्द । 'प्र क्षोदसा' इत्येकादशेऽपि[4] प्रशब्द । अत्राद्यं षडमिद्वौ तृचौ[5] । इतरे पञ्च तृचा । तदेतत् सर्वं प्रउगशस्त्रमुक्तलिङ्गसद्भावात् सप्तमेऽहनि योग्यम् । अन्यत् पूर्ववद् व्याख्येयम् ॥

[प्रउगशस्त्र]—

'आ वायो', 'प्र याभि', 'आ नो नियुद्भि', 'प्र सोता', ये वायव', 'या वा शतम्', 'प्र यद्वाम', 'आ गोमता', 'आ नो देव', 'प्र वो यज्ञपु', 'प्र क्षोदसा' आदि प्रउग [शस्त्र की ऋचाएँ] हैं, जो 'आङ्' और 'प्र' उपसग से युक्त सप्तम दिन में सप्तम दिन का रूप है। वे [सभी 'आ वायो' आदि ऋचाएँ] भी त्रिष्टुप् छन्दस्क हैं और इस त्र्यह का प्रात - सवन भी त्रिष्टुप् से सम्बन्धित है।

शस्त्रक्लृप्तिसमत्वलिङ्गकान् मन्त्रान् विधत्ते—

**'आ त्वा रथ यथोतय[6] इद वसो सुतमन्ध[7] इन्द्र नेदीय एदिहि[8] प्रैतु ब्रह्मणस्पतिर[9]ग्निर्नेता[10] त्व सोम क्रतुभि[11] पिन्वन्त्यप[12] प्र व इन्द्राय बृहत्[13] इति प्रथमेनाह्ना समान आतान सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति ।**

[मरुत्वतीयशस्त्र]—

'आ त्वा रथम्', 'इद वसो सुतमन्ध', 'इन्द्रनेदीय', 'प्रैतु ब्रह्मणास्पति', 'अग्निर्नेता', 'त्व सोम क्रतुभि', 'पिन्वन्त्यप', 'प्र व इन्द्राय' आदि प्रथम अह के ही समान क्रमागत ऋचाएँ सप्तम दिन में सप्तम दिन का रूप हैं।

अथ जागतलिङ्गक सूक्त विधत्ते—

**'कया शुभा सवयस सनीळा'[14] इति सूक्त, न जायमानो न शतेन जात इति जातवत्सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति ।**

अस्य सूक्तस्य नवम्यामृचि 'न जायमान' इत्यादिस्तृतीय पाद । तत्र जातशब्दोपेतत्व लिङ्गम् ॥

---

१ ऋ० ७७२ १–३ । २ ऋ० ७ ३० १ ३ ।
३ ऋ० ७४३ १–३ । ४ ऋ० ७९५ १–३ ।
५ तथा ह्याश्वलायन —'आ वायो भूष सहस्रमित्येकपातिन्य '—इति आश्व० श्रौ० ८९२ ।
६ ऋ० ८६८ १ । ७ ऋ० ८२ १ । ८ ऋ० ८५३ ५ ।
९ ऋ० १४० ३ । १० ऋ० ३ २० ४ । ११ ऋ० १९२ ३ ।
१२ ऋ० १६४ ६ । १३ ऋ० ८८९ ३ । १४ ऋ० ११६५ ।

'कया शुभा' इत्यादि सूक्त की [नौवीं ऋचा का] 'न जायमानो न शतेन जात' इत्यादि पाद 'जात' शब्द से युक्त सप्तम दिन में सप्तम दिन का रूप है।

एतत्सूक्तं प्रशंसति—

तद्वु कयाशुभीयम्, एतद्वै संज्ञान सन्तनि सूक्त, यत्कयाशुभीयमेतेन ह वा इन्द्रोऽगस्त्यो मरुतस्ते समजानत, तद्यत्कयाशुभीयं शंसति संज्ञात्या एव ॥ इति।

'तद्वु' तत्सूक्तं 'कयाशुभ'शब्दोपेतत्वात् कयाशुभीयनामकम्। अस्त्वेवम्, किं तत् ? इति चेत्, उच्यते—एतदेव कयाशुभीयनामकं सूक्तं 'संज्ञानम्' परस्परैकमत्यसाधनम्, किंचैतत्सूक्तं 'संतनि' सन्तानकरं प्राणानामविच्छेदेन दीर्घायुष्यकारणम्। यदेतत् कयाशुभीयसूक्तमस्ति, एतदनुष्ठानेनैवेन्द्रागस्त्यमरुतो ये सन्ति, 'ते' सर्वे 'समजानत' सज्ञानं परस्परैकमत्यं प्राप्नुवन्। तथा सत्येतच्छंसनं विप्रतिपन्नानामैकमत्यार्थं संपद्यते ॥

यह सूक्त [कयाशुभ शब्द से युक्त होने से] 'कयाशुभीय' नामक है, यही सूक्त परस्पर एकमत्य का साधन[1] और सन्तानकर [अर्थात् दीर्घायुष्य का कारण रूप] है। यह जो 'कयाशुभीय' सूक्त है इसी के [अनुष्ठान] द्वारा ही जो इन्द्र, अगस्त्य और मरुद्गण हैं; वे परस्पर एकमत्य को प्राप्त हुए[2]। अतः जो 'कयाशुभीय' नामक सूक्त का शंसन करता है; वह [विप्रतिपन्नों के] एकमत्य के लिए [ही सम्पादित होता] है।

प्रकारान्तरेण प्रशंसति—

तद्वायुष्यं तद्योऽस्य प्रियः स्यात् कुर्यादेवास्य कयाशुभीयम् ॥ इति।

'तद्वु' तत् सूक्तमायुष्करम्, सन्तनीति पूर्वमुक्तत्वात्। तथा सत्यस्य यजमानस्य यः पुत्रादिः प्रियः स्यात्, तस्यायुर्वृद्ध्यर्थं कयाशुभीयमनुवक्तुं कुर्यादेव ॥

वह सूक्त आयुष्यकर है, अतः इस [यजमान] का जो [पुत्रादि] प्रिय होवे उसकी आयु की वृद्धि के लिए इस 'कयाशुभीय' सूक्त का पाठ करे ही।

---

१. (i) 'संवादहेतु' इति गोविन्दस्वामी।
   (ii) 'ऐकचित्त्यहेतुभूतं सन्तानस्य च वर्धनम्।
   जानाते करणे ल्युट् च णिच्यवृद्धिश्च सन्तन' ॥'—इति षड्गुरुशिष्यः।

२. 'तदगस्त्येन्द्रमरुतां सूक्तमाहुर्मनीषिणः।
   कयाशुभेति संवादं न नूनमिति तद् द्वयोः ॥
   इति ह्यार्षानुक्रमण्यां शौनकः समबोधयत्।
   अगस्त्य इन्द्राय हविर्निरूप्य मरुतः प्रति ॥
   तद्दातुमैच्छदिन्द्रोऽथागस्त्यमेत्य चुक्रोध ह।
   ततोऽगस्त्योऽपि मरुत इन्द्रेण समजीगमत् ॥'—इति षड्गुरुशिष्यः।

पुनरपि छन्दोद्वारा प्रशंसति—

**तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते ॥ इति ।**

पूर्ववद्व्याख्येयम् ॥

यह सूक्त त्रिष्टुप् छन्दस्क है, प्रतिष्ठित-पद [अर्थात् नियत अक्षर संख्या] से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत मरुत्वतीय शस्त्र] धारित होता है। अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

रथलिङ्गक सूक्त विधत्ते—

**'त्यं सु मेषं महया स्वर्विदमिति'[1] सूक्तमत्यं न वाजं हवनस्यदं रथमिति रथवत् सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति ।**

'त्यं सु मेषम्'—इति सूक्तस्य 'अत्यं न वाजम्'—इति तृतीयः पादः, तत्र रथशब्दः श्रूयते ॥

'त्यं सु मेषम्' आदि सूक्त का 'अत्यं न वाजम्' आदि द्वितीय पाद 'रथ' शब्द से युक्त है जो सप्तम दिन में सप्तम दिन का रूप है।

तस्मिन् सूक्ते निविद्धानं विधत्ते—

**तदु जागतं, जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति, तद्यैतच्छन्दो वहति, यस्मिन्निविद्धीयते, तस्माज्जगतीषु निविदं दधाति ॥ इति ।**

अस्य सूक्तस्य जगतीछन्दस्कत्वाज्जागतत्वम्, तान् च द्वितीयक्रमेणोत्तरे त्र्यहे माध्यंदिन सवननिर्वाहकत्वादस्मिन् माध्यंदिनसवनगते शस्त्रे, तत्सवननिर्वाहकतया जगतीछन्दस्कास्वृक्षु निविदं प्रक्षिपेत् ॥

उस सूक्त की ऋचाएँ जगती छन्दस्क हैं और जगती ही इस त्र्यह के मध्यन्दिन [सवन] के वाहक हैं। अतः जिस [छन्द] में निविद् [पद समूह] प्रक्षिप्त होते हैं, वही छन्द [सवन का] निर्वाहक होता है। इस [निर्वाहकत्व] के कारण जगती ऋचाओं में निविद् प्रक्षिप्त होते हैं।

पूर्वोक्त त्रिष्टुप्छन्द, इदानीमुच्यमान जगतीछन्दश्च मिलित्वा प्रशंसति—

**मिथुनानि सूक्तानि शस्यन्ते,—त्रैष्टुभानि च जागतानि च, मिथुनं वै पशवः, पशवश्छन्दोमाः, पशूनामवरुद्ध्यै ॥ इति ।**

यथा परस्परविलक्षणयोः स्त्रीपुरुषयोर्मेलने मिथुनं भवति, एवं छन्दोद्वयमेलेन मिथुनं वम्। गवाश्वादिपशवश्च मिथुनरूपा,—चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशाख्याश्छन्दोमाः,

---

१ ऋ० १ ५२ ।

पशुसाधनत्वात् पशवः । तस्माच्छन्दोमयुक्तेऽस्मिन्नहे छन्दोद्वयानुष्ठानं पशुप्राप्त्यै भवति । 'छन्दोमि', गायत्रीत्रिष्टुब्जगतीभिरक्षरसंख्याद्वारेणोत्पन्नोऽमन्त इति चतुर्विंशाद-यस्त्रयश्छन्दोमाः ।

तत्र गायत्र्या चतुर्विंशत्यक्षरत्वा सदृशो यश्चतुर्विंशः स्तोमः, तस्य प्रतिपादकश्चतुर्दशभ्यो हि करोतीत्यादिकं छन्दोगब्राह्मणम् । चतुर्विंशमेतदहरुपयन्तीत्यारभ्याखीतनित्यवैनेदं द्रष्टव्यम् ।[1]

यच्च(अथ च)तुश्चत्वारिंशस्तोमस्य निरूपकं छन्दोगब्राह्मणमेवमाम्नायते—'पञ्चदशभ्यो हि करोति स तिसृभिः स एकादशभिः स एकया, चतुर्दशभ्यो हि करोति स एकया स तिसृभिः स दशभिः, पञ्चदशभ्यो हि करोति स एकादशभिः स एकया स तिसृभिः'[2] इति । अस्यायमर्थः—त्रिभिः पर्यायैस्तृचस्यावृत्तौ प्रथमे पर्याये—प्रथमाया ऋचस्त्रिरभ्यासो मध्यमाया ऋच एकादशकृत्वोऽभ्यासः । उत्तमाया ऋचः सकृत्पाठः । द्वितीये पर्याये—प्रथमायाः सकृत्पाठः । मध्यमायास्त्रिरभ्यासः । उत्तमाया दशकृत्वोऽभ्यासः । तृतीये पर्याये—प्रथमाया एकादशकृत्वोऽभ्यासः । मध्यमायाः सकृत्पाठः । उत्तमायास्त्रिरभ्यासः, सोऽयं चतुश्चत्वारिंशस्तोम इति[3] ।

अष्टाचत्वारिंशस्तोमस्य ब्राह्मणमेवमाम्नायते—'षोडशभ्यो हि करोति स तिसृभिः स द्वादशभिः स एकया, षोडशभ्यो हि करोति स एकया स तिसृभिः स द्वादशभिः । षोडशभ्यो हि करोति स द्वादशभिः स एकया स तिसृभिः । अन्तो वा अष्टाचत्वारिंशः'[4] इति । अस्यायमर्थः—प्रथमे पर्याये—प्रथमायास्त्रिरभ्यासः, मध्यमाया द्वादशकृत्वोऽभ्यासः, उत्तमायाः सकृत्पाठः । द्वितीयपर्याये—प्रथमायाः सकृत्पाठः, मध्यमायास्त्रिरभ्यासः, उत्तमाया द्वादशकृत्वोऽभ्यासः । तृतीयपर्याये—प्रथमाया द्वादशकृत्वोऽभ्यासः, मध्यमायाः सकृत्पाठः । उत्तमायास्त्रिरभ्यास इति । एवमष्टाचत्वारिंशस्तोम[5] इति ।

एवं त्रयश्छन्दोमा अवगन्तव्याः ॥

मिथुन [जोड़े] सूक्तों का शंसन करते हैं—त्रिष्टुप् और जगती के मिथुन का । [गौ एवं अश्वादि] पशु भी मिथुनरूप हैं और [चतुर्विंश, चतुश्चत्वारिंश और अष्टाचत्वारिंश नामक] छन्दोम [पशु प्राप्ति के साधन होने से] पशु रूप हैं; [अतः छन्दोमयुक्त इस अह में छन्द-द्वय का शंसन] पशुओं की प्राप्ति के लिए होता है ।

• अथ बृहत्सामसाध्यपृष्ठस्तोत्रियस्याधारभूतं स्तोत्रियं प्रगाथं तदनुरूपं च विधत्ते—

त्वामिद्धि हवामहे, त्वं ह्येहि चेरव इति बृहत्पृष्ठं भवति सप्तमेऽहनि ॥ इति ।

---

१. द्र० इतः पूर्वम्, पृ० ६१८ । २. ता० ब्रा० ३.९–११ ख० ।

३. चतुश्चत्वारिंशाख्यस्य स्तोमस्य तिस्रो विष्टुतयः; तत्राद्येयम् ।

४. ता० ब्रा० ३.१२, १३ ।

५. अष्टाचत्वारिंशाख्यस्य स्तोमस्य द्वे विष्टुती, तत्राद्येयम् ।

त्वामिद्धीत्येक[1] प्रगाथ । त्व ह्योहीति[2] द्वितीय । तदुभय सप्तमेऽहनि निष्केवल्यशस्त्रे शसनीयम् । न वयुग्ममह सप्तम, तथा सति रथतरपृष्ठ परित्यज्य बृहत्पृष्ठ किमित्यु पादीयते ? इति चेत्, वचनबलादितिब्रूम , 'कि हि वचन न कुर्यान्नास्ति वचनस्यातिभार ' इति न्यायात् ॥

[निष्केवल्यशस्त्र]—

'त्वामिद्धि' और 'त्व ह्येहि' आदि [निष्केवल्यशस्त्र में शसनीय प्रगाथ] सप्तम अह में बृहत्पृष्ठ होता है ।

बृहत्पृष्ठस्वीकारे काचिद्युक्तिमाह—

**यदेव षष्ठस्याह्नस्तत् ॥** इति ।

पूर्वस्य षष्ठस्याह्नो यदेव पृष्ठस्तोत्र तदेवात्र कृत भवति । यस्य प्रयोजन तूपरिष्टाद् वक्ष्यते । ननु षष्ठेऽप्यहनि रैवत पृष्ठ, न तु बृहदिति चेत् नैष दोष बृहद्रैवतयो कार्य-कारणभावेनैकत्वादित्यभिप्रेत्य 'बृहच्च वा इदमग्रे रथन्तर चाऽऽस्ताम्'[3] इत्यत्र प्रतिपादितम् ॥

[प्रश्न है कि अयुग्म सप्तम दिन में रथन्तर पृष्ठ को छोड़कर बृहत्पृष्ठ क्यों ?]—

[उत्तर] वस्तुत जो षष्ठ अह में [पृष्ठस्तोत्र होता] है वही यहाँ भी होता है ।

कार्यकारणभावमिह स्मारयति—

**यद्वै रथन्तर, तद्वैरूप, यद्बृहत्, तद्वैराज, यद्रथतर, तच्छाक्वर, यद्बृहत्, तद्रैवतम् ॥** इति ।

वैरूपशाक्वरयो रथतरजन्यत्वात् तद्रूपत्व वैराजरैवतयोर्बृहज्जन्यत्वात् तद्रूपत्वम्, एव च सति षष्ठेऽहनि रैवतस्य बृहत्त्व व्यवहर्तुं शक्यते ॥

और फिर, जो रथन्तर है वह वैरूप है, जो बृहत् है वह वैराज है, जो रथन्तर है वह शाक्वर है और जो बृहत् है वह रैवत है ।[4]

इदानीमत्र सप्तमेऽहनि बृहत्पृष्ठस्वीकारे प्रयोजनमाह—

**तद्यद्बृहत्पृष्ठ भवति, बृहत्तैव तद् बृहत्प्रत्युत्तम्नुवन्त्यस्तोमकृन्तत्राय ॥** इति ।

'तत्' तस्मात् षष्ठेऽहनि कृतस्य रैवतस्य बृहद्रूपत्वात् कारणात् 'यद्' यत्र सप्तमेऽहनि बृहत्पृष्ठ क्रियते, तदिदानी षष्ठेऽहन्यनुष्ठितेन बृहतैवास्मिन् सप्तमेऽहनि 'तद्' बृहत्पृष्ठ 'प्रत्युत्तम्नुवन्ति' । अतीतत्वेन नष्टस्य पुनरुद्धरण प्रत्युत्तम्भनम् । एतच्च 'अस्तोमकृन्तत्राय'

---

१ ऋ० ६ ४६ १,२ ।    २ ऋ० ८ ६१ ७,८ ।
३ द्र० इत पूर्वम् पृ० ६८५ ।    ४ द्र० इत पूर्वम्, पृ० ६२४ ।

संपद्यते। स्तोमानां त्रिवृत्पञ्चदशादीनां कृन्तत्रं कृन्तनं छेदः, तद्राहित्यम् 'अस्तोमकृन्तत्रं', तदर्थमत्र स्वीकारः॥

अतः [षष्ठ अहः में रैवत के बृहद्रूप होने से] सप्तम अहः में जो बृहत्पृष्ठ करते हैं तो [इस षष्ठ अहः में अनुष्ठित] बृहद् से ही [इस सप्तम दिन में] उस बृहत्पृष्ठ का पुनरुद्धार [=नवीनीकरण] करते हैं, और यह [त्रिवृत्पञ्चदश आदि] स्तोमों के छेदनराहित्य के लिए ही सम्पादित होता है।

विपक्षबाधोपन्यासमुखेनैव तदेव स्पष्टयति—

यद्रथंतरं स्यात् कृन्तत्रं स्यात्॥ इति।

षष्ठेऽहन्यनुष्ठितस्य बृहतोऽस्मिन् सप्तमेऽहन्यनुवृत्तिं परित्यज्य युग्मदिनत्वमाश्रित्य रथंतरं पृष्ठं स्वीक्रियते, तदानीं षष्ठसप्तमयोरनुवृत्त्यभावात् 'कृन्तत्रं' विच्छेदनं स्यात्। षष्ठे बृहत्कृतं, सप्तमे तन्न कृतम्, किंतु रथंतरं कृतमिति विच्छेदः॥

यदि रथन्तर पृष्ठ स्वीकार करे तो [षष्ठ एवं सप्तम के अनुवृत्ति के अभाव से] विच्छेदन ही होता है [अर्थात् षष्ठ अहः में बृहत् करे और सप्तम में उसे न करके रथन्तर कर देना विच्छेद है]।

विपक्षबाधमुपन्यस्य स्वपक्षमुपसंहरति—

तस्माद् बृहदेव कर्तव्यम्॥ इति।

यस्माद् बृहति कृते विच्छेदः परिह्रियते, तस्मादित्यर्थः॥

अतः बृहद् ही करना चाहिए।

अच्युतत्वलिङ्गयुक्तामृचं विधत्ते—

'यद्वावानेति'[1] धाय्याऽच्युता॥ इति।

'यद्वावान' इत्यादि धाय्या [प्रथम दिन विहित होने से] अच्युत है।

अथ अयुग्मदिनत्वमुपजीव्य रथंतरसम्बन्धात् तदीयामृचं विधत्ते—

'अभि त्वा शूर नोनुम इति'[2] रथंतरस्य योनिमनु निवर्तयति, राथंतरं ह्येतदहरायतनेन॥ इति।

नितरां वर्तनमनुष्ठानं निवर्तनं, न तु परित्यागः। 'आयतनेन' अयुग्मत्वस्थानेन रथंतरसम्बन्धः॥

'अभि त्वा शूर' आदि ऋचा में रथन्तर साम [उत्पन्न है अतः] योनिभूत इस प्रगाथ का [पूर्वोक्त धाय्या के] बाद में शंसन करता है। [क्योंकि अयुग्मत्वरूप] स्थान के द्वारा यह दिन रथन्तर सम्बन्धी है।

---

1. ऋ० १०.७४.६। 2. ऋ० ७.३२.२२।

पिबशब्दलिङ्गक प्रगाथान्तर विधत्ते—

*'पिबा सुतस्य रसिन इति'*[1] *सामप्रगाथः, पिबवान् सप्तमेऽहनि सप्तमस्याह्नो* रूपम् ॥ इति ।

'पिबा सुतस्य' इत्यादि ऋचा साम प्रगाथ है जो [प्रथम दिन के लक्षक] पानार्थक 'पा' धातु से युक्त सप्तम दिन में सप्तम दिन का रूप है।

अच्युतत्वलिङ्गकं सूक्तविशेष विधत्ते—

'त्य मू षु वाजिनं देवजूतमिति'[2] तार्क्ष्योऽच्युतः ॥ १६ ॥ इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चम-पञ्चिकाया तृतीयाध्याये (त्रयोविंशाध्याये) प्रथम. खण्डः ॥ १ ॥ (१६) [१६१]

'त्यम् षु वाजिनम्' इत्यादि तार्क्ष्य देवताक सूक्त [पूर्व में विहित होने से] अच्युत है।

॥ इस प्रकार तेइसवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

प्रशब्दलिङ्गक सूक्त विधत्ते—

'इन्द्रस्य नु वीर्याणि प्रवोचमिति'[3] सूक्त, प्रेति सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति ।

v. १७ [xxiii. २] 'इन्द्रस्य नु वीर्याणि' इत्यादि 'प्र' उपसर्ग से युक्त सूक्त सप्तम दिन में सप्तम दिन का रूप है।

तत्रस्य छन्द. प्रशंसति—

तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते ॥ इति ।

यह सूक्त त्रिष्टुप् छन्दस्क है; प्रतिष्ठित-पद [अर्थात् नियत अक्षर संख्या] से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत मरुत्वतीयशस्त्र] धारित होता है अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

अभिशब्द-प्रशब्दयोरुपसर्गत्वसाम्येनार्थैकत्वमभिप्रेत्य तद्द्वारा शब्दैकत्वमप्यारोप्याभि-प्रशब्दलिङ्गक सूक्तं विधत्ते—

'अभि त्यं मेष पुरुहूतमृग्मियमिति'[4] सूक्तं, यद्वाव प्रेति तदभीति सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति ।

---

१. ऋ० ८.३.१,२ ।　　२. ऋ० १०.१७८ ।
३. ऋ० १.३२ ।　　४. ऋ० १.५१ ।

'अभि त्यं देवं' इत्यादि सूक्त है। जो 'प्र' शब्द है वही 'अभि' शब्द है[1] जो सप्तम दिन में सप्तम दिन का रूप है।

अस्मिन् सूक्ते निविद्धान विधत्ते—

**तद्‌ु जागतं, जगत्यो वा एतस्य त्र्यहस्य मध्यन्दिनं वहन्ति; तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते; तस्माज्जगतीषु निविदं दधाति ॥ इति ।**

उस सूक्त की ऋचाएँ तो जगती छन्दस्क हैं और जगती ही इस त्र्यह के मध्यन्दिन [सवन] के वाहक हैं। अत: जिस [छन्द] में निविद् [पद-समूह] प्रक्षिप्त होते हैं, वही छन्द इस [सवन] का निर्वाहक होता है। इस [निर्वाहकत्व] के कारण जगती ऋचाओं में निविद् प्रक्षिप्त होते हैं।

छन्दोद्वयं मिलित्वा प्रशंसति—

**मिथुनानि सूक्तानि शस्यन्ते,—त्रैष्टुभानि च जागतानि च; मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै ॥ इति ।**

मिथुन [जोड़े] सूक्तों का शंसन करते हैं—त्रिष्टुभ् और जगती के मिथुन का। [गौ एवं अश्वादि] पशु भी मिथुनरूप हैं और [चतुर्विंश, चतुश्चत्वारिंश और अष्टाचत्वारिंश नामक स्तोमों के द्वारा] छन्दोम [पशु प्राप्ति के साधन होने से] पशु रूप हैं, [अतः छन्दोमयुक्त इस त्र्यह में छन्द-द्वय का शंसन] पशुओं की प्राप्ति के लिए होता है।

शस्त्रान्तरस्य प्रतिपदनुचरौ विधत्ते—

**'तत्सवितुर्वृणीमहे'[2] 'अद्या नो देव सवितरिति[3] वैश्वदेवस्य प्रतिपदनुचरौ; राथंतरेऽहनि सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति ।**

तत्सवितुरित्यादेः क्वचिद्रथंतरसामाधारत्वमभिप्रेत्य राथंतरत्वं लिङ्गमुक्तम् ॥

[वैश्वदेवशस्त्र]—

'तत्सवितुर्वृणीमहे' और 'अद्या नो देव' इत्यादि [तृच] वैश्वदेव की प्रतिपद और अनुचर ऋचाएँ रथन्तर सम्बन्धी दिन सप्तम दिन में सप्तम दिन का रूप हैं।

---

१. यत्र प्रेत्युच्यते तत्राप्यभिशब्दो जिघृक्षते ।
तुल्यार्थत्वेन तेनेह साक्षादेवाभिरागतः ॥
माकव्यर्थं प्रयाताना कौटिल्यमोपमोऽह्यपम् ।
अतोऽभिशब्दवत्त्वं हि सुसङ्गतमितीष्यताम् ॥—इति षड्गुरुशिष्यः ।

२. ऋ० ५.८२.१-३ । ३. ऋ० ५.८२.४-६ ।

अभिशब्द प्रशब्दयो पूर्ववदेकत्वमारोप्य प्रशब्दलिङ्गक तृचात्मक सूक्त विधत्ते—

**'अभि त्वा देव सवितरिति'[1] सावित्र, यद्वाव प्रेति तदभीति, सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति ।**

'अभि त्वा देव' इत्यादि सवितृदेवताक तृचात्मक सूक्त में जो 'प्र' शब्द है वही 'अभि' शब्द है जो सप्तम दिन में सप्तम दिन का रूप है।

आरापित प्रशब्दलिङ्गकमुक्त्वा मुख्यप्रशब्दलिङ्गक तृचात्मक सूक्त विधत्ते—

**'प्रेता यज्ञस्य शभुवेति'[2] द्यावापृथिवीय, प्रेति सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति ।**

द्वितीयस्यामृचि 'द्यावा न पृथिवी'—इत्युक्तत्वात् इद द्यावापृथिवीदेवताकम् ॥

'प्रेता यज्ञस्य' आदि द्यावापृथिवी देवताक [तृचात्मक] सूक्त 'प्र' शब्द से युक्त सप्तम दिन में सप्तम दिन का रूप है।

जातलिङ्गक तृचात्मक सूक्त विधत्ते—

**'अय देवाय जन्मन' इत्यार्भव[3] जातवत्सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति ।**

अत्र सूक्ते चतुर्थ्यामृचि 'ऋभवो विष्टधक्त'—इति श्रुतत्वात् अयमपि तृच आर्भव । 'जन्मन' इत्युक्तत्वाज्जातवल्लिङ्गम् ॥

'अय देवाय जन्मन' इत्यादि ऋभुदेवताक [तृचात्मक] सूक्त 'जात' शब्द ['जनी' धातु] से युक्त सप्तम दिन में सप्तम दिन का रूप है।

अथ पादद्वयोपेता ऋचो विधाय प्रशसति—

**'आ याहि वनसा सहेति'[4] द्विपदा शसति, द्विपाद्वै पुरुषश्चतुष्पादाः पशवः, पशवश्छन्दोमा, पशूनामवरुद्ध्यै, तद् यद्द्विपदाः शसति, यजमानमेव तद् द्विप्रतिष्ठ चतुष्पात्सु पशुषु प्रतिष्ठापयति ॥ इति ।**

छन्दोमाना पूर्वोक्तवत्नुविधादीना पशुप्राप्तिसाधनत्वात् पशुत्वम् ॥

'आ याहि' इत्यादि द्विपदा ऋचाओं का शसन करता है। पुरुष दो पैर वाला है और पशु चार पैर वाला। छन्दोम पशु रूप हैं, [अत द्विपदाओं का शसन] पशुओं की प्राप्ति के लिए होता है। इस प्रकार जो द्विपदाओं का शसन करता है तो दो पैरों वाले उस यजमान को ही चौपाए पशुओं में प्रतिष्ठित करता है।

आकारलिङ्गक बहुदेवताक सूक्त विधत्ते—

**'ऐभिरग्ने दुवो गिर इति'[5] वैश्वदेवमेति सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति ।**

---

१ ऋ० १ २४ ।　　२. ऋ० २ ४१ ।　　३ ऋ० १ २० ।

४ ऋ० १० १७२ ।　　५ ऋ० १ १४ ।

'ऐभिरग्ने दुवो' इत्यादि वैश्वदेवदेवताक 'आङ्' उपसर्ग युक्त सूक्त सप्तम दिन में सप्तम दिन का रूप है।

उक्तेषु सूक्तेषु छन्दः प्रशंसति—

**तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः ॥ इति।**

'तान्यु' तानि तु सूक्तानि 'अथा नो देव सविता' इत्यारभ्य मध्ये द्विपदा वर्जयित्वा 'ऐभिरग्ने' इत्यन्तानि[1] गायत्रीछन्दस्कानि वैश्वदेवशस्त्रे विहितानि। एष चोत्तरस्त्र्यहो 'गायत्रतृतीयसवनः' गायत्रीछन्दस्तृतीयसवने यस्य त्र्यहस्य सोऽयं गायत्रतृतीयसवनः। तदेव छन्दो विवाहप्रस्तावेऽनुसन्धेयम्[2] ॥

वे ['अथा नो देव' से लेकर मध्य में द्विपदाओं को छोड़कर 'ऐभिरग्ने' इत्यादि तक] सूक्त गायत्री छन्दस्क हैं, और इस त्र्यह का तृतीय सवन गायत्री से सम्बन्धित है।

शस्त्रान्तरस्य जनिधातुलिङ्गयुक्तं प्रतिपदं विधत्ते—

**वैश्वानरो अजीजनदित्याग्निमारुतस्य प्रतिपज्जातवत्,[3] सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति।**

[आग्निमारुतशस्त्र]—

'वैश्वानरो अजीजनत्' इत्यादि आग्निमारुत [शस्त्र] की प्रतिपद् ऋचा जात शब्द [जनी' धातु] युक्त सप्तम दिन में सप्तम दिन का रूप है।

प्रशब्दलिङ्गकं सूक्तं विधत्ते—

**'प्र यद्वस्त्रिष्टुभमिषमिति'[4] मारुतं, प्रेति सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति।**

द्वितीयपादे 'मरुतो विप्रा' इति श्रुतत्वात् इदं सूक्तं मरुद्देवताकम् ॥

'प्र यद्वस्त्रिष्टुभम्' इत्यादि मरुद्देवताक 'प्र' शब्द से युक्त सूक्त सप्तम दिन में सप्तम दिन का रूप है।

अच्युतत्वलिङ्गयुक्तामृचं विधत्ते—

**'जातवेदसे सुनवाम सोममिति'[5] जातवेदस्याऽच्युता ॥ इति।**

'जातवेदसे' इत्यादि जातवेददेवताक ऋचा [पूर्व में विहित होने से] अच्युत है।

अस्पष्टदेवताकं सूक्तं विधत्ते—

**'दूतं वो विश्ववेदसमिति'[6] जातवेदस्यमनिरुक्तं सप्तमेऽहनि सप्तमस्याह्नो रूपम् ॥ इति।**

---

१ द्र० इतः पूर्वम् ८०१। २ द्र० इतः पूर्वम् पृ० ६७४, ६८०, ३, ५ ख०।

३ वैश्वानरीयतृचसूक्तस्याद्या चातुर्मास्येषु कल्पजा, उत्तरे त्वत्रैव पठिते। 'स विद्मम्'— इति, 'वृषा पावक'—इति च। द्र० आश्व० श्रौ० ८९७।

४ ऋ० ८७। ५ ऋ० १९९। ६ ऋ० ४८।

जातवेद शब्दस्याग्नि वाचित्वेऽपि स्पष्टदेवतावाचकत्वस्याभावात् 'अनिरुक्तत्वम्' ॥

'दूतं वो विश्ववेदसम्' इत्यादि जातवेद का [जातवेद शब्द के अग्नि के भी वाचक होने से] अस्पष्ट देवताक[1] सूक्त सप्तम दिन में सप्तम दिन का रूप है।

'वैश्वानरो अजीजनद्' इत्यादिषु 'दूत व.' इत्येतेषु सूक्तेषु जातवेदस इत्येनर्ह्निर्लेषु विद्यमान छन्दः प्रशसति—

तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः ॥ १७ ॥ इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीय 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम-पञ्चिकाया तृतीयाध्याये (त्रयोविंशाध्याये) द्वितीय खण्ड ॥२॥ (१७) [१७०]

वे [सूक्त] तो गायत्री छन्दस्क हैं और इस [त्र्यह] का तृतीय सवन गायत्री से सम्बन्धित है।

॥ इस प्रकार तेइसवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

सप्तममहरभिधायाष्टमस्याह्नो मन्त्रलिङ्गानि दर्शयति—

यद्वै नेति न प्रेति, यत्स्थित, तदष्टमस्याह्नो रूपम् ॥ इति ।

आकारस्य च प्रशब्दस्य च अलिङ्गत्व नकारद्वयेन निषिध्यते । 'यत्स्थितम्' अच्युतत्वेन नियत विष्ठतिधातुयुक्त वा, तदष्टमस्याह्नो निरूपकम् ॥

[द्वितीय छन्दोम अथवा नवरात्र का आठवाँ दिन]—

v. १८ [xxiii ३] जो [सप्तम दिन के सूचक] 'आङ्' और 'प्र' उपसर्ग [पहले कहे गए] हैं वे [अष्टम दिन के] रूप नहीं हैं अपितु जो 'स्था' धातु के रूप से युक्त है वह अष्टम दिन का रूप है।

द्वितीयस्मिन्नहनि प्रोक्तानि लिङ्गान्यष्टमेऽन्यतिदिशति—

यद्वचेव द्वितीयमहस्तदेवैतत्पुनर्यदष्टमम् ॥ इति ।

यल्लिङ्गकमेव द्वितीयमह , तल्लिङ्गकमेवैतत् पुनरपि भवति । यदष्टममह , तत्पूर्वोक्त-लिङ्गकम् ॥

[नवरात्र का जो आठवाँ दिन होता है वह पृथक् नहीं होता; अपितु प्रथम त्र्यह के] द्वितीय दिन का जो रूप कहा गया है वही पुन इस [उत्तम त्र्यह के द्वितीय दिन अर्थात्] अष्टम दिन का निरूपक है।

---

१　'अस्पष्टार्थपदाना हि बाहुल्यादनिरुक्तता'—इति षड्गुरुशिष्य ।

तानि लिङ्गान्युपन्यस्यति—

यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्षमन्युदितम् ॥ इति ।

जो 'ऊर्ध्व' शब्द से युक्त, जो 'प्रति' शब्द से युक्त, जो 'अन्तः' शब्द से युक्त, जो 'वृषन्', शब्द से युक्त और जो [मन्त्र] 'वृधन्' शब्द से युक्त आम्नात है और जिसके मध्यम पद में देवता का अभिधान किया गया हो और जहां अन्तरिक्ष की ओर संकेत हो,—

अथ नूतनानि लिङ्गानि दर्शयति—

यद्द्व्यग्नि यन्महद्वद्यद्द्विहूतवद्यत्पुनर्वद्यत्कुर्वत् ॥ इति ।

अग्निशब्दद्वयोपेत द्व्यग्नीत्युच्यते । महच्छब्दोपेत 'महद्वत्' । द्वयोर्देवतयोर्हूवमाह्वानं यस्मिंस्तादृशं 'द्विहूतवत्' । पुनःशब्दोपेत 'पुनर्वत्' । द्वितीयेऽह्नि वर्तमानार्थवाचिप्रत्ययान्त कुर्वच्छब्देनोक्तम् ॥

जो [मन्त्र] 'अग्नि' शब्दद्वय से युक्त हो, जो 'महत्' शब्द से युक्त हो, जिस [मन्त्र] में दो देवताओं का आह्वान हो, जो 'पुनः' शब्द से युक्त हो और जो वर्तमान कालिक क्रिया से युक्त हो,—

तेन सह सर्वाणि लिङ्गान्युपसंहरति—

यद्द्वितीयस्याह्नो रूपमेतानि वा अष्टमस्याह्नो रूपाणि ॥ इति ।

जो द्वितीय दिन के निरूपक चिह्न हैं—ये सभी अष्टम दिन के निरूपक हैं ।

तत्राज्यशस्त्र विधत्ते—

अग्निं वो देवमग्निभिः सजोषा[1] इत्यष्टमस्याह्न आज्यं भवति; द्व्यग्न्यष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति ।

द्वावग्निशब्दौ यस्मिन् सूक्ते विद्येते, तत्सूक्तं 'द्व्यग्नि', तदीदृशमेऽहनि योग्यत्वात् एतदष्टमस्याह्नो निरूपकम् ॥

[आज्यशस्त्र]—

'अग्नि वो देवमग्निभिः' आदि सूक्त अष्टम दिन का आज्य [शस्त्र] होता है, जो दो 'अग्नि' शब्दों से युक्त अष्टम दिन में अष्टम दिन का रूप है ।

तद्गतं छन्दः प्रशंसति—

तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः ॥ इति ।

वह [सूक्त] तो त्रिष्टुप् छन्दस्क है और इस [त्र्यह] का प्रातःसवन त्रिष्टुप् से सम्बन्धित है ।

---

१. ऋ० ७.३ ।

अथ प्रउगशस्त्रं विधत्ते—

**कुविदङ्ग नमसा ये वृधास, पीवो अन्नां रयिवृध सुमेधा, उच्छन्नुषस सुदिना अरिप्रा, उशन्ता दूता न दभाय गोपा, यावत् तरस्तन्वो३ यावदोज, प्रति वा सूर उदिते सूक्तै, धेनु प्रत्नस्य काम्य दुहाना, ब्रह्मा ण इन्द्रोप याहि विद्वान, ऊर्ध्वो अग्नि सुमति वस्वो अश्रेत्, उत स्या न सरस्वती जुषाणेति प्रउग प्रतिवदन्तवद्, द्विहूतवदूर्ध्ववदष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति ।**

'कुविदङ्गेति'[1] प्रथम प्रतीकम् । पीवो अन्नानिति[2] द्वितीयम् । उच्छन्नुषस[3] इति तृतीयम् । 'उशन्ता'[4]–इति चतुर्थम् । यावत् तर[5] इति पञ्चमम् । प्रति वामिति[6] षष्ठम् । 'धेनु प्रत्नस्येति'[7] सप्तमम् । 'ब्रह्मा ण[8] इत्यष्टमम् । ऊर्ध्वो अग्निरिति[9] नवमम् । 'उत स्या न[10] इति दशमम् । अत्राऽऽद्यैस्त्रिभि प्रतीकैरेकस्तृच, चतुर्थी चैका, पञ्चमे द्वे, तदुभय मिलित्वा द्वितीयस्तृच इतरे पञ्च तृचा एतत्सर्वं प्रउगम् । तत्र दशमे प्रतीके 'प्रति स्तोममिति प्रतिशब्दोपेत लिङ्गमस्ति धनु प्रत्नस्येत्यस्य द्वितीयपादे अन्त। पुत्र ' इत्यन्त शब्दोपेत लिङ्गम् ऊर्ध्वो अग्निरित्यस्मिन्नूर्ध्वशब्दोपेत लिङ्गम् । अवशिष्टेषु द्वयोराह्वान लिङ्गम् —क्वचिदिन्द्रवाय्वो क्वचिन्मित्रावरुणयोरिति द्रष्टव्यम् ॥

[प्रउगशस्त्र]—

१ 'कुविदङ्ग नमसा', २ 'पीवो अन्नान्', ३ उच्छन्नुषस ', ४ 'उशन्ता' ५ 'यावत्तर ', ६ प्रति वाम्', ७ धेनु प्रत्नस्य', ८ 'ब्रह्मा ण ', ९ ऊर्ध्वो अग्नि ' १० 'उत स्या न ', इत्यादि [मन्त्र प्रतीकों में प्रथम तीन प्रतीकों के तृच, चौथे प्रतीक की एक ऋचा, पाँचवें प्रतीक के दो मन्त्र, शेष पाँच प्रतीकों के तृच] सभी प्रउग [शस्त्र] हैं, जिनमें [दसवाँ प्रतीक] 'प्रति' शब्द से युक्त, [धेनु प्रत्नस्य का द्वितीय पाद] 'अन्त ' शब्द से युक्त [ऊर्ध्वो अग्नि आदि] 'ऊर्ध्व' शब्द से युक्त और शेष सभी दो आह्वानों [इन्द्रवायु या मित्रावरुण] से युक्त ऋचाएँ अष्टम दिन में अष्टम दिन का रूप हैं ।

उक्तमन्त्रगत छन्द प्रशसति—

**तद्वै त्रैष्टुभ त्रिष्टुप्प्रात सवन एष त्र्यह ॥ इति ।**

वे [ऋचाएँ] तो त्रिष्टुप् छन्दस्क हैं, और इस [त्र्यह] का प्रात सवन त्रिष्टुप् से सम्बन्धित है ।

---

१ ऋ० ७ ९१ १ । २ ऋ० ७ ९१ ३ । ३ ऋ० ७ ९० ४ ।
४ ऋ० ७ ९१ २ । ५ ऋ० ७ ९१ ४ ५ । ६ ऋ० ७ ६५ १–३ ।
७ ऋ० ३ ५८ १–३ । ८ ऋ० ७ २८ १–३ । ९ ऋ० ७ ३९ १–३ ।
१० ऋ० ७ ९५ ४–६ ।

अथ मरुत्वतीयशस्त्रे तुल्यशस्त्रकॢप्त्यात्वेन लिङ्गेनोनेतान् मन्त्रान् विधत्ते—

**विश्वानरस्य वस्पति[1]मिन्द्र इत्सोमपा एक[2] इन्द्र नेदीय एदिह्यु[3]त्तिष्ठ ब्रह्मणस्पते[4]ऽग्निर्नेता[5] त्वं सोम क्रतुभिः[6] पिन्वन्त्यपो[7] बृहदिन्द्राय गायतेति[8] द्वितीयेनाह्ना समान आतानोऽष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति ।**

[मरुत्वतीयशस्त्र]—

'विश्वानरस्य', 'इन्द्र इत्', इन्द्र नेदीयः; उत्तिष्ठ ब्रह्मणस्पते, अग्निर्नेता, 'त्वं सोम', 'पिन्वन्त्यपो' और 'बृहदिन्द्राय' इत्यादि [मरुत्वतीय शस्त्र में] द्वितीय दिन के ही समान क्रमागत ऋचाएँ अष्टम दिन में अष्टम दिन का रूप हैं।

महच्छब्दलिङ्गकं सूक्तं विधत्ते—

**शंसा महामिन्द्रं यस्मिन् विश्वा इति सूक्तं[9] महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति ।**

अत्र 'महाम्'—इत्येव महच्छब्द' ॥

'शंसा महाम्' इत्यादि सूक्त [में 'महाम्' पद] 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है।

पुनरपि महच्छब्दयुक्तं सूक्तान्तरं विधत्ते—

**'महश्चित्त्वमिन्द्र यत एतानिति'[10] सूक्तं, महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति ।**

अत्र 'महः' इत्येव एव महच्छब्दः ॥

'महश्चित् त्वम्' इत्यादि सूक्त [में 'महः' पद] 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है।

पुनरपि महच्छब्दयुक्तं सूक्तान्तरं विधत्ते—

**'पिबा सोममभि यमुग्र तर्दः'[11] इति सूक्तमूर्वं गव्यं महि गृणान इन्द्रेति महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति ।**

पिबा सोममित्यादिसूक्तस्य 'ऊर्वं गव्यम्'—इति द्वितीयः पादः। तत्र 'महि'—इत्येव महच्छब्दः ॥

'पिबा सोमम्' इत्यादि सूक्त [का 'ऊर्वं गव्यं महि गृणानः इन्द्र'—आदि पाद] 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है।

---

१. ऋ० ८.६८.४। २. ऋ० ८.२.४। ३. ऋ० ८.५३.५।
४. ऋ० १.४०.१। ५. ऋ० ३.२०.४। ६. ऋ० १.९१.२।
७. ऋ० १.६४.६। ८. ऋ० ८.८९.१। ९. ऋ० ३.४९।
१०. ऋ० १.१६९। ११. ऋ० ६.१७।

पुनरपि महच्छब्दयुक्तं सूक्तं विधत्ते—

'महाँ' इन्द्रो नृवदा चर्षणिप्रा इति सूक्तं[4], महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति ।

अत्र 'महान्'[1]–इत्येव महच्छब्दः ॥

उक्तेषु चतुर्ष्वपि महच्छब्देष्वन्तस्य वैलक्षण्येऽप्यादिभागस्यैकविधत्वात्[3], महच्छब्दत्वं द्रष्टव्यम् ॥

'महाँ इन्द्रः' इत्यादि सूक्त [में 'महान्' पद] 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है।

एतत्सूक्तचतुष्टयगतं छन्दः प्रशंसति—

तद्वै त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते ॥ इति ।

वे [चारों सूक्त] त्रिष्टुप् छन्दस्क हैं प्रतिष्ठित-पद [अर्थात् नियत अक्षर संख्या] से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत मरुत्वतीय शस्त्र] धारित होता है, अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

अथान्यं महच्छब्दोपेतं सूक्तं विधत्ते—

'तमस्य द्यावापृथिवी सचेतसेति'[4] सूक्तं, यदैत् कृण्वानो महिमानमिन्द्रियमिति, महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति ।

तमस्येति सूक्तस्य 'यदैत् कृण्वान' इति तृतीयः पादः, तत्र महिमानपदे 'महि'–इति महच्छब्दः श्रूयते ॥

'तमस्य' इत्यादि सूक्त का 'यदैत्कृण्वानो महिमानमिन्द्रियम्' यह पाद 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है।

तस्मिन् सूक्ते निविद्धानं विधत्ते—

तद्वु जागतं, जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति, तद्यैतच्छन्दो वहति, यस्मिन्निविद्धीयते, तस्माज्जगतीषु निविदं दधाति ॥ इति ।

---

१ 'दीर्घादटि समानपादे'–इति पा० सू० ८ ३ ९ रुत्वेऽनुनासिकत्वे पा० सू० ८ ३ २, ४, च रूपम् । तदत्र 'महाँ'–इति, 'महाँ'–इति 'महां'–इति च लिपिप्रकारभेदमात्रम् उच्चारणं त्वेकविधमेव व्यवह्रियते ।

२ ऋ० ६ १९ ।

३ 'महाम्', 'मह', 'महि', 'महान्' इति ऋ० ३ ४९, १ १६९ ६ १७, ६ १९ ।

४ ऋ० १० ११३ ।

उस सूक्त की ऋचाएँ जगती छन्दस्क हैं, और जगती ही इस त्र्यह के माध्यन्दिन [सवन] के वाहक हैं, अतः जिस [छन्द] में निविद् [पद-समूह] प्रक्षिप्त होते हैं, वही छन्द इस [सवन] का निर्वाहक होता है। इस [निर्वाहकत्व] के कारण जगती ऋचाओं में निविद् प्रक्षिप्त होते हैं।

छन्दोद्वयं मिलित्वा प्रशंसति—

मिथुनानि सूक्तानि शस्यन्ते, त्रैष्टुभानि च जागतानि च, मिथुनं वै पशवः, पशवश्छन्दोमाः, पशूनामवरुद्ध्यै ॥ इति।

मिथुन [जोड़े] सूक्तों का शंसन करते हैं—त्रिष्टुप् और जगती के जोड़े का। [गौ एवं अश्वादि] पशु भी मिथुनरूप हैं और [चतुर्विश, चतुश्चत्वारिंश और अष्टाचत्वारिंश नामक स्तोमों के द्वारा संपादित] छन्दोम [पशु प्राप्ति के साधन होने से] पशु रूप हैं। [अतः छन्दोम युक्त इस त्र्यह में छन्द-द्वय का शंसन] पशुओं की प्राप्ति के लिए होता है।

उक्तेषु सूक्तेषु महच्छब्दं प्रशंसति—

महद्वन्ति सूक्तानि शस्यन्ते, महद् वा अन्तरिक्षमन्तरिक्षस्याप्त्यै ॥ इति।
अन्तरिक्षस्य महत्त्वं विस्तीर्णत्वं प्रसिद्धम्॥

[वे होता] 'महत्' शब्द से युक्त सूक्तों का शंसन करते हैं [क्योंकि] अन्तरिक्ष महान् है, [अतः यह शंसन] अन्तरिक्ष की प्राप्ति के लिए होता है।

महच्छब्दयुक्तानां सूक्तानां संख्यां प्रशंसति—

पञ्च सूक्तानि शस्यन्ते; पञ्चपदा पङ्क्तिः, पाङ्क्तो यज्ञः, पाङ्क्ताः पशवः, पशवश्छन्दोमाः, पशूनामवरुद्ध्यै ॥ इति।

'तथा महामिति'[1] प्रथमे सूक्ते महच्छब्दो 'महश्चित्त्वमिति'[2] द्वितीये, 'महि गृणानं' इति तृतीये, 'महाँ इन्द्र'[4] इति चतुर्थे, 'महिनामिति'[5] पञ्चमे, एवं पञ्च सूक्तानि महच्छब्दयुक्तानि शस्यन्ते। पञ्चसंख्यायोगात् पञ्चपादोपेता 'पङ्क्तिः' छन्दोरूपा भवति। यज्ञश्च हविष्पङ्क्त्यादिना 'पाङ्क्तः'। पशवश्च पङ्क्तिकत्वेन 'पाङ्क्ताः'; छन्दोमानां च पशुसाधनत्वात् पशुत्वम्। अनेन सम्बन्धेन सूक्तपञ्चकं पश्वाप्त्यै सम्पद्यते॥

[इस प्रकार 'महत्' शब्द युक्त] पाँच सूक्तों का शंसन करते हैं, [पाँच संख्या के योग से] पाँच पादों से युक्त पङ्क्ति [छन्द होता] है और यज्ञ [हविष्पङ्क्ति आदि भेद से] पाङ्क्त है, पशु [चार पैर और एक मुख से] पाङ्क्त है, और [चतुर्विश, चतुश्चत्वारिंश और अष्टाचत्वारिंश नामक स्तोमों से संपादित] छन्दोम [पशु प्राप्ति के साधन होने से] पशु

१. ऋ० ३.४६.१। २. ऋ० १.१६९.१। ३ ऋ० ६.१७.१।
४. ऋ० ६.१९.१। ५. ऋ० १०.११३.१।

रूप हैं [अत छन्दोम युक्त इस व्यूह में महत् शब्द युक्त पाँच सूक्तों का शसन] पशुओं की प्राप्ति के लिए होता है।

अथ निष्केवल्यशस्त्रस्य रथंतरसामसाध्यपृष्ठस्तोत्रस्य आधारभूत स्तोत्रियमनुरूप च विधत्ते—

'अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति'[१] रथंतर पृष्ठ भवत्यष्टमेऽहनि ॥ इति।

यद्यपि युग्मदिनत्वात् न्यायतो बृहत्पृष्ठ प्राप्तम्, तथापि वचनबलाद्रथंतरपृष्ठत्व द्रष्टव्यम् ॥

[निष्केवल्यशस्त्र]—

'अभि त्वा शूर' और 'अभि त्वा पूर्वपीतये' आदि ऋचा [न्यायत प्राप्त बृहत् पृष्ठ न होकर] अष्टम दिन में रथन्तर पृष्ठ होती है।

धन्युतत्वलिङ्गयुक्तामृच विधत्ते—

'यद्वावानेति'[२] धाय्याऽच्युता ॥ इति।

'यद्वावान' इत्यादि धाय्या [पूर्व में विहित होने से] अच्युत है।

तस्या उपरि बृहत्सामयोने शसन विधत्ते—

'त्वामिद्धि हवामह इति'[३] बृहतो योनिमनु निवर्तयति बार्हत ह्येतदहरायतनेन ॥ इति।

अष्टमस्य युग्मदिनत्वाद् बृहत्सबन्धिस्थानत्वम् ॥

'त्वामिद्धि हवामहे' आदि ऋचा में बृहत्साम [उत्पन्न है अत ] योनिभूत इस प्रगाथ का [पूर्वोक्त धाय्या के] बाद में शसन करता है [क्योंकि युग्म स्वरूप] स्थान के द्वारा यह दिन बृहत्सम्बन्धी है।

तस्यैव बृहत्सबन्धिन सामप्रगाथ विधत्ते—

'उभय शृणवच्च न इति'[४] सामप्रगाथो यच्चेदमद्य यदु च ह्य आसीदिति बार्हतेऽहन्यष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति।

उभयशब्दतात्पर्यं यच्चेदमित्यादिनोच्यते। अद्य 'यदिद' कार्यमासीत् 'ह्यश्' पूर्वद्युरपि 'यदु' यदेव कार्यमासीत्, तदेतदुभयमपि श्रुतमिति तस्य पादस्यार्थ[६]। युग्मरूपे बार्हतेऽहनि बृहत्सामसबन्धः प्रगाथो युक्त एव ॥

---

१ ऋ० ७ ३२ २२,-३। २ ऋ० १ १९ १। ३ ऋ० १० ७४ ६।
४ ऋ० ६ ४६ १,२। ५ ऋ० ८ ६१ १,२।
६ उभय—स्तोत्रात्मक शस्त्रात्मक च'—इति सहिताभाष्येऽप्यमेव सायण। द्र० इत पूर्वम्, पृ०—७०३।

'उभय शृणवच्च न' इत्यादि साम प्रगाथ है; 'उभय' शब्द का अर्थ है जो कार्य आज है और जो कार्य कल था—ये दोनों कार्य मृत थे,[1] जो बृहत्साम सम्बन्धी दिन अष्टम दिन में अष्टम दिन का रूप है।

अच्युतलिङ्गकं सूक्तविशेषं विधत्ते—

'त्यमू षु वाजिनं देवजूतमिति'[2] तार्क्ष्योऽच्युतः ॥ १८ ॥ इति।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीय 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया तृतीयाध्याये (त्रयोविंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (१८) [१७१]

'त्यमू षु' इत्यादि तार्क्ष्य देवताक सूक्त [पूर्व में विहित होने से] अच्युत है।

॥ इस प्रकार तेइसवें अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥३॥

## अथ चतुर्थः खण्डः

महच्छन्दयुक्तसूक्तचतुष्टयं विधत्ते —

अपूर्व्या पुरुतमान्यस्मा इति सूक्तं[3], महे वीराय तवसे तुरायेति महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपं; तां सु ते कीर्ति मघवन् महित्वेति[4] सूक्तं, महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपं; त्वं महाँ इन्द्र यो ह शुष्मैरिति[5] सूक्तं, महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपं; त्वं महाँ इन्द्र तुभ्यं ह क्षा[6] इति सूक्तं; महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति।

अपूर्व्येति सूक्तस्य द्वितीयपादे 'महे वीराय'—इति महच्छब्दः श्रुतः। इतरस्मिन् सूक्तत्रये प्रथमपाद एव महच्छब्दः स्पष्टः ॥

v. १९ [xxiii. ४] 'अपूर्व्या' इत्यादि सूक्त का 'महे वीराय' आदि [द्वितीय पाद] 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है। 'ता सुते' इत्यादि सूक्त 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है। 'त्वं महाँ इन्द्रयो' इत्यादि सूक्त 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है। 'त्वं महाँ इन्द्र तुभ्यं' इत्यादि सूक्त 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है।

सूक्तचतुष्टयगतं छन्दः प्रशंसति—

तद् त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधारायतनादेवैतेन न प्रच्यवते ॥ इति।

---

1. ह्योऽस्तीतेऽहनि यच्चासीद् यच्चाद्य तदिदं द्वयम्।
   शृणवच्छृणुयादिन्द्रः समृद्ध्या इति कथ्यते ॥ इति षड्गुरुशिष्य.।
2. ऋ० १०.१७८।  3. ऋ० ६.३२।  4. १०.५४।
5. ऋ० १.६३।  6. ऋ० ४.१७।

वह [सूक्त] तो त्रिष्टुप् छन्दस्क है प्रतिष्ठित-पद [अर्थात् नियत अक्षर सख्या] से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [गत निष्केवल्यशस्त्र] धारित होता है। अत इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

यथा मरुत्वतीयशस्त्रे महच्छन्दयुक्त त्रिष्टुप् छन्दस्क सूक्तचतुष्टयमुक्त्वा पश्चाज्जगतीछन्दस्क महच्छब्दयुक्त सूक्तान्तरमुक्तम् एवमत्र निष्केवल्येऽपि त्रिष्टुप् छन्दस्क सूक्तचतुष्टयमभिधाय जगतीछन्दस्क सूक्त विधत्ते—

'दिवश्चिदस्य वरिमा वि पप्रथ इति'[1] सूक्तमिन्द्र न मह्नेति महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम ॥ इति।

दिवश्चिदस्येति सूक्तस्येन्द्रमिति द्वितीयपादे मह्नेति महच्छब्द श्रुत ॥

दिवश्चिदस्य' इत्यादि [जगती छन्दस्क] सूक्त का 'इन्द्र न मह्ना' आदि [द्वितीय पाद में 'मह्ना'—यह] 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है।

तस्मिन् सूक्ते निविद्धान विधत्ते—

तदु जागत, जगत्यो वा एतस्य त्र्यहस्य मध्यदिन वहन्ति, तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते, तस्माज्जगतीषु निविद दधाति ॥ इति।

उस सूक्त की ऋचाएँ तो जगती छन्दस्क हैं और जगती ही इस त्र्यह के मध्यन्दिन [सवन] के वाहक हैं। अत जिस छन्द में निविद् [पद-समूह] प्रक्षिप्त होते हैं, वही छन्द इस [सवन] का निर्वाहक होता है। इस [निर्वाहकत्व] के कारण जगती ऋचाओं में निविद् प्रक्षिप्त होते हैं।

छन्दोद्वय मिलित्वा प्रशसति—

मिथुनानि सूक्तानि शस्यन्ते,—त्रैष्टुभानि च जागतानि च, मिथुन वै पशव, पशवश्छन्दोमा, पशूनामवरुद्ध्यै ॥ इति।

मिथुन [अर्थात् जोडे] सूक्तों का शसन करते हैं—त्रिष्टुप और जगती के मिथुन का। [गौ एव अश्वादि] पशु भी मिथुनरूप हैं और [चतुर्विश, चतुश्चत्वारिश और अष्टाचत्वारिश नामक स्तोमों के द्वारा सम्पादित] छन्दोम [पशु प्राप्ति के साधन होने से] पशु रूप हैं, [अत छन्दोमयुक्त इस त्र्यह में छन्द द्वय का शसन] पशुओं की प्राप्ति के लिए होता है।

सूक्तेषु महच्छब्द पञ्चसख्या च पूर्ववत् प्रशसति—

महद्वन्ति सूक्तानि शस्यन्ते, महद्वा अन्तरिक्षमन्तरिक्षस्याप्त्यै, पञ्च पञ्च सूक्तानि शस्यन्ते, पञ्चपदा पङ्क्ति, पाङ्क्तो यज्ञ, पाङ्क्ता पशव, पशवश्छन्दोमा, पशूनामवरुद्ध्यै ॥ इति।

---

1 ऋ० १५५।

द्विपदा ऋचो विधाय प्रशंसति—

**इमा नु कं भुवना सीषधामेति द्विपदाः शंसति; द्विपाद्वै पुरुषश्चतुष्पादाः पशवः, पशवश्छन्दोमाः, पशूनामवरुद्ध्यै, तद्यद् द्विपदाः शंसति, यजमानमेव तद् द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति ॥ इति ।**

'इमा नु कम्' इत्यादि द्विपदा ऋचाओं का शंसन करता है, पुरुष दो पैरों वाला है, और पशु चार पैरों वाला है। [क्योंकि पशु प्राप्ति के साधनभूत] छन्दोम पशुरूप हैं, [अतः द्विपदाओं का शंसन] पशुओं की प्राप्ति के लिए ही होता है। इस प्रकार जो द्विपदाओं का शंसन करता है तो दो पैरों वाले उस यजमान को ही चौपाए पशुओं में प्रतिष्ठित करता है।

महच्छन्दोपेतं बहुदेवताकं सूक्तं विधत्ते—

**देवानामिदवो महदिति[1] वैश्वदेवं महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति ।**

महच्छन्दोऽत्र विस्पष्टः ॥

'देवानामिदवो महद्' आदि वैश्वदेवदेवताक सूक्त 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है।

द्विपदाव्यतिरिक्तानां तत्सवितुर्वरेण्यमित्यारभ्य-देवानामिदवो महदित्यन्तानां छन्दः प्रशंसति—

**तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः ॥ इति ।**

[द्विपदाओं को छोडकर] वे ['तत्सवितुः' से लेकर 'देवानाम्' आदि तक सूक्त] तो गायत्री छन्दस्क हैं, और इस त्र्यह का तृतीयसवन गायत्री से सम्बन्धित है।

शस्त्रान्तरस्य प्रतिपदं विधत्ते—

**ऋतावानं वैश्वानरमित्याग्निमारुतस्य प्रतिपदग्निर्वैश्वानरो महानिति महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥ इति ।**

ऋतावानमित्यादिके सूक्तगते[2] तृचे द्वितीयस्यामृचि 'अग्निर्वैश्वानरः' इति द्वितीयः पादः। तत्र 'महानिति' महच्छन्दः श्रूयते ॥

---

१. ऋ० ८.८३ ।

२. संहितायां कस्मिंश्चिदपि सूक्तेऽस्य तृचस्यादर्शनाद् लिपिकरप्रमादप्रवाहजः पाठो दृश्यते, कल्पसूत्रे स्मृतश्चायं शाखान्तरीयस्तृचः—'ऋतावानं···विराजति'—इति आश्व० श्रौ० ८.१०.३ ।

[आग्निमारुतशस्त्र]—

'ऋतावानम्' इत्यादि आग्निमारुतशस्त्र का प्रतिपद् सूक्त है, उस सूक्त [का द्वितीय ऋचा] का 'अग्निर्वैश्वानर' आदि [द्वितीय पाद में 'महान्' यह] 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है।

वृधन्वदीत सूक्त विधत्ते—

**क्रीळं व' शर्धो मारुतमिति मारुत, जम्भे रसस्य वावृध इति वृधन्वदष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥** इति।

'क्रीळं व' इति सूक्तस्य[1] पञ्चम्यामृचि 'जम्भे रसस्यवावृधे'—इति पाद श्रूयते। तत्र 'वावृधे' इति वृधिधातुमत्त्वम् ॥

'क्रीळं व' आदि मरुद्देवताक सूक्त का [पाँचवीं ऋचा का] जम्भे रसस्य' इत्यादि पाद 'वृध' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है।

अच्युतत्वलिङ्गामृच विधत्ते—

**जातवेदसे सुनवाम सोममिति[2] जातवेदस्याऽच्युता ॥** इति।

'जातवेदसे' इत्यादि जातवेददेवताक ऋचा [पूर्व में विहित होने से] अच्युत है।

महच्छब्दयुक्त जातवेदोदेवताक सूक्त विधत्ते—

**'अग्ने मृळ महाँ असीति'[3] जातवेदस्य महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम् ॥** इति।

'अग्ने मृळ' इत्यादि जातवेद देवताक सूक्त [में 'महान्'—यह] 'महत्' शब्द से युक्त अष्टम दिन में अष्टम दिन का रूप है।

आग्निमारुतशस्त्रगतेषु सूक्तेषु छन्द प्रशंसति—

**तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यह, एष त्र्यह ॥ १९ ॥** इति।

अभ्यासोऽध्यायसमाप्त्यर्थः ॥

वे [आग्निमारुत शस्त्रों के सूक्त] तो गायत्री छन्दस्क हैं और इस त्र्यह का तृतीय सवन तो गायत्री से सम्बन्धित है।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया तृतीयाध्याये (त्रयोविंशाध्याये) चतुर्थ खण्ड ॥ ४ ॥ (१९) [१७२]

---

१ ऋ० १ ३७।
२ ऋ० १ ९९।    ३ ऋ० ४ ९।

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर-
माधवाचार्यादेशतो श्रीमत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाशे'
नामभाष्ये ऐतरेयब्राह्मणस्य पञ्चमपञ्चिकायाः तृतीयोऽध्यायः
(त्रयोविंशोऽध्यायः) ॥ ३ ॥

॥ इस प्रकार ऐतरेय ब्राह्मण के पञ्चम पञ्चिका के तृतीय ( तेइसवें )
अध्याय की सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ ३ ॥

---

# अथ चतुर्थोऽध्यायः

## प्रथमः खण्डः

— ० —

# [अथ चतुर्विंशोऽध्यायः

## प्रथमः खण्डः]

नवमेऽहनि मन्त्रलिङ्ग दर्शयति—

**यद् वै समानोदर्कं तन्नवमस्याह्नो रूपम् ॥ इति।**

'समानोदर्कं' तुल्यसमाप्तिकम् ॥

[तृतीय छन्दोम दिन अथवा नवरात्र का नौवां दिन]—

१ २० [xxiv १] जिस [मन्त्र] में समान समाप्ति है वह नवम दिन का रूप है।

तृतीयेऽह्युक्तानि लिङ्गान्यस्मिन्नवमेऽह्न्यतिदिशति—

**यद्ध्येव तृतीयमहस्तदेवैतत् पुनर्यन्नवमम् ॥ इति।**

तृतीयमहर्यादृशलिङ्गोपेत पुनरप्यत्र यन्नवममहस्तदपि तादृशलिङ्गोपेत द्रष्टव्यम् ॥

जो तृतीय दिन के निरूपक चिह्न हैं वही पुन इस [द्वादशाहगत नवरात्र के] नवम दिन के रूप हैं।

तानि लिङ्गान्युपन्यस्यति—

**यदश्ववद्यदन्तवद्यत् पुनरावृत्त यत्पुनर्निनृत्त यद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदन्त-रूप यदुत्तमे पदे देवता निरुच्यते यदसौ लोकोऽभ्युदित ॥ इति।**

जो [मन्त्र] 'अश्व' शब्द से युक्त, 'अन्त' शब्द से युक्त हो, जिसमें पुनरावृत्ति [=पठित का ही पुन पाठ] हो और जिसमें स्वरविशेष के द्वारा बार-बार अक्षरों की आवृत्ति हो, जो सहवास से युक्त हो, जो 'पर्यास' शब्द से युक्त, 'त्रि' शब्द से युक्त और 'अन्त' [=समाप्त्यर्थक] शब्द से युक्त हो और जिसके अन्तिम पाद में देवता का अभिधान किया गया हो, जिसमें यह [स्वर्ग] लोक उक्त हो [वह नवम दिन का रूप है]।

अथ नूतनानि लिङ्गानि दर्शयति—

**यच्छुचिवद् यत्सत्यवद् यत्क्षेतिवद् यद्गतवद् यदोकवत् ॥ इति।**

शुचिसत्यक्षेतिगतौकशब्दा नवमेऽहनि लिङ्गरूपा । भूतार्थवाचिप्रत्ययात्तथानुरूप यदस्ति तेन सहित तृतीयेऽहनि विद्यमान लिङ्गम् ॥

जो 'शुचि' शब्द से युक्त, जो 'सत्य' शब्द से युक्त, जो 'क्षेति' [ = निवास] शब्द से युक्त, जो 'गम्' धातु के रूप से युक्त और जो 'ओक'[1] [=घर] शब्द से युक्त हो—

अन्यानि च सर्वाणि लिङ्गान्युपसंहरति—

यत्कृतं यत्तृतीयस्याह्नो रूपमेतानि वै नवमस्याह्नो रूपाणि ॥ इति ।

जिसमें 'कृ' धातु का भूतकाल का रूप हो तथा जो तृतीय दिन के रूप हैं—वे सभी इस नवम दिन के रूप हैं।

आज्यशस्त्रं विधत्ते—

अगन्म महा नमसा यविष्ठमिति नवमस्याह्न आज्यं भवति, गतवन्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति ।

'गतवद्' गमिधातुयुक्तम् । अत्र[2] च 'अगन्म'—इति गमिधातुः श्रूयते ॥

[आज्यशस्त्र]—

'अगन्म' इत्यादि सूक्त नवम दिन का आज्यशस्त्र होता है, जो 'गम्' धातु से ['अगन्म'-इस] रूप से युक्त नवम दिन में नवम दिन का रूप है।

सूक्तगतं छन्दः प्रशंसति—

तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः ॥ इति ।

वह सूक्त त्रिष्टुप् छन्दस्क है और इस त्र्यह का प्रातःसवन त्रिष्टुप् से सम्बन्धित है।

प्रउगशस्त्रं विधत्ते—

प्र वीरया शुचयो दद्रिरे ते, ते सत्येन मनसा दीध्यानाः,दिवि क्षयन्ता रजसः पृथिव्याः,आ विश्ववाराऽश्विना गतं नः,अयं सोम इन्द्र तुभ्यं सुन्वे, आ तु, प्र ब्रह्माणो अङ्गिरसो नक्षन्त, सरस्वतीं देवयन्तो हवन्ते, आ नो दिवो बृहतः पर्वतादा, सरस्वत्यभि नो नेषि वस्य इति प्रउगं, शुचिवत्सत्यवत्क्षेतिवद्गतवदोकवन्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति ।

---

१ शुचिशब्दः सत्यशब्द ओकशब्दश्च यत्र वै ।
सलोपः क्षी निवासार्थे धातुः क्षेतिस्तदन्वितम् ॥
यत् कृतं गमिना युक्तं तार्तीयाह्नादिमन्त्र यत् ।
एतानि नवमस्याह्नो योग्यानीत्यवगम्यताम् ॥—इति षड्गुरुशिष्यः ।

२ ऋ० ७।१२।

अत्र 'दद्रिरे ते' इति प्रयोगपाठः[1]। 'प्र वीरयेति'[2] प्रथम प्रतीक तत्र शुचय इति शुचिशब्दोपेत लिङ्गम्। 'ते सत्येनेति'[3] द्वितीय प्रतीक तत्र सत्यशब्दो लिङ्गम्। दिवि क्षयन्तेति'[4] तृतीय तत्र क्षेतिधातुर्लिङ्गम्। आ विश्ववारेति[5] चतुर्थम्। तत्र गतशब्दो लिङ्गम्। 'अय सोम[6] इति पञ्चमम्। तस्मिन् आ तु प्र याहि हरिवस्तदोका' इति द्वितीय पाद, तस्मिन्नोकशब्दो लिङ्गम्। 'प्र ब्रह्माण'[7] इति षष्ठम्। 'सरस्वतीमिति'[8] सप्तमम्। आ नो दिव[9] इत्यष्टमम्। अत्र द्वितीयपादे यजता गन्तुमिति' गमिधातुः श्रुत। 'सरस्वत्यभि न[10] इति नवमम्। तत्र चतुर्थे पादे अरणानि गन्मेति गमिधातु श्रुत। पूर्वोक्तयो षष्ठसप्तमयो स्पष्टलिङ्गाभावेऽपि च्छन्दिणो गच्छन्तीति न्यायेनेतर साहचर्याल्लिङ्गवत्त्व द्रष्टव्यम्। अत्रास्मिंस्त्रिमि प्रतीकैरेकस्तृच इतरे षट्तृचा। तदेतत्सर्वं प्रउगशस्त्रम्[11]॥

---

१ संहिता-पाठस्तु 'दद्रिरे वा'-इति। वा=ते-इति भाष्यम्। द्र० आश्व० श्रौ० ८।११।१।

२ ऋ० ७।९०।१-३। ३ ऋ० ७।९०।५-७। ४ ऋ० ७।६४।१-३।

५ ऋ० ७।७०।१-३। ६ ऋ० ७।२९।१-३। ७ ऋ० ७।४२।१-३।

८ ऋ० १०।१७।७। ९ ऋ० ५।४३।११। १० ऋ० ६।६१।१४।

११ ननु प्र वीरया शुचयो दद्रिरे वाम्' इत्यस्या शाकलसहिताया पाठ। अतो वाम्' इति प्रतीकेन भवितव्यम्। किमिद दद्रिरे त इति? अत्राह—स्यादेतदेव यद्यस्या एव सहिताया इद ब्राह्मणम्। एतत्तु बाष्कलसहिताया अपि समानम्। तथा निवित् प्रैषवालखिल्यकुन्तापानाम्। न केवलमैतरेयब्राह्मणमेव आश्वलायनसूत्रमपि तथा। अस्य हि ब्राह्मणस्य तत् सूत्रमिति —इति गोवि दस्वामी।

(॥) ननु दद्रिर इत्यस्मात् कुतस्त्य तेवद परम्।
शाकल्यस्य सहिताया वामिति ह्यध्यगीष्महि॥
सत्य प्रयोगपाठोऽय वामुक्त्वा प्रवायव।
तृच स्याद् वायुदेवत्यस्त्वादितस्तृच इष्यते॥
सर्वानुक्रमणीकार कात्यायनमहामुनि।
ऐन्द्रयश्च या द्विवदुक्ता' इति स्पष्ट ब्रवीतिहि॥
यद्वा बाष्कलपाठोऽय ते हि ते इत्यधीयते।
इद च ब्राह्मण प्राह सहिताद्वयगोचरम्।
मा भूच्चर्चनुद्यपवते सुव आधित्वकग्रहात् (?)॥

( ऋक्सर्वा० ७।९० )—इति षड्गुरुशिष्य।

[प्रउगशास्त्र]—

'प्र वीरया' आदि [शुचि शब्द से युक्त], 'से सत्येन' आदि 'सत्य' शब्द से युक्त, 'दिवि क्षयन्ता' आदि [क्षी धातु युक्त] 'आ विश्ववारा' आदि ['गत' शब्द युक्त], 'अयं सोम' आदि [के द्वितीय पाद 'आ तु प्र याहि हरिवस्तदोकाः' में] ओक शब्द युक्त, 'प्र ब्रह्माणो अङ्गिरसो नक्षन्त' आदि, 'सरस्वतीम्' आदि, 'आ नो दिवः' आदि ['गम्' धातु युक्त], और 'सरस्वत्यभि नः' आदि [का चतुर्थ पाद 'गम्' धातु युक्त] ऋचाएं प्रउगशास्त्र हैं; जो 'शुचि' शब्द युक्त, सत्य शब्द युक्त, निवासार्थक 'क्षी' धातु युक्त, 'गम्' धातु युक्त और 'ओक' शब्द युक्त नवम दिन में नवम दिन का रूप है।

अथत्यं छन्दः प्रशंसति—

तद्वु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः ॥ इति ।

वे [सूक्त] त्रिष्टुप् छन्दस्क हैं, और इस त्र्यह का प्रातःसवन त्रिष्टुप् से सम्बन्धित है।

मरुत्वतीयशस्त्रे ऋग्लिङ्गं दर्शयति—

'तं तमिद्राधसे महे',[1] त्रय इन्द्रस्य सोमा,[2] इन्द्र नेदीय एदिहि,[3] प्र नूनं ब्रह्मणस्पति,[4] रग्निर्नेता,[5] त्वं सोम क्रतुभिः,[6] पिन्वन्त्यपो,[7] नकिः सुदासो रथमिति,[8] तृतीयेनाह्ना समान आतानो नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति ।

[मरुत्वतीयशस्त्र]—

'तं तमिद्राधसे', 'त्रय इन्द्रस्य सोमा', 'इन्द्र नेदीय', 'प्र नूनं ब्रह्मणस्पतिः' 'अग्निर्नेता', 'त्वं सोम क्रतुभिः', 'पिन्वन्त्यपो' और 'नकिः सुदासो रथम्' इत्यादि तृतीय दिन के ही समान क्रमागत नवम दिन में नवम दिन के रूप हैं।

अन्तलिङ्गोपेतं सूक्तं विधत्ते—

'इन्द्रः स्वाहा पिबतु यस्य सोम इति'[9] सूक्तमन्तो वै स्वाहाकारोऽन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति ।

अत्र स्वाहाशब्दो दृश्यते, स च होममन्त्रस्यान्तः, नवममहर्नवरात्रस्यान्तः, अतो लिङ्गसद्भावात् नवमेऽह्न्येतद्युक्तम् ॥

---

१. ऋ० ८.६८.७-९। २. ऋ० ८.२.७-९। ३. ऋ० ८.५३.५-६।
४. ऋ० १.४०.५-६। ५. ऋ० ३.२०.४। ६. ऋ० १.९१.२।
७. ऋ० १.६४.६। ८. ऋ० ७.३२.१०। ९. ऋ० ३.५०। आश्व० श्रौ० ७.७.२१।

'इन्द्र' स्वाहा पिबतु' आदि सूक्त में 'स्वाहा'[1] शब्द ही [हवन मन्त्र के अन्त में होने से] अन्त है और नौवां दिन [द्वादशाहगत नवरात्र का] अन्त है, जो नवम दिन में नौवें दिन का रूप है।

पुनरप्यन्तलिङ्गोपेत सूक्त विधत्ते—

ग यत्साम नभन्य यथा वेरिति'[2] सूक्तमर्चाम तद्वावृधान स्वर्वदि यन्तो वै स्वरन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति।

गायदिति सूक्तस्य 'अर्चाम'-इति द्वितीय पाद । तत्र 'स्वर्वदिति' स्वर्गवाची शब्द श्रूयते, स्वर्गश्च लोकत्रयस्यान्त ॥

'गायत्साम नभन्य' इत्यादि सूक्त के 'अर्चाम तद वावृधान स्वर्वद्' आदि द्वितीय पाद में [स्वर्गवाची] 'स्व' शब्द [स्वर्ग के लोकत्रय के अन्त में होने से] अन्त है[3], जो नौवें दिन में नौवें दिन का रूप है।

प्रकारान्तरेणान्तवत्सूक्त विधत्ते—

'तिष्ठा हरी रथ आ युज्यमानेति'[4] सूक्तमन्तो वै स्थितमन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति।

तिष्ठेति स्थितिलक्षणो धात्वर्थ श्रूयते, स च गमनस्यान्त ॥

'तिष्ठा हरी इत्यादि सूक्त में ['तिष्ठ' शब्द के गमन के अन्त में रुकने का वाचक होने से] स्थित होना ही अन्त है और नौवां दिन [नवरात्र का] अन्तिम दिन है, जो नौवें दिन में नौवें दिन का रूप है।

पुनरपि तथाविध तल्लिङ्गोपेत सूक्त विधत्ते—

'इमा उ त्वा पुरुतमस्य कारोरिति' सूक्त[5], धियो रथेष्ठामित्यन्तो वै स्थितमन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति।

'इमा उ त्वा'-इति सूक्तस्य 'धियो रथेष्ठाम्'-इति तृतीय पाद । तत्र स्थामिति स्थितिधात्वर्थो गमनस्यान्त श्रूयते ॥

---

१ (i) सूयते हि—'स्वाहाकारान्तैर्मन्त्रैर्नचेन्मन्त्रे पठित'—आश्व० श्रौ० १ ११ १० ।
(ii) 'वषमन्त स्वाहाकार । (तथा ?) प्रदानार्थतया स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हवि प्रदीयते इति श्रुत । प्रदान च प्रक्षेप । स हि यागस्यान्त । अन्तो वै स्वाहाकार इत्युच्यते लक्षणया ।'—इति गोविन्दस्वामी ।

२ अन्तो वै स्वरिति मायारणानि दिवश्चादित्यस्य च । स्वर्गो हि पुरुषार्थाना परमा काष्ठा, आदित्योऽप्यपवर्गहेतुतया'—इति गोविन्दस्वामी ।

३ ऋ० १ १७३ । ४ ऋ० ३ ३५ । ५ ऋ० ६ २१ ।

'इमा उ त्वा' आदि सूक्त के 'धियो रयेष्टाम्' आदि तृतीय पाद में ['स्याम्' पद गमन के अन्त का वाचक होने से] स्थित होना ही अन्त है और नौवां दिन [नवरात्र का] अन्त है। अतः यह नौवें दिन में नौवें दिन का रूप है।

एतेष्वन्तवत्सु सूक्तेषु च्छन्द. प्रशंसति—

तद् त्रैष्टुभं तेन प्रतिष्ठितपदेन सवन दाधारायतनादेवैतेन न प्रच्यवते ॥ इति।

वे [अन्त के वाचक सूक्त] त्रिष्टुभ् छन्दस्क हैं, प्रतिष्ठित-पद [अर्थात् नियत अक्षर संख्या] से युक्त उस [सूक्त] से [माध्यन्दिन] सवन [एवं मरुत्वतीय शस्त्र] धारित होता है। अतः इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता है।

तुल्यसमाप्तिकं सूक्तं विधत्ते—

'प्र मन्दिने पितुमदर्चता वच इति' सूक्त समानोदर्कं, नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति।

अत्र सर्वास्वृक्षु 'मरुत्वन्तं सख्याय हवामहे' इति चतुर्थपादस्यैकत्वात् समानोदर्कत्वम् ॥

'प्र मन्दिने' इत्यादि सूक्त की सभी ऋचाओं में ['मरुत्वन्तम्' आदि चतुर्थ पाद एक-सा होने से] समान समाप्ति नवम दिन में नवम दिन का रूप है।

तस्मिन् सूक्ते निविद्धानं विधत्ते—

तद् जागतं, जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति, तद्यैतच्छन्दो वहति, यस्मिन्निविद्धीयते, तस्माज्जगतीषु निविदं दधाति ॥ इति।

उस सूक्त की ऋचाएं जगती छन्दस्क हैं, और जगती ही इस त्र्यह के मध्यन्दिन [सवन] के वाहक हैं, अतः जिस [छन्द] में निविद् [पद-समूह] प्रक्षिप्त होते हैं, वही छन्द इस [सवन] का निर्वाहक होता है। इस [निर्वाहकत्व] के कारण जगती ऋचाओं में निविद् प्रक्षिप्त होते हैं।

छन्दोद्वयं मिलित्वा प्रशंसति—

मिथुनानि सूक्तानि शस्यन्ते, त्रैष्टुभानि च जागतानि च, मिथुनं वै पशवः, पशवश्छन्दोमाः, पशूनामवरुद्ध्यै ॥ इति।

मिथुनस्यैकत्वेऽपि बहुवचनं पूजार्थम् ॥

मिथुन [जोड़े] सूक्तों का शंसन करते हैं—त्रिष्टुभ् और जगती के जोड़े का। [गौ एवं अश्वादि] पशु भी मिथुनरूप हैं और [चतुर्विंश, चतुश्चत्वारिंश और अष्टा-

१. ऋ० १.१०१।

चत्वारिंश नामक स्तोमों के द्वारा सपादित] छन्दोम [पशु प्राप्ति के साधन होने से] पशु रूप हैं। [अत. छन्दोम युक्त इस त्र्यह में छन्द-द्वय का शसन] पशुओं की प्राप्ति के लिए होता है।

द्विविधसूक्तगतमस्या प्रशसति—

**पञ्च सूक्तानि[1] शस्यन्ते, पञ्चपदा पङ्क्ति, पाङ्क्तो यज्ञ, पाङ्क्ता पशव, पशवश्छन्दोमा, पशूनामवरुद्ध्यै ॥** इति।

इस प्रकार [चार त्रिष्टुप् और एक जगती छन्दस्क कुल] पांच सूक्तों का शसन करते हैं [पांच सख्या के योग से] पांच पादों से युक्त पङ्क्ति [छन्द होता] है और यज्ञ [हविष्पङ्क्ति आदि भेद से] पाङ्क्त है, पशु [चार पैर और एक मुख से] पाङ्क्त हैं, और [चतुर्विंश आदि स्तोमों से सपादित] छन्दोम [पशु प्राप्ति के साधन होने से] पशु रूप हैं, [अत छन्दोम युक्त इस त्र्यह में त्रिष्टुप् और जगती छन्दस्क सूक्तों का शसन] पशुओं की प्राप्ति के लिए होता है।

निष्केवल्यशस्त्रे बृहत्सामसाध्यपृष्ठस्तोत्रस्याधारभूत स्तोत्रिय तृच तदनुरूप च विधत्ते—

**'त्वामिद्धि हवामहे'[2] 'त्व ह्येहि चेरव इति'[3] बृहत्पृष्ठ भवति नवमेऽहनि ॥** इति।

अयुग्मस्याह्नो राथतरत्वेऽपि बृहत्सम्बन्धस्य वाचनिकत्वान्नवमेऽहनि तद्योग्यता ॥

[निष्केवल्य शस्त्र]—

'त्वामिद्धि हवामहे' और 'त्व ह्येहि चेरवे' इत्यादि ऋचा नवम दिन में बृहत्पृष्ठ होती है।

तृतीयेऽहनि विहितान्यत्र पुनर्विधीयन्त—

**'यद्वावानति'[4] धाय्याऽच्युता,ऽभि त्वा शूर नोनुम इति[5] रथतरस्य योनिमनु निवर्तयति, राथतर ह्येतदहरायतनेनेन्द्र त्रिधातु शरणमिति[6] सामप्रगाथस्त्रिवान्नवमेऽहनि नवमस्याह्नो रूप, 'त्यमू षु वाजिन देवजूतमिति'[7] तार्क्ष्योऽच्युत ॥ २० ॥** इति।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चम पञ्चिकाया चतुर्थाध्याये (चतुर्विंशाध्याय) प्रथम खण्ड ॥ १ ॥ (२०) [१७३]

---

१ 'इन्द्र स्वाहा' 'गाय साम', 'तिष्ठा हरी' 'इमा उ त्वा'—इति चत्वारि त्रैष्टुभानि, 'प्र मन्दिने'—इत्येक जागतम् सङ्कलनया पञ्च (८२०–८२२ पृ०)।

२ ऋ० ६ ४६ १।  ३ ऋ० ८ ६१ ७।  ४ ऋ० १० ७४ ६।

५ ऋ० ७ ३२ २२।  ६ ऋ० ६ ४६ ९,१०।  ७ ऋ० १० १७८ १।

'यद्वावान' इत्यादि धाय्या [पूर्व में विहित होने से] अच्युत है। 'अभि त्वा शूर' इत्यादि ऋचा में रथन्तर साम [उत्पन्न है अतः] योनिभूत इस प्रगाथ का [पूर्वोक्त धाय्या के] बाद में शंसन करता है क्योंकि [अयुग्म स्वरूप] स्थान के द्वारा यह दिन रथन्तर सम्बन्धी है। 'इन्द्र त्रिधातु' इत्यादि साम-प्रगाथ है जो 'त्रि' शब्द से युक्त नवम दिन में नवम दिन का रूप है। 'त्यमू षु' इत्यादि तार्क्ष्य देवताक सूक्त [पूर्व में विहित होने से] अच्युत है।

॥ इस प्रकार चौबीसवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥१॥

## अथ द्वितीयः खण्डः

अथ गमिधातुयुक्तं सूक्तं विधत्ते—

**'सं च त्वे जग्मुर्गिर इन्द्र पूर्वीरिति'[1] सूक्तं, गतवन्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति ।**

जग्मुरिति गमिधातुः ॥

२१ [xxiv. २] 'सं च त्वे जग्मुः' इत्यादि सूक्त गम् धातु के रूप ['जग्मुः'] से युक्त नवम दिन में नवम दिन का रूप है।

क्षेतिधातुलिङ्गकं सूक्तं विधत्ते—

**'कदा भुवन् रथक्षयाणि ब्रह्मेति'[2] सूक्तं, क्षेतिवदन्तरूपं, क्षेतीव वा अन्तं गत्वा नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति ।**

कदा भुवन्नित्यत्र क्षयाणीति क्षेतिधातुरूपं श्रूयते। क्षेतिधातुश्चान्तरूपः। कथमेतदिति ? तदुच्यते—मार्गस्यान्तं गत्वा 'क्षेतीव वै' क्वचिन्निवसत्येव, अतो निवासार्थवाचिनः क्षेतिधातोरन्तरूपत्वम् ॥

'कदा भुवन् रथक्षयाणि' इत्यादि सूक्त निवासार्थक 'क्षि' धातु के रूप 'क्षयाणि' [=रहना] से युक्त है, [मार्ग के] अन्त में जाकर कहीं न कहीं निवास ही करता है अतः यह अन्त स्वरूप[3] नवम दिन में नवम दिन का रूप है।

सत्यलिङ्गकं सूक्तं विधत्ते—

**आ सत्यो यातु मघवाँ ऋजीषीति[4] सूक्तं, सत्यवन्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति ।**

सत्यशब्दोऽत्र विस्पष्टः ॥

---

१. ऋ० ६.२८ । २. ऋ० ६.३५ ।

३. इव = एव; छन्दोमानामन्तं गत्वा सर्वगणः सुखं क्षेति निवसति—इति षड्गुरुशिष्यः ।

४. ऋ० ४.१६ ।

'आ सत्यो यातु' इत्यादि सूक्त सत्य' शब्द से युक्त नवम दिन में नवम दिन का रूप है।

अन्तलिङ्गोपत सूक्त विधत्ते—

**तत्त इन्द्रिय परम पराचैरिति¹ सूक्तमन्तो वै परममन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति ।**

तत्ते' इति सूक्ते परमशब्द उत्कर्षवाची विद्यते उत्कर्षादधिकस्य कस्यचिदभावात् परमशब्दस्यान्तवाचित्वम् ॥

'तत्ते इन्द्रिय परमम्' इत्यादि सूक्त में उत्कर्ष का वाचक 'परम' शब्द ही अन्त है [क्योंकि उससे अधिक कुछ है नहीं], जो नवम दिन में नवम दिन का रूप है।

स च त्वे'इत्यादिसूक्तचतुष्टयगत छन्द प्रशसति—

**तदु त्रैष्टुभ, तेन प्रतिष्ठितपदेन सवन दाधारायतनादेवैतेन न प्रच्यवते ॥ इति ।**

वह सूक्त तो त्रिष्टुप् छन्दस्क है, प्रतिष्ठित-पद [अर्थात् नियत अक्षर सख्या से युक्त उस [सूक्त] से माध्यन्दिन] सवन [गत निष्केवल्यशस्त्र] धारित होता है। अत इस [सूक्त] से वह अपने स्थान से कभी भी च्युत नहीं होता।

अन्तलिङ्गकमन्यत् सूक्त विधत्ते—

**'अह भुव वसुन पूर्व्यस्पतिरिति² सूक्तमह धनानि सजयामि शश्वत इत्यन्तो वै जितमन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति ।**

'अह भुवम्'इति सूक्तस्य अह धनानि इति द्वितीय पाद । तत्र 'जयामि'इति श्रूयते जयश्च युद्धस्यान्त ॥

'अह भुव वसुन' इत्यादि सूक्त का 'अह धनानि सजयामि' इत्यादि द्वितीय पाद 'जयामि' शब्द युक्त है, [वस्तुत युद्ध का अन्त होने से] 'जितम्' [=जीतना] ही अन्त है, जो नवम दिन में नवम दिन का रूप है।

तस्मिन् सूक्ते निविद्धान विधत्ते—

**तदु जागत,-जगत्यो वा एतस्य त्र्यहस्य मध्यदिन वहन्ति, तद्वैतच्छन्दो वहति, यस्मिन्निविद्धीयते, तस्माज्जगतीषु निविद दधाति ॥ इति ।**

उस सूक्त की ऋचाएँ तो जगती छन्दस्क हैं और जगती ही इस त्र्यह के मध्यन्दिन [सवन] के वाहक हैं। अत जिस [छन्द] में निविद् [पद समूह] प्रक्षिप्त होते हैं, वही छन्द इस [सवन] का निर्वाहक होता है। इस [निर्वाहकत्व] के कारण जगती ऋचाओं में निविद् प्रक्षिप्त होते हैं।

---

१ ऋ० १ १०३। २ ऋ० १० ४८।

सूक्तगत छन्दोद्वय सूक्तसंख्या च प्रशंसति—

मिथुनानि सूक्तानि शस्यन्ते,—त्रैष्टुभानि च जागतानि च, मिथुन वै पशव, पशवश्छन्दोमा, पशूनामवरुद्ध्यै पञ्च पञ्च सूक्तानि शस्यन्ते, पञ्चपदा पङ्क्ति, पाङ्क्तो यज्ञ, पाङ्क्ता पशव, पशवश्छन्दोमा, पशूनामवरुद्ध्यै, तानि द्वेधा पञ्चान्यानि पञ्चान्यानि दश सपद्यन्ते, सा दशिनी विराडन्न विराडन्न पशव, पशवश्छन्दोमा, पशूनामवरुद्ध्यै ॥ इति ।

मरुत्वतीयनिष्केवल्यशस्त्रद्वयगतसूक्तापेक्षया 'पञ्च पञ्चेति' द्विरुक्ति ॥

मिथुन [अर्थात् जोड़े] सूक्तों का शसन करते हैं—त्रिष्टुप् और जगती के मिथुन का। [गौ एव अश्वादि] पशु भी मिथुन रूप हैं, और [चतुर्विंश आदि स्तोमों के द्वारा सपादित] छन्दोम [पशु प्राप्ति के साधन होने से] पशु रूप है, [अत छन्दोमयुक्त इस त्र्यह में छन्दद्वय का शसन] पशुओं की प्राप्ति के लिए होता है। [इस प्रकार मरुत्वतीय और निष्केवल्यशस्त्रगत] पाँच-पाँच सूक्तों का शसन करते हैं, पङ्क्ति छन्द पाच पादों से युक्त होता है, और यज्ञ [हविष्पङ्क्ति आदि भेद से] पाङ्क्त है, पशु [चार पैर और एक मुख से] पाङ्क्त है और छन्दोम [पशु प्राप्ति के साधनत्व के कारण] पशु रूप है, [अत पांच-पांच सूक्तों का शसन] पशुओं की प्राप्ति के लिए होता है। वे [पूर्वोक्त सूक्त] दो प्रकार से विभक्त हैं—१ [मरुत्वतीयशस्त्रगत] पाच सूक्त अलग हैं, और २ [निष्केवल्यशस्त्रगत] पाँच सूक्त अलग हैं, उन सभी को मिलाकर दस हो जाते हैं, वह [सूक्तों का] दशक विराट् छन्द रूप होता है। [अन्न का साधन होने से] विराट् [छन्द] अन्न है, और [क्षीरादि रूप में पशुओं में उत्पन्न होने से] पशु अन्न हैं, और वे पशु [चतुर्विंश आदि स्तोमों से सम्पादित होने से] छन्दोम स्वरूप है। अत इस सम्बन्ध से ये [पञ्चकद्वय] पशुओं की प्राप्ति के लिए होता है।

तृतीयेऽहनि विहितौ वैश्वदेवस्य प्रतिपदनुचरावत्रापि विधत्ते—

तत्सवितुर्वृणीमहे[1],अद्या नो देव सवितरिति[2] वैश्वदेवस्य प्रतिपदनुचरौ राथंतरेऽहनि नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति ।

[वैश्वदेवशस्त्र]—

'तत्सवितुर्वृणीमहे' और 'अद्या नो देव' आदि तृच वैश्वदेव [शस्त्र] के प्रतिपद और अनुचर हैं जो रथन्तरसाम सम्बन्धी दिन [अहर्गण] नवम दिन में नवम दिन का रूप है।

गन्तलिङ्गक तृचात्मक सूक्त विधत्ते—

दोषो आगादिति[3] सावित्रमन्तो वै गतमन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति ।

---

१ ऋ० ५.८२.१ ३। २ ऋ० ५.८२.४-६।

३ ७७६ पृ० (२२.८) टिप्पण्या मन्त्रपाठादिव द्रष्टव्यम्।

'आगात्'इति गमिधात्वर्थं । गमन च स्थितेरन्त अतोऽन्तत्व लिङ्गम् ॥

'दोषो आगात्' इत्यादि सवितृदेवताक तृचात्मक सूक्त में ['आगात्' पद गम् धातु से युक्त होने से] *'गतम्' अर्थात् जो चला गया वही अन्त है,* जो नवम दिन में नवम दिन का रूप है।

शुचिलिङ्गक सूक्तस्थानीय तृच विधत्ते—

**प्र वा महि द्यवी अभीति[1], द्यावापृथिवीय, शुची उप प्रशस्तय इति शुचिवन्नवमेऽहनि नवमस्याह्नो रूपम् ॥** इति।

'महि द्यवी'–इति श्रवणात् इद द्यावापृथिवीयम्। तस्य तृतीयपादे 'शुची उप'इति शुचिशब्द श्रूयते ॥

'प्र वा महि' इत्यादि द्यावापृथिवी देवताक तृच का 'शुची उप आदि तृतीय पाद 'शुचि' शब्द से युक्त नवम दिन में नवम दिन का रूप है।

त्रिशब्दोपेत सूक्तस्थानीय तृच विधत्ते—

**इन्द्र इषे ददातु नस्ते नो रत्नानि धत्तनेत्यार्भव, त्रिरा साप्तानि सुन्वत इति त्रिवन्नवमेऽहनि नवमस्याह्नो रूपम् ॥** इति।

'इन्द्र इषे'[2] इत्येका, ते नो रत्नानीति'[3] द्वे, त्रितय मिलित्वा ऋभुदेवताक सूक्तम्। 'ऋभुक्षणमृभुमिति' श्रवणात्[4]। 'त्रिरा साप्तानीति'[5] पादे त्रिशब्द श्रुत ॥

'इन्द्र इषे ददातु' और 'ते नो रत्नानि' इत्यादि ऋभुदेवताक तृच का 'त्रिरा साप्तानि' इत्यादि पाद 'त्रि' शब्द युक्त नवम दिन में नवम दिन का रूप है।

पादद्वयोपेता ऋचो विधाय प्रशसति—

**बभ्रुरेको विषुण. सूनरो युवेति[6] द्विपदा शसति, द्विपाद्वै पुरुषश्चतुष्पादा पशव, पशवश्छन्दोमा, पशूनामवरुद्ध्यै, तद्यद्द्विपदा. शसति, यजमानमेव तद् द्विप्रतिष्ठ चतुष्पात्सु पशुषु प्रतिष्ठापयति ॥** इति।

'बभ्रुरेको विषुण' इत्यादि द्विपदा ऋचाओं का शसन करता है, पुरुष दो पैरों वाला है, और पशु चार पैरों वाला है, [क्योंकि पशु प्राप्ति के साधनभूत] छन्दोम पशु रूप है, [अत द्विपदाओं का शसन] पशुओं की प्राप्ति के लिए ही होता है। इस प्रकार जो द्विपदाओं का शसन करता है तो दो पैरों वाले उस यजमान को ही चौपाए पशुओं में प्रतिष्ठित करता है।

---

१ ऋ० ४५६ ५-७। २ ऋ० ८९३ ३४। ३ ऋ० १ २० ७ ८।
४ ऋ० ८९३ ३४। ५ ऋ० १ २० ७। ६ ऋ० ८२९ १–१०।

त्रिशब्दोपेतं वैश्वदेवं सूक्तं विधत्ते—

'ये त्रिंशति त्रयस्परः इति'[1] वैश्वदेवं त्रिवन्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति।

त्रिंशति इति श्रवणात् त्रिवत्त्वम्। 'त्रय' इति त्रिशब्दो विस्पष्टः ॥

'ये त्रिंशति' इत्यादि वैश्वदेव देवताक सूक्त 'त्रि' शब्द युक्त नवम दिन में नवम दिन का रूप है।

तत्सूक्तगतं छन्दः प्रशंसति—

तान्नु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः ॥ इति।

'तान्नु' वैश्वदेवशस्त्रे प्रोक्तानि तान्यपि सूक्तानि ॥

[द्विपदाओं को छोड़कर] वे [तन्नविनु से लेकर 'ये त्रिंशति' इत्यादि तक सूक्त] तो गायत्री छन्दस्क हैं और इस त्र्यह का तृतीय सवन गायत्री से सम्बन्धित है।

शस्त्रान्तस्य प्रतिपदं विधत्ते—

वैश्वानरो न ऊतय इत्याग्निमारुतस्य प्रतिपदा प्र यातु परावत इत्यन्तो वै परावतोऽन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति।

अत्र सूक्तोक्ते[2] तृचे 'परावत' इति शब्दो दूरदेशवाची, स च देशो नास्त्यन्त इत्यन्तवत्त्वं लिङ्गम् ॥

[आग्निमारुतशस्त्र]—

'वैश्वानरो न ऊतय' इत्यादि आग्निमारुत [शस्त्र] का प्रतिपद् तृच है। उस [तृच] के 'आ प्र यातु परावत' इत्यादि पाद में दूरदेश का वाची 'परावत' शब्द [मार्ग के अन्तत्व का सूचक होने से] अन्त ही है और नवम दिन भी [नवरात्र का] अन्तिम दिन है, अतः यह नवम दिन में नवम दिन का रूप है।

प्रकारान्तरेणान्तलिङ्गं सूक्तं विधत्ते—

'मरुतो यस्य हि क्षय इति'[3] मारुतं, क्षेतिवदन्तरूपं, क्षेतीव वा अन्तं गत्वा नवमेऽहनि नवमस्याह्नो रूपम् ॥ इति।

'मरुत' इति श्रवणात् 'मारुतम्'। 'क्षय' इति श्रवणात् 'क्षेतिवत्' क्षयतिधातुयुक्तम्। स च धात्वर्थोऽन्तरूपम्। कथमन्तरूपमिति ? तदुच्यते। सर्वो हि पुरुषः मार्गस्यान्तं गत्वा 'क्षेतीव वै' क्वचिन्निवसत्येव, तस्मादन्तलिङ्गम् ॥

---

१ ऋ० ८.२८।

२ आश्व० श्रौ० ८।११।४। तत्र 'वैश्वानरो न ऊतय'–इति प्रथमा, 'वैश्वानरो न आगमत्'–इति द्वितीया, 'वैश्वानरो अङ्गिरोभ्य'–इति तृतीया।

३ ऋ० १.८६।

'मरुतो यस्य हि क्षये' इत्यादि मरुद्देवताक सूक्त 'दूरस्थ' के वाचक 'क्षि' धातु के रूप 'क्षये' से युक्त है [वस्तुत मार्ग के अन्त में जाकर सभी व्यक्ति कहीं न कहीं निवास ही करते हैं अत ] यह अन्त स्वरूप है, जो नवम दिन में नवम दिन का रूप है।

अच्युतत्वलिङ्गयुक्तामृच विधत्त—

**'जातवेदसे सुनवाम सोममिति'[1] जातवेदस्याऽच्युता ॥** इति।

'जातवेदसे सुनवाम' इत्यादि जातवेद देवताक ऋचा [पूर्व में विहित होने से] अच्युत है।

जातवेदोवाचकाग्निशब्दोपेत सूक्त विधत्ते —

**'प्राग्नये वाचमीरयेति'[2] जातवेदस्य समानोदर्कं, नवमेऽहनि नवमस्याह्ना रूपम् ॥** इति।

एतदीयास्वृक्षु 'स न पर्षदति द्विष' इति पादेन समाप्तिदर्शनात् समानोदर्कत्वम् ॥

'प्राग्नये' इत्यादि [में जातवेद का वाचक 'अग्नि' शब्द होने से] जातवेददेवताक सूक्त [की सभी ऋचाओं में 'स न पर्षदति द्विष' आदि पाद होने से] समान समाप्ति से युक्त नौवें दिन में नौवें दिन का रूप है।

तस्य पादस्य पुन पुनरावृत्ति दर्शयति—

**स न पर्षदति द्विष, स न पर्षदति द्विष इति शसति, बहु वा एतस्मिन नवरात्रे, किंच किंच वारण क्रियते, शान्त्या एव, तद्यत्स न पर्षदति द्विष, स न पर्षदति द्विष इति शसति, सर्वस्मादेवैनास्तदेनस प्रमुञ्चति ॥** इति।

'स न' इत्यादिपादस्य सर्वास्वृक्षु पठितस्य सप्तत्यर्थ वीप्सारूपेण द्विरुक्ति। एतमेव पाद पुन पुन शसतीत्यत्र कोऽभिप्राय? इति सोऽभिधीयते। एतस्मिन्नवरात्रे त्रिविध भ्यहसमष्टिरूपे प्रयोगाधिक्यात् यदा तदा विस्मृत्य किमपि 'वारण वारणीय निषिद्धानुष्ठान 'बहु वै प्रभूतमेव क्रियते'[3], अत स्वशान्त्यर्थमेव पुन पुन शस्यते। तेन 'स न इत्यादे पुन पुन शसनेन, तस्मात् सर्वस्मात् निषिद्धाचरणपापाद् एतान् ऋत्विग्यजमानान् प्रमोचयति। तस्य पादस्यायमर्थ —यस्याग्नय स्तुतिरूपा वागीर्यते, सोऽग्नि पापरूपान् शत्रूनतिक्रम्य 'न 'अस्मान् पर्षद् विघ्नपरिहारेण कर्मपार नयत्विति ॥

'स न' इत्यादि, 'स न इत्यादि [जिस अग्नि के लिए स्तुति रूपी वाणी उच्चरित होता है, वह अग्नि पापरूपी शत्रुओं का अतिक्रमण कर (विघ्न परिहार द्वारा) हमें कर्म

---

१ ऋ० १ ९९ १।　　२ ऋ० १० १८७।

३ 'बहु=विपुल, वारण=निरोध। किञ्चित् किञ्चिदौपदेशं प्राकृते निवर्तिते प्रयोगो हस्तरोधोऽनुभूयते वा स्यात्।' इति षड्गुरुशिष्य।

के पार ले जावे] पाद का पुन. पुनः शंसन करता है। [त्रिविध त्र्यह के समष्टि रूप] इन नवरात्र में [प्रयोगाधिक्य के कारण विस्मृतिवशात्] बहुत से निषिद्ध अनुष्ठान किये जाते हैं [अन. पुनः पुन. शंसन उनकी] शान्ति के लिए ही होता है। वह जो 'स नः' इत्यादि, 'स नः' इत्यादि पाद का पुन. पुनः शंसन करता है उससे सभी [निषिद्ध आचरण रूप] पाप से इन [ऋत्विज व यजमानों] को मुक्त करता है[1]।

एतच्छस्त्रगतत्रृचेषु च्छन्दः प्रशंसति—

**तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः ॥ २१ ॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया चतुर्थाध्याये (चतुर्विंशाध्याये) द्वितीयः खण्डः ॥२॥ (२१) [१७४]

वे [तीन आग्निमारुत सूक्त] तो गायत्री छन्दस्क हैं और इस त्र्यह का तृतीयसवन तो गायत्री से सम्बन्धित है।

॥ इस प्रकार चौबीसवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीय खण्डः

द्वादशाहे मध्यमीयोदयनीयत्र्यहरूप आद्यन्ते ये अहनी, तयोर्मध्ये दशरात्रोऽस्ति, तस्मिंश्च त्रयो भागा,—पृष्ठ्य षडह एको भागः, छन्दोमनामकास्त्र्योऽह्वविशेषा द्वितीयो भागः, दशममहस्तृतीयो भाग तस्य भागस्य विशेषतया प्रशंसा कर्तव्या। इतरभागयोरप्यत्र या प्रशंसा प्रतीयते, साऽपि विषयस्य दशमस्याह्न- प्रशंसार्थैव, तस्मिन्नहनि प्रशंसातिशयस्य गम्यमानत्वात्। तत्र चत्वारो दृष्टान्ता विवक्षिताः। तेषां मध्ये प्रथमेन दृष्टान्तेन प्रशंसति—

**पृष्ठ्यं षळहमुपयन्ति; यथा वै मुखमेवं पृष्ठ्य. षळहस्तद्यथाऽन्तरं मुखस्य जिह्वा तालु दन्ता., एवं छन्दोमा., अथ येनैव वाचं व्याकरोति, येन स्वादु चास्वादु च विजानाति, तद्दशममह., ॥** इति ।

---

1 'नवरात्र' इति प्रोक्तो दुर्ज्ञानो दुर्वचस्तथा।
रूपशब्दबहुत्वेन रूपवानिति नामवान् ॥
नामोरवेन्परसंज्ञा स्वाहा वाऽऽङिति वै यथा।
संहिता घनिता गृह्य विनिह्य दक्षिणा यथा ॥
तवणा तवणा मूलं मुतल् मुन्तु पुनस्तु पिन्।
हङ्कारित-टिटाटीति प्राहुर्बह्वृचपुङ्गवाः ॥
रूपवान् नाम भागोऽयं पञ्चविंशति खण्डकः।
पूर्वैकोनपञ्चाशच्छतेन सह ते गताः ॥
खण्डाः सन्त सहतिश्च चत्वारश्चेति गृह्यताम्।—इति षड्गुरुशिष्यः।

याज्ञिका दशरात्रे पृष्ठ्य षडहमनुतिष्ठन्ति, स मुखस्थानीय, मुखस्याभ्यन्तरे जिह्वा तालु दन्ताश्चेति त्रयोऽवयवास्तिष्ठन्ति, तत्स्थानीयास्त्रयश्छन्दोमा । अथ 'तद्' यन विलक्षणेन येनैव वागिन्द्रियेण 'वाच व्याकरोति' शब्दमुच्चारयति । येन च रसनेन्द्रियेण स्वाद्वस्वादुविभाग जानाति, तदिन्द्रियद्वयस्थानीयमेतद्दशममह ॥

[दशम अहः]—

[द्वादशाह के प्रायणीय और उदयनीय रूप प्रथम और अन्तिम दिन के मध्य दस रात्रियाँ होती हैं। उनके तीन विभाग हैं १ पृष्ठ्य षडह, २ छन्दोम नामक त्र्यह विशेष और ३. दशम अह॰। यहाँ दशम अहः की प्रशसा करते हैं¹]—

१. २२ [xx ३] [याज्ञिक जन दशरात्र में] पृष्ठ्य षडह का अनुष्ठान करते हैं, जैसे [शरीर में] मुख है वैसे ही [द्वादशाह में] पृष्ठ्य षडह होता है; और [मुख के] भीतर जैसे जिह्वा, तालु एव दन्त हैं वैसे ही [तीन] छन्दोम हैं, और जिस [वागिन्द्रिय] से शब्द उच्चरित होता है और जिस [रसनेन्द्रिय] से स्वादु [= मीठा] और अस्वादु [=बिना मीठे] के विभाग को जानता है, वह दशम अह है।

द्वितीयेन दृष्टान्तेन प्रशसति—

**यथा वै नासिके एवं पृष्ठ्य षळहस्तद्यथाऽन्तर नासिकयोरेव छन्दोमा, अथ येनैव गन्धान् विजानाति ²तद्दशममहः ॥** इति ।

---

१ (।) उक्थान्तग्रन्थसङ्ख्या षट्सहस्रत्रयद्वयम् ।
सहस्रमुक्त्वा द्वे च शते पञ्चसहस्रकम् ॥
वर्णितो नवरात्रोऽथ दशम वक्ष्यते त्वह ।
द्वादशाहमध्यगन्ता दशरात्रस्त्रिभक्तिक. ॥
पृष्ठ्य. षडह छन्दोमास्त्र्यहश्च दशम त्विति ।
अत्राद्यमक्ति दशम चतुरादौ प्रशसति ॥—इति षड्गुरुशिष्य: ।

२. तदिति तत्र लुप्तोपमा, यथा सिंहो देवदत्त, व्याघ्रो देवदत्त, अग्निर्माणवक. इति । तद्वद् दशममह इति यावत् । दशममहरित्यनुवादः । यथा पृष्ठ्य षळहमुपयन्ति इति । ननु छन्दोमाना पृष्ठ्यावयवत्वात् तदान्तरसस्तवो युक्तः । आह च—पूर्वस्त्र्यह. पुनश्छन्दोमा इति । दशमस्य पुनरह्न. पृष्ठान्तरत्व कथम् ? इति, अत्रोच्यते—पाष्ठिक प्रथममहरग्निष्टोमसस्थम् । आन्तर च तत् षडहस्य । आह च—'अग्निष्टोमः प्रथमं षोडशी चतुर्थम् उक्थ्या इतरे'—इति । अविवाक्यम् अप्यहरग्निष्टोमसस्थमेव, आह च—'दशमेऽहन्यनुष्टुभाम्'—इति प्रक्रम्योपसहारे 'अग्निष्टोम इदमह.'—इति अतः सस्थासामान्यात् षडहाभ्यन्तरत्वया स्तुति —इति गोविन्दस्वामी ।

छिद्रद्वययुक्तत्वेन नासाद्वयविवक्षया 'नासिके' इति द्विवचनम्। तथा 'अन्तरं' मध्यवर्ति छिद्रं, गन्धग्राहकघ्राणेन्द्रियस्थानीयं दशममहः ॥

जैसे नासिका है, वैसे ही 'पृष्ठ्य षडह' है, और उस [नासिका] के भीतर जैसे [छिद्र] हैं वैसे ही 'छन्दोम' हैं, और जिस [घ्राणेन्द्रिय] से गन्धों को पहचानता है, वह दशम अह है।

तृतीयं दृष्टान्तं प्रदर्शयति—

**यथा वा अक्ष्येवं पृष्ठ्यः षळहस्तद्यथान्तरमक्ष्णः कृष्णमेवं छन्दोमा, अथ यैव कनीनिका, येन पश्यति, तद्दशममहः ॥** इति।

अपिशब्देन शुक्लमण्डलसहितं सर्वं गोलकं विवक्षितम्। तत्र भागत्रयसद्भावादन्यत्र—"त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिका"[1] इति। शुक्लमण्डलमध्ये कृष्णमण्डलं, तस्य मध्ये स्वच्छा वर्तुलाकारा कनीनिका, तदवस्थितेन चक्षुरिन्द्रियेण जना रूपं पश्यन्ति। तत्र शुक्लमण्डलगोलकस्थानीयः पृष्ठ्यः षडहः, कृष्णमण्डलस्थानीयाश्छन्दोमाः, कनीनिकावस्थितेन्द्रियस्थानीयं दशममहः ॥

जैसे आँख [शुक्ल मण्डलयुक्त सम्पूर्ण गोलक] है, वैसे ही पृष्ठ्य षडह है, उस [आँख] के भीतर जो आँख का काला भाग है वैसे ही छन्दोम हैं, और जो कनीनिका [= काले भाग के मध्य वर्तुलाकार पुतली] है जिस [चक्षुरिन्द्रिय] से व्यक्ति देखता है, वह दशम-अह है।

चतुर्थं दृष्टान्तं प्रदर्शयति—

**यथा वै कर्ण, एवं पृष्ठ्यः षळहस्तद्यथान्तरं कर्णस्यैवं छन्दोमा, अथ येनैव शृणोति तद्दशममहः ॥** इति।

कर्णशब्देन शष्कुल्याकारं गोलकमुच्यते। तत्स्थानीयः पृष्ठ्यः षडहः। तस्य कर्णस्य 'अन्तरं' मध्यवर्ति छिद्रं तत्स्थानीयाश्छन्दोमाः। तच्छिद्रावस्थितेनेन्द्रियेण जनः शब्दं 'शृणोति', तदिन्द्रियस्थानीयं दशममहः ॥

जैसे कर्ण है वैसे ही पृष्ठ्यषडह है, उस [कर्ण] के भीतर जैसे [छिद्र] है वैसे ही छन्दोम हैं, और जिस [कर्णेन्द्रिय] से व्यक्ति [शब्द] सुनता है वह दशम-अह है।

अथ तस्मिन् दशमेऽहनि वाचिनियमं विधत्ते—

**श्रीर्वै दशममहः—श्रियं वा एत आगच्छन्ति, ये दशममहरागच्छन्ति, तस्माद्दशममहरविवाक्यं भवति, मा श्रियोऽववादिष्मेति दुरववदं हि श्रेयसः ॥** इति।

---

१ ऐ० ब्रा० २ ७ ५ ४।

यदेतद्दशममह, सा 'श्रीर्वै' भोग्यवस्तुसमृद्धिस्वरूपमेव, 'ऋध्नोति यो द्वादशाहेन यजते'—इति श्रुत्यन्तरात्[1]। अतो ये दशममह 'आगच्छन्ति' अनुतिष्ठन्ति, ते श्रियमेव प्राप्नुवन्ति, यस्माच्छ्रीरूपमेतदह, तस्माद्विवाक्यरहित भवति, यदि प्रमादान्मन्त्रेऽन्यत्र वा कश्चित्किंचिद्विरुद्धमाचरेत्, तदानीं तद्विरुद्धमन्येन 'वाच्य' वक्तव्यम्,—अत्र त्वया विरुद्धमनुष्ठित, तदेव सम्यगनुतिष्ठेत्यभिज्ञेन कर्मान्तिरे वक्तव्यम्, इह तु तस्य विरुध्यमानवचनस्य निषिद्धत्वादिदमह 'अविवाक्यम्'। तथा च आश्वलायन आह—'नास्मिन्नहनि केनचित् कस्यचिद्विवा'च्यमविवाक्यमित्येतदाचक्षते, सञ्चये बहिर्वेदि स्वाध्यायप्रयोगोऽन्तर्वेदीत्येके'[2] इति।

परेण प्रयुज्यमान विरुद्ध दृष्ट्वापि तन्न ब्रूयादिति नियमस्योपपत्तिरुच्यते—'श्रियो माऽववादिष्मेति'—इति। दशमस्याह्न श्रीरूपत्वात् तस्य यदववदन तच्छ्रिया एव भवति। अवमतस्य विरुद्धस्य वदनम् 'अववदन' निन्दा। यदि दशममह 'अववादिष्म' निन्दा कुर्मः, तर्हि श्रिया एव निन्दा सपद्यते। अतो वय श्रियो 'माऽववादिष्म' निन्दा कुर्म इति विवाच्यं परित्यजतामित्यभिप्राय। लोकेऽपि श्रेयसो विद्यैश्वर्यादिनाऽधिकस्य पुम्पस्याचरण 'दुरववदं हि' अववादेन निन्दयारहितम्। अत एव पिताचार्यादीना निन्दा न कुर्वन्ति, द्वेषिभि क्रियामाणामपि न शृण्वन्ति। तदेवमविवाच्यत्वधर्मोऽत्र विहित। यद्वा, वाक्यद्वयमिदम्,—दशममहरागच्छन्तीत्यन्तो दशमस्याह्नो विधि, तस्मादित्यादिरविवाक्यत्वनियमविधि। सोऽपि शाखान्तरेऽप्येवमाम्नायते—'तस्माद् दशमेऽहन्यविवाक्ये उपहताय न व्युच्यम्'[3] इति॥

यह जो दशम-अह. है वह [भोग्य वस्तु-समृद्धिस्वरूप] श्री ही है। अतः जो दशम-अहः का अनुष्ठान करते हैं वे श्री को ही प्राप्त करते हैं। [क्योंकि यह अह· समृद्धि रूप है] इसलिए दशम अह. विवाक्यरहित[4] [अर्थात् मन्त्र में या अन्य कहीं प्रमाद से विरुद्ध आचरण के समय या सन्देहस्थल में परस्पर विवेचन करना वर्जित] होता है। [यदि हम निन्दा करते हैं तो यह श्री की ही निन्दा होती है अत] हम श्री की निन्दा न करें, क्योंकि [लोक में भी विद्या एव ऐश्वर्य आदि से] समृद्ध[5] व्यक्ति का आचरण निन्दनीय

---

१. द्र० द्वादशाह परिभूय सर्वांमृद्धिमृध्नुयामिति'—इति पूर्वपृष्ठे ६६५।
२. आश्व० श्रौ० ८ १२ १०—१२।
३. तं० सं० ७ ३ १-२।
४. 'अस्मिन्नहनि केनचित् कर्त्रा कस्मैचित्कर्त्रे मन्त्रः कर्म वा न विवाच्य नाऽख्यातव्यमित्यर्थ.। कुत ? यस्मादेवदहरविवाक्यमिति श्रुतावेव प्रसिद्धम्। परस्परमविवेचनीयमेतस्मिन्नहनीत्यविवाक्यमिदमहर्भवति'—इति तत्र नारायणीयावृत्ति।
५. 'श्रेयस इति। हेतावियं षष्ठी। निरपवदत्वात् श्रेयस इत्यर्थ.।'—इति गोविन्दस्वामी।

नहीं होता[1]। [अथवा, यहां पर दो वाक्य हैं एक तो 'दशाममहराख्यान्ति' तक जो दशम अहः का विधिवाक्य है और 'तस्माद्' इत्यादि द्वितीय वाक्य अविवाक्यत्व-नियमविधि है अर्थात् दशम अहः में सन्देह आदि का निवारण श्लोक्या या संकेतोक्ति के द्वारा करना होता है]।

अथैतस्मिन् दशमेऽहनि मानसग्रहाय प्रसर्पणं विधत्ते—

**ते ततः सर्पन्ति ॥ इति ।**

'ते' अनुष्ठातार. 'तत' पत्नीसंयाजान्तानुष्ठानादूर्ध्वं प्राच उदेत्य मानसाय प्रसर्पेयु[2]। प्रसर्पणं नाम तदर्थं प्रयन्न । सर्वेष्वहर्गणेषु कर्मस्वन्ति मादह्न इतराण्यहानि पत्नीसंयाजान्तानि अन्तिमं त्वेकमेवादवसानायान्तम् । तथा च आश्वलायन आह—'प्रातरनुवाकाद्युदवसानीयान्तान्यन्त्यानि, पत्नीसंयाजान्तानीतराणि'[2] इति । तथा सत्यपि दाशस्यैतस्य-न्यायेन पत्नीसंयाजान्तत्वे प्राप्ते वचनेन तत ऊर्ध्वं मानसग्रहो विधत्ते । तदर्थं 'प्रसर्पन्ति' सदसो विनिर्गत्य यथायथ मार्गेण गच्छेयु ॥

वे[3] [अनुष्ठाता] उस [पत्नीसंयाजपर्यन्त अनुष्ठान] के बाद [मानसग्रह के लिए] प्रसर्पण करते हैं।

गताना तेषा तार्यदेशे मार्जनं विधत्ते—

**ते मार्जयन्ते ॥ इति ।**

वे मार्जन करते हैं।

मार्जनादूर्ध्वं होमार्थं स्थानविशेषप्राप्तिं विधत्ते—

**ते पत्नीशाला सम्प्रपद्यन्ते ॥ इति ।**

पत्नी हि गार्हपत्यस्य समीपेऽवतिष्ठत इति सैव 'पत्नीशाला', तत्र गच्छेयुः ॥

[मार्जन के बाद] वे [गार्हपत्य अग्नि के समीप अवस्थित] पत्नीशाला को जाते हैं।

गताना तेषा होमं विधत्ते—

**तेषां य एतामाहुतिं विद्यात् स ब्रूयात् समन्वारभध्वमिति, स जुहुयात् ॥ इति ।**

'तेषा' होमार्थं गार्हपत्यसमीपं गताना मध्ये 'य' पुमान् 'एता' वक्ष्यमाणामाहुतिं जानाति, 'स' पुमान् इतरान् प्रति 'समन्वारभध्व' यूयं सर्वेऽपि मा स्पृशतेति ब्रूयात् । तैं समन्वारब्ध 'स' पुमान् आहुतिं जुहुयात् ॥

---

1. 'We shall not be peak (the goddess of) wealth' इति हागमहोदय.।
2. आश्व० श्रौ० ७ १.४, ५ ।
3. मृषिणा स्पृश्यते सोमो मृजिना यातुना पशुः ।
   प्रसर्पणं सोमयोगि मार्जनं पश्वयोगि मत ॥
   ततस्तेन प्रकारेण द्विरुक्त इत्यादरादिह ।—इति षड्गुरुशिष्य ।

उन [होम के लिए गार्हपत्य के समीप गए हुए लोगों] के मध्य जो पुरुष इस [वक्ष्यमाण आहुति] को जानता है वह अन्य लोगों से कहे कि 'आप सभी मेरा स्पर्श करें'[1] और [उनसे अनुज्ञापित] वह पुरुष आहुति दे।

तत्र मन्त्रं दर्शयति—

**इह रमेह रमध्वमिह धृतिरिह स्वधृतिरग्नेऽवाट् स्वाहाऽवाळिति ॥** इति।

हे यजमाना, 'इह' अस्मिँल्लोके 'रम' रमणं कुरुत। हे पुत्रपौत्रादिका प्रजा, 'इह' एतेषु यजमानेषु 'रमध्वं' क्रीडत, 'इह' यजमानेषु 'धृतिः' युष्माकं प्रजानां धारणमस्तु। 'इह' यजमानेषु 'स्वधृतिः' वेदशास्त्रादिरूपाया वाचः स्वाधीनत्वेन धारणमस्तु। हे अग्ने, 'अवाट्' रथन्तररूपेण यज्ञस्य वहनं कुरु। हे 'स्वाहा' देवि! अग्निजाये, 'अवाट्' बृहत्सामरूपेण यज्ञस्य वहनं कुरु। 'इति'शब्दो मन्त्रसमाप्त्यर्थः ॥

हे यजमान, इस [लोक] में रमण करो, [हे पुत्रपौत्र आदि प्रजा] यहाँ [इन यजमानों में] क्रीडा करो, यहाँ [यजमानों में] प्रजा का धारण होवे, यहाँ [यजमानों में वेद-शास्त्रादि रूप वाणी] अपने अधीन होकर धृत होवे। हे अग्नि [रथन्तर रूप से यज्ञ का] वहन करो, हे [अग्नि की पत्नी] स्वाहा, [बृहत्साम रूप से यज्ञ का] वहन करो।'— इन मन्त्रों से आहुति दे।

यथोक्तं मन्त्रार्थमभिप्रेत्य क्रमेण मन्त्रावयवानां सर्वेषां तात्पर्यं दर्शयति—

**स यदिह रमेत्याहास्मिन्नेवैनांस्तल्लोके रमयतीह रमध्वमिति यदाह प्रजामेवैषु तद्रमयतीह धृतिरिह स्वधृतिरिति यदाह प्रजां चैव तद्वाचं च यजमानेषु दधात्यग्नेऽवाळिति रथन्तरं स्वाहाऽवाळिति बृहत् ॥** इति।

'सः' मन्त्र इह रमेति भागमाहेति यदस्ति, तेनास्मिन्नेव लोके 'एनान्' यजमानान् रमयति। एवमुत्तरभागा अपि योज्याः ॥

**वह जो 'यहाँ रमण करो'—यह कहता है, उससे इसी लोक में इन [यजमानों] को रमण कराता है। 'यहाँ क्रीडा करो'—यह जो कहता है, उससे इनमें प्रजा को ही रमण**

---

१ (i) 'समन्वारमध्वमिति। अनेनैतद् गम्यते—सर्वमन्त्रार्थानभिज्ञस्यापि कर्मस्वधिकारोऽस्तीति। आह च—'यदि नाधीयाद्' इति'—इति गोविन्दस्वामी।

(ii) तेषां तु सत्रिणां मध्ये योऽस्य होमस्य वेदिता।
स वदेज्जुह्वत मां हि सर्वे स्पृशत सत्वरा ॥
अज्ञस्यानधिकारत्वाज्ज्ञानप्रौढिस्तु वेदनम्।
जैमिनिर्हि सूत्रयति व्यासशिष्यो महामुनिः ॥

'ज्ञाते च वाचनं नह्यविद्वान् विहितोऽस्तीति' ऋत्विग्वाचने (जै० सू० ३.८.१८)।

कराता है। 'यहाँ प्रजा का धारण होवे, यहाँ वाणी स्वाधीन होकर धृत होवे'—यह जो कहता है, उससे प्रजा को और वाणी को ही यजमानों में धारण कराता है। हे अग्नि [यज्ञ का] वहन करो'—यह रथन्तर है और 'हे स्वाहा [यज्ञ का] वहन करो'—यह बृहत् है[१]।

बृहद्रथन्तररूपं भागद्वयं विशेषेण प्रशंसति—

**देवानां वा एतन्मिथुनं यद्बृहद्रथन्तरे, देवानामेव तन्मिथुनेन मिथुनमवरुन्धते, देवानां मिथुनेन मिथुनं प्रजायन्ते, प्रजात्यै ॥** इति।

यदेतद् अन्त्यमन्त्रद्वयं बृहद्रथन्तररूपमुक्तम्, तदेतद्देवानां सबन्धि मिथुनम्। एतत्स्तद्भागद्वयपाठेन देवसंबद्धेनैव मिथुनेन मानुषं मिथुनं प्राप्नुवन्ति। ततो देवसंबन्धिमिथुनानुग्रहेण मानुषमिथुनमुत्पादयन्ति। तत सोऽयं मन्त्रो यजमानस्य प्रजोत्पादनाय संपद्यते ॥

जो यह बृहद् रथन्तररूप मन्त्र द्वय [अन्त में उक्त] है, वह इन देवों का [अग्नि और सूर्य रूप] मिथुन है। अतः उस [भाग के पाठ] से देव सम्बन्धी मिथुन के द्वारा [मनुष्य के] मिथुन को प्राप्त करते हैं। तब देवसम्बन्धी मिथुन [के अनुग्रह] से [मनुष्य के] मिथुन प्रजोत्पादन करते हैं। [अतः यह मन्त्र यजमान के प्रजोत्पादन के लिए होता है]।

वेदनं प्रशंसति—

**प्रजायते प्रजया पशुभिर्य एवं वेद ॥** इति।

जो इस प्रकार जानता है वह [पुत्र पौत्रादि] प्रजा से और [गौ, अश्व आदि] पशुओं से वृद्धि को प्राप्त करता है।

गार्हपत्ये यथा होमा विहिताः तथैवाग्नीध्रीये कश्चिद्धोमो विधत्ते—

**ते ततः सर्पन्ति, ते मार्जयन्ते, त आग्नीध्रं सम्प्रपद्यन्ते, तेषां य एतामाहुतिं विद्यात् स ब्रूयात् समन्वारभध्वमिति स जुहुयात् ॥** इति।

गार्हपत्यस्थानाद् बहिर्निर्गत्य मार्जनं कृत्वा आग्नीध्रीयं प्राप्य, तत्र पूर्ववज्जुहुयात् ॥

वे तब प्रसर्पण करते हैं, वे मार्जन [शुद्धि] करते हैं, वे [गार्हपत्य स्थान से बाहर निकलकर मार्जन करके] आग्नीध्र को जाते हैं। उन [होमार्थ आग्नीध्र के समीप गए हुए लोगों] के मध्य जो पुरुष इस [वक्ष्यमाण आहुति] को जानता है वह अन्य लोगों से कहे कि 'आप सभी मेरा स्पर्श करें'—और [उनसे अनुज्ञापित] वह पुरुष आहुति दे।

---

१ वाक्ति वृद्धि होता तिथि लोप तिथि वाळिति (?)।
रथन्तराभ्यां सदिग्ध्यौ बृहद्भूर्यो च मङ्गलौ ॥
वक्ष्यते हि—'अग्निर्वै रथन्तरमादित्यो बृहदिति'—(ऐ० ब्रा० २५.४)
—इति षड्गुरुशिष्यः।

तस्मिन् होमे मन्त्रमाह—

**उपसृजन् धरुण मातरं धरुणो धयन्, रायस्पोषमिषमूर्जमस्मासु दीधरत् स्वाहेति ॥ इति ।**

अत्र देवताया अस्पष्टत्वात् 'अनिरुक्तः प्रजापतिर्देवता'-इति श्रुत्यन्तरेण प्रजापतिर्देवता । तस्य मन्त्रस्यायमर्थः—'धरुणः' सर्वस्य जगतो धारयिता प्रजापतिः 'धरुणम्' अस्माकं धर्तारं पितरं मातरं च 'उपसृजन्' अस्माभिः संयोजयन्, अनिष्टाद्वा वियोजयन् मामिहुतमाज्यं 'धयन्' पिबन् 'रायस्पोषं' धनपुष्टिम् 'इषम्' अन्नम् 'ऊर्जं' क्षीरादिरसं चास्मासु 'दीधरत्' धारयत् संपादयतु । तस्य प्रजापतेरिदं स्वाहुतमस्तु । 'इति'शब्दो मन्त्रसमाप्त्यर्थः ॥

'उपसृजन् धरुणम्' इत्यादि [(सम्पूर्ण जगत् का) धर्ता (प्रजापति) हमारे धर्ता पिता-माता को हमसे संयोजित करते हुए, (अथवा अनिष्ट से वियुक्त करते हुए), हमारे द्वारा हुत आज्य को पीते हुए, धन एवं पुष्टि, अन्न तथा (क्षीरादि) रस को हमारे में सम्पादित करें] मन्त्र से प्रजापति के लिए स्वाहा होवे ।

आहुतिं प्रशंसति—

**रायस्पोषमिषमूर्जमवरुन्ध आत्मने च यजमानेभ्यश्च यत्रैवं विद्वानेतामाहुतिं जुहोति ॥ २२ ॥ इति ।**

'आत्मने' होत्रे ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकायां चतुर्थाध्याये (चतुर्विंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (२२) [१७५]

धन, पुष्टि, अन्न और रस को वह अपने लिए और यजमानों के लिए प्राप्त कर लेता है जो इस प्रकार जानकर इस आहुति को देता है ।

॥ इस प्रकार चौबीसवें अध्याय के तीसरे खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

आग्नीध्रीय होमादूर्ध्वं कर्तव्यानि तानि दर्शयति—

**ते ततः सर्पन्ति, ते सदः सम्प्रपद्यन्ते, यथायथमन्य ऋत्विजो व्युत्सर्पन्ति, संसर्पन्त्युद्गातारस्ते सर्पराज्ञ्या ऋक्षु स्तुवते ॥ इति ।**

'ते' हुतहोमाः सर्वे 'ततः' आग्नीध्रीयादग्नेः 'सर्पन्ति' निर्गच्छन्ति । निर्गतास्ते सदः प्रविशेयुः । प्रवेशवेलायाम् उद्गातृभ्योऽन्य ऋत्विजो 'यथायथं' स्वमार्गमनतिक्रम्य 'व्युत्सर्पन्ति' विविधं गच्छन्ति, उद्गातारस्तु 'संसर्पन्ति' संभूय गच्छेयुः । गतास्ते सामगाः सर्पराज्ञ्या

सवनिधनीष्वृक्षु 'आय गौ' इत्यादिषु स्तोत्रं कुर्यं[1]। सर्पराज्ञीति भूमेरवतारस्वरूपा काचिद्देवता, तया दृष्टा मन्त्रा अपि सर्पराज्ञीशब्देनोच्यन्ते[2]। अत्र तु 'ऋग्भिरिति' पृथगुपादानात् 'सर्पराज्ञ्या' इति षष्ठ्यन्तत्वाच्च देवतावाच्यवाय शब्द[3] ॥

---

१ आर० आ० ५ ४–६ ऋक्षु आर० गा० ६ २ ८–१० सार्पराज्ञानि (योनिगानानि), उ० आ० ६ १ ११। तृचे ऊह्य० गा० ५ १ ९ (याम स्तोत्रम्)। 'प्रजापतेस्तिस्र सर्पराज्ञ्या सर्पाणा वार्बुदस्य वा सर्पस्य—इति आर्षेय ब्रा० ३ २९। 'तिसृभि स्तुवन्ति' सर्पराज्ञ्या ऋग्भि स्तुवन्ति' स्तुतमनुशसति'—इति ता० ब्रा० ९ ८।

२ (i) सर्पराज्या इति पदे यलोप छान्दसस्त्विह'—इति षड्गुरुशिष्य ।

(ii) सर्पराज्ञी ब्रह्मवादिनी सा यासामृचामृषि ता सर्पराज्ञ सर्पराजया ऋच। ताश्च 'आय गौ' इति तिस्र ।

ननु सयकारेण प्रयोगेण भवितव्यम् किमिद 'सर्पराज्ञा' इति यकारशून्य प्रयोग । स्मरति च शब्दवित् 'आण् नद्या' इति । यणादेशे च यकारो अवश्यभावी । अथ यकारशून्य प्रयुञ्जत इति चेत् अन्यथापि प्रयुञ्जत एव। अत उभयोर्लक्षणयुक्त प्रयोगोऽनुसरणीय । अत्रोच्यते—यकारशून्योऽपि प्रयोगोऽस्तीति त्वयाभ्युपगतम् । अस्ति चेत्, स एव नियम्यते ।

ननु सयकारोऽपि प्रयोगोऽस्त्येव । स हि लक्षणयुक्त । तद्युक्तश्च प्रयोगोऽनुसरणीय इत्युक्तम् । उच्यते—'उक्तस्त्वयैव परिहारो लक्षणयुक्त प्रयोग इति वदता । कथम्? सयकार प्रयोग उपपद्यत इत्यभिप्राय साधु इति । अत्राह—लक्षण चेन्नाद्रियते किमिति गाव्यादय शब्दा अपभ्रंशा । लक्षणयुक्त प्रयोगस्तत्रानादिरिति चेत्, अत्रापि तुल्य वक्तव्यो वा विशेष । अयकार प्रयोगो दृष्टेन उच्यते परमार्थस्तत्र प्रयोग इह त्वसम्प्रग्रहणार्थं । तत कि गाव्यादिनापि शब्देन तेनाभिप्रेतार्थसिद्धि इत्यत्रानादर प्रयोगे स्यात् । इह तु स्वाध्यायोऽन्यथा न सिद्ध्यति इत्यभिप्राय । अनादित्व स्मरणाच्च तत्र गोशब्द सास्नादिमति साधु, इतरेऽपभ्रंशा इति । किञ्च सावकाश निरवकाशत्वाच्च न केवलमतद् वाक्यगतसर्पराज्ञीशब्द प्रत्ययणादेशस्मरणम्—

इकोऽचि परतो यण स्यल्लोकवेदप्रयोगयो ।
इष्प्रयोगप्रसङ्गे तु यणसाधुरिति स्मृति ॥ (?)

किञ्चालाक्षणिकश्च प्रयोगो वेदे विद्यते—जह्राका अणुका इत्येवमादय । किञ्च प्रयोगमूल हि लक्षणम् । न लक्षणवशात् प्रयोग शासितव्य । अतो विनाशान्छिन्नमूलत्वात् कैश्चिदेव परिग्रहात् सयकार प्रयोगस्त्याज्य इति स्थितम्'—इति गोविन्दस्वामी ।

३ (i) 'आय गौरिति सार्पराज्ञीनामर्चिका, सैव देवता सूर्यो वा'—इति ऋग्भाष्ये सायण (१० १८९)। 'सर्पराज्ञी नाम ब्रह्मवादिनी'—इति तु ताण्ड्यभाष्य (९ ८ ७)। (ii) एव च सायणमते 'सर्पराज्ञ्या' इति एव सयकारक पाठ ।

[आग्नीध्र होम के अनन्तर कर्म]—

१ २३ [१९ १. ४] वे तब [आग्नीध्रीय-अग्नि से] निकलते हैं और वे [उत्तर वेदि के दक्षिण-पूर्व के कोने में अवस्थित] सदस् में प्रवेश करते हैं। [प्रवेश के समय उद्गाता आदि से] अन्य ऋत्विज अपने-अपने मार्ग का अतिक्रमण न करते हुए विविध रूप से जाते हैं, और [मन्त्रसाध्य स्तुति के लिए] उद्गाता एकत्र होकर जाते हैं। वे [साम गान करने वाले] सर्पराज्ञी सम्बन्धी ऋचाओं ['अय गौ' इत्यादि] में स्तोत्र करते हैं।

एतदेवाभिप्रेत्य तत्सबद्धा ऋचस्ता च देवता प्रशसति—

इयं वै सर्पराज्ञीय हि सर्पतो राज्ञीय वा अलोमिकेवाग्र आसीत् सैत मन्त्रमपश्यदाय्य गौ पृश्निरक्रमीदिति, तामय पृश्निर्वर्ण आविशन्नानारूपो य य काममकामयत, यदिद किंचौषधयो वनस्पतय सर्वाणि रूपाणि ॥ इति।

या भूमिरस्ति सयमेव देवताशरीर धृत्वा ब्रह्मवादिनी भूत्वा सर्पराज्ञी शब्देनोच्यते। यस्माद् 'इय' पृथिवी सर्पत सचरतो जङ्गमस्य मनुष्यादे 'राज्ञी' स्वामिनी सर्वेषा मनुष्यादीना तदाश्रयणावस्थानात् अत सर्पराज्ञीत्युच्यते।[1] इयमेव 'अग्रे' वृक्षाद्युत्पत्ते पूर्वमेव 'अलोमिकेव रोमरहितेवासीत्[2]। ततो रोमोत्पत्त्यर्थं सा भूमि साधनभूतम् आय गौ' इति 'मन्त्रम्' अपश्यत्। तन्मन्त्रप्रसादेन ता भूमिम् अय दृश्यमान पृश्निवर्ण आविशत्'। पृश्निशब्दस्य व्याख्यान नानारूप इति नीलपीतादिरित्यर्थ[3]। किंच लोके ओषधयो' वनस्पतय' सर्वाणि अन्यानि रूपाणि तृणादीनि यदिद किंचित् स्थावररूपमस्ति, तत्सर्व य य कामम् असौ भूमि अकामयत, स सर्वोऽप्यना प्राविशत्॥

यह [भूमि] ही सर्पराज्ञी है क्योंकि यह [मनुष्यादि सभी] जङ्गम की [आश्रयदाता होने से] स्वामिनी है, [वृक्षादि की उत्पत्ति के पूर्व] यह रोमरहित थी। [तब रोम की उत्पत्ति के लिए] उस [भूमि] ने 'आय गौ' इत्यादि मन्त्र का दर्शन किया। [उस मन्त्र के प्रभाव से] इस [भूमि] में यह [दृश्यमान] पृश्नि अर्थात् चित्र विचित्र वर्णों ने प्रवेश किया। [पृश्नि अर्थात् नीलपीतादि] नाना रूपों में से जिस किसी की भी कामना की, ओषधियाँ एव वनस्पतियाँ सभी [अन्य तृणादि] रूप इसमें आ गए।

वेदन प्रशसति—

पृश्निरेन वर्ण आविशति, नानारूपो य य काम कामयते य एव वेद ॥ इति।

---

१ 'सर्पसम्बन्धद्वारा एतन्नाम्'—इत्याद्यार्षेयभाष्य सायण (३ २९)।

२ तु० ओषधिवनस्पतयो लोमानि भूत्वेति' ह्यारण्यके वक्ष्यते (ऐ० आ० २ ४ ३)।

३ द्र० निरु० २ ४ १, १० ४ २।

वर्णशब्देन नीलपीतादिवाचिना सर्वमपि भोग्यजातमुपलक्ष्यते ॥

जो इस प्रकार जानता है वह भिन्न-भिन्न की कामना करता है उन सभी चित्र-विचित्र वर्ण की नाना रूपों की भोग्य-वस्तु-जाल को प्राप्त करता है।

स्तोत्रशस्त्रयोः प्रकारविशेषं विधत्ते—

**मनसा प्रस्तौति, मनसोद्गायति, मनसा प्रतिहरति, वाचा शंसति ॥ इति ।**

उद्गातृणां मध्ये प्रस्तोता प्रस्तावनाम, उद्गातोद्गीथनाम, प्रतिहर्ता प्रतिहारनाम[1]। तान् नामान् मनसैव तेऽनुतिष्ठेयुः। होता तु वाचा शंसेत् ॥

[उद्गाताओं के मध्य] प्रस्तोता मनसा [मौन होकर] अनुष्ठान करे, उद्गाता मनसा [उद्गीथनाम का] अनुष्ठान करे, प्रतिहर्ता [प्रतिहार नाम का] मौन होकर अनुष्ठान करे, [किन्तु होता] वाणी से शंसन करता है।

द्विविधमपि विधिं प्रशंसति—

**वाक्च वै मनश्च देवानां मिथुनं; देवानामेव तन्मिथुनेन मिथुनमवरुन्धते, देवानां मिथुनेन मिथुनं प्रजायन्ते, प्रजात्यै, प्रजायते प्रजया पशुभिर्य एवं वेद ॥ इति ।**

पूर्ववदर्थमिथुनवद् व्याख्येयम् ॥[2]

वाक् और मन देवों के मिथुन हैं अतः उस [द्विविध अनुष्ठान] से देवसम्बन्धी मिथुन के द्वारा [मानव के] मिथुन को प्राप्त करते हैं। तब देवसम्बन्धी मिथुन [के अनुग्रह] से [मानव के] मिथुन प्रजोत्पादन करते हैं, [अतः यह द्विविध अनुष्ठान यजमान के] प्रजोत्पादन के लिए होता है। जो इस प्रकार जानता है वह [पुत्र पौत्रादि] प्रजा से और [गौ अश्वादि] पशुओं से वृद्धि को प्राप्त करता है।

होतुः सर्वशस्त्राः शंसनादूर्ध्वं चतुर्होतृमन्त्रान् विधत्ते—

**अथ चतुर्होतॄन् होता व्याचष्टे, तदेव तत् स्तुतमनुशंसति ॥ इति ।**

चतुर्होतृमन्त्रास्तद्व्याख्यानप्रकारश्चानरिष्ठान् अभिधास्यते। तेन व्याख्यानेन यदुद्गातृभिः 'स्तुतं', 'तदेव' सर्वमनुशस्तं भवति ॥

अब होता चतुर्होतृ-मन्त्रों का पाठ करता है। उससे जो [उद्गाताओं के द्वारा] स्तुत होता है वह सभी अनुशस्त [शस्त्र-पाठ] पाठ करता है।

---

1. द्र० इत पूर्वम्, पृ० १४६, टि० ७। पञ्च सू० ११.१, २। छा०उप० २ १-२१।
2. द्र० इत. पूर्वम्, पृ० ८३६।

तमेत मन्त्रसमूह प्रशसति—

**देवाना वा एतद् यज्ञिय गुह्य नाम, यच्चतुर्होतारस्तद्यच्चतुर्होतॄन् होता व्याचष्टे,—देवानामेव तद् यज्ञिय गुह्य नाम प्रकाश गमयति ॥ इति ।**

य एते चतुर्होतृमन्त्रा सन्ति, तदेतन्मन्त्रस्वरूप देवाना संबन्धि यज्ञयोग्य नाम, ततो होतृव्याख्याने देवसबन्धि योग्य नाम प्रकाशित करोति ॥

**जो ये चतुर्होतृ मन्त्र हैं वे यज्ञ के योग्य देवताओं के गुप्त नाम हैं, उसमें होता जो चतुर्होतृ-मन्त्रों का पाठ करता है, वस्तुत यह इस प्रकार यज्ञ के योग्य देवताओं के गुप्त नाम को ही प्रकाशित करता है ।**

वेदन प्रशसति—

**तदेन प्रकाश गत प्रकाश गमयति, गच्छति प्रकाश य एव वेद ॥ इति ।**

यदुक्तार्थवेदिता होता 'एन' होतार 'तद्' देवाना गुह्य नाम स्वय 'प्रकाश' 'गत' सन् पश्चात् 'प्रकाश गमयति' । ततो वेदिता 'प्रकाश गच्छति' तेन नाम्नाऽनुगृहीत प्रख्यातो भवतीत्यर्थ । यद्वा, तदेनमित्यादि पूर्वशेष । 'तद्' देवाना गुह्य नाम स्वय 'प्रकाश गत' सत्पश्चाद् 'एन' होतार 'प्रकाश गमयति' । गच्छतीत्यादिकैव विद्वत्प्रशसा ॥

***जो इस प्रकार जानता है वह उस प्रकाशित को प्रकाशित करता है और स्वय प्रकाशित हो जाता है ।***

तदेव प्रसङ्गेन चतुर्होतृव्याख्यान विधाय तत्प्रशसा कर्तुं क्रतुनिरपेक्षलौकिककाम्य-फलसिद्ध्यर्थं चतुर्होतृव्याख्यान विधत्ते—

**य ब्राह्मणमनूचान यशो नर्च्छेदिति ह स्माऽऽहारण्य परेत्य दर्भस्तम्बानुद्ग्रथ्य दक्षिणतो ब्रह्माणमुपवेश्य चतुर्होतॄन् व्याचक्षीत ॥ इति ।**

साङ्गवेदाध्ययन-तदर्थानुष्ठानशील 'अनूचान' । तादृश कश्चिद्ब्राह्मण सभामध्ये वाग्मित्वेन रहित यदि 'यशो नर्च्छेत्' विद्वानयमिति कीर्ति न प्राप्नुयात्, तदानीमय ब्राह्मणो ग्रामान्निर्गत्य विजनमरण्यदेश प्राप्य तत्र दर्भस्तम्बानामग्रमूर्ध्वमुखत्वेन ग्रथित्वा स्वस्य दक्षिणपार्श्वे कञ्चिद्वेदविद विप्रमुपवेश्य तत्सन्निधौ चतुर्होतृनामकान् मन्त्रान् व्याचक्षीत । उच्चैरुच्चारण 'व्याख्यानम्' । 'इति'एतत्प्रयोग कश्चिद्ब्रह्मवादाह स्मेत्यन्वय ॥

*'जिस वेदपाठी ब्राह्मण को यश की प्राप्ति न हो तो वह निर्जन वन में जाकर दर्भ के सिरों को बांधकर किसी वेदविद् ब्राह्मण के दक्षिण की ओर उसकी सन्निधि में बैठकर चतुर्होतृ-मन्त्रों का ज़ोर-ज़ोर से पाठ करे'—ऐसा ब्रह्मवादियों का कथन है । [क्योंकि]—*

तमिम यशसयुक्त प्रयाग पूर्ववत्प्रशसति—

**देवाना वा एतद् यज्ञिय गुह्य नाम, यच्चतुर्होतारस्तद्यच्चतुर्होतॄन् व्याचक्षीत**

**देवानामेव तद् यज्ञियं गुह्यं नाम प्रकाशं गमयति; तदेनं प्रकाशं गतं प्रकाशं गमयति, गच्छति प्रकाशं य एवं वेद ॥ २३ ॥ इति ।**

पूर्ववद् व्याख्येयम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम-पञ्चिकायां चतुर्थाध्याये (चतुर्विंशाध्याये) चतुर्थः खण्डः ॥ ४ ॥ (२३) [ १७६ ]

जो ये चतुर्होतृ-मन्त्र हैं वे यज्ञ के योग्य, देवताओं के गुप्त नाम हैं; उनमें होता जो चतुर्होतृ-मन्त्रों का पाठ करता है, वस्तुतः वह इस प्रकार यज्ञ के योग्य देवताओं के गुप्त नाम को ही प्रकाशित करता है। जो इस प्रकार जानता है वह उन प्रकाशित को प्रकाशित करता है और स्वयं प्रकाशित हो जाता है।

॥ इस प्रकार चौबीसवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

अथ चातुर्होतृव्याख्यानन्तरं यज्ञाङ्गभावनाविधानमुपक्रमते—

**अथौदुम्बरीं समन्वारभन्ते ॥ इति ।**

चतुर्होतृव्याख्यानोद्योगानन्तरं यज्ञभौदुम्बरी शाखा सदस्यन्तर्निहिता, तां शाखां सर्वे समूयोपस्पृशेयुः ॥

१. २४ [xxiv. ५] अब उदुम्बर वृक्ष की शाखा का [जो सदस् में स्थित होती है] स्पर्श करते हैं।

तत्र मन्त्रं दर्शयति—

**इषमूर्जमन्वारभ इति ॥ इति ।**

अन्नरूपां रसरूपां वै तामौदुम्बरीम् 'अन्वारभे' इति हस्तेन स्पृशामि । 'इति' शब्दो मन्त्रसमाप्त्यर्थः ॥

'हम अन्न और रस का स्पर्श करते हैं'—इस मन्त्र से स्पर्श करना चाहिए।

मन्त्रार्थमौदुम्बर्यां दर्शयति—

**ऊर्ग्वा अन्नाद्यमुदुम्बरः ॥ इति ।**

योऽयमुदुम्बरवृक्षः, सोऽयं रसरूपोऽन्नरूपश्च ॥

जो यह उदुम्बर वृक्ष है वह यह रस रूप और अन्न रूप है।

तत्रेतमर्थमुपपादयति—

**यद्वैतद्देवा इषमूर्जं व्यभजन्त, तत उदुम्बरः समभवत्, तस्मात् स त्रिः संवत्सरस्य पच्यते ॥ इति ।**

'देवा' पुरा यदेतदन्न रसरूप वस्तु क्वचिद्भूमावुपविश्य व्यभजन्त एतावदस्यैतावदस्येति विभाग कृतवन्त । तदानी तस्माद् भूमौ पतितादन्नरसभेदाद् बीजभूतादयमौदुम्बरवृक्ष समुत्पन्न तस्मात् संवत्सरस्य मध्ये भोक्तृणामन्नसिद्धयर्थं स वृक्ष 'त्रि पच्यते त्रिरित्युपलक्षणम्, बहुकृत्व फल गृह्णाति ॥

जब देवों ने इस अन्न और रस रूप वस्तु को [जहाँ पृथ्वी में बैठकर] बाँटा, वहाँ [भूमि में गिरा हुआ बीजभूत यह] उदुम्बर वृक्ष उत्पन्न हो गया । इसलिए वह [वृक्ष] वर्ष में तीन बार [अर्थात् बहुत अधिक] फलता है ।

औदुम्बरीस्पर्शमुपसहरति—

**तद्यदौदुम्बरीं समन्वारभन्त, इषमेव तदूर्जमन्नाद्य समन्वारभन्ते ॥** इति ।

इसलिए जो उदुम्बर की शाखा का स्पर्श करते हैं तो इस प्रकार उससे अन्न और रस का ही स्पर्श करते हैं ।

औदुम्बरीस्पर्शादूर्ध्व मौन विधत्ते—

**वाच यच्छन्ति, वाग्वै यज्ञो यज्ञमेव तद् यच्छन्ति ॥** इति ।

यज्ञस्योच्चार्यमाणमन्त्रसाध्यत्वाद् वाग्रूपत्वम् । अतो वाङ्नियमेन यज्ञस्यैव नियमो भवति ॥

[उदुम्बर की शाखा के स्पर्श के बाद] मौन रहना चाहिये, क्योंकि वाणी ही यज्ञ है, इस प्रकार उस [मौन] से वे यज्ञ को ही प्राप्त करते हैं ।

मौनस्य कालविशेष विधत्ते—

**अहर्नियच्छन्त्यहर्वै स्वर्गो लोक, स्वर्गमेव त लोक नियच्छन्ति ॥** इति ।

सूर्यास्तमयादर्वाक्स्वयमवप्रकाशसद्भावेनाह्न स्वर्गत्वम् । तस्मिन्नहनि वाङ्नियमेन स्वर्ग एव नियत स्वाधीनो भवति ॥

दिन में वाणी का नियमन करना चाहिए, क्योंकि [स्वर्ग के समान प्रकाश होने से] दिन ही स्वर्ग लोक है [उस दिन वाणी के उस नियमन से] स्वर्गलोक निश्चित ही अपने अधीन हो जाता है ।

विघ्निसिद्धयर्थमहनि कतिपयेषु क्षणेषु वाच नियम्य पश्चान्मौनपरित्यागप्राप्तौ निषेधति—

**न दिवा वाच विसृजेरन् यद्दिवा वाच विसृजेरन्नहर्भ्रातृव्याय परिशिंष्यु ॥** इति ।

अहनि वाग्विसर्गे सति यजमाना सर्वेऽप्यह सबन्ध परित्यज्य शत्रवे तदह 'परिशिंष्यु'[1] दद्युरित्यर्थ ॥

---

१ परिशिषिदानार्थं, लिङि यासुट् श्नसोरल्लोप = दद्यु । इति षड्गुरुशिष्य ।

अतः दिन में वाणी नहीं बोलना चाहिए। यदि दिन में वाणी बोलेंगे तो [यजमान सभी दिन के सम्बन्ध को छोड़कर] उस दिन को शत्रु को दे देंगे।

अहनि निषिद्धस्य वाग्विसर्गस्य रात्रौ प्राप्तौ मत्वा तदपि निषेधति[1]—

**न नक्तं वाचं विसृजेरन्, यन्नक्तं वाचं विसृजेरन् रात्रीं भ्रातृव्याय परिशिंष्युः ॥ इति ।**

पूर्ववद् व्याख्येयम् ॥

और न तो रात्रि में ही वाणी बोलना चाहिए, यदि रात्रि में वाणी बोलेंगे तो [यजमान सब दिन के सम्बन्ध को छोड़कर] उस दिन को शत्रु को दे देंगे।

यद्यहनि रात्रौ च निषेध, कदा तर्हि वाग्विसर्गं इत्याशङ्क्याऽऽह—

**समयाविषितः सूर्यः स्यादथ वाचं विसृजेरंस्तावन्तमेव तद् द्विषते लोकं परिशिंषन्ति ॥ इति ।**

यदा सूर्यं 'समयाविषित' अस्तमयसमयं प्राप्तः, अर्धास्तमित[2] स्यात्, तदानीं वाग्विसर्गः। तथा सति संपूर्णास्तमयपर्यन्तमल्पमेव कालं 'द्विषते' 'लोकं' शत्रोः स्थानं 'परिशिंषन्ति' प्रयच्छन्ति। अहो रात्रिश्चेति कालद्वय स्वार्थमेव भवति ॥

इसलिए जब सूर्य अस्ताचल को हों तब वाणी बोलना चाहिए, इस प्रकार वे शत्रुओं के लिए केवल उतना ही [अस्तमयपर्यन्त अल्पकाल] समय छोड़ते हैं।

पक्षान्तरं विधत्ते—

**अथो खल्वस्तमित एव वाचं विसृजेरंस्तमोभाजमेव तद् द्विषन्तं भ्रातृव्यं कुर्वन्ति ॥ इति ।**

'अथो खलु' अथवेत्यर्थः। सूर्ये साकल्येनास्तमिते सत्येव पश्चाद्वाग्विसर्गेण शत्रुं 'तमोभाजम्' अन्धकारमग्नं कुर्वन्ति ॥

अथवा, सूर्य के अस्त हो जाने पर ही वाणी बोले, उससे वे द्वेष करने वाले शत्रु को अन्धकारमग्न करते हैं।

---

१. सूच्यते हि—'मतसाल्मानमाप्याय्यौदुम्बरीं समन्वारभ्य वाचं यच्छन्त्या नक्षत्रदर्शनात्' इति आश्व० श्रौ० ८.१३.२३।

२. समयाध्युषित-समयाविषितशब्दौ सन्धिकालपरौ। तत्र समयाध्युषितः प्रातः सन्धिकाल, समयाविषितस्तु सायंसन्धिकाल इति विशेषः। द्र० कात्या० श्रौ० ४.१५.१। आश्व० गृ० १.७३। म० सं० २.१५। तै० स० ६.६.११.६। व्याख्यानं च तस्य १.४.४५.१५। अनुपदसूत्र ३.१२। 'समयास्तमिषितः' इति तै० आ० ( सा० ना० पृ० ४४२ )। 'समण्डले दिनं सूर्ये नक्तं निर्मण्डले सति। समयाविषित-कालस्त्वर्धमण्डलसंयुते'—इति षड्गुरुशिष्यः।

वाग्विसर्गस्य देशविशेष विधत्ते—

**आहवनीय परीत्य वाच विसृजेरन् यज्ञो वा आहवनीय, स्वर्गो लोक आहवनीयो, यज्ञेनैव तत्स्वर्गेण लोकेन स्वर्गं लोक यन्ति ॥ इति।**

सदसो निर्गत्य आहवनीयं परित प्रदक्षिणीकृत्य तत्र वाग्विसर्ग कर्तव्य । आहवनीयस्य यज्ञनिष्पादकद्वारा[1] स्वर्गहेतुत्वेन तदुभयात्मकत्वे सति यज्ञस्वर्गात्मकेनैवाऽऽहवनीयेन यजमाना स्वर्गं प्राप्नुवन्ति ॥

[सदस से निकलकर] आहवनीय अग्नि की प्रदक्षिणा करके वाणी बोलना चाहिए, [क्योंकि] आहवनीय [अग्नि] यज्ञ है, और आहवनीय स्वर्गलोक है अत उससे वे यज्ञरूपी स्वर्गलोक के द्वारा स्वर्गलोक को जाते हैं।

वाग्विसर्गे मन्त्रविशेष विधत्ते—

**यदिहोनमकर्म यदत्यरीरिचाम प्रजापति तत्पितरमप्येत्विति वाच विसृजन्ते ॥ इति ।**

'इह' क्रतौ 'यत्' अङ्गम् 'ऊनम्' असम्पूर्ण, यदपि 'अकर्म' स्वरूपेणैव तदङ्ग न कृतम्, 'यत्' अप्यङ्गम् 'अत्यरीरिचाम अतिरिक्त द्विवार त्रिवार वा वयमनुष्ठितवन्त , तत्' सर्वं दोषकरमङ्गजात 'पितरम्' अस्माक पालक प्रजापतिम् 'अप्येतु' प्राप्नोतु । 'इति' अनेन मन्त्रेण वाग्विसर्ग कर्तव्य[2] ॥

'यदिहोनमकर्म' आदि इस यज्ञ में जो कर्म असम्पूर्ण रह गया हो या स्वरूपत. जिसके अङ्ग को न किया गया हो, अथवा जो कोई कर्म हमसे अतिरिक्त [दो बार या तीन बार] हो गया हो, ऐसे सभी दोष हमारे पालक प्रजापति को पहुँच जायें—इस मन्त्र के द्वारा वाणी बोलना चाहिए ।

उक्तमन्त्र प्रशसति—

**प्रजापतिं वै प्रजा अनु प्रजायन्ते, प्रजापतिरूनातिरिक्तयो प्रतिष्ठा, नैनानून नातिरिक्त हिनस्ति ॥ इति ।**

---

१ 'यज्ञनिष्पादकत्वद्वारा'–इति वा पाठ ।

२ 'यद् इह कर्मणि ऊन विकलम् । अकर्म = अकार्ष्म, मन्त्रे घसेति (पा०सू० २.४ ८०) च्लिलुक् । यच्चात्यरीरिचाम, णिचो लुङि चङ्, अतिरिक्त कृतवन्त स्म । तद् सर्वं प्रजापति सर्वस्य पितर पालकम् अपि साधु एतु गच्छतु इत्यर्थं मत्वा व्याचक्षाण स्तौति प्रजापतिम् । इति षड्गुरुशिष्य ।

सर्वाः प्रजाः प्रजापतिमेवानु प्रजायन्ते, तस्य स्रष्टृत्वात् तदनुरूपैव सर्वोत्पत्तिः। अतः स्रष्टा प्रजापतिरेव न्यूनातिरिक्तदोषयोः 'प्रतिष्ठा' आश्रयः समाधानहेतुः। तस्मादेतन्मन्त्रपाठेन 'एनान्' यजमानान् ऊनातिरिक्तरूपदोषो न बाधते॥

सभी प्रजा प्रजापति के अनुरूप ही उत्पन्न होती हैं। इसलिए [सृष्टि करने वाले] प्रजापति ही कमनी अथवा बढ़ती रूप दोष के आश्रय अर्थात् समाधान के हेतु हैं। अतः इस मन्त्र के पाठ से यजमानों को कमती अथवा बढ़ती रूप दोष-द्वय बाधित नहीं करते।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

**प्रजापतिमेवोनातिरिक्तान्यभ्यत्यर्जन्ति य एवं विद्वांस एतेन वाचं विसृजन्ते॥ इति।**

मन्त्रेण वाग्विसर्गं कुर्वाणा यजमाना ऊनातिरिक्ताङ्गरूपं दोषमनिलस्य प्रजापतिमेव 'अभ्यत्यर्जन्ति' अतिशयेन प्राप्नुवन्ति[1], स एव समादधातीत्यर्थः॥

जो इस प्रकार जानते हुए इस [मन्त्र] के द्वारा वाणी बोलते हैं वे कमनी या बढ़ती रूप दोष को प्रकृष्ट रूप से प्रजापति को ही प्राप्त करा देते हैं।

मन्त्रेण वाग्विसर्गमुपसंहरति—

**तस्मादेवं विद्वांस एतेनैव वाचं विसृजेरन्॥ २४॥**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया चतुर्थाध्याय (चतुर्विंशाध्याये) पञ्चमः खण्डः॥ ५॥ (२४) [१७७]

इसलिए इस प्रकार जानकर इस [मन्त्र] के द्वारा ही वाग्-विसर्ग करना चाहिए।

॥ इस प्रकार चौबीसवें अध्याय के पांचवें खण्ड की हिन्दी पूर्ण हुई॥ ५॥

## अथ षष्ठः खण्डः

चतुर्होतृमन्त्रव्याख्यानार्थमाहावं विधत्ते—

**अध्वर्यो इत्याह्वयते चतुर्होतृषु वदिष्यमाणस्तदाहावस्य रूपम्॥ इति।**

चतुर्होतृनामकेषु मन्त्रेषूच्चैरुच्चारणं कर्तुमुद्युक्तो होता 'हेऽध्वर्यो' इत्याह्वानं कुर्यात्। यथा शस्त्रादौ 'शोंसावोम्'-इत्याह्वानं करोति, तद्वदत्रापि सम्बोधनमेवाहावस्य स्वरूपम्॥

v. २५ [XXIV. ६] चतुर्होतृ नामक मन्त्रों में जोर-जोर से उच्चारण करने के लिए उद्युक्त होता 'हे अध्वर्यु'—इस प्रकार आह्वान करे। [जैसे शस्त्र के आदि में 'शोंसावोम्' से आह्व करते हैं वैसे ही यहाँ] वह [सम्बोधनमात्र ही] आह्व का स्वरूप है।

---

१. 'सृजन्ति'-इति गोविन्दस्वामी, 'गमयन्ति'—इति षड्गुरुशिष्य, 'transfer' इति कीथमहोदयः।

चतुर्होतृव्याख्यानकालेऽध्वर्यो प्रतिगरविशेष विधत्ते—

**ओ होतस्तथा होतरित्यध्वर्यु प्रतिगृणात्यवसितेऽवसिते दशसु पदेषु ॥** इति ।

हे होत । ॐ' त्वदभिलषितमस्तु । ह होत तथा क्रियतामित्यध्याहार । अनेन मन्त्रेणाध्वर्यु प्रतिगर ब्रूयात् । होतुरुत्साहजनक प्रतिवचन प्रतिगर' । वक्ष्यमाणेषु होत्रा प्रयोज्येषु दशसख्याकेषु पदेषु[1] मध्य एकैकस्मिन् पदे अवसिते' समाप्ते सति तदा तदा पुन पुनरध्वर्यु 'ओ होत' इत्यादिमन्त्रेण प्रतिगर ब्रूयात् । अवसितशब्दस्य वीप्सा प्रतिपद प्रतिगरप्रयोगायम् ॥

'ओं होत' (हे होता तुम्हारा अभिलषित होवे), 'तथा होत' (हे होता वैसा करो) इस मन्त्र से अध्वर्यु [होता के लिए उत्साहकारक वचन] 'प्रतिगर' बोले । दस पदों में प्रत्यक पद के अवसान-अवसान पर [पुन 'ओं होत' आदि प्रतिगर बोले] ।

तत्र प्रथम पद दर्शयति—

**तेषा चित्ति स्रुगासीदेत् ॥** इति ।

*दवकर्तृके सत्र प्रजापतिर्गृहपतिरन्य दवा यजमानास्ते च मन्त्रान्तरे वक्ष्यन्ते । त एवात्र* तेषामिति तच्छब्देन परामृश्यन्ते । तेषा प्रजापतिरूपगृहपतियुक्ताना देवतात्मना यजमानाना मानस कर्मणि 'चित्ति स्रुगासीत्' । चिती सज्ञान'[2] इति धातोश्चित्तिशब्द-निष्पत्ति । इद वस्त्वोदयमेव न त्वन्यथेति या सम्यग्ज्ञानरूपा मनोवृत्ति, सा 'चित्ति' । सैव एतेषा होमसाधनभूतजुहूस्थानीयाऽऽसीत् । अमूर्तायाश्चित्तेर्जुहूरूपत्वम अयमिति द्योतयितु स्तुति । एवमुत्तरत्रापि द्रष्टव्यम् ॥

उन [प्रजापतिरूप गृहपति से युक्त देवता रूप यजमानो] का [मानस कर्म में] चित्ति [ = सम्यक ज्ञानरूप मनोवृत्ति, होमसाधनभूत] जुहू [=स्रुवा] स्थानीय थी ।

द्वितीय पद दर्शयति—

**चित्तमाज्यमासीदेत् ॥** इति ।

---

१ (i) पद = वाक्यम्, पद स्थाने शरे त्राणे पदाङ्के पादचिह्नयो ।
शब्देऽशुवस्तुवाक्येषु व्यवसायापदेशयो ॥ इति निघण्टु
(वैजयन्त्या द्व्यक्षरकाण्डे नपुसकलिङ्गाध्याये) ।

(ii) तेषामित्यादिदशकेऽध्वर्यु प्रतिगर वदेत् ।
पश्चरवादित ओ होतस्तथा होतश्च पञ्चसु ॥
पदेषु वाक्येऽवसिते समाप्तेऽस्तेलंडोऽपि ।—इति षड्गुरुशिष्य ।

२. भ्वादि० ३९ ।

पूर्वोक्तायाश्चित्तिरूपाया वृत्तेराधारभूतं यदन्तःकरणं 'तत् चित्तम्'। तदेवाज्यस्थानीयमासीत् ॥

[उनका] चित्त [मनोवृत्ति का आधारभूत अन्तःकरण] आज्यस्थानीय था।

तृतीयं पदं दर्शयति—

वाग् वेदिरासीत्तत् ॥ इति।

यद् 'वाग्' इन्द्रियम्, तद्वेदिस्थानीयमासीत् ॥

[उनकी] वाक् [इन्द्रिय] वेदिस्थानीय थी।

चतुर्थं पदं दर्शयति—

आधीतं बर्हिरासीत्तत् ॥ इति।

'आ' समन्ताद् 'धीतं' मनसा ध्यातं यद्वस्तु, तदेव बर्हिस्थानीयमासीदिति ॥

[उनकी] अधीत विद्या कुशस्थानीय थी।

पञ्चमं पदं दर्शयति—

केतो अग्निरासीत्तत् ॥ इति।

'कित ज्ञाने'[1] इति धातुः। 'चित्ति' सम्यग्ज्ञानम्, 'केत' ज्ञानमात्रमिति विशेषः। स च केतोऽग्निस्थानीय आसीदिति ॥

[उनका] ज्ञान अग्नि स्थानीय था।

षष्ठं पदं दर्शयति—

विज्ञातमग्नीदासीत्तत् ॥ इति।

मनसा 'विज्ञातं' विशेषेण निश्चितं यद्वस्तु, तत् 'अग्नीत्' आग्नीध्रनामक ऋत्विगासीत् ॥

[उनकी] मन से विशेष रूप से ज्ञात [अन्तर्दृष्टि] आग्नीध्र नामक ऋत्विज थी।

सप्तमं पदं दर्शयति—

प्राणो हविरासीत्तत् ॥ इति।

यश्च प्राणवायुः, स हविस्स्थानीय आसीत् ॥

[उनकी] प्राण-वायु हविस्स्थानीय थी।

अष्टमं पदं दर्शयति—

सामाध्वर्युरासीत्तत् ॥ इति।

---

१. भ्वादि० ९९३।

यद् गीयमान 'साम', तद् अध्वर्युस्थानीयमासीदिति ॥

[उनका गीयमान] साम अध्वर्यु स्थानीय था ।

नवम पद दर्शयति—

**वाचस्पतिर्होतासीदेत् ॥** इति ।

योऽय 'वाचस्पति' बृहस्पति सोऽय होतृस्थानीय एवाऽऽसीत् ॥

[उनका] वाचस्पति [=बृहस्पति] होता नामक ऋत्विज था ।

दशम पद दर्शयति—

**मन उपवक्तासीदेत् ॥** इति ।

यद्यप्येकमेवान्त करण चित्तशब्देन मन शब्देन चाभिधीयते तथाऽप्यवस्थाविशेषो द्रष्टव्य । चित्तिकेत्वादिवृत्तिजनकत्वाकारेण चित्तम् वृत्तिरहितस्वरूपावस्थानाकारेण 'मन', तच्चात्र 'उपवक्ता' होतु समीपस्थो वक्ता मैत्रावरुण आसीत् ।

एतेषा दशाना पदानामेकैकस्मिन् पदेऽवसिते सत्यध्वर्यु ओ३ होत, तथा होत' इति प्रतिगर ब्रूयात् । सोऽय दशपदात्मकश्चतुर्होतृसज्ञको मन्त्रसघात[१] ॥

[उनका] मन [वृत्तिरहित अन्त करण] उपवक्ता [होता के समीपस्थ वक्ता मैत्रावरुण] नामक ऋत्विज था ।

---

१ (i) तैत्तिरीयब्राह्मणेऽपि द्वितीयाष्टकीयो द्वितीय प्रपाठक समग्र एवंतद्विषयक । तैत्तिरीयारण्यके किञ्चित्पाठभेदेन इमे दश मन्त्रा समाम्नाता (३ १) । तद्भाष्ये त्वेषा सायणीयव्याख्यानानि सुष्ठुतराणीव गम्यन्ते । चित्त्यादयो दश शरीरगता पदार्थविशेषा, स्रुगादयस्तु दश पदार्था होमनिष्पादका'—इत्येव तत्सारमिति सङ्क्षेप ।

(ii) इत्य दशपदो मन्त्रश्चतुर्होत्राख्य ईरित ।
चित्तिर्ज्ञान मनश्चित्तमाधीत स्मरण मतम् ॥ १ ॥
केतो रहस्य विज्ञात व्याप्तिर्वाक् च ऋगुच्यते ।
मुखघ्राणगतो वायु प्राणो गीतिषु सामनी (? सामान्या) ॥ २ ॥
वाचस्पतिर्देवमन्त्री हृद्गातर्युपवक्तृगी ।
इति यज्ञोपकरण देवानामिह कीर्तितम् ॥ ३ ॥
ग्रहाख्यमन्त्रमाहाथ पदपट्कसमन्वितम् ।
यस्य प्रतिगरोऽध्वर्योर्नास्ति ब्राह्मणसूत्रयो ॥ ४ ॥ इति षड्गुरुशिष्य ।

(iii) चित्ति = Thought चित्तम् = Intelligence केतो = Insight, विज्ञातम् = Knowledge इति कीथ महोदय ।

अथ ग्रहमन्त्रं मन्त्रं दर्शयति—

**ते वा एत ग्रहमगृह्णत; वाचस्पते विधे नामन्, विधेम ते नाम, विधेस्त्वमस्माकं नाम्ना द्यां गच्छ, या देवाः प्रजापतिगृहपतय ऋद्धिमराध्नुवंस्तामृद्धिं रात्स्यामः ॥ इति ।**

तेषामिति पदेनोक्ताः प्रजापतिगृहपतियुक्ता देवरूपा ये यजमानाः सन्ति, त एव 'एत' मानस ग्रहमगृह्णत । ग्रहणकाले वाचस्पतिं संबोध्य ब्रुवते,—हे 'वाचस्पते' बृहस्पते ! हे विधे' जगतो विधातः ? हे 'नामन्' सर्वस्य नमयितः ! सर्ववशीकारयुक्तेत्यर्थः । तादृशस्य ते 'नाम विधेम' ख्यातिं करवाम । यद्वा, 'नाम' अन्नं हविर्लक्षणं 'विधेम' सम्पादयाम । त्वमप्यस्माकं प्रजापतियुक्तानां देवानां 'विधि (? धेः') कीर्तिमन्नं च सम्पादय । तेनास्मद्दत्तेन 'नाम्ना' हविर्लक्षणेनान्नेन कीर्त्या वा युक्तो द्यां स्वर्गं गच्छ । प्रजापतिर्गृहपतिर्येषां देवानां ते 'प्रजापतिगृहपतयः' तादृशा देवा याम् 'ऋद्धिम्' ऐश्वर्यम् अराध्नुवन् 'ताम् ऋद्धिं' तादृशमैश्वर्यं वयमपि यजमाना 'रात्स्यामः' इत्येष ग्रहमन्त्रः,[1] तमपि होता पठेत्[2] ॥

[प्रजापति गृहपति युक्त देव रूप] उन [यजमानों] ने इस [मानस] ग्रह को लिया । [लेने के समय वाचस्पति को इस प्रकार सम्बोधित कर कहते हैं]—'हे वाचस्पते, [=हे बृहस्पति], हे विधि [=हे जगत् के स्रष्टा] हे नामन् [=हे सबको नमन कराने वाले अर्थात् सबको वश में करने वाले] हम तुम्हारी ख्याति करते हैं अथवा हवि रूप अन्न को सम्पादित करते हैं । [तुम भी हम प्रजापति युक्त देवों की कीर्ति और अन्न को

---

१. तैत्तिरीयारण्यके तु एष एव ग्रहमन्त्रः किञ्चिद्विभिन्नः (३.१) ।

२. (i) 'ते वा एतमिति मानसग्रहमाह । नामन्नुदकनाम । इह तद्वान् लक्ष्यते । यथा ते वा एत ग्रहमगृह्णत हे बृहस्पते अहमपि तथा विधेयन्त्वान्नाम्नि सलिले मनोग्रहं गृह्णामीति । यथा च मनोग्रहग्रहणमन्त्रः । अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं गृह्णामीति । विधेमेत्यात्मनि बहुवचनम् । नामेत्युदकम् । किञ्चास्माकं विधेः क्रियायाः तामृद्धिं हे वाचस्पते गच्छेति । तां विशिनष्टि या देवा इति । किञ्च वयमपि तामृद्धिं रात्स्याम '—इति गोविन्दस्वामी ।

(ii) एत मानसाख्यं ग्रहम् । हे वाचस्पते नामन्, डिलुक्, नाम्नि सर्ववाङ्मये । हे विधे निर्वाहक, विधेम परिचरेम, ते तव, नाम रूपम् । विधेः, सम्बुद्ध्यलोपः, हे विधे त्वमस्माकं नाम्ना सुपोऽयं टा, नामसु, रूपेषु वपुष्षु, छान्दसं दसो लोपः उपभोग्यताम् । गच्छ अन्तर्णीतण्यर्थः गमय । गृहपतिर्येषां ते देवा समृद्धिं प्रापुः, तां वयं रात्स्यामोऽनुनयेमेति—

स्यष्वर्यर्धहं श्रुत्वा तस्माद्देवादपव्रजेत् ॥ इति षड्गुरुशिष्यः ।

सम्पादित करो] । हमारे द्वारा प्रदत्त हवि रूप अन्न या कीर्ति से मुक्त तुम द्यौ [=स्वर्ग] लोक को जाओ। देव और प्रजापति-गृहपतियों ने जिस ऐश्वर्य को प्राप्त किया उसी ऐश्वर्य को हम [यजमान] भी प्राप्त करें।' [-यह ग्रह-मन्त्र है जिसे होता पढ़े]।

मन्त्रान्तराणि विधत्ते—

**अथ प्रजापतेस्तनूरनुद्रवति ब्रह्मोद्यं च ॥** इति ।

चतुर्होतृग्रहमन्त्रपाठानन्तरं होता प्रजापतितनूसञ्ज्ञकान् मन्त्रान् ब्रह्मोद्यसञ्ज्ञकं मन्त्रश्च 'अनुद्रवति' अनुक्रमेण ब्रूयात् ।

द्वादशसंख्याकाः प्रजापतितनुसञ्ज्ञका अन्नादा चेति च शब्दान्तानि द्वादश पदानि प्रजापतेस्तन्व. । तत्र द्वे द्वे पदे उपादाय क्रमेण प्रशस्यते ॥

इस [चतुर्होतृ-ग्रह मन्त्र पाठ] के अनन्तर [होता] 'प्रजापतितनू' नामक और 'ब्रह्मोद्य' नामक मन्त्र को अनुक्रमेण बोले। [ये मन्त्र बारह हैं जो दो-दो करके बोले जाते हैं]।

तत्र प्रथम पदयुग्ममाह—

**अन्नादा चान्नपत्नी चान्नादा तदग्निरन्नपत्नी तदादित्य. ॥** इति ।

अन्नादादयः प्रजापतेर्मूर्तिविशेषस्य वाचका. शब्दा । अन्नादेति यदस्ति, तदयमग्नि, अन्नपत्नीति यदस्ति, तदसावादित्य, एतदुभय प्रजापतितनुरूपम् ॥

(१, २) 'अन्नादा चान्नपत्नी च'—'अन्न खाने वाले और अन्न की पत्नी'—जो अन्न खाने वाले हैं वह अग्नि हैं और जो अन्नपत्नी हैं वह आदित्य हैं [दोनों ही प्रजापति के मूर्ति रूप हैं]।

*द्वितीय युग्ममाह—*

**भद्रा च कल्याणी च, भद्रा तत्सोमः, कल्याणी तत्पशवः ॥** इति ।

पूर्ववद्व्याख्येयम् ॥

(३, ४) 'भद्रा च कल्याणी च' 'भद्र और सुन्दर'—जो भद्र है वह सोम है, जो सुन्दर हैं वे पशु हैं।

तृतीय युग्ममाह—

**अनिलया चापभया चानिलया तद्वायुर्न ह्येष कदा च नेलयत्यपभया तन्मृत्युः सर्वं ह्येतस्माद् बीभाय ॥** इति ।

एष वायु कदाचिदपि 'नेलयति' न हि। इलयतिर्गतिकर्मा[1]। 'नेलयति' न गच्छतीति न हि, किंतु सदा गच्छत्येव। अमुमर्थं अनिलयेति शब्दो ब्रूते। निलयो

---

१ चुरादि० १२७ ।

निवासः, स नास्ति यस्या वायुमूर्त्तेः सेयम् 'अनिलया'। अपगतं भयं यस्या मृत्युमूर्त्तेः सेयम् 'अपभया'। सर्वमपि जगत् 'एतस्मात् मृत्यो बीभाय' नेति प्राप्नोति, तादृशो मृत्युः कस्मादस्मादन्यस्माद्बिभेति प्राप्नुयात् ॥

अनेन न्यायेन पूर्वोक्तानामपि मूर्तीनां निरुक्तयो द्रष्टव्याः। अतपन्नोत्पन्नात्सादाग्नि-मूर्त्ति, अग्नस्य पत्नी पालयित्री सूर्यमूर्ति। 'आदित्याज्जायते वृष्टिः'[1] इति न्यायेन पाल-यितृत्वम्। सोममूर्त्तं वंशहेतुत्वात्, दृष्टिभिरत्वाच्च भद्रत्वम्। पशुमूर्त्तं क्षीरादिप्रदानेन कल्याणत्वमिति तासां निरुक्तय ॥

(५, ६) 'अनिलया चापभया च' 'गृहविहीन और भयरहित'—जो गृहविहीन है वह वायु [रूप प्रजापति की मूर्ति] है, क्योंकि यह वायु कभी भी रुकती नहीं है [सदा चलती ही रहती है] और न तो इसका कोई [=निलय] निवास स्थान ही है। जो भयरहित है वह मृत्यु [रूप मूर्ति] है क्योंकि सभी लोग इससे डरते हैं।

चतुर्थपदयुग्ममाह—

**अनाप्ता चानाप्या चानाप्ता तत्पृथिव्यनाप्या तद् द्यौः ॥ इति।**

दूरस्थस्य ग्रामादे संयोगे सति प्राप्तिरित्युच्यते, पृथिव्यामेवोत्पन्नस्य मनुष्यादेः दूरवर्तित्वपूर्वकं पृथिवीसंयोगो नास्ति, तस्मादसंयोगपूर्वस्य संयोगस्य प्राप्तिशब्दार्थस्या-भावात् 'अनाप्ता' भूमिः। उपरि दूरदेशवर्तित्वेन प्राप्तुमयोग्यत्वाद् द्यौः 'अनाप्या' ॥

(७, ८) 'अनाप्ता चानाप्या च' 'प्राप्त न की हुई और न की जाने वाली' जो प्राप्त नहीं है वह भूमि [रूप मूर्ति] है और जो प्राप्त न किया जाने वाला है वह द्यौ है।[2]

पञ्चम युग्ममाह—

**अनाधृष्या चाप्रतिधृष्या चानाधृष्या तदग्निरप्रतिधृष्या तदादित्यः ॥ इति।**

अग्न्य समीपं प्राप्य हस्तस्पर्शेन धर्षितुमभिभवितुमशक्योऽग्निः। आदित्यो यथा न प्रकाशत तथा कश्चित् प्रतिबन्धं कृत्वा धर्षितुमभिभवितुमशक्य आदित्यः ॥

(९, १०) 'अनाधृष्या चाप्रतिधृष्या च' 'न जीते जाने वाली और न रुकने हुए अभिभवरहित' जो न जीते जाने वाली है वह अग्नि [रूप मूर्ति] है, अर्थात् हस्तस्पर्श से जो धर्षण करने योग्य नहीं है, और जो न रुकने हुए अभिभव में अशक्य है वह आदित्य [रूप मूर्ति] है।

षष्ठ युग्ममाह—

**अपूर्वा चाभ्रातृव्या चापूर्वा तन्मनोऽभ्रातृव्या तत्संवत्सरः ॥ इति।**

---

१. म० स० ३. ७६।

२. 'नवपर्या दुर्गमा भूर्द्युप्राप्य स्वर्गं एव च'—इति षड्गुरुशिष्यः।

न विद्यते पूर्वं प्रथमप्रवृत्तमिन्द्रियं यस्या मनोमूर्तेः सेयम् अपूर्वा' सर्वमपीन्द्रियजात मनसा सकल्पिते विषये पश्चात्प्रवर्तते अतो नान्यस्य पूर्वप्रवृत्तिः । सवत्सर[1] कालात्मा सर्वं जगज्जरयति न च त काल जरयितु समर्थ कश्चिदन्योऽस्ति तस्मात् सवत्सरमूर्तिर्भ्रातृव्यरहिता ॥

(११, १२) 'अपूर्वा चाभ्रातृव्या च' 'जो पूर्व में नहीं है और जिसका कोई शत्रु नहीं है।' जो पहले नहीं है वह मन [रूप मूर्ति] है [अर्थात सभी इन्द्रियजात मन से ही सकल्पित होने के बाद प्रवर्तित होते हैं] और जो भ्रातृव्यरहित है वह 'सवत्सर' [रूप अर्थात् कालात्मक मूर्ति] है [अर्थात काल को कोई नष्ट नहीं कर सकता, अपितु काल ही सबको नष्ट कर देता है]।

द्वादशपदरूपा प्रजापतितनूरुपसहरति--

*एता वाव द्वादश प्रजापतेस्तन्व एष कृत्स्न प्रजापतिस्तत्कृत्स्न प्रजापतिमाप्नोति दशममह.* ॥ इति ।

अन्नादेत्यारभ्य अभ्रातृव्येत्यन्ता द्वादशसख्याका मूर्तयो या प्रोक्ता , एता एव प्रजापतेर्जगन्निर्वाह(हि)कास्तन्व । एष द्वादशभिस्तनूभिर्युक्त प्रजापति 'कृत्स्न सपूर्ण । तथा सत्येतत्पदपाठेन कृत्स्न प्रजापतिरूप दशममह प्राप्नोति ॥

ये बारह प्रजापति की [जगन्निर्वाहिक] तनु अर्थात मूर्ति हैं। इन [बारह मूर्तियों] से युक्त प्रजापति सम्पूर्ण है अत इस पद के पाठ से सम्पूर्ण प्रजापति रूप दशम अह को [वह यजमान] प्राप्त करता है।

ब्रह्मोद्यमन्त्रविधिमनूद्य तन्मन्त्रस्वरूप दर्शयति--

अथ ब्रह्मोद्य वदन्त्यग्निर्गृहपतिरिति हैक आहु , सोऽस्य लोकस्य गृहपतिर्वायुर्गृहपतिरिति हैक आहु , सोऽन्तरिक्षलोकस्य गृहपतिरसौ वै गृहपतिर्योऽसौ तपत्येष पतिर्ऋतवो गृहा । येषा वै गृहपति देव विद्वान् गृहपतिर्भवति, *राध्नोति स गृहपती, राध्नुवन्ति ते यजमाना । येषा वा अपहतपाप्मान* देव विद्वान् गृहपतिर्भवत्यप स गृहपति पाप्मान हतेऽप ते यजमाना पाप्मान घ्नतेऽध्वर्यो अरात्स्मारात्स्म ॥ २५ ॥ इति ।

'अथ' द्वादशपदानुद्रवणादनन्तर ब्रह्मोद्यनामक मन्त्र वद्यु । ब्राह्मणानामुद्य सवादो 'ब्रह्मोद्यम्' । अग्निरित्यादिरस्तन्मन्त्र । एके ब्राह्मणा अग्नि गृहपति ' स्वामीत्याहु । सोऽग्न्यत्वादिना तन्मतमन्यैर्ब्राह्मणैर्दूष्यते --अग्नि अस्य लोकस्य भूलोकमात्रस्य गृहपति , न तु सर्वलोकस्यति दूषणवादिनामभिप्राय । तच्छ्रुत्वा परे ब्राह्मणा

१ मनस पूर्वत्र नास्ति न द्वेषा वत्सरस्य च ।
स्वजीवन प्रार्थयन्ते सर्वे सवत्सरानुगम् ॥ इति षड्गुरुशिष्य ।

वायुर्गृहपतिरित्याहुः तदपि मतमन्यैर्ब्राह्मणैर्दूष्यते, स वायुरन्तरिक्षलोकस्यैव गृहपतिः न तु सर्वस्य । योऽसावादित्यस्तपति सोऽसावेव गृहपतिरिति सर्वैरङ्गीकार्यं मतम् । कथं गृहपतित्वमिति ? तदुच्यते—'एष' प्रतप्यमान आदित्यः पतिः तस्य निमित्ता वसन्ताद्यृतवो गृहाः । तस्मात्तल्लक्षणानां गृहाणां पतिरित्ययमर्थो नाग्निवाय्वोरस्ति, आदित्ये तु विद्यते तत्संचारादृतुनिष्पत्तेः । किंच 'यथाम्' ऋतूनां गृहरूपाणां स्वामिनमादित्यदेव गृहपतित्वेन विद्वान् पुरुषः स्वयमपि गृहपतिर्भवति । स च गृहपतिः 'राध्नोति' सर्वैर्भोगैः समृद्धो भवति । तादृशेन गृहपतिना युक्तास्ते यजमानाः सर्वेऽपि 'राध्नुवन्ति' समृद्धिं प्राप्नुवन्ति । तथाभूतगृहरूपाणां स्वामित्वादादित्यस्य गृहपतित्वं युक्तमित्यर्थः । सत्रे दीक्षिताः सर्वेऽपि यजमानाः, तेषु मुख्यो गृहपतिरिति विवेकः । किंच यथाऽऽनृतूनां स्वामिनमादित्यमेवम् 'अपहतपाप्मानं' सर्वपापरहितं विद्वान् पुरुषः स्वयं गृहपतिर्भवति, स गृहपतिः पाप्मानमपहते । ये त्वेवं यजमानास्तेऽपि पाप्मानमपघ्नते । तादृशमृतूनां स्वामिना गृहपतित्वं युक्तम् । ऋद्धयो वयम् आगत्म समृद्धा अभूम' । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकायां चतुर्थाध्याये (चतुर्विंशाध्याये) षष्ठः खण्डः ॥ ६ ॥ (२५) [ १७८ ]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयात् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर माधवाचार्यादेशतो श्रीमत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाशे' नामभाष्ये ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकायां चतुर्थोऽध्यायः ( चतुर्विंशाध्यायः ) समाप्तः ॥ २४ ॥

---

१ (i) प्रजापतिरकामयत—इत्यारभ्य ( पृ० ६६४ ), एतावान् ग्रन्थः सत्रेषु विशेषतो द्वादशाहहोतृप्रयोगविषयः समाम्नातः । कल्पे तु 'सत्राणाम्'—इत्युपक्रम्य (७ १ १) 'एतावत् सात्र होतृत्वमन्यत्र महाव्रतात्'—इत्यन्तैः ( ८ १३ ३० ) सूत्रैः सत्रविधय उक्ताः, द्वादशाहप्रयोगा अपि तदन्तर्गता एव । तथापि 'गार्हपत्य जुहुयात्'—इत्यादि ग्रन्थस्तु ( ८ १३ १–२ ), 'न यज्ञायाः सम्पद्यन्ते'—इत्यादिब्राह्मणस्य ( ८३४—८५४ पृ० ) व्याख्यानायानुवाद इवेति । सामब्राह्मणे तु 'अग्निना पृथिव्यौषधिभिः '—इत्यादि ( १० १ १ ), दशरात्रं वा एष प्रतिष्ठितः '—इत्यन्तश्च ( १५ १२ ८ ) विस्तृतग्रन्थो द्वादशाहोद्गात्रविधायक आम्नातः । कात्यायनश्रौतसूत्रेऽपि द्वादशाध्यायीयसूत्रैरेष एव द्वादशाहो वर्णितः । समाम्नातश्च तदाध्वर्यवं शतपथब्राह्मणे, तैत्तिरीयसंहितायां च सप्तमे काण्डे द्वितीयप्रपाठकीयप्रपाठकीयाद्यनुवाकेष्विति ।

(ii) 'ऋध्नवं अगन्म' इति याज्यात्वेन प्रयुक्तः, तु० आश्व० श्रौ० ८ १२ १५,१६ ।

इस [द्वादश पद के अनुक्रम से पाठ] के अनन्तर 'ब्रह्मोद्य' [अर्थात् ब्राह्मणों का संवाद[1]] नामक मन्त्र पढ़ना चाहिए—'अग्नि गृहपति अर्थात् स्वामी हैं'—ऐसा कुछ ब्राह्मण कहते हैं [इस मत का खण्डन करते हुए अन्य ब्राह्मण कहते हैं कि] वह तो [मात्र] इस लोक का ही गृहपति है [सभी लोको का स्वामी नहीं है], 'वायु गृहपति है'—ऐसा कुछ ब्राह्मण कहते हैं *[तो अन्य के मत से] वह तो मात्र अन्तरिक्ष लोक का ही गृहपति है* [सभी लोक का नहीं]। जो यह आदित्य तप रहा है वही गृहपति है [यह मत सभी को स्वीकृत है; क्योंकि] इस [प्रकाशमान आदित्य] से निष्पन्न [वसन्त आदि] ऋतुएँ गृह [निवास] हैं। [अर्थात् आदित्य ऋतुरूप गृह का स्वामी है, वायु आदि स्वामी नहीं हैं] इतना ही नहीं अपितु जिन ऋतु रूप गृहों के स्वामी आदित्य देव को गृहपति रूप से जो पुरुष जानता है वह स्वयं भी गृहपति होता है और वह गृहपति सभी भोगों से समृद्धि को प्राप्त होता है। [उस गृहपति से युक्त] वे यजमान भी समृद्धि को प्राप्त करते हैं। इतना ही नहीं अपितु सब पापों से रहित करने वाले जिन [ऋतुओं के स्वामी आदित्य देव] को जो जानता है वह स्वयं गृहपति होता है और वह गृहपति पापों को दूर करता है और जो अन्य यजमान हैं वे भी पापों को नष्ट करते हैं [अतः ऋतुओं के स्वामी सूर्य का गृहपतित्व युक्तियुक्त है]। 'हे अध्वर्यु हम समृद्ध हुए।'

॥ इस प्रकार पञ्चम पञ्चिका के चतुर्थ (चौबीसवें) अध्याय की
सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ ४ ॥

—: ० :—

१. तु० शत० ब्रा० ४.६.९.२०, पञ्च० ब्रा० ४.९.१४, कात्या० श्रौ० १२.४.२१। आप० श्रौ० २१.१२।

# अथ पञ्चमोऽध्यायः

## प्रथमः खण्डः

# [अथ पञ्चविंशोऽध्यायः

## प्रथमः खण्डः]

दशममहरविवाक्यमभिधाय द्वादशाहः समापितः । अथाग्निहोत्रमभिधीयते । तत्राध्वर्युं प्रति यजमानोऽग्न्युद्धरणकर्तव्यतां ब्रूयात् । तदाह आपस्तम्बः—'उद्धरेत्येव सायमाह यजमान उद्धरेति प्रातः'[1] इति ।

तत्र सायंकालीन यजमानकर्तव्यं विधत्ते—

**उद्धराहवनीयमित्यपराह्ण आह; यदेवाह्ना साधु करोति, तदेव तत्प्राङुद्धृत्य तदभये निधत्ते ॥ इति ।**

अग्निहोत्रस्याध्वर्युरेक एव ऋत्विग्भवति । तथा च शाखान्तरे श्रूयते—'तस्मादग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक्'[2] इति । तमध्वर्युं यजमानः प्रेष्यति । हेऽध्वर्यो, आहवनीयाख्यं वह्निमुद्धरेति । ज्वलन्तमग्निं गार्हपत्यादुद्धृत्य प्राञ्चं प्रणीयाऽऽहवनीयस्थाने निधेहीत्यर्थः । तथा च आश्वलायन आह—'गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत्'[3] इति । 'उद्धर आहवनीयम्'–'इति' अमुं प्रैषम् 'अपराह्णे' सायंकाले सूर्यास्तमयात् प्राग् यजमानो ब्रूयात् । एवं सति अह्ना सर्वेणापि यदेव पुण्यं यजमानः करोति, तत्सर्वं प्राङुद्धृत्य भयरहिते आहवनीयस्थाने निहितवान् भवति[4] ॥

[अग्निहोत्र[5]]—

५. २६ [xxv.१] [अध्वर्यु से अग्निहोत्र करने वाला यजमान] सायंकाल [अर्थात् सूर्यास्त से पहले] कहे कि [हे अध्वर्यु,] आहवनीय नामक अग्नि का उद्धरण करो [अर्थात् प्रज्वलित अग्नि को गार्हपत्याग्नि से आहवनीय स्थान में लाओ] ।' इस प्रकार सम्पूर्ण दिन में जो भी पुण्य यजमान करता है उस सभी को सामने लाकर भयरहित [आहवनीय] स्थान में रख देता है ।

---

१. आप० श्रौ० ६.१.४ । २. तै० ब्रा० २.१.६ । ३. आश्व० श्रौ० २.२.१ ।

४. उद्धरणप्रकारोद्धरणमन्त्रादिकं सर्वम् आश्वलायनीय श्रौतसूत्रेषु ( २.२ ) द्रष्टव्यम् ।

५. ऐ० ब्रा० ५.२६-३१ । तु० आश्व० श्रौ० ३.११ । कौ० ब्रा० २ ।

प्रातःकालीन यजमानकर्तव्य विधत्ते—

**उद्धराहवनीयमिति प्रातराह, यदेव रात्र्या साधु करोति, तदेव तत्प्राङुद्धृत्य तदभये निधत्ते ॥** इति।

पूर्ववद् व्याख्येयम् ॥

*[हे अध्वर्यु,] 'आहवनीय नामक अग्नि को लाओ'—इस प्रकार [यजमान] प्रातःकाल* कहे। इस प्रकार सम्पूर्ण रात्रि में जो पुण्य यजमान करता है उन सभी को सामने लाकर भयरहित [आहवनीय] स्थान में रख देता है।

आहवनीयोद्धरण प्रशसति—

**यज्ञो वा आहवनीय, स्वर्गो लोक आहवनीय ॥** इति।

आहवनीयस्य यज्ञनिष्पादनेन स्वर्गहेतुत्वाद् भयरूपत्वम् ॥

आहवनीय [उद्धरण] यज्ञ है और आहवनीय स्वर्ग लोक है।

वेदन प्रशसति—

**यज्ञ एव तत् स्वर्गे लोके स्वर्गं लोक नियत्ते य एव वेद ॥** इति।

आहवनीयोद्धरणस्य वेदिता स्वर्गसाधनयज्ञात्मके स्थाने स्वर्गं लोक स्थापितवान् भवति ॥

जो इस प्रकार जानता है वह उससे स्वर्गसाधनभूत यज्ञात्मक स्थान में स्वर्ग लोक को स्थापित करता है।

अथाग्निहोत्रहोमद्रव्य क्षीरादिरूप प्रशसितुमुपक्रमते—

**यो वा अग्निहोत्र वैश्वदेव षोळशकल पशुषु प्रतिष्ठित वेद, वैश्वदेवेनाग्निहोत्रेण षोळशकलेन पशुषु प्रतिष्ठितेन राघ्नोति ॥** इति।

'य' पुमानग्निहोत्रशब्देन कर्मवाचिनोपलक्षितहोमद्रव्य वेद, स पुमानग्निहोत्रकर्मणा 'राध्नोति समृद्धो भवति। कीदृशमग्निहोत्रद्रव्य? 'वैश्वदेव' वक्ष्यमाणा रुद्रादयो विश्वे देवा, तेषा सम्बन्धि, 'षोळशकल' षोळशावस्थम्। ते चावस्थाविशेषा रौद्र गवीत्यादिना वक्ष्यन्ते। गवि स्थितत्वादेव पशुषु प्रतिष्ठितम्। अग्निहोत्रेण यत्रापि विशेषणत्रय द्रव्यद्वारा योजनीयम् ॥

जो [रुद्र आदि] विश्वे देवों से सम्बन्धित षोडश अवस्था वाले और [गायों में स्थित होने से] पशुओं में प्रतिष्ठित अग्निहोत्र कर्म को जानता है वह विश्वेदेवों से सम्बन्धित *षोडश अवस्था वाले और पशुओं में प्रतिष्ठित अग्निहोत्र [हविर्द्रव्य] के द्वारा समृद्धि को* प्राप्त करता है।

होमद्रव्यस्य बहुदेवतासम्बन्ध षोळशावस्थोपेतत्व च दर्शयति—

**रौद्र गविसद् वायव्यमुपावसृष्टमाश्विन दुह्यमान, सौम्य दुग्ध, वारुणमधिश्रित, पौष्ण समुदयन्त, मारुत विष्यन्दमान, वैश्वदेव बिन्दुमत्, मैत्र शरो-**

**गृहीतं, द्यावापृथिवीयमुद्वासितं, सावित्रं प्रक्रान्तं, वैष्णवं ह्रियमाणं, बार्हस्पत्यमुपसन्नमग्नेः, पूर्वाहुतिः, प्रजापतेरुत्तरैन्द्र हुतम् ॥ इति ।**

होमद्रव्यं क्षीर 'गवि सत्' गो शरीरे यदा तिष्ठति, तदा 'रौद्र' रुद्रदेवताकं[1] वेदितव्यम् । 'उपावसृष्ट' वत्सेन संसृष्टं प्रस्नुत यदा भवति, तदा वायुदेवताक, दुह्यमानत्वदशायामश्विदेवताक, दुग्धत्वदशाया सोमदेवताकम् 'अधिश्रित' पात्रार्थमग्नौ स्थापित वरुणदेवताकम् । 'समुदयन्त[2]' पात्रमध्य स्थित्वा सतापवशेन सम्यगूर्ध्वंदशाया पूषदेवताकम् । 'विष्यन्दमानम्' ऊर्ध्वंमुद्गतस्य पात्राद् बहिर्विशेषेण स्यन्दनदशापन्नं मरुद्देवताकम् । 'विन्दुमद्' बुद्बुदवद्विश्वेषा देवाना सम्बन्धि । 'शरोगृहीत' सारप्रचयनावापन्न [3]मित्रदेवताकम् । 'उद्वासितम्' अग्निस्थानाद् बहिरवस्थापितं द्यावापृथिवीदेवताकम् । 'प्रक्रान्त' होतु हरणायोपक्रान्तं सवितृदेवताकम् । 'ह्रियमाण' होमस्थाने नीयमानं विष्णुदेवताकम् । 'उपसन्न' नीत्वा वेद्यामासादित बृहस्पतिदेवताकम् । तेन द्रव्येण या 'पूर्वाहुतिः', साऽग्निसम्बन्धिनी । उत्तराऽऽहुतिस्तु प्रजापतिसम्बन्धिनी । 'हुतं' होमोत्तरकालीनम् इन्द्रदेवताकम् । एव हविषः षोडशावस्था तत्तद्देवतासम्बन्धाश्च दर्शिता [4] ॥

**जो [क्षीर रूप हविर्द्रव्य] गाय में है वह रुद्र देवताक जानना चाहिए, जो बछड़े से संसृष्ट हो चुका हुआ है वह वायुदेवताक है, जो दुहने की दशा में है वह अश्विनों का है, जो दुहा जा चुका है वह सोमदेवताक है, जो पकाने के लिए अग्नि पर रखा गया है वह वरुणदेवताक है, जो उबाल है वह पूषादेवताक है; जो उबल कर पात्र से बाहर गिरता है वह मरुद्देवताक है जो बुद्बुद् अर्थात् फेन से युक्त है वह विश्वेदेव से सम्बन्धित है, मलाई मित्रदेवताक है, अग्निस्थान से जो बाहर गिरे वह द्यावापृथिवीदेवताक है; जो हवनार्थ लेना है वह सवितृदेवताक है, जो होमस्थान में ले जाया जाने वाला है वह विष्णुदेवताक है; जो लाकर वेदि पर रखना है वह बृहस्पति देवताक है, [उस हविर्द्रव्य से]**

---

१. तु० शत० ब्रा० ११.५.३.५ ।

२. सम्यग् उद्गतोऽन्तो यस्य द्रव्यस्य तत्समुदन्तं द्रव्यम् । परित. स्थालीसंवद्धप्रदेशोऽन्त इत्युच्यते । इति नारायण (आश्व० श्रौ० २.३.८) । द्र० तै० ब्रा० २.१.७ । कात्या० श्रौ० २५ २.३ ।

३. (i) 'क्षीरमध्ये घनीभूत यच्छरः सारं तन्मित्रस्य प्रियम्'—इति तै० ब्रा० २.१. ७ सा० भा० ।

(ii) 'शरसा करेण पाण्या वा गृहीतं मित्रदैवतम्', उद्वासोऽवरोध , (प्रक्रान्तम् =) नीतम्, (उपसन्नम् =) आहवनीयस्थकुशेषु सादितम्, (पूर्वाहुतिः =) सायंप्रातरग्निसूर्यदेवत्याग्ने. प्रियाहुति.—इति षड्गुरुशिष्यः ।

४. तै० ब्राह्मणे (२.१.७) ऽप्येता एव षोडशावस्थास्तत्तद्देवताश्चाम्नाताः ।

जो पूर्व आहुति है वह अग्नि-सम्बन्धी है और पिछली आहुति प्रजापति-सम्बन्धी है तथा जो आहुति हो चुकी वह इन्द्रदेवताक है। [इस प्रकार होम की सोलह अवस्था उनके देवता के साथ प्रतिपादित हैं]।

तत्सर्वमुपसंहरति—

**एतद्वा अग्निहोत्रं वैश्वदेवं षोळशकलं पशुषु प्रतिष्ठितम् ॥** इति।

*'अग्निहोत्र'* तदर्थं क्षीरम् ॥

इस प्रकार यह अग्निहोत्र विश्वेदेवों से सम्बन्धित, सोलह अवस्था वाला और पशुओं में प्रतिष्ठित है।

तद्वेदनं प्रशंसति—

***वैश्वदेवेनाग्निहोत्रेण षोळशकलेन पशुषु प्रतिष्ठितेन राध्नोति य एवं वेद* ॥ २६ ॥** इति।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम पञ्चिकाया पञ्चमाध्याय (पञ्चविंशाध्याये) प्रथम खण्ड ॥ १ ॥ (२६) [१७९]

जो इस प्रकार जानता है वह विश्वेदेवों से सम्बन्धित, सोलह अवस्था वाले और पशुओं में प्रतिष्ठित अग्निहोत्र से समृद्धि को प्राप्त करता है।

॥ इस प्रकार पचीसवें अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥१॥

## अथ द्वितीय खण्डः

अथाग्निहोत्रे वैकल्यनिमित्त प्रश्नपूर्वक प्रायश्चित्त विधीयते—

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत् का तत्र प्रायश्चित्तिरिति तामभिमन्त्रयेत ॥** इति।

*अग्निहोत्रार्थे सम्पादिता गौ 'अग्निहोत्री'*। सा च *'उपावसृष्टा'* दोहनार्थं वत्सेन सयोजिता, ऊर्ध्वं दुह्यमाना सती, दोहनमध्ये यद्युपविशेत् तदानी शास्त्रीयस्य दोहनस्य विनष्टत्वाद् *'यस्य'* यजमानस्य *'तत्र'* अग्निहोत्र्युपवेशन प्रायश्चित्तिरपेक्षिता सा च कीदृशीति ? प्रश्न.। *'ताम्'* अग्निहोत्रीं वक्ष्यमाणेन मन्त्रेणाभिमन्त्रयेतेति प्रायश्चित्तविधि ॥

v २७ [xxv,२] जिस [यजमान] की अग्निहोत्र के लिए सम्पादित गाय यदि दोहन के लिए बछड़े से सयोजित होने के बाद दुहने के मध्य ही बैठ जाय तो उसका क्या प्रायश्चित्त है[1] ? उस अग्निहोत्री गाय को तब इस मन्त्र से अभिमन्त्रित करे—

---

१ अग्निहोत्रीत्यग्निहोत्रहो मक्षीरप्रदा तु गौ।
यजमानस्य यस्यैव स्यात् प्रायश्चित्तिरस्य का ?
प्रायो नाशस्तस्य चिति समाधान तु कथ्यते।
'प्रायस्य चित्तिचित्तयोरिति' सुट् गणसूत्रत ॥पा सू ६ १ १५७। इति षड्गुरुशिष्य।

तत्र मन्त्रं दर्शयति—

**यस्माद् भीषा निषीदसि, ततो नो अभयं कृधि । पशून्नः सर्वान् गोपाय नमो रुद्राय मीढुष इति ॥ इति ।**

हे अग्निहोत्रि ! त्वं 'यस्माद्' विरोधिनः शङ्क्यमानात्मनसा स्मर्यमाणाद् व्याघ्रादेः 'भीषा' भयेन 'निषीदसि' उपविशसि, 'ततो' भयहेतोः सकाशात् 'नः' अस्माकम् 'अभयं कृधि' कुरु । तथा 'नः' अस्माकं सर्वान् पशून् 'गोपाय' रक्ष । 'मीढुषे' सेचनसमर्थाय 'रुद्राय' पशुस्वामिने नमोऽस्तु । 'इति' शब्दो मन्त्रसमाप्त्यर्थः ॥

'हे अग्निहोत्रि गौ, जिस [व्याघ्र आदि] के भय से तुम बैठती हो उससे हमें अभय करो और हमारे सभी पशुओं की रक्षा करो, सेचन-समर्थ [पशुओं के स्वामी पशुपति] रुद्र के लिए नमस्कार होवे[1] ।'

अभिमन्त्रणादूर्ध्वं तस्या अग्निहोत्र्या मन्त्रान्तरेणोत्थापनं विधत्ते—

**तामुत्थापयेत् ॥ इति ।**

[अभिमन्त्रण के बाद] उस [मन्त्र] से उठावे ।

तस्मिन्नुत्थापने मन्त्रमाह—

**उदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् । इन्द्राय कृण्वती भागं मित्राय वरुणाय चेति ॥ इति ।**

'अदितिः' अदीना देवी देवतारूपाऽग्निहोत्री 'उदस्थात्' उत्थितवती । उत्थाय च 'यज्ञपतौ' यजमाने आयुः 'अधात्' सम्पादितवती । कीदृश्यग्निहोत्री ? इन्द्रमित्रवरुणानामपेक्षितं हविर्भागं 'कृण्वती' सम्पादयन्ती । 'इति' शब्दो मन्त्रसमाप्त्यर्थः ॥

[तब उठाने के लिए यह मन्त्र कहे]—'इन्द्र, मित्र और वरुण के लिए हविर्भाग का सम्पादन करती हुई अदिति देवता रूप [अग्निहोत्री गौ] उठी और उठकर यज्ञ के पति यजमान में आयु को दिया ।'

उत्थापनानन्तरकर्तव्यं दर्शयति—

**अथास्या उदपात्रमूधसि च मुखे चोपगृह्णीयादथैनां ब्राह्मणाय दद्यात्, सा तत्र प्रायश्चित्तिः ॥ इति ।**

'अस्याः' अग्निहोत्र्याः, 'ऊधसि' उदकपात्रग्रहणं नाम जलस्यासेचनं, 'मुखे' गृहीत्वा जलं पाययित्वा, तादृश्या 'ब्राह्मणाय' दानं यदस्ति, 'सा' 'तत्र' वैकल्ये प्रायश्चित्तिरवगन्तव्या ॥

---

1. तु० आश्व० श्रौ० ३.११.१, अत्रोक्तस्य दानस्य स्थानेऽनेन अग्निहोत्र्या ऊधसि च मुखे च समीपे उदपात्रम् उद्गृह्य तदस्या दुग्धं यन्तं ब्राह्मणं पाययेत्—इति विकल्पः ।

अथवा, [उठने के बाद] इस [अग्निहोत्री गौ] के थन में [छिट्टा देने के लिए गृहीत] जल पात्र को उसके मुख के समीप ले जाकर [जल पिलाकर फिर] उसे ब्राह्मण को दान में दे देवे' वहाँ [विकल्प में] वह प्रायश्चित्त है।

अथ दोहनकाले ध्वनिकरणे प्रायश्चित्तं विधत्ते—

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना वाश्येत, का तत्र प्रायश्चित्तिरित्यशनाया ह वा एषा यजमानस्य प्रतिख्याय वाश्यते, तामन्नमप्यादयेच्छान्त्यै, शान्तिर्वा अन्न, 'सूयवसाद्भगवती हि भूया' इति, सा तत्र प्रायश्चित्तिः, ॥इति।**

'वाश्येत'[1] हम्मारव कुर्वीत, तदानीमेवाग्निहोत्री स्वकीयाम् 'अशनाया' क्षुधा यजमानस्य 'प्रतिख्याय' प्रख्यापनार्थं 'वाश्यते' ध्वनिं करोति। तस्मात् ताम्' अग्निहोत्री वाश्यमानाम् अन्नम् 'अप्यादयेत्', अपिशब्दात्तृणादिकमपि। तच्च भक्षणं क्षुधाशान्त्यै संपद्यते। अन्न शान्तिहेतुरिति प्रसिद्धम्।[2] 'सूयवसाद्' इत्यादि मन्त्र। हे अग्निहोत्रि ? 'भगवती' पूज्या त्व 'सूयवसाद् भूय', सुष्ठु यवस तृण सूयवसम्, तदत्ति भक्षयतीति सूयवसाद्, तादृशी भवेति मन्त्रार्थं। मन्त्रेणान्नमादयेदिति, यदस्ति सैव 'तत्र' ध्वनौ प्रायश्चित्तिर्द्रष्टव्या॥

जिस यजमान की अग्निहोत्र के लिए सम्पादित गाय बछडे के छोडे जाने पर दुहते समय यदि रम्भावे तो उसका क्या प्रायश्चित्त है? वह अपनी क्षुधा को यजमान से ज्ञापन के लिए रम्भाती है अतः उस [क्षुधार्त अग्निहोत्री-गौ] को अन्न और तृणादिक भी खिलावे। [इस प्रकार यह भक्षण क्षुधा की] शान्ति के लिए ही होता है, [क्योंकि] अन्न शान्ति [के हेतु रूप में प्रसिद्ध ही] है। 'सूयवसाद्' आदि मन्त्र से अन्न देवे 'हे अग्निहोत्रि, पूज्य तुम सुन्दर जौ के तृण को खाती हो'। इस प्रकार वह [अन्न भक्षण ही] वहाँ प्रायश्चित्त है।

दोह्यमानस्य क्षीरस्याग्निहोत्र्या स्थानचलनेन भूमौ पतन प्रायश्चित्तं विधत्ते—

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्पन्देत, का तत्र प्रायश्चित्तिरिति, सा यत्तत्र स्कन्दयेत्तदभिमृश्य जपेत्, ॥ इति।**

'स्पन्देत' किंचिच्चलेत्, 'सा' चलन्ती यदि 'तत्र' भूमौ 'स्कन्दयेत्'[3] ईषत् क्षीर पातयेत्, 'तत्' क्षीर हस्तेन स्पृष्ट्वा मन्त्र 'जपेत्'॥

जिस यजमान की अग्निहोत्री-गौ बछडे के छोडे जाने पर दुहते समय यदि कुछ विचलित हो अर्थात् छटक जाय तो उसका क्या प्रायश्चित्त है? वह चलती हुई यदि भूमि पर दूध छलका दे तो उस [दूध] को हाथ से स्पर्श करके मन्त्र जपे।

---

१. 'वाश्यमानायै यवस प्रयच्छेत्'—इति आश्व० श्रौ० ३ ११ ४१।

२. क्रोधान्धकारित मुखोऽप्यन्न दृष्ट्वा प्रसीदति।
पापशान्तिश्चान्नदस्य सर्वे चास्य सुहृत्तमा ॥इति षड्गुरुशिष्य.।

३. स्पन्दनम् =पादविक्षेपः, स्कन्दनम्=भूम्या सेक। इति षड्गुरु०।

तं मन्त्रं दर्शयति—

**यदद्य दुग्धं पृथिवीमसृप्त, यदोषधीरत्यसृपद्यदापः। पयो गृहेषु पयो अघ्न्यायां, पयो वत्सेषु पयो अस्तु तन्मयीति, ॥ इति।**

अथेदानीं 'यद्दुग्धं' क्षीरं पृथिवीम् 'असृप्त' प्राप्नोत्। 'यच्च ओषधीः' पतितं तृणजातम् 'अत्यसृपत्' अतिशयेन प्राप्नोत्। यदपि 'तत्' क्षीरं बिन्दुरूपम् 'आपः' भूनिष्ठं जलं प्राप्नोत्। आप इति द्वितीयार्थे प्रथमा। तत्सर्वमस्मदीयेषु गृहेषु 'अघ्न्यायाम्' अस्मदीयायां धेन्वा, वत्सेष्वस्मदीयेषु, 'मयि' मदुदरे वा 'अस्तु' तिष्ठतु। पृथगन्वयार्थं 'पयः' शब्दावृत्तिः। 'इति' शब्दो मन्त्रसमाप्त्यर्थः॥

'दुग्ध जो पृथ्वी पर फैल गया या जो [तृणादि] वनस्पति में मिल गया अथवा जो जल में मिल गया वह सब दूध हमारे गृहों में, वह दूध हमारी गायों में, वह दूध हमारे बछड़ों में या मेरे [उदर] में होवे।'

उक्तप्रायश्चित्तादूर्ध्वं होमं विधत्ते—

**तत्र यत्परिशिष्टं स्यात् तेन जुहुयाद् यद्यलं होमाय स्यात्, ॥ इति।**

'तत्र' दोहनपात्रे 'यत्' क्षीरं भूमौ पतित्वा परिशिष्टं स्यात्, तद् 'यदि' होमाय 'अलं' पर्याप्तं भवेत्, तदानीं तेन जुहुयात्॥

उस [दोहन पात्र] में [भूमि से गिरने के बाद] यदि शेष दूध होम के लिए पर्याप्त होवे तो उससे आहुति देवे।

अपर्याप्तावुपायान्तरमाह—

**यद्यु वै सर्वं सिक्तं स्यादथान्यामाहूय तां दुग्ध्वा तेन जुहुयादा त्वेव श्रद्धायै होतव्यं; सा तत्र प्रायश्चित्तिः, ॥ इति।**

'यद्यु वै' यदि च 'सर्वं' दुह्यमानं क्षीरं 'सिक्तं' भूमौ पतितं स्यात्, तदानीम् 'अन्यां' काचिद् गाम् 'आहूय' आनीय, तां दुग्ध्वा तदीयेन क्षीरेण जुहुयात्। यद्यन्याऽपि न लभ्येत, तदानीमप्यग्निहोत्रं न परित्याज्यम्। किन्तु 'श्रद्धायै होतव्यम्'। आङ्लोऽन्ताभिविधिरर्थः,—आ श्रद्धायाः[1], श्रद्धासहितं सर्वमन्नजातं 'होतव्यं' होमयोग्यम्। अयमर्थः—दधिपयआज्यादीनां[2] मध्ये येन केनापि द्रव्येण होतव्यम्। सर्वालाभे स्वन्ततः श्रद्धामपि जुहुयात्। 'अरं

1. 'टार्थे ङे'—इति षड्गुरु०, 'षष्ठ्यर्थे चतुर्थी' इति गोविन्दस्वामी।
2. 'पयसा नित्यहोमः। यवागूरोदनो दधि सर्पिर्ग्रामकामान्नाद्यकामेन्द्रियकामतेजस्कामानाम्' इत्यादि कल्पसूत्राणीहालोच्यानि ( आश्व० श्रौ० २.३.१,२ )। द्र० 'दध्ना पयसा जुहुयात् पशुकामस्य""आज्येन जुहुयात् तेजस्कामस्य""दध्नेन्द्रिय कामस्य""यवाग्वा ग्रामकामस्य""'—इति तै० ब्रा० २.१.५। तु० पयसा पशुकामस्य""आज्येन तेजस्कामस्य'—इत्यादि आप० श्रौ० ६.१५.१।

श्रद्धा जुहोमि' इति सकल्प्य श्रद्धाहोम.। अग्निहोत्रस्य नित्यत्वात् सर्वात्मना परित्यागो न युक्त इति ॥

और यदि सभी दूध [भूमि पर गिरकर] सिक्त हो गया हो तो दूसरी गाय बुलाकर एव उसे दुह कर तब उससे आहुति देवे। [यदि दूसरी गाय न प्राप्त हो तो भी अग्निहोत्र को न छोड़े, किन्तु] श्रद्धा से ही हवन करना चाहिए। वहाँ यही प्रायश्चित्त है।

वेदनपूर्वकमनुष्ठान प्रशसति—

**सर्वं वा अस्य बर्हिष्य, सर्वं परिगृहीतं य एव विद्वानग्निहोत्र जुहोति**॥ इति।

विदित्वाऽनुष्ठातु 'अस्य' पुरुषस्य 'सर्वम्' अपि द्रव्य 'बर्हिष्य' यज्ञयोग्यम्। अत सर्वं द्रव्यमनेन होमार्थं परिगृहीत भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीय 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया पञ्चमाध्याय (पञ्चविंशाध्याये) द्वितीय खण्ड ॥२॥ (२७) [९८०]

इस प्रकार जानते हुए जो अग्निहोत्र करता है तो इस [अनुष्ठानकर्ता] की सभी यज्ञ योग्य सामग्री उसे प्राप्त हो जाती है, अत सभी [होम के लिए द्रव्य] सामग्री इससे परिगृहीत होती है।

॥ इस प्रकार पचीसवें अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥२॥

## अथ तृतीयः खण्ड

यथा श्रद्धाहोम पूर्वमुक्त, तथा भावनारूपा होमोऽग्निहोत्रप्रशसार्थमेव प्रदर्श्यते—

**असौ वा अस्यादित्यो यूपः, पृथिवी वेदिरोषधयो बर्हिर्वनस्पतय इध्मा, आपः प्रोक्षण्यो, दिश- परिधयः** ॥ इति।

'अस्य' भावनारूप यज्ञ कुर्वत पुरुषस्यासौ वा आदित्यो यूपस्थानीय ' 'पृथिवी वेदि'-स्थानीया 'ओषधयो' 'बर्हि ' स्थानीया, 'वनस्पतय ' 'इध्म' स्थानीयाः, भूमौ विद्यमाना 'आप ' सर्वा अपि सस्कृतप्रोक्षणीस्थानीया, प्राच्यादिदिश. परिधिस्थानीया। ईदृशी भावनैवाग्निहोत्रहोम। इतरसमपत्त्यभावेऽप्येतादृशो वा होम कर्तव्य ॥

[भावना रूप होम]—

१. २८ [xxv.३] [श्रद्धा होम की ही भाँति भावना रूप होम अग्निहोत्र के प्रशंसार्थ प्रतिपादित है]—[भावना रूप से यज्ञ करने वाले] इस [पुरुष] का यह आदित्य ही यूपस्थानीय है, पृथ्वी वेदिस्थानीय, ओषधियाँ बर्हिस्थानीय, वनस्पतियाँ समिधास्थानीय [भूमि में विद्यमान] जल [सभी को सस्कृत करने वाली] प्रोक्षणीस्थानीय और प्राची आदि दिशाएँ परिधिस्थानीय हैं [अतः अन्य वस्तुओं के अभाव में इस प्रकार भावना होम करना चाहिए]।

ईदृग्भावनाया फलं दर्शयति—

**यद्व वा अस्य किंच नश्यति, यन्म्रियते, यदपाजन्ति, सर्वं हैवैनं तदमुष्मिँल्लोके यथा बर्हिषि दत्तमागच्छेदेवमागच्छति य एवं विद्वानग्निहोत्रं जुहोति,** ॥ इति ।

य पुमानादित्यो यूप इत्यादिकं विद्वान् भावयन्नग्निहोत्रं जुहोति । 'एनं' पुरुषम् 'अमुष्मिन्' स्वर्गे लोके तत्सर्वमागच्छति । किं किमिति, तदुच्यते—'अस्य' पुरुषस्य 'यद्व वै किंच' अस्मिँल्लोके यत्किमपि वस्तु नश्यति, यच्च पुत्रादिकं म्रियते, यदप्यन्यद् 'अपाजन्ति' अपगच्छति, स्वस्माद् वियुक्तं भवति, तत्सर्वं प्राप्यते । तत्र दृष्टान्तः,—यथा 'बर्हिषि' यज्ञे दत्तं वस्तु स्वर्गे यजमानमागच्छेत्, एवं नष्टं मृतमपगतं च सर्वमागच्छति ।[1]

जो इस प्रकार जानते हुए [भावना से ही] अग्निहोत्र करता है, तो इस [पुरुष] को उस स्वर्ग लोक में वह सब कुछ प्राप्त हो जाता है, जो कुछ भी इस [पुरुष] की वस्तु [इस लोक में] नष्ट होती है, या जो भी [पुत्रादिक] मृत्यु को प्राप्त हो जाते हैं अथवा जो अन्य वस्तु भी चली जाती है । [यह सब उसके पास वैसे ही आ जाते हैं] जैसे यज्ञ में प्रदत्त वस्तु स्वर्ग में यजमान के पास आ ही जाती है ।

योऽयं श्रद्धाहोमः पूर्वमुक्तस्तस्यैव पुनरपि यूपवेद्यादिभावनारूपमनुष्ठानमुक्तम् ॥

इदानीं भावनारूपां दक्षिणामाह—

**उभयान् वा एष देवमनुष्यान् विपर्यासं दक्षिणा नयति, सर्वं चेदं यदिदं किंच,** ॥ इति ।

'एष' श्रद्धाहोमस्य कर्ता, 'देवान् मनुष्यांश्च उभयविधान् 'विपर्यासं' विपर्यस्य दक्षिणाः कृत्वा 'नयति' ऋत्विग्भ्यः समर्पयति । यत्र देवानां दक्षिणारूपत्वं, न तत्र मनुष्याणां तद्रूपत्वम् । यत्र तु मनुष्याणां दक्षिणात्वं, न तत्र देवानामित्येवं विपर्यासः । अनेन विपर्यासेन देवेषु मनुष्येषु च दक्षिणात्वसङ्कल्पः कर्तव्यः । न केवलं देवमनुष्याणामेव दक्षिणात्वं, किं तर्हि ? 'यत्किंचेदं' जगदस्ति, तत्सर्वमिदं श्रद्धाहोमीय दक्षिणा नयति, सर्वस्मिञ्जगति दक्षिणेयमिति सङ्कल्पः कर्तव्यः ॥

यह [श्रद्धा होम का कर्ता] देवों और मनुष्यों दोनों में उलट-फेर कर [अर्थात् जहाँ देवताओं की दक्षिणा है, वहाँ मनुष्यों की नहीं और जहाँ मनुष्यों की दक्षिणा है वहाँ देवताओं की नहीं] दक्षिणा देकर ऋत्विजों को समर्पित करता है । [न केवल देव और मनुष्यों की ही दक्षिणा अपितु] जो कुछ भी इस संसार में है वह सब कुछ इस [श्रद्धाहोम] को [दक्षिणा समर्पित करता है] ।

मनुष्याणां कुत्र दक्षिणात्वमित्याशङ्क्य तद्दर्शयति—

**मनुष्यान् वा एष सायमाहुत्या देवेभ्यो दक्षिणा नयति सर्वं चेदं यदिदं किंच त एते प्रलीना न्योकस इव शेरे, मनुष्या देवेभ्यो दक्षिणा नीताः,** ॥ इति ।

---

1. द्र० 'ब्रह्मवादिनो वदन्ति'''बर्हिष्यं दत्तं भवति'—इति तै० ब्रा० २.१.५.१.२ ।

येय श्रद्धाहोमे सायमाहुति , तया 'आहुत्या' तदाहुतिनिमित्त 'देवेभ्य ' ऋत्विक्स्थानीयेभ्यो 'मनुष्यान्' गोसुवर्णस्थानीयान् दक्षिणा कृत्वा 'नयति' समर्पयति। न केवल मनुष्यान् किंतु 'यत्किचिदिद' जगदस्ति तत्सर्वं दक्षिणा कृत्वा समर्पयति। कथ मनुष्याणा रात्रौ दक्षिणात्वमिति ? तदुच्यते—'एते' मनुष्या यस्मात् साय देवेभ्यो दक्षिणा नीता तस्मात् रात्रौ 'प्रलीना ' स्वस्वव्यापाररहिता 'न्योक्स इव निवृत्तमोक स्थान गृहरूप येषा ते न्योकस ,[1] मदीय गृहमित्यभिमानरहिता एव सन्त 'शेरे' शेरते, सुषुप्तिं गच्छन्तीत्यर्थ [2]। यथा—ऋत्विग्भ्य समर्पित गवादिक दक्षिणाद्रव्य पराधीन भवति एव रात्रौ मनुष्या देवाधीनत्वात् स्वव्यापाराक्षमा , तदिद पारवश्य दक्षिणात्व लिङ्गम् ॥

[इस श्रद्धा होम में] सायकालीन आहुति के निमित्त [ऋत्विक् स्थानीय] देवों के लिए मनुष्यों को [गो, सुवर्ण स्थनीय] दक्षिणा समर्पित करता है। [ मात्र मनुष्यों को ही नहीं अपितु ] जो कुछ भी इस जगत में है वह सब कुछ दक्षिणा रूप में समर्पित करता है [ रात्रि में मनुष्यों की वस्तु दक्षिणा रूप में इसलिए दी जाती है,] क्योंकि [ सायकाल ] देवों के लिए दक्षिणा रूप में समर्पित हुए वे ये [मनुष्य रात्रि में] अपने-अपने कार्य-कलापों से रहित हो 'मेरा गृह है'–इस प्रकार अभिमान से रहित होकर ही सोते हैं [ अर्थात् जैसे ऋत्विजों के लिए समर्पित गो आदि दक्षिणा द्रव्य पराधीन होता है वैसे ही रात्रि में मनुष्य भी देवों के अधीन होने से पराधीन ही होते हैं]।

अथ देवाना दक्षिणात्व दर्शयति—

**देवान् वा एष प्रातराहुत्या मनुष्येभ्यो दक्षिणा नयति सर्वं चेद यदिद किंच, त एते विविदाना इवोत्पतन्त्यदोऽह करिष्येऽदोऽह गमिष्यामिति वदन्त ॥इति॥**

'एष ' श्रद्धाहोमोऽय 'प्रातराहुत्या' निमित्तभूतया 'मनुष्येभ्य ' ऋत्विक्स्थानीयेभ्यो 'देवान् गवादिद्रव्यस्थानीयान् दक्षिणा कृत्वा समर्पयति। यत्किचिदिद जगदस्ति, तदपि सर्वं दक्षिणात्वेन समर्पयति। अत ते एते' देवा दक्षिणारूपेण मनुष्यपारवश्यगता 'विविदाना इवोत्पतन्ति' स्वस्वामिभूताना मनुष्याणामभिप्राय विशेषेण जानन्त एवोद्योग कुर्वन्ति। कि कुर्वन्त ? 'अस्य' मनुष्यस्य अद ' कार्यमह करिष्ये, इत्यस्माद् 'अद ' मनुष्यस्य समीपमह गमिष्यामीति वदन्त । अहनि देवा मनुष्यै पूज्यमानास्तत्समीप

---

१ (i) ओक स्थान न्योक्स स्थानशून्या । यद्वा, ओक इति निवासनाम। ओचते निवासकर्मण , न्योकस आश्रितौकस '—इति गोविन्दस्वामी।

(ii) नियता ओकमि स्थान इति न्योक्स ईरिता ।
(लि ? ली) इ श्लेष (सो ? ण) कर्तरि क्तो नत्व स्वादय ओदित ॥
(पा० ग० सू० ८२४५) इति षड्गुरुशिष्य ।

२ शीङा रुट् शेरते यस्या'स्लोपस्त ' शेर ए टित ।
(पा० सू० ३२१०६)—इति षड्गुरुशिष्य ।

गत्वा तदीयमिदमायुरारोग्यादिरूपं कार्यं करिष्याम इति वदन्तो मनुष्याधीना अवतिष्ठन्ते, तदिदं देवानां दक्षिणात्वम्। अथवा 'ते एते' इति वाक्यं मनुष्यपरत्वेन योजनीयम्। 'ते एते' मनुष्याः प्रातःकाले निद्रापारवश्यं परित्यज्य देवतानुग्रहेण दक्षिणां गृहीत्वा 'विविदाना इव' विशेषेण स्वस्वकार्यं जानन्त एव 'उत्पतन्ति' शयनादुत्तिष्ठन्ति, उत्थाय चाहमिदं सन्ध्यावन्दनं करिष्येऽहमिदं राजगृहं गमिष्यामीत्येवं वदन्तो वर्तन्ते। तदेव मनुष्याणां स्वातन्त्र्यं देवतारूपदक्षिणाप्रतिग्रहस्य लिङ्गम्॥

[इस श्रद्धाहोम में जो प्रातःकालीन आहुति है] उस आहुति के निमित्त [ऋत्विज स्थानीय] मनुष्यों के लिए देवताओं को [गौ आदि द्रव्य स्थानीय] दक्षिणा समर्पित करता है। [मात्र मनुष्यों को ही नहीं वरन्] जो कुछ भी इस जगत् में है वह सब कुछ दक्षिणा रूप में समर्पित करता है। इसलिए वे [यह देव दक्षिणा रूप से मनुष्यों के वश में होकर अपने-अपने मनुष्यों के अभिप्राय को विशेषतः जानते हुए] 'इस [मनुष्य] का कार्य मैं करूँगा'—'इस [मनुष्य] के समीप में जाऊँगा'—यह कहते हुए ही उद्योग करते हैं।

उक्तार्थवेदनपूर्वकमग्निहोत्रानुष्ठानं प्रशंसति—

**यावन्तं ह वै सर्वमिदं दत्त्वा लोकं जयति, तावन्तं ह लोकं जयति य एवं विद्वानग्निहोत्रं जुहोति.॥ इति।**

'इदं सर्वं' स्वकीयं धनं दत्त्वा तद्दानफलरूपं यावन्तं लोकं पुरुषः प्राप्नोति, तावन्तमेव लोकं श्रद्धाहोमवेदनपूर्वकाग्निहोत्रानुष्ठायी प्राप्नोति[1]॥

यह सब कुछ [अपना धन] देकर पुरुष [दान के फल के रूप में] जिस लोक को जीतता है, जो पुरुष इस प्रकार जानते हुए [श्रद्धाहोम रूप] अग्निहोत्र करता है वह भी उतने ही लोक को जीतता है।

तदेवं श्रद्धाहोमादिरूपेणाग्निहोत्रं प्रशस्याय गवामयनसंपादनेन प्रशंसति—

**अग्नये वा एष सायमाहुत्याऽऽश्विनमुपाकरोति, तद्वाक् प्रतिगृणाति वाग्वागिति॥ इति।**

येयमग्निहोत्रस्य सायमाहुतिरग्निदेवतार्था, तयाऽग्निहोत्री गवामयनसम्बद्धमाश्विनशस्त्रमुपाकरोति, सायंहोम शस्त्रोपक्रम इत्यर्थः। अस्याः सायमाहुतेरग्निर्देवता, आश्विनशस्त्रस्याऽप्यग्निरपि 'अग्निर्होता गृहपतिरिति'[2] मन्त्रेऽग्निः श्रुतः। तदिदं साम्यम्, तच्चाऽऽहुतिरूपं शस्त्रं 'वाक्प्रतिगृणाति', यथा शस्त्रस्य प्रतिगरः, एवमत्र वाक्शब्दः प्रयुज्यते। तथाऽग्निहोत्रोद्धरणमन्त्रे 'वाचा त्वा होत्रा'—इति वाक्शब्दः प्रयुज्यते, तदिदं प्रतिगरसदृशम्। 'वाग्वागिति' वीप्सा प्रयोगबाहुल्यापेक्षा। गवामयनस्य प्रायणीयमहरतिरात्र-

१. द्र० 'यत् सायं जुहोति''' इतमेव तद्'—इति तै० ब्रा० २.१.५ २, ३।
२. ऋ० ६ १५ १३।

सस्यम्। अतिरात्रे चाश्विन शस्त्र शस्यते तेन सायहोमस्य गवामयनप्रारम्भसादृश्य प्रतिपादित भवति[1] ॥

जो यह अग्नि देव के लिए [अग्निहोत्र की] साय-आहुति है उससे [अग्निहोत्री गवामयन से सम्बद्ध] आश्विनशस्त्र का प्रारम्भ करता है। उस [आहुति रूप आश्विनशस्त्र] से [अग्निहोत्र के उद्धरण मन्त्र 'वाचा त्वा होत्रा'[2] में] 'वाक्' 'वाक्' कहकर वाणी का प्रतिगर ही करता है [गवामयन सत्र का प्रायणीय-अह 'अतिरात्रसस्था' है। अतिरात्र में आश्विनशस्त्र का शसन होता है। उस शसन से 'गवामयन' के प्रारम्भ के सदृश साय होम का सम्पादन होता है]।

उक्तार्थवेदनपूर्वकमनुष्ठान प्रशसति—

अग्निना हास्य रात्र्याश्विन शस्त भवति य एव विद्वानग्निहोत्र जुहोति ॥इति।

'अस्य' विदित्वानुष्ठातु सायमाहुति देवेनाग्निना रात्रौ विहितमाश्विन शस्त्र 'शस्त भवति' ॥

जो इस प्रकार जानते हुए अग्निहोत्र करता है, उसका रात्रि में विहित आश्विन शस्त्र [साय आहुति के देव] अग्नि के द्वारा शसित होता है।

सायमाहुति प्रायणीयातिरात्ररूपेण प्रशस्य प्रातराहुति गवामयनगतमहाव्रतरूपेण प्रशसति—

आदित्याय वा एष प्रातराहुत्या महाव्रतमुपाकरोति, तत्प्राण प्रतिगृणात्यन्नमन्नमिति ॥ इति।

आदित्यार्थं हूयमाना येय प्रातराहुति, तया 'एष' अग्निहोत्री महाव्रताख्य गवामयनस्योपान्तिममह प्रारभते, 'तदिदास' इत्यादित्यदेवतावेन मन्त्रेण[3] तस्मिन्नहनि निष्केवल्यशस्त्रप्रारम्भात्। तच्चाऽऽहुतिरूप शस्त्र प्राण प्रतिगृणाति। कथमेतदिति? तदुच्यते — अन्न पयो रेतो ऽस्मासु इत्यग्निहोत्रभक्षणमन्त्र। तेन 'अन्नमिति' प्रतिगृणातीत्युच्यते। अन्न च प्राणत्वेन सस्तुतम् 'अन्न प्राणमन्नमपानम्'—इति श्रुते। अन्नमन्नमिति वीप्सा प्रयोगबाहुल्यापेक्षा। तस्मादस्ति महाव्रतस्य प्रातराहुतिगवा दित्यसबध[4] ॥

आदित्य के लिए जो यह प्रात आहुति है उससे यह [अग्निहोत्री] महाव्रत नामक [गवामयन के अन्तिम अह से पहले] अह का प्रारम्भ करता है। उस [आहुति रूप निष्केवल्यशस्त्र के प्रारम्भ] से ['अन्न पयो रेतो ऽस्मासु'[5] आदि अग्निहोत्र भक्षण मन्त्र में] 'अन्नम्' 'अन्नम' कहकर वह प्राण का ही प्रतिगर करता है।

---

१ द्र० द्रत पूर्वम् पृ० ५९७ ६०० ।　　२ द्र० आप० श्रौ० ६ १ २ ।
३ ऋ० १० १२० १ ।　　४ द्र० द्रत पूर्वम्, पृ० ६२७–६२९ ।
५ द्र० आप० श्रौ० ६ ११ ५, शाङ्खा० श्रौ० ४ १३ १ ।

उक्तार्थवेदनपूर्वकमनुष्ठानं प्रशंसति—

**आदित्येन हास्याह्ना महाव्रत शस्तं भवति य एवं विद्वानग्निहोत्रं जुहोति ॥ इति ।**

पूर्ववद् व्याख्येयम् ॥

जो इस प्रकार जानते हुए अग्निहोत्र करता है उसका प्रातःकाल में विहित महाव्रत आदित्य देव के द्वारा शंसित होता है।

प्रकारान्तरेण गवामयनसाम्यं संपाद्य प्रशंसति—

**तस्य वा एतस्याग्निहोत्रस्य सप्त च शतानि विंशतिश्च संवत्सरे साय-माहुतयः; सप्त चो एव शतानि विंशतिश्च संवत्सरे प्रातराहुतयस्तावन्त्योऽग्नेर्यजुष्मत्य इष्टकाः ॥ इति ।**

एकैकस्यां रात्रौ द्वे द्वे आहुती, तथा सति षष्ट्यधिकशतत्रयसंख्याकासु संवत्सरस्य रात्रिषु, तत्संख्याद्वैगुण्येन विंशत्यधिकसप्तशतसंख्याकाः सायमाहुतयः संपद्यन्ते। प्रातराहुतयोऽपि संवत्सरस्यैतावत्य एव। 'सप्त चो'–इत्युकारो निपातो वाक्योपन्यासार्थः।[1] मिलित्वा सर्वाहुतीनां चत्वारिंशदधिकेन शतचतुष्टयेन युक्ता सहस्रसंख्या संपद्यते। गवामयने चित्य-स्याग्नेर्यजुष्मत्यो मन्त्रयुक्ता इष्टका अपि तावत्य।[2] अतोऽग्निहोत्रस्येष्टकासंख्याद्वारा गवामयनसादृश्यम् ॥

उस इस अग्निहोत्र का वर्ष भर में सात सौ बीस सायंकालीन आहुतियाँ होती हैं और सात सौ बीस ही वर्ष भर में प्रातःकालीन आहुतियाँ भी होती हैं [सभी मिलकर चौदह सौ चालिस आहुतियाँ होती हैं, जो गवामयन में चित्य की] अग्नि के यजुष् मन्त्रों से युक्त ईंटें भी उतनी ही होती हैं[3] [अतः ईंटों के संख्या-साम्य से गवामयन का सादृश्य है]।

एतद्वेदनपूर्वकमनुष्ठानं प्रशंसति—

**संवत्सरेण हास्याग्निना चित्येनेष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति ॥ २८ ॥ इति ।**

---

१. न उ पुन'। ओदिति (पा० सू० १.१.१५) प्रगृह्यत्वम्। इति षड्गुरुशिष्यः।

२. (i) अथ यजुष्मत्यः "दर्भस्तम्बो लोगेष्टका. पुष्करपर्णं रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजू रेत सिचौ विश्वज्योतिर्ऋतव्ये अषाढा'–इत्यादयः शत० ब्रा० १०.४.३.१८–२०। 'पयो यजुष्मत्'–इति निरु० ११.४.१। (ii) यजुष्मत्यः ३६० एवञ्च परिश्रित-इष्टकाः ३६०, द्र० शत०ब्रा० १०.४.२.२।

३. इयन्त्यश्चेष्टका अग्निचयनस्था यजुर्युताः।
तेभ्यः स चाग्निविज्ञेयो ये यजुर्वेदपारगाः ॥ इति षड्गुरुशिष्यः।

अस्य विदित्वानुष्ठातुः संवत्सरसत्रेण चित्याग्नियुक्तेनेष्टं[1] भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम पञ्चिकायाः पञ्चमाध्याये (पञ्चविंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (२८) [१८१]

जो इस प्रकार जानते हुए अग्निहोत्र करता है उस [अनुष्ठाता] का यज्ञ संवत्सर [सत्र] और चित्याग्नि युक्त इष्ट होता है ।

॥ इस प्रकार पाँचवें (पचीसवें) अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथानुदितहोमनिन्दोदितहोमस्तुतिश्च प्रारम्यते—

**वृषशुष्मो ह वातावत उवाच जातूकर्ण्यो वक्तास्मो वा इदं देवेभ्यो यद्वैतदग्निहोत्रमुभयेद्युरहूयतान्येद्युर्वाव तदेतर्हि हूयत इति ॥** इति ।

वतावन्नाम्नो महर्षेरपत्यं 'वातावत' जतूकर्णस्य पौत्रो 'जातूकर्ण्यः', स च 'वृषशुष्मः' वृषभस्येव शुष्मो बलं यस्य महर्षेः सोऽयं वृषशुष्मः । तादृशो महर्षिः कदाचिदग्निहोत्रिणामग्रे प्रसङ्गादिदमुवाच—हे अग्निहोत्रिणः ! भवदीयम् इदम् आचरणं देवेभ्यो 'वक्तास्मः' वयं वक्ष्यामः । किं तदाचरणमिति ? तदुच्यते—'एतद्' अग्निहोत्रं पुरातनैर्महर्षिभिः 'उभयेद्युरहूयत' दिनद्वये हुतमासीत् । पूर्वदिनस्य रात्रावग्निमुद्दिश्य होमः, परदिनस्य प्रातः सूर्यमुद्दिश्य होमः, इत्येवं दिनद्वयानुष्ठानं पूर्वैः कृतम् । तदुल्लङ्घ्येदानीमेतदग्निहोत्रं मनुष्यैः 'अन्येद्युः' अन्यतरस्मिन्नेव दिवसे हूयते—अस्तमयादूर्ध्वमग्नये होमः, पुनरपि सूर्योदयात् प्रागेव सूर्याय होमः इत्येवमेकस्यामेव रात्रौ होमद्वयमनुचितं क्रियते । 'इति' एतदाचरणं शास्त्रविरुद्धं देवतानामग्रे कथयिष्यामीति वृद्धस्य महर्षेर्वाक्यम्[2] ॥

[अनुदित होम निन्दा और उदित होम-स्तुति]—

v २९ [५x४ ४] वृषशुष्म [वृषभ के समान बलशाली] वातावत [वतावत नामक महर्षि के पुत्र] जातूकर्ण्य [जतूकर्ण के पौत्र] ने [प्रसङ्गतः अग्निहोत्रियों के मध्य]

---

१ विदुषा शुद्धज्ञानेन त्वग्निचित्याऽब्दतः कृता ।
विश्वासस्थितेन चित्येन वृद्धिरादावणीह न ॥ इति षड्गुरुशिष्यः ।

२ 'एकं एकस्मै प्रब्रूयादिति ह स्माह जातूकर्ण्यः'—इति आर० ५ ३ ३ ६ । 'जातूकर्ण्यो भारद्वाजात्'—इति शत० ब्रा० १४ ५ ५ २१, ७ ३ २७ । कात्यायनश्रौतसूत्रेऽपि जातूकर्ण्यस्य मतप्रतिपादकानि उल्लिखितानि ४ १ २७, १० ३ १७, २५ ७ ३४ ।

कहा—'इस [आचरण] को हम देवों से कहेंगे कि जो[1] अग्निहोत्र [पुरातन ऋषियों द्वारा] दोनों दिन हुत हुआ था [अर्थात् जिसे पूर्वाचार्यों ने पूर्व दिन के रात्रि में अग्नि को उद्दिष्ट करके होम किया था और दूसरे दिन प्रातः सूर्य को उद्दिष्ट करके होम किया था] उसका उल्लङ्घन करके इस अग्निहोत्र को मनुष्यों ने दूसरे दिन किया [वस्तुतः सूर्यास्त के बाद अग्नि के लिए होम और पुनः सूर्योदय के पहले ही जो सूर्य के लिए होम किया गया अर्थात् दोनों होम जो एक ही रात्रि में सम्पादित हुआ वह अनुचित है]।

अस्मिन्नेवार्थे कुमारीवाक्यमप्युदाहरति—

एतदु हैवोवाच कुमारी गन्धर्वगृहीता वक्ष्यास्मो वा इदं पितृभ्यो यद्वैतदग्निहोत्रमुभयेद्युरहूयतान्येद्युर्वाव तदेतर्हि हूयत इति ॥ इति ।

ऋषेः पुत्री काचिद् बाला[2], तद् गृहस्वामिना गन्धर्वेण कदाचिद् गृहीता सती, प्रसङ्गादेतदेव वाक्यमग्निहोत्रिणामग्र उवाच । 'वक्ष्यास्म.'—इत्यादिकमेतद्वाक्यम्, पितृभ्य इत्येतावानेव विशेष ॥

[इसी सन्दर्भ में कुमारी के वाक्य का उद्धरण देते हैं]—

[किसी ऋषि की पुत्री कोई] कुमारी उसके गृहस्वामी गन्धर्व से गृहीत होकर प्रसङ्गतः इस प्रकार अग्निहोत्रियों से कहा—'हे अग्निहोत्रियों ! इस [आचरण] को हम पितरों से कहेंगे कि जो अग्निहोत्र [पुरातन ऋषियों द्वारा] दोनों दिन हुत हुआ था, उसका उल्लङ्घन करके इस [अग्निहोत्र] को मनुष्यों ने दूसरे दिन किया।'

ऋषेः कुमार्याश्च वाक्यतात्पर्यं दर्शयति—

एतद्वा अग्निहोत्रमन्येद्युर्हूयते यदस्तमिते सायं जुहोत्यनुदिते प्रातरथैतदग्निहोत्रमुभयेद्युर्हूयते, यदस्तमिते साय जुहोत्युदिते प्रातः ॥ इति ।

---

१ (i) 'यद् वा एतद्' इति सायणाभिमतः पाठ, (ii) 'यद् वा तद्' इति षड्गुरुशिष्याभिमतः पाठः । तथा च तद्व्याख्या—'वक्ष्यास्मो लृड् छदर्थे तत्र वै चार्थे एव तु ।' (iii) 'तद् इति वाक्यनिर्देशः'—इति गोविन्दस्वामी ।

२. कुमारी नाम विदुषी सर्वलोकगतिक्षमा ।
दिवि दृष्ट्वोदिते सूर्ये जुह्वतां च महत् फलम् ॥
पुनर्भूमि गन्तुकामा ह्यपश्यदयमोहिते । ।
गन्धर्वं पृच्छिता पृष्टं त्वया कुत्र हि गम्यते ॥
सान्दर्वान्मम पित्रादेः सकाशमहमेन्य वै ।
वाच वक्ष्याम्यग्निहोममहूयन्त वच हि वः ॥
उन्नेद्युः किमन्तद्युर्मया दृष्टं महत् फलम् ।
उदिते जुह्वतां तस्माद् पृच्छानुदिते त्विति ॥
गन्धर्वमुक्ता सा गन्त्वा पितॄनुदितहोमिनः ।
अत्रान्यत्तनो होमः कर्तव्य उदिते त्विति ॥—इति षड्गुरुशिष्यः ।

इदानीतनो यदग्निहोत्र सूर्येऽस्तमिते साय जुहोति, पुन सूर्येऽनुदिते प्रातर्जुहोति, एव सति एतदेवाग्निहोत्रहोमद्वयम् 'अन्येद्यु'[१] रेकस्मिन्नेव दिने हूयते रात्रिमध्ये एव द्विविधहोमनिष्पत्ते । अर्थतद्वैपरीत्येन पुरातनाना शास्त्रज्ञाना यदग्निहोत्र सूर्येऽस्तमिते ऽध्वर्यु साय जुहोति, परेद्यु प्रातरुदिते सूर्ये पश्चाज्जुहोति एतदग्निहोत्र 'उभयेद्यु' दिनद्वय एव हूयते ।।

इस [अग्निहोत्र] को जो सूर्य के अस्त होने पर सायकाल करता है और पुन सूर्य के उदित होने के पहले ही प्रात काल अग्निहोत्र करता है तो वह इस अग्निहोत्र होम-द्वय को एक ही दिन करता है [अर्थात् रात्रि में ही दोनो होम होने से एक ही दिन करता है]। किन्तु इसके विपरीत इसी अग्निहोत्र को सूर्यास्त के बाद अध्वर्यु सायकाल जब करता है और दूसरे दिन प्रात सूर्योदय के बाद जब [अग्निहोत्र] करता है तो वह दोनों दिन में ही इसे करता है।

एवमिदानीतनानामेकदिनानुष्ठानरूपा नि दाम् पुरातनाना दिनद्वयानुष्ठानरूपा स्तुति च प्रदर्श्य उदिते होम प्रात काले विधत्ते—

**तस्माद् उदिते होतव्यम् ।। इति ।**

इसलिए सूर्योदय के बाद [अग्निहोत्र] होम करना चाहिए।

प्रकारान्तरेणोदितहोम प्रशसति—

**चतुर्विशे ह वै सवत्सरेऽनुदितहोमी गायत्रीलोकमाप्नोति, द्वादश उदितहोमी, स यदा द्वौ सवत्सरावनुदिते जुहोत्यथ हास्यैको हुतो भवत्यथ य उदिते जुहोति, सवत्सरेणैव सवत्सरमाप्नोति, य एव विद्वानुदिते जुहोति, तस्मादुदिते होतव्यम् ।। इति ।**

य पुरुषोऽनभिज्ञ इदानीतनोऽनुदितहोमी, स पुरुषश्चतुर्विंशतिसख्यापूरके 'सवत्सरे' गायत्री' देवताया 'लोक' आप्नोति, तावद्भि सवत्सरैर्गायत्र्यक्षरसख्यानिष्पत्ते । उदितहोमी तु द्वादशसख्यापूरक एव सवत्सरे त गायत्रीलोक प्राप्नोति तावतैवोक्तसख्यानिष्पत्ते । कथमेतदिति ? तदुच्यते—'स' नुदितहोमी यदा द्वौ सवत्सरावनुदिते सूर्ये प्रातर्जुहोति, 'अथ तदानी तस्य नुदितहोमिन एक एव सवत्सरो हुतो भवति । अस्तमयापूर्व पुनरुदयात् पूर्व च कालद्वयन होमद्वयनिष्पत्त्यभावात् । अथ तद्वैलक्षण्येन 'य' शास्त्राभिज्ञ उदयादूर्ध्व प्रातर्जुहोति, तस्य कालद्वयानुष्ठानसिद्धे सवत्सरद्वयमितरेणानुष्ठित फलमत्रनैव सवत्सरेणास्य सिध्यति । तस्माद् द्वादशे सवत्सरे द्विगुणसख्यया गायत्रीलोकप्राप्तिरुपपद्यते । 'सवत्सरेण'-इत्यादिक वाक्य विद्वत्प्रशसार्थं पुनरप्यावर्तनीयम् । यो

---

१ अन्येद्युरेककाल स्यादुभयेद्युर्द्विकालकम् ।
वृषशुष्मकुमार्युक्तवाक्यद्वयद्वार प्रमाणत ।। इति षड्गुरुशिष्य ।

विद्वाञ्जुहोति, स कालद्वयानुष्ठानात् संवत्सरमात्रेण संवत्सरद्वयफलं लभते। तस्मादुदिते सूर्ये सति पश्चादेव होतव्यम् ॥

सूर्योदय के पहले होम करने वाला चौबीस वर्षों में गायत्री लोक को प्राप्त करता है, और सूर्योदय के बाद होम करने वाला [उस गायत्री लोक को] बारह वर्षों में ही [प्राप्त कर लेता है क्योंकि सूर्योदय से पहले होम करने वाला] वह जब दो वर्ष तक सूर्योदय से पहले [प्रातःकाल] होम करता है तब इन [अनुष्ठित होमों] का [सूर्यास्त के बाद और सूर्योदय से पहले रात्रि काल के ऐक्य से दो होम न होकर] एक ही वर्ष होम करता है और जो सूर्योदय के बाद [प्रातः] होम करता है [उसका अनुष्ठान कालद्वय में होने से] वह एक संवत्सर से ही [दो] संवत्सर [के फल] को प्राप्त कर लेता है; जो इस प्रकार जानते हुए सूर्योदय के बाद अग्निहोत्र करता है वह एक संवत्सर से ही दो संवत्सर के फल को प्राप्त कर लेता है। इसलिए उदित होम ही करना चाहिए।

पुनरपि प्रकारान्तरेणोदितहोमं प्रशंसति—

एष ह वा अहोरात्रयोस्तेजसि जुहोति, योऽस्तमिते सायं जुहोत्युदिते प्रातरग्निना वै तेजसा रात्रिस्तेजस्वत्यादित्येन तेजसाऽहस्तेजस्वत् ॥ इति ।

'यः' सायंप्रातर्होमौ कालभेदेन जुहोति, 'एषः' पुमान् अहोरात्रयोः सम्बन्धिनि विविधे तेजसि जुहोति। यथेमेददिति, तदुच्यते—येयं रात्रिः, सेयमग्निनैव तेजसा युक्ता सती तेजस्विनी भवति। यदिदमहस्तदादित्येन तेजसा तेजस्वद् भवति। तस्मात् सायंप्रातःकालद्वये जुह्वतस्तेजोद्वय होमसिद्धिः ॥

जो सायंकाल सूर्यास्त के बाद और प्रातः सूर्योदय के बाद होम [कालभेद से] करता है तो यह पुरुष दिन और रात्रि सम्बन्धी विविध तेज में होम करता है। [क्योंकि] जो यह रात्रि है वह अग्नि से ही तेज युक्त होकर तेजस्विनी होती है और जो यह दिन है वह आदित्य के तेज से ही तेजवान् होता है।

वेदनपूर्वकमनुष्ठानं होमं प्रशंसति—

अहोरात्रयोर्हास्य तेजसि हुतं भवति य एवं विद्वानुदिते जुहोति ॥ इति ।

जो इस प्रकार जानते हुए सूर्योदय के बाद होम करता है उसका होम दिन और रात्रि दोनों के ही तेज में हुत होता है।

उपपादितमर्थं निगमयति—

तस्मादुदिते होतव्यम्[1] ॥ २९ ॥ इति ।

---

१. द्र० 'अग्नये सायं हूयते, सूर्याय प्रातः। आग्नेयी वै रात्रिः, ऐन्द्रमहः। यदनुदिते सूर्ये प्रातर्जुहुयात्, उभयमेवाग्नेयं स्यात्। उदिते सूर्ये प्रातर्जुहोति'—इत्यादि पंचदशखण्डान्तम्—तै० ब्रा० २.१.२।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम पञ्चिकाया पञ्चमाध्याये (पञ्चविंशाध्याये) चतुर्थं खण्ड ॥ ४ ॥ (२९) [१८२]

इसलिए उदित-होम ही करना चाहिए।

॥ इस प्रकार पचीसवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

दृष्टान्तपूर्वकमुदितहोम पुन प्रशसति—

**एते ह वै सवत्सरस्य चक्रे यदहोरात्रे, ताभ्यामेव तत् सवत्सरमेति, स योऽनुदिते जुहोति, यथैकतश्चक्रेण यायात्तादृक्तदथ य उदिते जुहोति, यथोभयतश्चक्रेण यान् क्षिप्रमध्वान समश्नुवीत तादृक्तत् ॥** इति।

ये एवाहोरात्रे[1] विद्येते, एते एव रथस्थानीयस्य सवत्सरस्य चक्रस्थानीये। एव सति स पुरुषो लौकिकस्ताभ्यामेवाहोरात्रचक्राभ्या सवत्सररथ प्राप्नोति। एवमहोरात्रयो सवत्सरप्राप्तिसाधनत्वे स्थिते सति, य पुमान् उदयात् प्रागेव प्रातर्जुहोति, तस्य दृष्टान्तोऽभिधीयते—यथा लोके रथस्य 'एकत ' एकस्मिन्नेव पार्श्वे स्थितेन चक्रेण 'यायात्' मार्गं गच्छेत्, तादृक् 'तत्' अनुष्ठान स्यात्। एक चक्र यथा गमनक्षम न भवति, तथैवानुदितहोम, एककालमात्रवर्तित्वादित्यर्थं। अथोक्तवैलक्षण्येन य पुमानुदिते जुहोति, तस्य दृष्टान्तोऽभिधीयते—यथा पार्श्वद्वय चक्रयुक्तेन रथेन 'यान्' गच्छन् पुरुष 'क्षिप्र' शीघ्र मार्गं प्राप्नोति, तादृक् 'तत्' कालद्वयानुष्ठानमविघ्नेन फलप्रदमित्यर्थं ॥

५. ३० [२४ . ५] यह जो अहोरात्र हैं ये दो सवत्सर [रूपी रथ] के दो पहिए हैं। इस प्रकार वह [लौकिक पुरुष] उस [अहोरात्र रूपी पहियों] से सवत्सर [रूपी रथ] को प्राप्त करता है। इस प्रकार वह जो अनुदित होम करता है उसका अनुष्ठान मार्ग में जाने वाले एक पहिए वाले रथ के समान ही है [अर्थात् एक काल में ही होने से अनुदित होम चलने में असमर्थ एक पहिए वाले रथ के समान ही होता है] और जो सूर्योदय के बाद अग्निहोत्र करता है उसका अनुष्ठान वैसे ही फलप्रद होता है जैसे दोनों पहियों वाले रथ से जाता हुआ पुरुष शीघ्र गन्तव्य स्थान को पहुँच जाता है [अर्थात् कालद्वय के अनुष्ठान से वह निर्विघ्न फल को शीघ्र ही प्राप्त कर लेता है]।

---

१ एत ह वै सवत्सरस्येति। सवत्सर प्राप्य, त प्राप्तु यो रथस्तस्य रथस्य चक्रभूते अहोरात्रे। किमर्थमेव व्यवहितान्वय षष्ठ्या कल्प्यते, 'ताभ्या सवत्सरमेति'—इति श्रवणात्। किञ्च सम्बन्धमात्रे हि षष्ठी स्मरति पाणिनि। व्यवहिताव्यवहितत्व तु पदान्तरवशाद् भवति। तस्माद् व्यवधानम् अदोष। सवत्सरशब्देनात्र पुरुषार्थं उपलक्ष्यते। तदवाप्तावुपायभूतावहोरात्राविति'—इति गोविन्दस्वामी।

उक्तार्थदार्ढ्याय गाथामुदाहरति—
**तदेषाऽभि यज्ञगाथा गीयते ॥** इति ।

'तत्' तस्मिन् कालद्वयहोमविषये काचिद् यज्ञप्रतिपादिका गाथा सर्वैरभितो गीयते । सुभाषितत्वेन सर्वैर्गीयमाना 'गाथा' ॥

उस [कालद्वय में होम के सम्बन्ध] में एक यज्ञ प्रतिपादिका गाथा इस प्रकार गायी जाती है—

ता गाथामुदाहरति—
**बृहद्रथन्तराभ्यामिदमेति युक्तं, यद्भूत भविष्यच्चापि सर्वम् । ताभ्यामियादग्नीनाधाय धीरो दिवैवान्यज्जुहुयान्नक्तमन्यदिति ॥** इति ।

'यद्भूत' जगदस्ति, यच्च 'भविष्यत्' इद सर्वमपि बृहद्रथन्तराभ्यां' सामभ्यां 'युक्त सद् 'एति' प्रवर्तते । तस्माद् 'धार' बुद्धिमानग्नीनाधाय पश्चाद् 'ताभ्यां' बृहद्रथन्तराभ्यां पृष्ठस्तोत्रनिष्पादकाभ्याम् 'इयात्' सोमयागमनुतिष्ठेत् । प्रतिदिन च 'दिवैव', 'अन्यत्' सूर्यदेवताकमग्निहोत्र जुहुयात्, 'नक्त' रात्रौ 'अन्यत्' अग्निदेवताकमग्निहोत्र जुहुयात् । 'इति' शब्दो गाथासमाप्त्यर्थः ॥

यह जो कुछ जगत् है और जो कुछ होगा वह सभी बृहद् और रथन्तर साम से युक्त होकर ही प्रवर्तित है । इसलिए धीर पुरुष अग्नि का आधान करके उन [पृष्ठ स्तोत्र निष्पादक बृहद् और रथन्तर] दोनों से [सोम याग का अनुष्ठान करता] चले और प्रतिदिन दिन में अलग [अर्थात् सूर्य देवताक] अग्निहोत्र करे और रात्रि में अलग [अर्थात् अग्नि-देवताक] अग्निहोत्र करे ।

दिवाहोमं रात्रिहोमं च बृहद्रथन्तरसम्बन्धेन प्रशंसन्नुदितहोम निगमयति—
**राथतरी वै रात्र्यहर्बार्हतमग्निर्वै रथंतरमादित्यो बृहदेते ह वा एनं देवते ब्रध्नस्य विष्टपं स्वर्गं लोकं गमयतो य एवं विद्वानुदिते जुहोति, तस्मादुदिते होतव्यम् ॥** इति ।

सर्वस्य जगतो बृहद्रथंतराधीनत्वात् अहोरात्रयोरपि तत्संबन्धोऽस्ति । तत्र रात्री रथंतरसामसंबन्धिनी, अहस्तु बृहत्सामसंबन्धि, तयोः कालयोरभिमानिन्यौ ये उभे 'देवते' अग्न्यादित्यरूपे, तयो. रथंतरबृहद्रूपत्व, तत्सामाभिमानित्वादवगन्तव्यम् । एवं सति 'यः' पुमानेवास्मद्रहस्यं विद्वान् सायमग्निहोत्र हुत्वा पश्चात् प्रातरुदिते जुहोति । एवमुदितहोमिनं बृहद्रथंतराभिमानिन्यौ देवते 'ब्रध्नस्य' आदित्यस्य 'विष्टपं' स्थानं 'स्वर्गं लोकं' प्रापयतः । तस्मात् कारणात् प्रातरुदिते होतव्यम् ॥

रात्रि रथन्तर साम सम्बन्धी है और दिन बृहत् साम सम्बन्धी है । [दोनों कालों के अभिमानी देव] अग्नि रथन्तर सम्बन्धी हैं और आदित्य बृहत् साम सम्बन्धी हैं । जो [पुरुष] इस प्रकार [शास्त्र के रहस्य को] जानते हुए [सायं अग्निहोत्र करके प्रातः सूर्यो-

दय के बाद होम करता है] उस [उदित होमी] को बृहद्रथन्तर के अभिमानी दोनों देव आदित्य के स्थान स्वर्ग लोक को प्राप्त कराते हैं। इसलिए उदित होम ही करना चाहिए।

उदितहोमं प्रशस्यानुदितहोमं निन्दितुं गाथामुदाहरति

**तदेषाऽभि यज्ञगाथा गीयते ॥** इति ।

'तत्' तस्मिन्ननुदितहोमनिन्दारूपेऽर्थे 'एषा' वक्ष्यमाणा गाथा याज्ञिकैः सर्वैर्गीयमाना सुभाषितरूपाऽभितः सर्वतो 'गीयते' वक्ष्यते ॥

इस [अनुदित होम की निन्दा] के सम्बन्ध में एक यज्ञप्रतिपादिका [सुभाषित रूप] गाथा इस प्रकार गायी जाती है—

तां गाथामुदाहरति—

**यथा ह वाऽस्थूरिणैकेन यायादकृत्वाऽन्यदुपयोजनाय।**
**एवं यन्ति ते बहवो जनासः, पुरोदयाज्जुह्वति येऽग्निहोत्रमिति ॥** इति ।

'अस्थूरि'नामाऽश्वो रथवाजी। यथा लोके कश्चिन्मन्दबुद्धिः 'उपयोजनाय' रथे योजयितुम् 'अन्यदकृत्वा' अश्वान्तरमसपादयित्वैकेनैव 'अस्थूरिणा' अश्वेन रथनियुक्तेन[1] 'यायात्' मार्गं गच्छेत्, एवमेव 'ये' शास्त्ररहस्यानभिज्ञाः सूर्योदयात् पुराऽग्निहोत्रं जुह्वति, 'ते बहवो' 'जनास' पुरुषा 'यन्ति' गच्छन्ति। एकाश्वयुक्तो रथो यथा मार्गपारं नेतुमसमर्थः, एवं रात्रिरूपे एकस्मिन्नेव काले कृतमग्निहोत्रं फलप्रदं न भवतीत्यर्थः। 'इति' शब्दो गाथासमाप्त्यर्थः ॥

जैसे लोक में मन्दबुद्धि मनुष्य रथ में दूसरा अश्व न जोतकर एक ही अश्व से नियोजित रथ से मार्ग में जाता है, उसी तरह वे बहुत से पुरुष जाते हैं जो [शास्त्र से अनभिज्ञ] सूर्योदय से पहले अग्निहोत्र करते हैं [अर्थात् जिस प्रकार एक अश्व मार्ग को पार करने में असमर्थ होता है उसी प्रकार रात्रिरूप एक ही काल में किया गया अग्निहोत्र फलप्रद नहीं होता]।

उदितहोमोत्कर्षार्थमादित्यदेवतां प्रशंसति—

**तां वा एतां देवतां प्रयतीं सर्वमिदमनुप्रैति यदिदं किंचेतस्यै हीदं देवताया अनुचरं सर्वं यदिदं किंच, सैषाऽनुचरवती देवता ॥** इति ।

---

१ (i) 'अस्थूरिर्नाम रथस्याश्वः पृष्ठवाही। अन्यदिति लिङ्गमविवक्षितम्। अन्यमस्थूरिमुपयोगाय्याकृत्वा एकेन अस्थूरिणा युक्तेन रथेन'—इति गोविन्दस्वामी।
(ii) स्थूर्याख्यपार्श्वग-हयद्वयरहितेनैकनाश्वाख्याग्रग-हयद्वयेन युक्तं। अन्यत् पार्श्ववाहियुगलम्। उपयोजनाय, उपयोगाय कार्यार्थम् अकृत्वा यायात् स्खलत् गच्छेत्। इति षड्गुरुशिष्य.।

यत्किंचिदिदं स्थावरजङ्गमरूपं जगदस्ति, तदिदं सर्वं, 'तमेताम्' आदित्यदेवता 'अयतीम्' उदयास्तमयौ गच्छन्तीम् 'अनु' पश्चात् 'प्रैति' प्रवर्तते। तथा च शाखान्तरे श्रूयते—'योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति। असौ योऽस्तमेति, स सर्वेषां भूतानां प्राणानादायास्तमेति' इति। सूर्योदयमनु सर्वेषामिन्द्रियोदयाद् दिवा सर्वे चेष्टन्ते। सूर्यास्तमयमनु सर्वेषामिन्द्रियाणामस्तमयाद् रात्रौ सर्वे निद्रां कुर्वन्ति। अनेन प्रकारेण यत्किंचिज्जगदस्ति, तत्सर्वमेतस्या आदित्यदेवताया 'अनुचरं' भृत्यस्थानीयम्। अत 'एषा' आदित्यदेवता 'अनुचरवती' बहुभृत्योपेता॥

जो कुछ भी स्थावर-जङ्गम रूप यह जगत् है, वह सभी उस इस उदय एवं अस्त में जाते हुए [आदित्य] देवता के पीछे ही चलते हैं, क्योंकि जो कुछ भी जगत् है वह सभी इस देवता के [दिन में सभी इन्द्रियों के जग जाने से] अनुचर [अर्थात् भृत्य के समान] हैं। अतः वह यह आदित्य देवता बहुत से अनुचरों से युक्त है।

वेदनं प्रशंसति—

**विन्दते ह वा अनुचरं भवत्यस्यानुचरो य एवं वेद॥ इति।**

वेदिता स्वयं धनिको भूत्वा जीवितप्रदानेन 'अनुचरं' लभते। अतोऽस्य सर्वदा 'अनुचर' भृत्यवर्गो भवत्येव॥

जो इस प्रकार जानता है वह स्वयं धनी होकर अनुचर प्राप्त करता है। अतः सर्वदा इसके भृत्यवर्ग होते ही हैं।

प्रकारान्तरेणादित्यदेवतां प्रशंसति—

**स वा एष एकातिथिः, स एष जुह्वत्सु वसति॥ इति।**

'एष' आदित्यः स्वयम् 'एकातिथिः'। यथा लोके कश्चिद्वैदेशिको बन्धुरहित स्वयमेव एकातिथिर्भूत्वा गृहेषु गच्छति, एवं 'स एष' आदित्यो 'जुह्वत्सु' अग्निहोत्रिषु प्रातः समागत्य तिष्ठति॥

यह आदित्य वस्तुतः एकमात्र अतिथि है [जैसे लोक में कोई बन्धुविहीन विदेशी स्वयं एक ही अतिथि होकर गृहों में जाता है, वैसे ही] वह यह आदित्य अग्निहोत्रियों के घर प्रातः आकर ठहरता है।

अस्मिन्नर्थे काचिद् गाथामुदाहरति—

**तदप्येषा गाथा भवति॥ इति।**

यदिदमादित्यस्यैकातिथित्वं 'तत्' तस्मिन्नर्थे काचिद् 'गाथा' सर्वैर्गातुं योग्या गीतिर्विद्यते॥

[जो यह आदित्य का एकातिथ्य है] उस सम्बन्ध में [सभी के गान योग्य] गाथा इस प्रकार है—

ता गाथामुदाहरति—

**अनेनसमेनसा सोऽभिशस्तादेनस्वतो वाऽपहरादेनः।**
**एकातिथिमप सायं रुणद्धि, बिसानि स्तेनो अप सो जहारेति ॥ इति ।**

पुरा कदाचित् सप्तर्षीणां संवादप्रसङ्गे कश्चित्पुरुषो बिसस्तैन्यलक्षणमपवादं प्राप्य तत्परिहारार्थमृषीणामग्रे शपथं चकार। तदीयशपथोक्तिरूपेयं गाथा। 'बिसानि' पद्ममूलानि तेषामपहर्ता, प्रत्यवायपरम्परां प्राप्नोतु—पापरहिते पुरुषे बिसस्तैन्यमपवादं कृतवतो यः प्रत्यवायः, पापिनः पुरुषस्य सम्बन्धी पापं स्वीकुर्वतो यः प्रत्यवायः, सायंकाले गृहे समागच्छत एकातिथेर्वैदेशिकस्यावरोधने यः प्रत्यवायः सेयं प्रत्यवायपरम्परा बिसस्तैन्ये सति मम भूयादित्येवं शपथः। अक्षरार्थस्तु प्रसिद्ध[1]—मादृशः पुरुषः 'स्तेनः' चोरो भूत्वा बिसान्यपजहार चेत्, 'सः' पुमान् 'अनेनसं पापरहितं पुरुषं श्रोत्रियम् एनसाऽभिशस्तात्' पापेनाभिशंसनमपवादं कुर्यात्[2]। तथैव स बिसापहारी 'एनस्वतः पापयुक्तस्य पुरुषस्य यत् 'एनः' पापमस्ति, तत् 'अपहरात्' स्वीकुर्यात्। तथा स बिसापहारी सायंकाले गृहे समागतमेकातिथिम् 'अपरुणद्धि' भोजनमदत्त्वा निःसारयत् यद्वा, अग्निहोत्रार्थं सायं समागतम् 'एकातिथिं' देवम् अपरुणद्धि होमराहित्येन निराकुर्यात्[3]। 'इति' शब्दो गाथासमाप्त्यर्थः ॥

[पहले कभी सप्तर्षियों के संवाद के प्रसंग में कोई पुरुष मृणाल तन्तु के चोरी रूप कलङ्क को प्राप्त करके उसके परिहारार्थ ऋषियों के सामने शपथ लेते हुए कहता है]—मेरे जैसा पुरुष यदि चोर होवे और मृणाल तन्तु का अपहरण किया होवे तो वह मानो पापरहित [श्रोत्रिय] को पाप से अभिशप्त [ = कलङ्कित] करे तथा यह मृणाल-तन्तु का अपहर्ता मानो पापयुक्त पुरुष के पाप को अपहृत कर लेवे और वह मृणाल तन्तु का अपहर्ता मानो सायंकाल गृह में समागत अतिथि को भोजन न देकर उसे निराकृत करे अथवा अग्निहोत्र के लिए सायंकाल समागत अतिथि देव को होम न करके मानो निराकृत करे।

अस्या गाथायामेकातिथिमप सायं रुणद्धीत्यस्य भागस्य प्रकृतोपयुक्तत्वात् तस्य तात्पर्यं दर्शयति—

**एष ह वै स एकातिथिः, स एष जुह्वत्सु वसत्येता वाव स देवतामपरुणद्धि, योऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोति, तमेषा देवताऽपरुद्धाऽपरुणद्ध्य-**

---

१ 'अप्रसिद्ध' इति आन० मुद्रितपाठः।

२ पुरा सप्तर्षयो भूम्या दुर्भिक्षे द्वादशाब्दिके।
क्षुत्क्षामदेहा सरसो बिसान्युद्धृत्य कानिचित् ॥
तेषु नष्टेषु तेऽन्योन्यं शुद्धये शापमब्रुवन्। इति षड्गुरुशिष्यः।

३ द्रष्टव्या चेयं कथा महाभारते अनु० पर्वणि १४२ तमाध्याये।

स्माच्च लोकादमुष्माच्चोभाभ्यां योऽलमग्निहोत्राय सन्नग्निहोत्रं जुहोति ॥ इति ।

'एषः' दृश्यमान आदित्य एव गाथायामुक्त 'एकातिथिः' । 'स एष' देवः प्रातःकाले समागत्य 'जुह्वत्सु' अग्निहोत्रिषु तिष्ठति । एवं सति 'यः' पुमानग्निहोत्राय 'अलं' समर्थः सन्नग्निहोत्रं न जुहोति, 'सः' पुमान् 'एताम्' अग्निहोत्रहोमार्थमागतां देवताम् 'अपरुणद्धि' निराकरोति । 'एषा' च देवता तेनापरुद्धा सती 'तं' 'नास्तिकं' भूलोकस्वर्गलोकाभ्यामुभाभ्याम् 'अपरुणद्धि' निःसारयति । योऽलमित्यादेः पुनरुक्तिरुपसंहारार्था,—यो न जुहोति, तस्यायं देवताद्रोहः ॥

[गाथा में उक्त] यह [दृश्यमान आदित्य] ही एक अतिथि हैं । वह यह [देव प्रातःकाल आकर अनुष्ठाता] अग्निहोत्रियों में वास करते हैं । इस प्रकार जो पुरुष अग्निहोत्र के लिए समर्थ होकर भी अग्निहोत्र नहीं करता है; वह इन [अग्निहोत्रहोम के लिए आए हुए] देवताओं का निराकरण करता है । इस तरह जो पुरुष अग्निहोत्र के लिए समर्थ होकर भी अग्निहोत्र नहीं करता है तो यह देवता उनसे उपरुद्ध होकर उस [नास्तिक] को इस [भू] लोक से और उस [स्वर्ग] लोक दोनों से निराकृत कर देते हैं ।

विपक्षे बाधकमुक्त्वा स्वपक्षं दर्शयति—

तस्माद्योऽलमग्निहोत्राय स्याज्जुहुयात् ॥ इति ।

अग्निहोत्राय 'अलम्' आहिताग्नित्वेन समर्थो भवेत्, सोऽवश्यं जुहुयात् ॥

इसलिए जो अग्निहोत्र के लिए समर्थ हो वह अवश्य ही अग्निहोत्र करे ।

अग्निहोत्रस्यावश्यकत्वे दृष्टान्तरूपविवक्षया स्मार्तं शास्त्रार्थं दर्शयति—

तस्मादाहुर्न सायमतिथिरपरुध्य इति ॥ इति ।

यस्माद्देवस्य मनुष्यस्य चातिथेरपरोधे प्रत्यवायोऽस्ति, तस्माच्छास्त्रज्ञा एवमाहुः,—सायंकाले समागतोऽतिथिः 'नापरुध्यः[1]' न निःसारणीय इति । अतो लौकिकातिथिवद् देवतातिथये होतव्यमित्यर्थः ॥

[इसीलिए शास्त्रज्ञ कहते हैं कि] सायंकाल समागत अतिथि का निराकरण नहीं करना चाहिए । [अर्थात् लोक के ही अतिथि के समान देवता रूप अतिथि के लिए होम करना चाहिए] ।

अग्निहोत्रस्यावश्यकर्तव्यतामुक्त्वा पुनरपि प्रकारान्तरेणोदितहोमं प्रशंसति—

एतद्ध स्म वै तद् विद्वान् नगरी जानश्रुतेय उदितहोमिनमैकादशाक्षं मानुतन्तव्यमुवाच,—प्रजायामेनं विज्ञातास्मो यदि विद्वान् वा जुहोत्यविद्वान् वेति, ततो हैकादशाक्षे राष्ट्रमिव प्रजा बभूव; राष्ट्रमिव ह वा अस्य प्रजा भवति, य एवं विद्वानुदिते जुहोति; तस्मादुदिते होतव्यम् ॥ ३० ॥ इति ।

१. 'इति ह स्माहुः शौनको मानुतन्तव्यो'—इति शत० ब्रा० १३.५.३.२ । विदि-गाल्वकालवमनुतन्तुभुजिकानाम्—इति आश्व० श्रौ० १२.१४.२ ।

जनश्रुताख्यस्य कस्यचिन्महर्षेः पुत्रो 'जानश्रुतेय'[1]। स च राजपुरोहितत्वात् नित्य नगरे वसतीति 'नगरी'। स महर्षि तदेतदुदितमाहात्म्य विद्वान् राजपुत्र कञ्चिद् 'उदित-होमिनम्' उद्दिश्य स्वमनस्येवमुवाच। कीदृशमुदितहोमिनम् ? ऐकादशाक्षम्[2] एकादशाक्ष नामकस्य राज्ञः पुत्र 'मानुतन्तव' मनुतन्तुनामकस्य राज्ञ पौत्रम्[2]। तमुद्दिश्य मनसि किमुवाचेति, तदभिधीयते—अयमैकादशाक्षः राजपुत्रो यदि विद्वाञ्जुहोति यदि वा शास्त्रार्थमविद्वानिति मम सशयो जायते। तथा सति 'प्रजायाम्' एतदीयपुत्रपौत्रादिसंततो पर्यालोच्य 'एनम्' एकादशाक्ष 'विज्ञातास्म' विशेषेण ज्ञास्याम। यदि प्रजा वर्धते तदानीमय विद्वान्, अन्यथा त्वविद्वानिति। एव निश्चित्य, यदा तदीया प्रजामपश्यत्, तदानीं तस्यापि राजपुत्रस्य 'प्रजा' पुत्रपौत्रादिरूपा 'राष्ट्रमिव बभूव' यथा राष्ट्र बहुजना-कीर्णं तद्वदतिसमृद्धा प्रजासीत्। एकादशाक्षस्यापत्यमैकादशाक्षिरिकारान्त शब्दस्तस्य षष्ठीयम् 'ऐकादशाक्षे.'—इति। 'य' पुमानेव विद्वान् प्रातरुदिते जुहोति, अस्य राष्ट्रमिव बहुला प्रजा भवति[3]। तस्मादुदिते होतव्यमिति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्य पञ्चम पञ्चिकाया पञ्चमाध्याये (पञ्चविंशाध्याये) पञ्चम खण्ड ॥ ५ ॥ (३०) [१८३]

एक बार उदित होम की महिमा को जानने वाले नगरी जानश्रुतेय [राजपुरोहित होने से सर्वदा नगर में रहने वाले जनश्रुत नामक किसी महर्षि के पुत्र] ने उदितहोम करने वाले [मनुतन्तु नामक राजा के पौत्र] मानुतन्तव्य एव [एकादशाक्ष नामक राजा के पुत्र] ऐकादशाक्ष से [मन में ही] कहा—'मैं इसके पुत्र-पौत्र आदि सन्तानों से ही जान लूँगा कि यह [राज पुत्र] बिना जाने हुए अग्निहोत्र करता है या जानकर'? [अर्थात् यदि सन्तान बढ़ती है तो यह ज्ञाता है और उनकी वृद्धि नहीं होती है तो अज्ञाता है]। वस्तुतः उस ऐकादशाक्ष को राष्ट्र के समान [बहुजनाकीर्ण] सन्तान हुई। अत. इस प्रकार जानते हुए जो उदित होम करता है उसकी सन्तान राष्ट्र के समान बहुजनाकीर्ण एव अत्यन्त समृद्ध होती हैं। इसलिए उदित होम करना चाहिए।

॥ इस प्रकार पचीसवें अध्याय के पाँचवें खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

---

१ अपरोध परित्यागो वधे. क्यप् छान्दसस्त्विह। इति षड्गुरुशिष्य.।

२. 'उपाविर्जानश्रुतेय'—इति १५२ पृष्ठे। 'जानश्रुतिर्ह पौत्रायण.'—इति छा० उप० ४.१.१। 'औपाविनैव जानश्रुतेयेन'—इति शत० ब्रा० ५.१ १.५,७।

३. द्र० शत० ब्रा० २ २.४.१८।

४. गर्गादिमनुतन्तोर्यन् ढक् शुभ्रादेर्जनश्रुतात्।
ब्रह्मर्षिर्नगरी नाम होतृज्जानन्नुवाच ह'' ''॥
विद्वान् जुहोति किं नेति ज्ञास्याम. खलु सन्ततौ।
सन्ततिर्यदि वृद्धास्ति जानन्होमेष्ट सन्त्विति ॥ इति षड्गुरुशिष्य.।

## अथ षष्ठः खण्डः

प्रकारान्तरेणानुदितहोमनिन्दामुदितहोमप्रशंसां चाह—

**उद्यन्नु खलु वा आदित्य आहवनीयेन रश्मीन् संदधाति; स योऽनुदिते जुहोति, यथा कुमाराय वा वत्साय वाऽजाताय स्तनं प्रतिदध्यात्तादृक्तदथ य उदिते जुहोति, यथा कुमाराय वा वत्साय वा जाताय स्तनं प्रतिदध्यात् तादृक्तत्, तमस्मै प्रतिधीयमानमुभयोर्लोकयोरन्नाद्यमनु प्रतिधीयतेऽस्माच्च लोकादमुष्माच्चोभाभ्याम् ॥** इति ।

'आदित्य ' स्वयमुद्यन्नेव हव्यार्थी सन्नाहवनीयेन सह स्वकीयान् 'रश्मीन् संदधाति' संयोजयति । एवं सति 'य ' पुमान् सूर्योदयात् पूर्वं जुहोति, स मूढ इति शेषः । तत्र दृष्टान्त —यथा लोके कस्मैचित् 'अजाताय' अनुत्पन्नाय 'स्तनं प्रतिदध्यात्' पानं समर्पयेत्, तादृगेव तद्द्रष्टव्यम् । अथ तद्विलक्षणेन 'य ' पुमानुदयादूर्ध्वं जुहोति, स विवेकी । तत्रायं दृष्टान्त —उत्पन्नाय स्तनप्रदानं यादृग् भवति, तादृगेव तदिति । एवं सति 'अस्मै' सूर्याय 'प्रतिधीयमानं' हविः समर्पयेत् 'तम्' अग्निहोत्रिणम् 'अनु' लोकद्वयेऽप्यन्नाद्यं संपद्यते । लोकयोरित्यस्यैव व्याख्यानम् 'अस्माच्च' इत्यादि, सप्तम्यर्थे पञ्चमी । अस्मिन्नमुष्मिंश्चोभयो-र्लोकयोरित्यर्थः ॥

१. ३१ [४४. ६] भगवान् आदित्य स्वयं उदित होते ही [हव्यार्थी होकर] आहवनीय के साथ अपनी रश्मियों को संयोजित करते हैं। अतः जो सूर्योदय से पूर्व अग्निहोत्र करता है वह मूढ मानो वैसा ही करता है जैसे लोक में कोई स्त्री उत्पन्न न हुए कुमार को स्तनपान कराए अथवा [कोई गाय] उत्पन्न न हुए बछड़े को थन देवे, और जो सूर्योदय के बाद अग्निहोत्र करता है, वह उसी तरह है जैसे कोई स्त्री उत्पन्न हुए बच्चे को स्तनपान कराए, अथवा कोई गाय उत्पन्न हुए बछड़े को थन देवे। इस प्रकार इस [सूर्य] के लिए जो हवि समर्पित करता है, वह [हवि] उस अग्निहोत्री को दोनों ही लोकों में अन्न सम्पादित करती है, इस [भू] लोक में भी, उस स्वर्ग लोक में भी, दोनों ही [लोकों] में।

पुनरप्यन्येन दृष्टान्तेनानुदितहोमनिन्दामुदितहोमप्रशंसां च दर्शयति—

**स योऽनुदिते जुहोति, यथा पुरुषाय वा हस्तिने वाऽप्रयते हस्त आदध्यात् तादृक्तदथ य उदिते जुहोति, यथा पुरुषाय वा हस्तिने वा प्रयते हस्त आदध्यात् तादृक्तत्, तमेष एतेनैव हस्तेनोर्ध्वं हृत्वा स्वर्गे लोक आदधाति, य एवं विद्वानुदिते जुहोति, तस्मादुदिते होतव्यम् ॥** इति ।

'यः' अनुदितहोमी, स मूढ । यथा लोके पुरुषस्य हस्तिनो वा ग्रासार्थम् 'अप्रयते' अप्रसारितहस्ते ग्रासं प्रक्षिपेत्, तादृगेव तत् । उदितहोमस्तु प्रसारितहस्ते ग्रासप्रक्षेपसमानः । यः पुमान् विदित्वोदितहोमी स्यात्, 'तं' पुमांसम् 'एषः' आदित्य 'एतेनैव' हविः-

स्वीकारार्थं प्रसारितेन हस्तेनोर्ध्वं 'हृत्वा' नीत्वा स्वर्गे लोके स्थापयति। 'तस्माद्' उदयादूर्ध्वं 'होतव्यम्'[1]॥

वह जो अनुदित होम करता है वह उसी प्रकार है जैसे किसी पुरुष या हाथी के अप्रसारित हाथों में अथवा आगे न बढ़ाए गए सूड में ग्रास फेंका जाय। वह जो उदित होम करता है वह उसी प्रकार है जैसे किसी पुरुष या हाथी के फैलाए हुए हाथों में या प्रसारित सूड में ग्रास फेंका जाय। इस प्रकार जानते हुए जो उदित होम करता है उस [पुरुष] को यह [आदित्य] इसी [हवि स्वीकार करने वाले प्रसारित] हाथ से ऊपर खींच कर स्वर्गलोक में स्थापित करता है। इसलिए सूर्योदय के बाद ही होम करना चाहिए।

प्रकारान्तरेणोदितहोमं प्रशंसति—

**उद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति, तस्मादेनं प्राण इत्याचक्षते, प्राणे हास्य सम्प्रति हुतं भवति य एवं विद्वानुदिते जुहोति, तस्मादुदिते होतव्यम्** ॥ इति।

'आदित्य' स्वयमुद्यन्नेव सर्वप्राणिनः 'प्रणयति' चेष्टयति, तस्मात् प्रणयतीति व्युत्पत्त्यादित्यस्य 'प्राण' इति नाम।[2] एवं सत्युदितहोमी योऽस्ति, तस्य प्राणरूपे आदित्ये 'सम्प्रति[3]' सम्यग्द्रव्यं हुतं भवति। तस्मादुदयादूर्ध्वं होतव्यम्॥

आदित्य उदित होते ही सभी प्राणियों को चेष्टा प्रदान करते हैं। इसलिए ['प्रणयति इति प्राणः'–इस व्युत्पत्ति के कारण] उन [आदित्य] को 'प्राण' कहते हैं। जो इस प्रकार जानते हुए सूर्योदय के बाद होम करता है उसकी आहुतियाँ प्राणरूप आदित्य में सम्यक् रूप से हुत होती हैं। इसलिए सूर्योदय के बाद ही होम करना चाहिए।

पुनरपि युक्त्यन्तरेणोदितहोमं प्रशंसति—

**एष ह वै सत्यं वदन् सत्ये जुहोति, योऽस्तमिते सायं जुहोत्युदिते प्रातर्भूर्भुवः स्वरो३मग्निर्ज्योतिर्ज्योतिरग्निरिति सायं जुहोति, भूर्भुवः स्वरो३ सूर्यो ज्योतिर्ज्योतिः सूर्य इति प्रातः, सत्यं हास्य वदतः सत्ये हुतं भवति य एवं विद्वानुदिते जुहोति, तस्मादुदिते होतव्यम्** ॥ इति।

---

१. वा० सं० ३ ९ ११ अग्निहोत्रहोममन्त्रा, तत्राद्याविमौ। 'प्रदोषाममिजुहोत्यग्निर्ज्योतिरिति'–इति कात्या० श्रौ० ४ १३ १४। तै० ब्रा० २ १ ९ अनु० होममन्त्रौ, तर्थंतत्पूर्वमेव (२ अनु०) तयोर्व्याख्यानानि द्रष्टव्यानि।

२ (i) वक्ष्यते ह्यारण्यके (ऐ० आ० २ २ १)–'प्राणो ह्येष य एष तपति'।

(ii) नयत्यनित्यार्थत्वोरन्यतरेऽप्यक्षरवर्णसामान्यात् प्राण इत्याचक्षते आदित्यम्'–इति गोविन्दस्वामी।

३ (i) सम्प्रति = सुयुक्तम्—इति षड्गुरुशिष्यः।

(ii) 'सम्प्रति अञ्जसा तस्मिन् वा काले'—इति गोविन्दस्वामी।

सायंकालीनमग्निहोत्रमस्तमयादूर्ध्वं, प्रातःकालीनं च सूर्योदयादूर्ध्वं जुहोति, 'एषः' पुमान् वाचा 'सत्यं' यथार्थवादिनमेव मन्त्रं ब्रुवन् 'सत्ये' परमार्थं देवे 'जुहोति'। कथमिति ? तदुच्यते—'भूर्भुवः स्वः' इत्यादिकं सायंकालीनो मन्त्रः। तस्यायमर्थः—भूराद-यस्त्रयो लोका मदीयं होमम् ॐ अङ्गीकुर्वन्तु। यो 'अग्निः' देवः, स एव 'ज्योतिः' दीपादिरूपः प्रकाशः, यच्च 'ज्योतिः' दीपादिरूपः प्रकाशः, स एव 'अग्निः' देवः, तस्मै देवाय स्वाहुतमिदमस्तु इति। एवं प्रातःकालीनमन्त्रेऽपि द्रष्टव्यम्। भूरादयो लोका मदीयं होमं स्वीकुर्वन्तु, यः 'सूर्यः' देवः, स एव 'ज्योतिः' दिवसगतं प्रभारूपं; यच्चेदं प्रभारूपं 'ज्योतिः' स एव 'सूर्यः' देवः, तस्मै स्वाहुतमिदमस्तु। तत्र यो विद्वानेवं जुहोति, तस्य सायंकालीनं ज्योतिरग्निः, प्रातःकालीनं ज्योतिः सूर्यः, इत्येवं 'सत्यं' परमार्थं 'वदतः' पुरुषस्य 'सत्ये' परमार्थरूपेऽग्नौ सूर्ये च हुतं भवति। तस्मात् प्रातरुदयादूर्ध्वं होतव्यम् ॥

जो सायंकालीन अग्निहोत्र सूर्यास्त के बाद और प्रातःकालीन अग्निहोत्र सूर्योदय के बाद करता है तो यह व्यक्ति सत्य मन्त्र को कहते हुए सत्य-देव में होम करता है। 'भूर्भुवः स्वः' अर्थात् 'भूः', 'भुवः' एवं 'स्व' आदि तीनों लोक मेरी आहुतियाँ स्वीकार करें। जो अग्निदेव हैं वही दीपादि रूप प्रकाश हैं और जो दीपादि रूप प्रकाश है वही अग्निदेव हैं। उन अग्निदेव के लिए यह आहुति होवे'—इस मन्त्र से सायंकाल आहुति दे। भूः, भुवः एवं स्वः आदि तीनों लोक मेरी आहुति स्वीकार करें जो सूर्यदेव हैं वह दिन के प्रभा रूप प्रकाश हैं और जो प्रभा रूप प्रकाश है वही सूर्यदेव हैं, उनके लिए यह आहुति होवे' इस मन्त्र से प्रातःकाल होम करे। जो इस प्रकार जानते हुए अग्निहोत्र करता है उसकी सायंकालीन ज्योति-अग्नि और प्रातःकालीन ज्योति-सूर्य दोनों ही सत्य बोलने वाले पुरुष के परमार्थ रूप अग्नि और सूर्य में हुत होती है। इसलिए प्रातः सूर्योदय के बाद ही अग्निहोत्र करना चाहिए।

उदितहोमं प्रशस्यानुदितहोमं निन्दितुं गाथामुदाहरति—

**तदेषाऽभि यज्ञगाथा गीयते ॥ इति।**

इस सम्बन्ध में एक गाथा इस प्रकार गायी जाती है।

तां गाथामाह—

**प्रातः प्रातरनृतं ते वदन्ति, पुरोदयाज्जुह्वति येऽग्निहोत्रम्।**

**दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषामिति ॥२१॥इति।**

'ये' अग्निहोत्रिण उदयात् पूर्वमग्निहोत्रं जुह्वति, 'ते' पुरुषाः 'दिवाकीर्त्यम्' अहनि कीर्तनीयं सूर्यम् 'अदिवा' रात्रौ कीर्तयन्तः 'प्रातः प्रातः' प्रतिदिनं प्रातःकाले 'अनृतम्' असत्यं वदन्ति। कथमसत्यत्वमिति ? तदुच्यते,—'सूर्यो ज्योतिः' इति हि मन्त्रपाठः।

'तदा' तदानीमुदयात् पुरा 'एषाम्' अग्निहोत्रिणां सूर्यरूपं ज्योतिर्नास्ति तस्माद् सत्यवादिनः ।[1] 'इति' शब्दो वाक्यसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चम पञ्चिकाया पञ्चमाध्याये (पञ्चविंशाध्याये) षष्ठ खण्ड ॥ ६ ॥ (३१) [१८४]

जो [अग्निहोत्री] उदय से पूर्व अग्निहोत्र करते हैं वे प्रतिदिन प्रात काल असत्य ही बोलते हैं क्योंकि वे दिन में कीर्तनीय सूर्य का रात्रि में कीर्तन करते हुए ['सूर्यो ज्योति ' अर्थात 'सूर्य का प्रकाश'—इस मन्त्र का जब पाठ करते हैं] तब इन [अग्निहोत्रियों] के सामने सूर्य रूप प्रकाश नहीं होता है।

॥ इस प्रकार पचीसवें अध्याय के षष्ठ खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्ड

अथाग्निहोत्रमन्त्रप्रसङ्गाद् बुद्धिस्थस्य सर्वप्रायश्चित्तसपादकस्य व्याहृतित्रयस्य सृष्टिं वक्तुमुपक्रमते—

**प्रजापतिरकामयत प्रजायेय भूयान् स्यामिति, स तपोऽतप्यत, स तपस्तप्त्वेमाँल्लोकानसृजत—पृथिवीमन्तरिक्षं दिवं, ताँल्लोकानभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत, वायुरन्तरिक्षादादित्यो दिवस्तानि ज्योतींष्यभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त,—ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यात्, तान् वेदानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त,—भूरित्येव ऋग्वेदादजायत, भुव इति यजुर्वेदात्, स्वरिति सामवेदात् ॥ इति ।**

पुरा प्रजापतिरेको भूत्वा प्रजोत्पादनेन बहुविधः स्यामिति कामयित्वा तत्सिद्धयर्थं तपः 'पर्यालोचनम् अकरोत्'। इदं वस्त्वीदृशमिति पर्यालोचनरूपं तपः कृत्वा, पर्यालोचितप्रकारेणोत्पद्यतामिति सकल्प्य तेन सकल्पेन लोकत्रयमसृजत। ताँल्लोकान् पुनरप्यभित पर्यालोचितवान् किमेषु लोकेषु सारभूतं सपादनीयमिति ? पर्यालोचनम्। तथा पर्यालोचितेभ्यो लोकेभ्य प्रजापतिः सकल्पानुसारेणाग्निवाय्वादित्यरूपाणि 'ज्योतींष्यजायन्त'। तत्रापि सारं पर्यालोच्य तेभ्यो ज्योतिर्भ्यो वेदत्रयमुत्पादितवान्[2]। तेभ्यश्च वेदेभ्यो व्याहृतित्रयरूपाणि शुक्राणि' ज्योतींषि पापाख्यतमोनिवारकसमर्थान्यजायन्त ॥

v ३२ [xxv. ७] प्रजापति ने कामना की कि मैं प्रजोत्पादन के द्वारा बहुत हो जाऊँ। उन्होंने तप किया। उन्होंने तप करके इन लोकों को उत्पन्न किया—१ पृथ्वी

१ यदनुदिते सूर्ये प्रातर्जुहुयात् उभयमेवाग्नेयं स्यात्'—इति तै० ब्रा० २ १ २ ७। अत एवानुदितहोमिनामनृतवादित्वं बोध्यम्। द्र० इत पूर्वम् पृ० ८६९।

२ द्र० म० स० १ २३।

को, २. अन्तरिक्ष को और ३. स्वर्ग को। पुनः उन तीनों लोकों की पर्यालोचना[1] की [अर्थात् इन लोकों में क्या सारभूत सम्पादनीय है ?]। उन पर्यालोचित लोकों से [प्रजापति के संकल्प के अनुसार अग्नि, वायु और आदित्य रूप] तीन ज्योतियाँ उत्पन्न हुईं। पृथ्वी से अग्नि, अन्तरिक्ष से वायु और द्यौ से सूर्य उत्पन्न हुए। उन तीनों ज्योतियों की पुनः पर्यालोचना की। उन पर्यालोचित ज्योतियों से तीन वेद उत्पन्न हुए। अग्नि से ऋग्वेद, वायु से यजुर्वेद और आदित्य से सामवेद उत्पन्न हुए।[2] उन तीनों वेदों की पुनः पर्यालोचना की। उन पर्यालोचित वेदों से [व्याहृति त्रय रूप में पाररूप सत्त्व के निवारणार्थ] तीन ज्योतियाँ उत्पन्न हुईं। ऋग्वेद से 'भूः', यजुर्वेद से 'भुवः' और सामवेद से 'स्वः' [नामक व्याहृति] उत्पन्न हुईं।

एवं व्याहृतित्रयस्योत्पत्तिमुक्त्वा प्रणवस्योत्पत्तिमाह—

**तानि शुक्राण्यभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति, तानेकधा समभरत् तदेतदो३मिति, तस्मादोमोमिति प्रणौत्योमिति वै स्वर्गो लोक ओमित्यसौ योऽसौ तपति ॥ इति ।**

'तानि' 'शुक्राणि' व्याहृतित्रयरूपाणि ज्योतींषि सारोत्पादनाय पर्यालोचितवान्। 'तेभ्यः' पर्यालोचितेभ्यः प्रजापतिसंकल्पाद् वर्णत्रयमजायत। तच्च त्रयम् 'एकधा' संयोजितवान्। 'तदेतद्' एकीभूतं वर्णत्रयम् 'ओम्' इत्येवं सम्पन्नम्। तस्मात् सर्वसारत्वाद्धोता यः प्रयोगमध्ये 'ओमिति' प्रणवं करोति। सर्वप्रयोगसंग्रहार्था वीप्सा। सोऽयमोंकारः स्वर्गप्राप्तिहेतुत्वात् तदात्मकः। तथा यः 'असौ' आदित्यस्तपति असावप्योंकारस्वरूपः। आदित्यप्राप्तेरप्योंकारसाधनत्वात्। ओंकारस्य सर्वफलहेतुत्वं कठा आमनन्ति—'एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्'[3] इति ॥

[उन्होंने] उन [व्याहृति त्रय रूप] ज्योतियों का पुनः पर्यालोचन किया। उन पर्यालोचित ज्योतियों से तीन वर्ण उत्पन्न हुए—अकार, उकार और मकार[4]। उन्होंने उन

---

१ तपसा योजयल्लोकांस्तत्सारोद्गमाय वै।
स्वर्णकारो यथा सारं जिघृक्षुर्माधयेद्धि तम् ॥ इति षड्गुरुशिष्यः।

२ वेदास्त्रिविनियोक्तव्यो मन्त्रः कर्मणि यज्ञविदः।
ऋग्यजुःसामरूपो हि त्रिविधो मन्त्र उच्यते ॥
ऋक् पादबद्धा गीतिस्तु साम गद्यं यजुर्मतम्।
चतुर्ष्वपि हि वेदेषु मन्त्रोऽयं वर्तते त्रिधा ॥
ऋचां बहुत्वाद् 'ऋग्वेद' इत्याद्यास्योक्तिरिष्यताम्।
पुनः स एव तत्त्रय जिघृक्षुः सारवस्तु वै ॥ इति षड्गुरुशिष्यः।

३ कठ० उप० १.२.१६।

४ तथा च मनुः—अकारं चाप्युकारं च मकारं च प्रजापतिः।
वेदत्रयान्निरदुहद् भूर्भुवः स्वरितीति च ॥ (२.७६)

तीनों को एक साथ संयोजित कर दिया। वह एकीभूत वर्ण त्रय ही 'ओम्' हुआ। इसीलिए होता सभी के सार स्वरूप 'ओम्'-इस प्रणव को प्रयोग के मध्य कहता है। वस्तुत यह सभी प्रयोग के सग्रहाय होता है। वह यह 'ओम' [स्वर्ग प्राप्ति का कारण होने से] स्वर्ग लोक है[2], तथा जो यह आदित्य तप रहा है वह भी ओंकार स्वरूप ही है [क्योंकि प्रणव आदित्य की प्राप्ति में साधन रूप है]।

अथ प्रायश्चित्त विधातुमुपयुक्तमुपाख्यानमाह—

**स प्रजापतिर्यज्ञमतनुत, तमाहरत्, तेनायजत, स ऋचैव होत्रमकरोद्,[3] यजुषाऽऽध्वर्यवं,[4] साम्नोद्गीथं[5] यदेतत्त्रय्यै विद्यायै शुक्र, तेन ब्रह्मत्वमकरोत् ॥** इति।

पुरा 'प्रजापति' स्वेच्छया 'यज्ञमतनुत' विस्तारितवान्। केन प्रकारेणेति ? सोऽभिधीयते —'स' यज्ञसाधनसमूहमाहृत्य तेन साधनेन याग कृतवान्। वेदत्रयगतैर्मन्त्रै क्रमेण हौत्राध्वर्यवौद्गात्राणि निष्पाद्य[6], तत्र 'त्रय्यै विद्यायै' वेदत्रयरूपायां विद्याया यदेतत् 'शुक्र' सार व्याहृतित्रयादिरूपम्, तेन सारेण ब्रह्मत्व कृतवान्[7] ॥

---

१ वाच्यमस्य पर ब्रह्म शब्दब्रह्मोतम स्विदम्।
'तस्य वाचक प्रणव'-इति योगानुशासनम् ॥ इति षड्गुरुशिष्य।
तु० पात० योग० १ २७।

२ 'ओंकार' स्वर्गद्वारम्'—इति आपस्तम्ब (आप० धर्म० १ १३ ६)।

३ एतन्नियममूलकान्येवेदमाश्वलायनसूत्रम्—'तद् ये केवन छान्दोग्ये वाध्वर्यवे वा हौत्रामर्शा समाम्नाता न तान् कुर्यादकृत्स्नत्वाद्धौत्रस्य'—इति आश्व० श्रौ० ८ १३ ३२।

४ 'अध्वर्युप्रत्यय तु व्याख्यान कामकालदेशदक्षिणाना दीक्षोपसद् प्रसवसस्थोत्थानानामेतावत्त्व हविषामुच्चैरुपांशुताया हविषा चानुपूर्वम्'—इति आश्व० श्रौ० ८ १३ ३४।

५ छन्दोगप्रत्यय स्तोम स्तोत्रिय पृष्ठ सस्थेति'—इति आश्व० श्रौ० ८ १३ ३३।

६ 'हौत्र होतृवर्गकृत्यम्, उद्गात्रादयः। अध्वर्युवर्गकृत्यम्, उद्गातृवर्गकृत्यम्। इत्यर्थे इदंद्वयम्। ब्रह्मत्वमोंव्याहृतियुक् प्रोक्त वेदचतुष्टये' इति षड्गुरुशिष्य।

७ अत्र गोविन्दस्वामी—अत्र ऋगादय शब्दा वेदोपलक्षणार्था। वाक्योपक्रमणे वेदशब्दश्रवणात् त्रयो वेदा अजायन्त इति। अनुपजातविरोधित्वात् तदनुवचेनोपसहारो वर्णनीय। होत्रादयश्चत्वारो महर्त्विज। तदीया अभिनो मैत्रावरुणादय। तृतीयिनश्चाच्छावाकादय। पादिनश्च ग्रावस्तोत्रादय। आह च—तमृत्विजश्चत्वारस्त्रिपुरुषा इति। होत्रमिति होत्रादीना चतुर्णां पदार्थजात लक्षितम्। तदृग्वेदेनाकरोत्। अकरोदित्यत्र णिलोपो द्रष्टव्य। अकारयदिति यावत्। एव यजुषाध्वर्यव साम्नोद्गीथमिति च। यद्यप्युद्गीथशब्दो भक्तिविशेषवचनस्तथापीह सामवेदविहितपदार्थमात्रोपलक्ष-

प्रजापति ने यज्ञ का विस्तार किया। उन्होंने उस [यज्ञ के साधन] को प्राप्त किया और उससे यजन किया। उन्होंने ऋक् [मन्त्रों] से होता का काम किया। यजुः [मन्त्रों] से अध्वर्यु का, और साम से उद्गाता का। [वेद त्रय रूप] इन तीन विद्याओं में जो व्याहृतित्रय रूप शुक्र [=सारतत्त्व] था उससे ब्रह्मत्व [ब्रह्मा] का कार्य किया।

अथ ब्रह्मयज्ञवद्देवतायज्ञं दर्शयति—

**स प्रजापतिर्यज्ञं देवेभ्यः संप्रायच्छत्, तं देवा यज्ञमतन्वत, तमाहरन्त, तेनायजन्त, त ऋचैव हौत्रमकुर्वन् यजुषाऽऽध्वर्यवं, साम्नोद्गीथं, यदेवैतत् त्रय्यै विद्यायै शुक्रं, तेन ब्रह्मत्वमकुर्वन्** ॥ इति।

पूर्ववाक्यवद् व्याख्येयम् ॥

उन प्रजापति ने देवों को यज्ञ दिया। उन देवों ने यज्ञ का विस्तार किया। उन्होंने उस [यज्ञ के साधन] को प्राप्त किया और उससे यजन किया। उन्होंने ऋक् [मन्त्रों] से होता का काम किया। यजु [मन्त्रों] से अध्वर्यु का और साम से उद्गाता का। [वेद त्रय रूप] इन तीन विद्याओं में जो [व्याहृति त्रय रूप] शुक्र [=सारतत्त्व] था उससे ब्रह्मा का कार्य किया।

अथ प्रश्नोत्तराभ्यां प्रायश्चित्तं विधत्ते—

**ते देवा अब्रुवन् प्रजापतिं,–यदि नो यज्ञ ऋक्त आर्तिः स्यात्, यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्वव्यापद्वा का प्रायश्चित्तिरिति; स प्रजापतिर-**

---

णार्थः। एवमुत्तरत्राप्युद्गीथशब्दप्रयोगेषु वेदितव्यम्। त्रयाणां वेदानां समाहारस्त्रयी। षष्ठ्यर्थे चतुर्थी, त्रय्याः शुक्रेण व्याहृतिर्ब्रह्मत्वमकरोत्।

ननु अथर्ववेदेन ब्रह्मत्वं कस्मान्न क्रियते। ऋग्विदं ऋग्वेदपारगमेव होतारं वृणीष्व। यजुर्वेदमध्वर्युम्। सामविदमुद्गातारम्। अथर्वाङ्गिरोविदं ब्रह्माणम् इत्यथर्व-श्रुतिरप्यस्ति। उच्यते—सत्यमस्ति सा श्रुतिः। यदेतत् त्रय्यै विद्यायै इत्यपि च श्रुतिरस्त्येव। किञ्च वेदेषु तत्र तत्र लोकाग्निव्याहृतिसवनसंस्तुतास्त्रय एव वेदाः। आथर्वणे तु आहवनीयादिसम्बद्धयज्ञकर्मव्यापारो नास्ति। तत्र हि शान्तिक-पौष्टिक-पुण्याह-स्वस्त्ययन-मुण्ड-मङ्गलादिषु प्राधान्यो व्यापारः। तथा हि न्यायविदः—श्रुति-विरुद्धस्मृत्युदाहरणवेलायामग्नीषोमीयसंस्थायामपि भोजनप्रतिषेधप्रतिपादकश्रुतिविरोधि-त्वेनाथर्ववेदपठितक्रीतराजकभोज्यान्नवचनं स्मृतिपदे चोदाहरन्ति। तदुपपादयिषुर्भट्टा-चार्य आह—'क्रीतराजकभोज्यान्नं च यद्यप्यथर्ववेदेऽस्ति, तथापि तस्याहवनीय-सम्बद्धयज्ञकर्मापिनारम्भाभावाद्'—इति। अतस्त्रिवेदविहितब्रह्मत्वं तन्त्रे मन्तव्यम्। तस्माद् यज्ञेषु त्रय्या विद्यया ब्रह्मत्वम् इति स्थितम्। वक्ष्यति 'त्रय्या विद्ययेति ब्रूयादिति'–इति।

**यवोद्देवान्,–यदि वो यज्ञ ऋक्त आर्तिर्भवति, भूरिति गार्हपत्ये जुहवाथ, यदि यजुष्टो, भुव इत्याग्नीध्रीयेऽन्वाहार्यपचने वा हविर्यज्ञेषु, यदि सामतः, स्वरित्याहवनीये;[1] यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याऽऽहवनीय एव जुहवाथेति ॥ इति ।**

'ते देवाः प्रजापतिं' प्रत्येवमपृच्छन्,—'नः' अस्मदीये 'यज्ञे यदि' कदाचिद् 'ऋक्तः' ऋङ्मन्त्राद् 'आर्तिः' नाशो भवेत्, तथा यजुर्मन्त्रात् साममन्त्राद्वा कदाचिद् आर्तिः स्यात् । एताः सर्वा आर्तयोऽस्माभिर्विज्ञाताः, यदि कदाचिदविज्ञाता काचिदार्तिर्भवेत् । यदि वा सर्वथा यद्वेदत्रयमन्त्रनिमित्ताऽस्माभिर्विज्ञाताऽस्माभिरज्ञाता च सर्वाऽप्यार्तिर्भवेत् । इदानीं प्रायश्चित्तिर्वक्तव्येति देवप्रश्नः । ऋङ्मन्त्रवैकल्ये गार्हपत्ये भूरिति होमः । यजुर्मन्त्रवैकल्ये सत्याग्नीध्रीये धिष्णिये भुव इति होमः । सोऽयं सोमयागे द्रष्टव्यः । हविर्यागे आग्नीध्रीयाभावात् । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः, कौण्डपायिनामयनं सौत्रामणी वा सप्तमी, त एते हविर्यज्ञाः[2], तेष्वाग्नीध्रीयाभावात् '*अन्वाहार्यपचने*' दक्षिणाग्नौ[3] 'जुहवाथ' हे देवा यूयं जुहुत । सामभ्रेषे स्वरित्याहवनीये होमः । यद्यविज्ञातो भ्रेषः यदि वा वेदत्रयभ्रेषसमुच्चयः तत्रोभयत्रापि भूर्भुवः स्वरित्येतास्तिस्रो *व्याहृतीः सर्वा 'अनुद्रुत्य, उच्चार्याऽऽहवनीय एव 'जुहुत'*[4] ।

[प्रश्न] उन देवों ने प्रजापति से पूछा यदि हमसे ऋग्वेद के मन्त्र में कोई भूल चूक हो जाय अथवा यजुर्वेद के मन्त्र में या सामवेद के मन्त्र में भूल हो जाय; या अज्ञान में किंवा वेद त्रय के मन्त्रों में सर्वथा भूल हो जाय[5] तो क्या प्रायश्चित्त है ? [उत्तर] उन प्रजापति ने देवों से कहा—'यदि तुम्हारे यज्ञ में ऋग्वेद से कोई भूल हो जाय तो 'भूः' से गार्हपत्य अग्नि में आहुति देनी चाहिए। यदि यजुः से कोई भूल हो तो 'भुवः' से आग्नीध्रीय[6] [वेदी पर] अग्नि में आहुति देनी चाहिए अथवा [अग्न्याधेय, दर्शपूर्ण-

---

१. छान्दोग्येऽप्येवमेव द्रष्टव्यम् (छा० उप० ४.१७.३) ।

२. अग्न्याधेयम् अग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः—इति गौ० धर्मसूत्र ८.१९ ।

३. 'एता दर्शपूर्णमासयोर्दक्षिणामकल्पयन् यदन्वाहार्यम्'—इति शत० ब्रा० १.२.३ ५ । 'अन्वाहरति यज्ञसम्बन्धि दोषजातं परिहरत्यनेनेति अन्वाहार्यो नाम ऋत्विग्भ्यो देय ओदनः—इति च तत्र सा० भा० । 'अन्वाहार्यं दक्षिणाग्नावधिश्रयति'–इति कात्या० श्रौ० २.५.२७ ।

४. *'भूर्भुवः सुवरिति सर्वप्रायश्चित्तानि'–इति तै० आ० ४.२०.१ सा० भा० ।*

५. अविज्ञाता कुत इदमिति विज्ञानहीना । सर्वव्यापत्=सर्वतोभ्रेषः । इति षड्गुरुशिष्यः ।

६. सोमेष्वार्तिर्यजुष्टश्चेद भवेज्जुहुत वै भुवः ।
इत्याग्नीध्रीयवह्नौ तु चान्त्यर्थं सूच्यते खलु ॥
—(आश्व० श्रौ० १.१२.३२) इति षड्गुरुशिष्यः ।

मासादिक सात] हवि· यागों में [जहाँ आग्नीध्रीयाभाव होता है वहाँ दक्षिणाग्नि रूप] अन्वाहार्यपचन,[1] में आहुति दे। यदि साम से कोई भूल हो जाय तो 'स्वः' से आहवनीय अग्नि में आहुति दे। यदि अनजाने में अथवा वेद त्रय के मन्त्रों में सर्वथा भूल हो जाय तो आहवनीयाग्नि में ही 'भूः, भुवः, स्वः' तीनों का एक साथ उच्चारण करके आहुति दे।

अनेनार्थवादेन प्रायश्चित्तविधिमुक्त्वोय व्याहृतिप्रशंसापूर्वकं तं विधिमुपसंहरति—

एतानि ह वै वेदानामन्तःश्लेषणानि यदेता व्याहृतयस्तद् यथाऽऽत्मनाऽऽत्मानं संदध्याद् यथा पर्वणा पर्व, यथा श्लेष्मणा चर्मण्यं वाऽन्यद्वा विश्लिष्टं संश्लेषयेदेवमेवैताभिर्यज्ञस्य विश्लिष्टं संदधाति; सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतयस्तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्तव्या ॥ ३२ ॥ इति।

या एता व्याहृतयः सन्ति, 'एतानि ह वै' त्रीण्येव व्याहृतिरूपाणि, वेदानां सम्बन्धीनि 'अन्तःश्लेषणानि' अन्तर्बन्धनसाधनानि। तत्र दृष्टान्तोऽभिधीयते, यथा लोके 'आत्मनाऽऽत्मानं संदध्यात्' आत्मशब्दः स्वरूपमात्रवाचित्वात् सर्वद्रव्यपरः। एकेन द्रव्येण द्रव्यान्तरं संधीयते। एतच्च छन्दोगैर्विस्पष्टमाम्नातम्—"तद् यथा लवणेन सुवर्णं संदध्यात्, सुवर्णेन रजतम्, रजतेन त्रपु, त्रपुणा सीसम्, सीसेन लोहम्, लोहेन दारु, दारुणा चर्मेति"[2]। क्षारादिना सुवर्णादीनां संधानं सुवर्णकारादिषु प्रसिद्धम्। तदेतदभिप्रेत्याऽऽत्मनाऽऽत्मानं संदध्यादित्युक्तम्[3]। यथा च हस्तपादादिष्वेकेन पर्वणा पर्वान्तरं संश्लिष्टं यथा च 'श्लेष्मणा' धात्वन्तरं संश्लिष्टं, चर्मणा च 'चर्मण्यं' पादत्राणादिकम्, 'अन्यद्वा' शकटादिषु विविधं विश्लिष्टमङ्गं, चर्ममय्या रज्ज्वा संश्लेषयेत्। अनेनैव प्रकारेण 'एताभिर्व्याहृतिभिर्यज्ञस्य विश्लिष्टमङ्गं संश्लिष्टं भवति। या एता व्याहृतयः, सैषा सर्वस्य वैकल्यस्य प्रायश्चित्तिः। तस्माद् यज्ञे वैकल्यपरिहारार्थमेषैव प्रायश्चित्तिः कर्तव्या॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चमपञ्चिकाया पञ्चमाध्याये (पञ्चविंशाध्याये) सप्तमः खण्डः ॥७॥ (३२) [१८५]

जो ये तीन व्याहृतियाँ हैं वे वेदों के आन्तरिक निबन्ध [के साधन] हैं; जैसे किसी एक वस्तु को दूसरी वस्तु से जोड़ें अथवा जैसे [हाथ-पैर आदि में] एक सन्धि से दूसरी

---

१. सूत्रयति ह्यापस्तम्बः—'दक्षिणाग्नावन्वाहार्यं महान्तमपरिमितमोदनं पचति। क्षीरे भवतीत्येके'—इति (आप० श्रौ० ३.३.१२,१३)। सूत्र्यते च—'यजुष्टो भुव इति दक्षिणे'—इति (आश्व० श्रौ० १.१२.३२)।

२. छा० उप० ४.१७.७।

३. 'मृण्मया वासः सन्दधात्'—इति, द्र० पूर्वम्, पृ० ४४१।

सन्धि को संश्लिष्ट करे या किसी [लोहा आदि] धातु को किसी चर्म से जोड़े या किसी अन्य [उपानह या गाड़ी आदि में] विश्लिष्ट अङ्ग को [चमड़े की रस्सी से] संश्लिष्ट करे[1]। इसी प्रकार इन [व्याहृतियों] से यज्ञ के विश्लिष्ट अङ्ग को संश्लिष्ट करता है। जो ये व्याहृतियाँ हैं, वे सभी वैकल्य के लिए प्रायश्चित्त हैं। इसलिए यज्ञ में वैकल्य परिहार के लिए इन्हीं से प्रायश्चित्त करना चाहिए[2]।

॥ इस प्रकार पचीसवें अध्याय के सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथ अष्टमः खण्डः

व्याहृतिहोमप्रसङ्गेन ब्रह्मा बुद्धिस्थस्तस्य तत्कर्तृत्वात्[3]। तथा च आश्वलायन आह—'जुहोति जपतीति प्रायश्चित्ते ब्रह्मणाम्' इति[4]।

अतः प्रश्नोत्तराभ्यां ब्रह्मत्वं निर्णेतुमुपक्रमते—

**तदाहुर्महावदा३[5], यदृचैव हौत्रं क्रियते, यजुषाऽऽध्वर्यवं, साम्नोद्गीथं, व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियत इति त्रय्या विद्ययेति ब्रूयात्** ॥ इति ।

'तत्' तत्र प्रायश्चित्तप्रसङ्गे 'महावदा'[5] ब्रह्मवादिन 'आहु' चोदयन्ति । महान्तः प्रौढं वेदं वदन्तीति महावदाः । प्लुतिस्त्वेषा प्रशंसार्था । 'यद्' यस्मात् कारणादृग्यजुः सामेति हौत्राध्वर्यवौद्गात्राणां करणात् 'त्रयी' वेदत्रयरूपा विद्या 'व्यारब्धा' विविच्य होत्रादिभि

---

१ (i) 'आत्मशब्देन द्रव्यमात्रं लक्ष्यते'—इति गोविन्दस्वामी । (ii) आत्मा = देह, पर्व = सन्धि, श्लेष्मा = आर्द्रं मांसम् । चर्मण्यं चर्मणि साधु । अथ शरत्वादिना विलिष्ट (?) विश्लिष्टम् । इति षड्गुरुशिष्य ।

२ भरद्वाजो ह्येतमर्थं स्वसूत्रान्ते ह्यसूत्रयत् ।
'सर्वेषामन्ततो व्याहृतिरिति सिद्धम्, नम आचार्येभ्यो नम आचार्येभ्य इति' ।

३ व्याहृतिहोमकर्तृत्वादिति यावत् ।

४ आश्व० श्रौ० १ १ १६ ।

५ (i) 'महच्छब्देन ब्रह्मोच्यते । ब्रह्म च वेद । तं ये वदन्ति (अभिधीय)ते महावदा'—इति गोविन्दस्वामी ।
(ii) घञ् कर्मणि वदेर्वृद्धिर्न वदो वेद उच्यते ।
स वेदस्तु महान् येषां ते तथोक्ता महावदा ॥
ते चोद्यं ब्रह्मविषयमाहुरेतत् कथं शृणु । इति षड्गुरुशिष्य ।
(iii) 'Important sages'—इति कीथ महोदय ।

स्वीकृता भवति। अथर्ववेदस्य नात्र मिश्रयितुं शक्यते। आहवनीयादिकर्तव्यस्य तत्राभावात्। अथ तस्मात् कारणात् केन साधनेन ब्रह्मत्वं क्रियते? इति चोद्यम्। तस्य 'त्रय्या' वेदत्रयरूपया 'विद्यया' ब्रह्मत्वं कर्तव्यमित्युत्तरं प्रतिब्रूयात्। अत एव संप्रदायविद आहुः—

"अथर्वशेषवान् ब्रह्मा वेदेष्वन्येषु भागवान्।
तस्माद् ब्रह्माणं ब्रह्मिष्ठमिति[1] ह्यारण्यके श्रुतम्"॥ इति॥

v. ३३ [xxv. ८] उस [प्रायश्चित्त] के प्रसङ्ग में ब्रह्मवादी कहते हैं—जबकि ऋग्वेद के मन्त्रों से होता का कार्य किया जाता है, यजुर्वेद के मन्त्रों से अध्वर्यु का और सामवेद से उद्गाता का तो [वेद त्रय रूप] त्रयी विद्या [होता आदि के द्वारा] जब विवेचित हो जाती है तब [आहवनीयादि कर्तव्य का अभाव होने से अथर्ववेद का इसमें मिश्रण न हो सकने के कारण] किसके द्वारा ब्रह्मा का कार्य करते हैं? [उत्तर] इस प्रकार कहना चाहिए कि—उस वेद त्रय रूप त्रयी विद्या से ही ब्रह्मा का कार्य करना चाहिए।

ब्रह्मणो मनसा वैस्वर्याहित्यानुसधानं विधत्ते—

**अयं वै यज्ञो योऽयं पवते, तस्य वाक् च मनश्च वर्तन्यौ; वाचा च हि मनसा च यज्ञो वर्तत, इयं वै वागदो मनस्तद्वाचा त्रय्या विद्ययैकं पक्षं संस्कुर्वन्ति, मनसैव ब्रह्मा संस्करोति॥ इति।**

'य.' 'अयं' वायुः 'पवते' अन्तरिक्षे संचरति, अयमेव यज्ञस्वरूपो वायुसदृशो यज्ञ.। यथा वायोः संचारमार्गाः तथा 'तस्य' यज्ञस्य 'वाक् च मनश्च' 'वर्तन्यौ' प्रवृत्तिमार्गौ। यस्माद् 'वाचा' मन्त्ररूपया 'मनसा' च प्रयोगानुसधाना 'यज्ञो वर्तते' तस्मादुभौ मार्गौ। तत्र वाग् 'इयं वै' भूमिस्वरूपैव, मनस्तु 'अदः' स्वर्गरूपम्। 'तत्' तथा सति वाग्रूपया 'त्रय्या विद्यया' होत्रादयो रथस्थानीयस्य यज्ञस्यैकं 'पक्षं' मार्गं 'संस्कुर्वन्ति' सम्यक्संपादयन्ति। ब्रह्मा मनसैव 'संस्करोति' सम्यक्संपादयति, अन्यं मार्गमिति शेषः। होत्रादिभिर्वाचाऽनुष्ठीयमानेष्वङ्गेषु वैस्वर्याहित्यं ब्रह्माऽनुसदध्यादित्यर्थः। छन्दोगा एतमर्थमामनन्ति—'एष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा, वाचा होताऽध्वर्युरुद्गाताऽन्यतराम्'[2] इति।

---

१. 'ब्रह्मिष्ठमिति'—इति वा पाठः। तु० ऐ० आ० ३.२.३। 'यस्माद् वेदत्रयाभिज्ञानरूपस्य वेदपुरुषस्य हिरण्यगर्भापरनामधेयो ब्रह्मा रसतरतमाद् ब्रह्मनामसाम्याद् यागेऽपि ब्रह्माणमृत्विजं ब्रह्मिष्ठमेवेत्यनेन वेदत्रयगतं कुर्वीत।' इति तत्र सायणः।

२. छा० उप० ४.१६। 'स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदति, अन्यतरामेव वर्तनिं संस्करोति, हीयतेऽन्यतरा'—इत्यादिस्तत्रत्यशेषः सम्यक् एवैतदर्थकः।

जो यह [अन्तरिक्ष में वायु] बह रही है यह यज्ञ ही है [जैसे वायु का संचरण करने का मार्ग होता है वैसे ही] उस [यज्ञ] के वाणी और मन प्रवृत्ति के मार्ग हैं; क्योंकि मन्त्ररूप वाणी और मन से प्रयोगानुसन्धान करने वाले के द्वारा यज्ञ होता है। यहाँ यह वाणी ही [भूमि स्वरूप] है और मन [स्वर्ग स्वरूप] है। इस प्रकार उस वाक् रूपी [वेद] त्रयी विद्या के द्वारा [होता आदि ऋत्विज रूप स्थानीय यज्ञ के] एक भाग का सम्यक् रूप से संपादन करते हैं, और ब्रह्मा मन से ही [अन्य भाग का] संस्कार करता है[1] [अर्थात् होता आदि के द्वारा अनुष्ठीयमान अङ्गों में वैकल्यराहित्य के लिए ब्रह्मा अनुसन्धान करें]।

अथ ब्रह्मणो मौनं विधातुं वाग्व्यवहारे बाधां दर्शयति—

ते हैके ब्रह्माण उपाकृते प्रातरनुवाके स्तोमभागाञ्जपित्वा भाषमाणा उपासते तद्धैतदुवाच ब्राह्मण उपाकृते प्रातरनुवाके ब्रह्माणं भाषमाणं दृष्ट्वार्धमस्य यज्ञस्यान्तरगुरिति; तद्यथैकपात्पुरुषो यन्नेकतश्चक्रो वा रथो वर्तमानो भ्रेषं न्येत्येवमेव स यज्ञो भ्रेषं न्येति,—यज्ञस्य भ्रेषमनु यजमानो भ्रेषं न्येति ॥ इति ।

केषुचिद् यज्ञप्रयोगेषु वर्तमानाः 'ते' वेदत्रयाभिज्ञत्वेन प्रसिद्धा 'एके ब्रह्माणः' केचिद्-ब्रह्मसंज्ञका ऋत्विजो होत्रा पठितव्ये प्रातरनुवाकेऽध्वर्युणा 'उपाकृते' अनुज्ञाते सति, तत ऊर्ध्वं 'रश्मिरसि क्षयाय त्वा'[2]—इत्यादीन् स्तोमभागसंज्ञकान् मन्त्रान्[3] जपित्वा मौनमकृत्वा 'भाषमाणाः' वाग्व्यवहारं कुर्वन्तः 'उपासते' समीपे तिष्ठन्ति । तदानीं कश्चिच्छास्त्राभिज्ञो ब्राह्मण आगत्य कस्मिंश्चिद् यज्ञे प्रातरनुवाकोपाकरणाद् ऊर्ध्वं 'भाषमाणं' वाग्व्यवहारं कुर्वन्तं ब्रह्माणं दृष्ट्वा वाक्यमेतदुवाच—'अस्य यज्ञस्यार्धमन्तरगुः'—इति । ऋत्विग्यजमाना एकं यज्ञभागमन्तरितं कृतवन्त इति । तथा सति यथा लोके कश्चिदेकपात्पुरुषो द्वितीयं पादं संकुचितं कृत्वा प्रसारितेनैकेनैव पादेन 'यन्' मार्गं गच्छन् 'भ्रेषं' भूमौ पातं 'न्येति' नितरामेति, यथा वा कश्चिद्रथ एकचक्रो भूमौ प्रवर्तमानो भ्रेषं प्राप्नोति, एवमेव मौनरहितेन ब्रह्मणा युक्तः स यज्ञो भ्रेषं न्येति । तं च यज्ञभ्रेषम् 'अनु' पश्चाद् यजमानो भ्रेषं न्येति[4] ॥

---

१. सूच्यते हि—'अब्रह्मभाषी यज्ञमना'—इति (आश्व० श्रौ० १ १२ ३०)। वक्ष्यते चारण्यके—'ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत्'—इति (ऐ०आ०३.२.३)।

२. तां० ब्रा० १.९.१ ।

३. स्तोमभागमन्त्रास्तु तै० सं० ४.४.१.१ आम्नाताः, 'तस्माद् वासिष्ठो ब्रह्मा कार्यः, प्रैव जायते, रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह'—इत्यादिभिर्व्याख्याता तै० सं० ३.५.२.१ । पुनः पञ्चमेऽस्य रश्मिरसिमन्त्रस्य 'रश्मिरित्येवादित्यम् असृजत'—इत्यादित्यसृष्टिपरतया व्याख्यानं च आम्नातम् (५.३.६.१) । द्र० वाज० सं० १५.६ ।

४. द्र० 'इन्द्रो ह····ब्रह्मा वाचयमो बुभूषति'—इति षड्० ब्रा० १.५ ।

[कुछ यज्ञ प्रयोगों में] ये कुछ ब्रह्मा नामक ऋत्विज [होता द्वारा पठित] प्रातरनुवाक में [अध्वर्यु द्वारा अनुज्ञात होने पर 'रश्मिरसि क्षयाय' इत्यादि] स्तोम भाग संज्ञक मन्त्रों का जप करके [मौन धारण न करके] बातचीत करते हुए समीप ही बैठते हैं[1]। तब [किसी अन्य यज्ञ में किसी शास्त्राभिज्ञ] ब्राह्मण ने[2] प्रातरनुवाक के उपाकरण के बाद ब्रह्मा को बातचीत करते हुए देखकर कहा—इस यज्ञ के आधे भाग को [ऋत्विज और यजमान ने] निगूढ़[3] कर दिया। वस्तुतः जैसे लोक में एक पैर से चलने वाला मनुष्य अथवा एक पहिए से चलने वाला रथ गिर पड़ता है वैसे ही [मौन रहित ब्रह्मा से युक्त] वह यज्ञ भी भ्रष्ट हो जाता है और यज्ञ के वैकल्य के अनन्तर यजमान भी असफल हो जाता है।

इत्थं वाग्व्यवहारे बाधमुक्त्वा मौनं विधत्ते—

तस्माद् ब्रह्मोपाकृते प्रातरनुवाके वाचंयमः स्यादोपांश्वन्तर्यामयोर्होमादुपाकृतेषु पवमानेष्वोदृचो[4] यानि स्तोत्राणि सशस्त्राण्या तेषां वषट्काराद् वाचंयम एव स्यात्, तद्यथोभयतःपाद् पुरुषो यन्नुभयतश्चक्रो वा रथो वर्तमानो न रिष्यत्येवमेव स यज्ञो न रिष्यति,—यज्ञस्यारिष्टिमनु यजमानो न रिष्यति ॥ ३३ ॥ इति ।

यस्माद् भाषणे बाधोऽस्ति, 'तस्माद् ब्रह्मा प्रातरनुवाकोपाकरणादूर्ध्वं 'वाचंयमः' मौनी स्यात्। कियन्तं कालमिति ? तदुच्यते—'उपांश्वन्तर्यामयोः' 'ग्रहयोः आहोमाद्' होमसमाप्तिपर्यन्तं, तथा पवमानस्तोत्रेषु[5] त्रिष्वप्यध्वर्युणा 'उपाकृतेषु' अनुज्ञातेषु सत्सु 'ओदृचः' उत्तमा समाप्तिकालीना येयमृगस्ति, तत्समाप्तिपर्यन्तम्, वाचंयमः स्यादित्यनुवर्तते। 'अथ' अनन्तरं यान्यन्यान्याज्यादिस्तोत्राणि शस्त्रसहितानि सन्ति, तेषाम् 'आवषट्काराद्' वौषडितिमन्त्रोच्चारणपर्यन्तं, तत्तत्स्तोत्रप्रारम्भादूर्ध्वं सदा सदा वाचंयम एव स्यात्। तथा सति लोके 'यथोभयतःपाद्' पादद्वयोपेतः पुरुषो 'यन्' मार्गे गच्छन् 'न रिष्यति' न विनश्यति, तथा च 'उभयतश्चक्र' चक्रद्वयोपेतो रथो मार्गे वर्तमानो न

---

१ तु० पञ्च० ब्रा० १८,९। तै० सं० ३५२, ४४१, ५३६। काठ० सं० १७७, १७७, मै० सं० २८। वाज० सं० १५६।

२ द्र० गो० ब्रा० ३२, ३।

३. (i) यज्ञस्यार्धं नश्यतीह ब्रह्मवक्तुमिमापणात्। इति षड्गुरुशिष्य।
   (ii) अगुरिति वहुवचनमेतस्मिन्नर्थे यज्ञा, अन्तर्भावितण्यर्थं। ब्रह्मणो यज्ञस्यार्धं विनाशमनयन्त इति'—इति गोविन्दस्वामी।

४ अर्थात् आ + उत् + ऋच = ओदृच।

५ बहिष्पवमानम्, माध्यन्दिनपवमानम्, आर्भवपवमानमिति त्रीणि पवमानस्तोत्राणि।

विनश्यति, एवमेव मौनिना ब्रह्मणा युक्त स यज्ञो न विनश्यति । यज्ञस्य 'अरिष्टिं' विनाशाभावमनु यजमानोऽपि 'न रिष्यति' न विनश्यति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम-पञ्चिकायां पञ्चमाध्याये (पञ्चविंशाध्याये) अष्टम खण्ड ॥८॥ (३३) [१८६]

[क्योंकि बोलने में बाधा है] अतः ब्रह्मा को प्रातरनुवाक के उपाकरण के बाद मौन रहना चाहिए। [इस प्रकार उसे] उपांशु और अन्तर्याम-ग्रह के होम की समाप्ति पर्यन्त तथा पवमान स्तोत्रों में तीनों के ही अध्वर्यु द्वारा अनुज्ञात होने पर एवं अन्तिम ऋचा[1] के पाठ की समाप्ति पर्यन्त मौन रहना चाहिए। इसके बाद जो जो शस्त्रों के सहित [याज्यादि] स्तोत्र हैं, उन स्तोत्रों के आरम्भ से लेकर उनके वषट्कार पर्यन्त मौन ही रहना चाहिए। इस प्रकार लोक में जैसे दोनों पैरों से चलने वाला पुरुष अथवा दोनों पहियों से चलने वाला रथ गिरता नहीं है उसी प्रकार [मौनी ब्रह्मा से युक्त] वह यज्ञ भी असफल नहीं होता है और यज्ञ के विनष्ट न होने से यजमान भी स्खलित नहीं होता।

॥ इस प्रकार पचीसवें (पञ्चम) अध्याय के आठवें खण्ड की हिन्दी पूर्ण हुई ॥ ८ ॥

## अथ नवमः खण्डः

अथ ब्रह्मण. काँश्चित् कर्तव्यविशेषान् विधातु चोद्यम् उद्भावयति—

**तदाहुर्यद् ग्रहान्मेऽग्रहीत् प्राचारीन्म आहुतीर्मेऽहौषीदित्यध्वर्यवे दक्षिणा नीयन्त उदगासीन्म इत्युद्गात्रेऽन्वबोचन् मेऽशंसीन्मेऽयाक्षीन् म इति होत्रे, किंस्विदेव चक्रुषे ब्रह्मणे दक्षिणा नीयन्तेऽकृत्वाऽहोस्विदेव हरता इति ॥ इति।**

'तत्' तस्मिन् ब्रह्मणि चोद्यमाहु । किं चोद्यमिति ? तदुच्यते—यजमानेन अध्वर्यवे यदा 'दक्षिणा' 'नीयन्ते' प्रदीयन्ते, तदानी यजमानस्यायमभिप्राय —असावध्वर्यु 'मे' मदर्थं 'ग्रहान्' ऐन्द्रवायवादीनग्रहीत्, तथा 'मे' मदर्थं 'प्राचारीत्' ग्रहप्रचार कृतवान् । तथा 'मे' मदर्थमाहुती: 'अहौषीत्' हुतवानिति । यदोद्गात्रे दक्षिणा नीयन्ते तदानी-मयमभिप्राय —असावुद्गाता 'मे' मदर्थम् 'उदगासीत्' औद्गात्र कृतवानिति । यदा होत्रे दक्षिणा नीयन्ते, तदानीमयमभिप्राय —अय होता 'मे' मदर्थम् 'अन्वबोचत्' पुरोनुवाक्या-दीनामनुवचन कृतवान्, तथा 'मे' मदर्थम् 'अशंसीत्' शसन कृतवान्, तथा 'मे' मदर्थम् 'अयाक्षीत्' याज्या पठितवानिति । एव तेन तेन कृत कार्यं स्मृत्वा यस्माद् दक्षिणा ददाति,

---

१ (i) 'आ उदृच । उदृक् समाप्ति । बहिष्पवमानमाध्यन्दिनार्भवेष्वेव वान्तम्'—इति षड्गुरुशिष्य । (ii) तथा च आश्वलायन —प्रातरनुवाकाद्यान्तर्यामहोमात् । स्तोत्रैष्वति सर्जनाद्या वषट्कारात् । ओदृच पवमानेषु'–इति १ १२ १९, २१,२२ । 'उद्गिति समाप्तिरुच्यते'—इति नारायण ।

तस्माद् ब्रह्मणेऽपि तत्कृतं कार्यं स्मृत्वा दक्षिणा दातव्या। तथा सति 'किंस्विदेव' किं नाम कार्यं 'चकृषे' कृतवते 'ब्रह्मणे' यजमानेन दक्षिणा नीयन्ते, 'आहोस्विदकृत्वैव' अथवा किमपि कार्यम् 'अकृत्वा' 'हरता' 'एव' ब्रह्मा दक्षिणा हरेत् ? एतच्चायुक्तमिति चोद्यम् ॥

५. ३४ [२५. ९] उस [ब्रह्मा] के विषय में कुछ याज्ञिक इस प्रकार प्रश्न करते हैं—जब यजमान अध्वर्यु को दक्षिणा देता है तो वह यह सोचता है कि इस [अध्वर्यु] ने मेरे लिए [ऐन्द्रवायवादिक] ग्रहों को ग्रहण किया, इसने मेरे लिए गमन कार्य [= प्रचरण] किया[1] तथा मेरे लिए [अर्थात् मेरे बदले] आहुति दी; और जब उद्गाता को दक्षिणा देता है तब वह सोचता है कि इस उद्गाता ने मेरे लिए साम-गान किया; और जब होता को दक्षिणा देता है तो वह सोचता है कि इस होता ने मेरे लिए [पुरोनुवाक्या आदि का] अनुवचन किया, तथा मेरे लिए [अनुवाक का] शंसन किया और मेरे लिए [याज्या का] पाठ किया। [इसी प्रकार ब्रह्मा के कार्य का भी स्मरण करके दक्षिणा देनी चाहिए] किन्तु उस ब्रह्मा के किस कार्य के लिए दक्षिणा दी जाती है, अथवा कोई भी कार्य न करने के लिए ही वह दक्षिणा लेता है ?

तस्योत्तरमाह—

**यज्ञस्य हैष भिषग् यद् ब्रह्मा; यज्ञायैव तद्भेषजं कृत्वा हरति ॥** इति ।

यो ब्रह्माऽस्ति, एष यज्ञस्य 'भिषक्' चिकित्सकः। 'तत्' तस्मात् कारणाद् 'यज्ञायैव' 'भेषजं कृत्वा' यज्ञस्याङ्गवैकल्यरोगं शमयित्वा, दक्षिणां हरति, तस्माद्धोत्रादिवदुपकारित्वादयं दक्षिणाया योग्य एव ॥

जो ब्रह्मा है वह इस यज्ञ का चिकित्सक है। इसलिए यज्ञ के अङ्ग वैकल्य रूप रोग का शमन करके ही वह दक्षिणा लेता है।

पक्षान्तररूपेण ब्रह्मणो दक्षिणार्थित्वं दर्शयति—

**अथो यद् भूयिष्ठेनैव ब्रह्मणा छन्दसां रसेनाऽऽर्त्विज्यं करोति यद् ब्रह्मा; तस्माद् ब्रह्माऽर्धभाग्घ वा एष इतरेषामृत्विजामध आस यद् ब्रह्माऽर्धमेव ब्रह्मण आसार्धमितरेषामृत्विजाम् ॥** इति ।

अपि यो ब्रह्माऽस्ति, 'भूयिष्ठेनैव' अतिबहुलेनैव 'छन्दसां रसेन' वेदसारभूतेन व्याहृतित्रयरूपेण 'ब्रह्मणा' मन्त्रेणैव 'यद्' यस्मात् कारणादार्त्विज्यं करोति, तस्मात् कारणादुपकारबाहुल्यादयं ब्रह्मेतिविशिष्टेन नाम्ना व्यवह्रियत इति शेषः। किञ्च यो ब्रह्माऽस्ति, एषः 'अर्धे' प्रथममेवेतरेषामृत्विजाम् 'अर्धभाग्घ वै' अर्धभागं भजत्येव—

---

१. प्रचारो गमनम्। नीयन्ते दातुं कल्प्यन्ते। उद्गानं साम्न उच्चारणम्। चकृषे कृतवते। लिटः क्वसुः। आहोस्वित्, अकृत्वा किञ्चिदपि हरते सम्भावने लिङर्थे लेट्, एत ऐ (पा० सू० ३.४.९३)। 'वैतोऽन्यत्र' (पा० सू० ३.४.९६)। इति षड्गुरुशिष्यः।

वेदत्रये यावान् प्रयोगो विततोऽस्ति, स च सर्वोऽपीतरैर्ऋत्विग्भिर्वाचाऽनुष्ठीयते, ब्रह्मणा तु मनसैवैतावानेव विशेष, प्रयोगस्तूभयत्र समान एव। अयमेवार्थोऽर्धमेवेत्यादिना स्पष्टीक्रियते। ब्रह्मणो यज्ञस्यार्धमेव मनसाऽनुष्ठीयमानम्, 'इतरेषामृत्विजां' होत्रादीनां वाचाऽनुष्ठीयमानमर्धं, तस्मादुपकारबाहुल्यं सिद्धम्॥

और जो ब्रह्मा है वह क्योंकि वेद के सारभूत [व्याहृति एवं प्रणव रूप] मन्त्र से अधिकतर[1] ऋत्विज-कर्म करता है। इस [उपकार बाहुल्य के] लिए यह 'ब्रह्मा'—इस [विशिष्ट] नाम से अभिहित होता है, और फिर जो ब्रह्मा है वह आरम्भ में ही अन्य ऋत्विजों के साथ आधे [प्रयोग] का भागीदार हो जाता है क्योंकि ब्रह्मा [के मन] से यज्ञ का आधा भाग अनुष्ठित है वहीं यज्ञ का दूसरा आधा भाग [होता आदि] अन्य ऋत्विजों [की वाणी] से अनुष्ठित है। [वस्तुतः वेद त्रय में जो भी प्रयोग बिखरे हैं उन सभी का अनुष्ठान अन्य ऋत्विजों की वाणी से होता है, जबकि उन सभी का अनुष्ठान ब्रह्मा मन से ही करता है। अतः दोनों ही प्रयोग समान ही हैं]।

पूर्ववद्व्याहृतिप्रायश्चित्तमुक्त्वा तत्कर्तृत्वं ब्रह्मणो विधत्ते—

**तस्माद् यदि यज्ञ ऋक्त आर्ति स्याद्, यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्वव्यापद्वा, ब्रह्मण एव निवेदयन्ते, तस्माद् यदि यज्ञ ऋक्त आर्तिर्भवति, भूरिति ब्रह्मा गार्हपत्ये जुहुयाद्, यदि यजुष्टो भुव इत्याग्नीध्रीयेऽन्वाहार्यपचने वा हविर्यज्ञेषु, यदि सामतः स्वरित्याहवनीये, यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याऽऽहवनीय एव जुहुयात्॥ इति।**

तस्माद् ब्रह्मा यज्ञभारमर्धं वहति। मिषक्त्वेन यज्ञवैकल्यं परिहर्तुं च शक्नोति, तस्मादृगादिभ्यः किंचिद्वैकल्यं भवेत्, तदानीमितरे सर्वे ते तस्मै ब्रह्मण एव तद्वैकल्यं निवेदयन्ते। 'तस्माद्' इतरैर्निवेदितत्वात् स ब्रह्मा पूर्वोक्तप्रकारेण तत्तत्प्रायश्चित्तं जुहुयात्॥

इसलिए यदि यज्ञ में ऋग्वेद से कोई भूल हो जाय या यदि यजुर्वेद से अथवा यदि साम से, किंवा अज्ञानवश अथवा सभी वेद के मन्त्रों में सर्वथा भूल हो जाय तो सभी ऋत्विज ब्रह्मा से ही निवेदन करते हैं। इसलिए यदि यज्ञ में ऋक् [मन्त्रों] से कोई भूल हो जाती है तो ब्रह्मा को 'भूः' कहकर *गार्हपत्य अग्नि में आहुति देनी चाहिए।* यदि यजुः से कोई भूल हो जाय तो 'भुवः' से आग्नीध्रीय [वेदी पर] अग्नि में आहुति देनी चाहिए, अथवा [अग्न्याधेय, दर्शपूर्णमासादिक सात] हवि यज्ञों में [जहाँ आग्नीध्रीयाभाव *होता है वहाँ*] अन्वाहार्यपचन [दक्षिणाग्नि] में आहुति देनी चाहिए। यदि

---

१ अथो अपि च। यद् य। करोति यत् तद् भूयिष्ठेन बहुतमेन इष्टन् यिट्। छन्दसां रसेन प्रणवव्याहृतिरूपेण ब्रह्मणा वेदेन। तस्माद् ब्रह्मा—अयं हीति शेषः। इति षड्गुरुशिष्य।

साम से कोई भूल हो जाय तो 'स्वः' से आहवनीय अग्नि में आहुति देनी चाहिए। यदि अनजाने में अथवा वेदत्रय के मन्त्रों में सर्वथा भूल हो जाय तो आहवनीयाग्नि में ही 'भूः', 'भुवः', 'स्वः' तीनों का एक साथ उच्चारण करके आहुति देनी चाहिए।

ब्रह्मणः कर्तव्यान्तरं दर्शयति—

स प्रस्तोतोपाकृते स्तोत्र आह ब्रह्मन्स्तोष्याम प्रशास्तरिति, स भूरिति ब्रह्मा प्रातःसवने ब्रूयादिन्द्रवन्तः स्तुध्वमिति भुव इति माध्यंदिने सवने ब्रूयाद् इन्द्रवन्तः स्तुध्वमिति, स्वरिति तृतीयसवने ब्रूयाद् इन्द्रवन्तः स्तुध्वमिति, भूर्भुवः स्वरित्युक्थ्ये वाऽतिरात्रे वा ब्रूयाद् इन्द्रवन्तः स्तुध्वमिति ॥ इति ।

अध्वर्युणा स्तोत्रे 'उपाकृते' प्रारब्धमनुज्ञाते सति 'प्रस्तोता' स्तोत्रसाधने साम्नि प्रथमस्य प्रस्तावभागस्य गाता प्रस्तोतृनामक ऋत्विक्, ब्रह्माणं प्रत्यनुज्ञामनेन मन्त्रेण प्रार्थयेत्। 'ब्रह्मन्'-इत्यादिर्मन्त्रः। हे 'प्रशास्तः' अस्माकं प्रशासनस्याऽऽज्ञापनस्य कर्तः ? हे ब्रह्मंस्त्वदनुज्ञया वयं स्तोष्याम इति। ततस्तेन प्रार्थितो ब्रह्मा 'भूः'-इत्येतां प्रथमां व्याहृतिमुक्त्वा, हे उद्गातारः ! 'इन्द्रवन्तः' इन्द्रविषयस्तुतिपराः सन्तः 'स्तुध्वं' स्तोत्रं कुरुतेति ब्रूयात्। एवमितरत्रापि योज्यम् ॥

[अध्वर्यु द्वारा] स्तोत्र-पाठ की अनुज्ञा प्राप्त होने पर [स्तोत्र के साधन साम में प्रथम प्रस्तावभाग का गान करने वाला] वह 'प्रस्तोता' नामक ऋत्विज ब्रह्मा से कहता है— 'ब्रह्मन् स्तोष्याम प्रशास्तः'—हमें अनुज्ञा प्रदान करने वाले हे ब्रह्मन्, हम [आपकी अनुज्ञा से] स्तोत्र पाठ करेंगे।' [उसके बाद उस प्रस्तोता से प्रार्थित वह ब्रह्मा प्रातःसवन में 'भूः' [इस प्रथम व्याहृति को] कहकर 'हे उद्गाता ! इन्द्रविषयक स्तुतिपरक स्तोत्र का पाठ करो' ऐसा कहे। माध्यन्दिन सवन में [द्वितीय व्याहृति] 'भुवः' कहकर— 'हे उद्गाता ! इन्द्रविषयक स्तुतिपरक स्तोत्र का पाठ करो'—ऐसा कहे। सायंसवन में [तृतीय व्याहृति] 'स्वः' कहकर 'हे उद्गाता ! इन्द्रविषयक स्तुतिपरक स्तोत्र का पाठ करो' ऐसा कहे, और उक्थ्य अथवा अतिरात्र में 'भूर्भुवः स्वः' [इन तीनों व्याहृतियों को साथ में] कहकर 'हे उद्गाता ! इन्द्रविषयक स्तुतिपरक स्तोत्र का पाठ करो'-ऐसा कहे।

ब्रह्मणा प्रयुक्तस्यानुज्ञानमन्त्रस्याभिप्रायं दर्शयति—

स यदाहेन्द्रवन्तः स्तुध्वमित्यैन्द्रो वै यज्ञ, इन्द्रो यज्ञस्य देवता, सेन्द्रमेव तदुद्गीथं करोतीन्द्रान्माऽगाद्, इन्द्रवन्तः स्तुध्वमित्येवैनांस्तदाह तदाह ॥ ३४ ॥ इति ।

॥ इति 'ऐतरेय ब्राह्मणे' पञ्चमपञ्चिकायां पञ्चमोऽध्यायः ॥ ५ ॥

'सः' ब्रह्मा 'इन्द्रवन्तः स्तुध्वमिति' यद्वाक्यमाह, तस्याभिप्राय उच्यते,—'यज्ञः' सोमयागः 'ऐन्द्रो वै' इन्द्रसम्बन्ध एव। इन्द्रो हि तस्य यज्ञस्य देवता, अतः 'तदुद्गीथं'

सामगैः क्रियमाणमुद्गान 'सेन्द्रम्' इन्द्रसहितमेव करोति । इन्द्रमुद्गीथमिन्द्रात् 'माभात्' माऽपगच्छतु । तस्मात् हे उद्गातारो यूयम् 'इन्द्रवन्त.' इन्द्रविषयता पर्यवेक्षन्त, एव भूत्वा स्तुध्वम् । 'इति' अनेनैव प्रकारेण 'एतान्' उद्गातॄन् प्रति ब्रह्मा 'तद्' वाक्यमाह । अध्यायोऽध्यायपरिसमाप्त्यर्थं[1] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चम पञ्चिकायां पञ्चमाध्याये (पञ्चविंशाध्याये) नवम खण्ड. ॥ ९ ॥ (३४) [१८७]

वेदार्थस्य प्रकाशेन तमाहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यदिशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'—नाम भाष्ये ऐतरेयब्राह्मणभाष्यस्य कृतौ पञ्चमपञ्चिकाया पञ्चमोऽध्याय (पञ्चविंशोऽध्याय ) समाप्त ॥ ५ ॥

वह [ब्रह्मा] 'इन्द्रविषयक स्तुतिपरक स्तोत्र का पाठ करो'—जो यह वाक्य कहता है उसका अभिप्राय यह है कि [सोम] याग इन्द्र सम्बन्धी ही है, क्योंकि इन्द्र ही उस यज्ञ के देवता हैं। [अत. उद्‌गाता का 'इन्द्रवन्त' रूप] साम-गान उसे इन्द्र सहित ही करता है अर्थात् 'इन्द्र से अलग मत होओ' अत 'हे उद्‌गाता ! आप इन्द्र के अपने होकर स्तुति करें[2]'–इस प्रकार से इन [उद्‌गाताओं] के प्रति ब्रह्मा उस [वाक्य] को कहता है।

॥ इस प्रकार पाँचवें (पचीसवें) अध्याय के नौवें खण्ड की हिन्दी पूर्ण हुई ॥ ९ ॥

विश्वे वै पञ्च(१) । गौर्वै दश(२) । यद्वा एति च प्रेति च चत्वारि(३) । यद्वै समानोदर्कं षट्(४) । उद्धराहवनीयं नव(५) ॥ ५ ॥[3]

---

१. अस्मिन्नध्याये नव खण्डा सन्ति, तत्राद्येषु षट्सु अग्निहोत्रमाम्नातम्, तत उत्तरमृत्विक्कार्योपदेशप्रकरणमारभ्यमिति सप्तमाष्टमयो खण्डयो ब्रह्मर्त्विक्कार्योपदेशा उक्ताः, ग्रावस्तुदादीनां कार्याण्यपि परस्तात् वक्ष्यन्ति । आश्वलायनीयद्वितीयाध्यायस्य प्रथमकण्डिकायामग्न्याधानमुक्त्वा द्वितीयादिषु चतसृषूक्तमग्निहोत्रम् । ब्रह्मत्वस्योपदेशस्तु 'अथ ब्रह्माण ' (आश्व० श्रौ० १ १२ १)—इत्याद्युपक्रम्येत पुरस्तादेवोक्त ।

२ 'इन्द्रविषयतात्पर्यवन्तः'—इति आन० मुद्रितपाठ ।

३. ७११, ७४६, ७८९, ८१७, ८५६ पृ० (५ + १० + ४ + ६ + ९ = ३४ ख०)।

विश्वे वै देवा, देवासुरा वै, स च त्वै जग्मु,रग्रन्नु खलु वा चत्वारि ॥ ५ ॥[1]

॥ इति 'ऐतरेयब्राह्मणे' पञ्चमपञ्चिका समाप्ता ॥ ५ ॥

(पञ्चिकाङ्काः—५ । अध्यायाङ्का.—२५ । खण्डाङ्काः—१८७)

[पाँचवीं पञ्चिका में 'विश्वे वै' इत्यादि पाँच खण्डों का प्रथम (इक्कीसवाँ) अध्याय है। 'गौर्वै' इत्यादि दस खण्डों का द्वितीय (बाइसवाँ) अध्याय है। 'यद्वा एति च प्रेति च' इत्यादि चार खण्डों का तृतीय (तेइसवाँ) अध्याय है। 'यद्वै समानेऽहनि' इत्यादि छः खण्डों का चतुर्थ (चौबीसवाँ) अध्याय है और 'उद्धराहवनीय' इत्यादि नौ खण्डों का पाँचवाँ (पचीसवाँ) अध्याय है।

इस प्रकार 'विश्वे वै देवा' इत्यादि खण्डों का प्रथम दशक है। 'देवासुरा वै' इत्यादि खण्डों का द्वितीय दशक है। 'स च त्वै जग्मुः' इत्यादि खण्डों का तृतीय दशक है और 'उद्धन्नु खलु वा' इत्यादि खण्डों का चतुर्थ चतुर्थक है, अर्थात् पाँचवीं पञ्चिका में कुल चौंतीस खण्ड हैं।]

॥ इस प्रकार ऐतरेय ब्राह्मण की सुधाकर मालवीय कृत
पाँचवीं पञ्चिका की हिन्दी पूर्ण हुई ॥ ५ ॥

---

१. ७११, ७६६, ८२४, ८८० पृ० (१०+१०+१०+४=३४ ख०)। द्र० प्र० भा० पृ० १९०।

# अथ षष्ठपञ्चिका

## तत्र

### प्रथमाध्यायस्य प्रथमः खण्डः

—।०।—

## [अथ षड्विंशोऽध्यायः

### प्रथमः खण्डः]

अथाग्निहोत्रं पयसः प्रशंसा
    तद्दोहनापत्तिविनिष्कृतिश्च ।
तस्य प्रशंसाऽभ्युदिते च होमो
    ब्रह्मर्त्विजो व्याहृतयोऽप्यधीता ॥ १ ॥

ब्रह्मणः कर्तव्यविधानेन ग्रावस्तुदबुद्धिस्य तस्याग्निष्टोमे कर्तव्य[1] विधातुमुपाख्यानमाह[2]—

**देवा ह वै सर्वंचरौ सत्रं निषेदुस्ते ह पाप्मानं नापजघ्निरे, तान् होवाचार्बुदः काद्रवेयः सर्पं ऋषिर्मन्त्रकृदेका वै वो होत्राऽकृता, तां वोऽहं करवाण्यथ पाप्मानमपहनिष्यध्व इति, ते ह तथेत्यूचुस्तेषां ह स्म स मध्यंदिने मध्यंदिन एवोपोदासर्पद् ग्राव्णोऽभिष्टौति ॥ इति ।**

पुरा कदाचिद् देवाः 'सर्वंचरु'नामके देशविशेषे[3] 'सत्रं' किंचिद् अनुष्ठितवन्तः । 'ते' देवास्तेन सत्रेण स्वकीयं 'पाप्मानं' दारिद्र्यहेतुं 'नापजघ्निरे' न नाशितवन्तः । 'तान्' पापक्षयरहितान् देवान् 'अर्बुदः' तन्नामकः कश्चिदृषिरागत्योवाच । कीदृशोऽर्बुदः ?

---

१ द्र० 'एतस्मिन् काले ग्रावस्तुत प्रपद्यते'—इत्यादि आश्व० श्रौ० ५ १२ ।
२ वर्णितं त्वादितो हौत्रं दीक्षणीयादिकर्मसु ।
   अविज्ञातस्याग्निषोमस्य प्रसङ्गादग्निहोत्रकम् ॥
   तत्र प्रसङ्गाद् ब्रह्मत्वं सकलं खलु वर्णितम् ।
   कार्यं ग्रावस्तुतो वक्तुमितिहासं ब्रवीत्ययम् ॥—इति षड्गुरुशिष्यः ।
३. द्र० शाङ्खा० ब्रा० २९ १ ।

'काद्रवेयः' कद्रुनामधारिण्याः स्त्रियाः पुत्र.[1] 'सर्पः' सर्पजातीयदेहधारी, 'ऋषिः' अतीन्द्रियार्थद्रष्टा 'मन्त्रकृत्' करोतिधातुस्त्वत्र दर्शनार्थः। मन्त्रस्य 'प्रैते वदन्तु प्र वयं वदाम'–इत्यादिसूक्तस्य[2] द्रष्टा । तेनार्बुदेन किमुक्तमिति ? तदुच्यते—हे देवाः 'एका वै वो होत्रा' एकैव होतृवेदोत्पन्ना क्रिया 'व.' युष्माकम् 'अकृता' नानुष्ठिता, तद्वैकल्येन पापक्षयो नासीत् । 'ता' क्रिया 'वः' युष्मदर्थमहं करवाणि, अनन्तरं पाप्मानं यूयमपहनिष्यध्वे । 'इति' एतदर्पिवाक्यं देवा[3] अङ्गीचक्रुः । तत. 'सः' अर्बुदः 'तेषां' देवानां सत्रे प्रतिदिनं मध्यदिनसमय एव 'उप' समीपम् उत्सुकः सन्नागच्छत् । आगत्य च ये सोमाभिषवार्थाः 'ग्रावाणः' पाषाणाः[4] सन्ति, तान् पूर्वोक्तेन सूक्तेन 'अभिष्टौति' अभितः स्तुतिं कृतवान् ॥

सोम-याग [क्रमागत]—

[अग्निष्टोम में ग्रावस्तुत के कार्यविधान का इतिहास]—

४७. १ [xxvi. १] [पहले कभी] देवताओं ने 'सर्वचरु' नामक स्थान पर किसी सत्र का अनुष्ठान किया[5] । वे [देव उस सत्र के द्वारा अपने दारिद्र्य रूप] पाप का नाश न कर सके । उन [देवों] से [कद्रु नामक स्त्री के पुत्र] काद्रवेय सर्प [जातीय किन्तु शरीरधारी] ऋषि [अतिन्द्रिय द्रष्टा] एवं मन्त्रों के द्रष्टा अर्बुद ने कहा—हे देव ! होता से की जाने वाली एक क्रिया आप द्वारा नहीं की गई है[6] [इसी से पापक्षय नहीं हुआ] । उसे आप लोगों के लिए मैं कर दूं । इसके बाद आप सब पाप का क्षय कर देंगे । उन्होंने कहा—'ठीक है ।' उसके बाद वे [अर्बुद ऋषि] उन [देवों] के सत्र में प्रतिदिन मध्यन्दिन

---

१. 'अर्बुदः काद्रवेयो राजेत्याह तस्य सर्पा विशः'–इति शत०ब्रा० १३.४.३.९ । 'अर्बुदः काद्रवेयस्तस्य सर्पा विशः "विषविद्या निगदेत्'—इति च आश्व० श्रौ० १०.७.५ ।

२. ऋ० १०.९४ १ ।

३. 'ह = तदा । ते = देवाः । तेषां देवानां योऽर्बुदः प्रत्यहं मध्यदिने उद् = बिलाद् उद्गम्य, उप = समीपे, असर्पत् = अगच्छत् ।' इति षड्गुरुशिष्यः ।

४. द्र० निरु० ९.१.८,९ ।

५. देवाः सर्वचरुनाम्नि सत्र सत्र चिकीर्षवः ।
देवा निपेदुर्लिट् दिस्व षत्वं च 'सदिस्वतेः' ॥ (पा० सू० ८.३ ६६) ।

इति षड्गुरुशिष्य. ।

६. होत्रा ग्रावस्तुदाख्या वो युष्माकं न कृता त्विह ।
तां वोऽहं करवाण्येव निरघास्तु भविष्यथ ॥
होत्राश्च होत्रकाः प्रोक्ता अमुख्या द्वादशर्त्विजः ।
गृह्यते हि—'मुख्यान् वा पृथग्घोत्रका उपह्वयध्वमितीरणात्'—इति ।

इति षड्गुरुशिष्यः ।

सवन के समय ही समुत्सुक होकर आए, [और आकर] जो [सोमाभिषव में योग्य] पत्थर हैं उनकी [पूर्वोक्त सूक्त से] स्तुति की[1]।

इदानीं ग्रावस्तुत ऋत्विज[2] स्वेतरसूक्तेन ग्राव्णामभिष्टव विधत्ते—

**तस्मान्मध्यन्दिने मध्यन्दिन एव ग्राव्णोऽभिष्टुवन्ति तदनुकृति ॥ इति ।**

यस्मादर्बुदेनाभिष्टुति कृता, तस्मात् सोमप्रयोगेषु सत्रेषु तत्तन्मध्यन्दिने काले एव 'प्रैते वदन्तु'—इति सूक्तेन ग्राव्णामभिष्टवमृत्विज कुर्युः । 'तदनुकृति'—इति क्रियाविशेषणम् । 'तस्य' अर्बुदस्य 'अनुकृति' अनुरूप यथा भवति तथेत्यर्थं ॥

[क्योंकि अर्बुद ने स्तुति की] इसलिए [सोम प्रयोग वाले यज्ञों में] प्रतिदिन मध्यन्दिन सवन के समय ही [प्रैते वदन्तु आदि सूक्त से ऋत्विज] उसी की अनुकृति स्वरूप ग्रावा [=सोम कूटने के पत्थर] की स्तुति करते हैं।

अर्बुदस्य वृत्तान्त लोकप्रसिद्धया द्रढयति—

**स ह स्म येनोपोदासर्पत्तद्धाप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति ॥ इति ।**

'स ह' स तु अर्बुदाख्य सर्पदेहो महर्षि, येन मार्गेण 'उपोदासर्पत्' तत्समीप प्रति बिलादुद्गम्याऽऽगच्छत् । 'तद्ध' तस्मिन्नेव देशे 'एतर्हि' इदानीमपि 'अर्बुदोदासर्पणी'—इत्यनेन नामधेयेन युक्ता 'प्रपत्' मार्गोऽस्ति । प्रपद्यते गम्यतेऽनयेति प्रपत् ॥

वह [सर्प देहवाले अर्बुद नामक महर्षि] जिस [बिल के] मार्ग से सर्पण करते हुए आए उसी स्थान को यहाँ भी 'अर्बुदोदासर्पणी' अर्थात् अर्बुद के उपसर्पण का मार्ग कहते हैं।

अथाभिष्टवकाले ग्रावस्तुत उष्णीषेण नेत्रवेष्टन विधत्ते—

**तान् ह राजा मदयाञ्चकार ते होचुराशीविषो वै नो राजानमवेक्षते, हन्तास्योष्णीषेणाक्ष्यावपिनह्यामेति, तथेति, तस्य होष्णीषेणाक्ष्यावपिनह्य-स्तस्मादुष्णीषमेव पर्यस्य ग्राव्णोऽभिष्टुवन्ति तदनुकृति ॥ इति ।**

ग्राव्णामभिषवार्थमर्बुदाख्ये सर्परूपे महर्षौ समागते सति तदीयविषदृष्ट्याऽवलोकित सोमो 'राजा' वल्लयात्मक, स्वयमपि विषयुक्त सन् 'तान्' समीपवर्तिनो देवान्

---

१ अग्निष्टोमे ग्रावस्तुतकार्यविधानार्थं द्र० कौ० ब्रा० २९ १ आश्व० श्रौ० ५ १२, शा० श्रौ० ७ १५ अर्बुद सूक्तस्तु—ऋ० १० ९४ (सहैव १० ७६, १० १७५ सूक्तस्य अन्तिममन्त्रात् पूर्वम्)।

२ 'तस्यर्त्विज । चत्वारस्त्रिपुरुषा । तस्य तस्योत्तरे त्रय । होता मैत्रावरुणोऽच्छावाको ग्रावस्तुदध्वर्यु प्रतिप्रस्थाता नेष्टोन्नेता ब्रह्मा ब्राह्मणाच्छंस्याग्नीध्र पोतोद्गाता प्रस्तोता प्रतिहर्त्ता सुब्रह्मण्य इति । एतेऽहीनैकाहैर्याजयन्ति । एत एवाहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशा:'—इति आश्व० श्रौ० ४ १ ३ ८ ।

'मदयाञ्चकार'[1] उन्मत्तान् परवशान् कृतवान् । तदानीं 'ते' देवा परस्परमिदमूचुः,—'आशीविषः'[2] सर्परूपोऽयमर्बुदो 'नः' अस्माकं राजानं विषदृष्ट्या 'अवेक्षते' 'हन्त' कष्टमेतत्सम्पन्नम्, अतस्तत्परिहाराय केनचित् 'उष्णीषेण' शिरोवेष्टनसाधनेनान्यवस्त्रेणास्यार्बुदस्य 'अक्ष्यावपिनह्याम' चक्षुषोर्बन्धनं करवाम इति विचार्य त्रिः प्रदक्षिणं तस्य मुखमुष्णीषेण वेष्टयित्वा तदीयचक्षुषोर्बन्धनं कृतवन्तः[3] । यस्माद्देवैरेवं कृतम्, 'तस्मात्' ऋत्विजोऽपि 'उष्णीषमेव' 'पर्यस्य' परितो मुखं वेष्टयित्वा 'ग्राव्ण' सोमाभिषवार्थान् पाषाणानभिष्टुवन्ति । 'तस्य' अर्बुदस्य 'अनुकृति' सादृश्यं यथा भवति तथत्वनेनाभिप्रायेण वेष्टनम् ॥

[अभिषवार्थ सर्प रूप में अर्बुद महर्षि के आने पर उनकी विष दृष्टि से देखे गए बल्ली रूप] सोम राजा ने [स्वयं भी विषयुक्त होकर] समीपवर्ती उन [सभी देवों] को मदयुक्त किया । तब उन देवों ने [आपस में] कहा—'विष वाले [सर्प रूप अर्बुद] हमारे सोम राजा को विष दृष्टि से देखते हैं । यह कष्टकर है । अतः उसके परिहार के लिए हम लोग किसी पगड़ी [या अन्य वस्त्र] से इस [अर्बुद] की आँख बाँध दें ।' उन्होंने कहा—'ठीक है ।' तब उनके मुख को [तीन बार घेरा करके] पगड़ी से आँखों को बाँध दिया । [क्योंकि देवों ने इस प्रकार किया] इसलिए उसी के अनुकरण स्वरूप ऋत्विज पगड़ी से चारों ओर से मुख को बाँध कर सोम के अभिषवार्थ पाषाण की स्तुति करते हैं ।

अथ प्रावस्तुत पूर्वोक्तसूक्ताद् अन्या ऋचो विधत्ते—

तान् ह राजा मदयामेव चकार, ते होचुः,—स्वेन वै नो मन्त्रेण ग्राव्णोऽभिष्टौति, हन्तास्यान्याभिर्ऋग्भिरभिमन्त्रमापृणचामेति, तथेति, तस्य हन्याभिर्ऋ-

---

1. 'आशीविषेण तान् देवान् मत्तान् भावानयाः करोत् ।
   बुद्ध्यभावो णिचि मदे छान्दसो लिट्परोऽनुकृत् ॥'—इति षड्गुरुशिष्यः ।
2. 'आशीर्दंष्ट्रा तत्र विषं यस्यासौ तथाशीविषः स तु ।'—इति षड्गुरुशिष्यः ।
   अत्ययो दृष्टिविषयद्राहो सोमो विभेविहि ।
   अक्षोऽस्य पट्टेन मुखं छादयाम द्रुतं त्विह ॥
   अक्ष्यौ = अक्षिणी । 'ई च द्विवचने' (पा० सू० ७ १ ७७) ।
3. (i) अथास्मा अध्वर्युरुष्णीषं प्रयच्छति । तदञ्जलिना प्रतिगृह्य, त्रिः प्रदक्षिणं शिरोमुखं वेष्टयित्वा, यदा सोमांशूनभिषवाय व्यापोहत्यथ ग्राव्णोऽभिष्टौति'—इति आश्व० श्रौ० ५ १२ ६,७ ।
   (ii) 'अपिनह्यामेति प्राप्तेऽपिनह्यामेति छान्दसमिदम्'—इति षड्गुरुशिष्यः ।
   (iii) 'अपिनह्य' is a wholly anomalous and incorrect form, probably merely a blunder'—इति कीथ महोदयः । किन्तु छान्दसत्वान्न प्रयोगः ।

**गिभिर्मन्त्रमापपृचुस्ततो हैनाग्र मदयांचकार, तद्यदस्यान्याभिर्ऋग्भिर्मन्त्र-मापृञ्चन्ति शान्त्या एव ॥** इति ।

पुनरपि सोमो 'राजा' 'तान्' देवान् पूर्ववत् 'अदयाचकारैव', ततस्ते देवा परस्पर-मूचु ,—दृष्टिविषपरिहारेऽप्ययं सर्पदेह ऋषि स्वकीयेनैव सूक्तरूपेण मन्त्रेण ग्राव्णो मिष्टौति । अतो मन्त्रसम्बद्धेन विषेणास्माकमुन्मादो जायते 'हृत' कष्टमेतत् । अतो मन्त्रगतविषपरिहाराय 'अस्य' अर्बुदस्य 'मन्त्र' सूक्तम् 'अन्याभि' 'आप्यायस्व समेतु ते' इत्यादिभिर्ऋग्भि [1] 'आपृणचाम' 'पृची सम्पर्के'—इति[2] धातु सर्वत सपृक्त करवाम । तदेतत् सर्वे देवा, अङ्गीकृत्य तथैव चक्रु । तत ' ऋगन्तरसपर्कात् तत्सूक्तगतोग्रत्वे सति 'एतान्' देवान् सोमो राजा 'न मदयाचकार' उन्माद नाकरोत् । तस्मात् कारणाद् अर्बुदस्य 'मन्त्र' सूक्तम् 'अन्याभि ' 'आप्यायस्व'—इत्यादिभि [3] अभिषवकाले सपृक्त कुर्युं । तच्च शान्त्यर्थमेव भवति ॥

उन देवों को पुन सोम राजा ने मद युक्त ही किया । तब उन्होंने आपस में कहा—'[दृष्टि ढँक जाने पर भी यह सर्पदेह ऋषि] अपने ही [सूक्त रूप] मन्त्रों से ग्रावा की स्तुति करते हैं [अत मन्त्र सबद्ध विष के द्वारा हमें उन्माद हो जाता है] यह कष्टकर है । [अत मन्त्रगत विष के परिहार के लिए] इन [ऋषि] के मन्त्रों के साथ अन्य ['आप्यायस्व समेतु ते' आदि] ऋचाओं को हम सम्पृक्त कर दें ।' उन्होंने कहा—'ठीक है ।' और उनके मन्त्रों के साथ अन्य ऋचाओं को भी मिला दिया । तब इन देवों को [सोम राजा ने] मदमत्त नहीं किया । इसीलिए जो इन [अर्बुद] के मन्त्र के साथ ['आप्यायस्व' आदि] *अन्य ऋचाओं को [अभिषव काल में] सम्पृक्त करते हैं वह [सूक्तगत उग्रता की] शान्ति* के लिए ही होता है ।

देवानामभिष्टवकृता पापशान्ति दर्शयति—

**ते ह पाप्मानमपजघ्निरे, तेषामन्वपहतिं सर्पा पाप्मानमपजघ्निरे, त एतेऽपहतपाप्मानो हित्वा पूर्वां जीर्णां त्वचं नवयैव प्रयन्ति ॥** इति ।

'ते' देवा , अर्बुदानुष्ठितेनाभिष्टवेन दारिद्र्यादिहेतु 'पाप्मान' नाशितवन्त । तेषा देवानाम् 'अपहृति' पापविनाशम् 'अनु' पश्चाद् अर्बुदसम्बन्धिन सर्पा सर्वेऽपि स्वकीय पाप्मान नाशितवन्त । 'ते' सर्पा स्वशरीरगता पूर्वसिद्धां 'जीर्णां त्वच हित्वा' 'नवयैव' नूतनयैव त्वचा युक्ता प्रयन्ति सर्वत प्रसर्पन्ति । 'एते' नूतनत्वग्युक्ता सर्पा अपहतपाप्मान इत्युच्यन्ते ।

उन [देवों] ने [इस प्रकार अर्बुद से अनुष्ठित अभिषव द्वारा दारिद्र्य रूप] पाप का नाश किया । उन [देवों] के पाप के विनष्ट होने के बाद ही [अर्बुद के सम्बन्धी] सभी सर्पों

---

१ 'आप्यायस्व समेतु त इति तिस्र '—इति आश्व० श्रौ० ५ १२ १५ ।

२ रुधादिगणीय २५ । ३ ऋ० १ ९१ १६–१८ ।

ने अपने पापों का नाश किया। जो ये सर्प पहले की जीर्ण त्वचा [केंचुल] को छोड़कर नूतन त्वचा से युक्त होकर सभी ओर प्रसर्पण करते हैं तो नूतन त्वचा से युक्त ये सर्प पापविहीन कहे जाते हैं।

वेदनं प्रशंसति—

अप पाप्मानं हते य एवं वेद ॥ १ ॥ इति।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षड्विंशाया पञ्चमाध्याये (षड्विंशाध्याये) प्रथमः खण्डः ॥ १ ॥ [१८८]

जो इस प्रकार जानता है वह पाप से रहित हो जाता है।

॥ इस प्रकार छब्बीसवें (प्रथम) अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

अथ प्रश्नोत्तराभ्यामभिष्टवगतानामृचां संख्या विधत्ते—

तदाहुः कियतीभिरभिष्टुयादिति, शतेनेत्याहुः; शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय आयुष्येवैनं तद्वीर्य इन्द्रिये दधाति ॥ इति।

शतसंख्यावायु नाडीषु संचारादिन्द्रियाणां तदीयवीर्यस्य च शतसंख्यात्वम्। तत्संख्याकानामृचां पाठेन 'एनं' यजमानं दीर्घायुष्यादिगुणयुक्तं करोति ॥

vi. २ [xxvi. २] इस सम्बन्ध में कुछ लोगों का प्रश्न है कि कितनी ऋचाओं से प्रातस्तुति की जाय? कुछ का कहना है कि सौ ऋचाओं से, क्योंकि मनुष्य की [धर्मसम्पादित] आयु सौ वर्ष की है। मनुष्य [दस इन्द्रियों वाला है; प्रत्येक इन्द्रिय में दस-दस नाड़ी हैं इस प्रकार वह] सौ इन्द्रियों वाला है और [उन सौ इन्द्रियों के कार्य भी सौ हो हैं अतः] वह सौ वीर्य अर्थात् पराक्रम वाला है। इसलिए [सौ ऋचा के अनुवचन से] उतनी ही आयु, उतना ही वीर्य और उतनी ही इन्द्रियां इस [यजमान] में स्थापित करता है[1]।

पक्षान्तरं विधत्ते—

त्रयस्त्रिंशतया वेत्याहुस्त्रयस्त्रिंशतो वै स देवानां पाप्मनोऽपाहंस्त्रयस्त्रिंशद्वै तस्य देवा इति ॥ इति।

अथवा 'त्रयस्त्रिंशया' ऋचां त्रयस्त्रिंशत्संख्यया अभिष्टव इत्याहुः। तत्र हेतुरुच्यते— देवानां सम्बन्धिनी या त्रिंशदस्ति, अस्याः सकाशात 'सः' अर्बुद 'पाप्मन' पापानि

1. तु० इतः पूर्वम्, पृ० २७४।

अपाहन् विनाशितवान् । 'तस्यार्बुदस्य' समीपस्था देवा, 'त्रयस्त्रिंशद्' अष्टौ वसव, एकादश रुद्रा, द्वादशाऽऽदित्या, प्रजापतिश्च, वषट्कारश्चेत्येव देवसङ्ख्या[2]॥

अथवा, कुछ का कहना है कि 'तैंतिस[2] ऋचाओं से [ग्रावस्तुति करे], क्योंकि देवों के सम्बन्धी जो तैंतिस हैं उन्हीं के साथ अर्बुद महर्षि ने पापों को नष्ट किया और इस प्रकार उन [अर्बुद] के समीपस्थ देव तैंतिस [८ वसु, ११ रुद्र, १२ आदित्य, प्रजापति और वषट्कार] ही हैं।

पक्षान्तर विधत्ते—

*अपरिमिताभिरभिष्टुयादपरिमितो वै प्रजापतिः, प्रजापतेर्वा एषा होत्रा* **यद् ग्रावस्तोत्रीया, तस्यां सर्वे कामा अवरुध्यन्ते, स यदपरिमिताभिरभिष्टौति, सर्वेषां कामानामवरुद्ध्यै ॥** इति ।

एतावत्येवेति सङ्ख्यानिर्बन्धरहिता 'अपरिमिता'। प्रजापतेरपरिमितमहिमत्वात् ग्रावस्तोत्रसम्बन्धिन्या होतृवेदोत्पन्नाया क्रियाया प्रजापतिसम्बद्धत्वाद् अपरिमितत्व युक्तम्। तस्यां च क्रियायां सर्वे कामा स्वाधीना भवन्ति। अतोऽपरिमिताभिरभिष्टव सर्वकामप्राप्त्यै सम्पद्यते ॥

अथवा, अपरिमित ऋचाओं से [ग्राव] स्तुति करे, क्योंकि [जगत् के कारणभूत] प्रजापति [की महिमा] अपरिमित है[3] और प्रजापति से सम्बन्धित होने से जो ग्रावस्तोत्र सम्बन्धी होता के वेद से उत्पन्न यह [क्रिया] है वह अपरिमित है। अत उस [क्रिया] में सभी कामनाएँ अन्तर्हित हो जाती हैं। इस प्रकार जो वह अपरिमित ऋचाओं से *ग्रावस्तुति करता है वह सभी कामनाओं की प्राप्ति के लिए होता है*[4]।

वेदन प्रशसति—

**सर्वान् कामानवरुन्धे य एवं वेद ॥** इति ।

जो इस प्रकार जानता है वह [पद्यक्तपोक्त] सभी कामनाओं को प्राप्त करता है।

---

१ द्र० इत पूर्वम्, पृ० २८३। 'तिस्र एव देवता इति नैरुक्ता अग्नि पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थान सूर्यो द्युस्थानस्तासां महाभाग्याद् एकैकस्या अपि बहूनि नामधेयानि'–इति निरु० ७ २ १।

२ त्रयस्त्रिंशता त्रयश्च त्रिंशच्च। 'त्रेस्त्रय' (पा०सू० ६ ३ ४८)। टा यकार उपजन। इति षड्गुरुशिष्य।

३ अपरिच्छिन्नमाहात्म्यो भगवान् हि प्रजापति।
यद् या। ग्रावस्तुतो 'होत्राभ्यश्छः' (पा० सू० ५ १ १३५)। तस्य सर्वेश्वरत्वादिति भाव। इति षड्गुरुशिष्य।

४ तु० इत पूर्वम्, पृ० २७७।

है [क्योंकि अध्ययन काल में अर्धर्च पर ही अवसान करते हैं, अवसान-रहित सम्पूर्ण ऋचा का पाठ अध्ययन के विपरीत है], और यदि पाद-पाद के अवसान का पक्ष होवे तो वह भी [अध्ययन विपरीत होने से] सम्भव नहीं है। यदि अक्षर-अक्षर के अवसान पर या चार चार अक्षर के अवसान पर ऋचा पढ़ें तो छन्द ही लुप्त हो जाता है, क्योंकि वैसे अक्षरावसान से बहुत से अक्षर [संहिताकालीन मन्त्र को द्वित्व आदि न करने से] कम हो जाते हैं। अत. अर्धर्च के अवसान पर ही प्रावस्तुति करे जो [द्वित्व यजमान की] प्रतिष्ठा के लिए ही होता है।

इममर्धर्चपक्ष प्रशसति—

द्विप्रतिष्ठो वै पुरुषश्चतुष्पादा. पशवो यजमानमेव तद्द्विप्रतिष्ठ चतुष्पात्सु पशुषु प्रतिष्ठापयति, तस्मादर्धर्चश एवाभिष्टुयात् ॥ इति ।

अर्धर्चयोर्द्वित्वाद् यजमानसाम्यम्, ऋचा पादचतुष्टयोपेतत्वात् पशुसाम्यम्[1] ॥

क्योंकि पुरुष दो पैरो वाले हैं और पशुओं को चार पैर हैं। इस प्रकार [अर्धर्च के अवसान पर पाठ] करके उस दो पैरों वाले यजमान को ही चार पैरों वाले पशुओं में स्थापित करता है। इसलिए अर्धर्च के अवसान पर ही ग्रावस्तुति करनी चाहिए।

अथ मध्यदिनकालीनमभिष्टव प्रश्नोत्तराभ्या प्रशसति—

तदाहुर्यन्मध्यदिने मध्यदिन एव ग्राव्णोऽभिष्टौति, कथमस्येतरयो. सवनयोरभिष्टुत भवतीति, यदेव गायत्रीभिरभिष्टौति, गायत्र वै प्रात.सवन तेन प्रात सवने,ऽथ यज्जगतीभिरभिष्टौति जागत वै तृतीयसवन तेन तृतीयसवने ॥ इति ।

'तत्' तत्राभिष्टवे चोद्यमाहु । यस्मात्कारणादय ग्रावस्तुत् तत्प्रयोगसबन्धिनि 'माध्य-दिने' एव सवने ग्राव्णामभिष्टव करोति। एव सति केन प्रकारेण 'अस्य' ग्रावस्तुत प्रात सवनतृतीयसवनयोरभिष्टव सिध्यतीति प्रश्न ? अत्र यद्गायत्रीजगतीछन्दोद्वय तद्द्वाराऽन्ययोरपि सवनयोरभिष्टवसिद्धिरित्युत्तरम् ॥

उस अभिष्टवन के सम्बन्ध में कुछ लोग प्रश्न करते हैं कि जब प्रतिदिन मध्यन्दिन सवन में ही ग्रावस्तुति की जाती है तो इसके अन्य दो सवनों में ग्रावस्तुति कैसे होती है? उत्तर है कि जो गायत्री ऋचाओं द्वारा अभिष्टवन किया जाता है तो क्योंकि प्रातः-सवन गायत्री से सम्बन्धित है अत. उस [गायत्री छन्द] से प्रात सवन अभिष्टुत हो जाता है और जो जगती ऋचाओं द्वारा अभिष्टवन किया जाता है तो, क्योंकि सायसवन जगती से सम्बन्धित है अत. उस [जगती छन्द] से सायसवन अभिष्टुत हो जाता है।

---

१. तु० पूर्वं पृ० २८०, ४९२।

वेदनं प्रशंसति—

**एवमु हास्य मध्यंदिने मध्यंदिन एव ग्राव्णोऽभिष्टुवतः सर्वेषु सवनेष्वभिष्टुतं भवति य एवं वेद ॥ इति ।**

'एवमु ह' अनेनैव गायत्रीजगतीछन्दोद्वारेण ॥

इस प्रकार इन दोनों [गायत्री और जगती छन्दों] के द्वारा ही प्रतिदिन मध्यन्दिन सवन में ही ग्रावस्तुति करते हुए इसके सभी सवन अभिष्टुत हो जाते हैं, जो इस प्रकार जानता है।

अथ ग्रावस्तुतः संप्रैषनिरपेक्षत्वं प्रश्नोत्तराभ्यां दर्शयति—

**तदाहुर्यदध्वर्युरेवान्यानृत्विजः संप्रेष्यत्यथ कस्मादेष एतामसंप्रेषितः प्रतिपद्यत इति, मनो वै ग्रावस्तोत्रीयाऽसंप्रेषितं वा इदं मनस्तस्मादेष एतामसंप्रेषितः प्रतिपद्यते ॥ २ ॥ इति ।**

'तत्' तत्र ग्रावस्तुद्विषये प्रश्नमाहुः । यस्मात्कारणादध्वर्युः सर्वानन्यानृत्विजः संप्रेष्यत्येव, न तूदास्ते, तथा सत्यृत्विगन्तरवद् ग्रावस्तुदप्यध्वर्युणा संप्रेषणीयः ? तच्च नास्ति । कस्माद् कारणात् असंप्रेषितः 'एषः' ग्रावस्तुत् 'एताम्' ऋचं प्रारभत इति प्रष्टॄणामभिप्रायः । तत्रेदमुत्तरम्—ययमृग्ग्रावस्तोत्रसंबन्धिनी विद्यते, सेयं मनःस्वरूपा । मनश्चेदमिन्द्रियान्तरेण केनचिदपि असंप्रेषितमेव प्रवर्तते । तस्मात् 'एषः' ग्रावस्तुत् संप्रैषनिरपेक्ष एव 'एतां' स्तोत्रीयामृचं प्रतिपद्यते ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षट्पञ्चिकायां प्रथमाध्याये (षड्विंशाध्याये) द्वितीयः खण्डः ॥२॥ [१८९]

उस [ग्रावस्तुति] के सम्बन्ध में प्रश्न करते हैं कि जब अध्वर्यु ही अन्य ऋत्विजों को आदेश [=प्रैष] करता है तो किस कारण यह [ग्रावस्तुत नामक ऋत्विज] इन [ऋचाओं] के प्रारम्भ में [अध्वर्यु द्वारा] संप्रेषित न होकर ही प्रतिपादन करता है? उत्तर—जो यह ग्रावस्तोत्र सम्बन्धी ऋचाएँ हैं वह मन स्वरूप ही हैं और यह मन क्योंकि [अन्य इन्द्रियों से] संप्रेषित नहीं होता, इसलिए यह [ग्रावस्तुत नामक ऋत्विज] इन ऋचाओं के प्रारम्भ में बिना प्रैष के ही प्रतिपादन करता है।

॥ इस प्रकार छब्बीसवें (प्रथम) अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

ग्रावस्तुत ऋत्विजः कर्तव्यमभिधाय सुब्रह्मण्याख्यस्य ऋत्विजः कर्तव्यं निरूपयति—

**वाग्वै सुब्रह्मण्या, तस्यै सोमो राजा वत्सः; सोमे राजनि क्रीते सुब्रह्मण्यामाह्वयन्ति, यथा धेनुमुपह्वयेत् तेन वत्सेन, यजमानाय सर्वान् कामान् दुहे ॥ इति ।**

'सुब्रह्मण्या'-शब्देन 'इन्द्रागच्छ हरिव आगच्छ'-इत्यादिनिगद[1] उच्यते। सा च सुब्रह्मण्या वागेव, शब्दरूपेव सती धेनुसदृशा। तस्या सुब्रह्मण्याया धेनो सोमो राजा वत्सस्थानीय। तस्मात् सोमक्रयादूर्ध्वम् ऋत्विज तत्तत्प्रयोगेषु सुब्रह्मण्यामाह्वयु उक्त-निगदं पठेयुरित्यर्थः। यथा लोके दोहनार्थं काचिद्धेनु नदीयवत्सप्रदर्शनेन समीप प्रत्याह्वयते, तद्वदतद् द्रष्टव्यम्। एतेनाह्वानेन यजमानार्थं सर्वान् कामान् 'दुह' सपादयति ॥

VI. ३ [XXVI. ३] ['इन्द्रागच्छ हरिव आगच्छ' आदि निगद ही सुब्रह्मण्या है] वाक् ही 'सुब्रह्मण्या' है [क्योंकि वह शब्दरूपी धेनु के सदृश है]। उस [सुब्रह्मण्या रूप धेनु] का सोम राजा वत्स है। इसलिए सोम राजा के क्रय के बाद ऋत्विज [उन-उन प्रयोगों में] सुब्रह्मण्या [रूप धेनु] का आह्वान करते हैं, जैसे लोक में गाय उसके बछडे द्वारा [दोहनार्थ] बुलाई जाती है। अत इस आह्वान के द्वारा यजमान के लिए सभी कामनाएँ सम्पादित की जाती हैं।

वेदन प्रशसति—

**सर्वान् हास्मै कामान् वाग्दुहे य एव वेद ॥ इति।**

**जो इस प्रकार जानता है वाणी उसकी सभी कामनाओं को सम्पादित करती है।**

प्रश्नोत्तराभ्या सुब्रह्मण्या प्रशसति—

**तदाहु किं सुब्रह्मण्यायै सुब्रह्मण्यात्वमिति, वागेवेति ब्रूयाद्,-वाग्वै ब्रह्म च सुब्रह्म चेति ॥ इति।**

'तत्' तत्र सुब्रह्मण्याख्ये निगदरूपे[2] मन्त्रे नामनिमित्त पृच्छन्ति। वागेवेति तदुत्तरम्। 'वाग्वै' इत्यादि तदुपपादनम्। 'ब्रह्म' वेदो 'वाग्वै' वागात्मक एव। तस्मिन्नपि वेदे सुष्ठु ब्रह्म सारभूत वेदवाक्य, तद्रूपेय वाग्देवता। तस्मात्सारभूतस्य निगदस्य सुब्रह्मण्येति नामधेयम्। पुलिङ्गशब्दाभिधेयस्य निगदस्य सुब्रह्मण्येति स्त्रीलिङ्गशब्देनाभिधान वाग्रूपत्वविवक्षयेति ॥

---

१,२ 'सुब्रह्मण्या'—नाम निगदोऽयं यजुर्विशेष एव, मीमासादर्शन तथैव सिद्धान्तितत्वात् (जै० सू० २ १ ३८–४५)। शतपथब्राह्मणे (३ ३ ४ १७) पठित सामान्यतो व्याख्यातश्च (२ ३४ २८)। सामवेदीयषड्विंशब्राह्मणे स्वय समग्र पठितोऽक्षरशो व्याख्यात, सामेति च निर्दिष्ट (१ १ २), तथा सामकल्पेषु लाट्यायनकल्पेऽपि प्रपठ्य विहित (१ ३), सुब्रह्मण्य-नाम सामवेदीयर्त्विजा गीयतेऽपि तस्माद् याज्ञिकै सामेति च व्यपदिश्यते। तस्य पाठस्त्वेवम्—'सुब्रह्मण्यो३म्। सुब्रह्मण्यो३म्। सुब्रह्मण्या३म्। इन्द्रागच्छ हरिव आ गच्छ मेधातिथेर्मेष वृषणश्वस्य मेन। गौरा वस्कन्दिन्नहल्यायै जार कौशिक ब्राह्मण गौतमब्रुवाण। अहे सुत्यामागच्छ मघवन् देवा ब्रह्माण आगच्छतागच्छतागच्छत'—इति। तैत्तिरीयारण्यकेऽप्यय 'ब्रुवाण'—इत्यन्तो-धीयते (१ १२ ३,४) अस्य च व्याख्यानान्तर मीमासाभाष्यवर्त्तिकयो द्रष्टव्यम् (जै० सू० ९ १ १५ ४२–४४)।

उस [सुब्रह्मण्या] के विषय में कुछ लोग प्रश्न करते हैं कि सुब्रह्मण्या का सुब्रह्मण्यत्व क्या है[1]। उत्तर—कहना चाहिए कि 'वाक् ही सुब्रह्मण्या है।' ब्रह्म [अर्थात् वेद वाक्यात्मक होने से] वाक् ही है। उस ब्रह्म अर्थात् वेद में भी सारभूत जो वेद वाक्य है तद्रूप यह वाग्देवता है [इसलिए सारभूत निगद का नाम 'सुब्रह्मण्या' है]।

एतमर्थं प्रश्नोत्तराभ्यां दर्शयति—

**तदाहुर्यत्कस्मादेनं पुमांसं सन्तं स्त्रीमिवाऽऽचक्षत इति ? वाग्घि सुब्रह्मण्येति ब्रूयात्, तेनेति ॥** इति ।

इस पर प्रश्न करते हैं कि [सुब्रह्मण्या नामक इस ऋत्विज को] पुरुष होते हुए इसको क्यों स्त्री के समान बुलाते हैं ? उत्तर—कहना चाहिए कि क्योंकि वाक् ही सुब्रह्मण्या है। इसीलिए [इसे सुब्रह्मण्या कहते हैं]।

पुनरपि प्रश्नोत्तराभ्यां सुब्रह्मण्याह्वानस्य देशविशेषं निरूपयति—

**तदाहुर्यदन्तर्वेद्यन्य ऋत्विज आर्त्विज्यं कुर्वन्ति, बहिर्वेदि सुब्रह्मण्या; कथमस्यान्तर्वेद्यार्त्विज्यं कृतं भवतीति ? वेदेर्वा उत्करमुत्किरन्ति, यदेवोत्करे तिष्ठन्नाह्वयतीति ब्रूयात्, तेनेति ॥** इति ।

अध्वर्युहोतृप्रभृतयः सर्वेऽप्यृत्विजो वेदिमध्य एवार्त्विज्यं कुर्वन्ति, सुब्रह्मण्या[2] वेदेर्बहिर्भागे सुब्रह्मण्याख्यं निगदमाह्वयन्। तथा सति केन प्रकारेण 'अस्य' सुब्रह्मण्य नाम्न ऋत्विजो वेदिमध्य आर्त्विज्यं कृतं स्यादिति प्रश्नः तस्येदमुत्तरम्,—'वेदेः सकाशात् उत्करम्' उद्धर्तव्यं पांसुम् 'उत्किरन्ति' उद्धृत्य बहिर्देशे वेदेरुत्तरभागे प्रक्षिपन्ति। तत्र कृतं सुब्रह्मण्याह्वानं वेदिमध्य एव कृतं भवेत्। तस्मादेव कारणात् अयं सुब्रह्मण्या उत्करदेशे तिष्ठन् सुब्रह्मण्यामाह्वयति, 'तेन' कारणेनानुपपत्त्यादि ॥ वचनम्[3] ॥

अब उस [सुब्रह्मण्याह्वान के देश] के विषय में कुछ लोग प्रश्न करते हैं कि जब [अध्वर्यु प्रभृति सभी] अन्य ऋत्विज वेदी के मध्य ही अपना ऋत्विज-कृत्य करते हैं तो सुब्रह्मण्या नामक ऋत्विज के द्वारा वेदी के बहिर्भाग में आह्वान किया जाता है; इस

१. 'ब्रह्मा परेऽनुवादिविधिस्त्विष्यत्र पातृषु।
अर्थेऽन्यो वर्गी तु वेदेऽस्मे स्वाध्यात्मागमवस्तु च ॥'
—(अम० को० तृतीयकाण्ड नानालिङ्गाध्याय श्लो० ५३)
इति यद्यपि ब्रह्मणि शोभने साधुत्व हि प्रवृत्तिनिमित्तम्। तदत्र निगदे विनियम्यः।

२. 'सुब्रह्मण्या' इति सूत्रे सुट्‌र् (पा० सू० ७.३.३९) इत्यादि रूपम्। अपि वा यावज्जोऽप्येव दृश्यते,—'सुब्रह्मण्ये सुब्रह्मण्यामाह्वय'—इति कात्या० श्रौ० ८.२.१४।

३. 'आज्ञाया पुरस्तादन्तर्वेदिदेशे पत्नीयजमानयोरन्वारब्धयोर्नवति'—इति लाट्या० श्रौ० १.२.१।

प्रकार इस [सुब्रह्मण्याख्य ऋत्विज] का ऋत्विज कृत्य कैसे वेदी के मध्य किया हुआ समझा जाता है ? उत्तर देना चाहिए कि वेदी से अनावश्यक धूल-गर्दे [= उत्कर] को निकालकर वेदी के बाहर किन्तु वेदी के उत्तर भाग में फेंकते हैं। अत जो वेदी के उत्तर भाग में प्रक्षिप्त उत्कर पर खडे होकर सुब्रह्मण्याह्वान करता है वह वेदी के मध्य ही किया हुआ हो जाता है। इसलिए [इसको वेदी के मध्य किया हुआ मानते हैं]।

सुब्रह्मण्याह्वानस्योत्करदेश विधाय पुन प्रश्नोत्तराभ्या प्रशसति

तदाहुरथ कस्माद् उत्करे तिष्ठन् सुब्रह्मण्यामाह्वयतीत्यृषयो वै सत्रमासत, तेषा यो वर्षिष्ठ आसीत् तमब्रुवन् सुब्रह्मण्यामाह्वय त्व नो नेदिष्ठाद् देवान् ह्वयिष्यसीति, वर्षिष्ठमेवेन तत्कुर्वन्त्यथो वेदिमेव तत्सर्वा प्रीणाति ॥ इति ।

आहवनीयदेशान् परित्यज्य सुब्रह्मण्याह्वानस्योत्करदेशस्वाकारे किं कारणम् ? इति प्रश्न । तस्येदमुत्तरम्—ऋषयो हि पुरा सत्रमासत, 'तेषाम्' ऋषीणा मध्ये यो 'वर्षिष्ठ' अतिशयेन वृद्ध आसीत्, त प्रत्येवमब्रुवन्—हे महर्षे ! सुब्रह्मण्यामाह्वय, 'न' अस्माक मध्ये त्वमेव 'नेदिष्ठाद्' वयोवृद्धत्वेन देवलोकप्राप्तौ प्रत्यासन्नत्वे सत्यन्तिकतमत्वात् देवान् 'ह्वयिष्यसि' आह्वातु समर्थोऽसि । एवमृषिभिरुक्तत्वादद्याप्युत्करदेश तिष्ठन् सुब्रह्मण्याह्वान कर्तारमेन 'वर्षिष्ठमेव' अतिशयेन वृद्धमेव कुर्वन्ति । उत्करस्य वेदिगतपासुरूपत्वात् तत्सामीप्ये सति वेदि 'सर्वा' निरवशेषा 'प्रीणाति' तोषयति ॥

उस [उत्कर देश में सुब्रह्मण्याह्वान] के सम्बन्ध में प्रश्न करते हैं कि [आहवनीय देश को छोड़कर] सुब्रह्मण्याह्वान क्यों उत्कर में खड़े होकर करते हैं ? उत्तर—प्राचीन काल में ऋषियों ने सत्र किया। उनके मध्य कोई अत्यन्त वृद्ध था। उनसे वे बोले - 'सुब्रह्मण्याह्वान करें। हम लोगों के बीच आप ही [वयोवृद्धत्वेन देवलोक के] पास होने से देवों के आह्वान में समर्थ हैं। इस प्रकार ऋषियों के कहने के कारण यहाँ भी उत्कर देश में [सुब्रह्मण्याह्वान कर्ता] खड़े होकर इसे अत्यन्त वृद्ध ही करते हैं। इस प्रकार [उत्कर के वेदि-गत धूलि रूप के समीप होने से] वेदी को ही वह निरवच्छिन्न रूप से तुष्ट करता है।

अथ सुब्रह्मण्याख्यस्यर्त्विजः समीपे दक्षिणात्वेन वृषभानयन प्रश्नोत्तराभ्या निरूपयति—

तदाहु. कस्मादस्मा ऋषभ दक्षिणामभ्याजन्तीति, वृषा वा ऋषभो योषा सुब्रह्मण्या, तन्मिथुन, तस्य मिथुनस्य प्रजात्या इति ॥ इति ।

'तत्' तस्मिन् सुब्रह्मण्यस्य विषये प्रश्नमाहुः । अस्मै सुब्रह्मण्याय 'ऋषभ' पुगवं दक्षिणा कृत्वा 'अभ्याजन्ति' समीपमानयन्ति । तत्र किं कारणमिति प्रश्नाभिप्राय । तस्येदमुत्तर— योऽय दक्षिणात्वेन नीयमान ऋषभ, सोऽय 'वृषा वै' सचनसमर्थ. पुरुषस्वरूप एव, सुब्रह्मण्या तु स्त्रीलिङ्गशब्दाभिधेयत्वात् योषिद्रूपा, तदुभय मिलित्वा मिथुन भवति । तस्य मिथुनस्य 'प्रजात्यै' प्रजोत्पादनार्थम् ऋषभानयनमित्युत्तरवादिनोऽभिप्राय ॥

उक्त [सुब्रह्मण्या] के विषय में प्रश्न पूछते हैं कि उन सुब्रह्मण्या के लिए दक्षिणा में वृषभ क्यों समीप में लाते हैं ? उत्तर—जो यह दक्षिणारूपेण लाया गया वृषभ है वह यह सेचन में समर्थ होने से पुरुष स्वरूप ही है और सुब्रह्मण्या [स्त्रीलिङ्गशब्दाभिधेयत्वेन] स्त्री स्वरूप है। ये दोनों मिलकर मिथुन [जोड़े] हो जाते हैं। उस मिथुन के प्रजोत्पादनार्थ ही वृषभ लाते हैं।

सुब्रह्मण्यस्य वक्तव्यमुक्त्वा आग्नीध्रस्यर्त्विजः कर्तव्यं विधत्ते—

उपांशु पात्नीवतस्याऽऽग्नीध्रो यजति, रेतो वै पात्नीवत उपांश्विव वै रेतसः सिक्तिः ॥ इति।

पात्नीवताख्यो यो ग्रहविशेष, तस्य मन्त्रं उपांशु ध्वनिरहितमाग्नीध्रो यजेत्। योऽयं 'पात्नीवत ग्रह स रेतसः स्वरूपम्। लोकेऽपि रेतसः 'सिक्तिः' सेचनम् 'उपांश्विव वै' ध्वनिमन्तरेण रहस्येव क्रियते। अतस्तत्साम्यादुपांशुत्वं युक्तम् ॥

[आग्नीध्र नामक ऋत्विज के कार्य]—

आग्नीध्र पात्नीवत ग्रह के लिए [याज्या] मन्त्र को उपांशु [धीरे-धीरे] बोलकर यजन करता है। [वस्तुतः] यह पात्नीवत ग्रह वीर्य स्वरूप है और लोक में भी वीर्य का सेक एकान्त में ही बिना ध्वनि के किया जाता है।

अत्र पात्नीवतग्रहे सोमस्य 'न वीहि'—इत्यनुवषट्कार[1] निषेधति—

नानुवषट्करोति, संस्था वा एषा यदनुवषट्कारो नेद्रेतः संस्थापयानीत्य-संस्थितं वै रेतसः समृद्धं, तस्मान्नानुवषट्करोति ॥ इति।

सर्वत्र ग्रहेषु वषट्कारानुवषट्काराभ्यां हूयते। अत्र तु पात्नीवतग्रहे वषट्कारहोम एक एव, न द्वितीयः। तत्र हेतुः 'संस्था वै' इत्यादि। योऽयमनुवषट्कारोऽस्ति, सोऽयं 'संस्था वै' ग्रहस्य समाप्तिरेव। तथा सति स पात्नीवतग्रहरूपं रेतो 'नेद् संस्थापयानि' सर्वथा समाप्तिं न करवाणीत्यभिप्रेत्य तत्समाप्तेर्भीतो भवेत्। 'असंस्थितम्' असमाप्तमनुपरतं रेतसः प्रजननपर्यन्तत्वात् समृद्धं भवति, तस्मादेव नानुवषट्कुर्यात्। तथा च यज्ञगाथां पठन्ति—

"ऋतुयाजान् द्विदेवत्यान् यश्च पात्नीवतो ग्रह।
आदित्यग्रहसावित्रौ तान् स्म मानुवषट्कृथा "—इति[2] ॥

1. द्र० इत ऊर्ध्वम्, पृ० १२३, पृ० ४८३। तु आश्व० ५ ५ १९।
2. द्र० आश्व० श्रौ० ५ ५ २१।

[सभी ग्रहों में वषट्कार और अनुवषट्कार करते हैं। किन्तु इस पात्नीवतग्रह में वषट्कार होम एक ही होता है, अन्य नहीं। अत] यह अनुवषट्कार नहीं करता है[1] क्योंकि यह जो अनुवषट्कार है वह संस्था [=विराम] है अर्थात् ग्रह की समाप्ति का द्योतक है। पात्नीवत ग्रह रूप वीर्य-सेक में सर्वथा विराम न हो जाय [इसलिए अनुवषट्कार नहीं करते हैं]। वस्तुत अनुपरत [न रुका हुआ] वीर्य सिंचन[2] ही सन्तानोत्पत्ति से समृद्ध होता है। इसलिए वह अनुवषट्कार नहीं करता है।

अथ पात्नीवतग्रहभक्षणे देश विधत्ते—

**नेष्टुरुपस्थ आसीनो भक्षयति, पत्नीभाजन वै नेष्टाऽग्निः पत्नीषु रेतो दधाति प्रजात्या अग्निनैव तत्पत्नीषु रेतो दधाति प्रजात्यै ॥ इति।**

योऽयमाग्नीध्र पात्नीवत यजति सोऽयं नेष्टुः उपस्थे समीप आसीन शेष भक्षयेत्। नेष्टृनामक ऋत्विक् 'पत्नीभाजन वै' पत्नीस्थानीय 'नेष्ट पत्नीमुदानय'—इत्येव नेष्टृपत्न्योरानयनद्वारा सम्बन्धश्रवणात्[3]। तस्मात्समीपे भक्षण सत्यग्निरूप आग्नीध्र पत्नीषु रेत स्थापयति, तच्च प्रजननाय सपद्यते। तत् तेनानुष्ठानेन यजमानोऽपि 'अग्निनैव' अग्न्यनुग्रहेणैव पत्नीषु रेत संस्थापयति। तदपि 'प्रजात्यै' सपद्यते॥

*नेष्टा के समीप[4] बैठकर [आग्नीध्र पात्नीवतग्रहशेष का]* भक्षण करता है। नेष्टा नामक ऋत्विज पत्नीस्थानीय है। [अत समीप में भक्षण करके] अग्नि [रूप आग्नीध्र] पत्नियों में वीर्य का स्थापन करता है, जो प्रजनन के लिए सम्पादित होता है। उस [अनुष्ठान] के द्वारा इस प्रकार वह यजमान भी अग्नि के द्वारा ही पत्नियों में वीर्य का स्थापन करता है। वह भी प्रजोत्पादन के लिए ही होता है।

---

१ आश्व० श्रौतसूत्रे (५ ५ २१) अत्र नारायण —'एतद् यज्ञगाथात्मको वेदो यष्टारं शास्ति। गाथाशब्देन ब्राह्मणगता ऋच उच्यन्त। यज्ञार्था गाथा यज्ञगाथा, सैषा त्वनुवषट्कारविधान प्रत्युच्यत इत्यर्थ। कोटिद्वयसंकीर्तनं सानुवषट्कारा अनानुवषट्काराश्चैतावन्त एवेति ज्ञापनार्थम्।'

२ 'असंस्थितमनुपरत रेत समृद्ध भवति। सकारश्छान्दस'—इति गोविन्दस्वामी।

३ तै० स ६ ५ ८ ६। 'अथ सम्प्रेष्यति अग्नीन्नेष्टुरुपस्थमासीद, नेष्ट पत्नी मुदानय, उद्गात्रा संख्यापय वृषा वा अग्नीद् योषा नेष्टा मिथुनमेवैतत् प्रजनन क्रियते, *उदानयति नेष्टा पत्नीं, तामुद्गात्रा संख्यापयति'*—इति शत० ब्रा० ४ ४ २ १७, १८। द्र० द्राह्या० श्रौ० ८ ५ ३, ४।

४ (1) तथा च आश्वलायन —नेष्टार विसंस्थितसंचरेणानुप्रपद्य तस्योपस्थ उपविश्य भक्षयेत्'—इति ५ १९ ८।

(11) 'उपस्थे = अङ्के'—इति षड्गुरुशिष्य।

वेदनं प्रशंसति—

**प्र जायते प्रजया पशुभिर्य एवं वेद ॥ इति ।**

जो इस प्रकार जानता है पुत्र-पौत्रादि प्रजा और अश्वादि पशुओं से समृद्धि को प्राप्त करता है ।

अथ सुब्रह्मण्याविषये कंचिद्विशेषं विधत्ते—

**दक्षिणा अनु सुब्रह्मण्या संतिष्ठते; वाग्वै सुब्रह्मण्याऽन्नं दक्षिणाऽन्नाद्य एव तद्वाचि यज्ञमन्ततः प्रतिष्ठापयन्ति, प्रतिष्ठापयन्ति ॥ ३ ॥ इति ।**

दक्षिणानु नीतासु ता दक्षिणा. 'अनु' पश्चात्सुब्रह्मण्या 'संतिष्ठते' समाप्यते। सुब्रह्मण्याया वाग्रूपत्वात् दक्षिणायाश्चान्नरूपत्वात् 'अन्ततः' समाप्तिवेलायामिमं यज्ञं 'अन्नाद्ये वाचि' द्वयोरेवैतयोः 'प्रतिष्ठापयन्ति' प्रतिष्ठितं कुर्वन्ति। अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकाया प्रथमाध्याये (षड्विंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ [ १०९ ]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरं माधवाचार्यादेशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'-नाम भाष्ये ऐतरेयब्राह्मणभाष्यस्य कृतौ षष्ठपञ्चिकायां प्रथमोऽध्यायः (षड्विंशाऽध्यायः) समाप्तः ॥१॥

दक्षिणा के बाद सुब्रह्मण्या पूर्ण हो जाती है। वाक् ही सुब्रह्मण्या है। दक्षिणा अन्न है। [इस प्रकार सुब्रह्मण्या की समाप्ति के समय] अन्ततः इस यज्ञ को उपयुक्त अन्न और वाणी में वे प्रतिष्ठित करते हैं।

॥ इस प्रकार ऐतरेय ब्राह्मण की छठवीं पञ्चिका के प्रथम (छब्बीसवें) अध्याय की सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ १ ॥

---

# अथ द्वितीयोऽध्यायः

## प्रथमः खण्डः

—:०:—

# [अथ सप्तविंशोऽध्यायः

## प्रथमः खण्डः]

यावस्तोतोष्णीषसमावेष्टितमूर्धा
मन्त्रैरन्यैरर्बुदसूक्त विपृणक्ति ॥
कियन्त्यो वाऽभिष्टवनीया कथमेता
सुब्रह्मण्याह्वानमितीह प्रवदन्ति ॥ १ ॥

ग्रावस्तुत्सुब्रह्मण्याख्ययोर्ऋत्विजो कर्तव्यमुक्त्वा मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकनाम्ना होत्रकाणा शस्त्राणि विधातुमाख्यायिकामाह—

**देवा वै यज्ञमतन्वत, तांस्तन्वानानसुरा अभ्यायन् यज्ञवेशसमेषा करिष्याम इति, तान् दक्षिणत उपायन्, यत एषा यज्ञस्य तनिष्ठममन्यन्त, ते देवा प्रतिबुध्य मित्रावरुणौ दक्षिणत पर्यौहस्ते मित्रावरुणाभ्यामेव दक्षिणत प्रात सवनेऽसुररक्षास्यपाघ्नत, तथैवैतद् यजमाना मित्रावरुणाभ्यामेव दक्षिणत प्रात सवनेऽसुररक्षास्यपघ्नते, तस्मान् मैत्रावरुण मैत्रावरुण प्रात सवने शसति, मित्रावरुणाभ्या हि देवा दक्षिणत प्रात सवनेऽसुररक्षास्यपाघ्नते ॥ इति ।**

यदा देवा यज्ञमकुर्वत तदा 'तान्' कुर्वाणान् देवान् असुरा अभित आगच्छन् । असुरशब्देन रक्षास्यप्युपलक्ष्यन्ते । एषा' देवाना 'यज्ञवेशस यज्ञविघात करिष्याम इत्यसुराणामभिप्राय । 'एषा' देवाना सर्वाधनो यज्ञोपलक्षितस्य देवयजनदेशस्य 'यत ' यस्मिन् दक्षिणदेशभागे 'तनिष्ठम्' अतिशयेन तनुरूपमत्यन्तदुर्बल स्थानमिदमित्यसुरा 'अमन्यन्त' । सर्वेषामृत्विजामाहवनीयादिदेशेष्ववस्थितत्वेन सदसो दक्षिणभागे रक्षकाभावाद् दुर्बलस्थानमित्यसुराणा बुद्धिरासीत् । दक्षिणत ' तस्मिन् सदसो दक्षिणभागे तान्' देवान् असुरा 'उपायन्' प्राप्तवन्त । 'ते' देवा तस्कररूपेण समागतान् असुरान् प्रतिबुध्य तस्मिन् दक्षिणत 'मित्रावरुणौ' द्वौ देवौ पर्यौहन्' रक्षकत्वेनावस्थापितवन्त । तत 'ते' देवा मित्रावरुणाभ्यामेव धानुष्काभ्यामत्यन्तशूराभ्या दक्षिणदेशे प्रात सवनकाले तानसुरान् रक्षासि चापाघ्नतापसारितवन्त । तथैवेदानीतना अपि यजमान प्रात सवनकाले दक्षिण-

देवो मित्रावरुणाभ्यामेव देवाभ्यामसुरान् रक्षांसि चापसारयन्ति । तस्मादपसारणार्थं मित्रावरुणदेवताकं शस्त्रम् 'आ नो मित्रावरुणा'-इत्यादि[1] मैत्रावरुणाख्य ऋत्विक्प्रातःसवने शंसेत् । यस्माद्देवा मित्रावरुणाभ्यामपसारितवन्त , तस्मात् मैत्रावरुण शस्त्र[2] युक्तम् ॥

[सत्रों और अहीनों में अन्य होत्रकों के शस्त्र]—

११, ४ [२२ १] प्राचीन काल में देवताओं ने यज्ञ का विस्तार किया । उन यज्ञ के विस्तार करने वाले देवों की ओर असुर आये । 'इन [देवों] के यज्ञ में हस्तक्षेप विघ्न डालेंगे'—ऐसा कहते हुए वे दक्षिण की ओर से उनके पास पहुँचे, जहाँ उन्होंने सोचा कि यज्ञ का यही दुर्बल स्थान है [क्योंकि सभी ऋत्विज आहवनीय-देश में रहते हैं]। उन देवों ने [तस्कर रूप उन] असुरों को आया जानकर [दो देव] मित्र और वरुण को दक्षिण की ओर [रक्षक] नियुक्त[3] कर दिया । इन दो मित्र और वरुण के द्वारा ही उन्होंने दक्षिणा से प्रातःसवन में असुरों और राक्षसों को निकाल दिया । उसी प्रकार यहाँ भी यजमान प्रातःसवन में दक्षिण देश से मित्र और वरुण देवों के द्वारा ही असुर एवं राक्षसों को निकालते हैं । इसी [अपसरण] के कारण मित्रावरुणदेवताक शस्त्र ['आ नो मित्रावरुणा' आदि] का मित्रावरुण नामक ऋत्विज प्रातःसवन में शंसन करता है। क्योंकि मित्र एवं वरुण के द्वारा ही देवों ने दक्षिण भाग से प्रातःसवन में असुरों और राक्षसों को निकाला ।

उपाख्यानमुखेन मैत्रावरुणस्य शस्त्र विधाय तथैव ब्राह्मणाच्छंसिन शस्त्र विधत्ते—

ते वै दक्षिणतोऽपहता असुरा मध्यतो यज्ञं प्राविशंस्ते देवाः प्रतिबुध्येन्द्रं मध्यतोऽदधुस्त इन्द्रेणैव मध्यत प्रातःसवनेऽसुररक्षांस्यपाघ्नत, तथैवैतद् यजमाना इन्द्रेणैव मध्यत प्रातःसवनेऽसुररक्षांस्यपघ्नते, तस्मादैन्द्रं ब्राह्मणाच्छंसी प्रातःसवने शंसतीन्द्रेण हि देवा मध्यत प्रातःसवनेऽसुररक्षांस्यपाघ्नत ॥ इति ।

'ते' दक्षिणदेशादपसारिता असुरा , प्राचीनवंशस्य सदसश्च मध्ये यज्ञभूमिं प्राविशन् । 'आ याहि सुषुमा हि ते'-इत्यादिकम्[4] इन्द्रदेवताकं शस्त्रम्[5] । अन्यत् पूर्ववद् व्याख्येयम् ॥

दक्षिण की ओर से अपसारित उन असुरों ने यज्ञ में [प्राचीन वंश और सदस के] मध्य से प्रवेश किया । उन देवों ने असुरों को आया जानकर इन्द्र को मध्य में अवस्थित

१ ऋ० ३.६२.१६–१८ ।
२ द्र० आश्व० श्रौ० ५.१०.२८ ।
३ पर्यूहं ? व्याकरणाचार्यप्रोक्तात् 'डाटन' हि 'डोज्न्त' यम् । (? सू० ६.१.१०, पा० सू० ७.१.३)–इति षड्गुरुशिष्य ।
४ ऋ० ८.१७.१–३ ।
५ द्र० आश्व० श्रौ० ५.१०.२८ ।

किया। उन्होंने इन्द्र के द्वारा ही [यज्ञ के] मध्य से प्रातःसवन में असुरों एवं राक्षसों को निकाल दिया। उसी प्रकार यहाँ भी यजमान प्रातःसवन में मध्यभाग से इन्द्र के द्वारा ही असुर एवं राक्षसों को निकालते हैं। इसी [अपसरण] के कारण इन्द्र देवताक शस्त्र [आ याहि सुषुमा हि ते' आदि] का ब्राह्मणाच्छंसी नामक ऋत्विज प्रातःसवन में शंसन करता है। क्योंकि इन्द्र के द्वारा ही देवों ने [यज्ञ के] मध्यभाग से प्रातःसवन में असुरों और राक्षसों को निकाला।

इदानीमच्छावाकस्य शस्त्रं विधत्ते—

ते वै मध्यतोऽपहता असुरा उत्तरतो यज्ञं प्राविशंस्ते देवाः प्रतिबुध्येन्द्राग्नी उत्तरतः पर्यौहंस्त इन्द्राग्निभ्यामेवोत्तरतः प्रातःसवनेऽसुररक्षांस्यपाघ्नत, तथैवैतद् यजमाना इन्द्राग्निभ्यामेवोत्तरतः प्रातःसवनेऽसुररक्षांस्यपघ्नते, तस्मादैन्द्राग्नमच्छावाकः प्रातःसवने शंसतीन्द्राग्निभ्यां हि देवा उत्तरतः प्रातःसवनेऽसुररक्षांस्यपाघ्नत ॥ इति।

इन्द्राग्नी आ गतं सुतम्[1] इत्यादिकम् ऐन्द्राग्नं शस्त्रम्[2]। अन्यत् पूर्ववद् व्याख्येयम् ॥

[यज्ञ के] मध्य से निकाले गए उन असुरों ने यज्ञ में उत्तर की ओर से प्रवेश किया। उन देवों ने असुरों को आया जानकर इन्द्र एवं अग्नि को उत्तर में [रक्षक] नियत किया। उन्होंने इन्द्र एवं अग्नि देवों के द्वारा ही उत्तर से प्रातःसवन में असुरों एवं राक्षसों को निकाल दिया। उसी प्रकार यहाँ भी यजमान प्रातःसवन में उत्तर की ओर से इन्द्र एवं अग्नि के द्वारा ही असुरों और राक्षसों को निकालते हैं। इसी [अपसरण] के कारण इन्द्र एवं अग्नि देवताक शस्त्र ['इन्द्राग्नी आ गतं सुतम्' आदि] का अच्छावाक नामक ऋत्विज प्रातःसवन में शंसन करता है। क्योंकि इन्द्र एवं अग्नि के द्वारा ही देवों ने उत्तर से प्रातःसवन में असुरों और राक्षसों को निकाला।

प्रातःसवनाभिमानी देवोऽग्निरित्येतमर्थं दर्शयति—

ते वा उत्तरतोऽपहता असुराः पुरस्तात् पर्यद्रवन्समनीकतस्ते देवाः प्रतिबुध्याग्निं पुरस्तात् प्रातःसवने पर्यौहंस्तेऽग्निनैव पुरस्तात् प्रातःसवनेऽसुररक्षांस्यपाघ्नत, तथैवैतद् यजमाना अग्निनैव पुरस्तात् प्रातःसवनेऽसुररक्षांस्यपघ्नते, तस्मादाग्नेयं प्रातःसवनम् ॥ इति।

ते इन्द्राग्निभ्यामुत्तरतोऽपसारिता असुराः समनीकतः सङ्ग्रामार्थं समीचीनसैन्ययुक्ताः पुरस्तात् यज्ञभूमेः पूर्वस्यां दिशि पर्यद्रवन् परितः प्राप्ताः। ते देवाः प्रतिबुध्येत्यादि पूर्ववत्। यस्मात् पूर्वस्यां दिशि रक्षकोऽग्निस्तस्मादिदं प्रातःसवनमग्निसम्बद्धं द्रष्टव्यम् ॥

---

1 ऋ० ३।१२।१–३।        2 द्र० आश्व० श्रौ० ५।१०।२८।

वे उत्तर से निकाले गए असुर यज्ञ में पूर्व की ओर से संग्राम[1] के लिए समीचीन सेना से युक्त होकर पहुँचे। उन देवों ने असुरों को आया जानकर अग्नि को पूर्व में [रक्षक] नियुक्त किया। उन्होंने अग्नि से ही पूर्व से प्रातःसवन में असुरों एवं राक्षसों को निकाल दिया। उसी प्रकार यहाँ भी यजमान अग्नि के द्वारा ही पूर्व से प्रातःसवन में असुरों एवं राक्षसों को निकालते हैं। [क्योंकि पूर्व दिशा का रक्षक अग्नि है] इसलिए प्रातःसवन अग्नि से सम्बद्ध है[2]।

वेदनं प्रशंसति—

अप पाप्मानं हते य एवं वेद ॥ इति।

जो इस प्रकार जानता है वह पाप को विनष्ट करता है।

प्रातःसवनाभिमानिनमग्निं प्रशस्य तृतीयसवनाभिमानिनो विश्वान् देवान् प्रशंसति—

ते वै पुरस्तादपहता असुराः पश्चात् परीत्य प्राविशंस्ते देवाः प्रतिबुध्य विश्वान् देवानात्मानं पश्चात् तृतीयसवने पर्यौहंस्ते विश्वैरेव देवैरात्मभिः पश्चात् तृतीयसवनेऽसुररक्षांस्यपाघ्नत; तथैवैतद् यजमाना विश्वैरेव देवैरात्मभिः पश्चात् तृतीयसवनेऽसुररक्षांस्यपघ्नते; तस्माद् वैश्वदेवं तृतीयसवनम् ॥ इति।

अग्निना प्राच्या दिशोऽपसारिता असुरा रक्षांसि च प्रतीच्या दिशि परितो गत्वा यज्ञभूमिं प्राविशन्। देवाश्च प्रतिबुध्य विश्वान् देवांस्तृतीयसवनवेलायां प्रतीच्यां दिशि रक्षार्थं प्रेषितवन्तः। आत्मानमिति विश्वेषां देवानां विशेषणम्, ये प्रेरका देवाः तेषामात्मभूतान् स्वशरीरवदत्यन्तमाप्तान् विश्वान् देवानित्यर्थः[3]। तैर्विश्वैर्देवैरितरदेवात्मभूतैरसुराणां तृतीयसवने अपहननाद् इदं तृतीयसवनं वैश्वदेवम् ॥

वे पूर्व दिशा से अपसारित असुर पीछे जाकर पश्चिम दिशा से [यज्ञ में] प्रविष्ट हुए। उन देवों ने असुरों को आया जानकर पश्चिम दिशा में अपने ही शरीर रूप विश्वेदेवों को तृतीय सवन में नियुक्त किया। उन्होंने देवों के आत्मभूत विश्वेदेवों के द्वारा ही पश्चिम दिशा से तृतीय सवन में असुर और राक्षसों को निकाला। उसी प्रकार यहाँ भी यजमान तृतीय सवन में पश्चिम की ओर से आत्मभूत विश्वेदेवों के द्वारा असुरों और राक्षसों को निकालते हैं। [क्योंकि आत्मभूत विश्वेदेवों के द्वारा तृतीयसवन में पश्चिम से असुरों को निकाला] इसलिए तृतीय सवन विश्वेदेवों से सम्बद्ध है।

---

१. (i) अनीकं = सेना, तथा चत्वारः। इति षड्गुरुशिष्यः। (ii) समनीक इति संग्रामनाम। हेतोः परिस. आगच्छन्नित्यर्थः'—इति गोविन्दस्वामी।

२. तु० ऐ० ब्रा० १२.२ 'सं गायत्रीमिमाम्नये' इति।

३. द्र० पा० सू० ७.१.३९ 'आत्मानम्'—इति पदे वत: सुः।

वेदनं प्रशंसति—

अप पाप्मानं हते य एवं वेद ॥ इति ।

जो इस प्रकार जानता है वह पाप को विनष्ट करता है ।

पुनरपि प्रदेशान्तर प्रवेशशङ्कां वारयितुमसुराणां सर्वात्मना विनाशं दर्शयति—

ते वै देवा असुरानेवमपाघ्नत सर्वस्मादेव यज्ञात्, ततो वै देवा अभवन् पराऽसुरा ॥ इति ।

उत्तरक्रमेण सर्वतोऽपसारितेष्वसुरेषु देवाः शत्रुरहिता अभवन् । असुराश्च पराभूताः ॥

इस प्रकार देवों ने असुरों को यज्ञ से सर्वात्मना ही निकाल दिया । उसके बाद से देव उत्कर्ष को प्राप्त हुए और असुर पराभव को प्राप्त हुए ।

वेदनं प्रशंसति—

भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥ इति ।

'आत्मना' स्वेनैव रूपेण शत्रुरहितेन सुखी भवति । द्वेषी तु पाप्मा पराभवति ॥

जो इस प्रकार जानता है वह स्वयं उन्नति को प्राप्त होता है और उससे द्वेष करने वाले पापात्मा शत्रु भी पराभव को प्राप्त होते हैं ।

उपाख्यानमुपसंहरति—

ते देवा एवं क्लृप्तेन यज्ञेनापासुरान् पाप्मानमघ्नताजयन् स्वर्गं लोकम् ॥ इति ।

'एवं' पूर्वोक्तप्रकारेण क्लृप्तेन[1] मित्रावरुणादिभिर्दक्षिणादिदेशविशेषेषु रक्षितो यो यज्ञस्तेन पापरूपानसुरानपहत्य देवाः स्वर्गं लोकं प्राप्नुवन् ॥

उन देवों ने इस प्रकार [मित्रावरुणादि देवों के द्वारा दक्षिण आदि देशों में] रक्षित यज्ञ के द्वारा पाप रूपी असुरों को हरा कर स्वर्ग को प्राप्त किया ।

वेदनं तत्पूर्वकमनुष्ठानं च प्रशंसति—

अप ह वै द्विषन्तं पाप्मानं भ्रातृव्यं हते, जयति स्वर्गं लोकं य एवं वेद, यश्चैवं विद्वान् सवनानि कल्पयति ॥ ४ ॥ इति ।

सवनगतानां होत्रकाणां मैत्रावरुणादिशस्त्रसंपादनमेव सवनकल्पनम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकायां द्वितीयाध्याये (सप्तविंशाध्याये) प्रथमः खण्डः ॥ १ ॥ (४) [१९१]

जो इस प्रकार जानता है और जो इस प्रकार जानते हुए [सवनगत होत्रकों का एवं मित्रावरुण आदि शस्त्रों से] सवनों का सम्पादन करता है वह अपने द्वेष करने वालों को, शत्रुओं को और पापों को विनष्ट करता है और स्वर्ग लोक को प्राप्त करता है ।

॥ इस प्रकार सत्ताइसवें (द्वितीय) अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

---

१ क्लृप्तेन = सुसम्पूर्णेन । इति षड्गुरुशिष्य ।

## अथ द्वितीयः खण्डः

अथ तेषां होतॄणामहर्गणेषु शस्त्रेषु प्रकारविशेषं विधत्ते—

**स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति प्रातःसवनेऽहरेव तदह्नोऽनुरूपं कुर्वन्त्य-परेणैव तदह्ना परमहरभ्यारभन्ते ॥ इति ।**

पृष्ठ्यषडहादिष्वहर्गणेषु बहून्यहानि विद्यन्ते । तेषु प्रातःसवने द्वितीयस्याह्नो यः स्तोत्रियस्तृचः, तं तृचं प्रथमेऽहनि स्तोत्रियस्य तृचस्यानुरूपं कुर्युः । सामगा यस्मिंस्तृचे स्तोत्रं कुर्वन्ति, स तृचः 'स्तोत्रियः', तस्य स्तोत्रियस्य च्छन्दोदेवतादिना सदृशोऽन्यो यस्तृचः, स 'अनुरूपः'[1] । तथा सति सर्वेष्वहःस्वेकैकस्मिंस्तृचे सामगाः स्तोत्रं कुर्वन्ति । ते सर्वे तृचाः स्तोत्रियाः । तत्र सर्वत्रोत्तरदिनगतं स्तोत्रियं पूर्वदिने स्तोत्रियस्यानन्तरभाविनमनुरूपं कुर्यात् । अयं च नियमो होत्रकाणां शस्त्रेषु प्रातःसवने द्रष्टव्यः । एवं सत्युत्तरमहरेव पूर्वस्याह्नोऽनुरूपं कुर्वन्ति । 'तत्' तथा सति 'अपरेणैव' अर्वाचीनेनैव पूर्वेणाह्ना 'परम्' उत्तरमहरभिमुखीकृत्य 'आरभन्ते'[2] उपक्रमन्ते ॥

V. ५ [xxvi. २] [पृष्ठ्यषडह आदि अह समूहों के] प्रातःसवन के [द्वितीय दिन के] स्तोत्रिय तृच को प्रथम दिन में स्तोत्रिय तृच के अनुरूप करते हैं [सामगान करने वाले जिस तृच में स्तोत्र करते हैं वह तृच 'स्तोत्रिय' कहलाता है। उस स्तोत्रिय तृच के छन्द और देवता आदि के सदृश अन्य तृच 'अनुरूप' कहलाते हैं। इस प्रकार सभी दिनों में एक-एक तृच में सामगायक जो स्तोत्र करते हैं, वे सभी तृच 'स्तोत्रिय' हैं। यहाँ सर्वत्र अगले दिन के स्तोत्रिय को पूर्व दिन में प्रयुक्त स्तोत्रिय के अनन्तरभावि करके अनुरूप करना चाहिए। वस्तुतः यह नियम होत्रकों के शस्त्रों में प्रातःसवन में ही द्रष्टव्य है] इस प्रकार उत्तर दिन को ही वे पूर्व दिन के अनुरूप करते हैं। बीते हुए ही [पूर्व] दिन के बाद उत्तर दिन को अभिमुख करके आरम्भ करते हैं।

माध्यंदिनसवनेऽप्यस्य न्यायस्य प्रसक्तौ तं निषेधति—

**अथ तथा न मध्यंदिने, धीतं वै पृष्ठानि, तानि तस्मै न तत्स्थानानि, यत्स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्युः ॥ इति ।**

'अथ' प्रातःसवनानन्तरं माध्यंदिने 'तथा न' तेन पूर्वोक्तप्रकारेण न कुर्यादिति शेषः । तत्र हेतुः—धीतं वै पृष्ठानीति । यानि माध्यंदिनसवने पृष्ठस्तोत्राणि, तानि 'धीतं' पर-

---

१ द्र० इस पूर्वम्, पृ० ३९४, ४६६ ६७, ५०३ ।

२ (i) 'तत्' इति शेषः । मूलसूत्रे (आश्व० श्रौ० ७.२.७, ६) हि—'तेषां यस्मिन् स्तुवीरन् स स्तोत्रियः । यस्मिन्छन्दस्यानुरूप'—इति । स्तोत्राद् य छन्दसः ।

(ii) अपरेण = नञ्पूर्वमनेन । परम् = उत्तरम्, अभ्यारभन्ते = उपक्रमन्ति । इति षड्गुरुशिष्य । 'अपरेण' इति षड्गुरुशिष्यसम्मतोऽयं पाठः ।

द्रूपाण्येव, श्रीरूपत्वेन सामगैः स्तुतत्वात्। न हि श्रीरूपाणां स्वतन्त्राणामन्यानुवृत्तिरूपलक्षणमनुरूपत्वं युक्तम्। तस्मात् 'तानि' पृष्ठस्तोत्राणि 'तस्मै' तस्मिन् माध्यंदिने सवने 'तत्स्थानानि' प्रातःसवनस्थानानि न भवन्ति, तत्सदृशानि न भवन्तीत्यर्थः। प्रातःसवने ह्युत्तरदिनगतं स्तोत्रियं पूर्वदिनगतस्तोत्रियस्यानुरूपं कुर्वन्ति। 'यत्' यस्मात्कारणादत्रापि तथा कुर्युः, सादृश्यकारणं नास्ति, तुल्यच्छन्दस्त्वादीनामभावात्। तस्मात् पृष्ठस्तोत्राणां पूर्वोत्तरदिनेषु सादृश्याभावात् प्रातःसवनन्यायोऽत्र न घटते ॥

इस [प्रातःसवन] के बाद मध्यन्दिनसवन में वैसा नहीं करना चाहिए। [क्योंकि मध्यन्दिनसवन के] पृष्ठस्तोत्र [श्री रूप में सामगायकों के द्वारा स्तुत होने से] समृद्धि रूप ही हैं। इसलिए उन [पृष्ठ स्तोत्रों] का उस मध्यन्दिनसवन में [तुल्य छन्द आदि के अभाव के कारण] वह स्थान नहीं है जो कि [प्रातःसवन में दूसरे दिन के] स्तोत्रिय को पूर्व दिन के स्तोत्रिय के अनुरूप करते हैं।

माध्यंदिनसवनन्यायं तृतीयसवनेऽतिदिशति—

*तयैव विभक्त्या तृतीयसवने न स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति ॥५॥* इति।

विभक्तिशब्दः प्रकारवाची। तेनैव माध्यंदिनोक्तप्रकारेण तृतीयसवनेऽप्युत्तरदिनगतं स्तोत्रियं पूर्वदिनगतस्य स्तोत्रियस्यानुरूपं न कुर्वीत ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकायां द्वितीयाध्याये (सप्तविंशाध्याये) द्वितीयः खण्डः ॥ २ ॥ (५) [१९२]

मध्यन्दिन सवन में उक्त प्रकार द्वारा तृतीय सवन में भी उसी प्रकार दूसरे दिन के स्तोत्रिय को पूर्व दिन के स्तोत्रिय के अनुरूप नहीं करते हैं।

॥ इस प्रकार सत्ताइसवें (द्वितीय) अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥२॥

## अथ तृतीयः खण्डः

होत्रकाणां स्तोत्रियानुरूपमुक्त्वा आरम्भणीया ऋचो विधत्ते—

अथात आरम्भणीया एव ॥ इति।

*'अथ' स्तोत्रियानुरूपानन्तरम्, यस्माच्छस्त्रस्योत्तरभाविनः आरम्भा युक्ताः, 'अतः'* अस्मात्कारणाद् 'आरम्भणीयाः' ऋचो विधीयन्ते। 'एव' कारोऽहर्गणेषु चोदकप्राप्ताया ऋचो व्यावृत्त्यर्थः ॥

vi ६ [xxvi ३] इस [होत्रकों के स्तोत्रिय व अनुरूप को कहने] के बाद [क्योंकि शस्त्र के बाद उनका आरम्भ युक्ति-युक्त है] इसलिए आरम्भणीय ऋचाओं का ही[1] विधान करते हैं।

---

१ (i) एवेति पुनरर्थकः—इति षड्गुरुशिष्यः। (ii) तु० आश्व० श्रौ० ७ २ १०।

तत्र मैत्रावरुणस्य होत्रकस्य आरम्भणीयां दर्शयति—

ऋजुनीती नो वरुण इति मैत्रावरुणस्य, मित्रो नयतु विद्वानिति, प्रणेता वा एष होत्रकाणां यन्मैत्रावरुणस्तस्मादेषा प्रणेतृमती भवति ॥ इति ।

'ऋजुनीती'–इत्यस्यामृचि[1] मित्रो नयत्विति द्वितीयः पादः । तत्र नयत्विति प्रणेतृवाचकं पदं दृश्यते । मैत्रावरुणश्च होत्रकाणां प्रणेता 'प्रवर्तकः' तस्मादेषा प्रणेतृवाचक-शब्दवती भवति सेयं युक्तमित्यर्थः ॥

'ऋजुनीती' (विद्वान मित्र और वरुण हमें सरल मार्ग से पहुँचाये) आदि मैत्रावरुण शस्त्र की आरम्भणीय ऋचा है। इसके 'मित्रो नयतु विद्वान' आदि [द्वितीय पाद] में प्रणेतृ [= ले जाना] वाचक पद होने से जो मित्र और वरुण हैं वह सब होत्रकों के प्रणेता हैं। अतः यह ऋचा प्रणेतृ वाचक पद से युक्त होती है [यह युक्ति युक्त है]।

ब्राह्मणाच्छंसिन आरम्भणीयां विधत्ते—

'इन्द्रं वो विश्वतस्परीति' ब्राह्मणाच्छंसिनो हवामहे जनेभ्य इतीन्द्रमेवैतयाऽहरहर्निह्वयन्ते ॥ इति ।

इन्द्रं वः इत्यस्यामृचि[2] हवामहे इति द्वितीयः पादः । तत्राह्वानवाचिनः शब्दस्य विद्यमानत्वात् एतया ऋचा प्रतिदिनमिन्द्रं निरन्तरमाह्वयन्ते ॥

'इन्द्र वो विश्व०' (हम सब यहाँ इन्द्र का आह्वान तुम लोगों के कल्याण के लिए करते हैं) आदि ब्राह्मणाच्छंसी शस्त्र की आरम्भणीय ऋचा है। इसके 'हवामहे' आदि [द्वितीय पाद] में आह्वान का वाचक शब्द होने से इस ऋचा से प्रतिदिन इन्द्र को निरन्तर बुलाते हैं[3]।

वेदनं प्रशंसति—

न हैषां विहवेऽन्य इन्द्रं वृङ्क्ते, यत्रैवं विद्वान् ब्राह्मणाच्छंस्येतामहरहः शंसति ॥ इति ।

'एवं विद्वान्' इन्द्राह्वानप्रतिपादिकेयमृगिति विद्वान् यत्र शंसति, तस्मिन् 'एषां' यजमानानां सम्बन्धिनि 'विहवे' विविधाह्वानयुक्ते यज्ञे 'अन्यः' कश्चिच्छत्रुरिन्द्रं 'न ह' नैव वृङ्क्ते[4] वर्जयति, एतदीय यज्ञे इन्द्रागमनं निराकर्तुं न शक्नोतीत्यर्थः ॥

इस प्रकार [इन्द्र की प्रतिपादिका यह ऋचा है ऐसा] जानते हुए ब्राह्मणाच्छंसी प्रतिदिन इस ऋचा का जहाँ शंसन करता है, उन यजमानों के विभिन्न इन्द्र के आह्वान युक्त यज्ञ में कोई अन्य [शत्रु] इन्द्र के आगमन का निराकरण नहीं कर सकता है।

---

१ ऋ० १।९०।१ ।     २ ऋ० १।७।१० ।

३ निह्वयन्ते प्रार्थनाय —इति षड्गुरुशिष्यः ।

४ (i) वृजि वर्जने धातोः रूपमिदं । 'हः सम्प्रसारणं च न्यभ्युपविषु' (पा० सू० ३ ३ ७२) इत्यत्र —इति षड्गुरुशिष्यः । (ii) वस्तुतः धातुपाठे वर्जनार्थं एव रुधादिः पठ्यते । वृणक्ति इत्येव रुधादित्वे रूपम् वृङ्क्ते इत्यपि यजनार्थस्यैव चुरादिगणस्य रूपम् ।

अन्यस्यारम्भणीयां विधत्ते—

**यत्सोम आ सुते नर इत्यच्छावाकस्येन्द्राग्नी अजोहवुरितीन्द्राग्नी एवैतयाऽह-रहर्निह्वयन्ते; न हैषां विह्वेऽन्य इन्द्राग्नी वृङ्क्ते, यत्रैव विद्वानच्छावाक एतामहरहः शंसति ॥ इति ।**

'यत्सोम' इत्यास्यामृचि[1] इन्द्राग्नी इति द्वितीयः पादः । अजोहवुरिति ह्वोमार्थे आह्वानार्थो वा धातु[2] । अन्यत् पूर्ववद् व्याख्येयम् ॥

'यत् सोम' (सोमरस के निचोड़े जाने पर यज्ञ कर्म के नेता उत्तम घोड़ों वाले इन्द्र एवं अग्नि को बुलाते हैं) आदि अच्छावाक शस्त्र की आरम्भणीय ऋचा है। इसके 'इन्द्राग्नी' आदि [द्वितीय पाद] में 'अजोहवु' शब्द [होम के लिए अथवा आह्वान के लिए प्रयुक्त] होने से इस ऋचा से प्रतिदिन इन्द्र को हम निरन्तर बुलाते हैं। इस प्रकार [इन्द्र की प्रतिपादिका यह ऋचा है—ऐसा] जानते हुए अच्छावाक प्रतिदिन इस ऋचा का जहाँ शसन करता है उन यजमानों के विशेषतः इन्द्र के आह्वानयुक्त यज्ञ में कोई अन्य [शत्रु] इन्द्र के आगमन का निराकरण नहीं कर सकता।

उक्तानामारम्भणीयानामृचां त्रयं प्रशंसति—

**ता व एताः स्वर्गस्य लोकस्य नावः संपारिण्यः स्वर्गमेवैताभिर्लोकमभि-संतरन्ति ॥ ६ ॥ इति ।**

'ता' पूर्वोक्ता ऋजुनीती' 'इन्द्र वो' 'यत्सोम' इत्येतास्तिस्रः स्वर्गप्राप्तये नौस्थानीया सम्यक्पारं नयन्तीति 'संपारिण्य' । यथा नावा नदीं तरति तथा 'एताभि' ऋग्भि स्वर्गं लोकमभिलक्ष्य नदीस्थानीयं प्रौढं मार्गं सम्यक् तरन्ति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ-पञ्चिकायां द्वितीयाध्याये (सप्तविंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (६) [१९३]

वे [तीनों पूर्वोक्त] ऋचाएँ स्वर्ग की प्राप्ति के लिए सम्यक् रूप से पार लगाने वाली नावों के समान हैं। इन [ऋचाओं] से [जैसे नाव से नदी पार करते हैं वैसे ही नदी स्थानीय] स्वर्ग लोक के प्रौढ मार्ग को सम्यक् रूप से पार करते हैं।

॥ इस प्रकार सत्ताइसवें (द्वितीय) अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

होत्रकाणां शस्त्रारम्भणसाधनभूता ऋचो विधाय समाप्तिसाधनभूता ऋचो विधत्ते—

**अयातः परिधानीया एव ॥ इति ।**

---

१ ऋ० ७.९४.१० ।

२ 'ह्वेञ् स्पर्द्धायां शब्दे च'—इति भ्वा० १००८, 'हु दानादानयो'—इति जु० १ ।

'अथ' शब्दप्रारम्भानन्तर यस्मात् 'परिधान' समापनमपेक्षितम्, तस्मात् परिधानीया ऋचो विधीयन्ते। एवकार प्रकृतध्यावृत्त्यर्थ ॥

११ ७ [XXXII. ४] शस्त्र के प्रारम्भ के अनन्तर [समाप्ति अपेक्षित है] इसलिए परिधानीया [= उपसंह्रियमाण] ऋचाओं का ही विधान करते हैं।

एवस्य होत्रकस्य परिधानीया विधत्ते—

**ते स्याम देव वरुणेति मैत्रावरुणस्यैव स्वश्च धीमहीत्यय वै लोक इष-मित्यसौ लोक- स्वरित्युभावेवैतया लोकावारभन्ते ॥ इति ।**

ते स्याम' इत्यस्यामृचि[1] इष स्वश्चेति' तृतीय पाद । तत्र इषमित्यनेन पदनामीप्स्वादय लोको विवक्षित, स्वरित्यनेन पदन असौ स्वर्गलोक । तथा सति गोऽदम 'धीमहि ध्यायेमेति मन्त्रेऽभिधानात् 'एतया ऋचा द्वावपि लोकौ आरभन्ते' प्राप्नुवन्ति ॥

'ते स्याम' (हे वरुण एव मित्र देव हम लोग तुम्हारे होवें आदि मैत्रावरुण की परिधानीया ऋचा है। इसके 'इष स्वश्च धीमहि' (हम अन्न और प्रकाश धारण करें) आदि पाद में उक्त 'इष' (= अन्न) पद से यह (भू) लोक ही विवक्षित है, और 'स्व' (= प्रकाश) पद से वह स्वर्गलोक। इस प्रकार [मन्त्र म अभिधान के कारण] इस ऋचा से दोनों लोकों को प्राप्त करते हैं[2]।

अन्यस्य परिधानीया विधत्ते—

**व्यन्तरिक्षमतिरदिति ब्राह्मणाच्छंसिनो वियत्तृच स्वर्गमेवैभ्य एतया लोक विवृणोति ॥ इति ।**

यस्मिस्तृचे 'व्यन्तरिक्षम्' इत्यृगेषा[3] श्रूयते, सोय वित्तत्त्वात् 'वियत्तृच'शब्दनाभि धीयते। तत तृचेन[4] साध्यो य स्वर्गो लोक, तम् 'एतया' व्यन्तरिक्षमित्यृचा यजमानेभ्यो 'विवृणोति' विवृतद्वार करोति ॥

जिस तृच में 'व्यन्तरिक्षमतिरत्' (इन्द्र ने अन्तरिक्ष को बढ़ाया) आदि 'वि' शब्द से युक्त 'वियत्तृच' है यह ब्राह्मणाच्छंसी की परिधानीया ऋचा है। उस तृच से [साध्य] स्वर्ग लोक के द्वार को यह इस ऋचा से यजमानों के लिए खोलता है।

---

१ ऋ ७ ६६ १९।

२ इष्ट सद्भौ पृथ्वी स्व सूर्यो द्यौर्वा सद्भौ।
आरम्भ = स्पर्श। प्राप्ति अभिजा या स्पृशति। इति षड्गुरुशिष्य।

३ ऋ० ८ १४ ७।

४ पर्याप्त तृचात्मम। श्रूयते हि—'प्रति मा सूर उदिते व्यन्तरिक्षमतिरत्पयावाप्यस्य सुतस्य इति तृचा पर्यायाः' इति। शाहिद्वि बप्प तन्मुख हि नास्ति। इति षड्गुरुशिष्य।

तस्यामृचि द्वितीयतृतीयपादौ पठति —

**मदे सोमस्य रोचना, इन्द्रो यदभिनद्वलमिति ॥** इति ।

तस्या ऋचोऽयमर्थः —इन्द्रो देव सोमस्य 'रोचना' रुचि प्राप्येति शेष । ततो 'मदे' हर्षे सत्यन्तरिक्ष 'व्यतिरत्' विशेषेण यजमानाना गमनयोग्यमकरोत् । 'यद्' यस्मात्कारणाद् वलनामानमसुरम् 'अभिनत्' विदारितवान् तस्माद् अन्तरिक्षमार्गः सुगम ॥

'इन्द्र देव ने सोम के स्वाद को पाकर मद में अन्तरिक्ष को विशेष रूप से यजमानों के गमन योग्य किया । क्योंकि इन्द्र ने वल नामक असुर को विदीर्ण किया इसलिए अन्तरिक्ष का मार्ग सुगम हो सका ।'

अत्र वलभेदनमभिप्रेत्य तामृच प्रशसति—

**सिषासवो वा एते यद्दीक्षितास्तस्मादेषा वलवती भवति ॥** इति ।

ये दीक्षिता सन्ति ते 'सिषासव' लुब्धकामा फलार्थिन । तस्मात्कारणादेषा 'वलवती' वलनामकासुरभेदप्रतिपादिका कर्तव्या भवति ॥

जो दीक्षित होते हैं वे फल प्राप्त करने के इच्छुक होते हैं अत यह ऋचा वल नामक असुर के विदारण के लिए होती है ।

यद्यपीयम् ऋक परिधानीया न भवति, तथाऽप्येतदादिके तृचेऽन्तिमाया ऋच परिधानीयात्वात् तत्प्रदर्शनाय तृच उपक्रान्त ॥

तस्मिन् प्रथमामृचमनूद्य व्याख्याय द्वितीयामृचमनूद्य व्याचष्टे—

**'उद्गा आजदङ्गिरोभ्य आविष्कृण्वन् गुहा सतीः, अर्वाञ्च नुनुदे वलमिति'[1] सनिमेवैभ्य एतयाऽवरुन्धे ॥** इति ।

'अङ्गिरोभ्य.' महर्षिभ्य 'सती' विद्यमाना गा 'उदाजत् ऊर्ध्वं प्रेरितवान् । किं कुर्वन् ? 'गुहा' वलस्यासुरस्य सम्बन्धि गूढ स्थानम् 'आविष्कृण्वन्' प्रकटीकुर्वन् । 'अर्वाञ्चम्' अतिनीच वलनामकमसुर 'नुनुदे' विनाशितवान् । अयमर्थ —वलनामाख्य कश्चिदसुरो महर्षीणा गा अपहृत्य कस्मिश्चिद् बिलेऽवस्थाप्य पाषाणेन बिलद्वारमाच्छाद्यावस्थित । त वृत्तान्तमिन्द्रोऽवगत्य गुहाद्वारमुद्घाट्य, वलनामानमसुरमपनुद्य, तत्रावस्थित महर्षीणां गा बिलादुद्धृत्य, महर्षिभ्यो दत्तवानिति । अयमर्थ शाखान्तरे विस्पष्टमाम्नायते—'इन्द्रो वलस्य बिलमपौर्णोत् । स य उत्तम पशुरासीत् । त पृष्ठ प्रतिसगृह्योदक्खिदत्, त सहस्रं पशवोऽनूदायन् स उन्नतोऽभवत्'[2] इति । 'एतया' तृचगतया द्वितीययर्चा 'सनिमेव' लाभमेवैभ्य 'अवरुन्ध' सपादयति[3] ॥

---

१ ऋ० ८ १४ ८ ।

२ तै० स० २ १ ५ १ । 'असुराणा वै वलस्तमसा प्रावृतोऽश्मापिधान आसीत्'— इति ता० ब्रा० १९ ७ १ ।

३. इह वलबिलशब्दावुभावेवात्त्यस्यादि (°वर्ष्यादिमि) अधिकोऽय पाठ ।

[यद्यपि यह ऋचा परिधानीया नहीं है फिर भी इस तृच की अन्तिम ऋचा के परिधानीया ऋचा होने से इस तृच की प्रथम ऋचा के उपक्रमण के बाद द्वितीय ऋचा की व्याख्या करते हैं]—

'इन्द्र ने गुहा में छिपाई हुई गायों को बाहर निकाल कर महर्षि अङ्गिराओं को दिया एवं [गाय का अपहरण करने वाले] अत्यन्त निकृष्ट[1] बल नामक असुर को नष्ट कर दिया।' [वस्तुतः बल नामक असुर ने महर्षियों की गायों का अपहरण करके उन्हें किसी गुफा में छिपा कर उसके द्वार को पाषाण से ढक दिया। इन्द्र ने यह जान लिया और गुफा के द्वार को खोलकर उस बल नामक असुर को मारकर वहाँ अवस्थित उन गायों को महर्षियों को दे दिया]। इस प्रकार इस [तृच की द्वितीय] ऋचा से यह लाभ का ही सम्पादन करता है।

अथ तृतीयामृचं परिधानीयां विवक्षुः प्रथमपादमनूद्य व्याचष्टे—

इन्द्रेण रोचना दिव इति[2], स्वर्गो वै लोक इन्द्रेण रोचना दिवः॥ इति।

'दिव' स्वर्गविशेषाः 'इन्द्रेण' देवेन 'रोचना' रोचमाना दीप्तियुक्ता, कृता इति शेषः। अनेन पादेन स्वर्गलोकवर्णनं विवक्षितम्। इन्द्रेणेत्यादिकस्यार्थस्य तत्र विद्यमानत्वात्॥

'इन्द्रेण' (स्वर्ग विशेष इन्द्र द्वारा दीप्ति युक्त किया गया) आदि (तृतीय परिधानीय) ऋचा के [प्रथम पाद में] स्वर्गलोक विवक्षित है अतः 'इन्द्र ने स्वर्गलोक को ही दीप्तियुक्त किया।'

द्वितीयतृतीयपादावनुवदति—

दृळ्हानि दृंहितानि च, स्थिराणि न पराणुद इति॥ इति।

तस्मिन् स्वर्गे यानि 'दृढ्ळानि' प्रकाशरूपाणि नक्षत्राणि, यानि च पूर्वमदृढान्यपि 'दृंहितानि' इन्द्रेण दृढीकृतानि, तानि सर्वाण्यपि स्थिराणि कृत्वा 'न पराणुदे' इन्द्रो न विनाशितवान्॥

'उस स्वर्ग में जो प्रकाशरूप नक्षत्र हैं, जो पहले अस्थिर थे उन्हें इन्द्र ने स्थिर किया और उन सभी को स्थिर करके इन्द्र ने विनष्ट नहीं किया।'

स्वर्ग एवैतया लोकेऽहरहः प्रतितिष्ठन्तो यन्ति॥ इति।

अस्यामृचि स्थिराणां स्वर्गस्थानानां नक्षत्रादिशरीराणां श्रूयमाणत्वात् 'एतया' ऋचा परिधानं कृत्वा प्रतिदिनं 'स्वर्ग एव लोके' प्रतिष्ठां प्राप्नुवन्तो 'यन्ति' वर्तन्ते॥

[इस ऋचा में नक्षत्र आदि स्थिर स्वर्ग के स्थानों का उल्लेख होने से] इस ऋचा से उपसंहार करने से प्रतिदिन यजमान स्वर्ग लोक में ही प्रतिष्ठा प्राप्त करते हुए रहते हैं।

---

१. 'अर्वाच = अधोमुख, नुनुद = प्रेरितवान्'—इति संहितायां सायणः।
२. ऋ० ८.१४.९।

अन्यस्य परिधानीयां विधत्ते—

**आऽह सरस्वतीवतोरित्यच्छावाकस्य, वाग्वै सरस्वती, वाग्वतोरिति हैत-द्वाहेन्द्राग्न्योरवो वृणे इत्येतद्ध वा इन्द्राग्न्यो. प्रिय धाम यद्वागिति, प्रियेणै-वैनौ तद्धाम्ना समर्धयति ॥ इति ।**

आऽहमित्यादि प्रथमः पाद, इन्द्राग्न्योरित्यादि द्वितीय पाद । तस्यार्थं-स्त्वयमयं — अहम्' अनुष्ठाता 'सरस्वतीवतो' सरस्वतीयुक्तयोरिन्द्राग्न्योर्देवयो सम्बन्धि यत् 'अव' सुरक्षित स्थानमस्ति, तत् 'आवृणे' सर्वत प्रार्थयति । अत्र प्रथम पादे सरस्वतीशब्देन वेदशास्त्रस्वरूपा वागेव विवक्षिता, अत 'सरस्वतीवतोरिति' एवरूपो मन्त्रो 'वाग्वतोरिति एतमेवार्थमाह । द्वितीयपादे त्वव शब्देन सुरक्षित मिन्द्राग्निदेवतयो यत् प्रिय धाम विवक्षित, तद्वाग्रूपमेव, वाग्व्यवहारे तयोरत्यन्तप्रीति-मत्त्वात् । तस्मादेतामृच[1] पठन्नेव त्विन्द्राग्नी प्रियेणैव 'धाम्ना' स्थानेनैव 'समर्धयति' समृद्धौ करोति ॥

'आह सरस्वतीवतो' (हम अनुष्ठान करने वाले सरस्वती युक्त इन्द्र और अग्नि देव सम्बन्धी जो सुरक्षित स्थान हैं उनकी चारों ओर से प्रार्थना करते हैं) आदि अच्छावाक की परिधानीया ऋचा है । [वेदशास्त्र स्वरूप] वाक् ही सरस्वती है, क्योंकि इस प्रकार 'सरस्वती से युक्त उन दोनों का'—यह कहना है । 'हम इन्द्र और अग्नि के सुरक्षित स्थान की सवत प्रार्थना करते हैं ।' [इस द्वितीय पाद में 'अव' शब्द से विवक्षित] यह जो वाक् है वह इन्द्र और अग्नि का प्रिय धाम है । [इसलिए इस ऋचा के पढ़ते ही] वह उन [इन्द्र और अग्नि] के ही प्रिय धाम से यजमान को समृद्ध करता है ।

वेदन प्रशसति—

**प्रियेण धाम्ना समृध्यते य एव वेद ॥ ७ ॥ इति ।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये षष्ठ पञ्चिकाया द्वितीयाध्याये (सप्तविंशाध्याये) चतुर्थ खण्ड ॥ ४ ॥ (७) [१९४]

जो इस प्रकार जानता है वह प्रिय धाम से समृद्धि को प्राप्त करता है ।

॥ इस प्रकार सत्ताइसवें अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

अथ परिधानीया स्तोतुमुपक्रमते—

**उभय्य परिधानीया भवन्ति होत्रकाणा,—प्रात सवने च माध्यंदिने चाही-नाश्चैकाहिकाश्च ॥ इति ।**

---

१ 'आह सरस्वतीवतोरिन्द्राग्न्योरवो वृणे । याभ्यां गायत्रमृच्यते ।।—इति ऋ० ८ ३८ १० ।

'होत्रकाणां' मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां[1] सवनद्वये परिधानीया द्विविधा भवन्ति। कथम् ? तदुच्यते—'अहीनाः' अहर्गणेषु विहिताः, 'ऐकाहिकाः' एकाहे प्रकृतिरूपे विहिताः, इत्येव द्वैविध्यम्[2] ॥

११. ८ [xxvii. ५] [मैत्रावरुण, ब्राह्मणाच्छंसी और अच्छावाक आदि] होत्रकों के प्रातःसवन और माध्यन्दिनसवन के परिधानीय मन्त्र दो प्रकार के होते हैं—१. [अहर्गणों में विहित] अहीन और २ [प्रकृतिरूप एकाह में विहित] ऐकाहिक।

तत्र होत्रकविशेषस्य परिधानीयाविशेषं दर्शयति—

तत ऐकाहिकाभिरेव मैत्रावरुणः परिदधाति, तेनास्माल्लोकान्न प्रच्यवते ॥ इति।

ततस्तासूभयविधासु मैत्रावरुणाख्यऋत्विगैकाहिकाभिरेव परिदध्यात्। 'ते स्याम देव वरुणेति'[3] प्रकृतौ प्रातःसवने मैत्रावरुणस्य परिधानीया विहिता[4]। माध्यंदिनसवने 'नू ष्टुत इन्द्र नू गृणान' इत्येषा[5] विहिता[6]। अहीने विकृतिरूपेऽपि सवनद्वये तदेव परिधानीयाद्वयं मैत्रावरुणस्य द्रष्टव्यम्। कथमिति ? तदुच्यते—अहर्गणस्य प्रातःसवने हि मैत्रावरुणस्य 'प्रति वां सूर उदिते'–इत्यस्य[7] पर्यायतृचस्यान्त्या, 'ते स्याम देव वरुणेत्येषा'[8] परिधानीया। ऐकाहिकाऽपि सैव परिधानीया भवति। तथा हि प्रकृतौ मैत्रावरुणस्य 'प्र मित्रयोर्वरुणयोरिति नवाऽऽज्यात मित्रावरुणेति याज्यति' सूत्रकारवचनात्[9] नवानामन्त्या सैवेत्यैकाहिकाभिरेव मैत्रावरुणः परिदधातीत्येतदुपपन्नं भवति। तथा माध्यंदिनसवनेऽपि 'आ सत्यो यातु'–इत्यहीनसूक्तमिति[10] वक्ष्यति[11]। माऽहीनसूक्तान्त्या साऽहीनस्य तत्र

---

१ 'अस्मिन् शास्त्रे मुख्यवर्जिता द्वादशर्त्विजो होत्रका इत्युच्यन्ते' इति आश्व० श्रौ० १ २ २६ वृ०। मुख्यास्तु चत्वार —होता, अध्वर्यु, ब्रह्मा, उद्गाता चेति (आश्व० श्रौ० ४ १ ४)। द्र० आश्व० श्रौ० ५ ६ १७। तत्र च होत्रेषु त्रय चरित्रणः। द्र० इत पूर्वम्, पृ० ३५३ प० ११, पृ० ५७० प० १२। द्र० आश्व० श्रौ० ५ १० १०।

२ यस्मिन्स्तुवीरन् स स्तोत्रिय। यस्मिन्ननन्तर सोऽनुरूप। एकस्तोत्रियेष्वहःसु योऽन्यान्तर सोऽनुरूपो न चेत् सर्वोऽहर्गण एकाहो वा। ऐकाहिकस्तथा सति'—इति आश्व० श्रौ० ६ २ ५–८।

३ ऋ० ७ ६६ ९।

४ आश्व० श्रौ० ७ २ १२। द्र० इत पूर्वम्, पृ० ९२४ प० ५।

५ ऋ० ४ १६ २१।                ६ आश्व० श्रौ० ७ २.९।

७ ऋ० ७ ६६ ७–९।                ८. ऋ० ७ ६६ ९।

९ आश्व० श्रौ० ५ १० २८।                १० ऋ० ४.१६ १।

११. द्र० इत. परस्तात् ४ ख० २ द्र० (आश्व० श्रौ० ७ ४ ९)।

परिधानीया। अहीनसूक्तान्तं हि माध्यंदिनसवने मैत्रावरुणशस्त्रम्। तस्य 'नू ष्टुत इन्द्र नू गृणानः' इत्येषाऽन्त्या[1]। तथा प्रकृतावपि सैव परिधानीया। तथा हि—कया नश्चित्र आभुवत्, कया त्वं न ऊत्या, वस्तमिन्द्र त्वा वसु, सद्यो ह जातः, एवा त्वामिन्द्रोशन्नु षु ण सुमना उपाक इति 'याज्या'—इति सूत्रकारवचनात्[2] 'एवा त्वामिन्द्र वज्रिन्नत्र' इत्येतस्यैकाद शर्चस्य[3] अन्त्या 'नू ष्टुत इन्द्र नू गृणान' इत्येषैवेति[4] मैत्रावरुणस्य प्रातःसवने माध्यंदिन सवने चैकाहिकाभिः परिधानमुपपन्नं भवति। ऐकाहिकाभिरेवेत्येवकारोऽन्यशङ्काव्या वृत्त्यर्थं। या ऐकाहिका परिधानीयास्ता एव षाहगणे मैत्रावरुणस्य परिधानीया, न त्वन्या इत्यर्थः। यद्यपि मैत्रावरुणस्य प्रकृतौ सवनयोरुभयोर्द्वे एव परिधानीये, तथापि प्रयोगबहुत्वापेक्षमैकाहिकाभिरिति बहुवचनम्[5]। तेन मैत्रावरुणस्य प्रकृतिविकृत्यो परिधा नीयाभेदराहित्येनाय मैत्रावरुणोऽस्माल्लोकात् कदाचिदपि न प्रच्यवते॥

उन दोनों में से मैत्रावरुण 'एकाहिक' से उपसंहार करता है। इसलिए वह इस लोक से च्युत नहीं होता है[6]।

मैत्रावरुणस्य प्रकृतिविकृत्यो परिधानीयामेकामुक्त्वा, अच्छावाकस्य प्रकृतिविलक्षण सवनद्वये परिधानीयाद्वय दर्शयति—

अहीनाभिरच्छावाक स्वर्गस्य लोकस्याऽऽप्त्यै॥ इति।

योऽयमच्छावाक, सोऽयमहीनगताभिरृग्भि परिदध्यात्, न त्वैकाहिकाभि। तथा हि—'आग्ह सरस्वतीवतोरित्यच्छावाकस्य'—इति पूर्वस्मिन्[7] खण्डे विहितत्वात् प्रातःसवने एषाऽहर्गणसम्बन्धिनी परिधानीया। ऐकाहिके तु 'गोमद्धिरण्यवद्'—इत्येषैव[8] परि धानीया[9]। माध्यंदिनेऽच्छावाकस्य 'नून सा ते' इत्यहर्गणगता[10] परिधानीया[11]। एकाहे

१ ऋ० ४।१९।११। २ आश्व० श्रौ० ५।१६।१। ३ ऋ० ४।१९।१–११।
४ ऋग्घेषा बह्वृषु सूक्तेषु श्रुतेति ध्येयम्। ५ नास्ति सामा० सपा० पुस्तके।
६ 'तत' तत्र तेषु मध्ये कथम्? एकाहे 'प्र मित्रयो'र्नवर्चान्त्या अहीने 'प्रति वां सूर' तृचान्त्या चैका ते स्यामे'ति प्रातःसवने। माध्यंदिनेऽपि एकाहे 'एवा त्वामिन्द्रे' त्यस्यान्त्या चाहीने 'आ सत्यो यातु' त्यस्यान्त्या चैका 'नू ष्टुत' इति।' इति षड्गुरुशिष्य।
७ प्रकृतेरपरित्यागाद् भूमिलोक न मुञ्चति।
प्रकृत्या हि समा भूमिस्तत्त्याधारयोगत॥ इति षड्गुरुशिष्य।
८ द्र०इत पूर्वम्, पृ० ९२७। ९ ऋ० ७।९४।९।
१० 'इय वामस्य मन्मन इति नव (ऋ० ७।९४।१–९)'—इति आश्व० श्रौ० ५।१०।२८। ११ ऋ० २।११।२१।
१२ 'नून सा त इत्यन्त्यमुत्तमम्'—इति आश्व० श्रौ० ७।४।१०।

तु 'शुन हुवेमेति'[1] माध्यंदिने परिधानीया[2]। एवं सति अच्छावाकस्यैकाहिकपरिधानीया-परित्यागेनोपरितनस्याहर्गणस्य सम्बन्धिन्या परिधानीयाया स्वीकार, उपरि च स्वर्ग-लोकप्राप्त्यै संपद्यते ॥

जो अच्छावाक है वह अहीनगत ऋचाओं से उपसहार करता है जो स्वर्गलोक की प्राप्ति के लिए होता है।

अथ ब्राह्मणाच्छंसिन परिधानीया दर्शयति—

**उभयीभिर्ब्राह्मणाच्छंसी, तेनो स उभौ व्यन्वारभमाण एतीमं चामुं च लोकमथो मैत्रावरुणं चाच्छावाकं चाथो अहीनं चैकाहं चाथो संवत्सरं चाग्निष्टोमं चैवमु स उभौ व्यन्वारभमाण एति ॥ इति।**

योऽयं ब्राह्मणाच्छंसी, सोऽयमुभयविधाभिरैकाहिकाभिरहीनगताभिश्च ऋग्भिः परि-दध्यात्। प्रातःसवने प्रकृतौ 'स न इन्द्र शिव सखेति'[3] परिधानीया[4]। विकृतौ तु 'इन्द्रेण रावना दिव इति पूर्वखण्डेऽभिहिता[5]। माध्यंदिनसवने प्रकृतौ विकृतौ च 'एवेदिन्द्र वृषणं वज्रबाहुम्'—इत्येषैव[6] परिधानीया[7]। एवं च सत्यस्य ब्राह्मणाच्छंसिनः प्रातःसवनेऽच्छावाकसाम्यं माध्यंदिने सवने मैत्रावरुणसाम्यं सम्पन्नम्। 'तेनो', तेनैव ऐकाहिकाहीनगतोभयविधपरिधानेनैव 'स' ब्राह्मणाच्छंसी भूलोकं स्वर्गलोकं 'उभौ' अपि 'व्यन्वारभमाण' विविधं स्पृशन् 'एति' गच्छति वर्तत इत्यर्थः। प्रातःसवने प्रकृति-विकृत्योः परिधानीयाविलक्षणत्वाल्लोकद्वयस्य पृथगेव स्पर्शः। माध्यंदिनसवने प्रकृति-विकृत्योः परिधानीयैक्याल्लोकद्वयस्य सहस्पर्शः, इत्येव विविधस्पर्शो 'व्यन्वारभमाण' शब्देन विवक्षितः।

'अथो' अपि चायं ब्राह्मणाच्छंसी मैत्रावरुणं चाच्छावाकं च 'उभौ' ऋत्विजौ 'व्यन्वा-रभमाण एति' विविधमुपस्पृशन् वर्तते। कथमिति? तदुच्यते—यथा मैत्रावरुणस्य प्रकृतिविकृत्योः परिधानीयैक्यं, तथा ब्राह्मणाच्छंसिनोऽपि माध्यंदिनसवने तदैक्यम्। यथाऽच्छावाकस्य प्रकृतिविकृत्योः परिधानीया-वैलक्षण्यम्, एवं ब्राह्मणाच्छंसिनः प्रातःसवने तद्वैलक्षण्यमिति। मैत्रावरुणाच्छावाकविषयोऽयं विविधस्पर्शः, तथैवाहीनैकाहविषयोऽपि विविधस्पर्शः ऊहनीयः। कथमिति? तदुच्यते—प्रातःसवनेऽहीनैकाहयोर्वैलक्षण्येन स्पर्शः।

१ ऋ० ३ ३० २२।
२ 'इच्छन्ति त्वा' (ऋ० ३ ३० १–२२)—इति आश्व० श्रौ० ७ ५ २०।
३ ऋ० ८ ९३ ३।
४ 'उद्घेदभीति तिस्र (ऋ० ८ ९३.१–३)'—इति आश्व० श्रौ० ५ १० २८।
५ द्र० इत पूर्वम्, पृ० ९२६।
६ ऋ० ७ २३ ६।
७ 'उदु ब्रह्माणि (ऋ० ७ २३ १–६)'—इति आश्व० श्रौ० ७ ४ ९।

माध्यदिने सवने सादृश्येन स्पर्श, इत्युभयविधत्वम्। तथा संवत्सरं गवामयनमूलप्रकृतिपूर्वं मग्निष्टोम च विविध स्पृशति। अहीनैकाहस्पर्शवदेतदुभयस्पर्शस्य योजनीयत्वात्॥

और जो ब्राह्मणाच्छंसी है वह दोनों प्रकार की ऋचाओं से उपसंहार करता है। उन उभयविध ऋचाओं के शंसन से वह [ब्राह्मणाच्छंसी] इस [भू लोक] और उस [स्वर्ग लोक] दोनों ही लोकों को विविध प्रकार से स्पर्श करते हुए जाता है[1]। और भी, यह [ब्राह्मणाच्छंसी] मैत्रावरुण और अच्छावाक नामक इन दोनों ऋत्विजों को भी विविध प्रकार से स्पर्श करते हुए जाता है। और भी, यह [ब्राह्मणाच्छंसी] अहीन और एकाह दोनों को [विविध प्रकार से स्पर्श करते हुए जाता है]। और भी, इस प्रकार यह [गवामयन सत्र रूप] संवत्सर को और अग्निष्टोम दोनों को विविध प्रकार से स्पर्श करते हुए जाता है।

इत्थ होत्रकाणा सवनद्वयगता परिधानीया प्रशस्य तृतीयसवनगता परिधानीया प्रशसति—

**अथ तत ऐकाहिका एव तृतीयसवने होत्रकाणा परिधानीया भवन्ति, प्रतिष्ठा वा एकाह, प्रतिष्ठायामेव तद्यज्ञमन्तत प्रतिष्ठापयन्ति॥ इति।**

एकाहे मूलप्रकृतौ ज्योतिष्टोमे होत्रकाणा या एव परिधानीया ता एवाह र्गणे तृतीयसवने द्रष्टव्या। तथा हि—'आवा राजानाविति नित्यमैकाहिकम् इति वचनात् मैत्रावरुणस्य 'आ वा राजानौ'–इति[2] सूक्तस्यान्त्या परिधानीया भवति। तथा ब्राह्मणाच्छंसिनोऽपि 'अच्छाम इन्द्रमिति नित्यमैकाहिकमिति[3] वचनात् अच्छा म इन्द्रम्'–इति[4] सूक्तस्यान्त्या परिधानीया भवति। तथाऽच्छावाकस्य 'ऋतुर्जनित्रीति नित्यान्यैकाहिकानि'–इति वचनात्[5] 'स वा कर्मणा'–इति[6] सूक्तस्यान्त्या परिधानीया भवति। योऽयमेकाह, स मूलप्रकृतित्वात् 'प्रतिष्ठा' सर्वासां विकृतीनामाधार। अतस्तैर्नैकाहिक परिधानीयाशसनेन यज्ञम् 'अन्तत' अवसानकाले 'प्रतिष्ठाया' सर्वाधारे पतिष्ठापयन्ति॥

[एकाह के मूल प्रकृति ज्योतिष्टोम में होत्रकों की जो परिधानीया ऋचाएँ होती हैं] वही एकाहिक ऋचाएँ [अहर्गण के] तृतीय सवन में भी होत्रकों की परिधानीया होती हैं[7]। जो यह 'एकाह' है [प्रकृति या मूलभूत होने से] वह [सभी विकृतियों का आधारभूत] प्रतिष्ठा है। इस प्रकार प्रतिष्ठा में ही उस यज्ञ को अन्तत प्रतिष्ठित करते हैं।

---

१ तेन = अन्वयेन। उ = पुन। अजारम्भ = स्पश। वि एति = अनुसरति। इति षड्गुरुशिष्य।

२ ऋ० ७ ८४ १। ३ आश्व० श्रौ० ८ ३ ३४।

४ ऋ० १० ४३ १। ५ आश्व० श्रौ० ८ ४ ३। ६ ऋ० ६ ६९ १।

७ यथा–ऋ० ७ ८४ १, १० ४३ १, ६ ६९ १, द्र० आश्व० श्रौ० ८ २ १६, ३ ३४, ४.३।

इत्थं परिधानीयां प्रशस्य प्रातःसवनगतानां याज्यादीनां मध्येऽवसानाभावं विधत्ते—

अनवानं प्रातःसवने यजेत् ॥ इति ।

'अनवानम्' अनुच्छ्वासम्, उच्छ्वासो मध्ये यथा न भवति तथा याज्यां पठेत्[1] ॥

प्रातःसवन में याज्यादि का पाठ मध्य में अवसान बिना किये हुए ही [लगातार] करना चाहिए ।

स्तोमवृद्धौ नियमविशेषं विधत्ते—

एकां द्वे न स्तोममतिशंसेत्, तद्यथाऽभिहेषते पिपासते क्षिप्रं प्रयच्छेत् तादृक्तद्यो क्षिप्रं देवेभ्योऽन्नाद्यं सोमपीथं प्रयच्छानीति, क्षिप्रं हास्मिँल्लोके प्रतितिष्ठति ॥ इति ।

त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशादयः स्तोमा विहिताः । विहितस्य सप्तदश-स्तोमस्य विवृद्ध्याऽष्टादशादिस्तोमाः निष्पद्यन्ते । तथा विहितस्यैकविंशस्य विवृद्ध्या द्वाविंशादयः स्तोमाः सम्पद्यन्ते । अनेनैव दृष्टान्तेन शंसनेऽप्याधिक्यं प्रसक्तं, 'यथा वाव स्तोत्रमेवं शस्त्रमिति'[2] न्यायात् । सन्ति तत्र प्रवृद्धाः स्तोमाः, स्तोत्रे वर्धमाने सति तां स्तोमगतामृक्संख्यामतिक्रम्य शंसनं तदतिशंसनं यदा क्रियते, तदानीमेकस्या द्वयोर्वा ऋचो-रभ्यनुज्ञानेन त्वधिकानामृचां । न शंसेत् । किं त्वेकेन वा द्वाभ्यामेव वाऽति-शंसेत् । अक्षरार्थस्तु—यदा 'स्तोममतिशंसेत्' स्तोमसंख्यामतिक्रम्य शंसनं कुर्यात्, तदानी-मेकां द्वे वाऽतिक्रम्य न शंसेत् । तथा च सूत्रकार आह—'अतिशंसनमेकया द्वाभ्यां वा प्रातः-सवने' इति[3] । ततोऽधिकानां शंसनाभावे युक्तिर्दृष्टान्तमुखेनोच्यते, तत्रायं दृष्टान्तोऽवगन्तव्यः । यथा लोके 'अभिहेषते' ग्रासार्थमभिमुख्येन 'हेषा' शब्दं कुर्वतेऽश्वाय 'पिपासते' अत्यन्त तृषार्ताय पुरुषायान्नाद्यं पानीयं क्षिप्रं प्रयच्छेत्, तादृगेव 'तत्' एतदल्पत्वाकायेनातिशंसनम् । 'अयो' अपि च क्षिप्रमेव देवेभ्यः सोमपानरूपमन्नाद्यं प्रयच्छानीत्यभिप्रेत्य एतदल्पत्वेन विलम्बमकृत्वैकया द्वाभ्यां वाऽतिशंसनं कुर्यात् । तथा सति 'क्षिप्रं' शीघ्रमेवास्मिँल्लोके प्रतिष्ठितो भवति ॥

[जब स्तोमों की संख्या का अतिक्रमण करके शंसन करता हो तब] एक या दो स्तोम का अतिक्रमण न करके ही शंसन करें । यह उसी प्रकार है जैसे लोक में प्यास से

---

1. द्र० इत पूर्वम्, पृ० २८८,५०५ । आश्व० श्रौ० ५ १ ४,५ ।
2. द्र० इत पूर्वम् पृ० ३५६ । 'यद्वाव स्तोत्रं तच्छस्त्रं, यावद् होत्र, स्तुवते ता एवानुशंसति'—इति शत० ब्रा० ८ १ ३ ४ । 'स्तोत्रमग्रे शस्त्रात्'—इति च आश्व० श्रौ० ५ १० १ ।
3. आश्व० श्रौ० ७ १२ ४ । 'अपरिमिताभिरुत्तरयोः सवनयोः'—इति च तदुत्तरसूत्रम् (शाङ्खा० श्रौ० १२ २ १६) । तु० ऐ० ब्रा० ५ २३ १० ।

लिए अभिमुख 'हेय' शब्द[1] करने वाले किसी भूखे अश्व के लिए अथवा किसी अत्यन्त तृषार्त पुरुष को शीघ्र ही भोजन-पानी दे देवें। वैसे ही [अतिशसन बहुत न करें]। और फिर वह शीघ्र ही देवों के लिए सोमपान रूप भोजन देता है—ऐसा सोचकर ऋक् बाहुल्य न करके बिना विलम्ब किये ही एक या दो ऋचा से ही अतिशंसन करे। इस प्रकार वह शीघ्र ही इस लोक में प्रतिष्ठित होता है।

सवनान्तरयोरुक्तवैपरीत्य विधत्ते—

अपरिमिताभिरुत्तरयो सवनयोरपरिमितो वै स्वर्गो लोक. स्वर्गस्य लोकस्याप्त्यै ॥ इति।

इयत्य एवेत्यव नियमरहिताभिर्बह्वीभिर्ऋग्भिरतिशसन सवनद्वये कुर्यात्। स्वर्गस्य लोकस्येयत्तारहितत्वात्। स्वर्गप्राप्त्यर्थमिदमतिशसन सपद्यते। यत्रातिशसन कर्तव्य भवति, तत्र तदर्थमृचामागमन कर्तव्यम् ॥

बाद में दोनो सवनों में बहुत सी ऋचाओ के द्वारा अतिशसन करना चाहिए। क्योंकि स्वर्ग लोक अपरिमित है[2]। वस्तुत यह अतिशसन स्वर्गलोक की प्राप्ति के लिए ही होना है।

तासामृचा देशविशेष दर्शयति—

काम तद्धोता शसेद्यद्धोत्रका पूर्वेद्यु शसेयुर्यद्वा होता तद्धोत्रका, प्राणो वै होताऽङ्गानि होत्रका, समानो वा अय प्राणोऽङ्गान्यनुसचरति, तस्मात् तत्काम होता शसेद्यद्धोत्रका पूर्वेद्यु शसेयुर्यद्वा होता तद्धोत्रका ॥ इति।

अहर्गणेषु वर्तमानदिनात् 'पूर्वेद्यु' मैत्रावरुणादयो 'होत्रका' यत् सूक्त शसेयु, तदेव सूक्त परेद्युर्होता 'कामम्' अविशङ्कयैव शसत्। यदि होतुरतिशसन प्रसक्त तदानी पूर्वेद्युर्होत्रकै शस्तात् सूक्तादृच आनेतव्या। यदि तु होत्रकाणामतिशसन प्रसक्त, तदानी पूर्वेद्युर्होता यत्सूक्त शसति, तस्मात् सूक्ताद्धोत्रकैरपेक्षिता ऋच आनेतव्या। होतु प्राण स्थानीयत्वाद्धोत्रकाणा हस्तपाद्यवयवस्थानीयत्वात् परस्परसूक्तादृगानयने सत्यय प्राण सर्वेष्ववयवेषु पक्षपातमन्तरेण तुल्य एवानुसचरति। 'तस्मात्तत्कामम्'-इत्युक्तार्थोपसहार. ॥

[अहर्गणों में वर्तमान दिन से] पूर्व के दिन जो सूक्त मैत्रावरुण आदि होत्रकों से शसित हुए थे उन्हीं सूक्तों का होता यदि चाहे तो पाठ करे, अथवा जिनको होता ने पढ़ा उन्हें ही होत्रक पढ़ें। वस्तुत होता प्राण है और होत्रक अङ्ग [हस्तपादादिक

१ (1) अभिहेषते=अभितशब्दाय'—इति गोविन्दस्वामी। (2) अभिहेषन् याचमान पिपासस्तु तृडन्वित तस्मै क्षिप्र जल वान्त प्रदद्यात्तादृश तत ॥ इति षड्गुरुशिष्य.।

२ 'अपरिच्छिन्नसमृद्धित्वात्'—इति षड्गुरुशिष्य।

अवयवस्थानीय] हैं । यह प्राण ही सभी अङ्गों में [पक्षपात रहित होकर] समान रूप से संचरित होता है । इसलिए होता यदि चाहे तो वही मन्त्र पढ़ें जिन्हें होत्रकों ने पहले दिन पढ़ा था, अथवा जिनको होता ने पढ़ा था उन्हें ही होत्रक पढ़ें ।

इत्थं परिधानीयाप्रसङ्गेन बुद्धिस्थयाज्याया अनवानन्वमतिशंसनं च निर्णीय, अथ प्रसङ्गादेव परिधानीयास्तुतिमनुसरति—

सूक्तान्तैर्होता परिदधदेत्यथ समान्य एव तृतीयसवने होत्रकाणां परिधानीया भवन्त्यात्मा वै होताऽङ्गानि होत्रकाः समाना वा इमेऽङ्गानामन्तास्तस्मात् समान्य एव तृतीयसवने होत्रकाणां परिधानीया भवन्ति, भवन्ति ॥८॥ इति।

सूक्तानामन्तिमा ऋचः 'सूक्तान्ताः' ताभिर्ऋग्भिर्होता 'परिदधत्' शस्त्रसमापनं कुर्वन्प्रतिवर्तते । 'अथ' होतुरनन्तरं होत्रकाणामुच्यते,—तेषां तृतीयसवने परिधानीयाः 'समान्यः' तुल्या एव भवन्ति । एकाहे याः परिधानीयाः, ता एवाहर्गणेषु भवन्ति । तथा च पूर्वमुक्तम्—'एकाहिका एव तृतीयसवने'[1] इति । तद्वाक्यं होता मह प्रशस्तार्थमनूद्यते । योऽयं होता, सोऽयम् 'आत्मा वै' देह एव होत्रकास्तु हस्तपादाद्यवयवाः । तेषां च हस्तादीनामन्ताः 'समाना' तुल्या एव दृश्यन्ते । दक्षिणहस्तस्यान्तो यादृशः पञ्चाङ्गुल्युपेतः, तादृश एव वामहस्तस्यान्तोऽपि । एवं पादयोः, स्तनकर्णादियुग्मयोस्तुल्यान्तत्वं द्रष्टव्यम् । 'तस्मात् समान्य एव'—इत्युपसंहारः । पदाभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकाया द्वितीयाध्याये (सप्तविंशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ (८) [१९५]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यादिष्टो भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये ऐतरेयब्राह्मणस्य षष्ठपञ्चिकायाः द्वितीयोऽध्यायः (सप्तविंशोऽध्यायः) ॥२॥ [२७]

सूक्त की अन्तिम ऋचा के द्वारा होता को शस्त्र समापन करना चाहिए । तृतीयसवन में होता के बाद होत्रकों की परिधानीया ऋचाएँ भी वही होती हैं । वस्तुतः होता आत्मा है और होत्रक अङ्ग हैं । इन अङ्गों के अन्त समान हैं । इसलिए तृतीय सवन में होत्रकों की परिधानीया ऋचाएं भी समान होती हैं ।

॥ इस प्रकार ऐतरेय ब्राह्मण के षष्ठ पञ्चिका के द्वितीय (सत्ताइसवें) अध्याय की सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ ५ ॥

—: ० :—

1. द्र० द्रष्टः पूर्वम्, पृ० १३१ ।

# अथ तृतीयोऽध्यायः

## प्रथमः खण्डः

— ० —

# [अथ अष्टाविंशोऽध्यायः

## प्रथमः खण्डः]

प्रात सवने होत्रकशस्त्राण्यनुरूपो यस्मिन्नेव स्तुवते (?) स्तोत्रिय एव ॥
आरम्भाद्या आहवन या परिधायावृद्धे स्तोमे स्याददितिशार्धतृचश्च ॥ १ ॥

अथोन्नीयमानसूक्तानि[1] विधातुमुपक्रमते—

**'आ त्वा वहन्तु हरय इति प्रातःसवन उन्नीयमानेभ्योऽन्वाह, वृषण्वती पीतवती सुतवतीर्मद्वती रूपसमृद्धा ॥ इति ।**

यदा चमसा 'उन्नीयन्ते' सोमेन पूर्यन्ते तदानीमध्वर्युणा प्रेषितो मैत्रावरुण 'आ त्वा वहन्तु,–इति[2] सूक्तमनुब्रूयात् । तस्मिन् सूक्ते स्थिता ऋचो वृषशब्देन पीतशब्देन सुतशब्देन मदशब्देन च युक्ता । तत्र द्वितीयपादे 'वृषण सोमपीतये'–इति वृषशब्दपीतशब्दौ विद्येते । चतुर्थ्यामृचि 'सुते हि त्वा हवामहे' इति श्रवणात् सुतशब्दो विद्यते । अष्टमायामृचि 'इन्द्रा मदाय गच्छति'–इति मदशब्दो विद्यते । यद्यप्येते शब्दा सर्वास्वृक्षु न सन्ति, तथाऽपि क्वचिच्छ्रवणात् सर्वा अपि छत्रिन्यायेन तैः शब्दैर्युक्ता भवन्ति । वर्षणक्षम इन्द्र सोम पीत्वा माद्यतीत्यस्यार्थस्योक्तशब्दचतुष्टयेन प्रतीयमानत्वात् विवक्षितार्थानुकूल्येन रूपसमृद्धत्वम् ॥

[होत्रकों के शस्त्र और अन्य अनुवचन]

vi ९ [xxvii १] 'आ त्वा वहन्तु हरय' (हे कामनाओं की वर्षा करने वाले इन्द्र ! तुम्हारे हरि नामक अश्व सोमपान के लिए तुम्हें यहाँ लाव) आदि सूक्त का प्रातःसवन में सोमसे पूर्ण किये जाने वाले चमसों के प्रति [अध्वर्यु के प्रैष पर मैत्रावरुण] पाठ करे । उस सूक्त की ऋचाएँ 'वृष' शब्द से युक्त, 'पीत' शब्द से युक्त, 'सुत' शब्द से युक्त और 'मद' शब्द से युक्त होने से [अर्थात् 'वर्षणक्षम इन्द्र सोम पीकर मद युक्त होते हैं' इस प्रकार विवक्षित अर्थ की अनुकूलता से] रूप समृद्ध हैं ।

---

१ 'उन्नीयमानेभ्यो'वाहा त्वा वह त्वसावि देवमिहापयातेत्यनुसवनम्'–इति आश्व० श्रौ० ५ ५ १ । तानि च सूक्तानीह प्रथमतृतीयचतुर्थखण्डेविधीयन्ते ।

२ ऋ० १ १६.१–९ ।

देवताद्वारा ता ऋच प्रशसति—

ऐन्द्रीरन्वाहैन्द्रो वै यज्ञ ॥ इति ।

'इन्द्र त्वा वृषभम'[1] इन्द्र सुतमे रथे'—इति श्रवणात्[1] इन्द्रदेवताका ऋच सोमयागश्चेन्द्रदेवताक[2] अतस्तत्र ता युज्यन्ते ॥

वह इन्द्र देवताक ऋचाओं को ही बोलता है, और [सोम] याग इन्द्र देवताक है।

छन्दोद्वारा प्रशसति—

गायत्रीरन्वाह, गायत्र वै प्रात सवनम् ॥ इति ।

प्रात सवनस्य गायत्रीछन्दस्कत्वात् तच्छन्दस्का ऋचस्तत्र योग्या ॥

वह गायत्री छन्दस्क ऋचाओं को ही बोलता है और प्रात सवन गायत्री से सम्बन्धित है।

ऋक्सख्याद्वारा प्रशसति—

नव न्यूना प्रात सवनेऽन्वाह, न्यूने वै रेत सिच्यते ॥ इति ।

माध्यन्दिनसवन दशसख्याका वक्ष्यन्ते[3] ता दशसख्यापेक्षया या नवसख्याकास्ता एकयर्चा न्यूना । लोकेऽपि न्यून स्वल्पे गर्भधारणस्थाने रेत सिच्यते । अतो न्यूनत्वमत्र युक्तम् ॥

[माध्यन्दिन सवन में दस सख्या कहेंगे, उससे] न्यून नव सख्याक ऋचाओं का पाठ प्रात सवन में करता है और [लोक में भी] न्यून[4] अर्थात् सकुचित [गर्भ धारण स्थान] में वीर्य का सिचन किया जाता है।

अथ माध्यन्दिन सवन 'अराविद दव गामजीकमच्य'[5] इत्येतत्सूक्तगता दशसख्याका ऋचो विधत्ते—

दश मध्यन्दिनेऽन्वाह, न्यूने वै रेत सिक्त मध्य स्त्रियै[6] प्राप्य स्थविष्ठ भवति ॥ इति ।

लोके स्वल्पे गर्भस्थाने सिक्त रेत स्त्रीशरीरस्य मध्यस्थान प्राप्य गर्भरूपेण 'स्थविष्ठ' अतिस्थूल भवति । अतो रेत स्थानीयाया ऋचो गर्भस्थानीयाया सख्याधिक्य युक्तम्[7] ॥

---

१ ऋ० १ १६ १,२ । द्र० 'द्विदेवत्यैर्चरन्ति'—इत्यादि आश्व० श्रौ० ५ ५ १ ।

२ 'इन्द्र सोमस्य काणुका'—इति ऋ० ८ ७७ ४ । निरु० ५ २ ६ ।

३ द्र० इत परस्तात् पृ० ९४१ (तृतीयखण्ड) ।

४ न्यूने सङ्कुचिते यानौ रेत सत् निषीदति ।
अतो नवत्व यदूना भवेद् जन्मनिमित्तम् ॥ इति षड्गुरुशिष्य ।

५ ऋ० ७ २१ १–१० ।

६ मूले 'स्त्रियै'–इति पदमस्ति, तस्यार्थोऽन्यम् । षष्ठ्यर्थे चतुर्थी (पा सू २ ३ ६२ वा) ।

७ द्वितीयतृतीययो सन्दया द्रष्टव्यम् (आश्व० श्रौ० ५ ५ १४) ।

मध्यन्दिन सवन में दस ऋचाएँ बोलते हैं। और [लोक में भी] स्वल्प [गर्भस्थान] में सिक्त वीर्य स्त्री शरीर के मध्यभाग में आकर गर्भ रूप से अति स्थूल हो जाता है। [अतः वीर्यसेकस्थानीय ऋचाओं का गर्भस्थानीय संख्या'धिक्य युक्तियुक्त है]।

तृतीयसवने 'इहोप यात शवसो नपात' इत्यस्मिन्सूक्तगता नवसंख्याका ऋचो[1] विधत्ते—

नव न्यूनास्तृतीयसवनेऽन्वाह, न्यूनाद्वै प्रजा प्रजायन्ते ॥ इति।

पूर्ववद्दशसंख्यापेक्षयाऽत्र न्यूनत्वम्। लोके हि 'न्यूनात्' अल्पाद् योनिद्वारात् प्रौढा प्रजा उत्पद्यन्ते। अतो गर्भोत्पादनार्थम् अत्र मन्त्रन्यूनत्व युक्तम्[2] ॥

[दस से एक] न्यून नव ऋचाओं का पाठ तृतीयसवन में करता है। क्योंकि संकुचित योनि स्थान से ही सन्तान पैदा होती है।

एतेषु सूक्तेषु मतद्वयमस्ति सपूर्णसूक्तानुवचनमित्येक मतम्। प्रतिसूक्त सप्तानामेवचा-मनुवचनमिति द्वितीयं मतम्। तत्र प्रथम मत प्रशसति—

तद् यदेतानि केवलसूक्तान्यन्वाह, यजमानमेव तद्गर्भं भूत प्रजनयति यज्ञाद् देवयोन्यै ॥ इति।

'केवल'शब्द सम्पूर्णवाची। तदनुवचनेन सम्पूर्णगर्भं प्राप्त यजमानमेव यज्ञरूपाद् 'देवयोन्यै' देवसम्बन्धियोनिस्थानाद् उत्पादयति। अत सम्पूर्णानुवचन युक्तम् ॥

जब वह इन सम्पूर्ण सूक्तों का अनुवचन करता है तो मानो वह उस अनुवचन द्वारा [सम्पूर्ण गर्भ को प्राप्त] यजमान को ही यज्ञ रूप देवसम्बन्धी योनि द्वार से उत्पन्न करता है।

द्वितीय मत दर्शयति—

ते हैके सप्त सप्तान्वाहु,—सप्त प्रातःसवने, सप्त माध्यंदिने, सप्त तृतीयसवने, यावत्यो वै पुरोनुवाक्यास्तावत्यो याज्याः, सप्त वै प्राञ्चो यजन्ति, सप्त वषट्कुर्वन्ति, तासामेता पुरोनुवाक्या इति वदन्तः ॥ इति।

'ते' प्रसिद्धा ऋत्विज 'एके' केचित् तत्तद् यज्ञेषु यथोक्तसूक्तगता ऋचः प्रतिसूक्त सप्त-संख्याका एवान्वाहु, न तु सम्पूर्णसूक्तानि। तस्यैव व्याख्यान 'सप्त प्रात सवने' इत्यादि। 'यावत्यः' इत्यादिना तदीया युक्तिरुच्यते। पुरोनुवाक्यानां याज्यानां च संख्या प्रायेण समानैव दृश्यते। तथा सत्यत्र 'सप्त' संख्याका ऋत्विज –होता, मैत्रावरुण, ब्राह्मणाच्छंसी नेष्टा, पोता, आग्नीध्र, अच्छावाकश्चेत्येते[3] प्राङ्मुखा 'यजन्ति' याज्या पठन्ति। तस्यैव

---

१. ऋ० ४.३५.१–९।

२ द्वितीयचतुर्थयो खण्डया द्रष्टव्यम् (आश्व० श्रौ० ५ ५.१४)।

३. आग्नीध्रीय पूर्वम्। सिक्ताश्वोपरि रौद्रेणेति (५.३४) सर्वत्र। यद् सदसि। प्रत्यङ्मुखो द्वारमपरेण होतु.। दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य। होतृधिष्ण्यामुत्तरेण चतुरः समान्तरान् ब्राह्मणाच्छंसि-पोतृ नेष्ट्रच्छावाकानाम्–इति कात्या० श्रौ० ८ ६ १६–२१।

पृष्ठाख्य लोकम् 'अभि'लक्ष्य नयति । अन्तरिक्षस्य च समीपवर्ती स्वर्गभाग , स नाकपृष्ठाख्यो लोक , स च प्रवृद्धादन्तरिक्षाद् 'ज्येष्ठ' अतिप्रवृद्ध , त दशभि प्राप्य तस्मान्नाकपृष्ठाख्याद् 'अमुष्मात्' स्वर्गाल्लोकादुपरितन बहुभोगयुक्त 'स्वर्ग लोक' तृतीयसूक्तगताभि 'नवभि'[४] ऋग्भिर्यजमानमभिवहति ॥

[नौ सख्या के स्वमत का गुण यह है कि प्रथम सूक्त की] नौ ऋचाओं से मैत्रावरुण इस [यजमान] को इस [भू] लोक से अन्तरिक्ष लोक को लक्ष्य करके ले जाता है, और [द्वितीय-सूक्तगत] दस ऋचाओं के द्वारा उस यजमान को अन्तरिक्ष लोक से [नाक पृष्ठ नामक] उस [स्वर्ग लोक के आभासक व उसके समीपवर्ती] लोक को अभिलक्ष्य करके ले जाता है[५] क्योंकि अन्तरिक्ष लोक [अत्यन्त प्रवृद्ध होने से] ज्येष्ठ है, [इसलिए उसे दस ऋचाओं से प्राप्त करके तृतीय सूक्तगत] नौ ऋचाओं से वह उस [नाकपृष्ठ नामक स्वर्ग] लोक से [ऊपर बहुभोग युक्त] स्वर्ग लोक को यजमान को ले जाता है ।

स्वमते गुणान् दर्शयित्वा तद्राहित्य परमते दर्शयति—

न ह वै ते यजमान स्वर्गं लोकमभि वोह्ळुमर्हन्ति, ये सप्त-सप्तान्वाहु ॥ इति ।

ये' पूर्वपक्षिण प्रतिसूक्त सप्तसख्याका एवान्वाहु , ते' सख्यान्यूनत्वात् पूर्वोक्तरीत्या स्वर्ग प्रति यजमान 'वोह्ळु' वोढु नार्हन्ति ॥

जो [पूर्वपक्षी प्रतिसूक्त] सात-सात सख्याक ऋचाओं के अनुवचन की बात कहते हैं, वे सख्या के न्यून होने से पूर्वोक्त रीति से स्वर्ग के प्रति यजमान को नहीं ढो सकते ।

स्वमत निगमयति—

तस्मात् केवलश एव सूक्तान्यनुब्रूयात् ॥ ९ ॥ इति ।

'केवलश' प्रतिसूक्त सम्पूर्णमेवेत्यर्थ ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ पञ्चिकाया तृतीयाध्याये (अष्टाविंशाध्याये) प्रथम खण्ड ॥ १ ॥ (९) [१९६]

इसलिए सम्पूर्ण सूक्त का ही अनुवचन करना चाहिए ।

॥ इस प्रकार अट्ठाइसवें (तृतीय) अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

---

४ तृतीयसवने 'इहोप यात'—इति नवर्चं सूक्त चतुर्थखण्डे (९४७ पृष्ठे) विधास्यते ।

५ अमु लोक नाकपृष्ठसज्ञ खस्वर्गमध्यगम् ।
खलोकोर्ध्वाश्रिभूतोऽसौ नाकपृष्ठोऽस्ति शोभन ॥ इति षड्गुरुशिष्य ।

## अथ द्वितीयः खण्डः

अथ प्रस्थितयाज्याविषयं चोद्यमुद्भावयति—

अथाह यदैन्द्रो वै यज्ञोऽथ कस्माद् द्वावेव प्रातःसवने प्रस्थितानां प्रत्यक्षादैन्द्रीभ्यां यजतो होता चैव ब्राह्मणाच्छंसी चेदं ते सोम्यं मध्विति होता यजतीन्द्र त्वा वृषभं वयमिति ब्राह्मणाच्छंसी, नानादेवत्याभिरितरे, कथं तेषामैन्द्र्यो भवन्तीति ॥ इति ।

'अथ' उन्नीयमानसूक्तनिर्णयानन्तरं कश्चिद्ब्रह्मवादी चोद्यमाह । यस्मात्कारणाद् यज्ञ 'ऐन्द्रो वै' इन्द्रदेवताक एव । तथैव सति सर्वेषामृत्विजामिन्द्रदेवताका एव याज्या अपेक्षिताः । अत्र तु प्रस्थितसोमानां यागे प्रातःसवनकालीने होतृब्राह्मणाच्छंसिनौ द्वावेव 'प्रत्यक्षात्' श्रोत्रप्रत्यक्षेण वा श्रूयमाणाभ्यामिन्द्रदेवताकाभ्यामृग्भ्यां यजतः, न त्वितरे। 'इदं ते सोम्यमिति'[1] होतुर्याज्या । तस्यास्तृतीयपादे 'जुषाण इन्द्रेति' प्रत्यक्ष एवेन्द्रशब्दः श्रूयते । 'इन्द्र त्वा वृषभं वयमिति'[2] ब्राह्मणाच्छंसिनो याज्या । तत्र स्पष्ट एवेन्द्रशब्दः । 'इतरे' पञ्चर्त्विजो 'नानादेवत्याभि' ऋग्भिर्यजन्ति । तेषामृत्विजां ताः कथमिन्द्रदेवताका भवन्ति ? इति चोद्यम् । तत्र पञ्चानामृत्विजां याज्यास्विन्द्रदेवतात्वं संपादनीयम् ॥

॥ १० [xxviii. २] इस [उन्नीयमान सूक्त के निर्णय] के बाद कोई ब्रह्मवादी प्रश्न करता है कि जब यज्ञ इन्द्रदेवताक है तो कैसे [सभी ऋत्विजों को छोड़कर] प्रातः सवन में दो ऋत्विज ही होता और ब्राह्मणाच्छंसी प्रस्थितयाज्याहुतियों के लिए प्रत्यक्ष इन्द्र को सम्बोधित याज्याओं का प्रयोग करते हैं । 'इदं ते सोम्य' (यह मधुर सोमरस तुम्हारे लिए है) आदि ऋचा होता की याज्या है [इसके तृतीय पाद में प्रत्यक्षतः 'इन्द्र' शब्द है], और 'इन्द्र त्वा वृषभं वयम्' (हे कामवर्षक इन्द्र ! निचोड़े हुए सोम को पीने के लिए हम तुम्हें बुलाते हैं) आदि ऋचा ब्राह्मणाच्छंसी की याज्या है [इसमें स्पष्ट 'इन्द्र' शब्द आया है] । अन्य [पाँच] ऋत्विज नानादेवताक ऋचाओं से [यजन करते हैं] तो प्रश्न है कि उन [ऋत्विजों] की ये ऋचाएँ कैसे इन्द्र-देवताक होती हैं ?

तत्रैकस्या याज्याया तत्संपादयति—

'मित्रं वयं हवामह इति मैत्रावरुणो यजति, वरुणं सोमपीतय इति, यद्वै किंच पीतवत् पदं, तदैन्द्रं रूपं, तेनेन्द्रं प्रीणाति ॥ इति ।

---

१ ऋ० ८.६५.८ । आश्व० श्रौ० ५.५.१८, शाङ्खा० श्रौ० ७.४.३, शु० को० वा०
२ प्रातःसवनो० खा० ७.२० ।
३ माध्यन्दि... १ । आश्व० श्रौ० ५.५.१८, शाङ्खा० श्रौ० ७.४.७ ।

मैत्रावरुणस्य 'मित्र वयमिति'[1] येय याज्या, तस्या वरुणमित्यादिक द्वितीयपादे 'पीतवत्' पिबतिधातुयुक्त यत्किंचित्पदमस्ति, तदिन्द्रसम्बन्धि रूपम्, इन्द्रस्य सोमपानप्रियत्वात्। तेन हि पीतवत्पदेनेन्द्र परितोषयति ॥

[उत्तर] 'मित्र वयम्' (मित्र और वरुण को हम सोम पान के लिए बुलाते हैं) आदि ऋचा मैत्रावरुण की जो याज्या है उसमें 'वरुण सोम पीतये' आदि द्वितीय पाद में 'पिब्' धातु से युक्त जो कुछ भी शब्द है वह [इन्द्र के सोम प्रिय होने के कारण] इन्द्र से सम्बन्धित है। इस प्रकार वह उस [पिब् धातु युक्त पद] से इन्द्र को ही प्रसन्न करता है।

पोतुर्याज्याया ऐन्द्रत्व दर्शयति—

**'मरुतो यस्य हि क्षय इति पोता यजति, स सुगोपातमो जन इतीन्द्रो वै गोपास्तदैन्द्र रूप, तेनेन्द्र प्रीणाति ॥ इति।**

'मरुत' इत्यस्या[2] याज्याया तृतीयपादे गोपा'शब्देनेन्द्रोऽभिधीयते। गोप्तृत्व रक्षकत्वमिन्द्रसम्बन्धि रूपम् तेनेन्द्रस्य प्रीति ॥

'मरुतो यस्य हि क्षये' (हे मरुतो, तुम जिस यजमान के यज्ञगृह में सोमप न करते हो, वह शोभन रक्षकों वाला हो जाता है) आदि ऋचा पोता की जो याज्या है उसके 'स सुगोपातमो जन' आदि द्वितीय पाद में उक्त 'गोपा' [=रक्षक] इन्द्र ही है। अत यहाँ गोप्तृत्व[3] अर्थात् रक्षकत्व इन्द्र से सम्बन्धित है। इस प्रकार वह उस [रक्षकत्व अर्थ वाले गोप शब्द] से इन्द्र को प्रसन्न करता है।

नेष्टुर्याज्याया ऐन्द्रत्व सपादयति—

**'अग्ने पत्नीरिहा वहेति नेष्टा यजति, त्वष्टार सोमपीतय इतीन्द्रो वै त्वष्टा, तदैन्द्र रूप, तनेन्द्र प्रीणाति ॥ इति।**

'अग्ने पत्नी.' इत्यस्या[4] याज्याया तृतीयपादे यस्त्वष्टा, स एवेन्द्र, शत्रूणा तनूकरणाद् इन्द्रस्य त्वष्टृत्वम् ॥

'अग्ने पत्नी' (हे अग्नि ! देवों की कामना करने वाली पत्नियों को इस यज्ञ में ले आओ, और सोमपान के लिए त्वष्टा को यहाँ ले आओ) आदि ऋचा नेष्टा की जो याज्या है, उसके 'त्वष्टार सोमपीतय' आदि पाद में उक्त 'त्वष्टा' ही इन्द्र है। [शत्रुओं को कम करने के कारण] वह इन्द्र से सम्बन्धित है। अत उस [त्वष्टृत्व] से वह इन्द्र को ही प्रसन्न करता है।

---

१ ऋ० १ २३ ४। शाङ्खा० श्रौ० ७ ४ ६।
२ ऋ० १ ८६ १। शाङ्खा० श्रौ० ७ ४ ८।
३ गुपे पचाद्यचो दीर्घ सम्यगिन्द्रोऽभिरक्षक। इति षड्गुरुशिष्य।
४ ऋ० १ २२ ९। शाङ्खा० श्रौ० ७ ४ ९।

आग्नीध्रस्य याज्याया ऐन्द्रत्वं संपादयति—

'उक्षान्नाय वशान्नायेत्याग्नीध्रो'[1] यजति, सोमपृष्ठाय वेधस इतीन्द्रो वै वेधा-स्तदैन्द्रं रूप, तेनेन्द्रं प्रीणाति ॥ इति ।

'उक्षान्नायेति' याज्याया द्वितीयपादे यो वेधाः, स एवेन्द्रः, इन्द्रस्य जगद्व्यवस्था-विधायकत्वेन वेधःशब्दवाच्यत्वात् ॥

'उक्षान्नाय वशान्नाय' (भोजन करने योग्य हवि वाले, अभिलाषा करने योग्य अन्न वाले, सोम युक्त पीठ वाले अभिलाषाओं के विधाता) आदि ऋचा आग्नीध्र की जो याज्या है, उसके 'सोमपृष्ठाय वेधसे' आदि द्वितीय पाद में उक्त 'वेधा' ही इन्द्र है[2]। [इन्द्र के जगत् की व्यवस्था के विधायक होने से] वह इन्द्र से सम्बन्धित है। अतः उस ['वेधः' शब्द के वाच्य] से इन्द्र को ही प्रसन्न करता है।

अच्छावाकस्य याज्याया ऐन्द्रत्व संपादयति—

'प्रातर्यावभिरा गत देवेभिर्जेन्यावसू, इन्द्राग्नी सोमपीतय इति स्वयं समृद्धाऽच्छावाकस्य ॥ इति ।

हे इन्द्राग्नी 'जेन्यावसू' जेन्य जेतव्य वसु धन ययोस्तौ तादृशौ भूत्वा 'प्रातर्यावभिः' प्रातःसवनगामिभि देवेभि देवैः सह 'सोमपीतये' सोमपानार्थम् 'आगतम्' आगच्छतम्। अस्यामृचि 'इन्द्राग्नी' श्रवणेऽपि इन्द्रशब्दस्य प्रत्यक्षस्य विद्यमानत्वात् स्वयमेवेन्द्रत्वाय 'समृद्धा' संपूर्णा न त्वैन्द्रत्वं संपादनीयमस्ति[3] ॥

'प्रातर्यावभिरा गतम्' (हे इन्द्र और अग्नि ! शत्रु का धन जीतकर आप दोनों प्रातः सवन में आने वाले देवों के साथ सोमरस का पान करने के लिए आयें) आदि [में इन्द्र शब्द ही प्रत्यक्षतः होने से] स्वयं समृद्ध ऋचा अच्छावाक [की याज्या है]।

ऋचा संपादितमैन्द्रत्वं निगमयति—

एवमु हैता ऐन्द्रयो भवन्ति ॥ इति ।

इस प्रकार ये सब मन्त्र इन्द्र-देवताक ही होते हैं।

ताभ्य्वेव देवतान्तरप्रीतिं दर्शयति—

यन्नानादेवत्यास्तेनान्या देवताः प्रीणाति ॥ इति ।

मित्रावरुणौ मरुतोऽग्निर्वेधा इन्द्राग्नी इत्येताभिः 'नानादेवताभिः' युक्ता ऋच इति यदस्ति, तेनेन्द्रव्यतिरिक्ता देवतास्तोषयति ॥

---

1. ऋ० ८.४३.११ । आश्व० श्रौ० ५.५.१८; शाङ्खा० श्रौ० ७.४.१० ।
2. वेधा निर्माता हि स्यात् विधर्तिन्द्रो हि सर्वतः । इति षड्गुरुशिष्यः ।
3. ऋ० ८.३८.७ । आश्व० श्रौ० ५.७.६; शाङ्खा० श्रौ० ७.७.२ ।

[मित्र एवं वरुण, मरुत और अग्नि वेधा, इन्द्र और अग्नि आदि] नाना देवों से युक्त ऋचाएँ जो हैं उनसे [इन्द्र को छोड़कर] अन्य देवों को सन्तुष्ट करता है।

तत्रत्य छन्द प्रशंसति—

यद् गायत्र्यस्तेनाग्नेय्य ॥ इति।

अग्निगायत्र्यो प्रजापतिमुखजत्वसम्बन्धाद्[1] गायत्रीछन्दसा तासामग्निदेवताकत्व सपद्यते ॥

जो गायत्री छन्दस्क ऋचाएँ हैं उनसे [प्रजापति के मुख से उत्पन्न होने के कारण] अग्निदेवतापरत्व सम्पादित है।

उक्तां प्रशंसां निगमयति—

एतद् हैताभिस्त्रयमुपाप्नोति ॥ १० ॥ इति।

'एताभिऋग्भिरेतद् ह' पूर्वोक्तमेव 'त्रय' त्रिविधदेवतासबन्धम्व प्राप्नोति। तत्र तत्र प्रतीयमाननानाविधदेवताकत्व, पूर्वोक्तरीत्या सपादितमैन्द्रत्व, गायत्रीद्वारेणाग्नेयत्व चेति त्रय वेदितव्यम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीय 'वेदार्थप्रकाशे' एतरेयब्राह्मणभाष्य षष्ठ पञ्चिकाया तृतीयाध्याये (अष्टाविंशाध्याय) द्वितीयः खण्ड ॥२॥ (१०) [१९७]

इस प्रकार इन [ऋचाओं] से पूर्वोक्त तीन देवों के सम्बन्ध को प्राप्त करता है [अर्थात् पूर्वोक्त रीति से सम्पादित 'इन्द्रत्व' को एव गायत्री छन्द द्वारा अग्नि देवताकत्व' को और उन-उन प्रतीयमान अर्थों से नाना देवताकत्व को प्राप्त करता है]।

॥ इस प्रकार अट्ठाइसवें (तृतीय) अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥२॥

## अथ तृतीयः खण्डः

अथ माध्यदिन उद्गायमानसूक्त विधत्ते—

'असावि देव गोऋजीकमन्ध' इति मध्यदिन उद्गीयमानेभ्योऽन्वाह, वृषण्वतीः पीतवती. सुतवतीर्मद्वती रूपसमृद्धा ॥ इति।

माध्यदिने सवने अध्वर्युणा प्रेषितो असावि देवम्' इत्यादिकं[2] सूक्तमनुब्रूयात्। तत्रत्या ऋच वृष पीत सुत मद शब्दोपेता। पूर्वत्र 'दश मध्यदिनेऽन्वाहेति' सख्यैवोक्ता, न तु सूक्त दर्शितम्[3]। अत्र तु 'असावि देवमिति' सूक्त प्रदश्यते। अस्य सूक्तस्य द्वितीयस्यामृचि 'वृषणो नृपाच' इति वृषण्वच्छब्द श्रुत तृतीयस्यामृचि 'रध्यो न धेना' इति धेनाशब्द पिबतिधात्वर्थ। तेन पीतवत्त्वम्। धट्पान' इति हि धातु[4]। 'असावीति'

१ सं० स० ७ १ १.८, द्र० १ मा० पृ० १७। २ ऋ० ७ २१ १।
३ द्र० इत पूर्वम्, पृ० ९३६। ४ भ्वा० ९०२।

सुनोतिधातोः[1] श्रूयमाणत्वात् सुतवत्त्वम्। प्रथमाया 'र्द्धोऽवसाने 'अन्धसो मदेषु'–इति मद्वत्त्वं श्रुतम्। रूपसमृद्धत्वं पूर्ववद् योज्यम्॥

मध्यन्दिनसवन' के उक्थीयमान सूक्त –

११. ११ [xxviii. ३] 'असावि देव' (दिव्य एवं गव्य मिश्रित सोमरस निचोड़ा गया) आदि सूक्त [की दस ऋचा] का सोम से पूर्ण किये जाने वाले चमसों के प्रति माध्यन्दिन [सवन] में [अध्वर्यु के प्रेष पर मैत्रावरुण] पाठ करे। उस सूक्त की ऋचाएं 'वृष' शब्द से युक्त, 'पीत' शब्द से युक्त, 'सुत' शब्द से युक्त और 'मद्' शब्द से युक्त होने से [अर्थात् वर्षणक्षम इन्द्र सोम पीकर मदयुक्त होते हैं—इस प्रकार विवक्षित अर्थ की अनुकूलता से] रूप समृद्ध हैं।

देवताद्वारा छन्दोद्वारा च ता ऋचः प्रशंसति—

ऐन्द्रीरन्वाहेन्द्रो वै यज्ञस्त्रिष्टुभोऽन्वाह, त्रैष्टुभं वै माध्यंदिनं सवनम्॥ इति।

द्वितीयपादे 'अस्मिन्निन्द्र' इति श्रवणादैन्द्रत्वम्। एवमृगन्तरेष्वप्युदाहरणीयम्। माध्यंदिनसवनस्य त्रैष्टुभत्वं प्रसिद्धम्॥

वह इन्द्र-देवताक ऋचाओं को ही बोलता है, क्योंकि [सोम] याग इन्द्र-देवताक है। वह त्रिष्टुप् छन्दस्क ऋचाओं को ही बोलता है क्योंकि माध्यन्दिन सवन त्रिष्टुप् से सम्बन्धित है।

मद्वतीरिति यदुक्तं, तस्याक्षेपमुद्भावयति—

तदाहुर्यत्तृतीयसवनस्यैव रूपं मद्वद्य कस्मान्मध्यंदिने मद्वतीरनु चाह यजन्ति चाभिरिति॥ इति।

तृतीयसवने सर्वेषां देवानां सोमपानादूर्ध्वं हर्षसंभवात् मद्वत्त्वं तृतीयसवनस्यैव रूपम्। तथा सति मध्यंदिने सवने मद्वतीनामृचामनुवचनम् 'आभि' मद्वतीभिर्यजनं च कस्मात् कारणात्' ? इति चोद्यम्॥

उस सम्बन्ध में कुछ याज्ञिक प्रश्न करते हैं कि [तृतीयसवन में सभी देवों के सोम-पान के अनन्तर मदयुक्त होने से] जब 'मद्' शब्द युक्तत्व तृतीयसवन का ही रूप है तो कैसे माध्यन्दिनसवन में 'मद्' शब्द युक्त ऋचाओं का अनुवचन होता है? और किस कारण 'मद्' शब्द युक्त ऋचाओं से वे यजन करते हैं?

तस्योत्तरमाह—

माद्यन्तीव वै मध्यंदिने देवताः, समेव तृतीयसवने मादयन्ते, तस्मान्मध्यंदिने मद्वतीरनु चाह यजन्ति चाभिः॥ इति।

---

१. रवा० १।

माध्यन्दिने सवनेऽपि देवाना सोमपानसद्भावात्तत्र माद्यन्त्येव तृतीयसवने तु निरवशेषाणा देवानां सोमपानसपत्त्या 'समादयन्ते' सभूय हृष्यन्तीत्येतावानत्र विशेष । तस्मात् मोदस्य हर्षस्य मध्यन्दिनसवनेऽपि सद्भावात् तत्र 'मद्वती ' ऋचो मैत्रावरुणोऽन्वाह । होत्रादयश्च सप्तर्त्विज 'आभि.' मद्वतीभिर्यजन्ति ॥

माध्यन्दिनसवन में देवताओं के सोमपान में सद्भाव के कारण ही वे ऋचाऐं 'मद्' शब्द युक्त ही हैं। [विशेषता इतनी ही है कि] तृतीयसवन में भी सभी [देवताओं के सोमपान रूप सम्पत्ति से वे सभी इकट्ठे होकर] मद युक्त होते हैं। इसलिए मध्यन्दिन [सवन] में [भी 'मोद' के सद्भाव के कारण] 'मद्' शब्द युक्त ऋचा का ही वह [मैत्रावरुण] अनुवचन करता है और इस प्रकार वे [होता आदि सात ऋत्विज] इन ['मद्' शब्द युक्त ऋचाओं] से ही यजन भी करते हैं।

अथ ता: प्रस्थितयाज्या विधत्ते—

ते वै खलु सर्व एव माध्यन्दिने प्रस्थितानां प्रत्यक्षादैन्द्रीभिर्यजन्ति ॥ इति ।

'ते' होत्रादय· सप्तर्त्विज सर्वेऽपि 'माध्यन्दिने सवने प्रस्थितसामाना सम्बन्धिनीभि 'प्रत्यक्षात्' प्रत्यक्षेण पठ्यमानेनेन्द्रशब्देन प्रयुक्ताभिरिन्द्रदेवताकाभिर्ऋग्भिर्यजेयु ॥

वे [होता आदि सात ऋत्विज] सभी माध्यन्दिन [सवन] में प्रस्थितसोमों से सम्बन्धित आहुतियों के लिए प्रत्यक्ष रूप से पठ्यमान ['इन्द्र' शब्द युक्त एवं] इन्द्र-देवताक ऋचाओं से यजन करते हैं।

तेषु सप्तस्वृक्षु मध्ये होतृ-मैत्रावरुण-ब्राह्मणाच्छंसिना त्रयाणा सवनीयासु याज्यासु न केवलमैन्द्रत्व किंतु 'अभितृण्णवत्त्वम्' अपि, इति—अपर विशेष दर्शयति—

अभितृण्णवतीभिरेके ॥ इति ।

अभिपूर्वस्य तृदिधातो रूप यास्वस्ति, ता 'अभितृण्णवत्य' ॥

कुछ याज्ञिक 'अभि' उपसर्ग पूर्वक 'तृद्' धातु युक्त ऋचाओं द्वारा यजन करते हैं।

तत्र होतुर्याज्या दर्शयति—

'पिबा सोममभि यमुग्र तर्द इति'[1] होता यजति ॥ इति ।

तत्राभिशब्दस्य तर्दशब्दस्य च विद्यमानत्वादभितृण्णवत्त्वम् ॥

(।) होता 'पिबा सोममभि' (हे उग्र इन्द्र ! जिसका तुमने भेदन किया है, तुम उस सोमरस को पीओ) आदि ऋचा से यजन करता है।

---

१ ऋ० ६ १७ १ । आश्व० श्रौ० ५ ५ १९ । शाङ्खा० श्रौ० ७ १७ ५ । तु० गो० ब्रा० ७ २१ ।

मैत्रावरुणस्य याज्यां दर्शयति—

'स ईं पाहि य ऋजीषी तरुत्र'[1] इति मैत्रावरुणो यजति ॥ इति ।

'स ईं पाहि' इत्यस्या ऋचश्चतुर्थे पादे 'अभितृन्धि वाजानिति' श्रवणादभितृण्वद्वत्त्वम् ॥

(ii) मैत्रावरुण 'स ईं पाहि' (हे सोमरस को धारण करने वाले एवं शत्रुओं का छेदन करने वाले इन्द्र ! तुम इसे पीओ) आदि ऋचा से यजन करता है।

ब्राह्मणाच्छंसिनो याज्यां दर्शयति—

'एवा पाहि प्रत्नथा मन्दतु त्वेति'[2] ब्राह्मणाच्छंसी यजति ॥ इति ।

'एवा पाहि' इत्यस्यामपि चतुर्थपादे 'धनि गा इन्द्र तृन्धीति' श्रवणादभितृण्वत्त्वम्। एतासोनृत्विजोऽभिप्रेत्य 'अभितृण्वतीभिरेके' इत्युक्तम्[3] ॥

(ii) ब्राह्मणाच्छंसी 'एवा पाहि' (हे इन्द्र ! प्राचीन समय के समान ही यह हमारा सोम पीओ, यह सोम तुम्हें प्रसन्न करे) आदि ऋचा से यजन करता है [इस प्रकार कुछ याज्ञिक इन तीन ऋत्विजों से 'अभि-तर्द' युक्त ऋचा से यजन करने को कहते हैं]।

पोतुर्याज्यां दर्शयति—

'अर्वाङेहि सोमकाम त्वाहुरिति'[4] पोता यजति ॥ इति ।

(iv) पोता 'अर्वाङेहि सोमकाम' (हे इन्द्र ! हमारे सम्मुख आओ, क्योंकि प्राचीन लोगों ने तुम्हें सोम प्रिय कहा है) आदि ऋचा से यजन करता है।

नेष्टुर्याज्यां दर्शयति—

'तवायं सोमस्त्वमेह्यर्वाङिति'[5] नेष्टा यजति ॥ इति ।

(v) नेष्टा 'तवायं सोम.' (यह सोम तुम्हारा है, तुम इसके सामने आओ) आदि ऋचा से यजन करता है।

अच्छावाकस्य याज्यां दर्शयति—

'इन्द्राय सोमाः प्रदिवो विदाना'[6] इत्यच्छावाको यजति ॥ इति ।

(vi) अच्छावाक 'इन्द्राय सोमाः' (प्राचीन काल से इन्द्र के लिए सोमरस दिया गया था) आदि ऋचा से यजन करता है।

आग्नीध्रस्य याज्यां दर्शयति—

'आपूर्णो अस्य कलशः स्वाहेत्याग्नीध्रो'[7] यजति ॥ इति ।

१ ऋ० ६.१७.२। आश्व० श्रौ० ५.५.१८। शाङ्खा० श्रौ० ७.१७.६।
२ ऋ० ६.१७.३।　　३ द्र० इत पूर्वम्, पृ० ९४५।　　४ ऋ० ३.१०४.१।
५ ऋ० ३.३५.६।　　६ ऋ० ३.३६.२।　　७ ऋ० ३.३२.१५।

(११) आग्नीध्र 'आपूर्णो अस्य कलशः' (हे इन्द्र! तुम्हारा घड़ा सोम रस से परिपूर्ण है और तुम्हारे पीने के लिए 'स्वाहा' शब्द भी कहा जा चुका है) आदि ऋचा से यजन करता है।

उक्तानां सप्तानां याज्यानां मध्ये 'पिबा सोमं' 'स ईं पाहि' 'एवा पाहि'—इति तिस्र ऋचोऽभितृण्णवत्त्वेन प्रशंसति—

**तासामेता अभितृण्णवत्यो भवन्तीन्द्रो वै प्रातःसवने न व्यजयत, स एताभिरेव माध्यंदिनं सवनमभ्यतृणद्यदभ्यतृणत्, तस्मादेता अभितृण्णवत्यो भवन्ति ॥ ११ ॥** इति।

यथाभिपूर्वं तृदिधात्वनुयुक्तत्वादभितृण्णवत्त्वं यथा भवति तथैव धात्वर्थसंभवादप्यभितृण्णवत्त्वं द्रष्टव्यम्। कथमेतदिति? तदुच्यते इन्द्रः पुरा प्रातःसवने समाप्ते सति तावता 'न व्यजयत' विजयं न प्राप्तवान्। मध्यंदिनसवनस्य गुरुत्वेन गलितत्वात्। तदानीमिन्द्रस्तस्य माध्यंदिनसवनस्य स्थितिसिद्ध्यर्थं 'पिबा सोमम्' इत्यादिभिस्तिसृभिर्ऋग्भिर्माध्यंदिनसवनम् 'अभितः' प्रथमतस्तीयमध्य अतृणत् मर्दनमकरोत् दृढबन्धेन स्थितं कृतवानित्यर्थः। तस्मात् मर्दनस्यार्थस्य युक्तत्वादेतासां तिसृणामभितृण्णवत्त्वम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये षष्ठ पञ्चिकायां तृतीयाध्याये (अष्टाविंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (११) [१९८]

उन [सातों याज्याओं] के मध्य 'अभि तर्द' शब्द युक्त ये ['पिबा सोमं', 'स ईं पाहि' और 'एवा पाहि' आदि तीन] ऋचाएँ होती हैं, क्योंकि प्राचीन काल में एक बार इन्द्र प्रातःसवन की समाप्ति पर विजय को प्राप्त न हुए। किन्तु उन्होंने इन [तीन] ऋचाओं से मध्यन्दिनसवन को दृढ़ बन्धन युक्त किया। जो दृढबन्धन से युक्त किया इसलिए [अनुप्राणित करने के कारण] ये ऋचाएँ 'अभि तृणवती' होती हैं।

॥ इस प्रकार अट्ठाइसवें (तृतीय) अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथ तृतीयसवन उन्नीयमानसूक्तं विधत्ते—

**'इहोप यात शवसो नपात' इति तृतीयसवन उन्नीयमानेभ्योऽन्वाह, वृषण्वती पीतवती सुतवतीर्मद्वती रूपसमृद्धास्ता ऐन्द्रार्भव्यो भवन्ति ॥** इति।

अध्वर्युणा चमसोन्नयनकाले प्रेषितो मैत्रावरुणः 'इहोप यातेति' सूक्तमनुब्रूयात्। तत्रत्या ऋचो वृष पीत सुत मद शब्दोपेताः। 'आ तक्षत वृषण' इति वृषञ्शब्दः 'सुतस्य पीतिरिति' सुनोतिधातुना पिबतिधातुना च योगः। 'अनु वो मदासः' इति

१ ऋ० ४ ३५ १-९। आश्व० श्रौ० ५ ५ १४। कौ० ब्रा० ३० १।

मदिपानुयोगः । तत्रत्या ऋचः 'ऐन्द्रार्भव्यः' । इन्द्रश्च ऋभवश्च तासां देवताः, 'सौधन्वना ऋभवः' 'गमन्त्विन्द्रमिति' तत्र श्रवणात् ॥

४. १२ [४४३॥ . ४] 'इहोप यात' (हे बल के पुत्र ऋभुओ ! तुम इस यज्ञ में आओ] आदि सूक्त [की नौ ऋचा] का सोम से पूर्ण किये जाने वाले चमसों के प्रति तृतीय सवन में [अध्वर्यु के प्रैष पर मैत्रावरुण] पाठ करे । उस सूक्त की ऋचाएं 'वृष' शब्द से युक्त, 'पीत' शब्द से युक्त, 'सुत' शब्द से युक्त और 'मद्' शब्द से युक्त होने से रूप समृद्ध हैं । ये ऋचाएं इन्द्र और ऋभु-देवताक हैं ।

ऋभुदेवताप्रसङ्गेन तृतीयसवनगते पवमानस्तोत्रे किञ्चिच्चोद्यमुद्भावयति—

**तदाहुर्यन्नार्भवीषु स्तुवतेऽथ कस्मादार्भव. पवमान इत्याचक्षत इति ॥** इति ।

'तत्' तस्मिन्नृभुसम्बन्धविषये चोद्यमाहुः । यस्मात्कारणादृभुदेवताकासु सामगास्तृतीयसवने पवमानस्तोत्रेण न स्तुवते, किंतु 'स्वादिष्ठया मदिष्ठया'–इत्यन्यदेवताकास्वेव स्तुवते[1] । अथैवं सति कस्मात् कारणात् पवमानस्तोत्रस्यार्भवत्वमाचक्षते ? इति चोद्यम् ॥

उस [ऋभु देवता के प्रसङ्ग से तृतीयसवनगत पवमान स्तोत्र] में प्रश्न करते हैं कि–जब [साम गायक तृतीयसवन में] ऋभु-देवताक ऋचाओं से स्तुति नहीं करते हैं; तो क्यों इसे आर्भव-पवमान' कहते हैं ?

तस्योत्तरमाह—

**प्रजापतिर्वै पिता ऋभून् मर्त्यान् सतोऽमर्त्यान् कृत्वा तृतीयसवन आभजत्, तस्मान्नार्भवीषु स्तुवतेऽथार्भवः पवमान इत्याचक्षते ॥** इति ।

पुरा प्रजापतिः पिता भूत्वा 'मर्त्यान्' मनुष्यान् सतः 'ऋभून्' 'अमर्त्यान्' देवान् कृत्वा तृतीयसवने 'आभजत्' भागिनोऽकरोत् । तदिदमुपाख्यानम् 'आर्भवं शंसति' इत्यत्र प्रदर्शितम्[2] । एवं च सत्यृभूणां स्तोत्रदेवतात्वाभावात् 'आर्भवीषु' ऋक्षूद्गातारो न स्तुवते । 'अथ' अप्यृभूणां तृतीयसवनसम्बन्धसद्भावात् तृतीयसवनगतस्य पवमानस्तोत्रस्याप्यार्भवत्वं व्यवहरन्ति ॥

प्राचीन काल में पिता होकर प्रजापति ने मर्त्य [=मरणशील] ऋभुओं को भी अमर्त्य [देव] करके तृतीय सवन में भागीदार बनाया । इस [प्रकार ऋभुओं के स्तोत्र-देवतात्व अभाव के] कारण [उद्गाता] ऋभु-देवताक ऋचाओं में स्तुति नहीं करते । फिर भी [ऋभुओं के तृतीय सवन से सम्बन्धित होने के कारण तृतीयसवनगत पवमान स्तोत्र को भी] 'आर्भव-पवमान' कहते हैं ।

१. उ० आ० १.१.१५, ता० ब्रा० ८.४.५ (द्र० द्रष्ट. पूर्वम्, पृ० ४३०) ।
२. द्र० इतः पूर्वम्, पृ० ४८५ ।

प्रासङ्गिक परिसमाप्य प्रकृत एव सूक्ते चोद्यमुद्भावयति—

अथाह यद्यथाछन्दस पूर्वयोः सवनयोरन्वाह,-गायत्रीः प्रातःसवने, त्रिष्टुभो माध्यंदिने,ऽथ कस्माज्जागते सति तृतीयसवने, त्रिष्टुभोऽन्वाहेति ॥ इति ।

'अथ' उन्नीयमानसूक्तविधानानन्तरं तत्र कश्चिद् ब्रह्मवादी चोद्यमाह । 'यद्' यस्मात् कारणाद् 'यथाछन्दस' तत्र-तत्रोचित छन्दोऽनतिक्रम्य सवनद्वये गायत्रीस्त्रिष्टुभश्च क्रमेणान्वाह, तृतीयसवन तु जागतम् । तथा सति जगतीमतिक्रम्य 'इहोप यात'–इत्याद्यास्त्रिष्टुभ कस्मादनुब्रूते ? इति चोद्यम् ॥

इस [उन्नीयमान सूक्त के विधान] के बाद ब्रह्मवादी [छन्द के विषय में] प्रश्न करते हैं कि जब पहले दो सवनों में छन्दों के अनुसार वह प्रात.सवन में गायत्री छन्द वाली ऋचाओं का और मध्यन्दिन सवन में त्रिष्टुप् छन्द वाली ऋचाओं का पाठ करता है तो वह क्यों तृतीय सवन में भी त्रिष्टुप् छन्द वाली ही ['इहोप यात' आदि] ऋचाओं का पाठ करता है जबकि वह [तृतीय सवन] तो जगती से सम्बन्धित है ?

तत्रोत्तर दर्शयति—

धीतरस वै तृतीयसवनमधैतदधीतरस शुक्रियं छन्दो यत्त्रिष्टुप्, सवनस्य सरसताया इति ब्रूयादथो इन्द्रमेवैतत्सवनेऽन्वाभजतीति ॥ इति ।

यदेतत् तृतीयसवन, तदेतद् 'धीतरस' तदीयो रसो गायत्र्या पीत सोमाहरणकाले पद्भ्या सवनद्वय मुखेन तृतीयसवन च गृहीत्वा तत्रत्य रस गायत्री पीतवती । तथा चान्यत्र श्रूयते—'पद्भ्या द्वे सवने समगृह्णात् मुखेनैकम् यत् मुखेन समगृह्णात्, तदधयत्, तस्माद् द्वे सवने शुक्रवती प्रात सवन माध्यदिन च, तस्मात् तृतीयसवन ऋजीषमभिषुण्वन्ति, धीतमिव हि मन्यन्ते'[1] इति । तथैव त्रिष्टुप्छन्दो यदस्ति, एतद् 'अधीतरसम्' अपीतरस, माध्यदिनसवनसम्बन्धित्वात् । अत एतच्छुक्रिय रसवद्युक्त 'शुक्रियम्' अतोऽस्य तृतीयसवनस्य सरसत्वार्थं त्रिष्टुभोऽन्वाहेत्युत्तर ब्रूयात् । 'अथो' अपि च तेन सरसत्वेनेन्द्रमेव तृतीयसवने भागवन्त करोति, त्रिष्टुप्छन्दस ऐन्द्रत्वात् । तेनेन्द्रभागत्व युक्तम्[2] ॥

[वस्तुत सोमाहरण काल में गायत्री द्वारा तृतीय सवन के रस को पी लेने के कारण] तृतीय सवन पीए हुए रस वाला है और जो त्रिष्टुप् छन्द है वह [माध्यन्दिन सवन से सम्बन्धित होने के कारण] पीए हुए रस वाला नहीं है, अपितु यह शुद्ध रस से परिपूर्ण है । इसलिए [तृतीय] सवन की सरसता के लिए ही त्रिष्टुप् छन्द का पाठ करे–यह उत्तर देना चाहिए । और फिर [उस सरसता से] वह इन्द्र को ही इस तृतीय सवन में भागीदार बनाता है [क्योंकि त्रिष्टुप् छन्द इन्द्र देवता से सम्बन्धित है । अत उनका भागत्व युक्तियुक्त है] ।

---

१ तै० स० ६.१.७४ ।

२ तेनेन्द्रामंवत्व युक्तम्–इति साम० सपा० ऐशि० पाठ ।

उक्तं चोद्यं समाधाय प्रस्थितयाज्याविषये चोद्यमुद्भावयति—

**अथाह यदैन्द्रार्भवं वै तृतीयसवनमथ कस्मादेष एव तृतीयसवने प्रस्थितानां प्रत्यक्षादैन्द्रार्भव्या यजतीन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमिति होतैव; नानादेवत्याभिरितरे; कथं तेषामैन्द्रार्भव्यो भवन्तीति ॥ इति ।**

'अथ' उन्नीयमानसूक्तकथनानन्तरं कश्चिद् ब्रह्मवादी चोद्यमाह । 'यद्' यस्मात् कारणात् तृतीयसवनम् 'ऐन्द्रार्भवम्', तच्च पूर्वमुपपादितम्[1] । एवं सत्येक एव होता प्रस्थितसोमानां 'प्रत्यक्षात्' प्रत्यक्षेण मुख्येनैवेन्द्रशब्देन ऋभुशब्देन च युक्तयर्चा यजति । 'इन्द्र ऋभुभिः'—इत्याद्या[2] सेयमृगवगन्तव्या । होतैव तथा यजति, न त्वितरे षड् ऋत्विजः, ते तु नानाविधदेवताभिर्वषट्कुर्वाणाभिर्ऋग्भिर्यजन्ति । तस्मात्कारणादेतत् कथं सम्पन्नम् ? किं तेषां षण्णामृत्विजां सम्बन्धिन्यो याज्याः कथमैन्द्रार्भव्यो द्विविधदेवताका भवन्ति ? इति चोद्यम् ॥

अब इस [उन्नीयमान सूक्त कथन] के बाद कोई ब्रह्मवादी [प्रस्थित याज्या के विषय में] प्रश्न करते हैं कि जब तृतीय सवन इन्द्र और ऋभु देवता से सम्बन्धित है, तब वह होता ही अकेले क्यों तृतीयसवन में प्रस्थित याज्याहुतियों के लिए प्रत्यक्ष रूप से इन्द्र एवं ऋभु को सम्बोधित 'इन्द्र ऋभुभिः' (हे इन्द्र ! तुम अन्न वाले ऋभुओं के साथ मिल-कर जल द्वारा अच्छी तरह से सिंचित) आदि ऋचा का पाठ करता है ? जब कि अन्य छः ऋत्विज नाना देवताओं से सम्बन्धित याज्याओं को बोलते हैं और फिर, उन छः ऋत्विजों की याज्या कैसे इन्द्र और ऋभु देवता-द्वय से सम्बन्धित होती हैं ?

तत्र होतुर्याज्याया ऐन्द्रार्भवत्वेन परितोषात्ता सर्वयाज्यास्विन्द्रेतरेषां याज्यासु प्रत्येकमैन्द्रा-र्भवत्वं दर्शयितुकामः प्रथमतो मैत्रावरुणस्य याज्यायां तद्दर्शयति—

**इन्द्रावरुणा सुतपाविमं सुतमिति मैत्रावरुणो यजति; युवो रथो अध्वरं देववीतय इति बहूनि वाऽऽह तदृभूणां रूपम् ॥ इति ।**

'इन्द्रावरुणा' इत्येतस्यां याज्यायां[3] 'युवो रथो' इत्यस्मिन् पादे 'देववीतये' इति पदं विद्यते । देवानां वीतिः प्राप्तिर्देववीतिरिति तस्य समासः[4] । तस्य समासे षष्ठीबहुवचनान्तेन

---

1. द्र० इतः पूर्वम्, ९४७ पृ० ।    2. ऋ० ३.६०.५ ।
3. ऋ० ६.६८.१० ।
4. (i) देवानां वीतय=भक्षणायेति । बहुवचनान्तस्य समासः । तत्र किम् बहूनिवाह= इव=पुन—इति षड्गुरुशिष्यः । किन्तु सायणमते 'बहूनि' इति भेदः । (ii) देववीतये= देवानां पुनाय (? ...) देवस्य गम्यते । ननु द्विवचनबहुवचनान्तानां वृत्तिप्रति-षेधादेव एव दशा भवेत्, सत्यम्, 'इह तु बहुषु एव सामान्योपदेशः' मात्रं देवदेव-मिति । तस्माद् देववीतय इति बह्वाह । इदमृभूणां रूपं द्योतयति । तच्च बहुत्व-भूमा रूपं बहुत्वाद्भिन्नत्वात् ऋभव इति । एवमुत्तरेष्वपि द्रष्टव्यम्—इति गोविन्दस्वामी ।

शब्देन बहून्येव रूपाणि प्रतीयन्ते। तत्र बहुत्वमृभुणा स्वरूपम् मनुष्यरूपाणामृभुशब्द-वाच्यानां महर्षीणां बहुत्वात्। तस्मादर्थत ऋभुसद्भावाद् इन्द्रशब्दस्य च साक्षाच्छ्रवणाद् इयमैन्द्रार्भवी ॥

[यहाँ होता की याज्या तो इन्द्र एवं ऋभु से सम्बन्धित है। अब अन्य ऋत्विजों की याज्या कैसे इन्द्र और ऋभु से सम्बन्धित है? यह बताने के लिए प्रथमत मैत्रावरुण की याज्या के बारे में उत्तर देते हैं]—'इन्द्रावरुणा' (हे सोमकर्ता इन्द्र एवं वरुण! इस मदयुक्त एवं निचोड़े हुए सोमरस को पीओ) आदि ऋचा से मैत्रावरुण यजन करता है। इस ऋचा के 'युवो रथो' (तुम्हारा रथ देवों के साथ सोमपान के लिए यज्ञ को) आदि तृतीय पाद का 'देववीतये' पद बहुवचनान्त है, और जो यह बहुत्व इसमें उक्त है वही ऋभुओं का स्वरूप है [इस प्रकार अर्थत ऋभुओं के सद्भाव के कारण और प्रत्यक्षत 'इन्द्र' शब्द श्रवण के कारण यह ऋचा 'इन्द्र और ऋभु' से सम्बन्धित है]।

ब्राह्मणाच्छंसिनो याज्यायामार्भवत्वं संपादयति—

**इन्द्रश्च सोमं पिबतं बृहस्पत इति ब्राह्मणाच्छंसी यजत्या वां विशन्त्विन्दव स्वाभुव इति बहूनि वाह तदृभूणा रूपम् ॥ इति।**

इन्द्रश्चेत्यादियाज्यायाम्[1] 'आ वां विशन्तु'–इत्यस्मिन् पादे 'विशन्त'–इत्यादीनि बहुवचनान्तानि पदानि श्रूयन्ते, तैरभिधेयं बहुत्वमृभूणां स्वरूपम् ॥

'इन्द्रश्च सोमं' ( हे बृहस्पति! तुम और इन्द्र सोमरस पीओ ) आदि ऋचा से ब्राह्मणाच्छंसी यजन करता है। इस ऋचा के 'आ वां विशन्तु' ( सोम तुम्हारे शरीर में प्रवेश करें ) आदि पाद में 'विशन्तु' पद बहुवचनान्त है। अत जो बहुत्व इसमें उक्त है, वही ऋभुओं का स्वरूप है।

पोतुर्याज्यायामार्भवत्वं दर्शयति

**आ वो वहन्तु सप्तयो रघुष्यद इति पोता यजति, रघुपत्वान प्र जिगात बाहुभिरिति बहूनि वाह तदृभूणा रूपम् ॥ इति।**

'आ वो वहन्तु' इति याज्यायां[2] 'रघुपत्वानः' इत्यस्मिन् पादे बहुवचनान्तैः पदैरभिधेयं बहुत्वमृभूणा स्वरूपम् ॥

'आ वो वहन्तु' ( हे मरुद्गण! शीघ्र चलने वाले एवं गतिशील घोड़े तुम्हें हमारे यज्ञ में लावें ) आदि ऋचा से पोता यजन करता है। इस ऋचा के 'रघुपत्वान' ( शीघ्र चलने वाले आपलोग भी हाथों में धन लेकर हमें देने के लिए आवें ) आदि पाद में बहुवचनान्त पद हैं। अत जो इसमें बहुत्व उक्त है, वही ऋभुओं का स्वरूप है।

---

१ ऋ० ४.५०.१०।    २ ऋ० १.८५.६।

नेष्टुर्याज्यायामार्भवत्वं दर्शयति—

अमेव नः सुहवा आ हि गन्तनेति नेष्टा यजति, गन्तनेति बह्वाह तदृभूणा रूपम् ॥ इति ।

'अमेव नः' इति याज्यायाः[1] अस्मिन्नेव पादे 'गन्तनेति' पदस्य गच्छतेत्यर्थे सति लोण्मध्यमपुरुषबहुवचनान्तत्वं प्रतीतं बहुत्वमृभूणां स्वरूपम् ॥

'अमेव नः सुहवा' ( हे सुन्दर आह्वान वाले त्वष्टा ! तुम हमारे साथ आओ ) आदि ऋचा से नेष्टा यजन करता है। इस ऋचा के उसी पाद में 'गन्तन' शब्द ['गच्छत' (जाएँ) अर्थ में लोट् लकार के मध्यम पुरुष का] बहुवचनान्त है। अतः जो इसमें बहुत्व उक्त है वही ऋभुओं का स्वरूप है।

अच्छावाकस्य याज्यायामार्भवत्वं दर्शयति—

इन्द्राविष्णू पिबतं मध्वो अस्येत्यच्छावाको यजत्या वामन्धांसि मदिराण्यग्मन्निति बहूनि बाह तदृभूणा रूपम् ॥ इति ।

'इन्द्राविष्णू' इत्यस्यां याज्यायाम्[2] 'आ वाम्' इत्यस्मिन् पादे बहुवचनान्तैः 'अन्धांसि' इत्यादिभिः पदैः प्रतीतं बहुत्वमृभूणां स्वरूपम् ॥

'इन्द्राविष्णू' (हे इन्द्र और विष्णु ! तुम इस मदयुक्त सोमरस को पीओ) आदि ऋचा से अच्छावाक यजन करता है। इस ऋचा के 'आ वामन्धांसि' (मदयुक्त सोम अन्न के रूप में तुम्हें प्राप्त होवे ) आदि पाद में 'अन्धांसि' इत्यादि बहुवचनान्त पद हैं। अतः जो इसमें बहुत्व उक्त है, वही ऋभुओं का स्वरूप है !

आग्नीध्रस्य याज्यायामार्भवत्वं दर्शयति—

इमं स्तोममर्हते जातवेदस इत्याग्नीध्रो यजति, रथमिव सं महेमा मनीषयेति बहूनि वा ह तदृभूणा रूपम् ॥ इति ।

'इमं स्तोमम्' इत्यस्यां याज्यायां[3] 'रथमिव' इत्यस्मिन् पादे 'महेम' इत्युत्तमपुरुषबहुवचनान्तेन पदेन प्रतीयमानं बहुत्वमृभूणां स्वरूपम् ॥

'इमं स्तोममर्हते' (हम पूज्य एवं सभी प्राणियों को जानने वाले अग्नि के प्रति बुद्धिपूर्वक की गई यह स्तुति समर्पित करते हैं) आदि ऋचा से आग्नीध्र यजन करता है। इस ऋचा के 'रथमिव सं' (जैसे रथकार रथ का निर्माण करता है वैसे ही हम बुद्धि से स्तुति बनाते हैं) आदि पाद में 'महेम' शब्द उत्तम पुरुष का बहुवचनान्त रूप है। अतः जो इसमें बहुत्व उक्त है, वही ऋभुओं का स्वरूप है।

---

१. ऋ० २.३६.३ ।    २. ऋ० ६.६९.७ ।    ३. ऋ० १.९४.१ ।

उक्तमर्थमुपसंहरति—

**एवमु हैता ऐन्द्रार्भव्यो भवन्ति ॥ इति ।**

उक्तेन प्रकारेण याज्यास्वृभुसम्बन्धसम्पादनादिन्द्रसम्बन्धस्य च साक्षादेव श्रूयमाणत्वाद्[1] एता ऋच ऐन्द्रार्भव्यः सम्पद्यन्ते ॥

**इस प्रकार ये याज्या ऋचाएँ [ऋभु सम्पादन से और साक्षात् रूप से सम्बन्धित होने से] इन्द्र और ऋभु देवताक होती हैं ।**

इन्द्रस्यर्भूणां चोक्तसम्बन्धेन प्रीतेः सिद्धत्वाद् इतरदेवतानामपि तासामिर्याज्याभिः प्रीतिं दर्शयति—

**यन्नानादेवत्यास्तेनान्या देवताः प्रीणाति ॥ इति ।**

इन्द्रवरुणबृहस्पत्यादिनानाविधदेवतायुक्ता ऋच इति यदस्ति तेन कारणेन अन्या इन्द्रादृभुभ्यश्च व्यतिरिक्ता देवतास्तोषयति ॥

**जो ये ऋचाएँ नाना देवताक हैं उससे दूसरे देवता भी प्रसन्न होते हैं ।**

याज्यास्ववस्थितं छन्दः प्रशंसति—

**यदु जगत्प्रासाहा जागतं वै तृतीयसवनं तृतीयसवनस्यैव समृद्ध्यै ॥१२॥ इति ।**

जगच्छन्देन जगतीछन्दोऽभिधीयते । प्रासाहशब्दो बाहुल्यवाची । जगत्यः प्रासाहा बहुला यासूक्तासु प्रस्थितयाज्यासु ता जगत्प्रासाहाः तृतीयसवनं च जागतमिति प्रसिद्धम् । अतो यदु यदेव जगतीबाहुल्यं तेन तृतीयसवनस्य समृद्धिर्भवति[2] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकायां तृतीयाध्याये (अष्टाविंशाध्याये) चतुर्थः खण्डः ॥४॥ (१२) [१९९]

**इन याज्याओं में मुख्य रूप से जगती छन्द का बाहुल्य है और तृतीय सवन जगती से सम्बन्धित है । अतः जो जगती का बाहुल्य है वह तृतीयसवन की समृद्धि के लिए ही है ।**

**॥ इस प्रकार अट्ठाइसवें (तृतीय) अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥४॥**

---

१ (i) 'श्रुतत्वात्'—इति साम० सपा० ऐचि० पाठः । (ii) एकशतं वसिष्ठप्रासाहा इति ऐ० आ० ५ २ २ ।

२ इदं ते सौम्यं उक्षान्नाय वशान्नायेति प्रातस्सवनिक्यः प्रस्थितयाज्या (२ ख०) पिबा सोममभि ... आ पूर्णो अस्य कलशः स्वाहेति माध्यन्दिन्यः (३ ख०) इन्द्र ऋभुभिः ... इमं स्तोममर्हते जातवेदस इति तार्तीयसवनिक्यः (४ ख०)—इति आश्व० श्रौ० ५ ५ १८–१९ । इह चैता ९४०–९५३ पृष्ठेषु विहिता द्रष्टव्याः । ता एवैताः प्रस्थितयाज्याः—इत्युच्यन्ते । होता यक्षत् ... इति प्रेषितः प्रेषितो होतानुसवनं प्रस्थितयाज्याभिर्यजति नामादेशमितरे प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाकश्च ... इति आश्व० श्रौ० ५ ५ १५–१७ ।

## अथ पञ्चमः खण्डः

होत्रकाणां प्रस्थितयाज्याः सवनत्रयेऽभिधाय परस्परं साम्यं वैषम्यं च विवेक्तुं प्रश्नमुद्भावयति—

*अथाऽऽहुर्यदुक्थिन्योऽन्या होत्रा, अनुक्था अन्याः, कथमस्यैता उक्थिन्यः सर्वाः समाः समृद्धा भवन्तीति ॥ इति ।*

होत्रकाणां याज्याकथनानन्तरं कश्चिद्ब्रह्मवादी चोद्यमाह । होत्रकाणां क्रियाः 'होत्र'-शब्देन विवक्षिताः । तासु 'अन्याः' काश्चित्क्रियाः 'उक्थिन्यः' शस्त्रयुक्ताः । 'अन्याः' इतराः क्रियाः 'अनुक्थाः' शस्त्ररहिताः । मैत्रावरुणो ब्राह्मणाच्छंस्यच्छावाक इत्येतेषां त्रयाणां शस्त्रसद्भावादेतदीया क्रिया 'उक्थिन्य', नेष्टृपोत्रादीनां शस्त्रराहित्यात्तदीयाः क्रियाः 'अनुक्थाः'[1] । एवं वैषम्ये स्पष्टे सति 'अस्य' यज्ञस्य यजमानस्य वा सम्बन्धिन्यः 'एता' होत्रा सर्वा उक्थिन्य[2] शस्त्रयुक्ता भूत्वा 'समाः' वैषम्यरहिताः', अत एव 'समृद्धा' सम्पूर्णाः कथं भवन्ति ? इति चोद्यम् ॥

६। १३ [xxx. ५] [होत्रकों के याज्या कथन के बाद] अब [परस्पर साम्य और वैषम्य के विषय में] ब्रह्मवादी प्रश्न करते हैं कि कुछ होत्र [अर्थात् होता आदि के द्वारा विवक्षित क्रियाएँ] उक्थयुक्त [=शस्त्रयुक्त] होते हैं, किन्तु कुछ बिना उक्थ के ही [शस्त्ररहित] क्रियाएँ होती हैं [मैत्रावरुण, ब्राह्मणाच्छंसी और अच्छावाक—इन तीन की क्रिया शस्त्रसद्भाव के कारण उक्थयुक्त होती हैं; जब कि नेष्टा, पोता आदि की ऋत्विजों की क्रिया शस्त्ररहित होने से अनुक्थ होती हैं] इस प्रकार के स्पष्टतः वैषम्य से इस [यज्ञ अथवा यजमान] के ये सभी होत्र शस्त्रयुक्त होकर कैसे बराबर और परिपूर्ण होते हैं ?

तस्योत्तरमाह—

*यदेवैनाः सम्प्रगीर्य होत्रा इत्याचक्षते, तेन समाः ॥ इति ।*

'यदेव' यस्मादेव कारणाद् 'एनाः' मैत्रावरुणादिक्रियाः पोतृनेष्ट्रादिक्रियाश्च संप्रगीर्य संभूय प्रशंसेच्छया 'होत्रा'-इतिशब्देन याज्ञिका आचक्षते, तेन समाः । यथा लोके छत्र-युक्तान् छत्ररहितांश्च संभूय छत्रिण इत्येकेनैव शब्देन व्यवहरन्ति । एवमत्रापि शस्त्रयुक्ता मैत्रावरुणादयः शस्त्ररहिताः पोतृनेष्ट्रादयश्च सम्भूयैकेनैव 'होत्रा'-शब्देन व्यवह्रियन्ते । अतः छत्रिणि समभिव्याहारादच्छत्रिणामप्युपचरितं छत्रित्वम्, तेन होत्राशब्दसमभिव्याहारेणैव समा भवन्ति, न चैतावता स्वाभाविकं छत्रित्वमच्छत्रिणां भवतीत्यर्थः ॥

---

१. द्र० टि. पूर्वम्, पृ० ३५३ । आश्व० श्रौ० ५.१०.१० । 'होत्रकाणां मध्ये एते शस्त्रयन्ति । होत्रा शस्त्राणि भवन्तीत्यर्थः'—इति तत्र नारायणः । मैत्रावरुण=प्रशास्ता ।

२. उक्थिन्य.=उक्थिन्यः । अत्र स्त्रीलिङ्गमविवक्षितम् । यद्वा, छान्दसो लिङ्गव्यत्ययेन निर्देश, उक्थिन्य इति । होत्रिणः पोत्रिणेति—इति गोविन्दस्वामी ।

उत्तर है कि जिस कारण [मैत्रावरुणादि क्रिया और पोतृनेष्ट्रादि क्रिया] दोनों ही याज्ञिकों द्वारा एक साथ 'होत्र' शब्द से अभिहित होती है। उसी [होत्रक शब्द व्यवहार] के कारण वे [क्रियाएं] समान होती हैं, [जैसे लोक में छाते से युक्त और बिना छाते के भी एक साथ जाने वाले लोगों के प्रति 'छत्रिन्' शब्द से व्यवहार होता है] उसी प्रकार यहाँ भी दोनों को 'होत्र' शब्द से कहने के कारण बराबरी की क्रियाएं हैं, अर्थात् इनमें वैषम्य नहीं है]।

तदेतद्वैषम्य दर्शयति—

यदुक्थिन्योऽन्या होत्रा अनुक्थ्या अन्यास्तेनो विषमा ॥ इति।

'उ' शब्दोऽपिशब्दार्थ । तेन' उक्थित्वानुक्थित्वधर्मद्वयेन विषमा अपि भवन्ति ॥

कुछ होत्रकों की क्रियाएं उक्थ युक्त होती है और कुछ की उक्थरहित होती हैं। इसी कारण वे विषम भी होती हैं।

सत्यपि वैषम्य औपचारिकोक्थित्वेन साम्य यदुपपादित तदुपसहरति—

एवमु हास्यैता उक्थिन्य. सर्वा समाः समृद्धा भवन्ति ॥ इति।

इस प्रकार वे सभी क्रियाएं उनके लिए उक्थ युक्त, समान और समृद्धि वाली होती हैं।

होत्रकेषु चोद्यान्तरमुद्भावयति—

अथाऽऽह शसन्ति प्रात सवने, शसन्ति माध्यदिने होत्रका कथमेषा तृतीयसवने शस्त भवतीति ॥ इति।

अग्निष्टोमे मैत्रावरुणब्राह्मणाच्छस्यच्छावाकाना सवनद्वये शसन विहितम्, तद्दृष्टान्तेन तृतीयसवनेऽपि शसनमपेक्षितम्, तच्च न विहितम्। तथा सति कथमेषा तृतीयसवने 'शस्त भवति' शसन सिध्यति ? इति चोद्यम् ॥

अब प्रश्न है कि [अग्निष्टोम में मैत्रावरुण, ब्राह्मणाच्छंसी और अच्छावाक आदि] होत्रक प्रात सवन में शसन करते हैं और [शसन विहित होने से] मध्यन्दिनसवन में भी शसन करते हैं तो [शसन विहित न होने से] कैसे इनका शसन तृतीयसवन में सिद्ध होता है ?

तस्योत्तर दर्शयति—

यदेव माध्यदिने द्वे द्वे सूक्ते शसन्तीति ब्रूयात् तेनेति ॥ इति।

मैत्रावरुणस्य 'सद्यो ह जातो वृषभ कनीन' इत्येक सूक्तम्[1]। 'एवा त्वामिन्द्र वज्रिन्'–इति[2] द्वितीयम्। ब्राह्मणाच्छसिन 'इन्द्र पूर्भिद्'–इत्येक[3] सूक्तम्, 'उदु ब्रह्माणीति' द्वितीयम्[4]। अच्छावाकस्य 'भूय इद्'[5] इत्येकम्, 'इमामूष्विति[6] द्वितीयम्। एवमेते

१ ऋ० ३ ४८।        २ ऋ० ४ १९।        ३ ऋ० ३ ३४।
४. ऋ० ७ २३।        ५ ऋ० ६ ३०।        ६ ऋ० ३ ३६।

ययो माध्यंदिने सवने प्रत्येकं द्वे द्वे सूक्ते शंसन्ति[1] । तत्रैकं माध्यंदिनसवनार्थम् । द्वितीयं तु तृतीयसवनार्थमित्युपचारेण तत्रापि शंसनं सिध्यतीत्युत्तरं ब्रूयात् ॥

जिस कारण से माध्यन्दिनसवन में [मैत्रावरुण, ब्राह्मणाच्छंसी और अच्छावाक] दो-दो सूक्त का शंसन करते हैं, उसी [में एक माध्यन्दिन सवन के लिए और एक तृतीय सवन के लिए विहित होने] से [तृतीय सवन की सिद्धि हो जाती है]—इस प्रकार उत्तर देना चाहिए ।

तत्रैव चोद्यान्तरमुद्भावयति—

**अथाऽऽह यद्द्व्युक्थो होता, कथं होत्रका द्व्युक्था भवन्तीति ॥ इति ।**

'अथ' तृतीयसवने शंसनसंपादनानन्तरं पुनरपि ब्रह्मवादी चोद्यान्तरमाह । 'यद्' यस्मात्कारणाद्धोता 'द्व्युक्थः' द्वे उक्थे शस्त्रे यस्यासौ 'द्व्युक्थः' । प्रातःसवने आज्य-प्रउगे द्वे, माध्यंदिनसवने मरुत्वतीय-निष्केवल्ये द्वे, तृतीयसवने वैश्वदेवाग्निमारुते द्वे । एवं स्थिते होतृदृष्टान्तेन होत्रकाणामप्युक्थद्वयवत्त्वमपेक्षितम् । न चोक्थद्वयं विहितमस्ति अतस्तत् केन प्रकारेण सिध्यति ? इति चोद्यम्[2] ॥

अब प्रश्न है कि जब होता का दो उक्थ [(i) प्रातःसवन में आज्य एवं प्रउग शस्त्र, (ii) मध्यन्दिनसवन में मरुत्वतीय एवं निष्केवल्य शस्त्र और (iii) तृतीय-सवन में वैश्वदेव एवं आग्निमारुतशस्त्र] होता है तो [उक्थ-द्वय विहित न होने के कारण] होत्रकों का उक्थ-द्वय कैसे सिद्ध होता है ?

तत्रोत्तरमाह—

**यदेव द्विदेवत्याभिर्यजन्तीति ब्रूयात् तेनेति ॥ १२ ॥ इति ।**

प्रस्थितयाज्यानां श्रूयमाणदेवतया संपाद्यमानदेवतया च 'द्विदेवत्यत्वम्'[3] । तादृशी-भिर्ऋग्भिर्यस्माद् यजन्ति । तेन द्व्युक्थत्वम्, तत्रैका देवता याज्यार्था, इतरा द्वितीया शस्त्रार्थेत्येवमुत्तरं ब्रूयात् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ-पञ्चिकायां तृतीयाध्याये (अष्टाविंशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ (१३) [१००]

जिस कारण से वे [प्रस्थित याज्याहुतियों में श्रूयमाण देवता इन्द्र से और संपाद्यमान देवता ऋभु से समन्वित] देव-द्वय देवताक याज्या ऋचाओं से यजन करते हैं; उसी कारण [वे दो शस्त्रयुक्त अर्थात् एक ऋचा याज्या के लिए और दूसरी शस्त्र के लिए होती है]—इस प्रकार उत्तर देना चाहिए ।

॥ इस प्रकार अट्ठाइसवें (तृतीय) अध्याय के पाँचवें खण्ड की हिन्दी पूर्ण हुई ॥५॥

---

१. [illegible] आश्वलायनेन 'होत्रकाणाम्'—इति कथितत्वात् । (द्र० आश्व० श्रौ० ५.१६) ।

२. आज्यप्रउगादीनि षट् शस्त्राणि इतः पूर्वम् ३५१-४११ पृष्ठेषु द्रष्टव्यानि—(i) २.५.४, (ii) ३.१.१, (iii) ३.२.३, (iv) ३.२.१०, (v) ३.३.७, (vi) ३.३.४ ।

३. इन्द्रः श्रूयमाणदेवता, ऋभवश्च संपाद्यमाना, द्र० इतः पूर्वम्, ३५०-३५३ पृ० ।

## अथ षष्ठः खण्डः

सर्वत्र होत्रकशब्दव्यवहारसाम्येन शस्त्ररहितानामप्युपचरितमुक्थित्वमित्युक्तम् । इदानीं प्रकारान्तरेण तेषामुक्थित्वं संपादयितुं प्रश्नमुद्भावयति—

**अथाऽऽह यदेतास्तिस्र उक्थिन्यो होत्रा, कथमितरा उक्थिन्यो भवन्तीति ॥ इति ।**

'अथ' मैत्रावरुणादीनां त्रयाणामुपचरितं द्वितीयशस्त्रसंपादनानन्तरं ब्रह्मवादी चोद्यमाह । 'यद्' यस्मात्कारणाद् 'एता पूर्वोक्ता 'होत्रा' मैत्रावरुणादीनां क्रियास्तिस्र 'उक्थिन्य' शस्त्रोपेता , तद्दृष्टान्तेन इतरा ' पोत्रादीनां क्रिया अपि शस्त्रयुक्ता इति वक्तव्यम् । न चात्रशस्त्रं विहितम् । अत कथमेता उक्थिन्य ? इति प्रश्न. ॥

VI १४ [XXVIII ६] [सर्वत्र 'होत्रक' शब्द व्यवहार साम्य से शस्त्ररहित भी होत्रक उक्थ युक्त कहे जाते हैं। इसी उत्तर को प्रकारान्तर से प्रश्न द्वारा सपादित करते हैं] *अब ब्रह्मवादी प्रश्न करते हैं कि जिस कारण से इन [पूर्वोक्त मैत्रावरुण आदि] तीन* होत्रकों की क्रियाएँ शस्त्रयुक्त होती हैं, उसी प्रकार [पोता आदि] अन्य ऋत्विजों की [क्रियाएँ भी शस्त्र विहित न होने पर] कैसे उक्थयुक्त होती है ?

तत्रोत्तरमाह—

**आज्यमेवाऽऽग्नीध्रीयाया उक्थं, मरुत्वतीयं पोत्रीयायै, वैश्वदेवं नेष्ट्रीयायै, ता वा एता होत्रा एवं न्यङ्गा एव भवन्ति ॥ इति ।**

होतु प्रात सवने य प्रथमम् 'आज्य' शस्त्र तदेव 'आग्नीध्रीयायै', आग्नीध्रेण क्रियमाणाया क्रियाया 'उक्थ' शस्त्रम् । एव मरुत्वतीयवैश्वदेवयोरपि योज्यम् । तथा सति ता एवैता 'होत्रा' होत्रकाणा क्रिया. 'एवम्' उक्तेन प्रकारेण 'न्यङ्गा' तत्तच्चिह्ना एव भवन्ति । अग्निमाग्नीध्रो यजति[1] । आज्यशस्त्र चाग्नेयम् । पोता मरुतो यजति[2] । मरुत्वतीये च मारुतानि सूक्तानि शसति । 'अग्ने पत्नीरिहाऽऽवहेति[3] नेष्टा यजति[4] । तत्र 'देवानामुशती' इत्यत्र देवानामिति श्रवणमस्ति । एवं त्रयाणामप्याग्नीध्र-पोतृ-नेष्टृणामाग्नेयत्व-मारुतत्व वैश्वदेवत्व-चिह्नानि विद्यन्ते । तस्मादाज्यादिभिरुक्थै रितरेषामुक्थित्वम् ॥

[होता के प्रात सवन में प्रथम] आज्यशस्त्र ही आग्नीध्र द्वारा की जाने वाली क्रिया का शस्त्र है, मरुत्वतीयशस्त्र पोता द्वारा की जाने वाली क्रिया का शस्त्र है और वैश्वदेवशस्त्र नेष्टा द्वारा की जाने वाली क्रिया का शस्त्र है । इस प्रकार वही होत्रकों की क्रियाएँ उन-उन चिह्नों से युक्त ही होती हैं ।

---

१-२,४. द्र० द्र पूर्वम्, ९४० ९४१पृ० ।　　३ ऋ० १ २२. ९ ।

तेषामेव होत्रकाणामृतुयाजेषु[1] कस्यचिद्विशेषस्य प्रश्नमवतारयति—

**अथाऽऽह यदेकप्रैषा अन्ये होत्रका अथ कस्माद् द्विप्रैष पोता, द्विप्रैषो नेष्टेति ॥ इति ।**

प्रैषसूक्ते[2] ये ये प्रैषा उक्ता, तेषु प्रैषेषु एकैक एव प्रैषो नेष्टृपोतृव्यतिरिक्तानां होत्रकाणाम्, पोतुर्नेष्टुश्च द्वौ द्वौ प्रैषौ । तथा च ऋतुसंप्रदायविद पठन्ति— होता पोताऽग्नीद् ब्राह्मणः प्रशास्ता पोता नेष्टाच्छावाकोऽध्वर्यु-गृहपतीति च इति । तस्यायमर्थः —तत्र नामानामान्तरेणैत ऋत्विजो निर्दिष्टाः । तथा च होता पोता नेष्टा आग्नीध्र ब्राह्मणाच्छंसी प्रशास्ता, होता पोता नेष्टा अच्छावाक अध्वर्युर्गृहपतिरिति क्रमेणोक्ता । एतेषां प्रैषसूक्ते द्वादश प्रैषा क्रमेण सन्ति । तथा सति पोतुर्द्वितीयोऽष्टमश्च द्वौ प्रैषौ । नेष्टुस्तृतीयो नवमश्च द्वौ प्रैषौ । होता यक्षत् पोत्रात् इत्येक[3] प्रैष । होता यक्षद्देवं द्रविणोदाः पोत्रादृतुभिरिति[4] द्वितीय । एतौ द्वौ पोतुः प्रैषौ । 'होता यक्षद् ग्नावो नेष्टा' इत्येक[5] । होता यक्षद्देवं द्रविणोदा नेष्ट्रात् इति द्वितीय । एतौ द्वौ नेष्टुः प्रैषौ । इतरेषामाग्नीध्रप्राच्छावाकादीनामेकैक एव प्रैष । तथा सति पोतृनेष्ट्रो द्विप्रैषत्वे किं कारणम् ? इति प्रश्न ॥

अब ब्रह्मवादी [उन्हीं होत्रकों के ऋतुयाज के विषय में] प्रश्न करते हैं कि जब अन्य होत्रकों के लिए एक बार प्रैष किया जाता है, तो पोता एवं नेष्टा के लिए क्यों दो बार प्रैष [आदेश] किया जाता है ? [वस्तुतः प्रैष सूक्त में क्रमशः बारह प्रैष होते हैं—१ होता, २ पोता, ३ नेष्टा, ४ आग्नीध्र, ५ ब्राह्मणाच्छंसी, ६ प्रशास्ता, ७ होता, ८ पोता, ९ नेष्टा, १० अच्छावाक, ११ अध्वर्यु और १२ गृहपति । इन द्वादश प्रैषों में पोता और नेष्टा के लिए दो बार प्रैष क्यों किया गया ? यही प्रश्न है] ।

तस्योत्तरमाह—

**यत्रादो गायत्री सुपर्णो भूत्वा सोममाहरत्, तदेतासां होत्राणामिन्द्र उक्थानि परिलुप्य होत्रे प्रददौ, यूयं माऽभ्यह्वयध्वं, यूयमस्यायेविष्टेति, ते होचुर्देवा**

---

१ द्र० इत पूर्वम् पृ० ५७० 'ऋतुयाजा षड्च'—इति ।

२ अस्ति ऋग्वेदस्याश्वलायनशाखाया ऋक्परिशिष्टं । तत्र पञ्चमः प्रैषाध्यायः । स एव 'प्रैषसामाम्नाय'—इति प्रैषाध्याय—इति चाख्यायते । तस्मिन् पञ्च सूक्तानि । तदीय-पञ्चमसूक्ते सुत्यायां सवनीय प्रैषा उक्ता । तत्रैवेत्ययं । आश्वलायनश्रौतसूत्रम्—'ऋतुयाजान् [illegible], [illegible] प्रैषा, पञ्चमं प्रैषसूक्तम्'—इति आश्व० श्रौ० ५ । १० । १–३ । प्रैषसमाम्नाये यत् पञ्चमं प्रैषसूक्तं तस्मिन् प्रैषा सन्ति—इति तद्वृत्तिः ।

३ प० ५ ५ १० । ४ प० ५ ५ १९ । ५ प० ५ ५ ११ ।

६ प० ५ ५ १७ ।

**याचेमे होत्रे प्रभावयामेति, तस्मात्ते द्विप्रैषे भवत ऋचाऽग्नीध्रीया प्रभावयाचक्रुस्तस्मात् तस्यैकयर्चा भूयस्यो याज्या भवन्ति ॥ इति ।**

'यत्र' यस्मिन् काले 'अदो' गायत्री त्रिष्वपि छन्दःसु या श्रेययुक्ताऽभूत् [ असौ गायत्री सुपर्णो भूत्वा द्युलोकात् सोममाहरत्'—सोऽयं वृत्तान्तः पूर्वमेवमाम्नातः[1] ] 'तत्' तस्मिन् काले केनापि निमित्तेन क्रुद्ध इन्द्र 'एतासां' होत्राणाम् 'उक्थानि' शस्त्राणि परिलुप्य होत्रे प्रददौ। होत्राशब्दः स्त्रीलिङ्गोऽपि पुरुषान् होत्रकानभिधत्ते। पोतृ-नेष्ट्राग्नीध्राणां होत्रकाणामाज्य मरुत्वतीय-वैश्वदेव शस्त्राणि पूर्वमासन् तानि क्रुद्ध इन्द्रस्तेभ्यो निवार्य दत्तवान्। ततो होता प्रतिसवनं शस्त्रद्वययुक्तो बभूव। गायत्र्या सोमेऽपहृते सति सोकामभिभूयमिन्द्र सान्त्वयितुमृत्विजाभिमानि यो देवता सर्वा उपतस्थिरे। पोतृनेष्ट्राग्नीध्रदेवतास्तु नाऽऽगता। तदिदं दोषकारणम्। स च कुपित इन्द्रः शस्त्राणि निवार्य पुनरप्येवमुवाच,—हे गर्वाधिका पोत्रादयो यूयं 'माऽस्म्यह्वयध्वम्' शासावोम्' इत्याह्वानमपि मा कुरुत, दूरे युष्माकं शस्त्राणि 'यत्' यूयम् 'अस्य' मम सान्त्वनं 'मा अवेदिष्ट' न ज्ञातवन्तः। निषेधार्थो मा शब्दोऽत्रानुसन्धेयः। 'इति'—एवमिन्द्रेणोक्ते सति तत्समीपवर्तिन 'ते देवा इन्द्रं सम्प्रार्थ्यैवमूचुः'—इमे होत्रं एतौ पोतृनेष्टारौ शस्त्रशून्यावतिमीतौ येनकेनापि प्रकारेणानुग्रहणीयौ। तस्मादुभयमध्यासाववेऽपि 'वाचा' अधिकप्रैषरूपया 'प्रभावयाम' प्रकर्षेण भावितौ तोषितौ च 'वामेति'। 'तस्मात्' कारणात् 'ते होत्रे द्विप्रैषे भवतः' तौ होत्रकौ पोतृनेष्टारौ प्रैषद्वययुक्तौ भवतः। तथैव आग्नीध्रीयाम्' अग्नीध्रक्रियाम् 'ऋचा' कयाचिदधिकया 'प्रभावयाचक्रुः' प्रभूतां कृतवन्तः। यस्मादेवं 'तस्मात्', 'तस्या' आग्नीध्रस्यैकयर्चा 'याज्या भूयस्यो' अत्यन्तमधिका भवन्ति। सप्तानामपि होत्रकाणां प्रस्थित याज्यास्तिस्र एव भवन्ति। आग्नीध्रस्य 'ऐभिरग्ने सरथम्'—इत्यपरा[2] अधिका। सा च पात्नीवतग्रहवर्तिनी[3]। तथा च सम्प्रदायविद आहुः—

> 'तिस्रः प्रस्थितयाज्यास्तु सप्तानाममवन् खलु।
> आग्नीध्रस्तिसृभिः सार्धमैभिरग्ने चतुर्थ्यभूत् ॥'[4] इति।

यद्यप्याग्नीध्रविषये ब्रह्मवादिना प्रश्नो न कृतः, तथाऽपि पोतृनेष्ट्र्या समानयोगक्षेमत्वेन तद्वृत्तान्तोऽप्यभिहितः॥

---

१ द्र० इतः पूर्वम् ३.३.१, २ (४७१–४७६ पृ०)

२ ऋ० ३.६.९।

३ 'पात्नीवतस्य यजत्यैभिरग्ने सरथं याह्यर्वाङित्युपांश्वेव'—आश्व० श्रौ० ५.१९.१७ उपांश्वेत्यवधारणं तेषामुच्चैं सर्वप्रसप्त्युपांश्वेव यष्टव्यमित्येवमर्थम्—इति तद्वृत्ति।

४ कारिकेयं षड्गुरुशिष्यस्य।

जब गायत्री ने यहाँ सुपर्ण होकर सोम का [स्वर्गलोक से] आहरण किया तब इन्द्र ने [क्रुद्ध होकर] इन दोनों के शस्त्र काट कर होता को दे दिए। [वस्तुतः सोम के अपहरण के बाद जब इन्द्र सोमाभिमुख हुए तब सभी ऋत्विजों के अभिमानी देव उन्हें सान्त्वना देने आए। किन्तु पोता, नेष्टा एवं आग्नीध्र के अभिमानी देव नहीं आए। इसीलिए क्रुद्ध होकर इन्द्र ने उनके शस्त्र काट कर होता को दे दिए। उन कुपित इन्द्र ने पुनः कहा—हे सर्वाधिप पोता आदि] तुम सब ['सोमसोम' से] आह्वान भी न करो। [शस्त्र तुमसे दूर रहे क्योंकि] तुम सब मेरी इस [सान्त्वना] को नहीं जानते हो[1]। तब उन देवों ने कहा—'इन दोनों [पोता एवं नेष्टा] को [किसी प्रकार अनुग्रह करके शस्त्राभाव में भी प्रैष रूप अधिक] वाणी से प्रकृष्ट रूप से सन्तुष्ट करें।' इसलिए ये दोनों होत्रक प्रैष-युक्त युक्त हुए। उसी प्रकार आग्नीध्र की क्रिया में भी एक ऋचा बढ़ा दी। क्योंकि ऐसा है इसीलिए उस आग्नीध्र की याज्या ऋचाएँ एक ऋचा से ही बहुत अधिक हो जाती हैं।

होतृविषय प्रश्नान्तरमुद्भावयति—

अथाऽऽह यद्धोता यक्षद्धोता यक्षदिति मैत्रावरुणो होत्रे प्रेष्यत्यथ कस्माद्-होतृभ्यः सद्भ्यो ह्यात्राशंसिभ्यो होता यक्षद्धोता यक्षदिति प्रेष्यतीति ॥ इति।

अथ द्विप्रैषत्वनिमित्तकथनानन्तरं यदुपादिना प्रश्नमाह। मैत्रावरुण' सर्वेषां होत्रादीनां प्रैषदाता[2]। स च प्रैषसूक्तगतेषु सर्वेष्वपि मन्त्रेष्वादौ 'होता यक्षद्' इत्येव तत्र तत्र पठति[3]। तत्र होत्रे होतृनामार्थं तत्र मन्त्रेण यद् प्रेष्यति, तद्युक्तं मन्त्रादावविद्यमानस्य होतृशब्दस्य तद्वाचकत्वात्। यत्तु अहोतार होतृव्यतिरिक्ता सन्तः 'हात्राशंसिन होता'[4] हात्रकसमाख्यामाप्नुवन्ति, तेषां होतृनामरहितानां प्रैषेषु तत्र तत्र 'होता यक्षद्—इति कस्माद्' कारणाद्धोतृशब्दं प्रयुङ्क्ते? इति प्रश्नः ॥

१ You have called to me, You have known this —इति कीथमहोदय।

२ 'तेन वैते प्रैषिता प्रैषिताः स स यथार्थं यजति'—इति आश्व० श्रौ० ५.८४।

३ तद्यथा—१ होता यक्षद् होतावेद। २ होता यक्षद् पोतावेद। ३ होता यक्षद् नष्टावेद। ४ होता यक्षद् अग्नीद् यज। ५ होता यक्षद् ब्राह्मण यज। होता यक्षद् प्रशास्त्रीयम्। ६ होता यक्षद् होत्राय। ७ होता यक्षद् पोत्रीयं। ८ होता यक्षद् नेष्ट्रीयं। ९ होता यक्षद् प्रशास्ता यज। १० होता यक्षद् अध्वर्यु यजतम्। ११ होता यक्षद् ... यज।'—इति प० ५५९-२०।

४ हाम —इति आ० मुद्रितपाठः।

अब ब्रह्मवादी [उन्हीं होत्रकों के विषय में पुनः] प्रश्न करते हैं—जब मैत्रावरुण होता को प्रैष करता है कि 'होता यक्षत्' 'होता यक्षत्' (होता याज्या पाठ करे होता याज्या का पाठ करे), तो यह जो होता नाम वाले नहीं हैं उनको 'होता यक्षत्' 'होता यक्षत्' (होता याज्या का पाठ करे, होता याज्या का पाठ करे)—इस प्रकार होत्राशंसियों [=होम की आशंसा करने वाले] को क्यों प्रैष करता है ?

तस्योत्तरमाह—

**प्राणो वै होता, प्राण सर्वे ऋत्विज, प्राणो यक्षत्, प्राणो यक्षदित्येव तदाह ॥ इति ।**

योऽयं मुख्यो होता स प्राणस्वरूप एव, मृतदेहस्य होतृत्वाभावात् । तथाऽन्येषामपि सर्वेषामृत्विजां प्राणस्वरूप एव । तथा सति प्राणविवक्षया प्रयुक्तो होतृशब्द सर्वेषूपपद्यते । 'होता यक्षद्धोता यक्षद्'—इत्युक्ते प्राणो यक्षत् प्राणो यक्षद् इत्येव मैत्रावरुणो ब्रूते । तस्माद् युक्त सर्वेषु होतृशब्दप्रयोगः ॥

[उत्तर] जो [वस्तुत मुख्य] होता है वह [मृत देह के होतृत्वाभाव के कारण] प्राण स्वरूप है, और सभी ऋत्विज भी प्राण स्वरूप हैं । इस प्रकार ['प्राण' की ही विवक्षा से 'होतृ' शब्द का प्रयोग होने से मैत्रावरुण] वस्तुत उस ['होता यक्षत्', 'होता यक्षत्'] से 'प्राणो यक्षत्', 'प्राणो यक्षत्' (प्राण याज्या का पाठ करें, प्राण याज्या का पाठ करें) ही कहता है । [अत 'होतृ' शब्द का प्रयोग युक्तियुक्त है] ।

उद्गातृविषये प्रश्नोत्तरे दर्शयति—

**अथाहास्त्युद्गातृणा प्रैषा३, नां३ इति । अस्तीति ब्रूयाद्, यदेवैतत्प्रशास्ता जप जपित्वा स्तुध्वमित्याह, स एषा प्रैष ॥** इति ।

होत्रादयो मैत्रावरुणेन प्रेषिता स्वस्वव्यापार कुर्वन्तीति तद्दृष्टान्तेनोद्गातृणामपि प्रेषितत्व युक्तम् न चोद्गातृप्रैषा प्रैषसूक्ते समाम्नाता तस्मादेषा प्रैषोऽस्ति न वेति संशय । प्लुतिद्वय विचारार्थम् । नकारस्य सानुनासिकत्व छान्दसम्[1] । अत्र प्रैषोऽस्तीत्येवमुत्तर ब्रूयात् । प्रकर्षेण सर्वानृत्विज 'शास्ति' प्रैषमन्त्रेण तत्तद्व्यापार प्रवर्तयतीति 'प्रशास्ता' मैत्रावरुण [2] । स च 'स्तुतदेवेन सवित्रा' इत्यादिमन्त्रजप[3] जपित्वा अनन्तर स्तुध्वमिति' यदेवैतद्वचन प्राह स एव 'एषाम्' उद्गातृणा प्रैष ॥

---

१ 'अणोऽप्रगृह्यस्यानुनासिक'—इति पा० सू० ८४५७ ।

२ मित्रावरुणौ प्रशास्तारौ प्राशस्त्राद्'—इति कात्या० श्रौ० ९८१० । अत एव ऋत्विङ्नामपरिगणनसूत्रेषु प्रशास्तेति न दृश्यते दृश्यते मैत्रावरुण इति—आश्व० श्रौ० ४१६, कात्या० श्रौ० ७१६, आप० श्रौ० १०१९ ।

३ 'मन्त्र जपम्'—इति वा पाठ ।

'अथ' अच्छावाकप्रवरसंपादनानन्तरं ब्रह्मवादी प्रश्नमाह । मैत्रावरुणस्तृतीयसवने 'इन्द्रावरुणा युवम्'—इत्यादिकमैन्द्रावरुणं[1] सूक्तं शंसति । तस्य प्रस्तावे 'एह्यू'–इत्याग्नेयः[2] स्तोत्रिय., 'अग्निरगामीत्याग्नेयोऽनुरूपः[3], तदेतद् व्यधिकरणत्वाद् अयुक्तम् । ऐन्द्रावरुणाभ्यां स्तोत्रियानुरूपाभ्यां भवितव्यम् ? इति प्रश्न.। अग्निनेत्यादिना तस्योत्तरम् । यदा देवा असुरानुक्थेभ्यो 'निर्जघ्नुः' निःशेषेण हतवन्तः, दूरेऽपसारितवन्त', तदानीमग्निः 'मुखं' प्रधानभूतं कृत्वा तन्मुखेन नि.सारितवन्तः। एतच्च 'अग्निष्टोमं वै देवा अश्रयन्त' इत्यादौ विस्पष्टमुदीरितम्[4] । 'तस्मात्' असुरनि.सारणेऽग्नेर्मुख्यत्वादाग्नेयौ स्तोत्रियानुरूपौ युक्तौ ॥

[इस प्रकार 'अग्निष्टोम सस्था' में होत्रकों के विषयों का कथन करके अब 'उक्थ-संस्था के अहः' के विषय में प्रश्न–उत्तर करते हैं]—अब ब्रह्मवादी प्रश्न करते हैं—मैत्रावरुण तोसरे सवन में जब इन्द्र और वरुण के सूक्त का शंसन करता है तब अग्नि-देवताक स्तोत्रिय और अनुरूप क्यों पढ़े जाते हैं ? [उत्तर] वस्तुतः देवों ने अग्नि को ही मुख्य बनाकर असुरों को उक्थों से निकाल दिया । तब इसी [असुर निःसारण में अग्नि के मुख्यत्व] के कारण अग्नि-देवताक स्तोत्रिय और अनुरूप पढे जाते हैं ।

ब्राह्मणाच्छंस्यच्छावाकविषये प्रश्नोत्तरे दर्शयति—

अथाऽऽह यदैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसी तृतीयसवने शंसत्यैन्द्रावैष्णवमच्छावाकः, कथमेनयोरैन्द्राः स्तोत्रियानुरूपा भवन्तीतीन्द्रो ह स्म वा असुरानुक्थेभ्यः प्रजिगाय; सोऽब्रवीत् कश्चाहं चेत्यहं चाहं चेति ह स्म देवता अन्ववयन्ति; स यदिन्द्रः पूर्वः प्रजिगाय, तस्मादेनयोरैन्द्राः स्तोत्रियानुरूपा भवन्ति; यद्वहं चाहं चेति ह स्म देवता अन्ववयुस्तस्मान्नानादेवत्यानि शंसतः ॥ १४ ॥ इति ।

तृतीयसवने ब्राह्मणाच्छंसिनः 'प्र मंहिष्ठाय'–इत्यैन्द्राबार्हस्पत्य[5] शस्त्रम् । तस्यादौ स्तोत्रियानुरूपावैन्द्रौ—'वयमु त्वेति'[6] स्तोत्रिय, 'यो न इदम्' इत्यनुरूप.[7] । तथाऽच्छावाकस्य 'ऋतुर्जनित्री' इत्यादिकमैन्द्रावैष्णवं[8] शस्त्रम् । तस्यादावैन्द्रौ स्तोत्रियानुरूपौ,—'अधा हीन्द्र गिर्वणः' इति[9] स्तोत्रियः 'इयन्त इन्द्र गिर्वणः' इत्यनुरूप[10] । तदेतद् वै वैयधिकरण्यमुपजीव्य पूर्ववत्प्रश्नः। इन्द्रो हेत्यादिकमुत्तरम्। इन्द्र.स्वयम् 'उक्थेभ्य.' शस्त्रेभ्यः सकाशाद् असुरान् 'प्रजिगाय' प्रकर्षेण जितवान् 'प्राद्रावयदित्यर्थः'। तदानीमिन्द्र इतरान्

१. ऋ० ७.८२ ।　२. ऋ० ६.१६.१६–१८ ।　३. ऋ० ६.१६.१९–२१ ।
४. द्र० इतः पूर्वम्, ५६५ पृ० ।　५. ऋ० १.५७ ।
६. ऋ० ८.२.१६–१८ ।　७. ऋ० ८.२१.९–१० ।　८ ऋ० २.१३ ।
९. ऋ० ८.९८.७–९ ।　१०. ऋ० ८.१३.४–६ ।

चेन्द्रत्वे त्रिष्टुभो युक्तत्वात् तत्परित्यागेन जागतानि कस्माच्छस्यन्ते ? 'चर्षणीधृतमिति'[1] मैत्रावरुणस्य सूक्तम्। 'प्र मंहिष्ठायेति'[2] ब्राह्मणाच्छंसिनः सूक्तम्। 'ऋतुर्जनित्री'[3] इत्यच्छावाकस्य सूक्तम्। एतेषु सूक्तेष्वेवं प्रश्नोत्तरमुच्यते। ऐन्द्र ये सत्येते सूक्तैरिन्द्रमेवारम्य प्रवृत्ता भवन्ति। इन्द्रो हि प्रारब्धस्याविघ्नेन समाप्तिकारीत्युत्तरं ब्रूयात्। 'अथो' अपि च त्रिष्टुप्परित्यागेन जागतसूक्तमिति यदस्ति, तत् तृतीयसवनस्य जागतत्वात् जगत्काम्यैव' जगत्कामनयैव प्रवृत्तिः कृता भवति। अपि च तथा सत्यत ऊर्ध्वम् यदपि यत्किञ्चिच्छन्दः शस्यते, तत्सर्वं जगतीछन्दस्कमेव सम्पद्यते॥

vi. १५ [xxv ii. ७] अब [उन्हीं शस्त्रों के छन्द और देवता के विषय में] ब्रह्मवादी प्रश्न करते हैं—जब तृतीय सवन वैश्वदेव देवताक है तो [वैश्वदेव से सम्बन्धित सूक्तों को छोड़कर] क्यों तृतीय सवन के आरम्भ में इन्द्र देवताक एवं [इन्द्र के योग्य त्रिष्टुप् छन्द को छोड़कर] जगती छन्दस्क सूक्तों का शंसन करते हैं ? उत्तर—वस्तुतः वे इसका आरम्भ इन्द्र से ही करके आगे बढ़ते हैं [क्योंकि इन्द्र सभी विघ्नों को हटाकर कार्य को पूर्ण करने वाले हैं]—ऐसा कहना चाहिए, और फिर [जो त्रिष्टुप् छन्द को छोड़कर जगती छन्दस्क सूक्त कहा है वह तृतीय सवन के जगती से सम्बन्धित होने के कारण जगत् की कामना[4] से ही प्रवृत्ति की गई है और इस प्रकार इसके बाद दूसरे भी जो कुछ छन्द शंसित होते हैं वह सभी जगती छन्दस्क ही हो जाते हैं।

आरम्भणीयानामैन्द्राणां सूक्तानां जागतत्वात् यस्य च्छन्दो तस्य जागतत्वं सम्पद्यते, तच्छन्दोऽन्तरं दर्शयति —

**अथैतत् त्रैष्टुभमच्छावाकोऽन्ततः शंसति, स वा कर्मणेति, यदेव पनाय्यं कर्म, तदेतदभिवदति॥ इति।**

आरम्भणीयासनादूर्ध्वमच्छावाक अन्ततः' शस्त्रस्यान्ते स वा कर्मणा इत्येतत् सूक्तं[5] त्रिष्टुप्छन्दस्कं शंसेत्। अग्नेन्द्राविष्णू संबोध्य वा' युवामनेन कर्मणा सहिनोमि सम्यक् प्रीणयामि, इत्येतदुच्यते। तस्य च कर्मशब्दस्यार्थो यदेवेत्यादिनाऽभिधीयते। पनतिधातु

---

१ ऋ० ३.५१।     २ ऋ० १.५७।     ३ ऋ० २.१३।

४ ( ) जगत् = जगती तत् = सा, काम्या = श्रद्धेया कामे वमणि यतशप् एव = स्फुटम्'—इति षड्गुरुशिष्यः। (ii) तु० कौ० ब्रा० ३०.२.३, द्र० वैता० ३२.३५। (iii) The form jagatkāmyā is very abnormal, in trakṛtyā in AB iii 4 6 is not probably a parallel, but bhūyaskāmyā occurs in a kāṇva passage of the SB, cited by Eggeling, SBE xxvi 42, n 2 इति कीथमहोदय।

५ ऋ० ६.६९।

स्तुत्यर्थे वर्तते । 'पन व्यवहारे स्तुतौ च, पन चेति'[1] वैयाकरणैर्धातुषु पठ्यमानत्वात् । तथा सति 'पनाय्य' स्तुत्यं सोमपानाख्यं कर्म, तदयं[2] मन्त्रोऽभिवदति ॥

इस [आरम्भणीय शसन] के बाद [शस्त्र के] अन्त में अच्छावाक 'स वां कर्मणा' आदि त्रिष्टुप् छन्दस्क सूक्त का शंसन करता है । [यहाँ इन्द्र और विष्णु को सम्बोधित करके 'तुम दोनों को इस कर्म से सम्यक् रूप से प्रगत करता हूँ—यह] जो कहा है वहाँ 'कर्म' से तात्पर्य 'सोमपान की प्रशंसा' से है ।

स वां कर्मणेत्यस्य प्रथमपादस्य पूर्वभागं व्याख्यायोत्तरभागमनूद्य व्याचष्टे—

समिषेत्यन्नं वा इषोऽन्नाद्यस्यावरुद्ध्यै ॥ इति ।

'इषा' अन्नेन 'युवाम् इन्द्राविष्णू समिनोमि' इत्यन्वयः । अत्रान्नमेवेषुत्यस्य शब्दस्यार्थः । इष् शब्दस्य रूप इति प्रथमाबहुवचनम् । तस्मादन्नवाचित्वे सति एतच्छंसनमन्नाद्यस्य प्राप्त्यै भवति ॥

इस मन्त्र में 'समिष' (सम्यक् रूप से अन्न से प्रसन्न करता हूँ) पद है । यहाँ 'इष' का अर्थ है 'अन्न' । अतः [अन्न का वाचक होने से यह शंसन] अन्न की प्राप्ति के लिए ही होता है ।

अस्या ऋचश्चतुर्थपादमनूद्य व्याचष्टे—

अरिष्टैर्नः पथिभिः पारयन्तेति स्वस्तितताया एवैतदहरहः शंसति ॥ इति ।

हे इन्द्राविष्णू 'अरिष्टैः' हिंसारहितैः 'पथिभिः' स्वर्गमार्गैः 'पारयन्ता' कर्मणः पारं प्रापयन्तौ, इन्द्राविष्णू इत्यर्थः । एतस्य पादस्य शंसनं 'स्वस्तितताया एव' क्षेमार्थमेव भवति । तस्मादच्छावाक एतदहरहरुत्तमदिवसेषु प्रतिदिनं शंसति ॥

इस ऋचा के चतुर्थ पाद 'अरिष्टैर्नः' (हम लोगों को हिंसारहित स्वर्ग मार्गों के द्वारा कर्म से पार लगाओ) आदि का शंसन कल्याण के लिए ही होता है । अतः [अच्छावाक यह वचन अहर्गणों में] प्रतिदिन शंसन [कल्याण के लिए ही] करता है ।

परिधानीयानां छन्दसि प्रश्नोत्तरे दर्शयति—

अथाह यज्जागतं वै तृतीयसवनमथ कस्मादेतास्त्रिष्टुभः परिधानीया भवन्तीति, वीर्यं वै त्रिष्टुब् वीर्य एव तदन्ततः प्रतितिष्ठन्तो यन्ति ॥ इति ।

तृतीयसवनस्य जागतत्वात् परिधानीया अपि जगत्य एव युक्ताः । तत्कथमिदानीं त्रिष्टुभः स्वीकारः प्रतिभाति किं कारणम् ? इति प्रश्नः । वाक्यमित्याद्युत्तरम् । त्रिष्टुभो वीर्यरूपत्वात् तया परिधानेन वीर्य एव प्रतिष्ठिता ऋत्विजो 'यन्ति' वर्तन्ते ॥

---

1 धा० ४३९, ४४० । 'पनिगुनिभ्य आय' (पा० सू० ३ १ २८) । तदन्ते 'सना यत्' (पा० सू० ३ १ ९७) ।          2 ऋ० ६ ६९ १ ।

अब प्रश्न यह है कि जब तृतीय सवन जागतों से सम्बन्धित है तो क्यों इस [सवन] की परिधानीया [अन्त की] ऋचाएँ त्रिष्टुप् छन्दस्क होती हैं ? वस्तुतः त्रिष्टुप् छन्द वीर्य है। अतः उस [शसन] से [शस्त्र के] अन्त में वीर्य को ही प्रतिष्ठित करके अनुष्ठान करते हैं।

होत्रकाणां त्रयाणामुक्तास्त्रिष्टुभः परिधानीया उदाहृत्य प्रदर्शयति—

'इयमिन्द्र वरुणमष्टमे गीरिति'[1] मैत्रावरुणस्य, 'बृहस्पतिर्नः परिपातु पश्चादिति'[2] ब्राह्मणाच्छंसिन, 'उभा जिग्यथुरित्यच्छावाकस्य'[3] ॥ इति।

[उन होत्रकों की त्रिष्टुप् छन्दस्क परिधानीया ऋचाएँ इस प्रकार हैं]—'इयमिन्द्र' (मेरी यह स्तुति इन्द्र एवं वरुण के पास पहुँचे) आदि ऋचा मैत्रावरुण की है। 'बृहस्पतिर्नः' (बृहस्पति हमें पापी शत्रु से पश्चिम से बचावें) आदि ऋचा ब्राह्मणाच्छंसी की है। 'उभा जिग्यथुः' (इन्द्र एवं विष्णु तुम दोनों ही जीतने वाले हो) आदि ऋचा अच्छावाक की है।

तदिदमन्तिमोदाहरणं व्याचष्टे—

उभौ हि तौ जिग्यतुः ॥ इति।

याविन्द्राविष्णू तावुभौ 'जिग्यतुः' युद्धे जयं प्राप्तवन्ताविति प्रसिद्धम् ॥

क्योंकि [जो इन्द्र और विष्णु हैं] वे दोनों युद्ध में विजय पावें।

ऋचः पूर्वार्धे 'उभा जिग्यथुः' इत्यमुमंशं व्याख्यायाथान्तरव्याख्यानं पठति—

न पराजयेथे न पराजिग्य इति ॥ इति।

तस्यायमस्य 'कतरश्चनैनो' इत्ययं शेषो ब्राह्मणेनानुदाहृतोऽप्यर्थविशेषाय द्रष्टव्यः[4]। तस्य च सर्वस्यायमर्थः—हे 'इन्द्राविष्णू' युवां 'न पराजयेथे' कदाचिदपि पराजयं न प्राप्तवन्तौ। 'एनो' एनयोरिन्द्राविष्णोर्मध्ये 'कतरश्चन' एकोऽपि 'न पराजिग्ये' पराजयं न प्राप। एकैकस्यापि यदा पराजयो नास्ति, तदानीमुभयोर्मिलितयोः पराजयो नास्तीति किमु वक्तव्यमिति ॥

'हे इन्द्र और विष्णु तुम दोनों कभी भी पराजित नहीं हुए हो' [इन दोनों इन्द्र एवं विष्णु में से] एक भी पराजित नहीं हुआ है—

उक्तस्यार्थस्य तात्पर्यं दर्शयति—

न हि तयोः कतरश्चन पराजिग्ये ॥ इति।

इसलिए उन दोनों में से एक भी पराजित नहीं हुआ है।

---

१ ऋ० ७.८४.५।   २ ऋ० १०.४२.११।   ३ ऋ० ६.६९.८।

४ 'उभा जिग्यथुर्न पराजयेथे न पराजिग्ये कतरश्चनैनो' इति ऋक्पूर्वार्धं।

पयत्वेन श्रुत्यैव व्याख्यायत इत्युभयार्थत्वमस्तु। यदुक्तम् आश्वलायनेन—'उत्तमे शस्त्रे परिधानीयाया उत्तमे वचन उत्तमं चतुरक्षरं द्विरस्त्वा प्रणुयात्'[1] इति।

[वे ब्रह्मवादी कहते हैं कि] इन्द्र एवं विष्णु ने असुरों के साथ युद्ध किया। उसके बाद उन असुरों को जीतकर उनसे इस प्रकार कहा—'हम लोग विभाग कर लें।' उन असुरों ने कहा 'अच्छा।' उन इन्द्र ने कहा—'यह विष्णु तीन पैर में जितना नाप लें, यह हमारा और शेष तुम्हारा होवे[2]।' इस प्रकार असुरों के साथ शर्त बांधकर उन विष्णु ने इन लोकों को एक पैर से नाप डाला [अर्थात् तीनों लोको के ऊपर एक ही पाद का प्रक्षेप किया]। तदनन्तर एक पैर सभी वेदों के ऊपर प्रक्षिप्त किया। तदनन्तर तीसरा पैर सभी वाणी के ऊपर फेंका। [इस प्रकार पादत्रय से आक्रान्त होने से सभी भाग इन्द्र और विष्णु के हुए। इस प्रकार का विभाग हो जाने पर] उस [मन्त्रार्थ] के विषय में ब्रह्मवादी प्रश्न करते हैं कि [मन्त्र में जो 'श्रेधा सहस्रम्' कहा है] वहाँ 'सहस्र' शब्द से क्या अभिहित है? इसका उत्तर देना चाहिए कि 'सहस्र शब्द से ये लोक, ये वेद और यह वाणी विवक्षित है'।[3]

---

१ 'उत्तमायुत्तमे, चतुरक्षराणि त्वच्छावाक'–इति आश्व० श्रौ० ६ ४ ५, ६।

२ 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।'
इति नैघण्टुकोक्तेः कार्त्स्न्येनेत्यथ गृह्यताम्।
युष्माकमितरत् कृत्स्नं स्यादस्माकमथ त्विति॥
—इति षड्गुरुशिष्यः। द्र० नामलिङ्गानुशासनम्, नानार्थवर्ग० श्लो० २४७।

३ सहस्रमित्येव [गोऽयम्]।

सहस्रेति ह्यनन्ताख्यानन्ता वै लोकवाक्श्रुतिः।

यजुषि हि भवति—'अनन्ता वै वेदाः' इति (तै० ब्रा० ३ १० ११ ४)। 'न वै वाक् क्षीयते' इति च प्रागुक्तम् (ऐ० ब्रा०, द्र० पूर्वम्, पृ० ७९०)। श्रूयते हि—'यथा हि परिमिता वर्णा अपरिमिता वाचो गतिम्' इति (आश्व० श्रौ० १० ५ १६) वक्ष्यते च—'अपरिमितो वै स्वर्गो लोकः' इति (ऐ० ब्रा० २९ ८)। सूत्रे चास्ति मन्त्रः—'गोस्तु मात्रा न विद्यते' इति (आश्व० श्रौ० १० ९ २)। गौर्वाग् द्यौर्भूमिश्च। मात्रा=परिच्छेदः।

अहर्गणेऽन्तिमे शस्त्रे त्रिर्वक्तव्या तु यान्तिमा।
तस्यास्तृतीयवचन उत्तमं चतुरक्षरम्॥
द्विरस्त्वा प्रणुयान्नाऽस्येहनीत्येतद् ब्रवीत्यथ।
—इति षड्गुरुशिष्यः।

अथैव चतुरक्षराभ्यास विधत्ते—

ऐरयेथामैरयेथामित्यच्छावाक उक्थ्येऽभ्यस्यति, स हि तत्रान्त्यो भवति ॥ इति

उक्थ्यनामके क्रतावच्छावाक 'ऐरयथाम्' इति चतुरक्षरभाग द्विरभ्यस्येत्। 'स हि' भाग 'तत्र' अच्छावाकशस्त्रेऽन्त्यो भवति ॥

उक्थ्य [नामक क्रतु] में अच्छावाक 'ऐरयेथाम्' (तुम दोनों ने विभाजन किया) आदि चार अक्षर के इस भाग को दो बार कहता है, क्योंकि यह भाग उस [अच्छावाक शस्त्र] के अन्त में होता है।

अच्छावाकस्याभ्यास विधाय होतुरभ्यास विधत्ते—

अग्निष्टोमे होताऽतिरात्रे च, स हि तत्रान्त्यो भवति ॥ इति।

अहर्गणेषूक्थ्यसंस्थायां यथाऽच्छावाकस्यान्तिम शस्त्रेऽभ्यास, तथाऽग्निष्टोमसंस्थाया-मतिरात्रसंस्थाया होताऽन्तिम शस्त्रेऽन्तिम चतुरक्षरभागमभ्यस्येत्। 'स हि' होता 'तत्र' उभयत्र 'अन्त्य' शंसिता भवति। अग्निष्टोमे यक्षरित्रे—यक्षरित्रोम्'—इति चतुरक्षराभ्यास[1]। अतिरात्रे तु 'यहि चित्र—यहि चित्रोम्'—इति चतुरक्षराभ्यास[2] ॥

[अहर्गणों की उक्थ्य संस्था में जैसे अच्छावाक के अन्तिम शस्त्र में अभ्यास कहा गया है वैसे ही] अग्निष्टोम संस्था में और अतिरात्र संस्था में होता [शस्त्र के अन्त में यक्षरित्र, यक्षरित्रोमिति'—इस चतुरक्षर भाग का अग्निष्टोम में और अतिरात्र में 'येहि चित्र—येहि चित्रोमिति' आदि चतुरक्षर भाग का] अभ्यास करे। क्योंकि यह [भाग] उस [होता के शस्त्र] के अन्त में होता है।

षोडशिसंस्थायां विचारपूर्वक चतुरक्षराभ्यास विधत्ते—

अभ्यस्येत् षोळशिनी३ नाभ्यस्येत्, इति? अभ्यस्येदित्याहुः, कथमन्ये-ष्वहःस्वभ्यस्यति, कथमत्र नाभ्यस्येदिति, तस्मादभ्यस्येत् ॥ १५ ॥ इति।

---

1. 'एवा न इन्द्रो मघवा ... यक्षरित्रे' (ऋ० ४ १७ २०)—इत्येवम्' अग्नि-ष्टोमीयशस्त्रस्यान्तिमा। ... 'एवा न इन्द्रो मघवा विरप्शी ... परिदध्यात्'—इत्याम्नातम् इत पूर्वम्, पृ० ५१९ 'एवा न इन्द्रो मघवा विरप्शीति परिदध्यात्'—इति च आश्व० श्रौ० ५ २० ६।
2. 'इन्द्राय मदिने ... येहि चित्रम्'—इति ऋ० २ २१ १५। 'इन्द्राय मदिने ... परिदध्यात्'—इ० इत पूर्वम्, पृ० ६१४। '... इति परिधानीया'—इति च आश्व० श्रौ० ६ ५ १९।

विचारार्थं प्लुतिद्वयम्। तत्राभ्यस्येदिति निर्णयमाहुः। तत्रेयमुपपत्तिः—इतरेष्वह सु चतुरक्षरभागमभ्यस्यात्रैव परित्यागे कारणं नास्तीति। तस्मादित्युपसंहारः। 'सश्चु पदे सश्चु पदो३मिति'—चतुरक्षराभ्यासो द्रष्टव्यः[1]॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये पञ्चपञ्चिकाया तृतीयाध्याये (अष्टाविंशाध्याय) सप्तम खण्ड ॥ ७ ॥ (१५) [१०२]

षोडशी शस्त्र में [शस्त्र के अन्त में चार अक्षर का] अभ्यास करना चाहिए या उसे अभ्यास नहीं करना चाहिए? कुछ ब्रह्मवादी कहते हैं कि 'अभ्यास करना चाहिए।' [युक्ति यह है कि] जब अन्य दिनों में चार अक्षर के इस भाग का अभ्यास उसे करना चाहिए तो क्यों इस [षोडशी सस्त्र] में न अभ्यास किया जाय? अतः उसे [सश्चु पदे सश्चु पदो३मिति इस चतुरक्षरभाग का] अभ्यास करना चाहिए।

॥ इस प्रकार अट्ठाइसवें अध्याय के सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथ अष्टमः खण्डः

अच्छावाकविषये पुनरपि प्रश्नमुत्थापयति—

**अथाह यन्नाराशंसं वै तृतीयसवनमथ कस्मादच्छावाकोऽन्ततः शिल्पेष्वनाराशंसीः शंसतीति॥** इति।

*'अथ' चतुरक्षराभ्यासकथनानन्तरं ब्रह्मवादी प्रश्नमाह। 'यद्' यस्मात्कारणात्तृतीयसवनं 'नाराशंसं वै' नरा मनुष्या ऋभवोऽङ्गिरसो वा यत्र शस्यन्ते तन्नाराशंसम्, तत्सबन्धिनि तृतीयसवनं गति यस्मात्कारणादच्छावाकोऽन्ततः तृतीयसवनस्यान्ते शिल्पा ख्येषु[2] शस्त्रेषु नाराशंससबन्धरहिता ऋचः शंसति —'ऋतुजनित्री'—इत्यादिकम्,[3] अच्छावाक शंसति[4] न च तत्र नरा शस्यन्ते तत्कथमुपपादितम्? इति प्रश्नः॥*

---

१ 'उग्रद् ब्रह्मस्य सश्च शश्चु पदे—इति ऋ० ८ ६९ ७। 'उग्रद् ब्रह्मस्य विष्टपमित्युत्तमया परिदधाति'—द्र० इत पूर्वम् पृ० ५८५। 'उग्रद् इति परिधानीया'—इति च आश्व० श्रौ० ६ २ १२।

२ 'अत ऊर्ध्वमनुरूपेभ्यो विहृतानि शिल्पानि शसेयु'—इति आश्व० श्रौ० ८ २ २। 'वालखिल्यादीनि शिल्पसज्ञकानि—इति तद्वृत्तौ नारायण। तानि च शिल्पानि द्विविधानि—१ विहृतानि, २ अविहृतानीति। विहरणयुक्त नाभानेदिष्ठादीनि विहृतानि, वालखिल्यादीन्यविकृतानि। एतत् सूत्रे विहृतानामेव ग्रहणम् विहृतानीतिवचनात्। आश्व० श्रौ० इत परम् 'ऊर्ध्वमारम्भणीयाभ्य प्रकृत्या शिल्पानि शसेयु' (४ ७)—इति सूत्रेऽविकृतानामेव, प्रकृत्येतिवचनात्। नित्यशिल्प विदमहे' (४ ५)—इत्यादौ तूभयविधशिल्पाना ग्रहणं भवति, विशेषतो निर्देशाभावात्।

३ ऋ० २ १३ १–१३।

४. 'ऋतुर्जनित्रीति निराय्यैकाहिकानि'—इति आश्व० श्रौ० ८ ४ ३।

के शंसन से सम्बन्धित छन्द है वह मानो मृदु और शिथिल है[1] अर्थात् दृढ़ नहीं है और इसका भी जो यह अच्छावाक है यह अन्तिम [ऋत्विज] है [अतः इसके बाद किसी और का शंसन न होने से यह दृढ़तारहित है] इसलिए 'इसे किसी दृढ़ स्थान पर दृढ़ता के लिए हमें स्थापित करना चाहिए'—इस अभिप्राय से [नाराशंस विहीन ऋचा का शंसन होता] है।

उपपादितमर्थमुपसंहरति—

**तस्मादच्छावाकोऽन्ततः शिल्पेष्वनाराशंसीः शंसति दृढ्हतायै, दृढ्हे प्रतिष्ठास्याम इति दृढ्हे प्रतिष्ठास्याम इति ॥ १६ ॥ इति।**

अभ्यासोऽध्यायसमाप्त्यर्थं ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकाया तृतीयाध्याये (अष्टाविंशाध्याये) अष्टम खण्ड ॥ ८ ॥ (१६) [१०३]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यादेशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नाम भाष्ये ऐतरेयब्राह्मणभाष्यस्य कृतौ षष्ठपञ्चिकाया तृतीयोऽध्याय (अष्टाविंशोऽध्याय) ॥ ३ ॥

इसलिए अच्छावाक शिल्प नामक शस्त्रों में नाराशंस रहित ऋचाओं का शंसन करता है जो इस अभिप्राय से होता है कि 'इसे हमें किसी दृढ़ स्थान पर दृढ़ता के लिए स्थापित करना चाहिए।'

॥ इस प्रकार ऐतरेय ब्राह्मण के तृतीय (अट्ठाइसवें) अध्याय की डॉ० सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ ३ ॥

—: ० :—

१. अर्थतन्नाराशंसो नाम छन्दो मृदु शिथिलमिव भवति। योऽय होत्रकाणामन्त्योऽच्छावाको मन्त्य शिथिल इव। तदुक्त तासां वै होत्राणामायतीनामाजयन्तीनामच्छावाकीयाहीयतेति। अयं चेदच्छावाको नाराशंसी शंसेत् सर्वमेतत् कर्म शिथिलमिव भवेत् तस्मादप्यन्तत. शिल्पेष्वनाराशंसीः शंसति तस्य कर्मणो दार्ढ्यार्थम् – इति गोविन्दस्वामी।

इसलिए यह अनुरूपकरण दो अह. के मध्य सिलसिला बनाए रखने के लिए होता है। वस्तुत यह निरन्तरता इसलिए बनाना अपेक्षित है क्योंकि अलग-अलग दिन होने पर भी फल की एकता के कारण समूह प्रयोग एक ही है]।

अभिप्रेतविशेषस्य विधानाद् अहर्भेदेऽपि प्रयोगैक्येन सातत्यं दृष्टान्तेनोपपादयति—

**यथा वा एकाह' सुत एवमहीनस्तद्यथैकाहस्य सुतस्य सवनानि सतिष्ठमानानि यन्त्येवमेवाहीनस्याहानि सतिष्ठमानानि यन्ति, तद्यच्छ्व स्तोत्रियमनुरूप कुर्वन्ति प्रात सवनेऽहीनसततया, अहीनमेव तत् सतन्वन्ति ॥ इति ।**

एकस्मिन्नेवाह्नि निष्पन्नो ज्योतिष्टोम 'एकाह '। स यथा 'सुत ' सोमाभिषवेण कृत्स्नो निष्पादित , एवम् 'अहीन ' अहर्गणोऽपि सोमाभिषवेण निष्पाद्यते । तावेव दृष्टान्तदार्ष्टान्तिकौ तद्यथेत्यादिना स्पष्टीक्रियेते । 'तत्' तस्यैकाहस्य सुतस्य' सोमाभिषवयुक्तस्यैव सतः क्रतोरवयवभूतानि प्रातर्माध्यदिनतृतीयसवनानि 'सतिष्ठमानानि' पृथक् पृथक्समाप्तियुक्तानि 'यन्ति'[1] यजमाना अनुतिष्ठन्ति । एवमेवाहीनस्याहर्गणस्यैकस्यैव सत क्रतोरवयवभूतान्यहानि पृथक्पृथक्समाप्तियुक्तानि यजमाना अनुतिष्ठन्ति । तथा सति यदुत्तरदिनसबन्धिन 'स्तोत्रिय' तृच पूर्वदिने प्रात सवने 'अनुरूप' तृच कुर्वन्ति, तदानीमहर्गणस्यैकस्य क्रतो 'सतति.' मध्ये विच्छेदराहित्य भवति । तस्मादन्यदिने गतस्यान्यदिने प्रयोगेण 'अहीन' क्रतु सतत कुर्वन्ति ॥

[एक ही दिन में निष्पन्न ज्योतिष्टोम 'एकाह' है। वह] एकाह जैसे सोमाभिषव से सम्पूर्ण रूप से सम्पादित होता है, उसी प्रकार अहीन [अहर्गण] भी [सोमाभिषव से निष्पादित होता है]। सोमाभिषव से युक्त होकर भी उस एकाह क्रतु के अवयवभूत [प्रात., माध्यंदिन एव साय] सवनों को पृथक्-पृथक समाप्ति से युक्त करके यजमान अनुष्ठान करते हैं। उसी प्रकार अहीन [अहर्गण] क्रतु के [अवयवभूत] अह का एक होकर भी पृथक् पृथक् उपसंहार करके यजमान अनुष्ठान करते हैं। उसी प्रकार दूसरे दिन से सम्बन्धित स्तोत्रिय-तृच को भी पूर्व दिन के प्रात सवन में वे जब अनुरूप-तृच करते हैं, तब अहर्गण रूप एक क्रतु के सातत्य के मध्य विच्छेदराहित्य ही होता है। वस्तुत: वे इस प्रकार [दूसरे दिन में और बीते हुए अन्य दिन में प्रयोग के द्वारा] वे उस अहीन क्रतु को सतत [लगातार] करते हैं।

अथ माध्यदिनीयशस्त्रवर्तिं विधातुमाख्यायिकामाह—

**ते वै देवाश्च ऋषयश्चाद्रियन्त समानेन यज्ञ सतनवामेति त एतत् समान यज्ञस्यापश्यन्, समानान् प्रगाथान्, समानो' प्रतिपद',समानानि सूक्तानि॥इति।**

---

१. 'सन्ति' इति आन० मुद्रित पाठ. ।

जाते हैं; उन्हीं स्थानों पर दूसरे दिन भी जाते ही हैं। वस्तुतः [अहीन] यज्ञ के [सभी दिनों] को इन्द्र से युक्त करने के लिए ही [पूर्वोक्त समानता का भाव उन देवों और ऋषियों के मन में आया]।

॥ इस प्रकार उन्नीसवें (चतुर्थ) अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीय: खण्डः

अथ सपातनामकानि सूक्तान्याख्यायिकया दर्शयति—

**तान् वा एतान् सपातान् विश्वामित्रः प्रथममपश्यत्, तान् विश्वामित्रेण दृष्टान् वामदेवोऽसृजतैवा त्वामिन्द्र वज्रिन्नत्र, यन्न इन्द्रो जुजुषे यच्च वष्टि, कथा महामवृधत् कस्य होतुरिति, तान् क्षिप्रं समपतद्, यत् क्षिप्रं समपतत्, तत् सपातानां सपातत्वम् ॥ इति।**

'तान् वै' शास्त्रप्रसिद्धानेव 'एतान्' अत्रैवोदाहरिष्यमाणान् सपातनामकान् सूक्तविशेषान् 'विश्वामित्र' महर्षि 'प्रथम' सृष्ट्यादावीश्वरानुग्रहेण 'अपश्यत्' मनसा वेदमध्ये ज्ञातवान्। विश्वामित्रेण सृष्टा ये सूक्तविशेषा, तानधीत्य 'वामदेव' महर्षि: 'असृजत' स्वकीयत्वेन लोके प्रकटीकृतवान्। ते सूक्तविशेषा उदाह्रियन्ते— एवा त्वाम्' इत्येक[1] सूक्त 'यन्न इन्द्र' इति[2] द्वितीय, 'कथा महामिति'[3] तृतीय, 'तान् त्रीन् सूक्तविशेषान् वामदेव: 'क्षिप्र समपतत्' कालविलम्बे सति विश्वामित्र आगत्य स्वकीयत्वं प्रकटीकरिष्यतीति भीत्या स्वयं शीघ्रमेव 'समपतत्' सम्यगध्येतॄञ्छिष्यान् प्राप्तवान्, स्वकीयत्वप्रसिद्ध्यर्थं बहूञ्छिष्यान् सहसाऽध्यापयामासेत्यर्थ:। 'यत्' तेषु सूक्तेषु यद् यस्मात्कारणात् क्षिप्रं समपतत्, 'तत्' तस्मात्कारणात् सम्यक्पतनं प्रकटीकरणमेषां सूक्तानामिति व्युत्पत्त्या सपात नाम संपन्नम् ॥

॥ १८ [४४।८ २] उन [शास्त्र प्रसिद्ध] इन [आगे उद्धृत किए जाने वाले] सपात नामक सूक्त विशेषों का प्रथमतः [सृष्टि के आदि में ईश्वर के अनुग्रह से] महर्षि विश्वामित्र ने दर्शन किया। विश्वामित्र के द्वारा दृष्ट उन [सूक्त विशेषों] को महर्षि वामदेव ने लोक में प्रकट किया, जो इस प्रकार हैं—'एवा त्वाम्' (हे वज्रवान् इन्द्र! इस यज्ञ में शोभन आह्वान से युक्त तुम) आदि प्रथम सूक्त, 'यन्न इन्द्रो' (महान्, बलवान् इन्द्र हम लोगों के जिस हवि रूप अन्न का सेवन करते हैं) आदि द्वितीय सूक्त और 'कथा महान्' *(महान् इन्द्र को हमारी स्तुति किस प्रकार बढ़ाए?)* आदि तृतीय सूक्त हैं। उन [तीन सूक्तों] को [वामदेव ने यह सोचकर कि 'विश्वामित्र बाद में आकर इन्हें अपना कहकर प्रकट कर देंगे'—इस भय से स्वयं] शीघ्र ही सम्यक् रूप से [अपने अध्येता शिष्यों को]

---

१. ऋ० ४.१९।    २. ऋ० ४.२२।    ३. ऋ० ४.२३।

प्राप्त कराया [अर्थात् अपने द्वारा दृष्ट संपात सूक्तों की प्रसिद्धि के लिए बहुत से शिष्यों को पढ़ा दिया]। [उन सूक्तों को] जो शिष्यता से सम्यक् रूप से [शिष्यों को] प्राप्त कराया, उसी सम्यक् रूप से प्रकटीकरण रूप पतन के कारण इन सूक्तों का 'संपात' नाम पड़ा।

अथ सूक्तान्तराणां सृष्टिं दर्शयति—

स हेक्षांचक्रे विश्वामित्रो यान्वा अहं संपातानपश्यं, तान् वामदेवोऽसृष्ट, कानि न्वहं सूक्तानि संपातांस्तत्प्रतिमान् सृजेयेति; स एतानि सूक्तानि संपातांस्तत्प्रतिमानसृजत, सद्यो ह जातो वृषभः कनीन, इन्द्रः पूर्भिदातिरद्दासमर्कैरिमामू षु प्रभृतिं सातये धा, इच्छन्ति त्वा सोम्यासः सखायः, शासद्वह्निर्दुहितुर्नप्त्यं गादभि तष्टेव दीधया मनीषामिति ॥ इति।

वामदेवकृतान्संपातानवगम्य 'स' विश्वामित्र 'ईक्षांचक्रे' मनस्येव विचारितवान्। 'यान्' संपातानहमीश्वरानुग्रहेण दृष्टवानस्मि, तानयं वामदेव 'असृष्ट' गुरुद्रोहभीतिरहितः सन् स्वकीयत्वेन लोके प्रकटीकृतवान्। इतःपरं संपातसदृशानां सूक्तानामपेक्षितत्वात् कानि नाम सूक्तानि 'तत्प्रतिमान्' पूर्वसूक्तसदृशान् संपातान् 'सृजेय' लोके प्रकटीकरवाणि? 'इति' विचार्य विश्वामित्र 'एतानि' वक्ष्यमाणानि सूक्तानि पूर्वसूक्तसदृशान् संपातान् कृत्वा 'असृजत' प्रकटीकृतवान्। तेषु 'सद्यो ह जात.'[1] इत्येकं सूक्तम्। 'इन्द्रः पूर्भिदिति'[2] द्वितीयम्। 'इमामू ष्विति'[3] तृतीयम्। 'इच्छन्ति त्वेति'[4] चतुर्थम्। 'शासद्वह्निरिति'[5] पञ्चमम्। 'अभि तष्टेवेति'[6] षष्ठम्[7]। एतानि सूक्तानि विश्वामित्रसंबन्धित्वेन प्रसिद्धान्यभवन् ॥

[वामदेव के विचारों को जानकर] उन [विश्वामित्र ऋषि] ने मन में विचार किया कि जिन संपात सूक्तों का हमने [ईश्वर के अनुग्रह से] दर्शन किया था उनको [इस] वामदेव ने [गुरुद्रोह की आशङ्का से रहित होकर] अपना बनाकर प्रकट किया है [इसलिए हमारे बाद मेरे भी कुछ सूक्तों की प्रसिद्धि आवश्यक है]। अतः मैं उन पूर्व-संपात सूक्तों के सदृश किन सूक्तों को लोक में प्रकट करूँ?—इस प्रकार विचार करके उन [विश्वामित्र] ने इन [वक्ष्यमाण] सूक्तों को पूर्व सूक्तों के सदृश 'संपात' करके प्रकट किया।

---

१. ऋ० ३.४८। २. ऋ० ३.३४। ३. ऋ० ३.३६।
४. ऋ० ३.३०। ५ ऋ० ३.३१। ६. ऋ० ३.३८।
७. द्र० आश्व० श्रौ० ७.५ २०।

इसमें 'सद्यो ह'[1] (जलवर्षक, दुरन्त उत्पन्न एवं कमनीय इन्द्र) आदि प्रथम सूक्त, 'इन्द्रः पूर्भित्'(पुरों का भेदन करने वाले, महिमावान्, धनों से युक्त इन्द्र) आदि द्वितीय सूक्त, 'इमामू षु' (हे इन्द्र ! मरुतो के साथ सदा सर्वदा संगति की याचना करते हुए इस सोम या स्तुति को हमारे धन लाभ के लिए सम्पादित करो) आदि तृतीय सूक्त, 'इच्छन्ति त्वा' (हे इन्द्र ! सोमरस के योग्य ब्राह्मण तुम्हारी स्तुति करना चाहते हैं) आदि चतुर्थ सूक्त, 'शासद् वह्निः' (बिना पुत्र वाला पिता, पुत्र उत्पन्न करने में समर्थ अपने दामाद की सेवा करता हुआ यह समझते हुए शास्त्र के अनुसार उसके पास गया कि इस कन्या का पुत्र मेरा पुत्र होगा) आदि पाँचवाँ सूक्त और 'अभि तष्टेव'[2] (हे स्तोता ! बढ़ई जैसे लकड़ी का काट छाँट कर संस्कार करता है वैसे ही तुम इन्द्र विषयक स्तुति को सर्वत दीप्त करो) आदि छठवाँ सूक्त है।

अथ भरद्वाजवसिष्ठनोधसा त्रयाणामृषीणां सम्बन्धीनि सूक्तानि दर्शयति—

**य एक इद्धव्यश्चर्षणीनामिति भरद्वाजो, यस्तिग्मशृङ्गो वृषभो न भीम, उदु ब्रह्माण्यैरत श्रवस्येति वसिष्ठो,ऽस्मा इदु प्र तवसे तुरायेति नोधा. ॥ इति ।**

भरद्वाजो 'य एक इद्'-इत्यक[3] सूक्तमसृजत । वसिष्ठ 'यस्तिग्मशृङ्ग' 'उदु ब्रह्माणि' इति सूक्तद्वयम्[4] असृजत । नोधा 'अस्मा इदु प्र तवस'-इत्यक[5] सूक्तमसृजत । एतेषा सर्वेषा सूक्ताना तत्र तत्र विनियोगो वक्ष्यते ॥

---

१. अग्निष्टोमे माध्यन्दिनसवने मैत्रावरुणशस्त्रे सद्यो ह जात' इत्येतत्सूक्तम् । सूत्रित च 'सद्यो ह जात एवा त्वामिन्द्र' (आश्व० श्रौ० ५ १६) इति । चातुर्विंशिकेऽप्यहनि मैत्रावरुणशस्त्रेऽहरह शस्यसंज्ञकमेतत्सूक्तम् । सूचित च—'सद्यो ह जात इत्यहरह-शस्य मैत्रावरुण.' (आश्व० श्रौ० ७ ४) इति । अहर्गणे द्वितीयादिष्वह सु माध्यन्दिन-सवनेऽस्मिन् शस्त्रे एतत्सूक्तम् । 'अहरह शस्यानीति होत्रका द्वितीयादिष्वेव' (आश्व० श्रौ० ७ १) इति सूत्रितम् । सात्स्के एवाह मर वतीय शस्त्रे 'सद्यो ह जात' इत्याद्य सूक्तमुक्तोया । सूत्रित च—'सद्यो ह जातो वृषभ कनीनस्त्व सद्यो अपिबो जात इन्द्र' (आश्व० श्रौ० ९ ५) इति । किन्तु आश्वलायनेन सपातसूक्तरूपेण नोदधृतम् (तु० आश्व० श्रौ० ७ ५ २०) ।

२ चातुर्विंशिकेऽहनि माध्यंदिने सवनेऽच्छावाकशस्त्रे 'अभि तष्टेव' इत्यहरह शस्यसंज्ञक-मेतत्सूक्तम् । सूत्रित च—'उदु ब्रह्माण्यभि तष्टेवेतीतरावहरह शस्ये' (आश्व० श्रौ० ७.४) इति । एव सर्वत्राहर्गणेषु द्वितीयादिष्वह सु माध्यन्दिने सवनेऽच्छावाकशस्त्र एतत्सूक्तम् । किन्तु आश्वलायनेन एतदपि सूक्त सपातसूक्तरूपेण नोदधृतम् (तु० आश्व० श्रौ० ७.५ २०) ।

३. ऋ० ६.२२ । ४ ऋ० ७ १९,२३ । ५. ऋ० १ ६१ ।

इसके बाद 'य एक इत्' (जो एकमात्र इन्द्र मनुष्यों द्वारा विपत्तियों में बुलाने योग्य हैं) आदि एक सूक्त को भरद्वाज ऋषि ने प्रकट किया। 'यस्तिग्मशृङ्ग' (जो इन्द्र तीक्ष्ण सींगों वाले एवं भयङ्कर वृषभ के समान) आदि और 'उदु ब्रह्माण्यैरत' (ऋषियों ने सब स्तुतियाँ अन्न पाने की अभिलाषा से कही हैं) आदि दो सूक्त वसिष्ठ ऋषि ने प्रकट किया। 'अस्मा इदु'[1] (जैसे भूखे को अन्न देते हैं वैसे ही मैं शक्तिसम्पन्न, शोभना करने वाले इन्द्र को) आदि सूक्त नोधा ऋषि ने प्रकट किया।

इदानीमहीनसूक्तानि विधत्ते—

त एते प्रातःसवने षळहस्तोत्रियाञ्छस्त्वा माध्यंदिनेऽहीनसूक्तानि शंसन्ति॥ इति।

ते प्रसिद्धा एते प्रयोगकाले सन्निहिता होत्रका अहर्गणेषु प्रातःसवने षळह-सम्बन्धिनः स्तोत्रियान् तृचान् आ नो मित्रावरुणा—मित्र वयम्—इत्यादीन् सूत्रकार-पठितान् तृचान्[2] शस्त्वा, माध्यंदिने सवने त्वहीनसूक्तानि शंसेयुः॥

वे ये [इस प्रयोग में सन्निहित होत्रक अहर्गणों के] प्रातःसवन में षडह सम्बन्धी स्तोत्रियों ['आ नो मित्रावरुणा' और 'मित्र वयम्' आदि सूत्रकार पठित तृचों] का शंसन करके माध्यंदिन सवन में अहीन सूक्तों का शंसन करते हैं।

तान्यहीनसूक्तानीत्यादिनोदाहरति—

तान्येतान्यहीनसूक्तान्या सत्यो यातु मघवाँ ऋजीषीति सत्यवन् मैत्रावरुणो, ऽस्मा इदु प्र तवसे तुरायेन्द्राय ब्रह्माणि राततमा। इन्द्र ब्रह्माणि गोतमासो अक्रन्निति ब्रह्मण्वद् ब्राह्मणाच्छंसी, शासद्वह्निर्जनयन्त वह्निमिति वह्नि-वदच्छावाकः॥ इति।

'तानि' पूर्वोक्त विहितान्यहीनसूक्तान्यनेनोदाह्रियन्ते,—'आ सत्यो यातु'—इति[3] 'सत्यवत्' सत्यशब्दोपेतं सूक्तं मैत्रावरुणः शंसेत्। 'अस्मा इदिति'[4] सूक्तम्। तत्र 'इन्द्राय

---

१. षळहस्तोत्रियाञ्छस्त्वा पशुविधमहीनसूक्तादिष्वर्थ मु माध्यन्दिन सवने ... 'वयुना ते ब्रह्मयुजा' इत्यस्मा आरम्भ शेषं ऽप्यंमहीनसूक्तमसमन्वितं पदम्। तथा च सूत्रम्—'अस्मा इदु प्र तवस इत्यच्छावाकोऽहीनसूक्त' (आश्व० श्रौ० ७ ४) इति।

२ 'आ नो मित्रावरुणा, मित्र वयं हवामहे मित्र हुवे पूतदक्षम् अव वां मित्रावरुणा, युवां ... प्रति वां सूर उदिते इति षळहस्तोत्रिया मैत्रावरुणस्य'—इति आश्व० श्रौ० ७ २ २। 'षडहस्तोत्रियान् तृचानभिप्रायो उच्यते'—इति तत्र नारायणः।

३ ऋ० ४ १६। ४ ऋ० १ ६१।

•

ब्रह्माणीति' चतुर्थ पाद । तत्र 'ब्रह्माणीति' श्रुतत्वात् इद सूक्त ब्रह्मण्वत्' ब्रह्मशब्दोपेतम् । तथा तत्रैव सूक्ते 'इन्द्र ब्रह्माणीति' श्रुत्वादिन्द्रब्रह्मण्वत्, तदेतदुभय ब्राह्मणाच्छंसी शंसेत् । 'शासद् वह्निरिति'[1] सूक्त वह्निवद्' वह्निशब्दोपेत तस्मिन् सूक्ते 'जनयन्त वह्निमिति' श्रुतत्वात् । तदेतदच्छावाक शसेत् ॥

वे अहीनसूक्त इस प्रकार हैं—१ आ सत्यो यातु' (सोम एव सत्य को धारण करने वाले इन्द्र हमारे पास आयें) आदि 'सत्य शब्द से युक्त सूक्त का मैत्रावरुण [शसन करता है], २ 'अस्मा इत्' (जैसे भूखे को अन्न देते हैं वैसे ही मैं शक्तिसम्पन्न, शीघ्रता करने वाले इन्द्र को) आदि सूक्त के 'इन्द्राय ब्रह्माणि' आदि चतुर्थ पाद में ['ब्रह्माणि शब्द होने से] 'ब्रह्मन्' शब्द से युक्त [तथा उसी सूक्त के] 'इन्द्र ब्रह्माणि गोतमासो' (हे इन्द्र तुम्हें अपने यज्ञ में बुलाने के लिए गोतम गोत्र वाले ऋषियों ने तुम्हारे प्रति स्तुति रूपी मन्त्र कहे हैं) आदि 'इन्द्र' एव 'ब्रह्मन्' शब्द युक्त दोनों ही सूक्तों का ब्राह्मणाच्छंसी [शसन करता है] । ३ 'शासद्वह्नि ' (बिना पुत्र वाला पिता, पुत्र उत्पन्न करने में समर्थ अपने दामाद की सेवा करता हुआ यह समझते हुए शास्त्र के अनुसार उसके पास गया कि इस कन्या का पुत्र मेरा पुत्र होगा) आदि 'वह्नि शब्द से युक्त सूक्त का अच्छावाक [शसन करता है] ।

अथाच्छावाकविषय प्रश्नमुद्भावयति—

**तदाहु कस्मादच्छावाको वह्निवदेतद् सूक्तमुभयत्र शसति—पराक्षिषु चैवाह स्वभ्यावर्तिषु चेति ॥ इति ।**

गवामयने हि द्विविधा यहानि —आवृत्तिरहितानि तत्सहितानि च । तत्र वक्ष्यमाणानि चतुर्विंशादीन्यावृत्तिरहितानि अभिप्लवषडहगतानि पृष्ठ्यषडहगतानि चावृत्तिसहितानि तयो षडहयोरसकृदनुष्ठानस्य विहितत्वात् । एव सति पराक्षिषु' आवृत्तिरहितेषु चतुर्विंशादिष्वह सु वह्निमत्' सूक्तमच्छावाक शसति । तथव आभ्यावर्तिषु षडहगतेष्वह सु च तत्सूक्त शसति । तत्रोभयत्र शसने किं कारणम् ? इति प्रश्न ॥

उस [अच्छावाक] के विषय में ब्रह्मवादी प्रश्न करते हैं कि—क्यों अच्छावाक 'वह्नि' शब्द से युक्त इस सूक्त का ही दोनों [चतुर्विंशादि] बीते हुए अहर्गणों में तथा पुन आने वाले [षडहगत] अहर्गणों में भी शसन करता है ? [वस्तुत गवामयन में दो प्रकार के अह होते हैं—१ आवृत्तिरहित और २ आवृत्तिसहित । उनमें आग कहे जाने वाले चतुर्विंशादि अहर्गण आवृत्तिरहित हैं और बारबार अनुष्ठान विहित होने से आभिप्लव षडहगत और पृष्ठ्यषडगत अहर्गण आवृत्तिसहित हैं] ।

---

१ ऋ० ३ ३१ ।

किंचैता यहीनानि 'पराञ्चीनि' सकृदेव[1] प्रयोज्यानि, न त्वावृत्तियुक्तानि। तस्यैव पद व्याख्यानमनभ्यावर्तीनीति। तस्मात् सकृदेव[2] प्रयोज्य वात्तेष्वह सु सामर्थ्यातिशयाय तानि सूक्तानि शंसेयु ॥

उन [पूर्वोक्त अहीन सूक्तों] का पांच दिनों में [होत्रक] शसन करते हैं—१ चतुर्विंश नामक [आरम्भणीय] अह में, २ अभिजित, ३ [मध्य के प्रधान अह ] विषुवत् अहः में, ४ विश्वजित् और ५ [अन्तिम से पहले के दिन] महाव्रत अह में। ये दिन अहीन हैं, क्योंकि इन दिनों में [यज्ञ का] कोई भी अङ्ग क्षीण नहीं होता [अत ये सूक्त वहाँ युक्तियुक्त हैं। ये अहर्गण पराचि अर्थात एक बार में ही प्रयोग में आने वाले हैं, ये अभ्यावर्ति अर्थात आवृत्ति युक्त नहीं है। इसलिए [बार-बार प्रयोग होने के कारण] इन दिनों में [अहीन सूक्त का] शसन करते हैं।

प्रकारान्तरेण सूक्तानि प्रशसति—

**यदेनानि शसन्त्यहीनान् स्वर्गाल्लोकान् सर्वरूपान् सर्वसमृद्धानवाप्नवामेति ॥ इति।**

'ये' स्वर्गलोका अहीना ' भोग्यैर्वस्तुभिर्हीना न भवति, अत एव 'सर्वसमृद्धा ' उत्तममध्यमाधमकर्मफलरूपत्वात् 'सर्वरूपा ' बहुविधा भवति तांल्लोकान् प्राप्नवामेत्यनेनाभिप्रायेण तानि सूक्तानि शसेयु ॥

जब वे इन [सूक्तों] का शसन करते हैं [तो यह समझते हैं कि]—'जो स्वर्ग लोक [भोग्य वस्तु से] हीन नहीं है किन्तु वे सभी प्रकार के [उत्तम, मध्यम एव अधम कर्मफल रूप होने से] बहुविध रूपों से सब समृद्ध हैं, उन लोकों को हम प्राप्त कर।'

पुनरपि प्रकारान्तरेण प्रशसति—

**यदेवैनानि शसन्तीन्द्रमेवैतैर्निह्वयन्ते यथ ऋषभ वाशितायै ॥ इति।**

एतानि' सूक्तानि यदा शसं ति, तदानीमेतैरिन्द्रमेव निह्वयन्ते[4] निरतरामाह्वयन्ति, गर्भग्रहणमिच्छन्ती धनु वाशिता ', तदर्थमृषभ पुनत्र यथाऽऽह्वयति यद्वदि द्राह्वान द्रष्टव्यम् ॥

जब वे इन [सूक्तों] का शसन करते हैं तब इनसे वे इन्द्र का ही निरन्तर आह्वान करते हैं, जैसे गर्भ की इच्छा वाली रंभाती हुई गाय वृषभ का आह्वान करती है।

---

१ द्र० इत पूर्वम् ९८१ पृ०।

२ प्रयोज्यानि तस्मात् सकृदेव'—इति साम० सपा० मु० पुस्तके नास्ति।

३ द्र० इत पूर्वम्, ९८० पृ०।

४ 'निसमुपविभ्य ' इति तङ् (पा० सू० १ ३ ३०)। नियमेन आह्वयन्ति। —इति षड्गुरुशिष्य।

पुनरपि प्रकारान्तरेण सूक्तानि प्रशंसति—

**यद्वेवैनानि शंसन्त्यहीनस्य संतत्या, अहीनमेव तत् संतन्वन्ति ॥ १८ ॥ इति ।**

'यद्वेव' यस्मादेव कारणात् 'एतानि' सूक्तानि सर्वेष्वहःसु शंसन्ति, तस्मादेव कारणा-देतच्छंसनम् 'अहीनस्य' अहर्गणस्य संतत्यर्थं सपद्यते । 'तत्' तेन शंसनेन अहीनमेवाहर्गण-मेव 'संतन्वन्ति' संतत कुर्वन्ति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ-पञ्चिकाया चतुर्थाध्याये (एकोनत्रिंशाध्याये) द्वितीयः खण्डः ॥२॥ (१८) [१०५]

जिस कारण इन [सूक्तों] का सभी अहर्गणों में शंसन करते हैं उसी कारण यह शंसन अहीन अहर्गण की निरन्तरता के लिए संपादित होता है । उस [शंसन] से अहीन अहर्गणों को ही वे संतत [ = लगातार] करते हैं ।

॥ इस प्रकार उन्तीसवें (चतुर्थ) अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

अथ पूर्वोक्तानां संपातसूक्तानां विनियोगं दर्शयति—

**ततो या एतांस्त्रीन् संपातान् मैत्रावरुणो विपर्यासमेवैकैकमहरहः शंसति ॥ इति ।**

'ततो ये' तस्मादेव पूर्वोक्ताच्चतुर्विंशादेरहः पश्चादन्यत्र षडहेष्विति शेषः । तेषु मैत्रावरुणः त्रीन् संपाताख्यान् सूक्तविशेषान् 'विपर्यासं' विपर्यस्य शंसेत् । स एव विपर्यास एकैकमहरह इत्यनेन स्पष्टीक्रियते । प्रतिदिनमेकैकसूक्तमित्यर्थः ॥

[संपात सूक्तों का विनियोग]—

२९.१९ [xxix.३] उन [पूर्वोक्त चतुर्विंशादि अहः पक्षों] से अन्य [षडह के पहले तीन] दिनों में इन तीन संपात सूक्तों का मैत्रावरुण एक-एक करके दिन-प्रतिदिन विपर्यास करके [उलटे क्रम से] शंसन करता है ।

तदेवोदाहृत्य प्रदर्शयति—

**'एवा त्वामिन्द्र वज्रिन्नत्रेति'[1] प्रथमेऽहनि, 'यन्न इन्द्रो जुजुषे यच्च वष्टीति'[2] द्वितीये, 'कथा महामवृधत् कस्य होतुरिति'[3] तृतीये ॥ इति ।**

[यह मैत्रावरुण] 'एवा त्वाम्' (हे वज्रवान् इन्द्र ! इस यज्ञ में तोभन आह्वान से युक्त तुम) आदि सूक्त का प्रथम दिन, 'यन्न इन्द्रो' (महान् बलवान् इन्द्र हम लोगों के जिस हवि रूप अन्न का सेवन करते हैं) आदि सूक्त का द्वितीय दिन और 'कथा महान्' (महान् इन्द्र को हमारी स्तुति किस प्रकार बढ़ाएँ ?) आदि सूक्त का तृतीय दिन [शंसन करता है] ।

---

१. ऋ० ४.१९ । २. ऋ० ४.२२ । ३. ऋ० ४.२३ ।

मैत्रावरुणवद् ब्राह्मणाच्छंसिनोऽपि सूक्तत्रयस्य विपर्यासेन शंसनं दर्शयति—

**त्रीनेव संपातान् ब्राह्मणाच्छंसी विपर्यासमेकैकमहरहः शंसतीन्द्रः पूर्भिदातिरद्दासमर्कैरिति[1] प्रथमेऽहनि, 'य एक इद्धव्यश्चर्षणीनामिति'[2] द्वितीये, 'यस्तिग्मशृङ्गो वृषभो न भीम इति'[3] तृतीये ॥** इति ।

[वैसे ही] तीन ही संपात सूक्तों का ब्राह्मणाच्छंसी एक-एक करके दिन-प्रतिदिन विपर्यास करके [उलटे क्रम से] शंसन करता है। वह 'इन्द्र पूर्भित्' (पुरों का भेदन करने वाले, महिमावान्, यज्ञों से युक्त इन्द्र) आदि सूक्त का प्रथम दिन, 'य एक इत्' (जो एकमात्र इन्द्र प्रजाओं द्वारा विपत्तियों में बुलाने योग्य हैं) आदि सूक्त का द्वितीय दिन और 'यस्तिग्मशृङ्ग.' (जो इन्द्र तीक्ष्ण सींगों वाले भयङ्कर वृषभ के समान) आदि सूक्त का तृतीय दिन [शंसन करता है] ।

तथाऽच्छावाकस्यापि सूक्तत्रयस्य विपर्यासेन शंसनं दर्शयति—

**त्रीनेव संपातानच्छावाको विपर्यासमेकैकमहरहः शंसतीमामू षु प्रभृतिं सातये धा इति[4] प्रथमेऽहनीच्छन्ति त्वा सोम्यास. सखाय इति[5] द्वितीये, 'शासद्वह्निर्दुहितुर्नप्त्यङ्गादिति'[6] तृतीये ॥** इति ।

[वैसे ही] तीन ही संपात सूक्तों का अच्छावाक भी एक एक करके दिन-प्रतिदिन विपर्यास करके [उलटे क्रम से] शंसन करता है। वह 'इमामू षु' (हे इन्द्र ! इस सोम को या स्तुति को हमारे धन लाभ के लिए सम्पादित करो) आदि सूक्त[7] का प्रथम दिन, 'इच्छन्ति त्वा' (हे इन्द्र ! सोम रस के योग्य ब्राह्मण तुम्हारी स्तुति करना चाहते हैं), आदि सूक्त का द्वितीय दिन और 'शासद् वह्नि.' (बिना पुत्र वाला पिता, पुत्र उत्पन्न करने में समर्थ अपने दामाद की सेवा करता हुआ यह समझते हुए शास्त्र के अनुसार उसके पास गया कि इस कन्या का पुत्र मेरा पुत्र होगा) आदि सूक्त का तृतीय दिन शंसन करता है।

---

१. ऋ० ३.३४ ।          २ ऋ० ६.२२ ।          ३ ऋ० ७ १९ ।
४. ऋ० ३.३६ ।          ५. ऋ० ३.३० ।          ६. ऋ० ३ ३१ ।
७. अच्छावाकः शंसति ।

उपान्त्यास्मे प्रयन्धीति यज्ञेष्वेषा न शस्यते ।
अत. एकादशर्चं सत् सूक्तमासीद्दशर्चकम् ॥

'इमामू षूपान्त्या घोरोऽपश्यद् सा निर्दहेच्छस्यमानेति (आश्व० श्रौ० ५.१६.२) श्रूयते' इति हि ऋक्सर्वानुक्रमणी (३.३६) ।

'उपान्त्यास्म प्रयन्धीति घोर आङ्गिरसो जगौ ।
निर्दहेच्छस्यमानेति श्रूयते सा न शस्यते ॥'

इति चार्षानुक्रमणी (म०३ श्लो०८)—इति षड्गुरुशिष्य. ।

उक्तानां सूक्तानां मिलित्वा सङ्ख्यां दर्शयति—

**तानि वा एतानि नव ॥ इति ।**

ये [सभी कुल मिलाकर] ये [सूक्त] नौ हो जाते हैं।

दिनविशेषेण सूक्तविशेषान् विधाय प्रतिदिनं शंसनीयानि सूक्तानि विधत्ते—

**त्रीणि चाहरहः शस्यानि ॥ इति ।**

यानि प्रतिदिनं शंसनीयानि त्रीणि सूक्तानि, तान्युपरितनखण्डे[1] 'सद्यो ह जातः' इत्यादिना वक्ष्यन्ते ॥

दिन-प्रतिदिन तीन-तीन सूक्तों का शंसन होना चाहिए [उन शंसनीय सूक्तों का आगे के 'सद्यो ह जातः' आदि खण्ड में वर्णन करेंगे]।

दिनविशेषगतानि प्रतिदिनगतानि च मिलित्वा प्रशंसति—

**तानि द्वादश संपद्यन्ते, द्वादश वै मासाः संवत्सरः, संवत्सरः प्रजापतिर्यज्ञस्तत्संवत्सरं प्रजापतिं यज्ञमाप्नुवन्ति, तत्संवत्सरे प्रजापतौ यज्ञेऽहरहः प्रतितिष्ठन्तो यन्ति ॥ इति ।**

'तानि' पूर्वोक्तानि नव त्रीणि च मिलित्वा द्वादश संपद्यन्ते। अतो माससंवत्सरप्रजापतिद्वारा प्रजापतिसृष्टत्वेन प्रजापतिरूपो यो यज्ञस्तादृशं संवत्सरात्मकं प्रजापतिरूपं यज्ञमनुष्ठातारः प्राप्नुवन्ति। 'तत्' तेन शंसनेन संवत्सरात्मकप्रजापतिरूपे यज्ञे प्रतिदिनं प्रतिष्ठिताः सन्तोऽनुतिष्ठन्ति ॥

[दिन विशेषगत-सूक्त और प्रतिदिनगत एक-एक सूक्त मिलकर] इस प्रकार ये [सूक्त] बारह हो जाते हैं। संवत्सर में बारह महीने होते हैं। संवत्सर प्रजापति है। प्रजापति यज्ञ है। अतः उस [शंसन] से संवत्सरात्मक प्रजापति रूप यज्ञ को [अनुष्ठाता] प्राप्त करते हैं। इस प्रकार उस [शंसन] से संवत्सरात्मक प्रजापति रूप यज्ञ में [अपने यज्ञ को] प्रतिदिन प्रतिष्ठित करते हुए ये अनुष्ठान करते हैं।

अथ पृष्ठ्यषडहस्योत्तरस्मिंस्त्र्यहे कर्तव्यमावापं विधत्ते—

**तान्यन्तरेणावापमावपेरन् ॥ इति ।**

यानि दिनविशेषेण शंसनीयानि नवसंख्याकानि सूक्तान्युक्तानि, यानि च प्रतिदिनं शंसनीयानि त्रीणि सूक्तानि, 'तान्यन्तरेण' तेषामुभयविधानामन्तराले स्थाने विविधशंसनीयसूक्तसमूहमावपेरन् ॥

[जो दिनविशेष करके शंसनीय नौ सूक्त कहे गए हैं और जो प्रतिदिन शंसनीय तीन अन्य सूक्त हैं] उन दोनों के बीच में आवपनीय सूक्त समूह का आवाप [पृष्ठ्यषडह के बाद के तीन दिनों में] करना चाहिए।

---

1. द्र० द्वितः परम्, (२९.५) पृ० ९८९।

कस्मिन् दिने का ऋच आवपनीया इत्याशङ्क्य तत्सर्वं विविच्य दर्शयति—

अन्यूङ्ख्या विराजो वैमदीश्च चतुर्थेऽहनि, पङ्क्ती. पञ्चमे, पारुच्छेपी. षष्ठे ॥ इति ।

उच्चारणविशेषोपेता ओकारा 'न्यूङ्खा', ते च पूर्वमेव 'मुक्तो मध्यदिने न्यूङ्खयति'—इत्यत्राभिहिता [1]। तानर्हन्तीति न्यूङ्ख्या । तद्विपरीता 'अन्यूङ्ख्या'। 'विराज' विराट्छन्दस्का ऋच । ता पृष्ठ्यषडहस्य चतुर्थेऽहन्यावपनीयाः। 'न ते गिरो अपि मृष्ये'—इत्याद्यास्तस्र ऋच [2]। 'प्र वो महे महिवृधे भरध्वम्'—इत्याद्यास्तिस्र [3]। एताः सप्त विराज । त्रयाणां होत्रकाणां त्रयस्तृचा भवन्ति । प्रथममारभ्यैकस्तृचो मैत्रावरुणस्य, तृतीयमारभ्यैकस्तृचो ब्राह्मणाच्छंसिन । पञ्चमीमारभ्यैकस्तृचोऽच्छावाकस्य । तदेव सप्तस्वृक्षु त्रयस्तृचा विभज्य प्रक्षेपणीया.। सोऽयं विराजो प्रक्षेप एक पक्ष । वैमदीरावपेदिति पक्षान्तरम् । विमदाख्येन महर्षिणा दृष्टा वैमद्य । ताश्च 'यजामह इन्द्रम्'—इत्याद्या सप्तर्चं [4]। ता अपि पूर्ववत् त्रयस्तृचा कर्तव्या । पञ्चमेऽहनि 'यच्चिद्धि सत्य सोमपा'—इत्याद्या. पङ्क्तिच्छन्दस्का सप्तर्चं [5] पूर्ववदावपनीया । तथा षष्ठेऽहनि परुच्छेपेन दृष्टा 'इन्द्राय हि द्यौ.'—इत्याद्या. सप्तर्चं [6] पूर्ववदावपनीया. ।

*[पृष्ठ्यषडह के]* चतुर्थ दिन *[आवपनीय] विराट् छन्दस्क और विमद ऋषि द्वारा* दृष्ट ऋचाओं का पाठ बिना न्यूङ्ख [अर्थात् ओंकार के विशेष उच्चारण के बिना] करना चाहिए। ['न ते गिरो अपि' आदि चार ऋचाएँ और 'प्र वो महे' आदि तीन ऋचाएँ *मिलकर सात विराट् छन्दस्क ऋचाएँ हैं। तीन होत्रकों के तीन तृच होते हैं।* प्रथम से आरम्भ करके एक तृच मैत्रावरुण का, तृतीय से आरम्भ करके एक तृच ब्राह्मणाच्छंसी का, पञ्चम से आरम्भ करके एक तृच अच्छावाक का होता है। इस प्रकार सात ऋचाओं में विभाजित करके तीन तृच प्रक्षेपित करना चाहिए। यह विराट् छन्दस्क ऋचाओं के प्रक्षेप का एक पक्ष है और द्वितीय पक्ष विमद ऋषि द्वारा दृष्ट ऋचा का है, और यह 'यजामह इन्द्रम्' आदि सात ऋचाएँ हैं। उन्हें भी पहले की भाँति विभाजित करके तीन तृच बना लेना चाहिए]। पञ्चम दिन ['यच्चिद्धि सत्य' आदि] पंक्ति छन्दस्क ऋचाओं का [पहले की भाँति आवपन करना चाहिए, और] छठवें दिन परुच्छेप ऋषि द्वारा दृष्ट *['इन्द्राय हि द्यौः' आदि सात]* ऋचाओं का *[भी पूर्व की ही* तरह आवपन करना चाहिए]।

---

१. द्र० इत पूर्वम्, ७३१ पृष्ठे ।          २ ऋ० ७.२२ ५–८ ।
३. ऋ० ७ ३१ १०–१२   ४ ऋ० १० २३ १–७ ।   ५ ऋ० १ १२९.१–७ ।
६. ऋ० १ १३१ १–७ ।

स्तोमवृद्धावतिशंसनार्थमावपनीयानि सूक्तानि दर्शयति—

**अथ यान्यहानि महास्तोमानि स्युः, को अद्य नर्यो देवकाम इति मैत्रावरुण आवपेत, वने न वायो[1] न्यधायि चाकन्निति ब्राह्मणाच्छंस्या याह्यर्वाङुप वन्धुरेष्ठा इत्यच्छावाकः ॥ इति ।**

'अथ' पूर्वोक्तविराडाद्यावापकथनानन्तरम् । अन्य आवाप उच्यत इति शेषः । यान्यहानि 'महास्तोमानि' सप्तदशैकविंशादिस्तोमेभ्योऽधिकैश्चतुर्विंशादिस्तोमैर्युक्तानि स्युः, तेष्वहःसु स्तोमसङ्ख्यामतिक्रम्याधिकानामृचां शंसनं कर्तव्यम् । तत्र मैत्रावरुणः 'को अद्येति[2]' सूक्तमावपेत । ब्राह्मणाच्छंसी 'वने नेति[3]' सूक्तमावपेत । अच्छावाकः 'आ याहीति[4]' सूक्तमावपेत ॥

इस [विराट् आदि के आवपन के कथन] के बाद [स्तोम की वृद्धि होने पर अन्य आवाप को कहते हैं]—जो दिन महास्तोम [अर्थात् सप्तदश, एकविंश आदि स्तोम से अधिक चतुर्विंशादि स्तोमों से युक्त] हों [तो स्तोम संख्या से अधिक ऋचा का शंसन करना चाहिए]। मैत्रावरुण 'को अद्य' (आज कौन मानवहितैषी, देवाभिलाषी मनुष्य) आदि सूक्त का, ब्राह्मणाच्छंसी 'वने न वायो' (पक्षी जिस प्रकार भय से चारों ओर फैलता हुआ पेड़ पर बने घोंसले में अपने बच्चे रखता है) आदि सूक्त का, और अच्छावाक 'आ याहि' (हे जुए वाले रथ पर बैठे हुए इन्द्र! तुम शीघ्र हमारे पास आओ) आदि सूक्त का आवपन करे।

तेषां सूक्तानां प्रशंसां दर्शयति—

**एतानि वा आवपनान्येतैर्वा आवपनैर्देवाः स्वर्गं लोकमजयन्नेतैर्ऋषयस्तथैवै-तद्यजमाना एतैरावपनैः स्वर्गं लोकं जयन्ति ॥ १९ ॥ इति ।**

को अद्येत्यादीनि सूक्तानि 'आवपनानि' आवापयोग्यानि, एतैर्देवानां स्वर्गजयाद्यजमानानामपि तैः स्वर्गजयो भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकायाः चतुर्थाध्याये (एकोनत्रिंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (१९) [१०६]

ये ही सूक्त आवपन के योग्य हैं। इन्हीं आवपनों के द्वारा देवों ने स्वर्गलोक को जीता और इन्हीं से ऋषियों ने भी [जय को प्राप्त की]। उसी प्रकार इन्हीं आवपनों के द्वारा ये यजमान भी स्वर्गलोक को जीतते हैं।

॥ इस प्रकार उन्तीसवें (चतुर्थ) अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

---

१. वायः=वेः पुत्रः । 'वय' इति च य इति च चकार शाकल्यः, उदात्तं त्वेवमाख्यातमभविष्यदसुसमाप्तश्चार्थः —इति निरु० ६ ५ ५ ।

२ ऋ० ४.२५ । ३ ऋ० १०.२९ । ४ ऋ० ३.४३ ।

## अथ चतुर्थः खण्डः

एवं तावत्प्रसक्तानुप्रसक्तं परिसमाप्याधुना प्रस्तुतमारभते—

**'सद्यो ह जातो वृषभः कनीन इति'[1] मैत्रावरुणः पुरस्तात् सूक्तानामहरहः शसति ॥ इति ।**

पूर्वत्र[2] त्रीणि चाहरहः शस्यानीति यदुक्तं, तस्यैवैतद् व्याख्यानं 'सद्यो ह जात' इत्यादिकं मैत्रावरुणः स्वकीयस्य सूक्तस्य पुरस्तात् प्रतिदिनं शंसेत् । सूक्तानामिति बहुवचनं व्यत्ययेन द्रष्टव्यम्[3] ॥

VI.२० [XXIX.४] मैत्रावरुण अपने स्वकीय सूक्तों के पहले दिन-प्रतिदिन 'सद्यो ह जात.' (जलवर्षक, तुरन्त उत्पन्न एवं कमनीय इन्द्र) आदि सूक्त का शंसन करता है ।

उक्तसूक्तं प्रशंसति—

**तदेतत्सूक्तं स्वर्ग्यमेतेन वै सूक्तेन देवाः स्वर्गं लोकमजयन्नेतेन ऋषयस्तथैवैतद्यजमाना एतेन सूक्तेन स्वर्गं लोकं जयन्ति ॥ इति ।**

'स्वर्ग्यं' स्वर्गाय हितम् । अन्यत् पूर्ववद् व्याख्येयम् ॥

वह यह सूक्त स्वर्ग से सम्बन्धित है । इसी सूक्त से देवों ने स्वर्गलोक को जीता और इसी से ऋषियों ने भी [जय की प्राप्ति की] । उसी प्रकार इस सूक्त के द्वारा ये यजमान भी स्वर्गलोक को प्राप्त करते हैं ।

ऋषिसम्बन्धेन पुनः प्रशंसति—

**तदु वैश्वामित्रं विश्वस्य ह वै मित्रं विश्वामित्र आस ॥ इति ।**

'तदु'[4] तत् सूक्तं विश्वामित्रेण दृष्टत्वात् 'वैश्वामित्रम्' । विश्वस्य मित्रमिति निरुक्त्या विश्वामित्रशब्दोऽभूत्[5] ॥

यह सूक्त तो विश्वामित्र ऋषि द्वारा दृष्ट है । विश्वामित्र सम्पूर्ण विश्व के मित्र थे ।

---

१. ऋ० ३ ४८ । २ द्र० इतः पूर्वम्, ९८४ पृ० (२९ ३) ।

३ (I) 'इत्सर्वे आम्'—इति षड्गुरुशिष्य । (II) कथमिदं सूक्तानामिति बहुवचनम् ? ननु मैत्रावरुणस्याहरहः शस्यादूर्ध्वमहीनसूक्तमेवावशिष्यते । आह च—'आसत्यो यात्वित्यहीनसूक्तं द्वितीयं मैत्रावरुणः' इति । अतः कथं बहुवचनमिति न विद्मः । अत्रोच्यते—सत्यम् । एकमेव सूक्तम् । वाक्यानि तु बहूनि विद्यन्ते । तान्येव सुष्ठु वक्ति इति योगात् सूक्तानि । अतः पुरस्तात् सूक्तानामित्युपपन्नं भवति'—इति गोविन्दस्वामी ।

४ (I) 'उ—खलु' इति षड्गुरुशिष्य । (II) 'उ इत्यनर्थकं'—इति गोविन्दस्वामी ।

५ विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितो बभूव, 'विश्वामित्रः सर्वमित्रः'—इति निरु० २ ७ २ । 'मित्रे चर्षौ'—इति पा० सू० ६ ३ १३०—इति दीर्घः ।

वेदनं तत्पूर्वमनुष्ठानं च प्रशंसति—

विश्वं हास्मै मित्रं भवति य एवं वेद, येषां चैवं विद्वानेतन् मैत्रावरुणः पुरस्तात् सूक्तानामहरहः शंसति ॥ इति ।

इसलिए जो इस प्रकार जानता है उसका सम्पूर्ण विश्व मित्र बन जाता है और उनका भी [मित्र बन जाता है] जिनके लिए यह मैत्रावरुण इस प्रकार जानते हुए अपने स्वकीय सूक्तों के पहले दिन-प्रतिदिन शंसन करता है।

वृषन् कनीन इति योऽयं वृषनशब्दस्तदन्तर्गतं वकारव्यतिरिक्तवृषनशब्दमुपजीव्य प्रशंसति —

तद्वृषन्वत् पशुमद्भवति, पशूनामवरुद्ध्यै ॥ इति ।

'तद्' सूक्तं वृषनशब्दोपेतम्, वृषनस्य च पशुत्वात् सूक्तं पशुमद्भवति । अत पशुप्राप्त्यै सम्पद्यते ॥

यह सूक्त 'वृषन' शब्द से युक्त और 'पशु' शब्द से युक्त है जो पशुओं की प्राप्ति के लिए ही सम्पादित होता है।

ऋक्संख्यामुपजीव्य प्रशंसति

तत्पञ्चर्चं भवति, पञ्चपदा पङ्क्तिः, पाङ्क्तमन्नमन्नाद्यस्यावरुद्ध्यै ॥ इति ।

ऋक्पञ्चकतया पञ्चसंख्यया पादपञ्चकोपेतपङ्क्तिच्छन्दःस्वरूपत्वम् । अन्नं च पञ्चसंख्यावत्त्वात् पङ्क्तिरेव,—भक्ष्य, पेय, खाद्य, लेह्य, निगीर्णमिति, एवमन्नस्य पञ्चसंख्या । तस्मादिदमन्नप्राप्त्यै सम्पद्यते ॥

यह सूक्त पाँच ऋचाओं का है। पङ्क्ति छन्द भी पाँच पादों से युक्त होता है। पङ्क्ति अन्न है [क्योंकि भक्ष्य, पेय, खाद्य, लेह्य और निगीर्ण भेद से अन्न भी पाँच प्रकार का होता है] इसलिए यह अन्न की प्राप्ति के लिए ही सम्पादित होता है।

ब्राह्मणाच्छंसिनः सूक्तं विधत्ते—

'वयु ब्रह्माण्येरत मघवस्येति'[2] ब्राह्मणाच्छंसी ब्रह्मण्वत् समृद्धं सूक्तमहरहः शंसति ॥ इति ।

ब्रह्माणीति ब्रह्मशब्दोपेतमिदं सूक्तं ब्रह्मण्वत् । 'समृद्धं' समृद्धिकारणम् ॥

ब्राह्मणाच्छंसी [अपने स्वकीय सूक्तों के पहले] दिन प्रतिदिन 'वयु ब्रह्माणि' (ऋत्विजों से सब स्तुतियाँ धन पाने की अभिलाषा से करते हैं) आदि समृद्धि के कारणभूत 'ब्रह्मन्' शब्द से युक्त सूक्त का शंसन करता है।

---

१ 'अन्नस्य····· तस्मादिदम्' इति साम० सत्रा० मुद्रित पुस्तके नास्ति ।

२ ऋ० ७.२१ ।

तस्य प्रशंसां दर्शयति—

तदेतत् सूक्तं स्वर्ग्यमेतेन वै सूक्तेन देवाः स्वर्गं लोकमजयन्नेतेन ऋषय-स्तथैवैतद्यजमाना एतेन सूक्तेन स्वर्गं लोकं जयन्ति ॥ इति ।

यह यह सूक्त स्वर्ग से सम्बन्धित है। इसी सूक्त से देवों ने स्वर्गलोक को जीता और इसी से ऋषियों ने भी [जय की प्राप्ति की] उसी प्रकार इस सूक्त के द्वारा ये यजमान भी स्वर्गलोक को प्राप्त करते हैं।

पुनरप्यभिसम्बन्धं प्रशंसति—

तद् वासिष्ठमेतेन वै वसिष्ठ इन्द्रस्य प्रियं धामोपागच्छत्, स परमं लोकमजयत् ॥ इति ।

यह सूक्त वसिष्ठ ऋषि द्वारा दृष्ट है। इसी सूक्त के द्वारा वसिष्ठ ऋषि इन्द्र के प्रिय धाम को गए। उन्होंने [उस] श्रेष्ठ लोक को जीता।

वेदनं प्रशंसति—

उपेन्द्रस्य प्रियं धाम गच्छति, जयति परमं लोकं य एवं वेद ॥ इति ।

जो इस प्रकार जानता है वह उपेन्द्र के प्रिय धाम को जाता है और श्रेष्ठ लोक को जीतता है।

ऋक्सङ्ख्यामुपजीव्य प्रशंसति—

तद्वै षळृचं षड् वा ऋतव ऋतूनामाप्त्यै ॥ इति ।

वह सूक्त छः ऋचाओं का है। ऋतुएँ छः होती हैं। अतः यह शंसन ऋतुओं की प्राप्ति के लिए होता है।

तस्य सूक्तस्य स्थानं विधत्ते—

तदुपरिष्टात् संपातानां शंसत्याप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिंल्लोके प्रतितिष्ठन्ति ॥ इति ।

संपातसूक्तस्योपरिष्टाद् तत् सूक्तं शंसेत्। तेन शंसनेन 'स्वर्गं लोकमाप्त्वैव' देहपाता-दूर्ध्वंभाविनीं स्वर्गप्राप्तिं संपाद्यैवेदानीमस्मिंल्लोके यजमानाः प्रतिष्ठिता भवन्ति ॥

वह संपात सूक्तों के बाद उस [ सूक्त ] का शंसन करता है। उस [ शंसन ] से [ शरीरान्त के बाद होने वाले ] स्वर्ग की प्राप्ति का संपादन करके यहाँ इस लोक में यजमान प्रतिष्ठित होते हैं।

अच्छावाकस्य सूक्तं विधत्ते—

अभितष्टेव दीधया मनीषामित्यच्छावाकोऽहरहः शंसत्यभिवत् तत्ये रूपम् ॥ इति ।

'अभि तष्टेत्यादिकं'[1] सूक्तमच्छावाकः प्रतिदिनं शंसेत्। तच्च 'अभिवत्' अभिशब्दोपेतम्। अभिशब्दस्य चाभितः सर्वत इत्यभिप्रायेण वर्तमानत्वात् सूक्तं 'तार्क्ष्यं' सतत्वं, विच्छेदराहित्यस्वरूपं भवति ॥

'अभि तष्टेव' ( हे स्तोता ! बढ़ई जिस प्रकार लकड़ी को काट-छाँट कर सुधार करता है उसी प्रकार इन्द्र विषयक स्तुति को सर्वतः शोभित करो ) आदि 'अभि' शब्द युक्त सूक्त का अच्छावाक प्रतिदिन शंसन करता है। [ 'अभि' शब्द चारों ओर के अर्थ में प्रयुक्त होने से ] यह शंसन निरन्तरता के लिए विच्छेदराहित्य स्वरूप ही होता है [ इस प्रकार इहलोक और परलोक के सिलसिले के लिए यह उपयुक्त है ]।

तस्या ऋचस्तृतीयपादमनूद्य व्याचष्टे—

अभि प्रियाणि मर्मृशत् पराणीति, यान्येव पराण्यहानि, तानि प्रियाणि, तान्येव तदभिमर्मृशतो यन्त्यन्वारभमाणा, परो वा अस्माल्लोकात् स्वर्गो लोकस्तमेव तदभिवदति ॥ इति ।

अनयर्चा[2] विश्वामित्रः प्रजापतिं तुष्टाव। तस्याः तृतीयपादस्यायमर्थः—'पराणि' उत्तराणि कर्माणि प्रजापतेः प्रियाणि 'अभिमर्मृशत्' सर्वतः पुनः पुनः स्पृशन् वर्तत इति। यान्येवेत्यादिकं तद्व्याख्यानम्। वर्तमानादह्नः 'पराणि' उत्तराणि यान्यहानि सन्ति, तानि देवस्य प्रियाणि अतस्तेन पादपाठेन तान्येव 'अभिमर्मृशतः' अभितः पुनः स्पृशन्तः।[3] तस्यैव व्याख्यानमन्वारभमाणा इति। तादृशा यजमाना 'यन्ति' वर्तन्ते। किं चास्माल्लोकात् परः स्वर्गो लोकः तमेव लोकं 'पर' इति पराशब्देनाभिवदति ॥

[ इस ऋचा से विश्वामित्र ने प्रजापति को प्रसन्न किया। इसका तृतीयपाद] 'अभि प्रियाणि' (इन्द्र के अतिशय प्रिय कर्मों का पुनः पुनः स्पर्श करते हुए जो) आदि पाद में 'पराणि' अर्थात् आज के दिन से बाद के जो दिन हैं वे 'प्रियाणि' अर्थात् प्रजापति के प्रिय हैं। अतः उस [ पाद के पाठ ] से बाद के अह में क्रियमाण प्रजापति के प्रिय कर्मों का पुनः पुनः स्पर्श करते हुए ही यजमान अनुष्ठान करते हैं। इहलोक से 'पर' लोक स्वर्गलोक है उसी [ लोक ] को उस [ पर ] शब्द से कहा गया है।

चतुर्थपादमनुवदति—

कवीँरिच्छामि संदृशे सुमेधा इति ॥ इति ।

'सुमेधा' शोभनया मेधया युक्तोऽहं 'संदृशे' सम्यग्दर्शनाय 'कवीन्' मेधाविनः इच्छामि ॥

---

1 ऋ० ३.३८।		2 ऋ० ३.३८.१।

3 'पुनःपुनः स्पृशन्त'—इति षड्गुरुशिष्यः।

इस ऋचा के चतुर्थ पाद 'कवींरिच्छामि' (शोभन मेधा से युक्त हम महर्षियों के सम्यक् दर्शन की इच्छा करते हैं ) आदि से तात्पर्य यह है कि—

तमेव पाद व्याचष्टे—

ये वै ते न ऋषयः पूर्वे प्रेतास्ते वै[1] कवयस्तानेव तदभ्यति वदति ॥ इति ।

'न ' अस्माक सम्बन्धिन पूर्वं ऋषय ये, 'ते' प्रसिद्धा 'प्रेता परलोक गता., त एवात्र 'कवय ' कविशब्देन विवक्षिता । अतस्तानेव 'अभि' लक्ष्य तत्' तेन पादेन 'अतिवदति' अतिशयेन ब्रूते ॥

हमारे सम्बन्धी जो पूर्व ऋषि थे वे परलोक को चले गए। वे ही यहाँ 'कवि' शब्द से विवक्षित हैं। अत उन्हीं कवियों को अभिलक्षित करके उस पाद से अतिशय रूप से [ प्रशंसापरक वचन ] कहा गया है।

ऋषिसम्बन्धेन प्रशसति—

तद् वैश्वामित्र, विश्वस्य ह वै मित्र विश्वामित्र आस, विश्व हास्मै मित्र भवति य एव वेद ॥ इति ।

पूर्ववद् व्याख्येयम् ॥

यह सूक्त विश्वामित्र ऋषि द्वारा दृष्ट है। विश्वामित्र सम्पूर्ण विश्व के मित्र थे। अत जो इस प्रकार जानता है, उसका सम्पूर्ण विश्व मित्र बन जाता है।

अस्पष्टदेवताकमुपजीव्य प्रशसति—

तदनिरुक्त प्राजापत्य शसत्यनिरुक्तो वै प्रजापति', प्रजापतेराप्त्यै ॥ इति ।

'तत्' सूक्तम् 'अनिरुक्त' न हि तत्र काचिद्देवता विस्पष्ट निरूप्यते । अत प्रजापति-देवताक, तच्छंसत् । प्रजापतिश्च सृष्टे पूर्वं मूर्तिराहित्यात् 'अनिरुक्त ',[2] अत सूक्त प्रजापतिप्राप्त्यै सपद्यते ॥

वह [ सूक्त ] अस्पष्ट देवताक है। अत प्रजापति देवताक उस सूक्त का वह शसन करता है। [ वस्तुत सृष्टि के पूर्व मूर्ति न होने के कारण ] प्रजापति अनिरुक्त अर्थात् अस्पष्ट हैं। अत यह सूक्त प्रजापति की प्राप्ति के लिए सम्पादित है।

सूक्तस्य प्राजापत्यत्वे सत्यैन्द्रत्व प्रच्यवतेत्याशङ्क्याह—

सकृदिन्द्र निराह तेनैन्द्राद्रूपान्न प्रच्यवते ॥ इति ।

---

१ 'वैद्वयमैतिह्यो'—इति षड्गुरुशिष्य ।

२ अनिरुक्तमप्रकाशदेवतम्, अत एव प्राजापत्यम् । कथम् ?
न शक्यते हि निर्वक्तु माहात्म्येन प्रजापति —इति षड्गुरुशिष्य ।

यस्यामेवर्चि 'शुनं हुवेम मघवानमिन्द्रम्'[1] इति सकृद्[2] इन्द्र निर्ब्रूते, तेन कारणेनेन्द्रसम्बन्धिस्वरूपादपि प्रच्युतिर्नास्ति ॥

[ इस सूक्त की एक ऋचा 'शुनं हुवेम मघवानमिन्द्रम' आदि में ] एक बार 'इन्द्र' शब्द कहा गया है। अतः [ सूक्त के प्रजापति देवताक होने पर भी ] यह इन्द्र के स्वरूप से भी च्युत नहीं होता है।

अन्नस्याप्युपजीव्यं प्रशंसति—

तद्वै दशर्चं, दशाक्षरा विराळन्नं विराळन्नाद्यस्यावरुद्ध्यै ॥ इति।

इस [ सूक्त ] में दस ऋचाएँ हैं। विराट् छन्द में दस अक्षर होते हैं। विराट् अन्न [रूप] है। अतः यह [सूक्त] अन्न की प्राप्ति के लिए [भी सम्पादित है]।

पुनरप्युक्तस्याप्युपजीव्यं प्रशंसति—

यदेव दशर्चमिदम्, दश वै प्राणाः, प्राणानेव तदाप्नुवन्ति, प्राणानात्मन् दधते ॥ इति।

'यदेव' यस्मादेव कारणादिदं सूक्तं दशर्चमिदम्'। स्तुतिः प्राणसादृश्यनाऽवगमीर्या।[3] पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि, इन्द्रियरूपाः प्राणा दशैव। यद्वा, प्राणापानादयः पञ्च वायवो नागकूर्मादयश्च पञ्च वायव इति दश प्राणाः। अतस्तच्छंसनेन प्राणानेव प्राप्य, तान् प्राणान् स्वात्मन्येव स्थापयन्ति ॥

जिस कारण यह सूक्त दस ऋचाओं से युक्त है। [इसीलिए] प्राण [पाँच ज्ञानेन्द्रिय एवं पाँच कर्मेन्द्रिय रूप से] दस ही हैं। अतः वे उस [शंसन] से प्राणों को प्राप्त करते हैं और उन प्राणों को अपनी आत्मा में ही स्थापित करते हैं।

---

१ ऋ० ३.३८.१०।

२ शुनं हुवेम मघवानमिन्द्रमिति वै सकृत्।
न चास्यामिन्द्रत्वमस्याश्च नूनं सा ते वर्यं रियदम् ॥
श्रूयते हि 'नूनं सा त इत्येतमसममिति' (आश्व० श्रौ० ७.४.१०)। ननु नून विराजं ट निरूपं कथं कथमित्याह—तद्वै दशर्चम् ॥ वै तावत्।
दशर्चं ह्यभिनिर्दिष्टा नन सा ताभिश्चादिता। इति षड्गुरुशिष्यः।
(॥) एतेषां सूक्तानां चतुर्णां सूक्तमभिनिर्दिष्टा इत्यनुन स्यात इत्येत भवति। नाराशंस्यद्यागानाधारविषयं भवति तत्र शुनं हुवेमाया उद्धारामावे गति सद्विदं विराट्—इति वाक्यवचनमुपपन्नं भवति। इति आश्व० श्रौ० ७.४.१० सूत्रे नारायणः।

३ स्तुतीर्नमिनुमित ऐतरदाव ह्यमिनुमितम्'—इति षड्गुरुशिष्यः।

तस्य सूक्तस्य स्थानं विधत्ते—

**तदुपरिष्टात् सपातानां शस्त्याप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिँल्लोके प्रतितिष्ठन्ति ॥ २० ॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकायां चतुर्थाध्याये (एकोनत्रिंशाध्याये) चतुर्थ खण्ड ॥ ४ ॥ (२०) [१०७]

वह [उस सूक्त] का शंसन सपात सूक्तों के बाद करता है। उस [शंसन] से [शरीरान्त के बाद] स्वर्ग लोक की प्राप्ति का सम्पादन करके यहाँ इस लोक में यजमान प्रतिष्ठित होते हैं।

॥ इस प्रकार उन्तीसवें (चतुर्थ) अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

अथ त्रीन् प्रगाथान् विधत्ते—

**कस्तमिन्द्र त्वा वसु, कन्नव्यो अतसीनां, कदू न्वस्याकृतमिति कद्वन्त प्रगाथा आरम्भणीया अहरहः शस्यन्ते ॥** इति ।

'कस्तम्'–इत्यादिरेक[1] प्रगाथ, 'कन्नव्य' इति द्वितीय[2] कद्विति'[3] तृतीय । यद्यपि प्रथमे कच्छब्दो नास्ति तथापि च्छत्रिन्यायेन साहचर्याद्वा सर्वे कद्वन्त 'प्रगाथा' ऋग्द्वयात्मका ते च वैहृतारम्भहेतुत्वात् आरम्भणीया' ते च प्रतिदिन शसनीया[4] ॥

।। २१ [xxix ५] 'कस्तम' आदि, 'कन्नव्य' आदि और 'कद्' आदि तीन प्रगाथ [=दो ऋचाओं के जोड़े] 'कद्' (कौन) शब्द से युक्त हैं जिनका प्रतिदिन आरम्भ में शंसन करना चाहिए।[यहाँ यद्यपि प्रथम प्रगाथ में 'कद्' शब्द नहीं है फिर भी छत्रिन्याय से एक साथ होने से सभी 'कद्' शब्द युक्त कहे गए हैं]।

प्रथम प्रगाथं प्रशसति—

**को वै प्रजापतिः, प्रजापतेराप्त्यै ॥** इति ।

प्रथमस्याऽऽदौ श्रूयमाणस्य कशब्दस्य प्रजापतिरर्थः । अतोऽस्य प्रजापतिप्राप्त्यै सपद्यते ॥

---

१ ऋ० ७ ३२ १४, १५ ।          २ ऋ० ८ ३ १३, १४ ।

३ ऋ० ८ ६६ ९, १० ।

४ माध्यन्दिने होत्रकैरिति शेष —इति षड्गुरुशिष्य ।

भवन्ति । 'तानि' सूक्तानि शान्तानि भूत्वा 'एनान्' यजमानान् स्वर्गं लोकम् 'अभिवहन्ति' प्रापयन्ति ॥

क्योंकि ये 'कद्' शब्द से युक्त प्रगाथ [शमित होते] हैं, अतः प्रतिदिन ये [यजमान] सभी उपद्रवों का उपशमन करने वाले अहीन सूक्तों से जुड़े रहते हैं। वस्तुतः उनको यजमान [सुख के वाचक] 'कद्' शब्द से युक्त प्रगाथों के द्वारा शान्त करते हैं और वे [सूक्त] शान्त होकर इन [यजमानों] के लिए सुखकर होते हैं। इस प्रकार वे [अहीन सूक्त] शान्त होकर इन [यजमानों] को स्वर्गलोक को प्राप्त कराते हैं।

कद्वत्प्रगाथेभ्य ऊर्ध्वम् 'अप प्राच इन्द्र'–इत्याद्यास्त्रिष्टुप्छन्दस्का ऋच[1] प्रतिदिन शसनीयसूक्तादित्वेन विधत्ते—

त्रिष्टुभ सूक्तप्रतिपद शंसेयु ॥ इति ।

[कद्वत् प्रगाथों के बाद 'अप प्राच इन्द्र' आदि] त्रिष्टुप् छन्दस्क ऋचाओं का [प्रतिदिन शसनीय अहीन] सूक्तों के प्रारम्भ में शंसन करना चाहिए।

अत्र कचित्पूर्वपक्षमुद्भावयति—

ता हैके पुरस्तात् प्रगाथाना शसन्ति, धाय्या इति वदन्त. ॥ इति ।

यथा होतृनिष्केवल्यशस्त्रे प्रगाथात् पुरस्ताद्धाय्या भवन्ति, तद्वत् 'अप प्राच' इत्याद्यास्त्रिष्टुभोऽपि धाय्यास्तस्मात् पूर्वोक्ताना कद्वत्प्रगाथानां पुरस्ताच्छसितु योग्या इति वदन्त केचिद्याज्ञिका 'ता' ऋच तेषां पुरस्ताच्छसन्ति ॥

जैसे निष्केवल्यशस्त्र में प्रगाथ के पहले होता को धाय्या होती हैं, वैसे ही 'अप प्राच' आदि [त्रिष्टुप् भी] धाय्या हैं [अतः कद्वत् प्रगाथों के पहले य शंसन के योग्य हैं]—ऐसा कहते हुए कुछ याज्ञिक उन [ऋचाओं] का शंसन उन [प्रगाथों] के पहले करते हैं।

तं पूर्वपक्ष निराचष्टे—

तत् तथा न कुर्यात् ॥ इति ।

किन्तु ऐसा नहीं करना चाहिए।

तस्मिन् पक्षे दोष दर्शयति—

क्षत्रं वै होता, विशो होत्राशसिन, क्षत्रायैव तद्विश प्रत्युद्यामिनीं कुर्युः पापवस्यसम् ॥ इति ।

निष्केवल्यस्य शसको यो होताऽस्ति असौ 'क्षत्र वै' क्षत्रियो राजैव । होतृत्वे समुत्पन्ना क्रिया होत्रा, ता' शसन्तीति मैत्रावरुणादयो 'होत्राशसिन'। ते च 'विश' राष्ट्रवर्तिन्य प्रजा । 'तत्' तथा सति, होतृदृष्टान्तेन प्रगाथेभ्य पूर्वं त्रिष्टुभ शसने सति,

१ द्र० इत परम्, १००१ पृ० ।

ततो 'विशं' प्रजां 'शस्त्रायैव' राज्ञ एव 'प्रत्युद्यामिनीं' प्रतिकूलोद्योगयुक्तां कुर्युः । 'तच्च' 'पापवस्यसम्' अतिशयेन पापरूपं स्वामिना राज्ञा सह मात्सर्यस्य स्वामिद्रोहरूपत्वात् ॥

[क्योंकि इस पक्ष में दोष यह है कि वस्तुतः निष्केवल्यशस्त्र का शंसक] होता क्षत्रिय [राजा] ही होता है, और होत्र [= होम में समुत्पन्न क्रियाओं] का शंसन करने वाले [मैत्रावरुण आदि होत्रक राष्ट्रवर्ती] प्रजा हैं । [इस प्रकार प्रगाथ से पूर्व त्रिष्टुप् का शंसन करने पर मानो वह] उस प्रजा को [राजा के] प्रतिकूलगामी बनाता है, जो [स्वामी राजा के साथ राजद्रोह रूप मात्सर्य के कारण] अत्यन्त पाप रूप है ।

परपक्षं दूषयित्वा स्वपक्षं निगमयति—

त्रिष्टुभो म इमाः सूक्तप्रतिपद इत्येव विद्यात् ॥ इति ।

'इमाः' 'अप प्राच' इत्याद्याः[1] त्रिष्टुभ ऋचः 'मे' मम शंसितुः 'सूक्तप्रतिपदः' अहरहः शंसनीयसूक्तप्रारम्भरूपा इत्येव निश्चिनुयात्[3] । न पुनः प्रगाथेभ्यः पुरस्तात् त्रिष्टुभामवस्थानं युक्तम् ॥

'ये ['अप प्राच' आदि] त्रिष्टुप् छन्दस्क ऋचाएँ मुझ [शंसन करने वाले] के प्रतिदिन शंसनीय सूक्तों की प्रारम्भिक ऋचाएँ हैं'—उसे यही जानना चाहिए । [अतः प्रगाथों के पहले त्रिष्टुप् का अवस्थान युक्त नहीं है] ।

सूक्तप्रतिपत्पक्षे गुणं दर्शयति—

तद्यथा समुद्रं प्रप्लवेरन्नेवं हैव ते प्रप्लवन्ते,[4] ये संवत्सरं वा द्वादशाहं वाऽऽसते, तद्यथा सैरावतीं नावं पारकामाः समारोहेयुरेवमेवैतास्त्रिष्टुभः समारोहन्ति ॥ इति ।

'तत्र' अस्मिन्नभिहितेऽर्थे दृष्टान्तोऽभिधीयते,—यथा लोके समुद्रं प्रप्लवेरन् । 'प्रप्लवः' परतीरगमनम् । स्वल्पेषु नदीतडागादिषु परतीरगमनं सुलभं भवति, समुद्रस्य तु दुर्गमम्, तथा संवत्सरसत्रस्य द्वादशाहस्य चानुष्ठातॄणां 'प्रप्लव' पारगमनं समापनं

1 तत् = तथा सति । विशः राष्ट्रपतिजनताम् । प्रत्युद्यम प्रतिकूलाचरणम् ।

राज्ञा राष्ट्रं विरुद्धं ते कुर्युर्वै प्राक्त्ववादिनः ।
यतो होत्रकाणां हि नैव धार्या भवन्ति यत् ॥

एवं च पापवस्यसम्, कुर्युरित्यर्थः ।

उद्भवाय महतो नामाहुः पापवस्यसम् । —इति षड्गुरुशिष्यः ।

2 द्र० इन्द्र परम्, १००१ पृ० ।

3 मे = मम, इमाः सूक्तानां प्रतिपदः आदिभूताः । इत्येव होत्रकाणो शंसेयात् । इति षड्गुरुशिष्यः ।

4 'प्रप्लवते' इति हाग सम्पादित पुस्तके एवं सामश्रमी सम्पादित पुस्तकेऽपि पाठः ।

मत्यन्तदुष्करम्, प्रयोगस्यातिबहुलत्वात् । 'तद्' तथा सति, यथा लोके समुद्रस्य पारतीर-गमनकामाः पुरुषाः 'सैरावतीं नावं समारोहेयु', इराऽन्न तत्समूहः ऐरं, तेन सह वर्तत इति 'सैरं' नौस्थं वस्तुजातं, तादृशं सैरं यस्यां नाव्यस्ति, सेयं नौः सैरावती[1] । समुद्रपार-गमनस्य चिरकालसाध्यत्वात् तावतः कालस्य पर्याप्तेनान्नेन सह सर्वमपेक्षितं वस्तुजातं तस्यां नावि संपाद्य पश्चात्पथिकास्तां नावमारोहेयु एवमेवानुष्ठातारः तथाविधं नौसदृशा एतास्त्रिष्टुभः समारोहन्ति । सर्ववस्तुसमृद्धा नौरिवैतास्त्रिष्टुभः पारं नेतुं समर्था इत्यर्थः ॥

यह [अहरह शस्य सूक्तों की त्रिष्टुप् छन्दस्क प्रारम्भिक ऋचाएँ] उसी प्रकार हैं जैसे लोक में हम समुद्र को पार करें, वैसे ही ये अनुष्ठाता पार कर लेते हैं जो संवत्सर सत्र [=गवामयन] अथवा द्वादशाह यज्ञ का अनुष्ठान करते हैं और वह [त्रिष्टुप्] उसी प्रकार हैं जैसे लोक में पार जाने के इच्छुक व्यक्ति नाव पर अन्न आदि [समस्त वस्तुजात] को रखने के बाद नाव पर बैठते हैं । उसी प्रकार [अनुष्ठाता भी उस नाव के सदृश] इन त्रिष्टुपों पर आरूढ़ होते हैं [अर्थात् समस्त वस्तुओं से समृद्ध नाव के समान ये त्रिष्टुपें ही पार लगाने में समर्थ हैं] ।

तदेव सामर्थ्यं स्पष्टीकरोति—

**न ह वा एतच्छन्दो गमयित्वा स्वर्गं लोकमुपावर्तते, वीर्यवत्तम हि ॥** इति ।

समुद्रे बाहुभ्यामुडुपेन चाऽऽप्लवनं पारगमनक्षमं न भवति । सैरावत्या तु नावा पारमवश्यं प्राप्यते । एवमेवत्रिष्टुप्छन्दो[2] यजमानान् स्वर्गं लोकं गमयित्वा नैवोपावर्तते । किंतु सर्वथा स्वर्गं गमयत्येव । यस्मादेतच्छन्दोऽतिशयेन वीर्यवत् तस्मादुक्तं पारगम

---

1 इरान्नं तत्समूहः स्यादैरस्तेन समन्विता ।
सैराद् ङीप् मतुपो दीर्घं शरादित्वादतः परोऽस्य् ॥
(पा० सू० ६ ३ १२०, किन्तु शरादिषु नास्य पाठो दृश्यते) —इति षड्गुरुशिष्य ।

2 (i) एतच्छन्दस्त्रिष्टुबाख्यं कर्तृयष्टॄन् दिवं प्रति ।
अप्रापय्य निवर्तेत नैव वीर्यान्वितं हि यत् ॥ —इति षड्गुरुशिष्य
(ii) एतच्च त्रिष्टुप्छन्दः स्वर्गं लोकं यजमानान् अगमयित्वा नोपावर्तते । कुतो वीर्यवत्तमं हि वीर्यवत्तममेतच्छन्दः । नन्वासां प्रगाथप्रायमाविरत्वेऽप्येतत् सर्वमुपपद्यत एव । न सूक्तप्रतिपत्त्व एव । उच्यते—त्रिष्टुप्त्वं ह्यासां स्वर्गयानहेतुत्वे कारणमुक्तं, सूक्तानि त्रैष्टुभानि । ततः किं, सूक्तं कृतसाहाय्या एता यजमानान् स्वर्गं गमयेयुः । प्रगाथानां पुरस्ताच्छस्यमाना नैतच्छक्नुयुः कर्तुं, सहायासम्भवात् । प्रगाथाः सहाया भविष्यन्ति इति चेन्न ते शक्नुवन्ति साहाय्यं कर्तुमत्रैष्टुभत्वात् तेषाम् । अतः सूक्तप्रतिपत्त्व एषां पारगमनहेतुत्वमिति स्थितम्—इति गोविन्दस्वामी । (iii) तु० ऐ० ब्रा० vii १३ ।

'अप प्राच इन्द्रेति' भूतत्वादिन्द्राह्वा भवति । अन्यत् पूर्ववद् व्याख्येयम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ-पञ्चिकाया चतुर्थाध्याये (एकोनत्रिंशाध्याये) पञ्चम खण्ड ॥५॥ (२१) [१०८]

जब इन [ऋचाओं ] का शसन करते हैं तब इनसे वे इन्द्र का ही निरन्तर आह्वान करते हैं, जैसे गर्भ की इच्छा वाली रँभाती हुई गाय वृषभ का आह्वान करती है। जिस लिए इन [ ऋचाओं ] का [ सभी अहर्गणों में ] शसन करते हैं उसी लिए यह शसन अहीन [ अहर्गणों ] की निरन्तरता के लिए सपादित होता है। उस [शसन] से अहीन [ अहर्गणों ] को ही वे सतत [ लगातार ] करते हैं। [ अर्थात् षडह् प्रगाथ के बाद इनका शसन युक्ति युक्त है ]।

॥ इस प्रकार उन्तीसवें(चतुर्थ) अध्याय के पाँचवें खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठ. खण्ड.

यदुक्त त्रिष्टुभ सूक्तप्रतिपद शसेयुरिति[1], तत्रस्यास्त्रिष्टुभ उदाहृत्य प्रदर्शयति—

**अप प्राच इन्द्र विश्वाँ अमित्रानिति मैत्रावरुण पुरस्तात् सूक्तानामहरह. शसति ॥ इति ।**

'अप प्राच ' इत्येतामृच[2] मैत्रावरुण प्रतिदिन स्वकीयसूक्तादौ शसेत्[3] । हे इन्द्र विश्वान् अमित्रान् सर्वानपि शत्रून् 'प्राच ' प्राङ्मुखान् कृत्वा अपनुदस्व'—इति वक्ष्यमाणेनान्वय । सोऽय प्रथमपादस्यार्थ ॥

vi.२२ [xx x ६] [वे त्रिष्टुप् छन्दस्क सूक्त प्रतिपत् इस प्रकार हैं]—'अप प्राच ' (हे इन्द्र हमारे सभी प्राङ्मुख शत्रुओं को हम से दूर हटाओ) आदि ऋचा का पाठ मैत्रावरुण प्रतिदिन अपने सूक्तों के आरम्भ में करता है।

अवशिष्ट पादत्रय पठति—

**अपापाचो अभिभूते नुदस्व, अपोदीचो, अप शूराधराच, उरौ यथा तव शर्मन् मदेमेति ॥ इति ।**

हे 'अभिभूते' शत्रुमभिभवितु समर्थ 'अपाच ' शत्रून् दक्षिणा [मुखा]-प्रत्यङ्मुखांश्च कृत्वाऽपनुदस्व । तथैव 'उदीच ' उदङ्मुखान् कृत्वाऽपनुदस्व । हे शूर 'अधराच ' अधोमुखान् कृत्वाऽपनुदस्व । 'उरौ' विस्तीर्णे 'तव शर्मन्' त्वत्सबन्धिनि गृहे 'यथा मदेम' येन प्रकारेण हृष्टा भवेम, तथा कुर्विति शेष ॥

---

१ द्र० इत पूर्वम् ९९७ पृ० ।     २ ऋ० १० १३१ १ ।

३ तु० आश्व श्रौ० ७ ४ ७ शाखा० श्रौ० १२ ३ ५ कौत० ब्रा० २४४ ।

हे शत्रुओं का अभिभव करने में समर्थ, इन्द्र ! हमारे दक्षिण में वर्तमान (अथवा अभिमुख करके)[1] शत्रु को हमसे दूर हटाओ। हमारे उत्तराभिमुख वर्तमान (अथवा उदङ्मुख करके) शत्रु को हमसे दूर हटाओ। हे शौर्यवान् इन्द्र ! हमारे अधोवर्ती (अथवा अधोमुख करके) शत्रु को हमसे दूर हटाओ। तुम्हारे विस्तृत गृह में जैसे हम सुखी होवें, वैसा करो।[2]

ऋचस्तात्पर्यं दर्शयति—

अभयस्य रूपमभयमिव हि यदिच्छति[3] ॥ इति।

एतन्मन्त्रवाक्यमभयस्य स्वरूपं, शत्रुनिराकरणस्य स्वकीयहर्षस्य चात्र प्रार्थ्यमानत्वात्। 'अभयमिव' भयरहितमेव स्थानमयं मैत्रावरुणो 'यत्' प्राप्नुयात् 'इच्छति' प्राप्तुमपेक्षते। तस्मादियमभयमृक् ॥

[शत्रु के निराकरण और हर्ष की हृदि करने की यहाँ प्रार्थना होने से ऋचा] अभय स्वरूप है, [ अतः यह मैत्रावरुण इससे मानो ] भयरहित स्थान को प्राप्त करने की इच्छा करता है।

ऋगन्तरं ब्राह्मणाच्छंसिना विधत्ते—

ब्रह्मणा ते ब्रह्मयुजा युनज्मीति ब्राह्मणाच्छंस्यहरहः शंसति, युनज्मीति युक्तवती, युक्त इव ह्यहीनोऽहीनस्य रूपम् ॥ इति।

अस्यामृचि[4] युनज्मीति श्रवणादियमृग्युजिधातुमती। अहीनोऽहर्गणश्च 'युक्त इव' बहूनामहां परस्परमन्वयवानिव, अतो युजिधात्वर्थयुक्तमन्त्रवाक्यमहीनस्य रूपम् ॥

ब्राह्मणाच्छंसी 'ब्रह्मणा ते' (हे इन्द्र ! मन्त्र द्वारा रथ में जोड़ने योग्य तुम्हारे घोड़ों को हम मन्त्रोच्चारणपूर्वक रथ में जोड़ते हैं) आदि ऋचा का प्रतिदिन शंसन करता

---

१. अधाघ = अधरमुखमस्यतः. पृष्ठभागे वर्तमानान् सर्वान् शत्रून् अपनुदस्व। अपि च, उदीच = ऊर्ध्वमञ्चतः उपरि वर्तमानान्। उत्तरपूर्वादिष्वपि. पूर्ववत् क्विपि 'उद ईद' इत्यञ्चतेरकारस्येकारः। ... अधराच = अधरदेशगमनशीलान् अपसरतः शत्रून् अप नुदस्व'—इति संहितायां सायण।

२ प्राच = प्राग्देशवर्तिन., अपाच = पाश्चात्यान्, उदीच. = उदीच्यान्, अधराच = पादावर्तिन, हे अभिभूते = अभिभवित, कर्तरि क्तिन्। नुदस्व = द्रावय। विश्व, उरौ = विस्तीर्णे, शर्मन् = हितद् गृह, शूर, यथा वय मदेम। स्यन. शप्। माद्येम सुखिन. स्याम तथा सम्पादयेत्याशय। इति षड्गुरुशिष्य.।

३. 'यदिच्छति' इति ग्राम० सया० संस्करणे पाठ।

४. ऋ० ३.३५.४।

है। इसमें 'युनज्मि' (युक्त करता हूँ) शब्द होने से यह 'युज' धातु के अर्थ से युक्त है और अहीन अहर्गण भी परस्पर युक्त ही है। [ अत 'युज्' धातु के अर्थ से युक्त मन्त्र-वाक्य ] अहीन का स्वरूप है।

अनुकूलमृगन्तरमच्छावाकस्य विधत्ते—

**उरु नो लोकमनु नेषि विद्वानित्यच्छावाकोऽहरहः शंसत्यनु नेषीत्येतीव ह्यहीनोऽहीनस्य रूपम् ॥ इति ।**

अत्र[1] यदेतदनुनेषीति पदमस्ति, तस्यार्थं 'एतीव ह्यहीन' इत्यनेनोच्यते। अयमहर्गण 'एतीव' प्रवर्तत एव। 'अनु नेषि' अनुक्रमेण नय' प्रवर्तयति। एवमुच्यमानत्वात् प्रवर्तमानस्याहीनस्येद वाक्यमनुरूपम् ॥

अच्छावाक 'उरु नो लोकम्' (हे विद्वान् इन्द्र ! हमें विस्तीर्ण स्वर्ग में ले चलो) आदि ऋचा का प्रतिदिन शसन करता है, क्योंकि इसमें 'अनु नेषि' पद हैं अर्थात् यह अहीन अहर्गण अनुक्रमेण प्रवर्तमान ही है अत यह [ ऋचा ] अहीन की लक्षक है।

अनुनेषीति पदस्याभिप्रायमुक्त्वा त मध्यगतस्य नेषीत्येतस्याभिप्रायान्तरमाह—

**नेषीति सत्रायणरूपम् ॥ इति ।**

सत्रस्यायनमनुष्ठान 'सत्रायण, नेषि नय, अनुष्ठापयेति तस्यार्थ। अत एतत्पद सत्रायणस्यानुकूलम् ॥

'नेषि' का अर्थ है सत्र का अयन अर्थात् अनुष्ठान। अत यह वर्तमान सत्र के अनुष्ठान का द्योतक है।

उदाहृतास्तिस्र ऋच उपसहरति—

**ता वा एता अहरहः शस्यन्ते[2] ॥ इति ।**

उन [ उदाहृत तीन ] ऋचाओं का दिन प्रतिदिन शसन किया जाता है।

अथ परिधानीया ऋच स्तोतुमुपक्रमते—

**समानीभि परिदध्यु ॥ इति ।**

'समानीभि' एकविधाभिर्ऋग्भिर्मैत्रावरुणादयो होत्रका 'परिदध्यु' शस्त्रसमाप्ति कुर्यु। 'नू ष्टुतेति' मैत्रावरुणस्य परिधानीया[3]। 'एवेदिन्द्रमिति' ब्राह्मणाच्छसिन

---

१ ऋ० ६ ४७ ८।

२ 'अथ प्राच कद्वद्भ्य आरम्भणीया'—इति आश्व० श्रौ० ७ ४ ७।

३ ऋ० ४ ११ ११।

परिधानीया[1]। 'नूनं सा ते'[2] इत्यच्छावाकस्य परिधानीया[3]। अनेन सूक्तसामान्यादेशाः सामान्य इत्युच्यन्ते ॥

तुल्य [ सूक्तसामान्य ] ऋचाओं के द्वारा [ मैत्रावरुण आदि होत्रक ] शस्त्र की समाप्ति करें।[4]

दृष्टान्तद्वयेन परिधानीयाः संमति—

ओकःसारी हैषामिन्द्रो यज्ञं भवती३, यथ ऋषभो वाशितां, यथा वा गौः प्रज्ञातं गोष्ठमेवं हैषामिन्द्रो यज्ञमेव गच्छति ॥ इति।

'ओकःसारी ह' मार्जार इवेन्द्रः 'एषां' यजमानानां यज्ञं 'भवती३' पुनः पुनः प्राप्नोति। सानुनासिका प्लुतिः पूजार्था। यथा 'वाशितां' गर्भाभिलाषिणीं गां वृषभो गच्छति। यथा वा गौः 'प्रज्ञातं' प्रतिदिनगमनेनात्यन्तं परिज्ञातं गोष्ठं प्राप्नोति। एवमेवायमिन्द्रः 'एषां' यजमानानां यज्ञमागच्छत्येव। अतस्तदागमनार्थं समानाः परिधानीया इत्यर्थः।

घर की बिल्ली के समान इन्द्र इन [यजमानों] के यज्ञ में पुनः-पुनः जाते हैं। जैसे गर्भ की इच्छा वाली रँभाती हुई गौ के पास वृषभ जाता है; अथवा जैसे गाय [प्रतिदिन जाने के कारण] अत्यन्त प्रज्ञात [जाने-पहचाने] गोष्ठ को जाती है। इसी प्रकार [यह इन्द्र] इन यजमानों के यज्ञ का जाते ही हैं [अतः उनके आगमन के लिए समान ऋचाओं से उपसंहार करें]।

'समानीभिः परिदध्युः' इति यदुक्तं तत्र 'अभि तष्टेव'[5]-इत्यस्यावापस्याहरहःप्रयुक्तं[6], तस्मिन्नन्त्या 'पुनं हुवेम'-इत्येषा तया परिधानप्राप्तौ निषेधति—

न पुनर्हुवीययाह्नीनस्य परिदध्यात् क्षत्रियो ह राष्ट्राच्च्यवते यो ह्येव परो भवति तमभिह्वयति ॥ २२ ॥ इति।

'पुन हुवेमेति' यस्यामृचि श्रूयते सा 'पुनर्हुवीया'। अहर्गणस्य मध्ये तया न परिदध्यात्। परिधाने हि 'क्षत्रियः' राजा स्वकीयाद् राष्ट्राच्च्यवते। यस्तु 'परः' शत्रुः भवति, तम् 'एव' तदा 'ह्वयति' आह्वानं करोति। हुवेमेत्यस्याह्वानस्य प्रतीय-

१. ऋ० ७.२३.६। २. ऋ० २.११.२१।
३,६. द्र० इत पूर्वम् १२३–१२४ पृ० (६.२.५), आश्व० श्रौ० ७.४.८–१०।
४. वरुण इति शेषः। [illegible] इत्यर्थम्। [illegible] ॥ इति षड्गुरुशिष्यः।
५. ऋ० ३.३८.१–१०।

मानत्वात्। अत एव सूत्रकारो ब्राह्मणान्तरमाश्रित्य 'नून सा ते' इत्येतां[1] परिधानीया-मुक्तवान्[2] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ पञ्चिकाया चतुर्थाध्याये (एकोनत्रिंशाध्याये) षष्ठ खण्ड ॥६॥ (२२) [१०१]

शुनहुवीया ऋचा [ = 'शुनं हुवेम' आदि] से अहीन अहर्गण के शस्त्र की समाप्ति न करे। ऐसा करने से राजा अपने राज्य से च्युत हो जाता है और वह अपने शत्रु का ही तब आह्वान करता है।

॥ इस प्रकार उन्तीसवें (चतुर्थ) अध्याय के षष्ठ खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

एव तावच्छस्त्रिणां होत्रकाणा प्रात सवने माध्यदिने च शस्त्राण्युक्तानि। तेषां च परिधानीया पूर्वमेव 'उभय्य परिधानीया' इत्यत्र[3] ऐकाहिका अहीनाश्च विमृष्टा।

अथेदानी कतमास्ता इति विविनक्ति—

**अथातोऽहीनस्य युक्तिश्च विमुक्तिश्च ॥ इति।**

'अथ' परिधानीयावचनानन्तर यतस्तद्विवेकोऽपेक्षित, अत कारणात् 'अहीनस्य' अहर्गणस्य युक्तिश्च विमुक्तिश्च विवेकायोभे, वक्ष्येते इति शेष। 'युक्ति' योग, स्वाधीनत्वेन क्रतो सपादन, 'विमुक्ति' विमोचन, स्वाधीनतया निर्बन्धपरित्याग, तदेतदुभय परिधानीयावशेन सपद्यते ॥

VI २३ [ XXIX ७ ] अब [परिधानीया कथन के बाद] अहीन [अहर्गण] की युक्ति [ = जोड़ना अर्थात् स्वाधीनतापूर्वक क्रतु का सपादन] और विमुक्ति [ = अलग करना, अर्थात् स्वाधीनतापूर्वक परित्याग] कहेंगे।

---

१ ऋ० २ ११ २१।

२ 'उदु ब्रह्माण्यमितष्टेवेतीतरावहरह शस्ये, नून सा त इत्यन्तमुत्तमम्'—इति आश्व० श्रौ० ७ ४ ९, १०। यद्यपीह ब्राह्मणे शुन हुवीयाया परिधानीयात्वनिषेधमात्र श्रूयते, न तु 'नून सा ते'—इत्यस्या विधिरपि, तथापि तद्विधिर्ब्राह्मणान्तरादेवावगम्य इत्यभिप्राय। तच्च ब्राह्मणान्तरमिहैवोत्तर खण्डे द्रष्टव्यम्—'नून सा त इत्यहीन युङ्क्ते'—इति। किञ्च अमितष्टीय सूक्त यद्यपि सहितायां दशर्चम् आम्नातम्, परम् इह नूनम्' इत्येतस्या आगमादेकादशर्चत्वेन तच्छसनविधि सम्पन्न। अत एव अत्र आश्वलायनवृत्तौ नारायण —'ऋगागमेऽप्युद्धाराभावाद् अधिकेय भवति'—इत्याह।

३ द्र० इत पूर्वम्, ९२७ पृ०।

अथ मैत्रावरुणस्य परिधानीयया योगविमोकौ दर्शयति—

ते स्याम देव वरुण, नू ष्टुत इति विमुञ्चति ॥ इति ।

अत्र विमोको योगस्याप्युपलक्षणार्थं । 'ते स्यामेति'[1] प्रातःसवने परिधानीया[2] तयाऽहीनस्य क्रतोर्योगः । 'नू ष्टुत'[3] इति माध्यंदिनसवने परिधानीया[4] । तया क्रतोर्विमोकः ॥

यद्यपि तृतीयसवने विमोको वक्तुं युक्त, तथाऽप्यग्निष्टोमसंस्थेऽहनि होत्रकाणां तृतीयसवने शस्त्राभावात् सर्वेष्वहस्स्वनुगत्यर्थं माध्यंदिने सवने विमोकोऽभिहितः ॥

[प्रात सवन में मैत्रावरुण परिधानीया ऋचा] 'ते स्याम' (हे वरुण एवं मित्र ! देव हम लोग तुम्हारे होवें) आदि से अहीन यज्ञ को युक्त करता है, और [मध्यन्दिन-सवन में] 'नू ष्टुत' (स्तुत तुम) आदि से क्रतु को वियुक्त करता है [यहाँ यद्यपि तृतीय सवन में भी 'वियुक्त करता है' कहना चाहिए था, किन्तु अग्निष्टोम संस्था के अह. में होत्रकों का तृतीयसवन में शस्त्र के अभाव के कारण सभी अह में अनुगतार्थता के लिए माध्यन्दिन सवन में विमोक कहा गया है] ।

यथोक्तयोगविमोकज्ञानं प्रशंसति—

एष ह वा अहीनं तन्तुमर्हति य एनं योक्तुं च विमोक्तुं च वेद ॥ इति ।

'यः' पुमानुक्तप्रकारेण 'एनम्' अहीनं प्रातःसवनपरिधानीयया योक्तुं माध्यंदिनपरिधानीयया विमोक्तुं च जानाति, एष एव पुमानहर्गणं तन्तुं[5] विस्तारयितुमर्हति । यथोक्तपरिधानीयानभिज्ञस्य नास्ति तत्राधिकार इत्यर्थः । एवमेकैकमहरपेक्ष्य योगविमोकावुक्तौ ॥

जो [उक्त प्रकार से] इस [अहीन यज्ञ] को [प्रात सवन की परिधानीया ऋचा के द्वारा] जोडना और [माध्यन्दिनसवन की परिधानीया ऋचा के द्वारा] विमुक्त करना जानता है वही पुरुष अहीन क्रतु के अहर्गणों के तन्तु के विस्तार करने में समर्थ होता है ।

---

१ ऋ० ७।६६।९ । २ द्र० इत पूर्वम्, पृ० १००६, टि० २ । ३ ऋ० ४।१६।२१ ।
४ आश्व० श्रौ० ७।४।१० । द्र० इत पूर्वम्, पृ० ९२७ टि ३५) ।
५ (i) युजेर्मुचेश्च भावे तु याग मोक्ष तथैव च ।
एनं यो वेत्ति स एव तन्तु सन्ततिमातनन ॥
अहीनं हानिरहितं बन्धु सम्यगिहार्हति । इति षड्गुरुशिष्य ।
(ii) योक्तुर्नाम युक्ति । विमोक्तुर्विमुक्ति । तुमुन्नन्तत्वे तु क्लेशेन योजना एनमिति योक्तोर्विमोक्तोश्च विशेषणं नाहीनस्य अहीनम् अहर्गणं तन्तु तनितुं कर्तुम् —इति गोविन्दस्वामी ।

यदि वे 'चतुर्विश' नामक अह. में [प्रकृतिभूत] एकाह के [ज्योतिष्टोम में विद्यमान] परिधानीया ऋचाओं के द्वारा उपसहार करें; तो उन्हें यहीं पर [चतुर्विंशाख्य द्वितीय अहः में ही गवामयन ] यज्ञ का उपसंहार कर देना चाहिए। उन्हें इसको अहीन नहीं बनाना चाहिए[1] [अर्थात् सभी अहर्गण के कृत्यों को न करें] यह इसमें कष्ट है, और, यदि [पूर्वोक्त से विपरीत अर्थात् एकाह की परिधानीय ऋचाओं को छोड़कर] पुन अहीन की परिधानीया ऋचाओं द्वारा [सभी होत्रक] उपसहार करें तो जैसे गाड़ी अथवा रथ में योजित थके बैल या अश्व को अलग न करने से उसका उच्छेद हो जाता है, वैसे ही यजमान का भी उच्छेद हो जाता है[2]। [इस प्रकार सभी होत्रकों के ऐकाहिक को स्वीकार करने से सत्रसिद्धि का अभाव होता है और अहीनगत ऋचाओं के स्वीकार करने से यजमान का ही उच्छेद होता है – इन दोनों दोषों के परिहार का उपाय यह है कि] उन्हें दोनों ही के द्वारा उपसहार करना चाहिए [अर्थात् पूर्वोक्त प्रकार ही ठीक है कि १. मैत्रावरुण ऐकाहिक ऋचाओं द्वारा सवनद्वय में, २. अच्छावाक अहीन गत ऋचाओं द्वारा सवनद्वय में और ३. ब्राह्मणाच्छंसी प्रातः सवन में अहीनगत परिधानीया ऋचाओं के द्वारा तथा माध्यन्दिनसवन में ऐकाहिक परिधानीया ऋचाओं के द्वारा उपसहार करे]।

तदेतदुभयीमि परिधान दृष्टान्तेन प्रशसति—

तद्यथा दीर्घाध्व उपविमोकं यायात् तादृक्तत् ॥ इति ।

लोके यथा वा 'दीर्घाध्वे' दूरमार्गे गच्छन् पुरुष 'उपविमोकं' रथशकटादौ योजितमश्वबलीवर्दादिक तत्र तत्रोपविमुच्यापविमुच्य 'यायात्' श्रान्तिपरिहारेण शनैर्गच्छन्, तादृगेव तत्' उभयविधपरिधानम्। यथा मार्गे बहुश्रमा विमोकेन निवर्तते, एवमहीनगतधिरापादितश्रम ऐकाहिकीभिर्निवर्तते ॥

लोक में जैसे दूरगामी पुरुष रथ में योजित बैल या अश्व को समय समय से अलग कर यथावत् दूर करते हुए धीरे धीरे जाते हैं उसी प्रकार यह [अहीनगत ऋचाओं से श्रम को प्राप्त एकाहिक ऋचाओं से विमोक होता] है।[3]

---

१ सस्थितैकाहयोगित्वात् सस्थायद्वा भवेदिह ।
अहीनेऽस्मा समूढे यद्योग तत्र कृत भवेत् ? ॥ इति षड्गुरुशिष्य ।

२ *एकैति शेष । उत्कर्तनमात्मनो हानि । कुठो च्छेदने । कर्मणि यक् । श्रान्त अश्व* गमनादिना । विमुच्यमान =पानीयौदनादानेन त्यज्यमान । इति षड्गुरुशिष्य ।

३ उप समाप छायादीना विमोक ल्यबर्थे णमुल् । विमुच्य=विश्रम्य विश्रम्य । दीर्घ आयत अध्वा यस्य उपसर्गाद्ध्वनः' (पा० सू० ५ ४ ८५) इत्यच् । कश्चित् यायाद् गच्छेत् । इति षड्गुरुशिष्य ।

उभयविपर्यासे दोषं परिहृत्य गुणं दर्शयति—

सततो हैषां यज्ञो भवतीमे ह्यू मुञ्चन्ते ॥ इति ।

एवम्' उभयविपर्यासयुक्तानां पुरुषाणां यज्ञ 'सतत' विच्छेदरहितो भवति। सानुनासिका प्लुतिः प्रत्यार्था। विच्छेदात् उपरितन उकार एवकारार्थे । तस्य दीर्घं छान्दसः। यजमाना धर्म विमुञ्चन्त एव ॥

इस प्रकार इन [दोनों प्रकार के उपसंहार से युक्त पुरुषों का] यज्ञ विच्छेदरहित होता है और यजमान भी धर्मार्थ मिला लेते हैं।

अथ स्तोमातिशंसने कञ्चिद्विशेषं दर्शयति—

एकां द्वे न द्वयोः सवनयोः स्तोममतिशंसेत् ॥ इति ।

यदा सामगैस्त्रिवृदादि स्तोमः क्रियते, तदानीं होत्रकैः स्तोमसंख्यामतिलङ्घ्य शंसनीयम्। तत्र द्वयोः 'प्रातर्माध्यन्दिनयोः सवनयोः 'एकाम्' ऋचं वा 'द्वे' ऋचौ वातिशस्य न शंसेत्। किन्त्वेकया द्वाभ्यां वातिशंसेत्। पूर्वेणायं नियमः प्रातःसवन एवोक्तः। उत्तरमोऽस्तु सप्तभोऽपरिमिताभिरतिशंसनमुक्तम्[1]। तथा सति माध्यन्दिने सवने पूर्वोत्तरविरोधः प्रसज्येतेति चेत्, तर्हि तत्रैकया द्वाभ्यामपरिमिताभिर्विकल्पोऽस्तु[2] ॥

[जब सामगायक स्तोमों की संख्या का अतिक्रमण करके शंसन करें तब प्रातः और माध्यन्दिन] दोनों सवनों में एक या दो ऋचाओं का अतिक्रमण न करके ही स्तोम का अतिशंसन करें।

बह्वीभिरतिशंसने बाधमाह—

दीर्घारण्यानि ह वै भवन्ति, यत्र बह्वीभिः स्तोमोऽतिशस्यते ॥ इति ।

यथा दीर्घेष्वरण्येषु गच्छतः पुरुषस्य विश्रामस्थानाभावात् महाप्रयासः, तथा बह्वीभिरतिशंसनं दुःखहेतुरित्यर्थः ॥

[वस्तुतः] जहाँ बहुत ऋचाओं से अतिशंसन किया जाता है वह बड़े अरण्य के समान हो जाता है [अर्थात् विश्राम के अभाव में दीर्घ अरण्य में महान् प्रयास ही होता है वैसे ही बहुत ऋचाओं से अतिशंसन दुःख का हेतु बन जाता है]।

माध्यन्दिनसवन इव तृतीयसवने पक्षान्तरमस्तीति शङ्कां वारयितुं पूर्वोक्तमेवापरिमितत्वं पुनरभ्यस्यते—

अपरिमिताभिस्तृतीयसवनेऽपरिमितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याप्त्यै ॥ इति ।

'अपरिमिताभिः' नियतपरिमाणरहिताभिः। स्वर्गस्य भोगबाहुल्यादपरिमितत्वम्।

---

1 'एकां द्वे न स्तोममति शंसेत् अपरिमिताभिरुत्तरयोः'—इति द्र० ऐ० ब्रा० पूर्वम् १३२, १३३ पृ०।

2 'तुल्यबलविरोधे तु विकल्पः स्यात् तत्र धर्मार्थमावपि'—इति प० सं० २ १४

किन्तु तृतीय सवन में अपरिमित ऋचाओं के द्वारा अतिशसन करें क्योंकि स्वर्गलोक [भोग बाहुल्य के कारण] अपरिमित है और यह अतिशसन स्वर्गलोक की प्राप्ति के लिए ही होता है।

वेदनपूर्वमनुष्ठान प्रशसति—

**सततो ह्यस्याभ्यारब्धोऽविस्रस्तोऽहीनो भवति य एवं विद्वानहीनं तनुते ॥ २३ ॥** इति।

'य' पुमानुक्तप्रकारेणातिशसन जानन्नहीनमनुतिष्ठति, 'अस्य' पुरुषस्या अभ्यारब्ध' आभिमुख्येनोपक्रान्तोऽहर्गण 'सतत' नैरन्तर्येण वर्तमान कदाचिदपि 'अविस्रस्त' विनाशरहितो भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ पञ्चिकायां चतुर्थाध्याये (एकोनत्रिंशाध्याये) सप्तम खण्ड ॥७॥ (२३) [११०]

जो [पुरुष] इस प्रकार स [अतिशसन को] जानते हुए अहीन का अनुष्ठान करता है, उस [पुरुष] का अभिमुख रूप से उपक्रान्त अहर्गण नैरन्तर्य को प्राप्त होकर कभी भी विनाश को नहीं प्राप्त होता है।

॥ इस प्रकार उन्तीसवे (चतुर्थ) अध्याय के सप्तम खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथ अष्टम खण्ड

अथ पृष्ठयस्य षडहस्य षष्ठेऽहनि धिष्ण्याख्यशस्त्रवलुप्तिसूक्त विधातुमाख्यायिकामाह—

**देवा वै वले गाः पर्यपश्यस्ता यज्ञेनैवेप्सस्ता षष्ठेनाह्नाऽऽप्नुवस्ते प्रातःसवने नभाकेन वलमनभयस्त यदनभयास्तेन्, अश्वयन्नेवैन तत्, त उ तृतीयसवने वज्रेण वालखिल्याभिर्वाच कूटेनैकपदया वल विरुज्य गा उदाजन् ॥** इति।

वलनामक कश्चिदसुरप्रभु तदीयभृत्या बृहस्पतिप्रमुखाना देवाना गा अपहृत्य वलस्य गृहे स्थापितवन्त । देवाश्च वैन'चिद्दूतमुखेन 'वले' वलस्य गृहेऽवस्थापिता गा 'पर्यपश्यन्' ज्ञातवन्त । ज्ञात्वा च सामभेदादीँल्लौकिकोपायान् परित्यज्य 'यज्ञेनैव' उपायेन 'ऐप्सन्' आप्तुमिच्छा कृतवन्त । कृत्वा च पृष्ठयस्य षडहस्य यत्षष्ठमह, तदहरनुष्ठाय तत्सामर्थ्येन 'ता' गा प्राप्नुवन्। 'ते' देवा प्रातःसवने नभाकनाम्ना महर्षिणा, तद्दृष्टेन मन्त्रेण वा वलनामकमसुरम् अनभयन्', नमतिधातुर्हिसार्थ ताडितवन्त इत्यर्थ । त' प्रतिबन्धकारण वलनामानमसुर यद्यपि 'अनभयन्' ताडितवन्त । प्लुतिस्ताडनप्रशसार्था । तदानीमेव गोग्रहणम् 'अश्वयन्नेव' रक्षणार्थप्राकारद्वारोद्घाटनेन निरोध शिथिलीकृतवन्त । यद्वा,

बलनामानमसुरमेव मन्त्रमेनमापाद्य शिथिलीकृतवन्तः। ते उ' पुनरपि ते देवास्तृतीय सवने षष्ठस्थेनावस्थिताभि 'वालखिल्याभ्याभि' ऋग्भि 'वाच कूटेनैकपदया' वल 'विरुज्य' विशेषेण भग्नं कृत्वा स्वकीया गा 'उदाजन्' तदीयाद् दुर्गाद्दुर्गमितवन्त। वाच कूटशब्देन विहृतो मन्त्रविशेष उच्यत इत्युपरिष्टाद् दर्शयिष्यति, स एष वाच कूट एकपदा भवति ॥

।। २४ [xxix ८] [बल नामक किसी असुर के भृत्यों ने बृहस्पति प्रमुख देवों की गायों का अपहरण करके बल के गृह में रखा] देवों ने किसी दूत के मुख से बल के गृह में स्थित गायों को जान लिया। [जानकर साम-दाम आदि लौकिक उपायों को छोड़कर] उसे यज्ञ के ही उपाय से प्राप्त करने की इच्छा की। [उन्होंने पृष्ठ्यषडह के] छठें दिन [का अनुष्ठान करके उसकी सामर्थ्य] से उन [गायों] को प्राप्त किया। उन [देवों] ने प्रात सवन में 'नभाक' नामक महर्षि द्वारा दृष्ट मन्त्र से बल नामक असुर को प्रताड़ित किया। उस [बल नामक प्रतिबन्ध के कारण रूप असुर] को जभी मारा, तभी इन [गायों] के निरोधों को शिथिल कर दिया। पुनः उन [देवों] ने तृतीयसवन में षष्ठ रूप से अवस्थित वालखिल्य ऋचाओं के वाच कूट [विहृत मन्त्र विशेष] नामक एक पद से बल को विशेष रूप से भग्न करके [अपनी] गायों को [उसके दुर्ग से] निकाल लिया।

अथ नभाकेन दृष्टान् तृचान् विधत्ते—

तथैवैतद् यजमानाः प्रातःसवने नभाकेन वलं नभयन्ति, तं यन्नभयन्तोरे धयन्त्येवैन तत्, तस्माद्धोत्रकाः प्रातःसवने नाभाकांस्तृचाञ्छंसन्ति ॥ इति।

यथा देवा नभाकेन वलं हिंसितवन्त तथैवैनस्मिन् षष्ठेऽहनि यजमाना प्रातःसवने नभाकनाम्ना महर्षिणा दृष्टेन मन्त्रेण 'वल' वलनामकासुरवत् प्रतिबन्धक पाप्मान 'नभयन्ति' हिंसन्ति। 'त' वलं यद्' यदा नभयन्ति। स्तुति. पूर्ववत्। 'तत्' तदानीं 'धयन्ति' शिथिलं कुर्वन्ति। 'तस्मात्' कारणान्मैत्रावरुणादयो 'होत्रकाः' प्रातःसवने 'नाभाकान्' नभाकेन दृष्टांस्तृचाञ्छंसेयुः ॥

उसी प्रकार यजमान भी प्रात सवन में 'नभाक' नामक महर्षि द्वारा दृष्ट मन्त्र से बल नामक असुर [के समान प्रतिबन्धक पापों] को नष्ट करते हैं। उस [बल] को जब ताड़ित करते हैं। तब इसको शिथिल ही करते हैं। इसलिए होतक प्रात सवन में नभाक महर्षि द्वारा दृष्ट तृचों से शंसन करते हैं।

तांस्तृचाननुक्रामति—

य ककुभो निधारय इति मैत्रावरुणः, पूर्वीष्ट इन्द्रोपमातय इति ब्राह्मणाच्छंसी, ता हि मध्यं भराणामित्यच्छावाकः ॥ इति।

'य. ककुभः' इत्येकस्तृच[1]। 'पूर्वीष्ट' इति द्वितीय[2]। 'ता हीति' तृतीय[3]। मैत्रावरुणादयः क्रमेण शसेयुः[4] ॥

[उन तृचों में से] 'यः ककुभः' (जो दिशाओं को धारण करते हैं) आदि तृच का शंसन मैत्रावरुण करता है, 'पूर्वीष्ट' (हे इन्द्र तुम्हारी स्तुतियाँ पुरातन हैं) आदि तृच से ब्राह्मणाच्छंसी और 'ता हि मध्यं' (इन्द्र एव अग्नि सग्रामों के बीच में निवास करते है) आदि तृच का अच्छावाक शसन करे ।

तारतृचान् विधाय शिल्पस्वरूप विधत्ते—

**त उ तृतीयसवने वज्रेण वालखिल्याभिर्वाचःकूटेनैकपदया वल विरुज्य गा आप्नुवन्ति ॥** इति ।

'त उ' ते तु मैत्रावरुणादय 'वल' प्रतिबन्धक पाप्मान वैरिणं वज्ररूपेण वालखिल्येन विनाश्य गोप्राप्तौ विघ्नरहिताः सन्तो गा प्राप्नुवन्ति । 'वालखिल्याभिर्वाच कूटेनैकपदया'-इति, एतावता शिल्पस्वरूपमभिहितम्[5] ।

वे ही मैत्रावरुण आदि प्रतिबन्धक वैरी पापों को वज्ररूप वालखिल्य रूपी वाच कूट [वाणी के समूह] रूप एक पद से भग्न करके [विघ्नरहित होकर] गायों को प्राप्त करते हैं।

तदेतद्विवदयति—

**पच्छः प्रथम षड्वालखिल्याना सूक्तानि विहरत्यर्धर्चशो द्वितीयमृक्शस्तृतीयं, स पच्छो विहरन् प्रगाथे प्रगाथ एवैकपदा दध्यात् स वाच.कूटः ॥** इति ।

वालखिल्यनामका केचन महर्षय. तेषा सम्बन्धीन्यष्टसूक्तानि विद्यन्ते, तानि वालखिल्यनामके ग्रन्थे समाम्नायन्ते[6] । तेष्वादौ यानि षट्सूक्तानि, तानि प्रथम 'पच्छ' पादशो

---

१ ऋ० ८४१४-६ ।   २ ऋ० ८४०.९-११ ।   ३ ऋ० ८४० ३-५ ।

४ 'महावालमिदं चेच्छंसेदूर्ध्वमनुरूपेभ्य आरम्मणीयाभ्यो वा नामाकास्तृचानावपेरन् गायत्रीकारम्'—इत्यादि आश्व० श्रौ० ७ २.१६,१७ ।

५. द्र० इत· पूर्वम्, ९७१ पृष्ठे, टि० २ ।

६. मोक्षमूलरभट्ट–सम्पादित–मुद्रित–ऋग्वेदसहितायां सातवलेकरसपादितसहिताया वा अष्टममण्डलीय–षष्ठानुवाकात् परस्तात् वालखिल्य नामकान्येकादश सूक्तानि मुद्रितानि दृश्यन्ते ऋ० ८४९-५९) । वस्तुतः यस्या सहितायां मण्डलकृतो विभाग न तत्र वालखिल्यानामृचां सन्निवेशः, तामेव सहितामवलम्ब्य सायणाचार्येण भाष्यमकारि । अत एवेहोक्त 'वालखिल्यनामके ग्रन्थे'–इति । अष्टकविभक्तसहितायां तु षष्ठाष्टकस्य चतुर्थाध्याये चतुर्दशाद्या सप्तदशवर्गा वालखिल्यीया एवेति न तत्र वालखिल्याख्य कश्चन पृथक् ग्रन्थ इति विवेक । अथ यदुक्तमारण्यकभाष्य सहितायामाम्नातानि'–इति (ऐ० आ० ५ २ ४ २), तदपि वालखिल्यसहितेति पृथक् ग्रन्थ इत्यभिप्रायेणैव ।

विहरेत् । ततो द्वितीयस्यामावृत्तावर्धर्चशो विहरेत् । तृतीयस्यामावृत्तौ पच्छो विहरेत् । यदा पच्छो विहरति, तदानीमेतस्मिन् प्रगाथ एकैकामेकपदां दध्यात् । स प्रगाथैकपदयोः समूहो 'आधःशूरः'–इत्यनेन शब्देनाभिधीयते । तमिमं विहारप्रकारम् आश्वलायन आह — 'षट्सूक्तानि व्यतिमर्शं पच्छो विहरेत् । व्यतिमर्शमर्धर्चशो, व्यतिमर्शमृक्शः, प्रगाथान्तेषु चानुपसन्तानमृगाथानमेकपदाः शंसेत्'–इति[1] । तेषु षट्सूक्तेषु प्रथमसूक्तादावृग्द्वय-मेवमाम्नातम्—

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ १ ॥ ओ३म् ।
शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥ २ ॥ ओ३म् ।

द्वितीयसूक्तेऽपि ऋग्द्वयमेवमाम्नातम्—

प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये ।
यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहते ॥ १ ॥ ओ३म् ।
शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।
गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषुः ॥ २ ॥ ओ३मिति ।

तत्र प्रथमसूक्तगतमेकं (?) पादं च संयोजयेत् । सोऽयं विहारः । अस्मिन् विहारे 'व्यतिमर्शः' नाम कश्चिद्विशेषः । स च यथाक्रमं परित्यज्य प्रकारान्तरेण योजने सति संपद्यते । प्रथमसूक्तस्य प्रथमायामृचि प्रथमपादमुक्त्वा द्वितीयसूक्तस्य द्वितीयायामृचि [यः] द्वितीयपादं तेन संयोजयेत् । तद्यथा—'अभि प्र वः सुराधसमिन्द्रस्य समिषो महीरिति' । द्वितीयसूक्तस्य द्वितीयस्यामृचि प्रथमपादमुक्त्वा प्रथमसूक्तस्य प्रथमायामृचि [यः] द्वितीयपादं तेन संयोजयेत् । तद्यथा—'शतानीका हेतयो अस्य दुष्टरा इन्द्रमर्च यथाविदे३मिति' । अथ प्रथमसूक्तस्य प्रथमायामृचि तृतीयपादमुक्त्वा द्वितीयसूक्तस्य द्वितीयस्यामृचि [यः] चतुर्थपादं तेन संयोजयेत् । तद्यथा —'यो जरितृभ्यो मघवा पुरूवसुर्यदी सुता अमन्दिषुरिति' । द्वितीयसूक्तस्य द्वितीयस्यामृचि तृतीयपादमुक्त्वा प्रथमसूक्तस्य प्रथमायामृचि [यः] चतुर्थपादं तेन संयोजयेत् । तद्यथा—गिरिर्न भुज्मा मघवत्सु पिन्वते सहस्रेणेव शिक्षतो३मिति ।

तदिदं पादयोर्विहृतमृग्द्वयमेकः प्रगाथः संपद्यते । तस्य प्रगाथस्यान्ते 'इन्द्रो विश्वस्य गोपतिः' इत्येकामेकपदां आदध्यात् । सोऽयं समूहो आधःशूरसंज्ञः । अनेनैव न्यायेन सर्वेषु सूक्तेषु सर्वास्वृक्षु बुद्धिमता पादशो व्यतिमर्शं विहरणमुन्नेयम् ।

---

1. आश्व० श्रौ० ८.२.१९,२० ।

अथार्धर्चशो विहार उच्यते—प्रथमसूक्तस्य प्रथमायामृचि प्रथमार्धर्चमुक्त्वा द्वितीयसूक्तस्य द्वितीयस्यामृचि [यत्] उत्तरार्धं तेन संयोजयेत् । तद्यथा—'अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे । गिरिर्न भुज्मा मघवत्सु पिन्वते यदी सुता अमन्दिषोश्मिति । एवं सर्वमुन्नेयम् ।

ऋक्शो विहरेत्—तत्र प्रथमसूक्तस्य प्रथमामृचमुक्त्वा तया सह द्वितीयसूक्तस्य द्वितीयामृचं योजयेत् । एवं सर्वत्रोहनीयम्[1] ॥

वालखिल्य नामक महर्षि द्वारा दृष्ट [आठ] सूक्तों में से प्रथम छः सूक्तों को पाद-पाद के अवसान पर विहरण करे, द्वितीय आवृत्ति में अर्धर्च के अवसान पर विहरण करे और तृतीय आवृत्ति में ऋचा के अवसान पर विहरण करे। वह जब पाद-पाद के अवसान पर विहरण करे तब एक-एक प्रगाथ में एक-एक एकपदा ऋचा को रक्खे। वह [प्रगाथ और एकपदा का समूह ही] वाच.कूट है।

अथ प्रगाथान्तेषु प्रक्षेपणीया एकपादा दर्शयति—

**ता एताः पञ्चैकपदाश्चतस्रो दशमादह्न एका महाव्रतात् ॥ इति ।**

या एकपदा ऋचः प्रक्षेप्तव्याः, ता एता एकपदाः पञ्चसंख्याकाः । तासु चतस्र एकपदाः श्रुत्यन्तरेषु दशमेऽहनि पठिताः[2] । तस्माद्दशमादह्नस्ताश्चतस्र आनेतव्याः । तासु 'इन्द्रो विश्वस्य गोपतिः' इत्येषा प्रथमा, 'इन्द्रो विश्वस्य भूपतिः'—इत्येषा द्वितीया, 'इन्द्रो विश्वस्य चेतति'—इत्येषा तृतीया, 'इन्द्रो विश्वस्य राजति'—इत्येषा चतुर्थी, अथावशिष्टा श्रुत्यन्तरेषु महाव्रते श्रुता[3] । सा च 'इन्द्रो विश्वं विराजति'—इत्येतादृशी, तस्मान्महाव्रतादानेतव्या । ता एताः पञ्चैकपदाः पञ्चसु प्रगाथेषु प्रक्षिपेत् ॥

[जो एकपदा ऋचा प्रक्षिप्त होनी चाहिए] वे ये एकपदा ऋचाएँ पाँच होती हैं। उनमें चार दसवें दिन से पठित हैं और एक महाव्रत से ली गई हैं।

अवशिष्टेषु प्रगाथेषु प्रक्षेपणीयान् पादान् दर्शयति—

**अथाष्टाक्षराणि माहानामनानि पदानि; तेषां यावद्भिः संपद्येत, तावन्ति शसेन्नेतराण्याद्रियेत ॥ इति ।**

अथ पञ्चसु प्रगाथेषु पञ्चानामेकपदानां प्रक्षेपादनन्तरं 'माहानामनानि' महानामशब्देन 'विदा मघवन्'—इत्यादयो महानाम्नीसंज्ञकाः[4] विधीयन्ते, तेषां महानाम्नामृचां

---

१. एवं विहारो महावलमित्यादिः, अन्यविधावपि विहारौ आश्वलायनेनैवाभिहितौ अथ वालखिल्या विहरेत् इति नु हौण्डिनो'—इति आश्व० श्रौ० ८ ३.३–१७ ।

२. एताश्चतस्र शाखान्तरीया इति कल्पे प्रपठ्य विहिता. । द्र० आश्व० श्रौ० ८.२.२१ ।

३. ऐ० आ० ५ ३ १ २ । 'इत्येकपदा शाखान्तरगता पठेद्'—इति तत्र सा० भा० । 'एका महाव्रतादाहरेत्'—इति आश्व० श्रौ० ८ २ २२ ।

४. ऐ० आ० ४ ।

विरहणेन चक्षुर्मनसोर्मिश्रीकरणम् । तृतीयपर्याये-ऋचशो विहरणेन श्रोत्रेन्द्रियजीवात्मनोर्मिश्रीकरणम् । 'तत्' तथा सति विहरणेन यः 'काम'[1] फलविशेष, स 'उपाप्तः'[1] प्राप्तो भवति । तथा वज्ररूपासु वालखिल्यासु यः कामः, सोऽपि प्राप्तः । तथा वाच कूटरूपायामेकपदायां यः कामः सोऽपि प्राप्तः । तथा प्राणा वागादीना क्लृप्त्या विहरणे यः कामः, सोऽपि प्राप्तो भवति[2] ॥

वह अनुष्ठान करने वाला जो प्रथम [पाद पाद के अवसान वाले] पर्याय में छः वालखिल्य सूक्तों का विहरण करता है उससे प्राण और वाणी को मिश्रित करता है । द्वितीय [अर्धर्च के अवसान वाले] पर्याय में चक्षु और मन को मिलाता है । तृतीय [ऋचा के अवसान वाले] पर्याय में श्रोत्र और जीवात्मा को मिलाता है । इस प्रकार विहरण से जो फल विशेष है वह प्राप्त होता है और वज्ररूप वालखिल्यों में जो फलविशेष है वह भी प्राप्त होता है; तथा वाच कूट रूप एकपदा में जो फलविशेष है, वह भी प्राप्त होता है, और अन्ततः वाक् आदि प्राणों के विहरण में जो कामना होती है वह भी प्राप्त हो जाती है ।

चतुर्थपर्याये विहारमन्तरेण यथापाठ शसन विधत्ते—

अविहृतानेव चतुर्थं प्रगाथाञ्छंसति, पशवो वै प्रगाथाः, पशूनामवरुद्ध्यै ॥ इति ।

प्रगाथाना पशुप्राप्तिहेतुत्वात् पशुत्वम् ॥

चतुर्थ पर्याय में वह प्रगाथों का बिना विहरण के [अर्थात् दो सूक्तों को बिना मिलाए ही] शसन करता है[3] । वस्तुतः प्रगाथ पशु हैं, क्योंकि यह शसन पशुओं की प्राप्ति के लिए ही होता है ।

विहरणशसनवदप्राप्येकपदाप्रक्षेपप्रसक्तौ निषेधति—

नात्रैकपदां व्यवदध्यात् ॥ इति ।

एकपदायाः प्रक्षेपे प्रगाथद्वयस्य मध्ये व्यवधान स्यात्, तन्न कुर्यात् ॥

यहाँ [प्रगाथ द्वय के मध्य में] एकपदा के प्रक्षेप से व्यवधान भी न करे ।

तत्करणे बाध दर्शयति—

यदत्रैकपदां व्यवदध्याद् वाच कूटेन यजमानात् पशून्निर्हण्याद्, एनं तत्र ब्रूयाद् वाच-कूटेन यजमानात् पशून्निरवधीरपशुमेनमकरिति शश्वत् तथा स्यात् ॥ इति ।

---

१. तत्=टार्थे सु, तेन । काम.=लाभ । उपाप्त=स्वीकृत । इति षड्गुरुशिष्य. ।

२. काम इत्ययेव । प्राणश्चक्षुरादिवत्. । क्लृप्ति =सश्लेष' । इति षड्गुरुशिष्य. ।

३. 'अवकृष्येकपदा अविहरश्चतुर्थं शसेत्' इति आश्व० श्रौ० ८.२.२४ ।

यदि 'अत्र' चतुर्थपर्याये—एकपदाप्रक्षेपेण व्यवधानं कुर्यात् तदानीं वाच कूटरूपेणैकपदा सहितप्रगाथेन वज्रेण पूर्वं विद्यमानान् पशून् यजमानादस्मात् 'निर्हण्यात्' निःशेषेण[1] विनाशयेत्। एवं सति य कोऽपि विरोधी समागत्य 'एनं' शासितारं तत्र[2] शासनकाले 'ब्रूयात्' शपेत्। कीदृशं शाप ? इति सोऽभिधीयते—हे शासित, त्वं वाच कूटेन वज्रेण यजमानात् पशून् 'निरवधी' निःसार्य हतवानसि। 'एनं' यजमानम् 'अपशु' पशुरहितम् 'अक' कृतवानसीति। तदानीं 'शश्वत्' अवश्यं 'तथा स्यात्' पशुरहित एव स्यात्॥

जो यहाँ [चतुर्थ पर्याय में] एकपदा के प्रक्षेप से व्यवधान करता है तो वह वाच कूट रूप एकपदा सहित प्रगाथ रूप वज्र से पूर्व विद्यमान पशुओं को यजमान से निःशेष रूप से विनष्ट करता है। इस प्रकार वहाँ [शासन काल में] कोई [विरोधी आकर शासन करने वाले को यदि शापयुक्त वचन] कहे कि 'हे शासिता तुम वाच कूट रूप वज्र द्वारा यजमान से पशुओं को निकाल कर मारते हो, और इस [यजमान] को पशुरहित ही करते हो' तब वैसा ही [पशुविहीन होना ही] सत्य हो जाता है।

विपक्षे बाधमुक्त्वा स्वपक्षमुपसंहरति—

तस्मात् तत्रैकपदां न व्यवदध्यात्॥ इति।

इसलिए यहाँ [चतुर्थ पर्याय में] एकपदा के प्रक्षेप से व्यवधान न करें।

वालखिल्यानां षट्सूक्तेषु विहारमुक्त्वाऽवशिष्टयोः सप्तमाष्टमयोः सूक्तयोर्विपर्यासेन[3] शंसनं विधत्ते—

दूह्येवोत्तमे सूक्ते पर्यस्यति, स एव तयोर्विहारः॥ इति।

ये द्वे उत्तमे सूक्ते, ते विपर्यस्येदेव, न तु विहरेत्। अष्टमं सूक्तमादौ पठित्वा पश्चात् सप्तमस्य पाठो विपर्यासः। 'तयोः' द्वयोः सूक्तयोः 'स' एव विपर्यस्तपाठ एव विहारस्थानीयः॥

---

१ यद्=यदि। हनिर्गत्यर्थोऽत्यर्थोऽप्यर्थश्च, निगमयत्। यजमानात्=ऽनिणः। इति षड्गुरुशिष्यः।

२ तत्र एकपदाभिधाने। एनं=प्रशास्तारं यो ब्रूयात् त्वं पशून् ...., निरवधीः= अजीगमः। एनं सन्निगमपशुमक=प्रशार्थो। 'मन्त्रे प'ति' (पा० सू० २ ४ ८०) ... सिद्धमात्र छन्द इत्सत्त्वात्। इति षड्गुरुशिष्यः।

३ मुद्रित शाखलसंहितानुसारं तु वालखिल्यानामष्टादश सूक्तानि दृश्यन्ते। विरोधस्तत्र ... द्रष्टव्यः। अपि वा अष्टावेव वालखिल्यानि, तदितराणि ... तु खिलसूक्तान्येवेति स्यात् समाधानम्।

४. ऋ० ८.९.५५, ५६।

[छ. वालखिल्यों के विहरण के बाद अवशिष्ट सातवें और आठवें सूक्तों का विपर्यास करके शंसन का विधान करते हैं] जो दो बाद के सूक्त हैं उन्हें [विहरित न करके] उलट कर पढ़ता है [अर्थात् आठवें सूक्त के बाद सातवें का पाठ करना विपर्यास है] इस प्रकार उन दोनों सूक्तों का यह [विपर्यस्त पाठ] ही विहारस्थानीय है।

शिल्पनामक शस्त्र निरूप्य प्रशंसति—

तदेतत्सौवलाय सर्पिर्वात्सि· शशास, स होवाच भूयिष्ठानह यजमाने पशून् पर्यग्रहैषमकनिष्ठा उ मामागमिष्यन्तीति, तस्मै ह यथा महदृभ्य ऋत्विग्भ्य एव निनाय, तदेतत्पशव्य च स्वर्ग्यं च शस्त्र, तस्मादेत-च्छंसति ॥ २४ ॥ इति

'सौबल'नामक कश्चिद्यजमान तस्मै वत्सस्य पुत्र 'सर्पि' इत्येतन्नामक ऋत्विक्, 'तदेतत्' शिल्पशस्त्र शशास, ['स'] च शसनादूर्ध्वमेवमुवाच,—अहमस्मिन् सौबलनामके 'यजमाने' 'भूयिष्ठान्' अतिशयेन प्रभूतान् पशून् 'पर्यग्रहैष' परित सपादितवानस्मि। तस्माद् 'अकनिष्ठा उ' श्रेष्ठा एव पशवो मामागमिष्यन्ति। तत सौबलो यजमान। यथा 'महदृभ्य ऋत्विग्भ्य' होत्रध्वर्यूद्गातृब्रह्मभ्यो दक्षिणां दत्तवान्, अथापि शिल्पशसिने होत्रकायापि बह्वीरुत्तमा गा दक्षिणात्वेन निनाय[1]। तस्मादेतच्छिल्पशस्त्रमिह लोके पशुसाधन परलोके स्वर्गसाधन च। तस्मात् एतत्'शिल्प शसत्॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ-पञ्चिकाया चतुर्थाध्याये (एकोनत्रिंशाध्याये) अष्टम खण्ड ॥८॥ (२४) [१११]

सौबल [नामक किसी यजमान] के लिए वत्स के पुत्र सर्पिः नामक ऋत्विज ने इस [शिल्पशस्त्र] का शसन किया। उन्होंने [शसन के बाद] कहा—मैंने सौबल नामक इस यजमान के यज्ञ में अत्यधिक पशुओं को चारों ओर से सपादित किया है। इसलिए श्रेष्ठ पशु मेरे पास आवेंगे। उसके बाद यजमान सौबल ने [होता, अध्वर्यु, उद्गाता एव

१ निनाय दत्तवास्तस्मै सर्पिषे सौबलो मुदा।
होत्रादिमुख्य सदृशी दक्षिणा बहुरूपिणीम्॥
दक्षिणापरिमाण तु प्रोक्त यज्ञविशारदै।
यद् दित्सित क्रतौ द्रव्य शतधा प्रविभज्य तत्॥
क्षिपेच्चतुर्षु वर्गेषु प्रत्येक पञ्चविंशतिम्।
तत्र द्वादशमुख्याय द्वितीयाय षडेव तु॥
चतुरोऽथ तृतीयाय त्रींश्चतुर्थाय वै त्विति।
अत। षडशमाजेऽस्मै द्वादश स्म मुदा ददौ॥
सर्पिषे सौबल इति महाबालमिदस्तुति। इति षड्गुरुशिष्य।

ब्रह्मा आदि] महान् ऋत्विजों को समान दक्षिणा दी, [और शिल्पशस्त्र का शंसन करने वाले होता के लिए भी बहुत उत्तम गायों को दक्षिणा रूप में दिया]। इसलिए यह शिल्पशस्त्र इस लोक में पशु का साधक एवं परलोक में स्वर्ग का साधक है। अत इस [शिल्पशस्त्र] का शंसन करता है।

॥ इस प्रकार उन्तीसवें (चतुर्थ) अध्याय के आठवें खण्ड की हिन्दी पूर्ण हुई ॥ ८ ॥

अथ नवमः खण्डः

शिल्पशंसनमभिधाय शंसनान्तरमभिधत्ते—

दूरोहणं रोहति, तस्योक्तं ब्राह्मणम् ॥ इति ।

दुःखेन रोहणमुच्चारणं यस्य शंसनस्य, तद् 'दूरोहणं', तद् 'रोहति' शंसेदित्यर्थः 'तस्य' दूरोहणस्य विधायकं ब्राह्मणं पूर्वमेव विषुवदह्नः प्रसङ्गे 'आहूय दूरोहणम्'–इत्यत्राभिहितम्[1]। अत एव पूर्वाचार्या आहुः—

'स्वर्गो वै लोक इत्यादि पूर्वं विषुवति क्रतौ।
दूरोहणब्राह्मणं तु प्राग्यदोचाम यं स्फुटम् ॥
सप्तरूपा हंसवती दूरोहणमितीरितम्' इति।

हंसवती, पच्छः अर्धर्चशः, त्रिपदा, ऋक्शोऽनवान पुनरपि त्रिपदा अर्धर्चशः, पच्छः इति सप्तभिः प्रकारैः पठनमिति दूरोहणम्[2]। तदेतत् 'पूर्वं' तात्पर्यमुक्तेऽभिहितम्[3] ॥

VI २५ [XXIX.९] दूरोहण [अर्थात् हंसवती ऋचा जिसका सात प्रकार से पाठ अत्यन्त दुःसाध्य है उस] का शंसन करे। उस [दूरोहण] का [विधायक] ब्राह्मण पहले ही अभिहित हो चुका है।

इदानीं फलविशेषायैन्द्रे सूक्ते सद्विधत्ते—

ऐन्द्रे पशुकामस्य रोहेदैन्द्रा वै पशवः ॥ इति।

इन्द्रदेवताके कस्मिंश्चित् सूक्ते पशुकामस्य दूरोहणं 'रोहेत्' शंसेत्। इन्द्रस्य वृष्टिद्वारा पशुपोषकत्वात् पशव ऐन्द्राः ॥

इन्द्रदेवताक किसी सूक्त में पशु की प्राप्ति के लिए दूरोहण का शंसन करना चाहिए। [इन्द्र के वृष्टि द्वारा पशुओं के पोषक होने से] पशु इन्द्र से सम्बन्धित हैं।

---

१ द्र० इस ग्रंथ, ६१६ पृ० (४.२.७)।
२ हंस शुचिषत् इति पच्छोऽर्धर्चशस्त्रिपदया चतुर्थमवानमुक्त्वा तत्पश्चात् पुनस्त्रिपदार्धर्चशः पच्छ एव सप्तमतः दूरोहणम्'—इति आश्व० श्रौ० ८.२.१४,१५।
३. द्र० इस ग्रंथ, ६५२ पृ० (४.३.६)।

तस्मिन् सूक्ते छन्दोविशेष विधत्ते—

**तज्जागत स्याज्जागता वै पशव ॥ इति ।**

सोमाहरणप्रसङ्गे जगत्या पशूनामानीतत्वात्[1] 'तत्' सूक्त जागतम् ॥

वह [सूक्त]जगती छन्दस्क हो क्योंकि [सोमाहरणप्रसग में जगती द्वारा पशुओं के आनयन के कारण] पशु जगती से सम्बन्धित हैं ।

तस्य सूक्तस्य कञ्चिद्विशेष विधत्ते—

**तन्महासूक्त स्याद्भूयिष्ठेष्वेव तत्पशुषु यजमान प्रतिष्ठापयति ॥ इति ।**

द्विविध सूक्त क्षुद्र महच्च । अत एव आरण्यकाण्डे वक्ष्यति— ते क्षुद्रसूक्ताश्चाभवन् महासूक्ताश्चेति'[2] । महासूक्तलक्षण पूर्वाचार्यैरुक्तम्—

' दशर्चंवाया अधिक महासूक्त विदुर्बुधा ' इति ।

तेन महासूक्तेन 'भूयिष्ठषु'अत्यन्त प्रभूतेष्वेव पशुषु यजमान प्रतिष्ठापयति ॥

वह [सूक्त दस ऋचा से अधिक होने से] महासूक्त होवे । अत उस [महासूक्त] से वह अत्यधिक पशुओं में यजमान को प्रतिष्ठित करता है ।

विवक्षित सूक्तविशेष दर्शयति—

**बरो रोहेत्तन्महासूक्त च जागत च ॥ इति ।**

वरुर्नाम कश्चिन्महर्षि , तेन दृष्ट सूक्तमपि बरुशब्देनोच्यते । तस्मिन् सूक्ते 'रोहेत्', दूरोहण शसन् । 'प्र ते महे' इत्यादिक[3] बरुनामक सूक्तम् । तच्च त्रयोदशर्चत्वान्महासूक्त जगतीछन्दस्क च ॥

बरु ऋषि द्वारा दृष्ट सूक्त में दूरोहण का शसन करना चाहिए । वह [तेरह ऋचाओं का होने से] महासूक्त है और जगती छन्दस्क है ।

फलान्तराय सूक्तान्तर विधत्ते—

**ऐन्द्रावरुणे प्रतिष्ठाकामस्य रोहेदेतद्देवता वा एषा होत्रैतत्प्रतिष्ठा यदैन्द्रावरुणा, तदेनत्स्वायामेव प्रतिष्ठायामन्तत प्रतिष्ठापयति ॥ इति ।**

यथा पशुकामस्य सहस्रपहसवत्यात्मक दूरोहणमैन्द्रे सूक्ते रोहेत्, तथैव प्रतिष्ठाकामस्यैन्द्रावरुणके सूक्ते शसेत् । शसितुर्मैत्रावरुणस्य होत्रकस्य क्रिया 'होत्रा ' । एषा चैत द्देवताका, 'एतत्प्रतिष्ठा' इन्द्रावरुणदेवताकसमाप्तियुक्ता । यस्मादैन्द्रावरुणा, याज्येति शेष । 'इन्द्रावरुणा मधुमत्तमस्यति'[4] याज्याया इन्द्रावरुणदेवताकत्वात् समाप्तेरिन्द्रावरुणसबन्ध ।

---

१ द्र० इत पूर्वम्, ४७१–४७३ पृ०, सोमाहरणकथा तत्रैव ४७२ पृ० द्रष्टव्यम् ।

२ ( ) ऐ० आ० २ २ २ ५ । (॥) 'नासदीयात् (ऋ० १० १२९) पूर्वं महासूक्तम्, पर क्षुद्रसूक्तम् —इति ऋक्सर्वानुक्रमण्या षड्गुरुशिष्य , (ऋक्सर्वा० परि० खण्डे २ २) अस्मद सपादित पुस्तके १४ पृष्ठे ।

३ ऋ० १० ९६ ।                ४ ऋ० ६ ६८ ११ ।

तथा सति एतद्'दूरोहणं 'स्वायामेव' 'प्रतिष्ठायां' स्वस्योचितायामेव समाप्तौ 'अन्ततः' शस्त्रान्ते प्रतिष्ठापयति ॥

प्रतिष्ठा की कामना वाले पुरुष को इन्द्र एवं वरुण देवताक सूक्त में दूरोहण का शंसन करना चाहिए। इन [मैत्रावरुण आदि होत्रकों] की क्रिया एतद्देवताक है। इसकी प्रतिष्ठा [=समाप्ति] इन्द्र और वरुण देवताएँ हैं। इस प्रकार इस [दूरोहण] को स्वोचित प्रतिष्ठा में वह [शस्त्र के] अन्त में प्रतिष्ठापित करता है।

पुनरपि सूक्तं प्रशंसति—

**यदेवैन्द्रावरुण३ इ, एषा ह वा अत्र निविन्निविदा वै कामा आप्यन्ते स यद्यैन्द्रावरुणे रोहेत् सौपर्णे रोहेत्तदुपाप्त ऐन्द्रावरुणे काम उपाप्तः सौपर्णे ॥२५॥** इति।

'यत्' यस्मात्कारणादैन्द्रावरुणे सूक्ते दूरोहणं रोहति, तस्मात् स्वायामेव प्रतिष्ठायामिति पूर्वेणान्वयः। यद्वा ऐन्द्रावरुणे सूक्ते दूरोहणमिति यदस्ति, एषैव दूरोहणक्रियाऽत्र 'निविद्' इवशब्दोऽत्र लुप्तो द्रष्टव्यः, निवित्सदृशीत्यर्थः। तथा च दूरोहणरूपया 'निविदा' सर्वे कामा प्राप्यन्ते। 'सौपर्णे' सूक्ते दूरोहणं रोहेदिति पक्षान्तरं खिलेषु[1] समाम्नातम्। 'इमानि वां भागधेयानीति[2] सूक्तं[3] सौपर्णम्।

इमानि वेति सप्तर्चं सौपर्णं खैलिकं[4] विदुः ॥" इति।

यद्वा 'प्रधारा यन्ति' गृह्योक्तसूक्तं[5] सौपर्णम्। ऐन्द्रावरुणे सौपर्णे वा दूरोहणशंसनेन सत्रीमयत्र यः कामः समाप्तः, स 'उपाप्तः' प्राप्तो भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षड्विंशायां चतुर्थाध्याये (एकोनत्रिंशाध्याये) नवमः खण्डः ॥ ९ ॥ (२५) [११२]

जो इन्द्र और वरुण देवताएँ [सूक्त में दूरोहण] हैं वही [दूरोहण क्रिया] यहाँ निविद् के समान है और [दूरोहण रूप] निविद् से सभी कामनाएँ प्राप्त होती हैं। यदि इन्द्र और वरुण देवताक सूक्त में दूरोहण का शंसन करना है तो सुपर्ण ऋषि द्वारा दृष्ट सूक्त में दूरोहण का शंसन करे। इस प्रकार उससे इन्द्र एवं वरुण देवताक सूक्त में कामनाओं की प्राप्ति हो जाती है और सुपर्ण के सूक्त में भी कामनाओं की प्राप्ति होती है।

॥ इस प्रकार उन्तीसवें (चतुर्थ) अध्याय के नौवें खण्ड की हिन्दी पूर्ण हुई ॥ ९ ॥

---

१ 'यद्वा उर्वश्योरनन्मिश्र भवति, खिल इति वै तदाचक्षते'–इति शत० ब्रा० ८।३।४।१। पूर्वमनुक्त मन्त्रस्यान्येन परिशिष्ट खिलमिति हि खिललक्षणम्'–इति शत० ब्रा० १४।८।१।१। 'सहस्य यस्य पठितायां प्लुत '–इति षड्गुरु०।

२ मुद्रितऋक्संहितायामदृष्ट सूक्त बालखिल्यस्वरूपभेदात्।   ३ ऋ० ८।५९।

४ बालखिल्यसूक्तान्यपि खिलविशेषाण्येव। द्र० शत० ब्रा० ८।३।४।१।

५ आश्व० गृ० ३।१२।१४।

## अथ दशमः खण्ड

अत्र कंचिद्विचारमुद्भावयति—

तदाहु सशंसेदत् षष्ठेऽहानेन, न सशंसेदत् इति ॥ इति ।

तत् तत्र सौपर्णं दूरोहणे शस्ते सति पश्चाद् ब्रह्मवादिनो विचारमाहु । यानि कानि यानि तदूर्ध्व शसनीयानि सन्ति तान्यत्र षष्ठेऽहन्यन्त्यः सभूय किं शसेत् किं वा सभूय न शसेदिति विचार । प्लुतिर्विचारार्था ॥

VI २६ [XX x १०] उस [सुपर्ण सूक्त में दूरोहण के शसन] के बाद ब्रह्मवादी प्रश्न करते हैं कि क्या उसे छठवें दिन के [शसनीय ऐकाहिक] मन्त्रों के साथ [दूरोहण का] शसन करना चाहिए या उस [अह सामान्य के मन्त्र] के साथ शसन नहीं करना चाहिए।

तत्र प्रथम पक्ष दर्शयति—

सशंसेदित्याहु ॥ इति ।

सभूय शंसेदित्येव कंचिद्याज्ञिका इत्याहु ॥

कुछ याज्ञिकों का उत्तर यह है कि उसे साथ में शसन करना चाहिए ।

तत्रोपपत्ति पृच्छति—

कथम् ? इति ।

क्यों [साथ में शसन] करे ?

उत्तरमाह—

अन्येष्वह सु सशसति, कथमत्र न सशंसेदिति ॥ इति ।

इतरेषु पञ्चस्वह सु मैत्रावरुण सभूय शसति । तथा सत्यह सामान्यादत्रापि कथ न सशंसेत् ? तत्परित्यागो न युक्त किंतु तदनुष्ठानमेव युक्तमित्येक पक्ष ॥

उनका उत्तर यह है कि जब अन्य [पाँच] दिनों में [मैत्रावरुण] साथ में शसन करता है तो [अह सामान्य के समान] यहाँ क्यों न साथ में शसन करे।

पक्षान्तर दर्शयति—

अथो खल्वाहुर्नैव संशसेत् ॥ इति ।

अहर तरवत् सभूय शसन न कर्तव्यमित्यपरे कथयन्ति ॥

अब अन्य याज्ञिकों का मत है कि अन्य अह के समान साथ में शसन नहीं ही करना चाहिए।

स्तोत्रस्याऽऽधारभूतस्तृचोऽस्ति, सोऽयम् 'आत्मा वै' जीवस्थानीय एव 'वालखिल्या.' ऋचः प्राणस्थानीया.। तथा सति 'स' मैत्रावरुणो यदि 'सशमेत्' तदानीम् 'एताभ्याम्' इन्द्रावरुणदेवताभ्यां 'यजमानस्य' स्तोत्रियस्थानीयस्य 'प्राणान्' वालखिल्यस्थानीयान् 'वीयाद्' विगतान्कुर्यात्। इन्द्रावरुणौ क्रुद्धौ यजमानस्य प्राणान् विनाशयेताम्[1]। एवं सति 'यः' कश्चिन्मैत्रावरुणस्य विरोधी समागत्य 'एनं' मैत्रावरुणं 'तत्र' तस्मिन् सशंसने 'ब्रूयात्' शपेत्। केन प्रकारेणेति, तदुच्यते,—'एताभ्याम्' इन्द्रावरुणदेवताभ्यां यजमानस्य प्राणानसौ मैत्रावरुणो 'व्यगाद्' विगतान् कृतवान्। तस्मात्प्राण 'एनं' मैत्रावरुणं यजमानं वा 'हास्यति' परित्यजतीति। तदानीं तस्य शापेन 'शश्वत्' अवश्यं 'तथा स्यात्' प्राणवियोगो भवेत्। तस्मान्मैत्रावरुणो न सशंसेत्॥

[तब सभूय-शासनवादी का प्रश्न है कि क्या वालखिल्यों के पूर्व ऐकाहिक ऋचाओं का शंसन हो अथवा बाद में? प्रथम पक्ष में कठिनाई यह है कि जो साम्तपाय्य] स्तोत्रिय [की आधारभूत तृच है वह जीवस्थानीय] आत्मा ही है और वालखिल्य ऋचाएँ प्राण [स्थानीय] हैं। अतः वह [मैत्रावरुण] यदि सभूय शंसन [=अहीन के साथ दूरोहण का पाठ] करता है तो वह इन [इन्द्र और वरुण] देवों के द्वारा [स्तोत्रियस्थानीय] यजमान [रूप जीव] के [वालखिल्यस्थानीय] प्राणों को हर लेता है [अर्थात् क्रुद्ध इन्द्र एवं वरुण यजमान के प्राणों का विनाश कर देते हैं]। इस प्रकार जो [मैत्रावरुण का विरोधी आकर] इस [मैत्रावरुण] को वहाँ उस सशंसन में यदि शाप देते हुए कहे— 'इन [इन्द्र और वरुण] देवों के द्वारा यजमान के प्राणों को इस मैत्रावरुण ने विगत कर दिया। इसलिए प्राण इस [मैत्रावरुण या यजमान] को छोड़ देगा।' [तब उसके शाप से] अवश्य ही वैसा ही होता है। अतः [मैत्रावरुण को] साथ साथ शंसन नहीं करना चाहिए।

एवं वालखिल्याभ्यः पूर्वं शंसने दोषमभिधायोर्ध्वमपि तच्छंसने दोषमाह—

**स यदीक्षेताशंसिषं वालखिल्या हन्त पुरस्ताद् दूरोहणस्य सशंसानीति, नो एव तस्याशामियात्॥** इति।

'स' मैत्रावरुणो यदि मनस्येवम् 'ईक्षेत' विचारयेत्। कथमिति? तदुच्यते,— 'वालखिल्या.' अत्यन्त दुःसाध्या अहम् 'अशंसिषं' शंसितवानस्मि, 'हन्त' मम हर्षं सपन्नं, इतःपरं दूरोहणस्य पुरस्तादैकाहिकं सभूय शंसानीति। तदानीं तस्य शंसनस्य पूर्ववत्प्राणवियोगहेतुत्वात् तस्य पक्षस्याऽऽशामपि 'नो एवेयात्' सर्वथा न प्राप्नुयादेव। मानसो विचारोऽपि न कर्तव्य, दूरे तत्सशंसनमित्यर्थं॥

---

१. (i) इन्द्रावरुणदेवाभ्यां प्राणान् बहिर्निर्गमयेत्। वीणो लिङ् अन्तर्णीतणिचक। इति षड्गुरुशिष्य। (ii) 'वियात्' इति मुद्रितषड्गुरुशिष्यसम्मत पाठ। (iii) 'वीयात्' इति सवर्णदीर्घत्वेन भवितव्यम्। इह तदभावश्छान्दस। इति गोविन्दस्वामी।

[वालखिल्य के बाद में शंसन में दोष यह है कि] यह [मैत्रावरुण] यदि मन में इस प्रकार विचार करे कि [अत्यन्त दुःसाध्य] 'वालखिल्यों का पाठ हमने कर लिया और अब इसके बाद दूरोहण के पूर्व ऐकाहिक ऋचाओं का साथ साथ शंसन करें।' तो [समूचा शंसन करना दूर की बात है] उसे [पहले की तरह यहाँ भी प्राण वियोग के कारण] उस पक्ष की इच्छा भी नहीं करनी चाहिए' [अर्थात् मन में विचार भी न करे]।

इदानीं स्थानविशेषेण तस्यशंसनमङ्गीकरोति—

**स यदि दर्प एव विन्देदुपरिष्टाद् दूरोहणस्यापि बहूनि शतानि शंसेद् यस्यो तत्कामाय तथा कुर्यादत्रैव तदुपाप्तम् ॥ इति ।**

स मैत्रावरुण 'यदि दर्पं एव विन्देत्' गर्वोऽस्य लभेत । अत्यन्तदुःशक शिल्पमहमशंसिषं, किं नाम मया शंसितुमशक्यमित्येतादृशो दर्पः । तदानीं तस्य मैत्रावरुणस्यौत्सुक्यानुसारेण दूरोहणस्योपरिष्टाद् बहून्यपि शस्त्राणां शतानि शंसेत् । अस्त्येव तदानीं शंसनस्यानुज्ञा । यस्यो यस्यैव फलस्य 'कामाय' प्राप्तये 'तद्' बहुविधशंसनम् 'अत्रैव' स्थाने तथा कुर्यात् तत् फलम् 'उपाप्तं' प्राप्तं भवति । एवं तावदैकाहिकानां सूक्तानामशंसनं शंसनं चेति पक्षद्वयमप्यभिहितं भवति ॥

और उस [मैत्रावरुण] को यदि यह गर्व हो जाय [कि अब हमने अत्यन्त दुःसाध्य शिल्प का भी शंसन कर लिया तो मेरे द्वारा क्या अशक्य है ?] तब उस [मैत्रावरुण] [को अपनी उत्सुकता के अनुसार] दूरोहण के बाद बहुत से सैकड़ों शस्त्रों का शंसन करना चाहिए । वह [बहुविध शंसन] जिस किसी भी फल की कामना के लिए किया जाता है वह इसी स्थान पर प्राप्त हो जाता है ।

तत्र कस्य शंसनमङ्गीकृतं, कस्य वा निषिद्धम् ? इत्यपेक्षायामुभयं विविच्य दर्शयति—

**ऐन्द्र्यो वालखिल्यास्तासां द्वादशाक्षराणि पदानि, तत्र स काम उपाप्तो य ऐन्द्रे जागतेऽथेदमैन्द्रावरुणं सूक्तमैन्द्रावरुणी परिधानीया, तस्मात् समासेत् ॥ इति ।**

'चर्षणीधृतम्'–इत्यादिक[2] यदेतदैन्द्रं सूक्तमैकाहिकं, तदेतन्निराकृत्य तस्मादुत्तरम् 'आ वां राजानौ'[3] इति, ऐन्द्रावरुणमैकाहिकं, तदङ्गीक्रियते । या 'वालखिल्या' ऋचस्ता

1 यथाह प्राक् वालखिल्या अशंसिषं दूरोहणस्य, 'स्वर्ं आदम्' दूरोहणतः शौनकस्य पुरस्तात्, तथा पश्चादपि तृचद्वय सूक्तं च सहस्राणीति यदीक्षेत एवमीक्षमाणोऽपि तदनुष्ठानं ... [illegible] ।

आशानिर्देशे निधिपा दर्पानुरूपिका क्रिया । इति षड्गुरुशिष्यः ।

२. ऋ० ३.५१ ।          ३. ऋ० ७.८४ ।

'ऐन्द्रय' इन्द्रदेवताका वासा मध्ये यानि द्वादशाक्षराणि 'पदानि' पादा विद्यन्ते, बृहती-सतोबृहतीद्वयात्मकेषु प्रगाथेषु बृहत्यास्तृतीयपादौ द्वौ द्वादशाक्षरौ, सतोबृहत्या आद्यस्तृतीय-श्चोभौ पादौ द्वादशाक्षरौ, तेषां पादानामक्षरसङ्ख्यया जागतत्वमस्ति। एवं सत्येकाहिके जागते 'चर्षणीधृतम्'—इत्यस्मिन्नैन्द्रे सूक्ते 'यं' काममपेक्षितं स कामं 'अत्र' तेष्विन्द्र देवतात्ववालखिल्यागतेषु द्वादशाक्षरपादेषु 'उपाप्तः' लब्धो भवति। तस्माच्चर्षणीधृत-मित्येतदेकाहिकमैन्द्रं सूक्तमत्र परित्याज्यम्। 'आ वां राजानौ'इत्येतदैन्द्रावरुणं सूक्तम्, अत्र 'इयमिन्द्रं वरुणमिति'[1] परिधानीयाप्यैन्द्रावरुणी। तथा सत्येतस्य सूक्तस्यानुकूलतया तदेव शंसेत्। तस्मादन्यन्न शंसत्। अन्यशब्दोऽत्राध्याहर्तव्यः। अतएव सूत्रकार ऐन्द्रावरुणं सूक्तम् अङ्गीचकार 'आ वां राजानौ' इति नित्यमैकाहिकमिति'[2]। इत्थं शिल्पाख्यं शस्त्रं व्यवस्थाप्य तस्योपरि सूक्तान्तरमप्यङ्गीकृतम्॥

वालखिल्य ऋचाएँ इन्द्रदेवताक हैं। उनमें बारह अक्षरों के पाद हैं। इस प्रकार जगती छन्दस्क इन्द्रदेवताक ['चर्षणीधृतम्' आदि ऐकाहिक] सूक्त में जो कामना अपेक्षित है वह कामना यहाँ [इस इन्द्रदेवताक वालखिल्य के बारह अक्षरों के पादों में] प्राप्त हो जाती है, और इस प्रकार यह ['आ वां राजानौ' आदि] इन्द्र एवं वरुणदेवताक सूक्त है तथा उसकी परिधानीया ['इयमिन्द्रं वरुणम्' आदि] ऋचा भी इन्द्र एवं वरुण देवताक है। अत. ['चर्षणीधृतम्' आदि ऐकाहिक सूक्त को छोड़कर 'आ वां राजानौ' आदि अनुकूल सूक्त का शंसन उचित होने से] साथ साथ अन्य ऋचा का शंसन न करे।

इदानीं शस्त्रमेवोपजीव्य स्तोत्रे कंचिद्विचारमुद्भावयति—

**तदाहुर्यथा वाव स्तोत्रमेवं शस्त्रं, विहृता वालखिल्याः शस्यन्ते, विहृता-स्तोत्रा३ँ, अविहृता३ ? इति॥ इति।**

स्तोत्रशस्त्रयोः सादृश्यस्यापेक्षितत्वाच्छस्त्रगतासु वालखिल्यनामिकास्वृक्षु विहरणं दृष्ट्वा सामगानां स्तोत्रेऽपि संशयो जायते, किमिदं स्तोत्रं विहृतमाहोस्विद् अविहृतम्? इति। प्लुतिद्वयं विचारार्थम्॥

ब्रह्मवादियों का कथन है कि जैसा स्तोत्र हो वैसा ही शस्त्र होना चाहिए। [इसी सादृश्य की अपेक्षा के कारण शस्त्रगत वालखिल्य ऋचाओं में विहरण को देखकर *सामगायकों के स्तोत्र में भी यह संशय है कि*] वालखिल्य ऋचाओं के शंसन विहृत [क्रम विपर्यय] करके किए जाते हैं तो स्तोत्रों का शंसन विहृत करके [क्रम बदल कर] किया जाय अथवा अविहृत [ = बिना क्रम परिवर्तन] के ही शंसन हो ?

---

१. ऋ० ७.८४.५।        २ आश्व० श्रौ० ८.२.१९।

तस्मिन् विचारे निर्णयमाह—

**विहृतमिति ब्रूयादष्टाक्षरेण द्वादशाक्षरमिति ॥ इति ।**

'अग्ने त्वं नो अन्तम' इत्यादिषु द्विपदासु सामगाः स्तुवते[1]। तत्राद्यः पादः अष्टाक्षरः द्वितीयः पादो द्वादशाक्षरः। एवं तत्र छन्दो विहृतमित्युत्तरं ब्रूयात् ॥

[उत्तर] विहृत करके [शंसन करे] ऐसा उत्तर देना चाहिए। [सामगायकों के द्वारा स्तुत 'अग्ने त्वं नो अन्तम' आदि द्विपदाओं के प्रथम] आठ अक्षर के पाद से [द्वितीय] बारह अक्षर के पाद को [विहृत करके शंसन करे]।

अथ शस्त्रमुपजीव्य याज्याया चोद्यमुद्भावयति—

**तदाहुर्यथा वाव शस्त्रमेव याज्या, तिस्रो देवताः शस्यन्तेऽग्निरिन्द्रो वरुण इत्यथैन्द्रावरुण्या यजति, कथमग्निरनन्तरित इति ॥ इति ।**

'तत्' तत्र शस्त्रयाज्ययोश्चोद्यमाहुः। शस्त्रस्य तदीययाज्यायाश्च सादृश्यमपेक्षितम्। शस्त्रे च तिस्रो देवताः शस्यन्ते—अग्निरिन्द्रो वरुणश्चेति। तत्र स्तोत्रियानुरूपयोरग्निर्देवता बालखिल्यास्विन्द्रो देवता। 'आ वां राजानौ' इति सूक्ते[2] इन्द्रो वरुणश्च। एवं सति याज्यायामपि देवतात्रयमपेक्षितम्, तत्तु नास्ति। 'इन्द्रावरुणा मधुमत्तमस्य'[3] याज्यायामिन्द्रावरुणयोरुभयोरपि प्रतिपादितत्वेनाग्नेः परित्यक्तत्वात्। कथमत्राग्निः 'अनन्तरितः' परित्यक्तो भवेदिति चोद्यम् ॥

ब्रह्मवादियों का कथन है कि जैसा शस्त्र हो, वैसी ही याज्या भी होनी चाहिए और शस्त्र में तीन देवों के शंसन होते हैं—१ अग्नि, २ इन्द्र एवं ३ वरुण। तब इन्द्र और वरुणदेवताक याज्या से जब यजन करते हैं तो क्यों अग्नि को छोड़ देते हैं?

तस्योत्तरमाह—

**यो वा अग्निः स वरुणस्तदप्येतदृषिणोक्तं, त्वमग्ने वरुणो जायसे यदिति, तद्यदैन्द्रावरुण्या यजति तेनाग्निरनन्तरितोऽनन्तरितः ॥ २६ ॥ इति ।**

अग्निवरुणयोरत्यन्तभेदो नास्ति, परस्परमतिप्रियत्वेनैकत्वोपचारात्। तत् एतत् 'ऋषिणा' मन्त्रेणाप्युक्तम्। 'त्वमग्ने' इत्यादिको मन्त्रः। हे अग्ने त्वं वरुणो भूत्वा 'जायसे'

---

१ 'अग्ने त्वं न'—इति द्वे, 'स त्वा शोचिष्ठ'—इत्येका (ऋ० ५.२४.१-२,४), एवं मिलिता द्वैपदस्तृचः स्तोत्रियः (उ० गा० ४.१.२२)। एते द्वे सामनी अधीयते (ऊ० गा० ३.२.१८, १२.२.१५)। तयोराद्यं 'गूर्दं' नाम कथयन्ते, अपरं 'सत्रासाहीयं' स्वैशाद इति विज्ञेयम्। इह खलु गूर्देनैव ग्रहणम् 'गूर्दो भवति'—इत्यादि हि ताण्ड्यब्राह्मणम् (ता० ब्रा० १३.१२.४,५)।

२ ऋ० ७.८४। ३ ऋ० ५.१.१।

प्रादुर्भवसीति मन्त्रार्थः.[1] । तथा सत्यैन्द्रावरुण्या यजतीति यदेवास्ति, तेन'अग्नेर्वरुणे एवान्तर्भावात् अयमग्निः'अनन्तरित 'अपरित्यक्त । अभ्यासोऽध्यायसमाप्त्यर्थ ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकाया चतुर्थाध्याये (एकोनत्रिंशाध्याये) दशम. खण्ड ॥१०॥ (२६) [११३]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यादेशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'—नाम भाष्य ऐतरेयब्राह्मण भाष्ये षष्ठपञ्चिकाया (एकोनत्रिंशोऽध्याय) चतुर्थाध्याय ॥ ४ ॥

वस्तुत. [अग्नि और वरुण में परस्पर अत्यन्त प्रियत्व और एक साथ रहने के कारण अत्यन्त भेद न होने से] जो अग्नि है वह वरुण है । वह [एकत्व] ऋचि के द्वारा मन्त्र से भी कहा गया है—'त्वमग्ने' आदि, हे अग्नि ! तुम वरुण होकर प्रादुर्भूत हुए हो'—इस प्रकार जो इन्द्र एव वरुण देवताक याज्या से यजन करता है, उससे [अग्नि का वरुण में अन्तर्भाव होने के कारण] वह अग्नि परित्यक्त नहीं होता है ।

॥ इस प्रकार ऐतरेयब्राह्मण के षष्ठपञ्चिका के चतुर्थ (उन्तीसवें) अध्याय की डॉ० सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ ४ ॥

---

१ ऋ० संहितायाम् एतन्मन्त्रस्य व्याख्याने सायणाचार्येणैषा श्रुति. तत्रोद्धृता 'ते देवा बिभ्यतोऽग्निं प्राविशन्' (तै० स० ६ २ २ ६) । वस्तुतोऽग्ने. सर्वदेवताकत्वमनेकत्र विश्रुतम् । निरु० ७ । "अथापि ब्राह्मण भवति—'अग्नि सर्वा देवता' इति (ऐ० ब्रा २ १ ३, द्र० पूर्वम्. पृ० २०८) । तस्योत्तरा भूयसे निर्वचनाय,—'इन्द्र मित्रं वरुणमग्निमाहु' ' (ऋ० १ १६४ ४६) । इममेवाग्निं महान्त [च] आत्मान बहुधा मेधाविनो वदन्ति'—इत्यादि । पुन तत्परिशिष्टेऽपि—'अग्नि सर्वा देवता'—इति । तस्योत्तर भूयसे निर्वचनाय,—जातवेदसे सुनवाम'''' (ऋ० १ ९९ १) इति (निरु० १४ ३३) ।

# अथ पञ्चमोऽध्यायः

## प्रथमः खण्डः

—: ० :—

# [अथ त्रिंशोऽध्यायः

## प्रथमः खण्डः]

स्तोत्रियस्यानुरूपत्वं सपाताश्च प्रगाथकाः ।
निष्केवल्याहीनयुक्तिश्चोक्ता शिल्पं च वर्णितम् ॥ १ ॥

अथ पृष्ठ्यषडहस्य षष्ठेऽहनि शिल्पनामकानि शस्त्राणि विधत्ते—

शिल्पानि शंसन्ति ॥ इति ।

[शिल्प नामक शस्त्रों का विधान]—

vi.२७ [xxx.१] [पृष्ठ्य षडह के छठें दिन के तृतीयसवन में] शिल्प नामक शस्त्रों का शंसन करते हैं ।

शिल्पस्य[1] लौकिकनिदर्शनेन—

देवशिल्पान्येतेषां वै शिल्पानामनुकृतीह शिल्पमधिगम्यते,—हस्ती कंसो वासो हिरण्यमश्वतरीरथः शिल्पम् ॥ इति ।

शिल्पशब्दस्याऽऽश्चर्यकरं कर्म ब्रूते । तच्च शिल्पं द्विविधम्—देवशिल्पं मानुषशिल्पं चेति । नाभानेदिष्ठादीनि यानि शिल्पानि सन्ति, तानि देवानां प्रीतिहेतुत्वाद् देवशिल्पानीत्युच्यन्ते । 'एतेषाम्' एव 'देवशिल्पानामनुकृति' सदृशरूपम् 'इह' मनुष्यलोके शिल्पम् 'अधिगम्यते' प्रतीयते । हस्तीत्यादिना तदेवोदाहियते । लोके शिल्पिनः कर्मकारा मृदादिभिर्हस्तिसदृशमाकारं निर्मिमते । तथाऽन्यैः शिल्पिभिः 'कंसः' दर्पणादि निर्मीयते । अपरैर्वासो विविधं निर्मीयते । अपरैः सुवर्णमयं कटकमुकुटादि निर्मीयते । अपरैरश्वतरीरथो निर्मीयते । गर्दभ्यामश्वादुत्पन्नाऽश्वतरजातिः, तद्युक्तो रथोऽश्वतरीरथः[2] । तदेतदाश्चर्यमस्माभिरधिगम्यमानं मानुषशिल्पमेवं दृष्ट्वा नाभानेदिष्ठादि 'शिल्पम्' आश्चर्यकरमिति निश्चेतव्यम् ॥

---

१. बालशिल्पानामनुकृतानामेव पाठप्रकारैः शिल्पत्वमभिहितम् (द्र० ऐत० ब्रा० पृ० १०१४–१०२० पृ०) ।

२. द्र० ऐत० ब्रा० पूर्वभ०, (१७.३), ६०३ पृष्ठे ।

[शिल्प दो प्रकार के हैं—१. देवशिल्प और २ मानुषशिल्प। नाभानेदिष्ठ आदि जो शिल्प हैं वे देवों को अत्यन्त प्रिय होने से 'देवशिल्प' कहे जाते हैं]। इन्हीं देवशिल्पों की अनुकृति स्वरूप इस मनुष्य लोक में शिल्प [=कौशल] प्रतीत होते हैं—[लोक में कुम्हार मिट्टी आदि से] हाथी [के सदृश आकार को बनाता है तथा अन्य शिल्पी] दर्पण आदि, [दूसरे बुनकर आदि शिल्पी विविध प्रकार से] वस्त्र को, अन्य सुवर्ण का मुकुट आदि, और अन्य शिल्पी खच्चरी के रथ रूप शिल्प [=कला, कौशल] को प्रदर्शित करते हैं। [इसी प्रकार नाभानेदिष्ठ आदि शिल्प भी आश्चर्यकर हैं]।

वेदनं प्रशंसति—

शिल्प ह्यस्मिन्नधिगम्यते य एवं वेद ॥ इति।

अस्मिन् वेदितरि शिल्पं कौशलं नानाविधं प्राप्यते ॥

*जो इस प्रकार जानता है उसमें नाना प्रकार के कला-कौशल प्राप्त हो जाते हैं।*

सानुनासिकप्लुतेन शिल्पानां पूज्यत्वं दर्शयति—

यदेव शिल्पानीँ३ ॥ इति।

यस्मान्नाभानेदिष्ठादीनि शिल्पशब्दवाच्यानि, तस्मात् सुवर्णाभरणादिवत् पूज्यानीत्यर्थः ॥

इसलिए [सुवर्ण के आभूषण के समान] ही [नाभानेदिष्ठ आदि] शिल्प [=शस्त्र] पूज्य हैं।

*प्रकारान्तरेण शिल्पानि प्रशंसति—*

आत्मसंस्कृतिर्वाव शिल्पानि च्छन्दोमयं वा एतैर्यजमान आत्मानं संस्कुरुते ॥ इति।

वक्ष्यमाणानि नाभानेदिष्ठादिशिल्पानि 'आत्मसंस्कृति' जीवात्मनः संस्कारकारणानि। तस्मादेतैर्यजमानो जीवात्मानं 'छन्दोमयं' वेदमयो यथा भवति तथा संस्कुरुते ॥

[नाभानेदिष्ठ आदि वक्ष्यमाण] शिल्प जीवात्मा का संस्कार करने वाले हैं। इसलिए इन [शिल्पों] से यजमान जीवात्मा का छन्दोमय अर्थात् वेदमययुक्त संस्कार करता है।

होतुः शिल्पं विधत्ते—

नाभानेदिष्ठं शंसति ॥ इति।

नाभानेदिष्ठाख्येन महर्षिणा दृष्टम् 'इदमित्था' इत्यादिसूक्तं 'नाभानेदिष्ठं'[1] तद्धोता शंसेत्[2] ॥

[होता] नाभानेदिष्ठ नामक महर्षि द्वारा दृष्ट 'इदमित्था' आदि सूक्त का शंसन करता है।

---

१ ऋ० १०.६१.१-२७।

२ 'उद्धृत्य चोत्तमं सूक्तं त्रीणि'—इत्यादीनि आश्व० श्रौ० ८.१.१९-१४।

तत्प्रशंसति—

**रेतो वै नाभानेदिष्ठो रेतस्तत्सिञ्चति ॥ इति ।**

एतैः सूक्तैर्यजमानस्याऽऽत्मसंस्कारो वेदमयजन्मरूपो योऽभिहितः, स एव क्रमेणोपवर्ण्यते । तत्र नाभानेदिष्ठस्य सूक्तविशेषो यजमानोत्पादकरेतःस्थानीयः । 'तत्' तेन सूक्तेन होता रेतः सिञ्चति ॥

नाभानेदिष्ठाख्य सूक्त [यजमानोत्पादक] वीर्यस्थानीय है । [अतः होता] उस [सूक्त] से वीर्य का सिंचन करता है ।

तस्मिन् सूक्ते देवताविशेषवाचिनः पदस्य विस्पष्टप्रतीत्यभावाद् यदनिरुक्तत्वमस्ति, तत्प्रशंसति—

**तमनिरुक्तं शंसत्यनिरुक्तं वै रेतो गुहायोन्यां सिच्यते ॥ इति ।**

'तं' नाभानेदिष्ठ सूक्तविशेषम् 'अनिरुक्तम्' अस्पष्टदेवताकं शंसेत् । लोके तत. 'अनिरुक्तम्' अस्पष्टमेव रेतो 'गुहा' गोप्येऽन्त स्थाने योन्या सिच्यते ॥

उस अनिरुक्त [= देवता विशेष के वाचक पद से रहित] सूक्त का शंसन करता है, क्योंकि लोक में वीर्य भी बिना उल्लेख किए ही गुप्त योनि स्थान में सिंचित होता है ।

नाभानेदिष्ठाख्येन सिक्तरेतसा यजमानस्य समृद्धं मन्त्रलिङ्गदर्शनेन द्रढयति—

**स रेतो मिश्रो भवति; क्ष्मया रेतः संजग्मानो निषिञ्चदिति रेतःसमृद्धया एव ॥ इति ।**

'स.' यजमानो नाभानेदिष्ठेन रेतसा मिश्रितो भवति । तस्मिन्नर्थे 'क्ष्मया' इत्यादिरुक्तसूक्तगतः कश्चिद् ऋक्पादः प्रमाणम् । प्रजापतिर्यदा स्वां दुहितरं दिवमुषसं वा 'अधिष्कन्' अध्यस्कन्दत्, तदानीमेव 'क्ष्मया' भूम्या स्वदुहित्रा 'संजग्मानः' सङ्गं प्राप्तोऽस्मिँल्लोके रोहितं भूमामृश्यो भूत्वो 'रेतो निषिञ्चत्', रेतो निषिक्तवानिति[1] । अतः सूक्ते रेत एवलिङ्गमस्ति । तस्मादिदं सूक्तं रेतःसमृद्धयर्थमेव संपद्यते ॥

यह [यजमान इस प्रकार नाभानेदिष्ठ रूप] वीर्य से सम्मिश्रित होता है । [इस अर्थ के लिए] 'क्ष्मया' आदि [सातवीं ऋचा का द्वितीय पाद प्रमाण है] [प्रजापति ने जब अपनी दुहिता द्यौ या उषा के साथ समागम किया तो] अपनी दुहिता भूमि के साथ समागम करके [इस लोक में प्रजापति ने हरिण होकर रोहित (= ऋतुमती) हुई हरिणी रूप दुहिता में] वीर्य का सिंचन किया ।' अतः यह सूक्त वीर्य की समृद्धि के लिए ही सम्पादित है ।

---

१. द्र० इतः पूर्वम्, पृ० ४९८ (३.३.९) ।

तस्य नाभानेदिष्ठस्य सूक्तान्तरसाहित्यं विधत्ते—

तं सनाराशंसं शंसति, प्रजा वै नरो वाक्शंसः, प्रजास्वेव तद्वाचं दधाति, तस्मादिमाः प्रजा वदन्त्यो जायन्ते ॥ इति ।

'तं' नाभानेदिष्ठाख्यं सूक्तविशेषं नाराशंसाख्यसूक्तसहितं होता शंसेत् । 'नरा' अङ्गिरसो महर्षयः, मनुष्यजातावुत्पन्नत्वात् ते शस्यन्ते यस्मिन् 'ये यज्ञेन'—इति सूक्तविशेषे[1] सोऽयं 'नाराशंसः' तेन सहितम् 'इदमित्था रौद्रम्' इत्येतन्नाभानेदिष्ठं सूक्तं शंसेत्[2]। तत्र मनुष्यरूपा प्रजा एव नरशब्देनाभिधीयन्ते शंसशब्देन च वागुच्यते। तथा सति नराशंसशब्देन प्रजास्वेव वाचमवस्थापयति । तस्मात्कारणादिमा प्रजा वदन्त्य' वाग्व्यवहारं कुर्वन्त्य उत्पद्यन्ते ॥

[होता] उस [नाभानेदिष्ठ नामक सूक्त] को नाराशंस नामक सूक्त के सहित शंसन करता है। [मनुष्य रूप] प्रजा ही नर है और वाक् ही 'शंस' शब्द से कहा गया है। उस [नाराशंस शब्द] से यह प्रजाओं में वाणी को स्थापित करता है। इसीलिए ये प्रजा बोलती हुई उत्पन्न होती हैं।

अत्रेदं चिन्तनीयम्—किमिदं नाराशंससूक्तं नाभानेदिष्ठसूक्तस्य पुरस्तात्पठनीयम्? उतोपरिष्टात्, अथवा मध्ये ? इति ॥

तत्र प्रथमपक्षं दर्शयति—

तं हैके पुरस्ताच्छंसन्ति, पुरस्तादायतना वागिति वदन्तः ॥ इति ।

मनुष्यशरीरस्य पुरस्तात्' पूर्वभागे 'आयतनं' स्थानं यस्या वाचः, सेयं वाक् 'पुरस्तादायतना' इति एवमुपपत्तिं वदन्तः केचिद्याज्ञिका नाभानेदिष्ठस्य पुरस्तान्नाराशंसं शंसन्ति ॥

[प्रश्न है कि यह नाराशंस सूक्त नाभानेदिष्ठ सूक्त से पहले पढ़े जायें अथवा बाद में या मध्य में ? उत्तर—मनुष्य शरीर के] पूर्वभाग में वाणी का स्थान है'— ऐसा कहते हुए कुछ याज्ञिक उस [नाराशंस सूक्त] का [नाभानेदिष्ठ से] पहले शंसन करते हैं।

द्वितीयं पक्षं दर्शयति—

उपरिष्टादेक उपरिष्टादायतना वागिति वदन्तः ॥ इति ।

शरीरस्य पूर्वभागेऽपि 'उपरिष्टात्' 'मूर्धनि आयतनं' वक्त्रादिरूपं स्थानं यस्या वाचः, सेयम् 'उपरिष्टादायतना वाक्' इति युक्तिं वदन्तः केचिदन्ये याज्ञिका नाभानेदिष्ठस्योपरिष्टान्नाराशंसं शंसन्ति ॥

कुछ याज्ञिक 'वाणी का स्थान शरीर के पूर्वभाग में ऊपर मूर्धा में है'— यह कहते हुए [नाभानेदिष्ठ के] बाद में [नाराशंस का शंसन करते हैं।]

---

१. ऋ० १०.६२.१–११।　　२ आश्व० श्रौ० ८.१.२५।

तृतीयं पक्षं दर्शयति—

**मध्य एव शंसेन्मध्यायतना वा इयं वाक् ॥ इति ।**

शरीरस्याधोभागः पादस्थोऽपि वाच आयतनं न भवति । ऊर्ध्वभागो ललाटादिरपि वाचो नाऽऽयतनम् किन्त्वाधारादिर्वक्त्रान्तो मध्यभाग आयतनं यस्या वाचः, सा 'मध्यायतना' । तस्मान्नाभानेदिष्ठसूक्तस्य मध्य एव नाराशंससूक्तं शंसेत् । एवकारेण पूर्वोक्तौ पक्षौ व्यावर्त्येते ॥

[सिद्धान्त पक्ष यह है कि—शरीर के अधोभाग पाद आदि में जो वाणी का स्थान नहीं है और ऊपरी भाग ललाट आदि में भी नहीं है अपितु उसका स्थान मुख होने से ] यह वाणी मध्य स्थान[1] वाली है अतः [नाभानेदिष्ठ सूक्त के] मध्य में ही [नाराशंस सूक्त का] शंसन करे ।

मध्यभागेऽपि स्थानविशेषं दर्शयति—

**उपरिष्टान्नेदीयसीवोपरिष्टान्नेदीयसीव वा इयं वाक् ॥ इति ।**

उपरिष्टान्नाभानेदिष्ठसूक्तस्यावसानभागो 'नेदीयान्' अत्यन्तसमीपवर्ती यस्य सूक्तमध्यभागस्य, स मध्यभाग 'उपरिष्टान्नेदीयान्' । 'इव' शब्द एवकारार्थः । तत्रैव मध्यभागे नाराशंसं शंसेत् । 'इदमित्था'-इत्येतन्नाभानेदिष्ठसूक्तं सप्तविंशत्यृगात्मकं तस्यावसाने द्वे ऋचाववशिष्य पञ्चविंशत्या ऊर्ध्वमेव नाराशंसं सूक्तं शंसेत् । तथा चाश्वलायन आह—'इदमित्था रौद्रमिति प्रागुत्तमाया द्वे शिष्ट्वा नाराशंसं'[2] इति । वाचं 'उपरिष्टान्नेदीयसी'त्यत्र समीपवर्तित्वं शरीरमध्यभागस्य तात्वोष्ठादौ वर्तते । तथा पूर्वोत्तरस्थानं मुखम्[3] ॥

[मध्यभाग में भी स्थानविशेष में ही शंसन करे । नाभानेदिष्ठसूक्त के] अवसान के अत्यन्त समीप में [अर्थात् सत्ताइस ऋचा वाले इस सूक्त की दो ऋचाओं के पहले पचीसवीं ऋचा के बाद नाराशंस का] शंसन करे, क्योंकि वाणी भी [शरीर के मध्यभाग में भी ऊपर के तालु ओष्ठ आदि में रहने से शरीर के] ऊपरी भाग के अत्यन्त समीपवर्ती ही है ।

---

१. इदमित्थेत्यस्य च ऋद्धि (? दशे) नाभानेदिष्ठ हि वाक् ।
शिक्षाविदोऽप्याहुः —

> आकाशवायुप्रभवः शरीरात् समुच्चरन् वक्त्रमुपैति नादः ।
> स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः ॥—इति षड्गुरुशिष्यः ।

२ आश्व० श्रौ० ८ । २१, २२ ।

३ नाभानेदिष्ठस्य वर्णनं द्र० पूर्वम्, ७१८–७८८ पृष्ठ द्रष्टव्यम् ।

होतु शसनमुपसंहरन् मैत्रावरुणशस्त्रं प्रस्तौति—

स होता रेतोभूतं सिक्त्वा मैत्रावरुणाय संप्रयच्छत्येतस्य त्वं प्राणान् कल्पयेति ॥ २७ ॥ इति ।

उक्तशंसनेन होता 'तं' यजमानं 'रेतोभूतं' रेत प्राप्तो यथा भवति तथा सिक्त्वा तस्मै मैत्रावरुणाय संप्रयच्छति । तदा केनाभिप्रायेणेति ? सोऽभिधीयते—हे मैत्रावरुण ! त्वम् 'एतस्य' यजमानस्य रेतोरूपस्य प्राणान् संपादय इति' अनेनाभिप्रायेण यजमानं तस्मै प्रयच्छति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकायां पञ्चमाध्याये (त्रिंशाध्याये) प्रथमः खण्डः ॥ १ ॥ (२७) [११४]

[उक्त शंसन के द्वारा] होता उस [यजमान] को वीर्य रूप से सिंचित करके उस मैत्रावरुण को इस अभिप्राय से दे देता है कि ['हे मैत्रावरुण] तुम इस [यजमान] के वीर्य रूप प्राणों का संपादन करो ।'

॥ इस प्रकार तीसवें (पाँचवें) अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

होतु शिल्पशस्त्रमुक्त्वा मैत्रावरुणस्य शिल्पशस्त्रं विधत्ते—

वालखिल्याः शंसति, प्राणा वै वालखिल्याः प्राणानेवास्य तत्कल्पयति ॥ इति ।

वालखिल्याख्यैर्मुनिभिर्दृष्टा 'अभि प्र व सुराधसम्' इत्यादिकेऽष्टके[1] स्थिता ऋचो वालखिल्याभिधाः । ता एव वालखिल्याख्ये ग्रन्थे समाम्नाताः[2] । ताः सर्वा मैत्रावरुणः शंसेत् । वालखिल्यानां शिल्पानां प्राणरूपत्वेन तच्छंसने सति 'अस्य' रेतोरूपस्य यजमानस्य प्राणानेव संपादयति ॥

[मैत्रावरुण के शिल्प शस्त्र]

VI.२८ [XXX २] वालखिल्य नामक मुनियों द्वारा दृष्ट ऋचाओं का [मैत्रावरुण] शंसन करता है । वालखिल्य ऋचाएँ प्राण हैं । [अतः प्राणरूप वालखिल्य नामक शिल्पों के] उस [शंसन] में इस [वीर्य रूप यजमान] के प्राणों को ही संपादित करता है ।

---

१ ऋ० ६ अष्टक ३ अ० ।

२ अष्टाष्टक विभक्तायां बाष्कलसंहितायां वालखिल्यानां षष्ठाष्टकान्तर्गतत्वेऽपि सायणव्याख्यातायां दाशतय्यां शाकलसंहितायां तेषामनन्तर्भावाद् ग्रन्थान्तरस्थत्वम् ।

यह [मैत्रावरुण] प्रथम सूक्त में पाद-पाद के अवसान पर विहरण करता है [अर्थात् आठ वालखिल्य सूक्तों में सातवाँ आठवाँ छोड़कर शेष छः के तीन युग्म हैं। उनमें से प्रथमयुग्म के प्रथम सूक्तगत पाद को द्वितीय सूक्तगत पाद से मिलाता है]। द्वितीय सूक्त में आधी ऋचा के अवसान पर विहरण करता है [अर्थात् एक सूक्त गत अर्धर्च को द्वितीय सूक्तगत अर्धर्च से योजित करता है] तृतीय सूक्त में ऋचा के अवसान पर विहरण करता है [अर्थात् एक सूक्तगत ऋचा को द्वितीय सूक्तगत ऋचा से योजित करता है][1]। [पूर्व अध्याय में भी विहरण अभिहित है और यहाँ भी। विशेषता यह है कि वहाँ (पूर्व अध्याय में) छः सूक्तों में पादविहार, अर्धर्च विहार और ऋग्विहार इस प्रकार तीन आवृत्ति अभिहित है। यहाँ पर प्रथम युग्म में पाद विहार, द्वितीय युग्म में अर्धर्चविहार और तृतीययुग्म में ऋग्विहार कहा गया है। इसमें भी एक बार पाद का विहरण करे; किन्तु आवृत्ति न करे। इस प्रकार वाणी के साथ भाव और अभाव की भी विशेषता कही गई है। इसलिए दोनों ही स्थानों पर नाम का भी भेद किया गया है। पहले भेद का नाम 'महावालभिद्विहार' है और इसका नाम 'हौण्डिन-विहार' है, अर्थात् हुण्डिन नामक ऋषि ने दो विहार का वर्णन किया और महावालभिद् नामक महर्षि ने एक विहार का]।

अत्रोक्तहौण्डिनविहारौ प्रशंसति—

**स यत्प्रथमे सूक्ते विहरति, प्राणं च तद्वाचं च विहरति, यद्द्वितीये चक्षुश्च तन्मनश्च विहरति, यत्तृतीये श्रोत्रं च तदात्मानं च विहरति ॥ इति।**

पूर्ववद् व्याख्येयम्[2]। योऽयमत्रोक्तो हौण्डिनविहारस्तस्यापि मतभेदेन द्वौ प्रकारौ ॥

यह [मैत्रावरुण] जो प्रथम सूक्त में विहरण करता है उससे वह प्राण और वाणी को मिश्रित करता है। जो द्वितीय सूक्त में विहरण करता है उससे वह चक्षु को मन से मिलाता है। जो तृतीय सूक्त में विहरण करता है उससे वह श्रोत्र और जीवात्मा को मिलाता है।

तत्र प्रथमप्रकारमुपन्यस्य, तत्र किंचिदपरितोषं दर्शयति—

**ते हैके सह बृहत्यौ सह सतोबृहत्यौ विहरन्ति, तदुपाप्तो विहारे कामो नेत्तु प्रगाथाः कल्पन्ते ॥ इति।**

याः (षट्त्रिंशदक्षरा बृहती चत्वारिंशदक्षरा सतोबृहती) वालखिल्यसूक्तेषु प्रथमा बृहती, द्वितीया सतोबृहती, तृतीया बृहती, चतुर्थी सतोबृहतीत्येव मणिप्रवालन्यायेन

१. षण्णामपि सूक्तानां पच्छोऽर्धर्चशो ऋक्श इति त्रिविधो विहारः पूर्वाध्याये प्रपञ्चितः। इह तु द्वयोर्द्वयोः सूक्तयोरेकैको विहार इति पूर्वस्माद् विशेषः।

२ द्र० इत. पूर्वम्, १०१६ पृ०।

अतिमर्श करके ही [अर्थात् प्रथम सूक्त की प्रथम ऋचा के प्रथम पाद को पढ़कर उसके बाद के पादों का अतिलङ्घन करके द्वितीय सूक्त के द्वितीय ऋचा के द्वितीय पाद से योजित करके ही] विहरण करे। इस प्रकार यहाँ [बृहती के पाद से सतोबृहती के पाद का मिश्रण रूप विहार होने से] प्रगाथ सम्पादित होते हैं। जो वालखिल्य ऋचाएँ आम्नात हैं वे प्रगाथ रूप में ही हैं। [अतः विहरण से ही प्रगाथ रूप होना युक्ति युक्त है] इसलिए अतिमर्श करके ही विहरण करना चाहिए, क्योंकि जो अतिमर्श करके विहरण है वह अत्यन्त पूज्य है।

अथ च्छन्दोद्वय सद्वीयमतिमर्शनं च प्रशंसति—

आत्मा वै बृहती, प्राणाः सतोबृहती, स बृहतीमशंसीत्, स आत्माऽस्य सतोबृहतीं, ते प्राणा अथ बृहतीमथ सतोबृहतीं तदात्मानं प्राणैः परिबृहन्नेति, तस्मादतिमर्शमेव विहरेत् ॥ इति।

पूर्वोदाहृत यदेवेति वाक्यमत्र योजनीयम्। अतिमृश्यातिमृश्य पूज्यं विहरणं यदस्ति, तस्मिन् विहरणे या बृहती 'आत्मा वै' मध्यदेह एव। या तु सतोबृहती, ता प्राणाः। तथा सति 'स' मैत्रावरुणो यदादौ बृहतीम् 'अशंसीत्' शंसनं कृतवान्। 'स' बृहतीशंसनरूप आत्मा' मध्यदेह सम्पद्यते। 'अथ' अनन्तरं सतोबृहतीमशंसीत्। 'ते' सतोबृहतीरूपा प्राणा सम्पद्यन्ते। 'अथ' पुनरपि बृहतीं, तत ऊर्ध्वं सतोबृहतीं बहुकृत्वः शंसति। 'तत्' तेन व्यतिषक्तशंसनेन आत्मानं' मध्यदेहं 'प्राणैः' वायुविशेषैः परिबृहन्' परितो वर्धयन् 'एति' गच्छति ॥

[अतिमर्श करके जो पूज्य विहरण है उसमें यह] बृहती आत्मा [= मध्यदेह] ही है, और जो सतोबृहती है वह प्राण है। इस प्रकार उस [मैत्रावरुण] ने जो पहले बृहती का शंसन किया उससे बृहतीशंसनरूप आत्मा अर्थात् मध्यदेह सम्पादित होता है। इसके बाद सतोबृहती का जो [उसने शंसन किया] उससे वे [सतोबृहती रूप] प्राण सम्पादित होते हैं। पुनः बृहती, और उसके बाद सतोबृहती का जो बारम्बार शंसन करता है उस [परिवर्तित शंसन] से आत्मा [= मध्यदेह] को प्राण वायु के द्वारा चारों ओर से वर्धित करते हुए जाता है। इसलिए [मैत्रावरुण को] अतिमर्श [= प्रथम सूक्त के पाद का द्वितीय सूक्त के पाद से योजन] करके ही विहरण करना चाहिए।

पुनरपि व्यतिषङ्गमनूद्य प्रकारान्तरेण प्रशंसति—

यद्वेवातिमर्शम्। आत्मा वै बृहती, पशवः सतोबृहती स बृहतीमशंसीत्, स आत्माऽस्य सतोबृहती ते पशवोऽस्य बृहतीमथ सतोबृहतीं, तदात्मानं पशुभिः परिबृहन्नेति, तस्मादतिमर्शमेव विहरेत् ॥ इति।

उ, अपि पुनरपि यदेवातिमृश्यातिमृश्य पूज्यं शंसनमस्ति, तत्र बृहती यजमानः, सतोबृहती पशुरूपा। अन्यत् सर्वं पूर्ववद् व्याख्येयम् ॥

फिर अतिमर्श करके जो पूर्व विहरण है उसमें यह बृहती आत्मा [= मध्यदेह] ही है, और जो सतोबृहती है वह पशु हैं । इस प्रकार उस [मैत्रावरुण] ने जो पहले बृहती का शंसन किया; उससे बृहतीशंसनरूप आत्मा अर्थात् मध्यदेह सम्पादित होता है । इसके बाद सतोबृहती का जो [उसने शंसन किया] उससे वे [सतोबृहती रूप] पशु सम्पादित होते हैं । पुनः बृहती और उसके बाद सतोबृहती का जो बारम्बार शंसन करता है उस [व्यतिषिक्त शंसन] से आत्मा अर्थात् मध्यदेह को पशुओं द्वारा चारों ओर से परिवेष्टित करते हुए जाता है । इसलिए [मैत्रावरुण को] अतिमर्श [=प्रथम सूक्त के पाद का द्वितीय सूक्त के पाद से संयोजन] करके ही विहरण करना चाहिए ।

इत्थं षण्णां सूक्तानां विहरणमुक्त्वा सप्तमाष्टमयोर्विपर्यासं विधत्ते —

द्व्येवोत्तमे सूक्ते पर्यस्यति, स एव तयोर्विहारः ॥ इति ।

अष्टमं सूक्तमादौ पठित्वा पश्चात् सप्तमं सूक्तं पठेदित्येवमन्तिमं सूक्तं विपर्यस्येदेव । न तु पादार्धादि व्यतिषङ्गं कुर्यात् । 'स' विपर्यास एव तयोर्विहार इत्युच्यते ॥

अन्तिम दो सूक्तों का जो क्रम बदल कर शंसन करता है [अर्थात् सातवाँ सूक्त न पढ़कर पहले आठवाँ फिर सातवाँ जो पढ़ता है] यही उन दोनों का विहार [क्रम विपर्यय] है [अर्थात् पादार्थ का योजन करके इन्हें न पढ़े] ।

मैत्रावरुणस्य यजमानदेहप्रदानं ब्राह्मणाच्छंसिनः प्रति प्रस्तौति —

तस्य मैत्रावरुणः प्राणान् कल्पयित्वा ब्राह्मणाच्छंसिने संप्रयच्छत्येतं त्वं प्रजनयेति ॥ २८ ॥ इति ।

'तस्य' होतृशस्त्रेण निष्पन्नस्य देवोक्तस्य यजमानदेहस्य 'मैत्रावरुणः' स्वकीयेन शस्त्रेण प्राणवायून् सम्पाद्य, तं प्राणविशिष्टं यजमानदेहं ब्राह्मणाच्छंसिने सम्प्रयच्छति । हे ब्राह्मणाच्छंसिन् ! 'एतं' यजमानदेहं त्वं 'प्रजनय' उत्पादयेति तस्याभिप्रायः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ-
पञ्चिकायां पञ्चमाध्याये (त्रिंशाध्याये) द्वितीयः खण्डः ॥ २ ॥ (२८) [११५]

उस [होतृशस्त्र से निष्पन्न देवोक्त यजमान-देह] का मैत्रावरुण [अपने शस्त्र से] प्राण वायु का सम्पादन करके उस [प्राणविशिष्ट यजमान देह को यह ब्राह्मणाच्छंसी को इस अभिप्राय से देता है कि 'हे ब्राह्मणाच्छंसी ! इस [यजमान देह] को तुम उत्पन्न करो ।'

॥ इस प्रकार तीसवें (पाँचवें) अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

ब्राह्मणाच्छंसिनः शस्त्रं विधत्ते—

**सुकीर्तिं शंसति, देवयोनिर्वै सुकीर्तिस्तद् यज्ञाद्देवयोन्यै यजमानं प्रजनयति ॥ इति ।**

'अप प्राचः' इत्यादिसूक्तं[1] सुकीर्तिशब्देनोच्यते। तत्सूक्तं ब्राह्मणाच्छंसी शंसेत्[2]। सुकीर्तेर्देवप्रियत्वात् देवयोनित्वम्। तस्य देवयोनिरूपात् सुकीर्त्यात्मकत्वात् यज्ञावयवाद् यजमानं ब्राह्मणाच्छंसी 'प्रजनयति' उत्पादयति ॥

[ब्राह्मणाच्छंसी के नित्य शस्त्र]—

v। २९ [xxx ३] [ब्राह्मणाच्छंसी 'अप प्राच' आदि] सुकीर्ति-सूक्त का शंसन करता है। सुकीर्ति सूक्त देवों का योनिस्थान है। उस देवयोनि रूप [सुकीर्त्यात्मक] यज्ञ [के अवयव] से वह [ब्राह्मणाच्छंसी] यजमान को उत्पन्न करता है।

तस्यैव सूक्तान्तरं विधत्ते—

**वृषाकपिं शंसत्यात्मा वै वृषाकपिरात्मानमेवास्य तत्कल्पयति ॥ इति ।**

'विहि सोतोरसृक्षत' इत्यादिकं सूक्तं[3] वृषाकपिना दृष्टत्वात् तच्छब्देनाभिधीयते[4]। तस्य वृषाकपिसूक्तस्य जीवात्मस्थानीयत्वात्। तेन 'अस्य' यजमानदेहस्य जीवात्मानमेव संपादयति ॥

वह वृषाकपि के सूक्त का शंसन करता है। वृषाकपि सूक्त आत्मा स्थानीय है। उस [सूक्त के शंसन] से वह इस [यजमान-देह] के जीवात्मा को ही सम्पादित करता है।

तस्य सूक्तस्य मध्ये न्यूङ्खं विधत्ते—

***तं न्यूङ्खयत्यन्नं वै न्यूङ्खस्तदस्मै जातायान्नाद्यं प्रतिदधाति, यथा कुमाराय स्तनम् ॥ इति ।***

'तं' वृषाकपिं 'न्यूङ्खयति' न्यूङ्खयुक्तं कुर्यात्। ह्रस्वैस्त्रयोदशभिरोकारैर्युक्ता द्वावस्त्रय ओकारा मिलित्वा न्यूङ्खा भवन्ति। एतच्च पूर्वमेवोक्तम्[5]। न्यूङ्खस्यान्नसाधनत्वेनान्नरूपत्वात् न्यूङ्खेन 'अस्मै' यजमानायोत्पन्नाय अन्नाद्यं समर्पयति यथोत्पन्नाय कुमाराय माता स्तनं प्रयच्छति तद्वत् ।

---

१ ऋ० १०।१३१।१–७।

२ सुकीर्तिं ब्राह्मणाच्छंसी'—इति आश्व० श्रौ० ८।४।१।

३ ऋ० १०।८६।१–२३।    ४ 'वृषाकपिञ्च पङ्क्तिशंसम्—आश्व० श्रौ० ८।४।१।

५ द्र० इतः पूर्वम्, ७२७–७३१ पृ०।

उस [वृषाकपि सूक्त] को न्यूङ्ख [ओकार का विशेष उच्चारण] युक्त करता है। न्यूङ्ख अन्नस्थानीय है। इस प्रकार वह उस [न्यूङ्ख] से इस उत्पन्न हुए यजमान के प्रति खाद्यान्न समर्पित करता है जैसे माँ उत्पन्न हुए बच्चे को स्तन पान कराती है।

सूक्तगतं छन्दः प्रशंसति—

स पाङ्क्तो भवति; पाङ्क्तोऽयं पुरुषः,—पञ्चधा विहितो लोमानि त्वङ्मांसमस्थि मज्जा; स यावानेव पुरुषस्तावन्तं यजमानं संस्करोति ॥ इति।

'स' वृषाकपिनामकः सूक्तविशेषः पङ्क्तिच्छन्दोयुक्तो भवति। पुरुषोऽपि लोमादिभिः पञ्चधा युक्तत्वात् पञ्चसंख्यायोगेन पाङ्क्तः। तथा सति 'सः' पुरुषः स्वकीयैरवयवैर्यावानेव भवति, तावन्तं सर्वमपि यजमानमनेन संस्करोति ॥

वह [वृषाकपि सूक्त] पंक्ति छन्दस्क है। यह पुरुष भी लोम, चर्म, मांस, अस्थि और मज्जा-इनसे पाँच प्रकार से युक्त होने से [पञ्चसंख्या के योग से] पाङ्क्त है। इस प्रकार यह पुरुष अपने अवयवों से जितना [समृद्ध] होता है, उतना ही इन सभी से यजमान को भी संस्कृत करता है।

ब्राह्मणाच्छंसिन शस्त्रमुपसंहरन्नच्छावाकस्य शस्त्रं प्रस्तौति—

तं ब्राह्मणाच्छंसी जनयित्वाऽच्छावाकाय संप्रयच्छत्येतस्य त्वं प्रतिष्ठां कल्पयेति ॥ २९ ॥ इति।

'तं' यजमानं ब्राह्मणाच्छंसी स्वकीयेन शस्त्रेणोत्पाद्य प्रतिष्ठासंपादनार्थमच्छावाकाय संप्रयच्छति। हेऽच्छावाक ! 'एतस्य' यजमानस्य त्वं प्रतिष्ठां संपादयेति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकायां पञ्चमाध्याये (त्रिंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (२९) [११६]

उस [यजमान] को ब्राह्मणाच्छंसी [अपने शस्त्र से] उत्पन्न करके [प्रतिष्ठा सम्पादन के लिए] अच्छावाक को इस अभिप्राय से दे देता है कि 'हे अच्छावाक ? इस [यजमान] की तुम प्रतिष्ठा का संपादन करो।'

॥ इस प्रकार तीसवें (पाँचवें) अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथाच्छावाकस्य शस्त्रं विधत्ते—

एवयामरुतं शंसति, अप्रतिष्ठा वा एवयामरुदप्रतिष्ठामेवास्य तत्कल्पयति ॥ इति।

'प्र वो महे मतयः' इत्यादिकं सूक्तम्[1] 'एवयामरुत्' शब्देनोच्यते। तत्सूक्तमच्छा-

---

1. ऋ० ५.८७।१-९।

वाकः शंसेत्। तच्च 'प्रतिष्ठा वै' प्रतिष्ठारूपत्वात्। तेन यजमानस्य प्रतिष्ठामेव संपादयति[1] ॥

[अच्छावाक के शिल्प शस्त्र]—

v। ३० [xxx ४] [अच्छावाक 'प्र वो महे' आदि] एवयामरुत्[2] नामक सूक्त का शंसन करता है। एवयामरुत् सूक्त प्रतिष्ठा रूप है। इस प्रकार उस [सूक्त के शंसन] से वह इस [यजमान] की प्रतिष्ठा का ही सम्पादन करता है।

तस्मिन् सूक्ते न्यूङ्खं विधत्ते—

तं न्यूङ्खयत्यन्नं वै न्यूङ्खोऽन्नाद्यमेवास्मिंस्तद्दधाति ॥ इति।

पूर्ववद् व्याख्येयम् ॥

उस [एवयामरुत् सूक्त] को वह न्यूङ्ख युक्त करता है। न्यूङ्ख अन्नस्थानीय है। इस प्रकार उस [न्यूङ्ख] से वह इस [उत्पन्न हुए यजमान में लाद्यान्न को ही सपादित करता है।

सूक्तगत छन्द प्रशंसति—

स जागतो वाऽतिजागतो वा, सर्वं वा इदं जागतं वाऽतिजागतं वा ॥ इति।

सूक्तविशेषो द्वादशाक्षरपादत्वाज्जगतीछन्दस्को भवति। चतुर्थपादे षोडशाक्षरत्वाद तिछन्दस्त्वादतिजगतीछन्दस्कोऽपि भवति। सर्वम्' अप्येतत् प्राणिजात जगच्छब्दाभिध यत्वाज्जागतमतिजागत वा भवति। अत सर्वरूपत्वेन च्छन्दोद्वय प्रशस्तम् ॥

वह [सूक्त] जगती छन्दस्क अथवा अतिजगतीछन्दस्क है। यह सब कुछ [प्राणिजात जगत् शब्द से उक्त होने से] जगती अथवा अतिजगती से सम्बन्धित है।

देवताद्वारेण सूक्त प्रशंसति

स उ मारुत आपो वै मरुत आपोऽन्नमभिपूर्वमेवास्मिंस्तदन्नाद्य दधाति ॥ इति।

'स उ' सोऽपि सूक्तविशेषो 'मारुत' मरुद्देवताक। मरुतश्च वृष्टिद्वारेण 'आपो वै' आप एव। अपा चान्नहेतुत्वादन्नत्वम्। 'अभिपूर्वमेव' उक्तानुपूर्व्येव वायुसंपादितजलद्वारा यजमानेऽन्नाद्य स्थापयति ॥

वह [सूक्त] मरुद्देवताक है। [मेघों से वृष्टि होने के कारण] जल ही मरुत् हैं। [उससे अन्न पैदा होने के कारण] जल अन्न हैं। इस प्रकार उक्त आनुपूर्वी क्रम से ही [वायु सपादित बल के द्वारा] इस [उत्पन्न यजमान] में लाद्यान्न स्थापित करता है।

---

१ 'एवयामरुदुक्तो वृषाकपिना इति आश्व० श्रौ० ८ ४ २।

२ एवान् कामान् प्रदातु य याता वै मरुत पुरा।
स एवयामरुद्दृषिस्तद्दृष्ट चैवयामरुत् ॥—इति षड्गुरुशिष्य।

होत्रादिभिः प्रयोज्यमानानामुक्तानां चतुर्णां शिल्पानामेकस्मिन्नहनि प्रयोगमाह[1] विधत्ते—

**तान्येतानि सहचराणीत्याचक्षते, नाभानेदिष्टं वालखिल्या वृषाकपिमेवया-मरुतं, तानि सह वा शंसेत्, सह वा न शंसेत् ॥ इति ।**

नाभानेदिष्टादीनि चत्वारि शिल्पानि मान्युक्तानि, तानि 'सहचराणि' एकस्मिन्नहनि सह वर्तन्त इति' एवमभिज्ञा आचक्षते'। तस्माद्यस्मिन्नहनि शंसनीयानि, तस्मिन्सर्वाणि शंसेत्। यस्मिन्न शंसनीयानि, तस्मिन्सर्वाण्यपि परित्यजेत् ॥

ये [होता आदि के द्वारा प्रयुक्त होने वाले] ये १. नाभानेदिष्ठ, २. वालखिल्य, ३. वृषाकपि और ४ एवयामरुत् नामक चार [शिल्प शस्त्र प्रयोग काल में] साथ ही रहते हैं ऐसा अभिज्ञजन कहते हैं। [इसलिए इस एक अहः में] उन [चारों] का शंसन साथ में करना चाहिए और [जब शंसन न करना हो तो] उन [चारों] का ही शंसन न करे।

विपक्षे बाधकमुक्त्वा स्वपक्षमुपसंहरति—

**यदेतानि नाना शंसेद् यथा पुरुषं वा रेतो वा विच्छिन्द्यात् तादृक्तत्, तस्मादेतानि सह वा शंसेत्, सह वा न शंसेत् ॥ इति ।**

यदेकस्मिन्नहनि एतानि' चत्वारि शिल्पानि 'नाना शंसेत्' नाना विच्छिद्य विच्छिद्यान्यस्मिन्नहन्यन्यत् शंसेत्। तदानीं लोके यथा सम्पूर्णगर्भादुत्पन्नं 'पुरुषं वा' तत्कारणं 'रेतो वा' विच्छिन्द्याद्' वियोजयेत्, तादृशं सम्पद्येत। 'तस्मात्' कारणादेतेषां चतुर्णां साहित्यमेव, न तु परस्परवियोगः कर्तव्यः ॥

यदि एक ही दिन इन चारों शिल्पों का विच्छेद करके अलग-अलग वह शंसन करता है, तो यह उसी प्रकार होता है, जैसे [एक सम्पूर्ण गर्भ से उत्पन्न] पुरुष को [उसके कारण रूप] वीर्य से अलग करे। इसलिए इन चारों का एक साथ शंसन करे और [जब शंसन न करना हो तो] उन चारों का ही शंसन न करे [अर्थात् उनका परस्पर वियोग कभी न करे]।

अथ शिल्पेष्वेव कञ्चिद्विशेषं पक्षान्तरमाह—

**तद्ध स्माह बुलिल आश्वतर आश्विर्वैश्वजितो होता सन्नीक्षाञ्चक्र एषां वा एषां शिल्पानां विश्वजिति सांवत्सरिके द्वे मध्यन्दिनमभिप्रत्येतोऽहन्ताहमित्थ-मेवयामरुतं शंसयानीति; तद्ध तथा शंसयाञ्चकार ॥ इति ।**

---

1. द्र० इ०, पूर्वेद, पृ० ७८४ (५.२.१०)।

'ह'शब्द ऐतिह्यद्योतनार्थः[1]। 'स' प्रसिद्धो बुलिलनामको महर्षि 'आश्वतर' अश्वतरनाम्नो महर्षे समुत्पन्न। 'आश्वि' अश्वनाम्नो महर्षे पुत्र[2] कदाचित् 'वैश्वजित' विश्वजिद् यागसम्बन्धी होता सन्, स्वमनसि 'ईशांचक्रे विचारितवान्। सावत्सरिके' गवामयनाख्यसवत्सरसत्रसम्बन्धिनि 'विश्वजिति' विषुवतोऽह्न ऊर्ध्वमुत्तरपक्षगते विश्वजिन्नामके[3] चतुर्थेऽहनि 'एषा' होतृमैत्रावरुणादीनां सम्बन्धीनि शस्त्राणि शल्पनामकानि चत्वारि सन्ति। 'एषा शिल्पानां' मध्ये द्वे शिल्पे मैत्रावरुणब्राह्मणाच्छसिनो सम्बन्धिनी मध्यदिनसवनम् 'अभि'लक्ष्य 'प्रत्यतो' प्रयेतु, कुशलोऽस्मीति शेष। हन्त हृष्टोऽहमेवया मरुत शसयानीत्येष महर्षिर्विचारितवान्। अयमर्थ —तृतीयसवनगतान्येतानि शिल्पशस्त्राणि सायन्येष्वहःसु समवन्ति। विश्वजिति स्वग्निष्टोमसस्थत्वादग्निष्टोमे तृतीयसवने होत्रकाणा शस्त्राभावान्मैत्रावरुणब्राह्मणाच्छसिनो सम्बन्धि शस्त्रद्वय माध्यदिने सवने समानेतु तावदच्छावाकमस्मिन् मध्यदिने एवयामरुत शसयानि। तथा सति तत पूर्वमाविनोर्मैत्रावरुणब्राह्मणाच्छसिशस्त्रयोरर्थात् माध्यदिने सवने समाकर्षण भवति। 'इति' इत्थ बुलिल स्वमनसि विचार्य तद्व तस्मिन्नेव माध्यदिने सवने तथा' स्वविचारितक्रमेण एवयामरुत' सूक्तमच्छावाक 'शसयाचकार' बलादाशाप्य शसन कारितवान्॥

किसी समय अश्व के पुत्र अश्वतर के लड़के उन बुलिल ने विश्वजित् यज्ञ में होता बनने के लिए अपने मन में विचार किया। '[गवामयन नामक] सवत्सर सत्र सम्बन्धी विषुवत् अह के बाद उत्तर पक्ष में] विश्वजित् नामक [चतुर्थ] दिन में इन [होता एवं मैत्रावरुण आदि होत्रकों] से सम्बन्धित इन [शिल्प नामक चार शस्त्रों] में से दो [मैत्रावरुण और ब्राह्मणाच्छसी सम्बन्धी शिल्पों] का मध्यदिनसवन में शसन होना चाहिए। अत, आओ, हम इस प्रकार एवयामरुत् का शसन करें'—ऐसा महर्षि ने सोचा [अर्थात् ये तृतीयसवनगत शिल्प उन उन दिनों में शसित होते हैं। विश्वजित् में, अग्निष्टोम सस्था होने से, अग्निष्टोम के तृतीयसवन में होत्रकों के शस्त्राभाव के कारण मैत्रावरुण एवं ब्राह्मणाच्छसी सम्बन्धी दो शस्त्र को मध्यदिनसवन में लाने के लिए तब अच्छावाक से इस मध्यदिनसवन में एवयामरुत् का शंसन करावे—यह व्यवस्था है अर्थात्, बाद में आने वाले, मैत्रावरुण एवं ब्राह्मणाच्छसी सम्बन्धी दो शस्त्रों का वस्तुत मध्यन्दिनसवन

---

1 'इतिह—इति निपातसमुदाय, ततो श्चेरूपम् ऐतिह्यम् (पा० सू० ५ ४ २३)। 'स्मृति प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्—इति त० आ० १ २ १। ऐतिह्यम्—इतिहासपुराणमहाभारतब्राह्मणादिकम्'—इति तद्भाष्ये सायण।

2 बुडिल इति वाजसनेयिच्छान्दोग्यब्राह्मणयो पाठ (शत० ब्रा० ४ ६ १ ९ १० ६ १ १, १४ ८ १५ ११ छा० उप० ५ ११ १।

3 विश्वजित्परिचय पूर्वत्र विस्पष्ट (पृ० ९८२)।

में समावर्तन होता है] इस प्रकार बुलिल ने अपने मन में विचार करके उसी [माध्यन्दिनसवन] में वैसा ही [अपने विचार के अनुसार] एवयामरुत् सूक्त का अच्छावाक से [जबरदस्ती] शंसन कराया ।

तत्र दोषं गौश्लमुखेनोद्भावयति—

**तद्ध तथा शस्यमाने गौश्ल आजगाम; स होवाच,—होतः कथा ते शस्त्रं विचक्रं प्लवत इति ? ॥ इति ।**

'तद्ध' तस्मिन्नेव माध्यंदिने सवने 'तथा' तेन क्रमेण बुलिलप्रेरितेनाच्छावाकेनैवयामरुन्नामके शस्त्रे शस्यमाने सति, तदानीं गौश्लनामकः[1] कश्चिन्महर्षिरागत्य बुलिलनामकं होतारं प्रत्येवमुवाच । हे होतः 'ते' त्वदीयमच्छावाकप्रयुक्तमेवयामरुन्नामकं शस्त्रं 'प्लवते' विनश्यति । तत्र दृष्टान्तः—'विचक्रं' चक्ररहितं शकटमिव । अश्रूयमाणोऽपि इवशब्दोऽत्राध्याहर्तव्यः । अतः 'कथा' कथमेतत्सर्वं कथं घटते ? इत्याक्षेपः ॥

जब इसका उस क्रम से शंसन किया जा रहा था तब गौश्ल नामक महर्षि वहाँ आए । उन्होंने [बुलिल से इस प्रकार] कहा—हे होता ! तुम्हारा [अच्छावाक के द्वारा प्रयुक्त एवयामरुत् नामक] शस्त्र बिना पहिए की गाड़ी के समान कैसे घूमता है ?

तत ऊर्ध्वं बुलिलस्य वचनं दर्शयति —

**किं ह्यभूदिति ॥ इति ।**

अत्राच्छावाकेन शस्यमाने सति किं वा दूषणमभूत् ? नास्ति कश्चिदपि दोष इत्यर्थः ॥

[बुलिल ने कहा]—क्या हुआ ?

तत ऊर्ध्वं गौश्लेनोक्तं दोषं दर्शयति —

**एवयामरुदयमुत्तरतः शस्यत इति; स होवाचैन्द्रो वै मध्यंदिनः, कथेन्द्रं मध्यंदिनान्निनीषसीति ? ॥ इति ।**

होतृधिष्ण्यादुत्तरतो ह्यच्छावाकस्य धिष्ण्यम् । तत्समीपेऽवस्थितेनाच्छावाकेनैवयामरुन्नामकः शस्त्रविशेषः पठनीय इति तस्याऽभिप्राय इत्युक्त्वा, पुनरपि 'सः' गौश्ल एवमुवाच । माध्यंदिनसवनम् 'ऐन्द्रः' इन्द्रदेवताकः । तथा सति हे होतः ! तमेतमिन्द्रमस्मान्माध्यंदिनसवनात् 'कथा निनीषसि' केन प्रकारेणापनेतुमिच्छसि ? एवयामरुच्छस्त्रेण त्वदीयाच्छावाकशंसने दोष इति गौश्लस्याभिप्रायः ॥

[होता की वेदी के] उत्तर की ओर [अच्छावाक की वेदी होती है । उसके समीप स्थित अच्छावाक द्वारा] एवयामरुत् नामक शस्त्र विशेष का शंसन किया जाता है ।

---

१. 'गौश्लः गौश्रः ऋषिः'—इति शाङ्खा० ब्रा० १६.९.२३.४ । स च बुधेरपत्यम् । बुधिबुधिय स्यादभिन्नः । स एव 'बुधियमन्वपश्यत्'—इति पञ्च० ब्रा० १०.९५.१; अपारम्: 'बुधियमपश्यत्' इति पञ्च० ब्रा० १८.९.४.३३; १०.५.४.१ ।

[इस प्रकार उसका आशय कहकर पुन] उन्होंने कहा—मध्यन्दिनसवन इन्द्रदेवताक है। इस प्रकार हे होता! उस इन्द्र को इस मध्यन्दिन सवन से तुम क्यों निकालना चाहते हो?

तमभिप्रायमजानतो बुलिलस्य वाक्य दर्शयति—

नेन्द्र मध्यदिनान्निनीषामीति होवाच ॥ इति ।

अस्मात् माध्यदिनसवनात् तत्स्वामिनमिन्द्रमपनेतुमह नेच्छामि, तद्विरुद्धस्य कस्यचिदपि अननुष्ठितत्वात्, 'इति' एव बुलिल उक्तवान् ॥

[उसके अभिप्राय को न समझकर बुलिल ने इस प्रकार] कहा—मध्यन्दिन सवन से इन्द्र को हम नहीं निकालना चाहते [क्योंकि हमने उसके विरुद्ध कुछ भी अनुष्ठान नहीं किया है]।

ततो विरुद्धार्थानुष्ठानप्रदर्शनार्थं गौश्लस्य वाक्य दर्शयति—

छन्दस्त्विदममध्यंदिनसाच्यय जागतो वाऽतिजागतो वा सर्वं वा इद जागत वाऽतिजागत वा, स उ मारुतो मैव शासिष्टेति ॥ इति ।

हे होत! त्व स्वमनसेन्द्रमपनेतु नेच्छसि, किंत्विद छन्दोऽच्छावाकेन प्रयुज्यमान शस्त्रगतम् 'अमध्यदिनसाचि' मध्यंदिनसवनसबन्धार्हं न भवति। कथमिति चेत्? तदुच्यते—'अय' सूक्तविशेषो 'जागतो वाऽतिजागतो वा' द्वादशाक्षरपादेन षोडशाक्षरपादेन चोपेतत्वात्। सर्वं चेद जागतमतिजागत च मन्त्रजात जागते तृतीयसवने एव योग्यम्, न तु त्रैष्टुभे मध्यदिने सवने। 'स उ' सोऽपि सूक्तविशेषो मारुत' मरुद्देवताका न त्वैन्द्र। अतोऽपि कारणात् तृतीयसवन एव योग्यम्। तस्मादयमच्छावाको 'मैव शासिष्ट' शासन सर्वथा मा करोत्विति दोष दर्शितवान् ॥

[हे होता तुम अपने मन से इन्द्र को नहीं निकालना चाहते हो। किन्तु] यह [अच्छावाक द्वारा प्रयुक्त शस्त्रगत] छन्द मध्यन्दिनसवन के योग्य नहीं है, क्योंकि यह [सूक्त बारह अक्षरों और सोलह अक्षरों से युक्त होने से] जगती छन्दस्क है, अथवा अति जगती है, यह सब कुछ जगती से सम्बन्धित है अथवा अतिजगती से [जो तृतीय सवन के योग्य है न कि त्रिष्टुप् से सम्बन्धित मध्यन्दिनसवन के], और यह [सूक्त भी मरुद्देवताक है [इन्द्रदेवताक नहीं]। इसलिए [यह अच्छावाक इसका] शासन नहीं ही करे।

तत ऊर्ध्वं बुलिलकृत दर्शयति—

स होवाचाऽऽरमाच्छावाकेत्यथ हाऽस्मिन्ननुशासनमीषे ॥ इति ।

हे अच्छावाक! त्वम् 'आरम' शसनादुपरतो भव। 'इति' एव बुलिल उवाच। 'अथ' अनन्तरमिदमप्युवाच— हा' वद्य सपन्नम्। इत परमस्मिन् गौश्ले गुरौ 'अनुशासनम्' अनुष्ठेयोपदेशनम् 'इषे' इच्छामि। एतस्मादवगत्य सर्वमनुष्ठास्यामीति तस्याभिप्राय ॥

उन [बुलिल] ने कहा—हे अच्छावाक, तुम ठहरो [शंसन न करो]। इसके बाद कहा—अत्यन्त कष्टकर हुआ। इसके बाद अब मैं इन [गौश्ल गुरु] के अनुशासन की इच्छा करता हूँ [अर्थात् अब मैं इनसे सब कुछ जानकर ही अनुष्ठान करूँगा]।

अथ गौश्लस्योपदेशवाक्यं दर्शयति—

स होवाचैन्द्रमेव विष्णु न्यङ्गं शंसत्वथ त्वमेतं होतरुपरिष्टाद् रौद्र्यै धाय्यायै पुरस्तान्मारुतस्याप्यस्याथा इति ॥ इति।

'स' गौश्ल एवमुवाच,—एष 'अच्छावाक ऐन्द्रम्' इन्द्रदेवताकं 'विष्णुन्यङ्ग'[1] विष्णुलिङ्गोपेतं शंसतु। एवयामरुत् त्यक्त्वा 'ऋतुर इन्द्र' इति अच्छावाकस्य[2] यदैन्द्रं सूक्तमस्ति[3] तस्मिन् सूक्ते द्वितीयस्यामृचि चतुर्थपाद एवमाम्नायते—'हन्नुवीयंस्त्वं विष्णुना सचान' इति। अत इदं विष्णुचिह्नोपेतं सूक्तं शंसतु। हे 'होत' बुलिल! त्वम् 'एतम्' एवयामरुत[4] त्वदीयशस्त्रे 'अस्याथा' प्रक्षिप। तत्र स्थानविशेष उच्यते—तृतीयसवने 'आ न करतीति'[5] रुद्रदेवताका यत् धाय्या, तस्या उपरिष्टात्, मारुतसूक्तस्य[6] पुरस्तात्, तयोरुभयोर्मध्य प्रक्षेपस्थानम्। एष गौश्लोपदेशः॥

उन [गौश्ल ने इस प्रकार कहा—'यह [अच्छावाक] विष्णु के चिह्नों से युक्त इन्द्र-देवताक सूक्त का शंसन करे।' उसके बाद हे होता [=बुलिल] तुम इस [एवयामरुत्] को अपने शस्त्र में [तृतीयसवनगत 'आ न करत' आदि] रुद्रदेवताक धाय्या के बाद किन्तु मरुद्देवताक सूक्त के पहले [दोनों के मध्य में] प्रक्षिप्त करो।

अथानुष्ठानं दर्शयति—

तद्ध तथा शंसयाञ्चकार, तदिदमप्येतर्हि तथैव शस्यते ॥ ३० ॥ इति।

'तद्ध' गौश्लेन यदुक्तं तत्सर्वं, तथैव बुलिलः 'शंसयाञ्चकार'। माध्यन्दिनसवनेऽच्छावाकं प्रत्येवयामरुत्त्यागेन प्रेषितवान्। स्वयं तृतीयसवने आग्निमारुतशस्त्रमध्ये धाय्यामारुतसूक्तयोर्मध्य एवयामरुतं प्रक्षिप्य शंसनं कृतवान्। तस्मादिदानीमपि तदिदं सर्वं होतारैस्तथैव शस्यते॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ पञ्चिकायां पञ्चमाध्याये (त्रिंशाध्याये) चतुर्थः खण्डः ॥ ४ ॥ (३०) [१९७]

---

१ विष्णुन्यङ्गम्'—इति पाठ एव माध्यन्दिनमतो गम्यते।
२ 'प्रत्येवयामरुदिन्द्रशंसनते'—इति आश्व० श्रौ० ८ ४ ११।
३ ऋ० ६ २० १-१३।                    ४ एवयामरुतम्=अपेवयामरुतम्।
५ ऋ० १ ४३ ६।
६ 'प्र वो महे'—इत्येवयामरुत्सूक्तम् एव मारुत सूक्तम् (द्र० इत पूर्वम्, १०४३ पृ०)।

इस प्रकार [गौतम द्वारा] जो कुछ कहा गया वैसा ही [खुलिन में] शंसन किया। [अर्थात् मध्यन्दिनसवन में अच्छावाक को एवयामरुत के शंसन के लिये प्रेषित किया और स्वयं तृतीयसवन में आग्निमारुतशस्त्र के मध्य धाय्या और मरुद्देवताक सूक्त के बीच में प्रक्षिप्त करके शंसन किया] इसीलिए यहाँ भी वह सब कुछ [होत्रकों द्वारा] वैसा ही शंसन किया जाता है।

॥ इस प्रकार तीसवें (पञ्चम) अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

संवत्सरसत्रे यदहरग्निष्टोमसस्थं विश्वजिदाख्यमस्ति, तत्र शिल्पानां शस्त्राणां क्लृप्तिः पूर्वमाभिहिता[1] ॥

तत्र किंचिच्चोद्यमुद्भावयति—

**तदाहुर्यदस्मिन् विश्वजित्यतिरात्र एव षष्ठेऽहनि कल्पते यज्ञः, कल्पते यजमानस्य प्रजातिः; कथमत्राशस्त एव नाभानेदिष्ठो भवत्यथ मैत्रावरुणो वालखिल्याः शंसति, ते प्राणा, रेतो वा अग्रेऽथ प्राणा; एवं ब्राह्मणाच्छंस्यशस्त एव नाभानेदिष्ठो भवत्यथ वृषाकपिं शंसति; स आत्मा, रेतो वा अग्रेऽथाऽऽत्मा, कथमत्र यजमानस्य प्रजातिः, कथं प्राणा अविक्लृप्ता भवन्तीति ॥ इति ।**

द्विविधो हि विश्वजित्—अतिरात्रसंस्थोऽग्निष्टोमसंस्थश्च। तत्रातिरात्रसंस्थः स्वतन्त्र एकाहः। तत्र तृतीयसवने होत्रकाणां शस्त्राणि चिन्त्यन्ते। तथा सति पूर्वोक्तक्रमेण होता नाभानेदिष्ठं शस्त्वा रेतः सिञ्चति, मैत्रावरुणो वालखिल्याः शस्त्वा प्राणानवस्थापयति, ब्राह्मणाच्छंसी सुकीर्तिं शस्त्वा प्रजनयति, अच्छावाक एवयामरुतं शस्त्वा प्रतिष्ठां करोतीत्ययं क्रम उपपन्नः। एवं पृष्ठ्यषडहस्य यदहः षष्ठमस्ति, तस्याप्युक्तसंस्थात्वेन तृतीयसवने होत्रकशस्त्रसद्भावात् पूर्वोक्ता यजमानोत्पत्तिरुपपद्यते। यथा विश्वजिदतिरात्रे षष्ठेऽहनि च शस्त्ररूपो यज्ञः 'कल्पते' उपपद्यते, तदनुसारेण यजमानस्य 'प्रजातिः' जननमप्युपपद्यते। तथा संवत्सरसत्रगतेऽग्निष्टोमसंस्थे विश्वजित्यहनि तदुपपादयितुं न शक्यते। तथा हि—तत्राग्निष्टोमसंस्थे विश्वजिति होत्रा नाभानेदिष्ठो माध्यंदिनसवने शस्त एव भवति। तृतीयसवने वैश्वदेवशस्त्रे शस्यमानत्वात्। अथैवं सति मैत्रावरुणो वालखिल्याः प्रथमं शंसति, तृतीयसवने होत्रकाणां शस्त्राभावेऽपि माध्यंदिने सवने तेषां शस्त्राणां वुलिलाख्येन महर्षिणा समाकृष्टत्वात्। 'ते' च वालखिल्यात्मकाः प्राणा इत्युक्तम्[2]। लोके तु रेत एव 'अग्रे' प्रथमं सिक्तं भवति। पश्चात् सिक्ते रेतसि प्राणानां

१. द्र० इतः पूर्वम्, पृ० १०३०–१०४८।

२. द्र० इतः पूर्वम्, पृ० १०३५।

प्रवृत्तिरिति क्रमः। इह तु नाभानेदिष्ठशंसनाभावेन रेतःसेको नास्ति। वालखिल्याणां सद्भावेन प्राणा विद्यन्ते। कथमेतदुपपद्यत ? इत्येकं चोद्यम्। एवं चोद्यान्तरमस्ति। ब्राह्मणाच्छंसी मध्यंदिने वृषाकपिं शंसति। 'सः' वृषाकपिर्यजमानस्य प्रजायमानस्य 'आत्मा' देहः। अत्रापि नाभानेदिष्ठोऽप्रशस्त एव भवति, अतो रेतो नास्ति। लोके तु रेत एवादौ सिच्यते। 'अथ' पश्चादात्मदेहो जायते। अतो लोकवैपरीत्ये सति कथमत्र यजमानस्य 'प्रजातिः' जन्म ? इति द्वितीयं चोद्यम्। यजमानस्य जन्मसंभवे वालखिल्यरूपाः 'प्राणाः' 'अविक्लृप्ता.' ।विशेषेण स्थानक्लृप्तिरहिताः 'कथ भवन्ति' केन प्रकारेण वर्तन्ते ? 'इति' एव ब्रह्मवादिनश्चोद्यमाहुः ॥

५.३१ [xxx.५] [संवत्सरसत्र में जो अहः अग्निष्टोमसंस्थ 'विश्वजित्' नामक है उसके शिल्पों और शस्त्रों आदि की व्याख्या की जा चुकी है। उसीमें कुछ शंका करते हैं।

'विश्वजित्' दो प्रकार का है, १. अतिरात्रसंस्था और २. अग्निष्टोमसंस्था। इनमें अतिरात्रसंस्था एक स्वतन्त्र एकाह है। उसके तृतीय सवन में होत्रकों के शस्त्र होते हैं। इस प्रकार पूर्वोक्त क्रम से—१. होता नाभानेदिष्ठ का शंसन करके मानो वीर्य का सिंचन करता है। २. मैत्रावरुण वालखिल्यों का शंसन करके प्राणों को स्थापित करता है। ३. ब्राह्मणाच्छंसी सुकीर्ति का शंसन करके उत्पादन करता है। ४. अच्छावाक एवयामरुत् का शंसन करके प्रतिष्ठा का संपादन करता है।]

प्रश्न यह है कि विश्वजित् अतिरात्र में और उसी प्रकार छठवें दिन [शस्त्र रूप] यश का उत्पादन हो जाता है; और उसी के अनुसार यजमान का प्रजनन भी उपपन्न हो जाता है—तो फिर ऐसा कैसे होता है जबकि नाभानेदिष्ठ का शंसन ही नहीं होता और मैत्रावरुण ही वालखिल्यों का शंसन करता है। वे [वालखिल्य] प्राण हैं। जब कि पहले वीर्य सिंचित होता है और बाद में उसमें प्राणों का संचार होता है। इसी प्रकार दूसरा प्रश्न यह है कि ब्राह्मणाच्छंसी, जब [वीर्य रूप] नाभानेदिष्ठ का शंसन ही नहीं होता तो यह वृषाकपि का शंसन करता है; यह तो आत्मा अर्थात् शरीर है जबकि वीर्य पहले [सिंचित] होता है और बाद में देह [उत्पन्न] होता है। तो फिर कैसे यजमान का जन्म होता ? और कैसे बिना वीर्य के प्राण विच्छिन्न नहीं होते ? [अर्थात् वीर्य रूप नाभानेदिष्ट का शंसन मध्यन्दिन सवन में पहले न होकर बाद में तृतीय सवन गत वैश्वदेवशस्त्र में उसका शंसन होता—यह एक विपरीत बात कैसे है ? और दूसरी विपरीत बात कैसे है कि ब्राह्मणाच्छंसी मध्यन्दिन सवन में प्रजनन करने वाले यजमान के आत्मा [=शरीर] रूप वृषाकपि का शंसन करता है जबकि पहले वीर्य रूप नाभानेदिष्ठ का शंसन ही नहीं होता]

तस्य परिहार दर्शयति—

**यजमान ह वा एतेन सर्वेण यज्ञक्रतुना सस्कुर्वन्ति, स यथा गर्भो योन्यामन्तरेव सभवञ्छेते, न वै सकृदेवाग्रे सर्वः सभवत्येकैकं वा अङ्ग सभवतः सभवतीति ॥ इति ।**

इह 'यज्ञक्रतु'शब्देन तत्साधनभूत. शिल्पसमूहो विवक्षित । 'एतेन' सर्वेणापि शिल्प समूहेन यजमान 'सस्कुर्वन्ति' प्राणप्राप्त्यर्हता सस्कार । स एव चात्र क्रियते । न तु यजमानस्य मरण जन्म [वा] । बहुभि शिल्पै क्रमेण सस्कारे दृष्टान्त । यथा योन्याम् 'अन्त' मध्ये 'स' प्रसिद्धो गर्भो भवति । एवमय यजमान क्रमेण 'समवन्' सस्कारेणो त्पद्यमान शेते' अवतिष्ठते । लोकेऽपि गर्भ 'अग्रे' प्रथमं रेत सेककाले एव 'सर्वं' सपूर्णाङ्ग सकृदेव 'न वै समवति' नैवोत्पद्यते । किन्तु समवत ' उत्पद्यमानस्य पुरुषस्यै कैकमङ्ग क्रमेण 'समवति' निष्पद्यते । तथा च गर्भोपनिषद्याम्नातम् 'एकरात्रोषितं कलल भवति । सप्तरात्रोषित बुद्बुद भवति इत्यादि । अतो गर्भवत्क्रमेण सस्कारो युक्त इत्यर्थ ॥

[उत्तर] इन सभी यज्ञोय साधनभूत [=यज्ञ क्रतुना] शिल्प समूहों के द्वारा यजमान को [प्राण प्राप्ति के योग्य करने के लिए] सस्कृत करते हैं, जैसे कि गर्भ योनि के अन्दर ही बढ़ता हुआ सोता रहता है । आरम्भ में ही वह सम्पूर्ण रूप से एकाएक नहीं उत्पन्न हो जाता है । किन्तु [इस उत्पन्न होने वाले गर्भ का] एक एक अङ्ग निष्पन्न होते हुए क्रमश हो जन्म होता है [उसी प्रकार क्रम से यजमान का सस्कार किया जाता है । यहाँ उस यजमान के मरने जीने का कोई तात्पर्य ही नहीं है] ।

उक्तमेवोत्तर पुनरपि विस्पष्टयति—

**सर्वाणि चेत्समानेऽहन् क्रियेरन् कल्पत एव यज्ञ, कल्पते यजमानस्य प्रजातिरथैत होतैवयामरुत तृतीयसवने शसति, तद्यास्य प्रतिष्ठा, तस्यामेवैन तदन्तत' प्रतिष्ठापयति ॥ ३१ ॥ इति ।**

'सर्वाणि' शिल्पशस्त्राण्येकस्मिन्नेवाहनि क्रियेरन्' । तदानी तावतैवाय यज्ञो यजमानसस्कारे हेतु शिल्पसमूह उपपद्यते । यजमानस्य 'प्रजाति ' जननोपचार उपपद्यते । अत सर्वशस्त्रानुष्ठानमेव सस्कारसाधनम् । न तु होतु शस्त्रस्य प्रथममाविरवादिक्रमविशेष सस्कारोपयोगी । ननु सर्वशस्त्रानुष्ठान नास्ति माध्यदिनसवने, एवयामरुद्राम्न सूक्तस्याच्छावाकेनाननुष्ठानात् । नाय दोष । तत्र तदभावेऽपि तृतीयसवने होतुरेवयामरु-च्छस्त्रमस्ति । 'तत्' तथा सति यजमानस्य सर्वशस्त्रानुष्ठानेन 'या' प्रतिष्ठाऽपेक्षिता, तस्यामेव प्रतिष्ठायाम् 'एन' यजमान तत् 'अन्तत ' शस्त्राणामन्ते प्रतिष्ठापयति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीय वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ-पञ्चिकाया पञ्चमाध्याये (त्रिंशाध्याये) पञ्चम खण्ड ॥ ५ ॥ (३१) [११८]

यदि सभी शिल्प समूहों को उसी एक ही दिन में कर दिया जाय तो यजमान के संस्कार में यज्ञ उतना ही उत्पन्न होगा और यजमान का प्रजनन भी होता है [अतः सब शस्त्र का अनुष्ठान ही संस्कार का साधन है। होता के शस्त्र का प्रथमभावि होना आदि क्रम विशेष संस्कार में उपयोगी नहीं है। माध्यन्दिन सवन में सभी शस्त्रों का अनुष्ठान न होना और अच्छावाक द्वारा एवयामरुत् नामक शस्त्र का अनुष्ठान न होना भी कोई दोष नहीं है क्योंकि] होता तृतीय सवन में एवयामरुत् का शंसन करता ही है। इस प्रकार [सभी अनुष्ठानों द्वारा यजमान की] जो प्रतिष्ठा अपेक्षित है उसी [प्रतिष्ठा] में इस [यजमान] को उन [शस्त्रों] के अन्त में प्रतिष्ठित करता है।

॥ इस प्रकार तीसवें (पाँचवें) अध्याय के पाँचवें खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

पूर्वत्र ब्राह्मणाच्छंसिन शिल्पे शस्त्रे 'मुकीति शंसति', 'वृषाकपिं शंसतीति' मन्त्रद्वय विहितं[1] तत ऊर्ध्वं कुन्तापाख्य सूक्त शिल्पे कुन्तापनामके ग्रन्थे समाम्नातं त्रिंशदृचं[2] शस्तव्यमिति तद्विधातुमाह—

छन्दसां वै षष्ठेनाह्नाऽऽप्तानां रसोऽत्यनेदत्, स प्रजापतिरबिभेत्पराङ्य छन्दसां रसो लोकानत्येष्यतीति; तं परस्ताच्छन्दोभि पर्यगृह्णान्नाराशंस्या गायत्र्या, रैभ्या त्रिष्टुभः, पारिक्षित्या जगत्या, कारव्ययाऽनुष्टुभस्तत्पुनश्छन्दःसु रसमदधात् ॥ इति ।

---

१. द्र० इत पूर्वम् १०४१ पृ० ।

२. अस्ति ऋग्वेदस्यान्तिमम् खिलरूप ऋक्परिशिष्टो ग्रन्थः। तत्राद्यो निविदध्याय, कुन्तापाध्यायो द्वितीय, पुरोरुगध्यायस्तृतीय, ततः प्रैषाध्यायोऽन्तिमः। तत्र कुन्तापाध्याये स्वादौ नाराशंस्यस्तिस्र, अथ रैभ्यास्तिस्र, अथ पारिक्षित्यश्चतस्रः अथ कारव्याश्चतस्र, अथ दिशां क्लृप्तय पञ्च, अथ जनकल्पाः षट्, अथेन्द्रगाथा पञ्च,-इति त्रिंशत् सङ्ख्याका ऋच सन्ति, एतावदेव कुन्तापसूक्तम्। ततश्चैतशप्रलापनामक- पदगाथा, अथ प्रवह्लिका ऋच षट्, अथ आजिज्ञासेन्या ऋचश्चतस्र, अथ पद- नवात्मकः प्रतिराध अथातिवाद एक, अथ दशदशपदात्मकौ देवनीथ, अथ भूतेच्छदस्तिस्र, अथाहनस्या ऋच अष्टाविति पञ्चदशविधा मन्त्राः समाम्नाताः। त एवेह आरम्भाध्यायसमाप्ति यावत् पञ्चसु खण्डेषु क्रमाद् विधीयन्ते। तत्रास्मिन् खण्डे त्रिंशद्सङ्ख्यकानां कुन्तापसूक्तीयानामृचां विधानम्, अत उच्यते—'त्रिंशदृचम्'-इति ।

पृष्ठ्यषडहस्य सम्बन्धिना षष्ठेनाह्ना प्राप्ताना गायत्र्यादीना छन्दसा 'रस ' सार 'अत्यनेदत्' अतिक्रम्यागच्छत्[१]। तदानी 'स प्रजापति 'अबिभेत्' भीतवान्। केनाभि प्रायेणेति ? सोऽभिधीयते—अय छन्दसा रस पराङ्' परावृत्य लोकान् 'अत्यष्यति अतिक्रम्य गमिष्यति 'इति' अनेनाभिप्रायेण। ततो भीत प्रजापति त रस 'परस्तात्' परभागे 'छन्दोभि गायत्र्यादिभि 'पर्यगृह्णात्' परितो निरुद्धवान्। गायत्र्यादीना मध्ये कस्या सम्बन्धिरस कया पर्यगृह्णादिति, तदुच्यते—गायत्र्या सबन्धिरस नाराशस्या पर्यगृह्णात्। नराशसशब्दो यस्यामृग्जातावस्ति, सय 'नाराशसी'। तथा त्रिष्टुभ सार 'रैभ्या' रेभशब्दोपेतया ऋग्जात्या पर्यगृह्णात्। जगत्या सार 'पारिक्षित्या' परिक्षि च्छब्दोपेतया ऋग्जात्या पर्यगृह्णात्। अनुष्टुभ सार 'कारव्यया' कारुशब्दोपेतया ऋग्जात्या पर्यगृह्णात्। तत् तस्मात्परिग्रहादूर्ध्वं पुन 'छन्दसु गायत्र्यादिषु 'त रसम् 'अदधात्' अवस्थापितवान्॥

VI.32 [XX ६] [पहले जो ब्राह्मणाच्छसी के शिल्प शस्त्र में 'सुकीर्ति का शसन करता है' और 'वृषाकपि का शसन करता है'—इस प्रकार जो दो सूक्त विहित थे उनके बाद कुन्ताप नामक सूक्त जो कुन्ताप नामक खिल-ग्रन्थ में समाम्नात है उन तीस ऋचाओं के सम्बन्ध में कहता है, उसी का इतिहास कहते हैं]—

[पृष्ठ्यषडह सम्बन्धी] षष्ठ अह में प्राप्त [गायत्री आदि] छन्दों का रससार अतिक्रमण करके बहने लगा। तब वह प्रजापति इसलिए भयभीत हो गए कि—यह छन्दों का रस बाहर निकल कर लोकों में न फैल जाय। तब [भयान्वित प्रजापति ने] उस [रस] को ऊपर से [गायत्री आदि] छन्दों के द्वारा चारों ओर से निरुद्ध कर दिया। गायत्री से सम्बन्धित [रस] को नाराशसी [=जिनमें नराशस शब्द हों उन] ऋचाओं से रोका तथा त्रिष्टुप् के सार को रैभी [='रेभ' शब्द युक्त] ऋचाओं के द्वारा रोका, जगती छन्द के सार को पारिक्षित् [='परिक्षित्' शब्द से युक्त] ऋचाओं से रोका, अनुष्टुप् के सार को कारव्य [='कारु' शब्द से युक्त] ऋचाओं से रोका। इस प्रकार उस [परिग्रह=रोक] से पुन [गायत्री आदि] छन्दों में उस [रस] को स्थापित किया।

वेदन प्रशसति—

सरसैर्हास्य च्छन्दोभिरिष्ट भवति, सरसैश्छन्दोभिर्यज्ञ तनुते, य एव वेद॥ इति।

'अस्य वेदितुर्दर्शपूर्णमासादिक सारयुक्तैर्गायत्र्यादिभिरिष्ट भवति। अथाग्निष्टोमादिक प्रौढयज्ञ वेदिता सारयुक्तैश्छन्दोभि तनुते विस्तारयति॥

---

१. आप्तानामदितानाम्। रस सारवस्तु। अति द्रुतम्। नेदिर्गलनार्थं। अनेदद्= अगलत्। इति षड्गुरुशिष्य।

जो इस प्रकार जानता है उसका [दर्शपूर्णमास आदि याग] सार युक्त [गायत्री आदि] छन्दों से इष्ट होता है, और इस प्रकार वह उन सार युक्त छन्दों के द्वारा [अग्निष्टोम आदि प्रौढ़] यज्ञ का विस्तार करता है।

इदानीं कुन्तापसूक्तगता ऋचो विधत्ते—

नाराशंसीः शंसति; प्रजा वै नरो वाक्शंसः, प्रजास्वेव तद्वाचं दधाति, तस्मादिमाः प्रजा वदन्त्यो जायन्ते य एवं वेद; यदेव नाराशंसीः॥ इति।

'इदं जना' इत्याद्यास्तिस्र ऋचो नाराशंस्यः[1]। तत्र 'नराशंसस्तविष्यते' इति नराशंसशब्दस्य श्रुतत्वात्। तास्तिस्र ऋचो ब्राह्मणाच्छंसी शंसेत्[2]। तत्र नर इत्यनेन प्रजा विवक्षिताः। शंस इत्यनेन वाग्विवक्षिता। अतस्तच्छंसनेन प्रजास्वेव वाचमवस्थापयति। 'तस्मात्' कारणादिमा प्रजा लोके 'वदन्त्य' वाग्व्यवहारयुक्ता उत्पद्यन्ते। य एवं वेद,[3] तस्य वाग्व्यवहारक्षमा प्रजा उत्पद्यन्त इति शेषः। नाराशंसीरिति यदेवास्ति, तत्पूज्यमिति श्रुतेरभिप्रायः॥

[अब कुन्ताप सूक्तगत ऋचाओं का विधान करते हैं] -

['इदं जनाः' आदि तृच में 'नराशंस' शब्द होने से ब्राह्मणाच्छंसी] नराशंस सम्बन्धी तृच का शंसन करता है। वस्तुतः यहाँ 'नर' शब्द से प्रजा विवक्षित है और 'शंस' शब्द से वाक् विवक्षित है। अतः उस [शंसन] से वह प्रजाओं में वाणी को स्थापित करता है। इसलिए ये प्रजाएँ [लोक में] बोलते हुए जन्म लेती हैं। जो इस प्रकार जानता है [उसके वाग्व्यवहार की क्षमता प्रकाशित होती है]। इस प्रकार जो यह नराशंस सम्बन्धी तृच हैं, वे पूज्य हैं।

ता एव पुनः प्रशंसति—

शंसन्तो वै देवाश्च ऋषयश्च स्वर्गं लोकमायंस्तथैवैतद्यजमानाः शंसन्त एव स्वर्गं लोकं यन्ति॥ इति।

स्पष्टोऽर्थः॥

इनका ही शंसन करते हुए देवों और ऋषियों ने स्वर्ग लोक को प्राप्त किया। उसी प्रकार ये यजमान भी इनका शंसन करते हुए ही स्वर्गलोक को जाते हैं।

---

१. ऋ० परिशिष्ट २.१.१-३।

२. नाराशंस्यादीनामिन्द्रगाथान्तानां त्रिंशदृचां कुन्तापसूक्तमिति समाख्या। 'तस्मात् (कुन्तापे.) ऊर्ध्वं कुन्तापम्'—इति आश्व० श्रौ० ८.३.७।

३. (i) इत्थं इमाः वेदितुः। षड्गुरुशिष्यः।
वेदितुस्तु भवेयुस्ताः प्रजा वाग्मित्वसंयुताः। इति षड्गुरुशिष्यः।
(ii) य एवं वेद सोऽपि प्रजासु वाचम्—इत्यध्याहारः—इति गोविन्दस्वामी।

तच्छंसने कंचिद्विशेष विधत्ते—

ताः प्रग्राह शसति, यथा वृषाकपिं, वार्षाकपं हि वृषाकपेस्त-न्यायमेति ॥ इति ।

'ता' नाराशंसीस्तिस्र ऋच 'प्रग्राह' पादे पादे प्रगृह्य अवसाय शंसेत्, यथा वृषाकपिसूक्त पादे पादे विगृह्य शंसति, तद्वदेतत्[1]। वृषाकपिसूक्ते प्रग्रहविधिरर्थसिद्धो द्रष्टव्य । हि' यस्मात्कारणादिदमृचो शसन 'वार्षाकप' वृषाकपिसबन्ध कर्तव्यम् । 'तद्' तस्मात्कारणाद् 'वृषाकपे' एतन्नामकस्य सूक्तस्य 'न्याय' प्रकारम् 'एति' प्राप्नोति । विग्रह एवात्र तन्न्याय[2] ॥

उन [नाराशंसी तृच] का पाद-पाद के अवसान पर शसन करता है, जैसाकि वृषाकपि सूक्त का [पाद पाद के अवसान पर शसन करता है] उसी प्रकार, क्योंकि इस ऋचा के शसन का वृषाकपि से सम्बन्ध करना चाहिए। इसीलिए वृषाकपि'-इस नाम के सूक्त का प्रकार विशेष प्राप्त होता है।

वृषाकपिसूक्ते न्यूङ्खनिनर्दावपि विद्येते। अतोऽत्रापि तदुभयप्राप्तौ न्यूङ्ख निरा-कृत्येतर विधत्ते—

तासु न न्यूङ्खयेन्नो वीव नर्देत् स हि तासां न्यूङ्ख ॥ इति ।

'तासु' नाराशंसीषु न्यूङ्ख न कुर्यात् । किंतु 'नो वीव' नर्देदेव विशेषण निनर्दमेव कुर्यात् । 'स' एव निनर्द 'तासां' नाराशंसीना न्यूङ्खस्थानीयः । तृतीयपादस्य द्वितीय स्वरे त्रयोदशभिरोकारैस्तत्र चावसान कृत्वा त्रयाणा त्रिमात्राणामोकाराणामुच्चारण न्यूङ्ख[3]। तृतीयपादस्य प्रथमाक्षरमनुदात्तत्वेन द्वितीयाक्षरमुदात्तत्वेनोच्चारयेदिति यदस्ति सोऽय निनर्द[4] ॥

---

१ 'तस्य (कुन्तापस्य) आदितश्चतुर्दश (वारव्यान्ता) विग्राह निनर्द शंसत्'—इति आश्व० श्रौ० ८.३ ८ । इह त्वित उत्तरमेव निनर्द विधास्यति ।

२ 'अथ वृषाकपि शंसद् यथा होताज्यायाश्चतुर्थे'—इति आश्व० श्रौ० ८ ३ ४ । आज्याद्यधर्मास्तु अर्धर्चशसनम्, विग्राह, त्रिरभ्यास, न्यूङ्ख, निनर्द, प्रतिगरश्चेति षट् (७ ११ १–२१) । अर्धर्चशसनातिदेश वारयितु तत्र उक्तम्—'पङ्क्तिशसन्त्विह' —इति (५)।

३ द्र० इत पूर्वम् ७२८–७३१ पृ० ।

४. (१) "तृतीयेषु पादेषूदात्तमनुदात्तपर यत् प्रथम वल्निर्देत् । तदपि निदर्शनायो दाहरिष्याम इद जना उपश्रुत । नराशसस्तविष्यते । षष्टि सहस्रा नवति च कौरम आरुशमेषु ददमहो३म्'–इति"—इति आश्व० श्रौ० ८ ३ ९,१० । इह पराऽनुदात्तष्टिकार उदात्त, अन्यदेकश्रुति ।

उन [ऋचाओं] में न्यूङ्ख न करे। किन्तु विशेष रूप से निनर्दन मात्र करे। यही [निनर्दन] उन [ऋचाओं] का न्यूङ्खस्थानीय है।

[विमर्श तृतीय पाद के द्वितीय स्वर में तेरह ओकार से यहां यहां अवसान करके तीन त्रिमात्र में ओकार का उच्चारण 'न्यूङ्ख' है। तृतीय पाद के प्रथमाक्षर को अनुदात्त रूप से और द्वितीयाक्षर को उदात्त रूप से उच्चरित करना 'निनर्द' है]।

ऋगन्तराणि विधत्ते—

रैभीः शंसति ॥ इति।

रेभशब्दोपेता ऋचो रैभ्यो 'बच्यस्वरेभवच्यस्व'–इत्याद्यास्तिस्रः[1]। ताः शंसेत् ॥

रैभी [= 'रेभ' शब्दयुक्त] ऋचाओं का शंसन करता है।

ता ऋचः प्रशंसति—

रेभन्तो वै देवाश्च ऋषयश्च स्वर्गं लोकमायंस्तथैवैतद्यजमाना रेभन्त एव स्वर्गं लोकं यन्ति ॥ इति।

'रेभन्त शब्दं कुर्वन्त, कीर्तिं कुर्वन्त इत्यर्थः ॥

[कीर्ति के] शब्द करते हुए ही देवों और ऋषियों ने स्वर्गलोक को प्राप्त किया। उसी प्रकार ये यजमान भी [कीर्ति के] शब्द करते हुए ही स्वर्ग लोक को जाते हैं।

विग्रहादिकं विधत्ते—

ताः प्रग्राहं शंसति, यथा वृषाकपिं; वार्षाकपं हि वृषाकपेस्तन्त्रायमेति; तासु न न्यूङ्खयेन्नो थोय नर्देत्, स हि तासां न्यूङ्खः ॥ इति।

पूर्ववत् ॥

---

(ii) अत्र सूक्ते 'तस्मादूर्ध्वं कुन्तापम्। तत्पादितश्चतुर्दश विग्राहं निनर्दं शंसेत्। तृतीयेषु पादेषूदात्तमनुदात्ततरं यत् प्रथमं स निनर्दः' (आश्व० श्रौ० ८.३.७–९) इति या निनर्दस्तूत्रावयवादाचोदात्तस्वरगतः प्रसिद्धः स एव तासां न्यूङ्खनिनर्दनामकर इति गृह्यताम्। नि=दीर्घस्वच्छान्दसः। वि शास्तु, इव, निनर्देत्। स तासां न्यूङ्ख इव स्यात्।

निनर्दशब्दवाच्यस्यापि निनर्दस्वर एव हि।
द्वितीयस्वरगामित्वान्न्यूङ्खत्वमपि चेष्यताम्।
न्यूङ्खात् पूर्वोऽनुदात्तोऽभूत् तत्रापि सम हि तत्। इति षड्गुरुशिष्यः।

1. (i) ऋ० परिशिष्टे २.२.१–३।

(ii) अथर्व० २०. १२७. ८–१; ऋ० खि० ५. ९; शांखा० श्रौ० १२. १५.१; १४.४,५,। गु० वैता० ३२.१९।

उन [रैभी ऋचाओं] का पाद-पाद के अवसान पर शंसन करता है, जैसा कि वृषाकपि सूक्त का [पाद-पाद के अवसान पर शंसन करता है] उसी प्रकार, क्योंकि इस ऋचा के शंसन का वृषाकपि से सम्बन्ध करना चाहिए। इसीलिए 'वृषाकपि'-इस नाम के सूक्त का प्रकार विशेष प्राप्त होता है। उन [रैभी ऋचाओं] में न्यूङ्ख न करे। किन्तु विशेष रूप से निनर्दन मात्र करे। यही [निनर्दन] उन [ऋचाओं] का न्यूङ्ख स्थानीय है।

ऋगन्तराणि विधत्ते—

पारिक्षितीः शंसति ॥ इति।

परिक्षिच्छब्दोपेता 'राज्ञो विश्वजनीनस्य' इत्याद्याश्चतस्र ऋचः पारिक्षित्यः तासु 'परिक्षित क्षेममकरत्' इति परिक्षिच्छब्दस्य श्रुतत्वात्। ता ऋचः शंसेत् ॥

पारिक्षिती'['परिक्षित्' शब्द से युक्त] ऋचाओं का शंसन करता है।

ताः प्रशंसति—

अग्निर्वै परिक्षिदग्निर्हीमाः प्रजाः परिक्षेत्यग्निं हीमाः प्रजाः परिक्षियन्ति ॥ इति।

तास्वृक्षु परिक्षिच्छब्देनाग्निरेवाभिधीयते। अग्निर्हीमाः सर्वाः प्रजा दाहपाकादिना परिपालयन् 'क्षेति' निवसति। प्रजाश्चेमा अग्निं परितः सेवमानाः क्षियन्ति' निवसन्ति। अतः कर्तरि कर्मणि वा व्युत्पत्त्याऽयमग्निः परिक्षिद्भवति ॥

[उन ऋचाओं में उक्त] परिक्षित्' शब्द से अग्नि ही कहे गए हैं, क्योंकि अग्नि इस सम्पूर्ण प्रजा का [दाह एवं पाक आदि से] परिपालन करते हुए निवास करती है और क्योंकि प्रजा भी इस अग्नि का चारो ओर से सेवन करते हुए ही निवास करती हैं।

वेदनं प्रशंसति—

अग्नेरेव सायुज्यं सारूपतां सलोकतामश्नुते य एवं वेद ॥ इति।

सहवास-समानरूप समानलोकत्वानि वेदिता प्राप्नोति ॥

इस प्रकार जो जानता है वह अग्नि का ही सायुज्य [=साथ-साथ वास] सारूप्य [=समानरूपता] और सालोक्य [समान लोक] प्राप्त करता है।

तासामृचां प्लुतेन पूज्यत्वं दर्शयति—

यदेव पारिक्षितीः३ ॥ इति।

वस्तुतः जो 'परिक्षित्' शब्द युक्त ऋचाएँ हैं वे पूज्य हैं।

प्रकारान्तरेण ताः प्रशंसति—

संवत्सरो वै परिक्षित्, संवत्सरो हीमाः प्रजाः परिक्षेति, संवत्सरं हीमाः प्रजाः परिक्षियन्ति ॥ इति।

---

१ अथर्व० २० १२७ ७-१०, ऋ० खि० ५ १०, शाङ्खा० श्रौ० १२ १३ १ १-४।

अतिवाक्यवद् व्याख्येयम् ॥

उनमें 'परिक्षित्' शब्द से 'संवत्सर' को ही कहा गया है क्योंकि संवत्सर इस सम्पूर्ण प्रजा का परिपालन करते हुए ही निवास करता है और क्योंकि, प्रजा भी उस संवत्सर को चारों ओर से सेवन करते हुए ही निवास करती है।

वेदनप्रशंसां प्रग्राहविधिं च दर्शयति—

**संवत्सरस्यैव सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद; ताः प्रग्राहं शंसति, यथा वृषाकपिं, वार्षाकपं हि वृषाकपेरेतन्न्यायमेति तासु न न्यूङ्खयेन्नो चीव नर्देत्, स हि तासां न्यूङ्खः ॥ इति।**

पूर्ववद् व्याख्येयम् ॥

इस प्रकार जो जानता है वह संवत्सर का ही सायुज्य, सरूपता और समान लोकत्व प्राप्त करता है। उन [पारिक्षिती ऋचाओं] का पाद-पाद के अवसान पर शंसन करता है, जैसा कि वृषाकपि सूक्त का [शंसन करता है] उसी प्रकार [यहाँ भी शंसन करता है]; क्योंकि इस ऋचा के शंसन का वृषाकपि से सम्बन्ध करना चाहिए। इसीलिए 'वृषाकपि'—इस नाम के सूक्त का प्रकार-विशेष प्राप्त होता है। उन ['पारिक्षिती' ऋचाओं] में न्यूङ्ख भी न करे। किन्तु विशेष रूप से निनर्दन मात्र करे। वही [निनर्दन] उन [ऋचाओं] का न्यूङ्ख स्थानीय है।

ऋगन्तराणि विधत्ते—

**कारव्याः शंसति ॥ इति**

कारुशब्दोपेता 'कारव्या.', 'इन्द्रः कारुमबूबुधद्'–इत्याद्याश्चतस्र.[1] शंसेद् ॥

['कारु' शब्द से युक्त] कारव्य ['इन्द्रः कारुमबूबुधद्' आदि] ऋचाओं का शंसन करता है।

ताः प्रशंसति

**देवा वै यत्किंच कल्याणं कर्माकुर्वंस्तत् कारव्याभिराप्नुवंस्तथैवैतद् यजमाना यत्किंच कल्याणं कर्म कुर्वन्ति, तत् कारव्याभिराप्नुवन्ति ॥ इति।**

'कल्याणं' शास्त्रनार्थं कर्म कृतवन्तः कारव्याभिस्तत्फलमप्राप्तवन्तः ॥

[काम्य फल के लिए] देवों ने जो कुछ भी कल्याण का कार्य किया वह [सब कुछ फल उन्होंने] कारव्य ऋचाओं से ही प्राप्त किया उसी प्रकार यजमान भी जो कुछ कल्याण का कार्य करते हैं [उसके फल को वे] उन कारव्य ऋचाओं के द्वारा प्राप्त करते हैं।

विग्रहादिक विधत्ते—

**ताः प्रग्राहं शंसति, यथा वृषाकपिं; वार्षाकपं हि वृषाकपेरेतन्न्यायमेति, तासु न न्यूङ्खयेन्नो चीव नर्देत, स हि तासां न्यूङ्खः ॥ इति।**

---

1. ऋ० परि० २४१-४।

पूर्ववद् व्याख्येयम्[1] ॥

उन [कारव्य] ऋचाओं का शंसन पाद-पाद के अवसान पर करता है, जैसा कि वृषाकपि सूक्त का शंसन करता है वैसा ही, क्योंकि उन ऋचाओं के शंसन का वृषाकपि से सम्बन्ध करना चाहिए [इसीलिए 'वृषाकपि' इस नाम के सूक्त का प्रकार प्राप्त होता है। उन [कारव्य ऋचाओं] में न्यूङ्ख न करे। किन्तु विशेष रूप से निनर्दन मात्र करे। वही [निनर्दन] उन [ऋचाओं] का न्यूङ्ख स्थानीय है।

ऋगन्तराणि विधत्ते—

दिशाक्लृप्तीः शंसति, दिश एव तत्कल्पयति ॥ इति।

'य सभेयो विदथ्य' इत्याद्या ऋचः[2] दिशांक्लृप्ती शंसेत्। प्राच्यादिदिग्वत्पञ्च सङ्ख्योपेतत्वात्। 'ते देवा प्रागकल्पयन्निति' क्लृविधातुश्रवणाच्च दिशाक्लृप्तित्वम्। तच्छंसनेन दिश एव 'कल्पयति' स्वप्रयोजनक्षमा करोति ॥

[य: सभेयो' आदि ऋचा का, जो प्राची आदि पाँच दिशाओं के समान पाँच संख्या से युक्त है, और 'ते देवा प्रागकल्पयन्' आदि ऋचा का, जो क्लृप् धातु से युक्त है, उन] 'दिशाक्लृप्ती' नामक ऋचाओं का शंसन करता है। इस प्रकार उस [शंसन] से वह दिशाओं को ही स्वप्रयोजन समर्थ बनाता है।

तासामृचां सङ्ख्यां दर्शयति—

ता: पञ्च शंसति, पञ्च वा इमा दिशश्चतस्रस्तिरश्च्य एकोर्ध्वा ॥ इति।

दिशांक्लृप्तिसंज्ञकास्ता ऋच पञ्च शंसेत् यथमा उपलभ्यमानाश्च। दिश पञ्च सङ्ख्याका एव। ऐन्द्री, याम्यो वारुणी सौमी, चेत्येव तिरश्च्य' तिर्यगवस्थिता दिशश्चतस्र, ऊर्ध्वं चैका। इत्थं पञ्चसङ्ख्योपपद्यते ॥

उन पाँच [दिशांक्लृप्ती संज्ञक] ऋचाओं का शंसन करता है, क्योंकि ये दिशाएँ भी पाँच ही हैं, अर्थात् तिरछे रूप से अवस्थित [इन्द्र सम्बन्धी, यम सम्बन्धी, वरुण सम्बन्धी और सोम सम्बन्धी] चार दिशाएँ होती हैं और एक ऊपर की दिशा [मिलकर कुल पाँच दिशाएँ हैं]।

न्यूङ्खनिनर्दौ निषेधति—

तासु न न्यूङ्ख्येन्नैव च निनर्देन्नेदिमा दिशो न्यूङ्खयानीति ॥ इति।

'तासु' दिशाक्लृप्तिषु न्यूङ्ख न कुर्यात्। तथा निनर्दमपि नैव कुर्यात्। 'एव' 'चेति' पदद्वय विषययो समुच्चयार्थम्। न्यूङ्खवर्जने कोऽभिप्राय ? सोऽभिधीयते—इमा दिशो 'नेत् न्यूङ्खयानि' नैव चालयानि'इति' अनेनाभिप्रायेण। न्यूङ्खनिनर्दयोर[न]-भिधानादेव वर्जनसिद्धौ निषेधो नित्यानुवाद। पूर्वमत्रदृष्टत्वेन शङ्कितयोर्निषेधार्थो वा ॥

---

१ 'चतुर्दश्याम् (कारव्यचतुर्थ्याम्) एकेन द्वाभ्यां च विग्रह '—इति आश्व० श्रौ० ८।३।१२।

२ ऋ० परि० २५।१-५।

उन ऋचाओं में न्यूङ्ख नहीं करना चाहिए और उनमें न तो निनर्द न ही करे, जिससे कि ये दिशाएं चलायमान न होवें।

शंसने विशेषं दर्शयति—

ता अर्धर्चशः शंसति, प्रतिष्ठाया एव ॥ इति।

पूर्वासामृचां पादे पादेऽवसाय शंसनमुक्तम्। तास्तु दिशाक्लृप्तीरर्धर्चेऽर्धर्चेऽवसायं शंसेत्। अर्धर्चस्य प्रत्यृचं द्वित्वात्तच्छंसनं प्रतिष्ठायै सम्पद्यते[1] ॥

पूर्व ऋचाओं के समान पाद-पाद के अवसान पर शंसन न करके उन [दिशाक्लृप्ती] ऋचाओं का अर्धर्च के अवसान पर शंसन करता है। यह शंसन [प्रतिऋचा में अर्धर्च के द्वित्व होने से] प्रतिष्ठा के लिए ही होता है।

ऋगन्तराणि विधत्ते—

जनकल्पाः शंसति, प्रजा वै जनकल्पा, दिश एव तत्कल्पयित्वा तासु प्रजाः प्रतिष्ठापयति ॥ इति।

'योऽनाक्ताक्ष' इत्याद्याः षड्ऋचो जनकल्पाभिधाः[2] शंसेत्। अनाक्ताक्ष इत्यादिना पुरुषविशेषानुकम्प्यते[3]। ता कल्पेषु[4] कल्पशब्दाभिधानादेव 'जनकल्पा', तासां प्रजारूपत्वात्। पूर्वोक्तदिग्रूपाभिर्ऋग्भिर्दिशः सम्पाद्य 'तासु' दिक्षु प्रजाः प्रतिष्ठापयति ॥

['योऽनाक्ताक्ष' आदि] जनकल्प नामक ऋचाओं का शंसन करता है। [उन जनकल्प नामक ऋचाओं में उक्त] 'जनकल्प' प्रजा ही है। इस प्रकार [पूर्वोक्त दिक् रूपी ऋचाओं से दिशाओं का ही सम्पादन करके वह] उन [दिशाओं] में प्रजाओं को प्रतिष्ठित करता है।

पूर्ववन्न्यूङ्खनिनर्दनिषेधमर्धर्चेऽवसानं च दर्शयति—

तासु न न्यूङ्खयेन्नैवं च निनर्देन्नेदिमाः प्रजा न्यूङ्खयानीति; ता अर्धर्चशः शंसति, प्रतिष्ठाया एव ॥ इति।

उनमें न्यूङ्ख नहीं करना चाहिए और न तो निनर्द न ही करे, जिससे कि ये दिशाएँ चलायमान न होवें। उनका अर्धर्च के अवसान पर शंसन करता है, जो प्रतिष्ठा के लिए ही होता है।

ऋगन्तराणि विधत्ते—

इन्द्रगाथाः शंसतीन्द्रगाथाभिर्वै देवा असुरानभिगायायैनानत्यायंस्तथैवैतद् यजमाना इन्द्रगाथाभिरेवाप्रियं भ्रातृव्यमभिगायायैनमतियन्ति ॥ इति।

1. सूच्यते हि—'देवोऽर्धर्चश.'—इति आश्व० श्रौ० ८.३.१३।
2. शा० परि० २.६.१–६।
3.४. जनकल्पाभिधासु ऋक्षु द्रष्टव्यम्।

यदिन्द्रादो दाशराज्ञे' इत्याद्या पञ्चर्चं इन्द्रगाथाभिधा १ शंसेत् । इन्द्रो गाध्यते बध्यते यास्वृक्षु ताः इन्द्रगाथा । ताभिर्देवा असुरानभिगाय योद्धुमाभिमुख्येन प्राप्य युद्धेनैनान् अत्यायन् अतिक्रान्तवन्त जय प्राप्ता इत्यर्थ । देववद् यजमाना अप्येता भिर्वैरिणं जयन्ति ॥

[जिन ऋचाओं में 'इन्द्र' कहे गए हैं उन 'यदिन्द्रादो दाशराज्ञे' आदि पाँच ऋचाओं से युक्त] इन्द्रगाथा नामक ऋचाओं का शंसन करता है। वस्तुत इन्द्रगाथा नामक ऋचाओं के द्वारा ही देवों ने असुरों को युद्ध के लिए अभिमुख पाकर इनका अतिक्रमण कर दिया अर्थात् उन पर विजय प्राप्त की। उसी प्रकार ये यजमान भी इन्द्रगाथा नामक ऋचाओं से ही अप्रिय शत्रु को युद्धार्थ अभिमुख पाकर इनका अतिक्रमण कर देते हैं।

पूर्ववदर्धर्चावसान विधत्ते—

ता अर्धर्चश शंसति, प्रतिष्ठाया एव ॥ ३२ ॥ इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये षष्ठ पञ्चिकाया पञ्चमाध्याय (त्रिंशाध्याये) षष्ठ खण्ड ॥ ६ ॥ (३२) [११९]

उन [इन्द्रगाथा नामक] ऋचाओं का अर्धर्च के अवसान पर शंसन करता है जो प्रतिष्ठा के लिये ही होता है।

॥ इस प्रकार तीसवें (पाँचवें) अध्याय के छठवें खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तम खण्ड

कुन्तापनामक निगद्य सूक्त विधायैतशप्रलापनामकं सप्ततिसंख्याकं[2] पदसमूह विधत्ते—

ऐतशप्रलाप शंसति ॥ इति ।

ऐतशाख्येन मुनिना दृष्ट ऐतश । अर्थवितानामर्थेना वचसा संलाप प्रलाप । तं ब्राह्मणाच्छंसी शंसेत् ॥

४ ३३ [xxx ७] [ब्राह्मणाच्छंसी] एतशप्रलाप [नामक सत्ताइस पद समूह] का शंसन करता है।

---

१ ऋ० परि २ ७ १-५ ।

२ ( ) एता अश्वा आप्लवन्त इति सप्ततिपदानि—इत्यादीनि आश्व० श्रौ० ८ ३ १४ १७ । सप्ततिपद शाखान्तरे क्वचित् पदसप्ततिपदानि सन्तीति प्रदर्शनार्थम् इति तद्वृत्तौ नारायण । (१) तु० अथर्व० २० १२९ १ ।

तमेतम्प्रलापं स्तोतुमाख्यायिकामाह—

**ऐतशो ह वै मुनिरग्नेरायुर्ददर्श यज्ञस्यायातयाममिति हैक आहुः; सोऽब्रवीत् पुत्रान्—पुत्रका अग्नेरायुरदर्शं, तदभिलपिष्यामि, यत्किंच वदामि, तन्मे मा परिगातेति, स प्रत्यपद्यतैता अश्वा आप्लवन्ते, प्रतीपं प्रातिसत्वनमिति ॥ इति ।**

ऐतशनामकः कश्चिन्मुनिः 'अग्नेरायु' इत्येतन्नामकं मन्त्रकाण्डं ददर्श । पूर्ववदग्नेः प्रियत्वात्तस्य काण्डस्याग्नेरायुरिति नाम सम्पन्नम् । 'एके' याज्ञिका 'यज्ञस्यायातयाममिति' अस्य मन्त्रकाण्डस्य नामधेयमाहुः । पुनः पुनः पठितैः सार्थकैर्मन्त्रजातैरलसो यज्ञो गतसारोऽभूत् । तस्य यज्ञस्यालस्यपरिहारेण सारोत्पादनादसम्बद्धप्रलापरूपस्य मन्त्रकाण्डस्य 'अयातयाममिति' नाम सम्पन्नम् । 'स' मुनिरैतशः स्वकीयान् 'पुत्रान्' प्रत्येवमब्रवीत्,— हे पुत्रका 'पुत्रिताः पुत्राः अहमग्नेरायुरित्येतन्नामकं मन्त्रकाण्डं दृष्टवानस्मि । तदहं भवतामग्रेऽभिलपिष्यामि । तस्मिन् सङ्गतार्थस्य कस्याप्यभावाद् यत्किंचिद् वाङ्मात्रं वदामि । 'तत्' मे वचनं यूयं 'मा परिगात' अस्य वचनस्य निन्दां मा कुरुत ।[1] एवं पुत्रान् मन्त्रयित्वा 'सः' मुनिः 'प्रत्यपद्यत' प्रलापं प्रारब्धवान् । सप्तविंशत्याख्यपदसमूहरूपे तस्मिन् 'एता अश्वा आप्लवन्ते' इति प्रथमं पदम् । 'प्रतीपं प्रातिसत्वनमिति' द्वितीयं पदम् । 'इति' शब्दः प्रदर्शनार्थः, इत्यादिकं सप्तविंशतिपदसमूहमुक्तवान्[2] ॥

ऐतश नामक किसी महर्षि ने 'अग्नेरायु' [नामक मन्त्रकाण्ड] का दर्शन किया [पहले की तरह अग्नि का प्रिय होने से उस काण्ड का नाम 'अग्नेरायुः' हुआ] । कुछ याज्ञिक उस [मन्त्रकाण्ड] का नाम 'यज्ञस्यायातयामम्' कहते हैं [पुनः पुनः पठित सार्थक-मन्त्रसमूहों से अलस यज्ञ गतसार हो गया । उस यज्ञ की अलसता को हटाने के कारण और उसमें सार उत्पन्न करने के कारण असम्बद्ध-प्रलाप रूप मन्त्रकाण्ड का नाम 'अयातयाम' हुआ] । उन [ऐतश मुनि] ने अपने पुत्रों से इस प्रकार कहा हे पुत्रो ! मैंने 'अग्नेरायु' [नामक मन्त्रकाण्ड] का दर्शन किया । उसका मैं आप लोगों के सामने प्रलाप करूँगा । [उसमें किसी भी संगत अर्थ के न होने से] जो कुछ भी मैं कहता हूँ; उन [मेरे वचनों] की तुम लोग निन्दा न करना । [इस प्रकार पुत्रों को आदेश देकर] उन [मुनि] ने प्रलाप आरम्भ किया । [सत्ताईस पद समूह रूप उन शब्दों में] 'एता अश्वा आप्लवन्ते' प्रथम पदसमूह है और 'प्रतीपं प्रातिसत्वनम्' द्वितीय पदसमूह है ।

---

१. अभिशापो यथैतेतिः प्राक् पुत्रादनुक्रमाने ।
'माहच्छोऽपि गुणा'त्वर्थं परिगानमितु निन्दने ॥ इति षड्गुरुशिष्यः ।

२. सूत्रे हि—'एता अश्वा आप्लवन्त इति सप्तविंशति पदानि'—इति आश्व० श्रौ० ८.३.१४ ।

तदीयपुत्रवृत्तान्त दर्शयति—

**तस्याभ्यग्निरैतशायन एत्याकालेऽभिहाय मुखमप्यगृह्णादद्पन्न पितेति ॥ इति ।**

तस्य मुखमित्यन्वय । ऐतशस्य पुत्र 'ऐतशायन' । स च 'अभ्यग्नि:' इत्येतन्नामक । एतादृश 'एत्य' प्रलपन्त पितर दृष्ट्वा सहसा समेत्य, तदानीम् 'अकाले' प्रलापसमाप्ति कालाभावेऽपि 'अभिहाय' आभिमुख्येनोत्थाय तस्य पितुर्मुखमपि 'अगृह्णाद्' हस्तेनाऽऽच्छा दितवान् । केनाभिप्रायेणेति ? सोऽभिधीयते— न 'अस्माक पिता तदानीम् अदृपद्' दर्प प्राप्त उन्मत्त इत्यभिप्रायेण ॥

ऐतश के पुत्र अभ्यग्नि ने [इस प्रकार से प्रलाप करते हुए अपने पिता को देखकर प्रलाप समाप्त न होने के पहले ही] असमय में ही सम्मुख उठकर उन [पिता] के मुख को हाथ से यह सोचकर बन्द कर दिया कि 'मेरे पिता पागल हो गए हैं।'

अथ मुनेर्वृत्तान्तमाह—

**त होवाचापेह्यलसोऽभूर्यो मे वाचमवधी शतायु गामकरिष्य, सहस्रायु पुरुष, पापिष्ठां ते प्रजां करोमि यो मेत्यमसक्था इति ॥ इति ।**

'तम्' अभ्यग्निनामक पुत्र मुखपिधाने प्रवृत्त पिता एव 'तम्' उवाच । हे पुत्र त्वम् 'अपेहि' अस्माद्देशादपगच्छ, अलसोऽभू मद्वाक्य श्रोतुमालस्ययुक्तस्त्वमभू । यस्त्व मे मदीया वाचम् 'अवधी' मुखपिधानेन विनाशितवानसि । अहमुन्मत्त इति तव बुद्धि, न त्वहमुन्मत्त, किंतु मन्त्रकाण्डमीदृशम् । सामर्थ्यं तु मदीय शृणु—अल्पायुष्य गा 'शतायु'[1] शतसवत्सरायुष्कम् 'अकरिष्य' कर्तुं शक्नोमि । तथा शतायु पुरुष सहस्रायु सहस्र सवत्सरायुष्क कर्तुं शक्नोमि । अतो मामवजानतस्ते 'प्रजा' पुत्रादिरूपां 'पापिष्ठाम्' अतिशयेन दारिद्र्यादिहेतुयुक्ता करोमि । यस्त्व मामित्थम् 'असक्था' अभिभूतवानसि । तस्मात्तव शापो युक्त इत्येव पितोवाच ॥

तब उस [अभ्यग्नि] से पिता ने इस प्रकार कहा—हे पुत्र, तुम इस स्थान से चले जाओ। मेरे वाक्यों को सुनने में तुमने आलस्य किया है। जो तुमने मेरी वाणी को [मुख बन्द करके] रोक दिया है [तुम यह सोचते हो कि मैं उन्मत्त हूँ किन्तु मन्त्रकाण्ड ही इस प्रकार है। अत मेरी सामर्थ्य सुनो]—अल्पायु गाय को मैं शतायु कर सकता हूँ और शतायु पुरुष को सहस्र वर्ष की आयु वाला बना सकता हूँ। [अत मुझे न जानने वाले] तुम्हारी पुत्रादि रूप प्रजा को मैं [दारिद्र्य रूप से] अत्यन्त पापी बनाता हूँ, क्योंकि तुमने मुझे इस प्रकार अत्यन्त अभिभूत किया है।

---

१ लुङि चेति वधादेशोऽन्यो लोप ऽट ईट् सिप ।
गा तु कुर्या शतायु सलोपश्छान्दस एव च ॥ इति षड्गुरुशिष्य ।

पितुः शापं लोकप्रसिद्धया द्रढयति—

**तस्मादाहुरभ्यग्नय ऐतशायना और्वाणां पापिष्ठा इति ॥ इति ।**

यस्मात्पित्रा शापो दत्तः 'तस्मात्' कारणात्तद्वृत्तान्ताभिज्ञा जना एवमाहुः । 'और्वाणाम्' और्वगोत्रोत्पन्नानां पुरुषाणां मध्ये 'ऐतशायनाः' ऐतशस्य मुनेः संबन्धिनः 'अभ्यग्नयः' अभ्यग्निप्रमुखाः पुरुषाः 'पापिष्ठाः' अत्यन्तपापयुक्ता[1] इति ॥

[क्योंकि पिता ने शाप दिया] इसलिए इस वृत्तान्त को जानने वाले इस प्रकार कहते हैं—'और्व गोत्र में उत्पन्न पुरुषों के मध्य ऐतश मुनि के सम्बन्धी अभ्यग्नि प्रमुख पुरुष अत्यन्त पाप युक्त होते हैं।'

ऐतशप्रलापस्य बाहुल्यं विधत्ते—

**तं हैके भूयांसं शंसन्ति ॥ इति ।**

'तम्' ऐतशप्रलापमभिज्ञाः केचिद्याज्ञिका अतिशयेन बहुलं शंसन्ति । तथा च आश्वलायन आह— षडिति पदान्यष्टादश वा'[2] इति ॥

उस ['ऐतश-प्रलाप'] का कुछ याज्ञिक बहुत शंसन करते हैं।

तत्र कंचिन्नियमं विधत्ते—

**स न निषेधेद् यावत्कामं शंसेत्येव ब्रूयादायुर्वा ऐतशप्रलापः ॥ इति ।**

'सः' यजमानः औत्सुक्येनैतशप्रलापं शंसन्तं ब्राह्मणाच्छंसिनं 'न निषेधेत्' मा भूयान् प्रलाप इति निषेधं न कुर्यात्, किंतु 'यावत्कामं' त्वदीयेच्छानुसारेण 'शंस' 'इत्येव' ब्रूयात् । अयमैतशप्रलापः, आयुःस्वरूपः, तस्मादस्य प्रवर्धमानस्य निषेधनं न युक्तम् ॥

[उत्सुकता से ऐतशप्रलाप करने वाले ब्राह्मणाच्छंसी को] वह [यजमान] न रोके किन्तु उसे यह कहना चाहिए कि 'जितनी इच्छा हो शंसन करो।' यह 'ऐतश-प्रलाप' आयु स्वरूप है। [अतः निषेध करना युक्तियुक्त नहीं है]।

वेदनं प्रशंसति—

**आयुरेव तद् यजमानस्य प्रतारयति य एवं वेद ॥ इति ।**

---

1. 'तस्मादैतशायना आजानेय्याः सन्तो भृगूणां पापिष्ठाः' इति शाङ्खा० ब्रा० ३०.५ ।
2. आश्व० श्रौ० ८.३.१४, १५ ।
3. अर्धर्चैतशप्रलापेऽत्र द्वौ पक्षौ शंसने स्मृतौ ।
   पदानि षडति यान्ताष्टादशं वा (पदं ?) दर्शयिष्यति ॥
   तत्र षडितिपक्षस्य पदेयत्तां ब्रवीति हि 'तं ... ब्रूयात्' इति । मुख्याय षडित-पदयुक्तं ऐतशप्रलापम्, प्रतिपदमर्धर्चवदं.। तथाहि । यावत्काममपेक्षितम् । अष्टादश द्वयम् । इति षड्गुरुशिष्यः ।

जो इस प्रकार जानता है वह उससे उस यजमान की आयु को ही बढ़ाता है।

एतेन पूज्यत्व दर्शयति—

यदेवैतशप्रलापा३' ॥ इति ।

[इसलिए] जो यह 'ऐतशप्रलाप' है वह अत्यन्त पूज्य है।

प्रकारान्तरेण प्रशसति—

छन्दसा हैष रसो यदेतशप्रलापश्छन्द स्स्वेव तद्रस दधाति ॥ इति ।

योऽयमैतशप्रलाप , स एष 'छन्दसा' वेदाना मध्य 'रस' सार । अत एतच्छसनेन 'छन्द सु' वदेष्वेव रसमवस्थापयति ॥

जो यह ऐतशप्रलाप है वह वेदों का सार है। अत इसके शसन से वेदों में ही वह रस को स्थापित करता है।

वेदन प्रशसति—

सरसैर्हास्य छन्दोभिरिष्ट भवति, सरसैश्छन्दोभिर्यज्ञ तनुते य एव वेद ॥ इति ।

पूर्ववद् व्याख्येयम् ॥

जो इस प्रकार जानता है उसका यज्ञ रसयुक्त छन्दों से इष्ट होता है और रसयुक्त छन्दों से यज्ञ का विस्तार होता है।

पुनरपि एतेन पूज्यत्व दर्शयति—

यद्देवैतशप्रलापा३. ॥ इति ।

उ अपि चत्यर्थ ॥

[इसलिए] जो यह 'ऐतशप्रलाप' है वह अत्यन्त पूज्य है।

प्रकारान्तरेण प्रशसति—

अयातयामा वा अक्षितिरैतशप्रलापोऽयातयामा मे यज्ञेऽसदक्षितिर्मे यज्ञेऽसदिति ॥ इति ।

योऽयमैतशप्रलाप , स 'यातयाम ।' 'यातयामत्वम्' असारत्व, तद्वैपरीत्यात् 'अयातयाम' सारयुक्त इत्यर्थ । अत एव 'अक्षिति' अक्षय्यफलहेतु । तस्मात्मे यज्ञे प्रयोगोऽयम् 'अयातयामोऽसत्' सरसोऽस्तु । तथा 'मे यज्ञे' प्रयोगोऽयम् 'अक्षिति' 'असत्' अक्षय्यफल हेतुत्वमभिप्रेत्य शंसेत् ॥

जो यह ऐतशप्रलाप है वह गतसार नहीं है अर्थात् सारयुक्त है। अत यह अक्षय्य फल का हेतु है। इसलिए वह इस अभिप्राय से शसन करे कि—'मेरे यज्ञ में यह प्रयोग सारयुक्त होवे, तथा मेरे यज्ञ में यह प्रयोग अक्षय्य फल का हेतु होवे।'

तस्मिन्नस्मिन् पदेऽवसान विधत्ते—

त वा एतमैतशप्रलाप शसति, पदावग्राहं यथा निविदम् ॥ इति ।

पदे पदेऽवगृह्य यथा निविदं शंसति, तथैवैतदैतशप्रलापं पदे पदेऽवगृह्यावगृह्य शंसेत् ॥

उस [असङ्गत] इस ऐतशप्रलाप का पद-पद के अवसान पर निविद् के ही समान शंसन करता है।

अन्ते प्रणवं विधत्ते—

तस्योत्तमेन पदेन प्रणौति, यथा निविदः ॥ इति ।

निविदः पदानां शंसने परमे पदे यथा प्रणवं करोति, तद्वदत्राप्युत्तमे पदे प्रणवं कुर्यात् ॥

जैसे निविद् [के पदों के शंसन] में [अन्तिम पद में प्रणव रखते हैं] वैसे ही इस [ऐतशप्रलाप] के अन्तिम पद में प्रणव [=ओ३म्] का उच्चारण करते हैं।

ऐतशप्रलापं विधाय प्रवह्लिकाख्या ऋचो विधत्ते—

प्रवह्लिकाः शंसति; प्रवह्लिकाभिर्वै देवा असुरान् प्रवह्ल्यायैनानत्यायं-स्तथैवैतद् यजमानाः प्रवह्लिकाभिरेवाप्रियं भ्रातृव्यं प्रवह्ल्यायैन-मतियन्ति ॥ इति ।

'विततौ किरणौ द्वौ'—इत्याद्याः षडनुष्टुभः[1] प्रवह्लिकाख्याः । पुरा किलैताभिर्ऋग्भि-र्देवा असुरान् प्रवह्ल्य अमनस्कं प्रियमुक्त्वा तांस्तानसुरानतिक्रम्यागच्छन् । प्रवह्लनं प्रह्लंदय सान्त्ववचनाभिमुखत्वान् । अमनःपूर्वेण प्रियवचनेन विरोधिनोऽसुरान् वञ्चयित्वा तदीयदेशमतिक्रम्य गतवन्त इत्यर्थः । तद्दृष्टान्तेन यजमानानामपि तथैव भवति[2] ॥

['विततौ किरणौ द्वौ'[3] आदि] प्रवह्लिका नामक [छः अनुष्टुप्] ऋचाओं का शंसन करता है। पहले इन प्रवह्लिका ऋचाओं से देवों ने अन्यमनस्क होकर किन्तु प्रियवचन कहकर उन [असुरों] का अतिक्रमण कर दिया [अर्थात् बिना मन से प्रिय वचन कहकर विरोधी असुरों को धोखा देकर उनके प्रदेश में चले गए]। उसी प्रकार ये यजमान भी इन प्रवह्लिका नामक ऋचाओं के द्वारा अप्रिय शत्रु को प्रवञ्चित करके इनका अतिक्रमण कर देते हैं।

सादृश्यार्थमर्धर्चावसानं विधत्ते—

ता अर्धर्चशः शंसति, प्रतिष्ठाया एव ॥ इति ।

अर्धर्चयोर्द्वित्वात् पादद्वयसाम्येन प्रतिष्ठात्वम् ॥

उनका शंसन अर्धर्च के अवसान पर करता है जो [अर्धर्च के द्वित्व होने से दो पादों की समानता के कारण] प्रतिष्ठा के लिए ही होता है।

---

1. ऋ० परि० ३.९.१-६। (अथर्व० २०.१३३.१-६)।
2. द्र० आश्व० श्रौ० ८.३.१८।
3. 'विततौ किरणाविति प्रवह्लिके'ति सर्वानुक्रमणी।

शाखान्तरगता। प्रवह्लिकाख्या ऋचो विधाय तथैव शाखान्तरगता आजिज्ञासेन्या ऋचो विधत्ते—

**आजिज्ञासेन्याः शंसत्याजिज्ञासेन्याभिर्वै देवा असुरानाज्ञायाथैनानत्याय-स्तथैवैतद् यजमाना आजिज्ञासेन्याभिरेवाप्रियं भ्रातृव्यमाज्ञायाथैनमति-यन्ति, ता अर्धर्चशः शंसति, प्रतिष्ठाया एव ॥ इति ।**

आकारोऽत्र अवज्ञार्थे वर्तते। आज्ञातुमवज्ञातुमिच्छा 'आजिज्ञासा', तामर्हन्तीति तत्साधनीभूता ऋच 'आजिज्ञासेन्या.'। आज्ञायासुराणामवज्ञां कृत्वेत्यर्थः । अन्यत्पूर्ववद् व्याख्येयम् । 'इहेत्थ प्रागपागुदग्' इति शाखान्तरपठितास्तस्र ऋच आजिज्ञासेन्या [1] ॥

['इहेत्थ प्रागपागुदग्' आदि शाखान्तर पठित चार] आजिज्ञासेन्य नामक (असुरों की अवज्ञा करने की साधन भूत) ऋचाओं का शंसन करता है। पहले इन आजिज्ञासेन्य ऋचाओं से देवों ने असुरों की अवज्ञा करके उनका अतिक्रमण कर दिया। उसी प्रकार ये यजमान भी इन आजिज्ञासेन्य नामक ऋचाओं से अप्रिय शत्रु की अवज्ञा करके उनका अतिक्रमण कर देते हैं। उनका शंसन अर्धर्च के अवसान पर करता है जो प्रतिष्ठा के लिए ही होता है।

तासां शंसनं विधाय प्रतिराधाख्यस्य मन्त्रस्य शंसन विधत्ते—

**प्रतिराधं शंसति, प्रतिराधेन वै देवा असुरान् प्रतिराध्याथैनानत्यायस्त-थैवैतद् यजमानाः प्रतिराधेनैवाप्रियं भ्रातृव्यं प्रतिराध्याथैनमति-यन्ति ॥ इति ।**

सूत्रे 'भुगित्यभिगत इति त्रीणि पदानि'इत्यादिना [2] यो मन्त्र उक्त, सोऽयं प्रति-राधः [3]। विरोधिनां राधं समृद्धिं प्रतिबध्नातीति प्रतिराधत्वम् । [4] असुरान् प्रतिराध्य' तदीयां समृद्धिं प्रतिबध्येत्यर्थः ॥

प्रतिराध नामक [विरोधियों की समृद्धि में बाधक] मन्त्रों का शंसन करता है। प्रति-राध मन्त्रों के द्वारा ही देवों ने असुरों की समृद्धि को रोक कर उनका अतिक्रमण कर दिया। उसी प्रकार ये यजमान भी इन प्रतिराध मन्त्रों से अप्रिय शत्रु की समृद्धि को अवरुद्ध करके उनका अतिक्रमण कर देते हैं।

---

१ ऋ० परि० २ १० १–४। (अथर्व० २० १३४ १–४)।

२ आश्व० श्रौ० ८ ३ २२।

३ ऋ० परि० २ ११ १।

४ यथापठितमिति शेष । सूत्र्यते हि—भुगित्यभिगत इति त्रीणि पदानि सर्वाणि यथा निशान्तम्,—इति ।
पदत्रय भुगित्यादि प्रतिराधाख्यमुच्यते ।
प्रतिराधः=अभिभव । इति षड्गुरुशिष्य ।

प्रतिराधाख्यं शाखान्तरगतं मन्त्रं विधाय, 'अतिवादाख्यं शाखान्तरगतमेव[1] मन्त्रं विधत्ते—

**अतिवादं शंसत्यतिवादेन वै देवा असुरानत्युद्यायैनानत्यायंस्तथैवैतद् यजमाना अतिवादेनैवाप्रियं भ्रातृव्यमत्युद्यायैनमतियन्ति; तमर्धर्चशः शंसति, प्रतिष्ठाया एव ॥ ३३ ॥ इति ।**

'वीमे देवा अक्रंसत'—इत्याद्यनुष्टुप्शाखान्तरपठितोऽतिवाद इत्युच्यते[3]। विरोधिनां सत्कारमतिलङ्घ्याधिक्षेपरूपो वादः 'अतिवादः'। तत्साधनत्वादुक्तमन्त्रोऽतिवाद इत्युच्यते। 'अत्युद्य' अतिक्रम्योक्त्वाऽधिक्षिप्येत्यर्थः। अन्यत्पूर्ववद् व्याख्येयम्[4] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ-पञ्चिकायां पञ्चमाध्याये (त्रिंशाध्याये) सप्तमः खण्डः ॥ ७ ॥ (३) [१२०]

अतिवाद संज्ञक [शाखान्तर पठित 'वीमे देवा' आदि] मन्त्रों का शंसन करता है। अतिवाद [=विरोधियों के सत्कार का अतिलङ्घन कर उन्हें अपशब्द कहने वाले] मन्त्रों के द्वारा देवों ने असुरों को खरी-खोटी सुनाकर उनका अतिक्रमण कर दिया। उसी प्रकार ये यजमान भी इन अतिवाद संज्ञक मन्त्रों से अप्रिय शत्रु को खरी-खोटी सुनाकर उनका अतिक्रमण कर देते हैं। उनका अर्धर्च के अवसान पर शंसन करता है, जो प्रतिष्ठा के लिए ही होता है।

॥ इस प्रकार तीसवें (पाँचवें) अध्याय के सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथ अष्टमः खण्डः

अथ देवनीथाख्यं सप्तदशानां पदानां समूहं विधत्ते—

**देवनीथं शंसति ॥ इति ।**

सूत्रकारेण 'आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन्निति सप्तदश पदानीति'[5] योऽयं पदसमूह उदाहृतः, सः 'देवनीथः',[6] देवलोकनयनहेतुत्वात् ॥

---

१.२. शाखान्तरगतमन्त्रस्य विधाने कृत्स्नपाठापेक्षितस्तच्छाखायामेव सम्प्रदायप्राप्तोऽभिमतम्, यदा पठ्यते चेद् सर्वत्रैव। दृश्यते चानयोः पाठः परिशिष्टग्रन्थे कुन्तापाध्याये। आश्वलायनेनापि नायं प्रपठ्य विहितः, प्रत्युत प्रतीकग्रहण एव कृतः (आश्व० श्रौ० ८. ३. २२, २३)। तदिमौ मन्त्रौ न शाखान्तरीयावित्यस्माकम् अभिप्रायः।

३. ऋ० परि० २. १२. १ ।

४. 'वीमे देवा अक्रंसतेत्यनुष्टुप्'—इति आश्व० श्रौ० ८. ३. २३, २४ ।

५. आश्व० श्रौ० ८.३.२५ । ६. ऋ० परि० २.११.१-१७ ।

VI.३४[XXX ८] देवनीथ नामक [देवलोक को जाने में सहायक 'आदित्या ह जरितर्ङ्गिरोभ्य.' आदि शाखान्तर पठित सत्ताइस पदों के समूह रूप] मन्त्रों का शासन करता है।

त प्रशंसितुमाख्यायिकामाह—

**आदित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त,—वय पूर्वं एष्यामो वयमिति, ते हाङ्गिरस पूर्वे श्व. सुत्यां स्वर्गस्य लोकस्य ददृशुस्तेऽग्निं प्राहिण्युरङ्गिरसा वा एकोऽग्नि परे ह्यादित्येभ्य श्व सुत्या स्वर्गस्य लोकस्य प्रब्रूहीति, ते हाऽऽदित्या अग्निमेव दृष्ट्वा सद्य. सुत्या स्वर्गस्य लोकस्य ददृशुस्तानेत्याब्रवीच्छ्व सुत्या व स्वर्गस्य लोकस्य प्रब्रूम इति, ते होचुरथ वय तुभ्यं सद्य सुत्या स्वर्गस्य लोकस्य प्रब्रूमस्त्वयैव वय होत्रा स्वर्गं लोकमेष्याम इति, स तथेत्युक्त्वा प्रत्युक्त पुनराजगाम ॥ इति।**

आदितेः पुत्रा 'आदित्या' देवा, 'अङ्गिरस' महर्षय। ते द्विविधा स्वर्गे लोके सति परस्परमस्पर्धन्त। तत्राऽऽदित्या एवमुक्तवन्त,—वयमेव 'पूर्वे' प्रथम प्रवृत्ता सोमयागमनुष्ठाय स्वर्गमेष्याम इति। तथाऽङ्गिरसोऽपि वयमेव पूर्वे प्रथम प्रवृत्ता स्वर्गं गमिष्याम इत्यवोचन्। तदानी 'ते' अङ्गिरसो महर्षय 'पूर्वे' प्रथम प्रवृत्ता सन्त स्वर्गस्य लोकस्य निमित्तभूता 'सुत्या' सोमाभिषव 'श्वो ददृशु' परेद्यु करिष्याम इति निश्चितवन्त। निश्चित्य च 'ते' अङ्गिरस आदित्याना समीपे स्वकीयमग्नि 'प्राहिण्यु' प्रहितवन्त इत्यर्थ। अङ्गिरसामेव महर्षीणा मध्येऽग्निनामको महर्षिरेकोऽस्ति, त प्रत्येवमुक्तवन्त। हे अग्ने! त्व 'परेहि' परागच्छ। आदित्याना समीप गत्वा 'श्व सुत्या' परेद्युरस्माभि करिष्यमाण सोमयाग, स्वर्गस्य लोकस्य निमित्तभूतम्, आदित्येभ्य प्रब्रूहि। हे आदित्या! परेद्युरङ्गिरस सुत्या करिष्यन्ति। यूयमागत्याऽऽर्त्विज्य कुरुतेति कथयेत्यर्थ। 'ते' त्वादित्या दूरादागच्छन्तमग्नि दृष्ट्वैव तदभिप्रायमवगत्य भविष्यतस्तदीययागात् पूर्वमेव स्वर्गस्य लोकस्य साधनभूता 'सद्य सुत्याम्' अद्यतनसोमयाग कर्मविशेष 'ददृशु.' निश्चितवन्त[१]। तदानीमग्नि. 'तान्' आदित्यान् 'एत्य' प्राप्य इद वचनमब्रवीत्,—हे आदित्या स्वर्गस्य लोकस्य साधन भूता श्व. सुत्यामङ्गिरोभि करिष्यमाणा 'व' युष्मभ्य 'प्रब्रूम' अह प्रब्रवीमि—यूयमागत्याऽऽर्त्विज्य कुरुतेति। तत: 'ते' आदित्या अग्निमूचु। 'अथ' त्वद्वचनश्रवणान् तर वय तुभ्य ब्रूम—स्वर्गस्य लोकस्य साधनभूता सुत्याऽस्माभि सद्य क्रियते। तस्मादिदानीमागतेन त्वयैव 'होत्रा' आर्त्विज्य कुर्वता सह वय प्रथमत स्वर्गलोकमेष्याम इति। सोऽग्निस्तथेत्युक्त्वा 'प्रत्युक्त' तैरादित्यैरुक्त प्रतिवचन प्राप्त, स्वकीयानामङ्गिरसा समीपमाजगाम ॥

---

१. तथा यज्ञ दृष्टवन्त ऋषयोऽङ्गिरसस्तदा।
दीक्षापसदमद्य स्यात् सुत्या श्वो भवितेति हि ॥ इति षड्गुरुशिष्य।

[अदिति के पुत्र] आदित्य देवों और महर्षि अङ्गिरसों के मध्य स्वर्गलोक में परस्पर स्पर्धा हो गई कि 'हम पहले [सोम याग का अनुष्ठान करके स्वर्ग] जायेंगे, हम.....।' तब उन अङ्गिरसों ने प्रथमतः प्रवृत्त होकर स्वर्ग लोक के निमित्तभूत सोमाभिषव को कल करेंगे—ऐसा निश्चय किया। फिर उन अङ्गिरसो ने [आदित्यों के समीप अपनी] अग्नि प्रज्वलित की। अङ्गिरसों के मध्य एक अग्नि नामक महर्षि हैं। उनसे अङ्गिरसों ने कहा—'हे अग्नि ? तुम वहाँ जाओ और आदित्यों के समीप जाकर कल हम लोगों के द्वारा स्वर्ग लोक के निमित्तभूत किए जाने वाले सोमयाग को कहो [कि हे आदित्यों! कल अङ्गिरस सोमाभिषव करेंगे। आप लोग आकर ऋत्विज कर्म करें]। उन आदित्यों ने [दूर से ही आते हुए] अग्नि को देखते ही [उनके अभिप्राय को जानकर कल होने वाले उनके यज्ञ से पूर्व में ही] स्वर्गलोक के साधनभूत सद्यः सोमयाग को [उसी समय] करने का निश्चय किया। तब उन [आदित्यों] के पास आकर अग्नि ने कहा - हे आदित्यो, अङ्गिराओं द्वारा कल अनुष्ठित होने वाले स्वर्ग लोक के साधनभूत सोमाभिषव को मैं आप से कहता हूँ [कि आप आकर उसमें ऋत्विज कर्म करें]। उन [आदित्यों] ने कहा—अब स्वर्गलोक के साधनभूत हमारे द्वारा आज ही किए जाने वाले सोमयाग को हमलोग तुमसे कहते हैं। [इसलिए यहाँ आए हुए] आपके ही साथ ऋत्विजकर्म करते हुए हम लोग [पहले] स्वर्ग लोक जाएँगे। वह अग्नि 'वैसा ही हो'—इस प्रकार कहकर [आदित्यों से] प्रत्युत्तर प्राप्त करके पुनः [अङ्गिरसों के मध्य] आए।

अङ्गिरसामग्नेश्च परस्पर संवादं दर्शयति—

**ते होचुः प्रावोचा३ः इति; प्रावोचमिति होवाचाथो मे प्रतिप्रावोचन्निति; नो हि न प्रत्यज्ञास्था३ः इति; प्रति वा अज्ञासमिति होवाच ॥ इति ।**

'ते' चाङ्गिरसस्तमग्निमूचुः,—हे अग्ने! त्वमादित्यानामग्रे किमस्मदीयमभिप्रायं प्रावोचाः इति। प्लुतिः प्रश्नार्था। सोऽग्निस्तमभिप्रायं प्रावोचमित्युक्त्वा पुनरप्येतदुवाच—अथो अनन्तरं 'मे' मम 'प्रतिप्रावोचन्' ते आदित्याः प्रत्युत्तरमेवमुक्तवन्त इति। तदं या-गुरिमनुदितवान्। तामुक्तिं श्रुत्वा तेऽङ्गिरस एवं पप्रच्छुः। हे अग्ने! 'नो हि न प्रत्यज्ञास्थाः' प्रतिज्ञानमार्त्विज्याङ्गीकारः, तन्निषेधोऽनङ्गीकारः। तस्यापि निषेधोऽस्मा-दङ्गीकारः, किं त्वदीयमार्त्विज्यं परिहृत्याङ्गीकृतवानसि? प्लुतिः प्रश्नार्था। ततोऽग्निरहं तत् 'प्रत्यज्ञासमेव' प्रतिज्ञामङ्गीकारं कृतवानेवेत्युक्तवान् ॥

उन [अङ्गिराओं] ने [अग्नि से] कहा—हे अग्नि! क्या तुमने हम लोगों के अभिप्राय को आदित्यों के समक्ष बता दिया? 'हाँ कह दिया'—इस प्रकार कहकर पुनः [अग्नि ने] कहा—आदित्यों ने मुझे इस प्रकार प्रत्युत्तर भी दिया। [तब उस उक्ति को सुनकर उन अङ्गिरसों ने पूछा—हे अग्नि! क्या तुमने हम लोगों का आर्त्विज्य स्वीकार नहीं किया था? अग्नि ने कहा—'हाँ हमने स्वीकार तो किया था।'

अङ्गिरसामनभीष्टस्यापि स्वकीयार्त्विज्यस्याङ्गीकारे युक्तिं दर्शयति—

**यशसा वा एषोऽभ्यैति य आर्त्विज्येन, तं य प्रतिरुन्धेद् यश स प्रति रुन्धेत्, तस्मान्न प्रत्यरौत्सीति ॥ इति ।**

'य' पुमानार्त्विज्यन चरति, एष पुमान् यशसैव युक्त 'अभ्येति' अभित सचरति । आर्त्विज्यमत्यन्त यशस्करमित्यर्थ । 'य' पुमान् परेण प्रार्थितमार्त्विज्य परित्यज्य 'त' तदीययाग 'प्रतिरुन्धेत्' यागस्य प्रतिरोध कुर्यात् स पुमान् स्वकीय यश एव प्रतिरुन्धेत्' विनाशयेत् । 'तस्मात् कारणादह 'न प्रत्यरौत्सि'[1] तदीययज्ञस्य प्रतिरोध न कृतवानस्मि, किंत्वाऽऽर्त्विज्य ममाङ्गीकृतमिति ॥

**[किन्तु उनके आर्त्विज्य को स्वीकार करने का यह कारण था कि] जो पुरुष आर्त्विज्य को ग्रहण करता है वह यश से युक्त होकर चारो ओर सचरण करता है [अर्थात् आर्त्विज्य अत्यन्त यशस्कर है] और जो पुरुष दूसरे से प्रार्थित आर्त्विज्य का परित्याग करके उसके यज्ञ में विघ्न डालता है, वह व्यक्ति अपने ही यश का विनाश करता है । इसलिए हमने उनके यज्ञ का प्रतिरोध नहीं किया ।**

तर्हि कीदृशे विषये परिहृतव्यार्त्विज्यमित्याशङ्क्य परिहारयोग्य विषय दर्शयति—

**यदि त्वस्मादपोज्जिगासेद्, यज्ञेनास्मादपोदियात् । यदि त्वयाज्य. स्यय- मपोदित तस्मात् ॥ ३४ ॥ इति ।**

पूर्वत्राऽऽर्त्विज्य परिहर्तुमशक्यमित्युक्तम्, तद्वैलक्षण्यार्थ 'तु' शब्द । यदि कथचिद् 'अस्माद्' आर्त्विज्यात् 'अपोज्जिगासेत्' अपेत्योद्गन्तुमिच्छेत्, तदानीं 'यज्ञेन' स्वकीयेन निमित्तभूतेन अस्माद्' आर्त्विज्याद् 'अपोदियाद्' अपक्रम्योद्गच्छेत् । यस्मिन् दिने त्व यज्ञ करिष्यसि, तस्मिन्नेवाहमपि करिष्यामीत्युक्त्वा तदार्त्विज्य परिहर्तुं शक्यम् । एक- कालीनस्वकीयानुष्ठानमेक, परिहारनिमित्तम् । निमित्तान्तरमप्युच्यते । 'यदि तु' यदि कथचिद् 'अयाज्य' यागार्थो पुरुष शास्त्रनिषेधाद्यष्टुमयोग्य स्यात्, तादृशादयाज्यात्

---

१ (i) त=लाभम्, प्रतिरोध=बाध रुन्ध्यादिति प्राप्ते रुन्धेदिति छान्दसम् । अरौत्सि= लुङ्, 'इरितो वे ति सिच् । अस्मादार्त्विज्यादुद्गन्तुमिच्छेच्चेत् । जिगमिषदिति प्राप्ते छन्दस्त्वाद् जिगासेत् । यज्ञेन स्वकेन अप उदियात् गलेत् ।

युष्मद्यज्ञो यत्र काले मया तत्रैव यक्ष्यते ।

इत्यतोऽपगम कुर्यादार्त्विज्ये निस्पृह सुधी ॥ इति षड्गुरुशिष्य ।

अयाज्यो वर्जितो गृह्ये स्वष्ट सूत्र्या महात्मना—

(ii) 'न्यस्तमार्त्विज्यमकार्यम् । अहीनस्य । नीचदक्षिणस्य । व्याधितस्य । आतुरस्य । यक्ष्मगृहीतस्य । अनुदेश्यामिशस्तस्य । क्षिप्रयोने इति । चैतापाम् —इति । (आ०गृ० सू० १ २० १७—१९) 'अयाज्योऽनधीयान '—इति चापस्तम्ब. (धर्म २ १० १०) 'प्रवराज्ञोऽयाज्य'—इति च बोधायन ।

पुरुषात् स्वकीयमार्त्विज्यं 'स्वयमपनोदितं शास्त्रेणैव निषिद्धम् । तादृशे विषये नास्त्यार्त्विज्य-परिहारदोष इत्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षड्-पञ्चिकायाः पञ्चमाध्याये (त्रिंशाध्याये) अष्टमः खण्डः ॥ ८ ॥ (३४) [१२१]

यदि कोई यज्ञ का आर्त्विज्य अपने ही यज्ञ में उस समय संलग्न होने के कारण स्वीकार न करना चाहे तो वह [उसी समय होने वाले] इस [यज्ञ] के आर्त्विज्य को अस्वीकार करे [अर्थात् जिस दिन तुम यज्ञ करोगे, उसी दिन हम भी यज्ञ करेंगे यह कहकर उसके आर्त्विज्य को अस्वीकृत कर दे]। अथवा यदि किसी प्रकार याजार्थी पुरुष [शास्त्र के निषेध से] अनुष्ठान करने के योग्य ही न हो। तब तो उस अयाज्य पुरुष के आर्त्विज्य को शास्त्र ही निषिद्ध कर देता है [अर्थात् उस स्थिति में उसके आर्त्विज्य के अस्वीकार कर देने में कोई दोष नहीं है]।

॥ इस प्रकार तीसवें (पाँचवें) अध्याय के आठवें खण्ड की हिन्दी पूर्ण हुई ॥ ८ ॥

## अथ नवम खण्डः

योऽयं देवनीथ पूर्वमुक्त तस्य स्तुत्यर्थं कथाऽपि पूर्वं किंचित्यपि दर्शिता। तत्रापरेयं देवनीथप्रतिपाद्यावगतिकामाय दर्शयति—

ते हाऽऽदित्यानङ्गिरसोऽयाजयंस्तेभ्यो याजयद्भ्य इमां पृथिवीं पूर्णां दक्षिणानामददुस्तानियं प्रतिगृहीताऽतपत्, तान्न्यवृञ्जन् सा सिंही भूत्वा विजृम्भन्ती जनानचरत्, तस्याः शोचत्या इमे प्रदराः प्रादीर्यन्त येऽस्या इमे प्रदराः, समेव हैव ततः पुरा ॥ इति ।

अङ्गिरसां मध्ये य एकोऽग्निः सोऽयमादित्यानां यागे आर्त्विज्यमङ्गीचकार। तमङ्गीकारमनुसरन्तस्ते सर्वे अङ्गिरसो गत्वा तानादित्यानयाजयन्। याजयद्भ्यः 'तेभ्यो' अङ्गिरोभ्य ऋत्विग्भ्यः आदित्याः इमां पृथिवीं 'पूर्णां' चतुःसागरपरिवेष्टिताम् 'अददुः' दत्तवन्तः। कदा ? दक्षिणाकाले—इति शेषः। माध्यन्दिने हि सवने दक्षिणा नीयते। तस्मिन् काले दक्षिणार्थं दत्ता च 'इयं' पृथिवी तैरङ्गिरोभिः प्रतिगृहीता सती, 'तान्' परिग्रहीतॄन् 'अतपत्' तापयुक्तानकरोत्। तदानीमङ्गिरसः 'तां' पृथिवीं 'न्यवृञ्जन्' नितरां वर्जितवन्तः।[1] तैरङ्गिरोभिः परित्यक्ता सा पृथिवी सिंहरूपयुक्ता भूत्वा 'विजृम्भन्ती'[2] विरः

१. नि=दूरम्। अवृञ्जन्=लङ्, 'श्नसोरल्लोपः।' श्रीमद्भागवते—
सिंही भूत्वा ततो भूमिः कम्पयन्ती सदाङ्गिरम्।
अभ्यधावज्जनान् दशनादायादाय धावतः॥
तस्या भुवः सिंह्याः शोचन्त्याः = चतुर्भुज शोचन्त्याः। मध्यालामनिर्गमात् प्रदराः = स्फोटाः, 'दॄ विदारणे' इत्यस्य प्रादीर्यन्त, दरार्थं गताः, तृणादिभिर्वन्यर्थः, अभवन्। इति

२. षड्गुरुशिष्यः, विजृम्भन्ती=विजृम्भमाणगात्रा संरम्भसरत्वात्' इति गोविन्दस्वामी।

कम्पयन्ती, वेगेन धावन्ती, पुरतोऽवस्थितान् 'जनान् अचरद्' अभक्षयत्। तदानीं भीत्या सर्वेषु जनेषु पलायितेषु 'शोचत्या' क्षुधाग्निना सन्तापयुक्तायाः, तस्याः 'भूमेः' 'इमे' अस्माभिर्दृश्यमानाः 'प्रदराः' रेखाकारा विदारणविशेषाः 'आदीर्यन्त' प्रकर्षेणाभवन्। 'अस्याः' भूमेः सम्बन्धिनो य इमे प्रदराः, सर्वैर्जनैस्तत्र तत्र दृश्यन्ते, ते सर्वे परितो भूमेरुपरि विदारणेन निष्पन्नाः। 'ततः' शोकात् पुरा भूमिः समतलैवाऽऽसीत्। इव-ह-एव' इति निपातत्रयसमूहोऽवधारणार्थः। तदानीं समतलत्वेन 'प्रदर' विदारणरूपच्छिद्रविशेषो न कोऽप्यासीदित्यर्थः॥

v। ३५ [xxx ९] [जो यह 'देवनीय' पहले कहा गया था उसकी ही स्तुति के लिए कुछ कथा भी प्रतिपादित की गई थी। उसी कथा के शेष भाग का प्रतिपादन करते हैं]।

[अङ्गिरसों के मध्य अग्नि ने ही आदित्यों के यज्ञ में जब आर्त्विज्य स्वीकार कर लिया तो उन्हीं का अनुसरण कर] उन सभी अङ्गिरसों ने जाकर आदित्यों के यज्ञ का यजन किया। उन यजन करने वाले [ऋत्विज अङ्गिरसों] को आदित्यों ने दक्षिणा में [चार सागर से घिरी हुई] यह सम्पूर्ण पृथ्वी दे दी। [मध्यन्दिन सवन में दक्षिणा दी जाती है। उस समय दक्षिणा में प्रदत्त] इस [पृथ्वी] ने उन [अङ्गिरसों] से प्रतिगृहीत होने पर उन्हें तपा डाला। उन [अङ्गिरसों] ने तब उस पृथ्वी को निःशेष रूप से त्याग दिया। [उन अङ्गिरसों से परित्यक्त] वह [पृथ्वी] सिंहनी होकर विविध प्रकार से जृम्भण करती हुई [वेग से दौड़कर सामने स्थित] पुरुषों को खाने लगी। [तब भय से सभी पुरुषों के भागते हुए] क्षुधाग्नि से सतप्त उस [भूमि] के [हम लोगों को दिखाई देने वाले] ये रेखाकार विदीर्ण अंश [ऊबड़-खाबड़] प्रकृष्ट रूप से हो गए। इस [भूमि] के वे जो [ऊबड़-खाबड़ अंश सभी लोगों को दिखते हैं] वे सभी [भूमि के ऊपर चारों ओर] विदारण से निष्पन्न हुए थे, क्योंकि उस [शोकाकुल भूमि] के पहले [प्राचीन काल में तो] वह [भूमि] समतल ही थी।

अङ्गिरसां भूमिपरित्यागप्रसङ्गेन किञ्चिच्छास्त्रज्ञानां वचनमुदाहरति—

**तस्मादाहुर्न निवृत्तदक्षिणां प्रतिगृह्णीयान्नेन्मा शुचा विद्धा शुचा विध्यादिति॥ इति।**

यस्मादङ्गिरोभिर्भूरूपदक्षिणा सर्वात्मना परित्यक्ता, 'तस्मात्' अन्येऽपि शास्त्रज्ञा एवमाहुः। 'निवृत्तदक्षिणा' केनापि कारणेन परित्यक्ता दक्षिणा पुनर्न 'प्रतिगृह्णीयात्'। गोभूहिरण्यरूपादिदक्षिणामृत्विग्भिः स्वीकृता सति यदि कश्चिद्दोषं दृष्ट्वा परित्यजेत्, तदानीं पुनरपि द्रव्यलोभेन तत्प्रतिग्रहं न कुर्यात्। केनाभिप्रायेणेति ? सोऽभिधीयते—इयं दक्षिणा 'शुचा' शोकोपलक्षितेन दोषेण 'विद्धा' सती मामपि 'शुचा' शोकोपलक्षितदोषेण विध्यात्, मैव विध्यत्विति भीतो न प्रतिगृह्णीयात्॥

[क्योंकि भूरूपी दक्षिणा अङ्गिराओं ने सर्वात्मना त्याग दी थी] इसलिए अन्य शास्त्रज्ञ भी ऐसा कहते हैं कि किसी भी कारण से परित्यक्त दक्षिणा को पुनः नहीं लेना चाहिए [अर्थात् ग्राम, भूमि या सुवर्ण आदि दक्षिणा यदि ऋत्विजों के द्वारा किसी कारणवश परित्यक्त हो जाय तो पुन द्रव्य लोभ से उसका प्रतिग्रह न करे] क्योंकि यह दक्षिणा लोभोपलक्षित दोष से विद्ध होकर मुझे भी लोभोपलक्षित दोष से विद्ध कर देगी—इस भय से उसका प्रतिग्रह न करे।

प्रमादात् पुन प्रतिग्रहे कर्तव्य दर्शयति—

यदि त्वेनां प्रतिगृह्णीयादप्रियायैनां भ्रातृव्याय दद्यात् परा हैव भवति ॥ इति।

पुन प्रतिग्रहपक्षे प्रतिगृहीता दुष्टां दक्षिणामत्यन्तविरोधिने शत्रवे ह्येनां दद्यात्। तेन शत्रु पराभवत्येव ॥

यदि प्रमाद से पुन प्रतिग्रह स्वीकार भी कर ले तो इसे किसी अत्यन्त विरोधी शत्रु को ही दे देना चाहिये। उससे शत्रु का पराभव ही होता है।

प्रासङ्गिकं परिसमाप्य दक्षिणान्तरं दर्शयन्नुपाख्यानस्य देवनीथोपयोगमाह—

अथ योऽसौ तपतीदं एषोऽश्वः श्वेतो रूपं कृत्वाऽश्वाभिधान्यपिहितेनाऽऽत्मना प्रतिचक्रम इमं वो नयाम इति, स एष देवनीथोऽनूच्यते ॥ इति।

'अथ' अङ्गिरोभिः पृथिवीरूपदक्षिणायां परित्यक्तायां तदोऽनन्तरम्, अदितिपुत्राणां यजमानानां सङ्कल्पवशात् योऽसौ मण्डलमध्ये सूर्यस्तपति, एष 'प्रतिचक्रमे' सम्मुखमाजगामेत्यर्थः। सानुनासिकः प्लुतिः पूजार्थः। 'असौ' मण्डलवर्ती पुरुषः तेजसा तपन्नपि भूमिमत्यन्तमत्युग्र सन्ताप न करोति। तस्मादस्य पूज्यत्वम्। सूर्यः केन रूपेणाऽऽगच्छति ? तदुच्यते—लोके श्वेतोऽश्वो यादृग्रूपवान्, तादृशं रूपं कृत्वा, तत 'अश्वाभिधान्यपिहितेन' अश्वस्य बन्धनार्था रज्जुः 'अश्वाभिधानी', तया 'अपिहित' आच्छादित आत्माऽस्येति, तेन देहेन युक्तः समागत इत्यर्थः। स्वसङ्कल्पितं तमश्वरूपं सूर्यं दृष्ट्वा, त आदित्या एवमब्रुवन्—हे अङ्गिरसः ? 'वः' युष्माकम् 'इमम्' अश्वं नयाम दक्षिणात्वेन समर्पयाम। 'इति' यस्यां कथायां वृत्तान्तोऽभिहितः, स एष देवनीथो मुख्यो वेदेनानूच्यते ॥

[प्रासङ्गिक सन्दर्भ को समाप्त कर अन्य दक्षिणा को दिखाते हुए देवनीथ में उपाख्यान का उपयोग बतलाते हैं]—

इस [अङ्गिराओं द्वारा पृथ्वी रूप परित्यक्त दक्षिणा] के बाद [अदिति के पुत्र जन यजमान आदित्यों के संकल्प से] जो यह [मण्डल के मध्य सूर्य] तप रहे हैं, वह [तेजसे तपते हुए भी भूमि को सन्तप्त न करने से] पूज्य यह [सूर्य] श्वेत अश्व के रूप में अश्वा-

भिधानी [अश्व के बन्धन के लिए रज्जु अर्थात् लगाम व काठी आदि] से आच्छादित होकर [आदित्यों के] सम्मुख आए। [अपने सङ्कल्प से आए हुए उन अश्व रूप सूर्य को देखकर उन आदित्यों ने इस प्रकार कहा हे अङ्गिरसो !] आपके लिए इस अश्व को दक्षिणा रूप से हम लोग समर्पित करते हैं [जिस कथा में यह वृत्तान्त कहा गया है] वह यह 'देवनीथ' होकर [वेद के द्वारा] कहा जाता है—

तस्य देवनीथस्य सप्तदश पदानि, तेषु प्रथम पदमाह—

आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन् ॥ इति।

आदित्याख्या यजमाना पुरा जरित' जरितृभ्य स्तोतृभ्योऽङ्गिरोभ्यो मुख्यां दक्षिणाम् 'अनयन्' दत्तवन्त ॥

[उस देवनीथ के सत्रह पदों में से प्रथम पद है]—१ प्राचीन काल में आदित्य नामक यजमानों ने स्तोता[1] अङ्गिराओं के लिए [मुख्य] दक्षिणा दी।

द्वितीय पदमनूद्य व्याचष्टे—

ता ह जरितर्न प्रत्यायन्निति न हि त इमां प्रत्यायन् ॥ इति।

'जरित !' जरितार स्तोतारोऽङ्गिरस ता ह' ता तु पृथिवीरूपा दक्षिणां 'न प्रत्यायन्' नैव प्रतिगृहीतवन्त। अस्मिन् पदे प्रोक्ता ते' अङ्गिरस 'इमां' भूमिं न प्रतिगृहीतवन्त इत्यर्थ। प्रसिद्ध इति 'हि' शब्देन द्योतयति ॥

२ 'स्तोताओं ने उस [पृथ्वी रूप दक्षिणा] को प्रतिग्रह रूप से नहीं लिया' अर्थात् उन [अङ्गिरसों] ने इस [भूमि] को नहीं लिया।

तृतीय पदमनूद्य व्याचष्टे—

तामु ह जरित प्रत्यायन्निति प्रति हि तेऽमुमायन् ॥ इति।

'तामु ह' तामादित्यरूपा दक्षिणा 'जरित' प्रत्यायन् स्तोतार प्रतिगृहीतवन्त। अस्मिन् पदे प्रोक्ता 'ते' अङ्गिरस 'अमुम्' आदित्य प्रत्यायन्। भूप्रतिग्रह निषेधोऽप्रसिद्ध।

३ 'उस [आदित्यरूप दक्षिणा] को स्तोताओं ने प्रतिग्रह में लिया' अर्थात् उन [अङ्गिराओं] ने इन [आदित्य] को प्रतिग्रह में स्वीकार किया।

द्वितीयपदार्थवैशद्याय प्रवृत्त चतुर्थं पदमनूद्य व्याचष्टे—

ता ह जरितर्न प्रत्यगृभ्णन्निति, न हि त इमां प्रत्यगृभ्णन् ॥ इति।

पूर्वपदवद् व्याख्यानयोरर्थ स्पष्ट ॥

---

१ (i) 'हे जरित = स्तोत'—इति षड्गुरुशिष्य। (ii) 'O singer'—इति कीथमहोदय। (iii) 'जरित = जरितृभ्य स्तोतृभ्य'—इति चतुर्थ्यन्ततया व्याख्यायते सायणगोविन्दस्वामिभ्याम्।

४ स्तोताओं ने उस [पृथ्वी रूप दक्षिणा] को प्रतिग्रह रूप से नहीं लिया' अर्थात् उस [भूमि] को उन [अङ्गिरसों] ने स्वीकार नहीं किया।

तृतीयपदार्थंवैलक्षण्य पञ्चम पदमनूद्य व्याचष्टे—

तामु ह जरित प्रत्यगृभ्णन्निति, प्रति हि तेऽमुमगृभ्णन् ॥ इति।

पूर्वपदवद् व्याख्यानयोर्यौ विस्पष्ट ॥

५ उस [आदित्य रूप दक्षिणा] को स्तोताओं ने प्रतिग्रह में लिया' अर्थात् उन [अङ्गिरसों] ने इस [आदित्य] को प्रतिग्रह में स्वीकार किया।

षष्ठ पदमनूद्य व्याचष्टे—

अहा नेत सन्नविचेतनानीत्येष ह वा अह्ना विचेतयिता ॥ इति।

हे अङ्गिरस अयं सूर्यं सन् युष्माक समीपेऽस्ति तस्माद् 'अविचेतनानि' विशेषप्रकाशरहितानि 'अहा' तमोयुक्तान्यहानि नेत' न गच्छत। 'एष' आदित्य 'अह्ना विचेतयिता' विशेषेण प्रकाशयिता[1] ॥

६ [हे अङ्गिरसों ! यह सूर्य आपके समीप हैं इसलिए] 'विशेष प्रकाश से रहित दिन [अर्थात् तमो युक्त दिन] नहीं रहे।' वस्तुत यह [आदित्य] दिन को विशेष प्रकाश से युक्त करने वाला है।

सप्तमपदमनूद्य व्याचष्टे—

जना नेत सन्नपुरोगवास इति, दक्षिणा वै यज्ञानां पुरोगवी, यथा ह वा इदमनोऽपुरोगवं रिष्यत्येवं हैव यज्ञोऽदक्षिणो रिष्यति, तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवत्यप्यल्पिकाऽपि ॥ इति।

हे जना ज्ञानयुक्ता अङ्गिरस अयमादित्य सन् भवत्समीपे वर्तते। तस्मात् अपुरोगवास, मार्गप्रदर्शकेन पुरोगामिना रहिता यूय 'नेत' न गच्छत। अस्मिन् पदे पुरोगत्वरूपता दर्शिता।[2] यज्ञाना तु दक्षिणैव 'पुरोगवी'। अत्र दृष्टान्त 'यथा ह वा

---

१ (i) विचेतनो महाप्रकाश सूर्यं यस्ता यस्तु तानि। अहा=दिनलोप, अहानि, न इत=लोट् है मध्यंप इत्यर्थं मत्वा व्याचष्टे—'एष' इति। एष =सूर्यं विचेतयिता= प्रकाशक। इति षड्गुरुशिष्य।

(ii) विचेतयिता=विभागकर्ता'—इति गोविन्दस्वामी। (iii) 'Lest the days be without discrimination' he is the discriminater of the days' इति कीथमहोदय।

२ हे जना = योद्धार। आनते हर्तारि तु वे (इगुरुपधाज्ञाप्रीकिर क'—इति कप्रत्यय) क्रिये एकोपर हि अग्। न इत' य यना गत्रपुरोगवास। आगवास्तुक्' (पा० सू० ७ १ ५०) मत्पुरोगन्तृगोगवृदकमिनका इति षड्गुरुशिष्य।

इदम्' 'अनोऽयुगेगवं, बलीवर्दरहितं शकटं 'रिष्यति' विनश्यति । 'एवं हैव' अनेनैव प्रकारेण 'अदक्षिण.' दक्षिणारहितो यज्ञो 'रिष्यति' विनश्यति । तस्मात् कारणाद् याज्ञिका एवमाहुः द्रव्यहीनेनापि यजमानेन 'अस्त्यपिकाऽपि' अत्यन्तस्वल्पाऽपि 'दक्षिणा यज्ञे दातव्या भवति' ।

७. 'हे ज्ञानी [अङ्गिरसो, यह आदित्य आपके समीप हैं इसलिए] मार्गप्रदर्शक-रहित आप सब नहीं जा सकते' अर्थात् दक्षिणा ही यज्ञों की पुरोगामी [=आगे ले जाने वाली नेतृ] होती है। जैसे बिना पुरोगामी बैल के बैलगाड़ी नष्ट हो जाती है; वैसे ही दक्षिणारहित यज्ञ भी विनष्ट ही हो जाता है। इसलिए शास्त्रज्ञ कहते हैं कि द्रव्यहीन [यजमान] को भी यज्ञ में दक्षिणा अवश्यमेव देनी चाहिए, चाहे वह थोड़ी ही क्यों न हो।

अष्टमं पदमाह—

**उत श्वेत आशुपत्वा ॥ इति ।**

'उत' अपि तु हे अङ्गिरसा युष्माकमयं श्वेतरूपोऽश्व आदित्य. 'आशुपत्वा' शीघ्रगामी । तस्मादस्ति पुरोगन्तेत्यर्थः ॥

८. और, [हे अङ्गिरसो ! यह आदित्य रूप] श्वेत अश्व शीघ्रगामी है [अतः यह पुरोगामी है] ।

नवम पदमाह—

**उतो पद्याभिर्जविष्ठः ॥ इति ।**

'उतो' अपि च 'पद्याभि.' पादविक्षेपैर्हेतुभिः 'जविष्ठ.' अयं सूर्योऽतिशयेन वेगवान् ।

९. और पाद-निक्षेपों के कारण यह अत्यन्त वेगवान् है ।

दशमं पदमाह—

**उतेमाशु मानं पिपर्ति ॥ इति ।**

'उत' अपि च, 'ईम्' ईदृशं 'मानं' सत्कारम् 'आशु पिपर्ति' असौ सूर्यः शीघ्रं पूरयति ॥

१०. और, वह इस प्रकार के सत्कार्य को शीघ्र ही पूर्ण भी करते हैं ।

एकादशं पदमाह—

**आदित्या रुद्रा वसवस्त्वेळते ॥ इति ।**

हे सूर्य आदित्याद्या देवगणाः 'त्वा' त्वाम् 'ईळते' स्तुवन्ति ॥

११. [हे सूर्य] आदित्य, रुद्र एवं वसु आदि देवगण तुम्हारी स्तुति करते हैं ।

द्वादशं पदमनूद्य व्याचष्टे—

**इदं राधः प्रतिगृभ्णीह्यङ्गिर इति; प्रतिग्रहमेव तद्राधस ऐच्छन् ॥ इति ।**

हे 'अङ्गिर.', जातावेकवचनम्, 'अङ्गिरोमिधमहर्षिजाते 'इदम्' अस्माभिर्दीयमान 'राधः' सर्वसुखसाधकमादित्यरूपं धनं 'प्रतिगृभ्णीहि' दक्षिणारूपेण प्रतिगृहाणेति यदस्ति,

तेन पदेन 'रायस' सुखसाधनस्यादित्यस्य 'प्रतिग्रहमेव' स्वीकारमेव 'ऐच्छन्' अङ्गिरस इच्छन्ति स्म[1] ॥

१२ [हे अङ्गिरसो] 'इस हमारे द्वारा दिए जाने वाले सभी [सुखों के साधक आदित्य रूप] धन को [दक्षिणा रूप से] प्रतिगृहीत करें' अर्थात् अङ्गिरसों ने सुख के साधक आदित्य को प्रतिग्रह में स्वीकार करने की इच्छा की।

नवादश पदमाह—

इद राधो बृहत्पृथु ॥ इति

'इदम्' अस्माभिर्दीयमान राध' सुखसाधनमादित्यरूपं 'बृहद्' गुणैः प्रवृद्ध 'पृथु' स्वरूपेण विस्तृतम् ॥

१३ यह [हमारे द्वारा दिया जाने वाला सभी सुखों का साधक आदित्य रूप] धन अनेक गुणों से समृद्ध है और स्वरूपतः विस्तृत भी है।

चतुर्दश पदमाह—

देवा ददत्वावरम् ॥ इति ।

'देवा' इन्द्रादया 'आ' समन्तात् वर श्रेष्ठमादित्यरूपं 'ददतु' प्रयच्छन्तु ॥

१४ इन्द्र आदि देवों ने जो यह [आदित्य रूप] श्रेष्ठ [दक्षिणा] दी है।

पञ्चदश पदमाह—

तद्वो अस्तु सुचेतनम् ॥ इति ।

हे अङ्गिरस व युष्माकं 'तत्' आदित्यस्वरूप 'सुचेतन' सुष्ठु प्रकाशकमस्तु ॥

१५ हे अङ्गिरसो! आप लोगों के लिए वह प्रकाश देने वाला होवे।

षोडश पदमाह—

युष्मे अस्तु दिवे दिवे ॥ इति ।

---

[1] पञ्च पदानि आदि या वदन्त्यङ्गिरस प्रति । उत = अथ । आशुपत्वा = शीघ्रगमन पर्यंत च । उत्ता अपि च, पदानि = पादविभागेहैंऽनिर्जविशो गन्तृतम । चोरितानि नूनो सान । वत = तथापि । ईं = पुरा । आपु = द्रुतम् । माम = इत्यम् । पिपर्ति = पृ पूरणे' पूरयति । दप दद् 'अतिपिपर्योश्च' इत्यभ्यासस्यत्वम् । किञ्च, ते पूर्व रवा दशा आदित्या पदयस्वेतन-स्तुवन्ति । हे अङ्गिरः = गणात भवन्तम् । इद रायो धन प्रतिगृभ्णीहि = प्रतिगृहाणे पदं मत्वाह—'प्रतिग्रहमेव' इद राधन ऐच्छन्, तद् = तेनाङ्गिरसानि आदित्या रायण धनस्य स्वीकारमैच्छत् इत्युक्तमेति (पा० सू० ७ १ ३७), तम्, आम 'आमन्त्र' (पा० सू० ६ १ १०) । इति षड्गुरुशिष्य ।

हे अङ्गिरस 'दिवे दिवे' प्रतिदिनं तदादित्यस्वरूप 'युष्मे' युष्मास्वेव विहृताम् ॥

१६ हे अङ्गिरसो ! प्रतिदिन यह [आदित्यस्वरूप] तुम्हारे में प्रतिष्ठित होवे।

सप्तदश पदमनूद्य व्याचष्टे—

प्रत्येव गृभायतेति, प्रत्येवैनमेतदजग्रभैषम्[1] ॥ इति।

हे अङ्गिरस 'प्रतिगृभायतेव' अवश्यमादित्यरूपां दक्षिणां प्रतिगृह्णीतेति यत्पदमस्ति, एतत्[1] एतेन पदेनाङ्गिरस 'एनम्' आदित्य दक्षिणारूप 'प्रत्यजग्रभैषमेव' अवश्य प्रत्यग्रहीषु[2]॥

१७ हे अङ्गिरसो ! 'आदित्य रूप दक्षिणा को अवश्य स्वीकार करें' इस पद के द्वारा उन [अङ्गिरसों] ने इस [आदित्य] को [दक्षिणा के रूप में] अवश्य ही स्वीकार किया।

देवनीथाख्यस्य पदमनूद्य सप्तदशानि पदानि व्याख्याय तच्छंसनप्रकारविशेष विधत्ते—

**त वा एत देवनीथ शसति, पदावग्राह यथानिविद, तस्योत्तमेन पदेन प्रणौति यथा निविद ॥ ३५ ॥ इति।**

त वा' आदित्या ह जरितरित्यादिव प्रत्यव गृभायतेत्यन्तम, 'एतम्' इदानीमुक्त देवनीथ' निविद्दृष्टान्तेन 'पदावग्राह शसति'। यथा निविद पदे पदेऽवगृह्यावगृह्य शसनम् तद्वदत्राप्यवगन्तव्यम्। यथा च निविद उत्तमेन पदन प्रणव ' ओंकार, एवमत्राप्यन्तिम पदे प्रणवो द्रष्टव्य ॥

॥ इति श्रीमत्सायणाचार्यविरचित माधवीये वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठ पञ्चिकाया पञ्चमाध्याये (त्रिंशाध्याय) नवम खण्ड ॥ ९ ॥ (३५) [२२२]

उस ['आदित्या ह जरितार ' इत्यादि से लेकर 'प्रत्येव गृभायत' तक] इस देवनीथ को निविद के ही समान पाद पाद के अवसान पर शसन करता है, और इसके अन्तिम

---

१ यदिहमानि देवनीथाख्यसप्तदशपदानि प्रपठ्य विहितानि, ततोऽवगम्यते यस्या शाखाया एतद् ब्राह्मणमैतरेयक नाम, न तस्यामिमानि पठितानीति अस्मद्दृष्टसहिता परिशिष्टे तु पठितान्येव। आश्वलायनेनापि प्रतीकग्रहणमात्रेणैवेमानि विहितानि (आश्व० श्रौ० सू० ८ ३ २५)।

२ पञ्च पदानि। राधो धन देवा इन्द्राद्या ददतु प्रयच्छन्तु। 'अदभ्यस्तात्' (पा० सू० ७ १ ४)। आ साधु वर वरणीय वो युष्माक सुचेतन मन प्रीतिकरम्। युष्मे इति 'शे' (पा० सू० १ १ १३) इति प्रगृह्यत्वम्। युष्माक दिवेदिवे अहन्यहनि। एवेति सत्त्वे। प्रतिगृभायत = 'हृग्रहोर्भ' (पा० सू० ८ २ ३५)। ग्रहेर्लुङ् णनज्जेस्त (?) स्न शायच्च प्रतिग्रहम्।—इति षड्गुरुशिष्य।

पद पर 'ओम्' इस प्रणव को कहता है, जैसे निविद में [अन्तिम पद पर प्रणव कहता है।]

॥ इस प्रकार तीसवें (पाँचवें) अध्याय के नौवें खण्ड की हिन्दी पूर्ण हुई ॥ ९ ॥

## अथ दशमः खण्डः

अथ त्वमिन्द्र शर्मरिणेत्याद्यास्तिस्रोऽनुष्टुभो विधत्ते—

भूतेच्छद शंसति ॥ इति ।

'भूत' भूति वैरिणामैश्वर्यं छादयन्ति तिरस्कुर्वन्तीत्युदाहृता अनुष्टुभो 'भूतेच्छदः' ॥

५। ३६ [x ५.१०] [ऐश्वर्य को ढकने वाले] भूतेच्छद नामक [तीन अनुष्टुप्] ऋचाओं का शंसन करता है।

ता प्रशंसति—

भूतेच्छद्भिर्वै देवा असुरानुपासचन्तोतेव युद्धेनोतेव मायया, तेषां वै देवा असुराणां भूतेच्छद्भिरेव भूतं छादयित्वाऽथैनानत्यायंस्तथैवैतद् यजमाना भूतेच्छद्भिरेवाप्रियस्य भ्रातृव्यस्य भूतं छादयित्वाऽथैनमतियन्ति ॥ इति ।

भूतेच्छन्नामधेयाभिरनुष्टुब्भिर्देवा असुरान् युद्धेन च मायया च 'उपासचन्त' समीपे समवेता। 'उत इव'-इति निपातसमूह समुच्चयार्थः। एवंयुद्धेनासुरान् विनाशयितुं समागता इत्यर्थः आगत्य च देवा 'तेषाम्' असुराणां 'भूतम्' ऐश्वर्यमेताभिर्ऋग्भिराच्छाद्य, अनन्तरम् 'एनान्' अतिक्रम्यागच्छन्। तथैवैतद् यजमाना अपि कुर्वन्ति[1] ॥

भूतेच्छद नामक अनुष्टुपों से देव [असुरों का विनाश करने के लिए] युद्ध द्वारा और माया अर्थात् छल से उन असुरों के समीप आए और आकर देवों ने उन असुरों के ऐश्वर्य का इन भूतेच्छद नामक ऋचाओं से ही आच्छादन करके इनका अतिक्रमण कर दिया। उसी प्रकार ये यजमान भी 'भूतेच्छद' नामक ऋचाओं से ही अप्रिय विरोधी शत्रु के ऐश्वर्य का आच्छादन करके इनका अतिक्रमण कर देते हैं।

तासामनुष्टुभामर्धर्चशस्त्रं विधत्ते—

ता अर्धर्चशः शंसति, प्रतिष्ठाया एव ॥ इति ।

उन [ऋचाओं] का अर्धर्च से अवसान पर शंसन करता है, जो उसकी प्रतिष्ठा के लिए ही होता है।

---

1. 'त्वमिन्द्र शर्मरिणेति भूतेच्छदस्तिस्र एता अनुष्टुभः'—इति आश्व० श्रौ० ८.३.२७। अथर्व० २०.१३५.११-१३। (i) भूत भावे क्त। भूति = ऐश्वर्यम्। इति षड्गुरुशिष्यः। (ii) भूत = शरीरम्-इति गोविन्दस्वामी।

अथ शाखान्तरे समाम्नाता 'यदस्या अहुभेद्या' इत्याद्य ऋच[1] विधत्ते—

आहनस्या शंसति ॥ इति ।

'आहनस्या' आहनन स्त्रीपुरुषयो परस्परसयाग । तद्वत्प्रजोत्पत्तिहेतुत्वाद् ऋचोऽप्याहनस्या[2] ॥

आहनस्य सतक [शाखान्तर में समाम्नात 'यदस्या अहुभेद्या' आदि] ऋचाओं का शंसन करता है [वस्तुत स्त्री पुरुष का परस्पर सयोग 'आहनन' है । उसी तरह प्रजोत्पादन का हेतुभूत होने से ऋचा भी 'आहनस्य' सतक कही गई है] ।

ता ऋच प्रशसति—

आहनस्याद्वै रेत सिच्यते, रेतस प्रजा प्रजायन्ते, प्रजातिमेव तद्दधाति ॥ इति ।

आहनस्य मिथुनमित्युक्तम् । स्पष्टमन्यत् ॥

वस्तुत आहनस्य [ऋचाओं] से वीर्य का सिंचन किया जाता है और वीर्य से प्रजा का उत्पादन होता है । अत इस प्रकार उस [आहनस्य के शंसन] से [वह यजमान में] सन्तान को ही धारण कराता है ।

ऋक्सख्या प्रशसति—

ता दश शंसति, दशाक्षरा विराळन्नं विराळन्नाद् रेत सिच्यते, रेतस प्रजा प्रजायन्ते, प्रजातिमेव तद्दधाति ॥ इति ।

स्पष्टोऽर्थ[3] ॥

उन [आहनस्य सतक] दस ऋचाओं का शंसन करता है । दस अक्षर का विराट छन्द होता है और विराट् अन्न है और अन्न से वीर्य का सिंचन किया जाता है । वीर्य से प्रजा उत्पन्न होती है । इस प्रकार उस [शंसन] से [वह यजमान में] सन्तति को ही धारण कराता है ।

पोडशोंकारान् विधत्ते—

ता न्यूङ्खयत्यन्नं वै न्यूङ्खोऽन्नाद्रेत सिच्यते, रेतस प्रजा प्रजायन्ते, प्रजातिमेव तद्दधाति ॥ इति ।

---

१ ऋ० परि० २ १५ १-८ ।

२ यदस्या अहुभेद्या इत्यानहस्या'-इति आश्व०श्रौ० ८ ३ २८ । अथर्व० २० १३६ १ । ऋ० खिल० ५ २२ १-१० वैता० ३२ ३१ । आश्व० श्रौ० सू० ८ ३ ३०-३२ कौ० ब्रा० ३० ६ । शाङ्खा० श्रौ० सू० १२ २४ २ २५ १ ।

३ यद्यप्यस्मदृष्टे ऋक् परिशिष्टेऽष्टावेवाहनस्या परमेतरेयक नाम ब्राह्मण यस्या सहितायां, तस्या दशैव स्यु । आश्वलायनेन तु आहनस्याना विधानमुक्त्वा तत उत्तर ताभि सह शंसनीयेऽपरेऽपि ऋचौ विहिते (८ ३ २९ ३०) ते एव नवमदशमे आश्वलायनसहितादीनामिति ध्ययम् ।

'ता' ऋचा 'न्यूङ्खयति' ओकारविशिष्टा: कुर्वन्ति[1]। न्यूङ्खस्यान्नहेतुत्वादन्नत्वम्[2] ॥

उन [ऋचाओं] को न्यूङ्ख [ओकार का विशेष उच्चारण] करता है। न्यूङ्ख अन्न है। अन्न से वीर्य का सिंचन किया जाता है। वीर्य से प्रजा उत्पन्न होती है। इस प्रकार उस [न्यूङ्ख] से [वह उस यजमान में] संतति को धारण कराता है।

ऋगन्तरं विधत्ते—

दधिक्राव्णो अकारिषमिति[1] दाधिक्रीं शंसति, देवपवित्रं वै दधिक्रा, इदं वा इदं व्याहनस्यां वाचमवादीत्, तद्देवपवित्रेण वाचं पुनीते ॥ इति ॥

दधिक्रेतिशब्दयुक्तत्वादियं 'दाधिक्री'। दधिक्राख्या देवता। 'देवपवित्रं' देवानां शोधकं वाक्यम्। तथा सति 'व्याहनस्यां वाचं' विशिष्टमैथुनयुक्ता[4] तदङ्गभूतां वाचं यदवादीत्। इदं वा इदमिति' तस्यै ग्राम्यवाक्यजातस्य विस्पष्टत्वेनाभिधानम्। 'तत्' सर्वं ग्राम्यवाक्यजातमसत्यमपि 'वाचं' वाचोच्चारितमनेन 'देवपवित्रेण' 'पुनीते' शुद्धं करोति ॥

'दधिक्राव्णो अकारिषम्' आदि 'दधिक्रा' [शब्द से युक्त] ऋचा का शंसन करता है। दधिक्रा [देवता की ऋचाएँ] देवों को पवित्र करने वाली हैं। इन [आहनस्य] में विशिष्टमैथुन युक्त ग्राम्य वचन कहे गए हैं। अतः देवों को पवित्र करने वाली उन [दधिक्रा देवताक] ऋचाओं के द्वारा यह वाणी को पवित्र करता है।

तस्यामृचि छन्दः प्रशंसति—

साऽनुष्टुब्भवति[5], वाग्वा अनुष्टुप्,[6] तत् स्वेन छन्दसा वाचं पुनीते ॥ इति ।

वाग्देवताया अनुष्टुप्छन्दोभिमानित्वाद् वाचोऽनुष्टुप्त्वम्। अतस्तच्छन्दो वाचः स्वकीयं, तेन वाचं शोधयति ॥

यह ऋचा अनुष्टुप् छन्दस्क है। [वाग्देवता के अनुष्टुप् छन्दोभिमानी होने से] वाणी ही अनुष्टुप् है। अतः अपने ही उस छन्द से यह वाणी को पवित्र करता है।

---

१ द्र० आश्व० श्रौ० ८ ३ ३१ । द्र० इत पूर्वम्, पृ० ७२८ ।

२ (i) इत्र दद् दिशेत् । दधिक्राख्यदेवत्याम्—इति षड्गुरुशिष्य ।
(ii) अथर्व० २० १३७ ३, ऋ० ४ ३९ ६, ऋ० खिल० ५ २२ १३, गु० श्रौ० षा० ३० ८ । वैता० ३२ ३३ ।                    ३ ऋ० ४ ३९ ६ ।

४ The sense of vyāhanasyām is not quite certain, as though Sāyana takes it visista, still vi 'without' might do इति कीथमहोदय: ।

५ 'दधिक्राव्णो अकारिषमित्यनुष्टुप्'—इति आश्व० श्रौ० ८ ३ ३२ ।

६ अनुष्टुबिति वाङ्नामसु पाठात् (निघ० १ ११) ।

ऋगन्तराणि विधत्ते—

सुतासो मधुमत्तमा इति पावमानीः शंसति ॥ इति ।

'सुतास' इत्याद्यास्तिस्रः[1] शुद्धिहेतुत्वात् पावमान्य[2] ॥

'सुतासो मधुमत्तमा' आदि [शुद्धि का हेतुभूत होने से तीन] पवमान देवताक ऋचाओं का शंसन करता है ।

ता ऋच प्रशंसति—

देवपवित्रं वै पावमान्य, इदं वा इद व्याहनस्यां वाचमवादीत्, तद्देवपवित्रेणैव वाच पुनीते; ता अनुष्टुभो भवन्ति, वाग्वा अनुष्टुप्, तत् स्वेनैव च्छन्दसा वाच पुनीते ॥ इति ।

पूर्ववद् व्याख्येयम् ॥

पवमान देवताक ऋचाएं देवों को पवित्र करने वाली हैं । इन [आहनस्य] में विशिष्ट मैथुनयुक्त ग्राम्यवचन कहे गए हैं । अतः देवों को पवित्र करने वाली उन [पावमानी] ऋचाओं के द्वारा वह वाणी को पवित्र करता है । वे ऋचाएं अनुष्टुप् छन्द में निबद्ध हैं । वाणी अनुष्टुप् है । अतः अपने ही उस छन्द से वह वाणी को पवित्र करता है ।

अन्यासामृचां तृचं विधत्ते—

अव द्रप्सो अंशुमतीमतिष्ठदित्यैन्द्राबार्हस्पत्यं तृचं[3] शंसति ॥ इति ।

'अव द्रप्सो अंशुमतीमतिष्ठद्' आदि इन्द्र और बृहस्पति देवताक[4] तृच का शंसन करता है ।

इन्द्राबृहस्पतिदेवताकत्वं दर्शयितुं तृचस्यान्तिममर्धर्चं पठति—

विशो अदेवीरभ्याचरन्तीर्बृहस्पतिना युजेन्द्रः ससाह इति ॥ इति ।

'अदेवी.' देवविद्विषः 'अभि' सर्वतः 'आचरन्तीर्विश.' आसुरी. प्रजा सर्वा. 'युजा' सहकारिणा 'बृहस्पतिना' युक्त 'इन्द्र. ससाहे' तिरस्कृतवानित्यर्थ ॥

---

१. ऋ० ९.१०१ ४ ।

२. 'सुतासो मधुमत्तमा इति च तिस्र.'—इति आश्व० श्रौ० ८.३. ३२ ।

३ ऋ० ८.९६.१३ । 'अवद्रप्सो अंशुमतीमतिष्ठदिति तिस्र'—इति आश्व० श्रौ० ८.३.३२ ।

४ (i) इन्द्रो बृहस्पतिश्चेति द्वन्द्वात् पत्यन्ते ण्य कृते ।
आनङ् पदद्वये वृद्धिर्लिङ्गर्थे लट् च शसति ॥—इति षड्गुरुशिष्य. ।

(ii) 'दित्यदित्यादित्यपत्युत्तरपदाद् ण्य.' इति (पा० सू० ४. १ ८५) ।

समेतीति; स यत्संशसेत् समानं तत्कुर्यादिव यत्र संशंसतीँ३ तत्स्वर्गस्य लोकस्य रूपं, तस्मान्न संशंसेद् यदेव न संशंसतीँ३ ॥ इति ।

पूर्वाध्यायस्यान्तिमखण्डवद् व्याख्येयम्[1] ॥

उस ['प्र मंहिष्ठाय' आदि प्राकृत के साथ वैकृतों के संभूय शंसन] के[2] विषय में ब्रह्मवादी प्रश्न करते हैं कि क्या उसे छठवें दिन के [शसनीय वैकृत] मन्त्रों के साथ [प्राकृत 'प्र मंहिष्ठाय' आदि का] शंसन करना चाहिए या उस [अहः सामान्य के शस्त्र] के साथ शंसन नहीं करना चाहिए ? कुछ याज्ञिकों का मत है कि उसे साथ में शंसन करना चाहिए । क्यों [साथ में शंसन] करे ? उत्तर यह है कि जब अन्य [पाँच] दिनों में [मैत्रावरुण] साथ में शंसन करता है तो [अह सामान्य के समान] यहाँ क्यों न साथ में शंसन करे । अब अन्य याज्ञिकों का मत है कि अन्य अहः के समान साथ में शंसन नहीं ही करना चाहिए । वस्तुतः जो यह षष्ठ अहः है वह स्वर्गलोक ही है । स्वर्गलोक बहुतों द्वारा एक साथ इकट्ठे होकर जाने योग्य स्थान नहीं है । कोई ही पुण्यवान् स्वर्गलोक में पहुँचता है । इस प्रकार [मैत्रावरुण] यदि षष्ठ अहः में प्राकृत के साथ अन्य वैकृत सूक्तों को मिलाकर] साथ-साथ शंसन करता है तो वह उस [स्वर्गरूप षष्ठ अहः को अन्य दिनों] के समान करता है । इसलिए यदि [षष्ठ अहः में] साथ-साथ शंसन नहीं करता है तो यह [साथ-साथ शंसन न करना] स्वर्गलोक का लक्षक होने के कारण अत्यन्त श्रेष्ठ है । अतः संभूय शंसन नहीं ही करना चाहिए; क्योंकि जो साथ-साथ शंसन न करना है वह अत्यन्त श्रेष्ठ है ।[3]

संशंसनपक्षे दोषान्तरं दर्शयति—

एतानि वा अत्रोक्थानि नाभानेदिष्ठो वालखिल्या वृषाकपिरेवयामरुत्स यत्संशंसेदपैव स एतेषु कामं राध्नुयात् ॥ इति ।

नाभानेदिष्ठादीनि चत्वारि शिल्पानि यानि सन्ति, एतान्येवात्र षष्ठेऽहनि 'उक्थानि' प्रधानशस्त्राणि । तथा सति 'सः' पुमान् यदि प्राकृतेन 'प्र मंहिष्ठाय'-इत्यनेन संभूय शंसेत्, तदानीं 'सः' पुरुषः 'एतेषु' प्रधानशस्त्रेषु 'कामं' फलम् 'अपराध्नुयाद्' विनाशयेत् ॥

1. द्र० इतः पूर्वम् (६.४.१०), १०२३ पृ० ।
2. अच्छामइन्द्रसूक्तात् प्रागवद्रप्सतृचात् परम् ।
प्र मंहिष्ठोदप्रुतेति प्राकृतं न भवेदिह ॥
इममर्थं प्रश्नपूर्वं वक्तुमाह प्ररोचयन् :—इति षड्गुरुशिष्यः ।
3. प्र मंहिष्ठोदप्रुतेति द्वयं त्याज्यमिति स्थितिः ।
अत एव सूत्र्यते—'अवद्रप्सो अंशुमतीमतिष्ठदिति तिस्रः' 'अच्छाम इन्द्रमिति नित्यमैकाहिकम्' इति (आश्व० श्रौ० सू० ८. ३. ३३, ३४) । इति षड्गुरुशिष्यः ।

नाभानेदिष्ट, वालखिल्य, वृषाकपि और एवयामरुत्—जो ये चार नित्य हैं, ये ही यहाँ [षष्ठ अह. में] प्रधानशस्त्र हैं। इस प्रकार वह व्यक्ति यदि [प्राकृत 'प्र म हहाय' आदि से] सम्भूय शसन करे तो वह इन प्रधान शस्त्रों में कामनाओं को मानो विनष्ट ही करता है।

एवं तर्हि प्र मंहिष्ठायेत्येतस्मिन्सूक्ते लब्धः कामोऽत्र न लभ्यत इत्याशङ्क्याह—

ऐन्द्रो वृषाकपि, सर्वाणि च्छन्दास्यैतशप्रलापस्तत्र स काम उपाप्तो य ऐन्द्रे जागतेऽथेदमैन्द्राबार्हस्पत्यं सूक्तमैन्द्राबार्हस्पत्या परिधानीया, तस्मान्न समशंसेन्न समशंसेत् ॥ ३६ ॥ इति ।

॥ इति 'ऐतरेयब्राह्मणे' षष्ठपञ्चिकाया पञ्चमोऽध्याय. ॥ ५ ॥

ब्राह्मणाच्छंसिना शंसितव्यो योऽयं 'वृषाकपि' सोऽयमैन्द्र। ऐतशप्रलापस्तु सर्वच्छन्दस्थानीय। तथा सति 'प्र मंहिष्ठाय'-इत्यादिके इन्द्रदेवताके जगतीच्छन्दस्के य कामोऽस्ति, स काम तत्र वृषाकपावैतशप्रलापे च प्राप्तो भवति। 'अथ' अपि चेदम् 'अवद्रप्सः' इत्यादिक[1] सूक्तमैन्द्राबार्हस्पत्यम्। तत्रत्याऽन्तिमा परिधानीया चैन्द्राबार्हस्पत्या[2]। तत्रोभयनेन्द्रनिमित्त 'काम उपाप्त' भवति। तस्मात्कारणात् प्राकृतमत्र समूय 'न शंसेत्'। अभ्यासोऽध्यायसमाप्त्यर्थं ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये षष्ठपञ्चिकाया पञ्चमाध्याये (त्रिंशाध्याये) दशम खण्ड ॥१०॥ (३६) [२२३]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यादेशतो श्रीमत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश' नाम भाष्ये ऐतरेयब्राह्मणभाष्यस्य कृतौ षष्ठपञ्चिकाया पञ्चमोऽध्याय (त्रिंशोऽध्याय)

समाप्त ॥ ५ ॥

॥ इति तृतीयदशक समाप्तम् ॥ ३ ॥

[इस प्रकार इन्द्रदेवताक मन्त्र में प्राप्त होने वाली कामना 'प्र मंहिष्ठाय' आदि में नहीं प्राप्त होगी वस्तुत ब्राह्मणाच्छंसी द्वारा शंसित होने वाला] वृषाकपि नित्य इन्द्रदेवताक है। ऐतशप्रलाप सर्वच्छन्दस्थानीय है[3]। [इस प्रकार 'प्र मंहिष्ठाय' इत्यादिक] इन्द्र

१ ऋ० ८ ९६ १३।

२ 'अच्छाम इन्द्रमिति (ऋ० १० ४३ १) नित्यमैन्द्राहिकम्'-इति आश्व० श्रौ० ८ ३ ३४।

३ एतशस्य प्रलापे तु छन्दो नानाविधं स्थितम् ।
येनास्ति जगती चेति ह्यैन्द्रजागत सम्भव ॥—इति षड्गुरुशिष्य ।

देवताक जगती छन्दस्क शस्त्र में जो कामना होती है वह [कामना ] यहाँ [वृषाकपि एवं ऐतशप्रलाप में] प्राप्त होती है, और फिर यह ['अव द्रप्सः' इत्यादिक] सूक्त इन्द्र और बृहस्पति देवताक है। अन्तिम परिधानीया ऋचा 'बृहस्पतिर्नः परी' आदि भी इन्द्र और बृहस्पति देवताक है। [अतः दोनों ही पक्ष में यहाँ इन्द्र निमित्तक कामना की प्राप्ति होती है ] इसलिए प्रकृत में यहाँ सम्भूय शंसन न करे।

॥ इस प्रकार ऐतरेय ब्राह्मण के षष्ठ पञ्चिका के पाँचवे (तीसवें) अध्याय की

सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ ५ ॥

[देवा ह वै त्रीणि (१)। देवा वै यज्ञं पञ्च (२)। आ त्वा वहन्त्वष्टौ (३)।
यः श्वः स्तोत्रियो दश (४)। शिल्पानि दश (५) ॥ ६ ॥[1]
देवा ह वा, असावि देवम्, कस्तमिन्द्र, तदाहुर्यदस्मिन् विश्वजिति षट् ॥६॥[2]

॥ इत्यैतरेयब्राह्मणे षष्ठपञ्चिका समाप्ता ॥ ६ ॥

[छठवीं पञ्चिका में 'देवा ह वै' इत्यादि तीन खण्डों का प्रथम (छब्बीसवाँ) अध्याय है। 'देवा वै यज्ञम्' इत्यादि पाँच खण्डों का द्वितीय (सत्ताइसवाँ) अध्याय है। 'आ त्वा वहन्तु' इत्यादि आठ खण्डों का तृतीय (अट्ठाइसवाँ) अध्याय है। 'यः श्वः स्तोत्रियः' इत्यादि दस खण्डों का चतुर्थ (उन्तीसवाँ) अध्याय है, 'शिल्पानि' इत्यादि दस खण्डों का पाँचवाँ (तीसवाँ) अध्याय है।

इस प्रकार 'देवा ह वै' इत्यादि खण्डों का प्रथम दशक है। 'असावि देवम्' इत्यादि खण्डों का द्वितीय दशक है। 'कस्तमिन्द्र' इत्यादि खण्डों का तृतीय दशक है और 'तदाहुर्यदस्मिन् विश्वजिति' इत्यादि खण्डों का चतुर्थ षट्क है अर्थात् षष्ठ पञ्चिका में कुल छत्तिस खण्ड हैं।]

॥ इस प्रकार ऐतरेय ब्राह्मण की सुधाकर मालवीय कृत

षष्ठ पञ्चिका की हिन्दी पूर्ण हुई ॥ ६ ॥

—०—

१. ८९९, ९१५, ९३५, ९७४, १०३० पृ० (३+५+८+१०+१०=३६ ख०)।
२. ८९९, ९४३, ९९५, १०१९ पृ० (१०+१०+१०+६=३६ ख०)। द्र० प्रथमो भागः, १९० पृ०।

# अथ सप्तमपञ्चिका

तत्र

## प्रथमाऽध्यायस्य

### प्रथमः खण्डः

—: ० :—

## [अथ एकत्रिंशोऽध्यायः

### प्रथमः खण्डः]

वर्णितं शस्त्रजातं तु होतृहोत्रकगोचरम् ।
पशोरुपव्रतीयस्य विभागस्त्वथ वक्ष्यते[1] ॥ १ ॥

आश्वलायनः सत्त्रिणां धर्मेष्वेवमाह—सुत्यासु हविरुच्छिष्टभक्षा एव स्युर्धानाः करम्भः परिवापः पुरोळाशः पयस्येति तेषां यद्यत्कामयेरंस्तत्तदुपविगुल्फयेयुः?[2] इति। प्राणधारणाय यथा पर्याप्यते तथा हविःशेषस्याऽभिवर्धनेन संपादनम् 'उपगुल्फनम्'[3]। एवं बहुविधान् हविःशेषभक्षानुक्त्वा पुनरप्यन्त एवमुवाच—'अपि वाऽन्यत्र सिद्धं गार्हपत्ये पुनरधिश्रित्योपव्रतयेरन्नन्यान् वा[4] पथ्यान् भक्षान्मूलफलेभ्य एतेन वर्तयेयुः पशुना च'—इति। 'अन्यत्र सिद्धं' गृहे पक्वमन्नं पुनरपि गार्हपत्ये सकृदधिश्रित्य 'उपव्रतयेरन्' उपभुञ्जीरन्। 'अन्यान् वा' लड्डु–मण्डकादीन् 'भक्षान्' 'पथ्यान्' अजीर्णादिदोषरहितान् मूलफलपर्यन्तमिच्छया स्वीकुर्यात्। 'एतेन' सुत्यादिनेषु संनिहितेन सवनीयपशुना च 'वर्तयेयुः' जीवनरूपां वृत्तिं संपादयेयुः। इत्थं सवनीयपशुरूपस्य हविषः शेषभक्षणेन सत्त्रिणां जीवनमप्यभिहितम्। तस्मिन् पशौ कस्य को विभाग इति जिज्ञासायां तद्विभागकथनं प्रतिजानीते—

अथातः पशोर्विभक्तिः, तस्य विभागं वक्ष्यामः ॥ इति।

---

१. पद्यमिदं षड्गुरुशिष्यस्य सुखप्रदाख्यायामपि दृश्यते।

२. आश्व० श्रौ० सू० १२.८.३२, ३३।

३. यदि यथाप्राप्तेन हविरुच्छिष्टभक्षणेन प्राणा न ध्रियेरंस्तदा धानादीनां मध्ये यस्मिंस्तेषामभिरुचिस्तद्द्रव्यमुपविगुल्फयेयुः=अभिवर्धयेयुः। इति तत्र नारायणः।

४. आश्व० श्रौ० १२.८.३९–४१।

'अथ' 'होतृ-होत्रक शस्त्रनिर्णयानन्तर', यतः शस्त्राद्यनुष्ठायिनां सत्रिणां जीवनोपायोऽपेक्षितः, अतः कारणात् सवनीयस्य 'पशोः' विभक्तिं वक्ष्यते। विभक्तिशब्दस्यैव व्याख्यानं तस्येत्यादि ॥

## सरला

कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि।
सीता पार्श्वगता सरोरुहकरा विद्युन्निभा राघवं
पश्यन्ती मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥ १ ॥
महिदासैतरेयस्य ब्राह्मणस्य च साम्प्रतम्।
चतुर्थे दशकेऽप्यस्मिन् यथापूर्वं यथास्मृतम् ॥ २ ॥
श्रीमद्रामकुबेरस्य मालवीयस्य धीमतः।
सूनुः सुधाकरः सम्यक् कुरुते परिशोधनम् ॥ ३ ॥

VII.१ [XXXI.१] [सत्र करने वालों का यह धर्म है कि अग्निषोमीय पशु में हविःशेष का भक्षण सुत्या दिनों में करें। इसके अतिरिक्त धान आदि द्रव्यों के भक्षण से अपनी दिनचर्या का संपादन करें। अतः सवनीय पशु रूप हविःशेष का कौन सा भाग किसका होगा? इसीके समाधान के लिए विभाग का कथन यहाँ किया जा रहा है]—

इस [होतृ एवं होत्रक के शस्त्र कथन] के बाद [शस्त्र आदि का अनुष्ठान करने वाले सत्रियों के जीवन के उपाय की अपेक्षा से सवनीय] पशु की विभक्ति अर्थात् उसके अङ्गों का विभाग कहेंगे—

वक्ष्याम इति प्रतिज्ञातो या विभागस्तं दर्शयति—

हनू सजिह्वे प्रस्तोतुः, श्येनं वक्ष उद्गातुः, कण्ठः काकुद्रः प्रतिहर्तुर्दक्षिणा श्रोणिर्होतुः, सव्या ब्रह्मणो, दक्षिणं सक्थि मैत्रावरुणस्य सव्यं ब्राह्मणाच्छंसिनो, दक्षिणं पार्श्वं सांसमध्वर्योः, सव्यमुपगातॄणां, सव्योऽसः प्रतिप्रस्थातुर्, दक्षिणं दोर्नेष्टुः, सव्यं पोतुर्, दक्षिण ऊरुरच्छावाकस्य, सव्य आग्नीध्रस्य, दक्षिणो बाहुरात्रेयस्य, सव्यः सदस्यस्य, सदं चानूकं च गृहपतेर्, दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य, सव्यौ पादौ गृहपतेर्भार्यायै व्रतप्रदस्यौष्ठ एनयोः साधारणो भवति, तं गृहपतिरेव प्रशिंष्याज्जाघनीं पत्नीभ्यो हरन्ति, तां

१. 'द्र० ईषः पूर्वम्, ५२५ पृ० 'द्वादश शस्त्राणि—'आज्यप्रउगे, निष्केवल्यमरुत्वतीये, वैश्वदेवाग्निमारुते इति होतुः शस्त्राणि षट्, तथा होत्रकाणामपि षट्'—इति। 'प्रशास्ता ब्राह्मणाच्छंस्यच्छावाक इति शस्त्रिणो होत्राः'—इति आश्व० श्रौ० ५ १० १०। विशेषस्तु ९२८ पृष्ठे ११ टि० द्रष्टव्यम्।

ब्राह्मणाय दद्यु, स्कन्ध्याश्च मणिकास्तिस्रश्च कीकसा ग्रावस्तुतस्, तिस्रश्चैव, कीकसा अर्धं च वैकर्तस्योन्नेतुरर्धं चैव वैकर्तस्य, क्लोमा च शमितुस्तद्ब्राह्मणाय दद्याद् यद्यब्राह्मण स्याच्छिर सुब्रह्मण्यायै, य. श्व सुत्यां प्राह तस्याजिनमिळा सर्वेषां होतुर्वा, ॥ इति।

जिह्वया सहित हनुद्वय प्रस्तोतुर्भाग । श्येनाकार वक्ष उद्गातुर्भाग ।[1] य कण्ठ, यत् 'काकुद' काकुदम, तदुभय प्रतिहर्तुर्भाग । श्रोणिरूरुमूलम्, तदुभय दक्षिण सव्यरूप क्रमेण होतुर्ब्रह्मणोर्भाग । ऊर्ध्वभाग सक्थि' तच्चोभय क्रमेण मैत्रावरुण ब्राह्मणाच्छंसिनोर्विभाग । दक्षिणासेन युक्त दक्षिण पार्श्वमध्वर्योर्भाग । सव्य पार्श्व मान्त्रमुपगातॄणा भाग । सव्यासं प्रतिप्रस्थातुर्भाग । 'दो' बाहु, तच्चोभय क्रमेण नेष्टृपोत्रोर्भाग । ऊरुद्वय क्रमेणाच्छावाकाग्नीध्रयोर्भाग । सक्थिशब्देन अधोभागस्याभिहितत्वाद् ऊर्ध्वभाग ऊरुशब्देन विवक्षित । बाहुद्वय क्रमेण आत्रेयसदस्ययोर्भाग । दोर्बाहुश्च पार्श्वेऽपि अधोभागोर्ध्वभागाभ्यां भेदो द्रष्टव्य । सदाशूरशब्दो पूर्वाचार्यैष्व स्मातो—

"अनूक मूत्रबस्ति स्यात्, शासनेत्यरुवदंति च।

सद तु पृष्ठवश स्यादेतद्गृहपतेर्द्वयम्" ॥ इति।

य पुमान् गृहपतेर्व्रतप्रदा माजरदायी, तस्य दक्षिणौ पादौ भाग । गृहपतेर्या भार्या, तस्यै च व्रतप्रदो य पुमांस्तस्यैव सव्यौ पादौ भाग । अत्र पुरोवर्तिना पादयोर्द्वित्वे नाभिहितत्वात्, पक्षान्तरेव पादशब्देन विवक्षितौ । तत्रैवस्मिन्नपि दक्षिणे पादे द्विवचनमवयवापेक्षम् । एवमुत्तरत्रापि । योऽयमोष्ठ, सोऽयम् एनया 'व्रतप्रदया' 'साधारण' भागो भवति । 'त' भाग गृहपतिरेव 'प्रशिष्यात्' तवाय तवायमिति विभज्य प्रदद्यात् । 'जाघनी' पुच्छ ता पत्नीभ्यो 'हरन्ति' दद्यु । ताश्च पत्न्य 'ता' जाघनी ब्राह्मणाय कस्मैचिद्दद्यु । स्कन्ध भवा स्कन्ध्या' मणिसदृशा मांसखण्डा 'मणिका' एकस्मिन् पार्श्वे स्थिता ताश्च पर्शुकास्तिस्र 'कीकसा, मणिका कीकसाश्चेत्युभय ग्रावस्तुतो भाग । इतरपार्श्वे स्थिता स्तिस्र कीकसा, 'वैकर्त' प्रौढा मांसखण्डः, तस्यार्धं पूर्वोक्ता कीकसाश्चय चोन्नेतुर्भाग । यत्तु वैकर्तस्येतरदर्धं, यच्च हृदयपार्श्ववर्ती क्लोमशब्दाभिधो मांसखण्डस्तदुभय शमितुर्भाग । अथ शमिता यदि अब्राह्मण स्याद्, तदा स्वेन स्वीकृत तदुभयमन्यस्मै ब्राह्मणाय दद्यात् । यच्छिरोऽस्ति, 'तत्सुब्रह्मण्यायै' सुब्रह्मण्याभिधानर्त्विजे दद्यात् । श्व सुत्येति निगदनाम[2]

१ द्र० 'श्येनमस्य वक्ष'—इत्यादि इत पूर्वम्, २२४ पृष्ठे।

२ 'आग्नेयो निगदस्तत्र गौतमीयमगात आगच्छ रोहिताभ्यां बृहद्गानो धूमकेतो जातवेदो विचर्षण आङ्गिरस ब्राह्मणाङ्गिरसब्रुवाणेति प्राक् सुत्यादेशात्'—इति लाट्या० श्रौ० १४। 'परसम्बोधनार्थमन्त्रा निगदा'—इति निगदमन्त्रलक्षणम्। तद्विचारस्तु मीमांसायां द्रष्टव्य । जै० न्या० वि० २ १ १३ ३८-४५।

तो चाऽऽग्नीध्रो ब्रूते । तथा च आश्वलायन आह—'आग्नीध्र एव सुत्यां प्राह'[१] इति । 'अजिन' चर्म, तस्याऽऽग्नीध्रस्य भाग । 'इळा' सवनीयपशो सम्बन्धी योऽयमिळाभाग, स सर्वेषां साधारण । यद्वा, होतुरसाधारण[२] ॥

जीभ सहित [पशु के] दोनों जबड़े प्रस्तोता का भाग है, श्येन पक्षी के समान वक्ष उद्गाता का, कण्ठ एव काकुद [कौआ आदि गले का तालु] प्रतिहर्ता का, दाहिनी कमर होता का, बायाँ [कमर] ब्रह्मा का, दाहिनी पिण्डली [पैर का निचला भाग] मैत्रावरुण का, बायीं पिण्डली ब्राह्मणाच्छंसी का, कन्धे के साथ दाहिनी बगल अध्वर्यु का, बायाँ [बगल मात्र] उपगाता [जो सामगान करने वालों के साथ गान करते हैं उन] का, बायाँ कन्धा प्रतिप्रस्थाता का, दाहिने नीचे का आगे का बाहु[3] [ = पैर का खुर भाग] नेष्टा का, बायाँ पोता का, दाहिना ऊरु [जांघ अर्थात् पैर का ऊपरी भाग] अच्छावाक का, बायाँ आग्नीध्र का, दाहिना बाहु [पैर का ऊपरी भाग] [अत्रि गोत्रज] आत्रय का [यहाँ यह द्रष्टव्य है कि आत्रय कोई ऋत्विज नहीं हैं। फिर भी यह कात्यायन श्रौतसूत्र *(१० २ २१) और ~ठ सहिता (२८ ४) में आते हैं। वस्तुत इसका कार्य शाङ्खायनश्रौतसूत्र (१६ १८, १९) में देखना चाहिए], बाँया सदस्य का, रीढ और आसन का भाग गृहपति का, दाहिने दोनों पैर भोजन देने वाले गृहपति[4] [ = महराज] का, बायें दोनों पैर भोजन देने वाले गृहपति [ = महराज] की स्त्री का, दोनों ओष्ठ इन दोनों का सामान्य रूप से है, उसे गृहपति ही बाँटेंगे, पुच्छ भाग को पत्नियों के लिए ले जाते हैं किन्तु उसे ब्राह्मण को ही दे देना चाहिए। [स्कन्ध पर होने वाले मणि के आकार का मास पिण्ड] डोल, गर्दन के एक बगल में स्थित मास खण्ड और तीन कीकस अर्थात् पसलियाँ ग्रावस्तुत का, दूसरे पार्श्व में स्थित तीन पसलियाँ और गर्दन के प्रौढमांस-खण्ड का[5] आधा उन्नेता का,

१ आश्व० श्रौ० १२ ९ १४ ।

२ द्र०, ऋत्विजां परिचय आश्व० श्रौ० ४ १ ३-८ । द्र० इत पूर्वम्, ९०१ पृ० २ टि० ।

३ (i) 'बाहुशिरो दो '-इति षड्गुरुशिष्य । (ii) Sayna holds that the term doh and bahu exhaust the forelegs, but this seems unlikely, the term hero is pada 'foot'

४ 'गृहपतिर्नाम स्वामिकर्मकर कश्चिद्' इति गोविन्दस्वामी ।

५ 'Three ribs and half the flash to the unnetr' see footnote no 4 The vaikarta is an unknown part but apparently near the kikasa, here perhaps the ribs इति कीथमहोदय ।

गर्दन के प्रौढ मांसखण्ड का दूसरा आधा भाग और क्लोम अर्थात् हृदय के पास में स्थित मांस खण्ड [फेफड़ा] शमिता[1] [=पशु का आलम्भन करने वाले] का; किन्तु वह [शमिता] यदि ब्राह्मण न हो तो अपने से स्वीकृत दोनों को अन्य ब्राह्मण को दे देना चाहिए। शिर सुब्रह्मण्य को देना चाहिए और जो 'श्वः सुत्याम्' दूसरे दिन के अभिषव को कहता है उस [अध्वर्यु] को चमड़ा देना चाहिए। सवनीय पशु का जो इडाभाग [यतीय हवि] है वह सामान्य रूप से सभी का है, अथवा होता का है।

उक्तानां पशुविभक्तीनां संख्यां प्रशंसति—

**ता वा एताः षट्त्रिंशतमेकपदा यज्ञं वहन्ति, षट्त्रिंशदक्षरा वै बृहती, बार्हता स्वर्गा लोकाः, प्राणांश्चैव तत्स्वर्गांश्च लोकानाप्नुवन्ति, प्राणेषु चैव तत्स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति ॥ इति ।**

'ता वै' इत्यादय उक्ता या श्रुत्योक्ता, अस्माभिरपि दृश्यमाना 'षट्त्रिंशत' षट्त्रिंशत्संख्याका 'एकपदा' इतुजिह्वेत्येवमेकैकेन पदेनाभिधीयमाना पशुविभक्तयो 'यज्ञं वहन्ति' यज्ञस्य निर्वाहं कुर्वन्ति। सङ्ख्या चैव पूर्वाचार्यैर्दर्शिता[2]—

तत्र (उरू) पादौ च तौ द्वौ द्वावन्य द्वात्रिंशदेव हि ।
इत्वादीळान्तमुक्त ता षट्त्रिंशद्भक्तय पशो " ॥ इति ।

अतः सङ्ख्यासाम्यादियं विभक्तिर्बृहतीरूपा। स्वर्गलोकांश्च बृहत्या संपादयितुं शक्यत्वाद् 'बार्हता' 'तत्' तेन पशुविभागेन ऋत्विजः प्राणान् स्वर्गलोकानपि प्राप्नुवन्ति पशववयवानां प्राणाधारत्वात्। 'तत्' तेन विभागेन ऋत्विजोऽस्मिन्जन्मनि प्राणेषु प्रतिष्ठिता वर्तन्ते, जन्मान्तरेषु बृहतीद्वारा स्वर्गेषु लोकेषु प्रतिष्ठिता वर्तन्ते।

---

१. 'ननु शमनपदार्थस्याध्वर्युकर्तृत्वात् तत्कार्यत्वेन शमिता भवति। आहुश्च न्यायविद — अध्वर्युरेव शमिता इति। नेत्याह, शमयिता इति हि तदा रूपमभविष्यत्। यदि शमनादवक्ष्यत्। किञ्च, यद्यध्वर्युरब्राह्मण स्यात् इत्यब्राह्मणशङ्कापि अध्वर्युशमितरि नोपपद्यते। यस्माद् ब्राह्मणानामेवार्त्विज्यं भवति। यदि परं यत्रब्राह्मणो यजमान स्याद् इति कल्प्यते, तदपि नातीव शोभनं मन्यामहे। ब्राह्मणानामेव सत्रेष्वधिकारात्। अथ तर्हि न्यायविदां स्थितिः। तस्मादन्यस्य शमितृ प्रयोगो भवति—इत्यभिप्राय' — इति गोविन्दस्वामी।

२ द्विरत्र पादौ तौ द्वौ द्वावन्ये द्वात्रिंशदेव हि ।
पादनैकेन वाच्यत्वादेता एकपदा मता ॥
यज्ञं वहन्ति यष्टॄणामभिदेहस्थितिस्त्विति ।
इत्वादीळान्तमुक्तास्ता षट्त्रिंशद्भक्तय पशो ॥—इति षड्गुरुशिष्य ।

ये [हनु से लेकर इळा तक के] ये छत्तिस भाग हैं; जिनके एक-एक [हनु, जिह्वा आदि पशु] विभाग से वे यज्ञ का निर्वाह करते हैं। बृहती [छन्द] भी छत्तिस अक्षरों का होता है [अतः सख्यासाम्य से ये विभाग बृहती रूप हैं] और स्वर्ग लोक बृहती से सम्बन्धित है। इस प्रकार वे उस [पशुविभाग] से प्राणों को और स्वर्ग [आदि] लोकों को प्राप्त करते हैं। उस [विभाग] से [इस जन्म में ये सत्र करने वाले] प्राणों में और [जन्मान्तर में बृहती द्वारा] स्वर्ग लोकों में प्रतिष्ठित होते हुए जाते हैं।

पशु प्रशसति—

स एष स्वर्ग्यः पशुर्य एनमेवं विभजन्ति ॥ इति ।

'ये' सत्रिण 'एनं' पशुम् 'एवम्' उक्तेन प्रकारेण विभक्त कुर्वन्ति, तेषां सत्रिणां स एष पशुः 'स्वर्ग्यः' स्वर्गाय हितो भवति[1] ॥

जो [यज्ञ करने वाले] इस [पशु] का इस प्रकार विभाग करते हैं उनके लिए यह यह पशु स्वर्गीय होता है।

प्रकारान्तरेण विभाग निन्दति—

अथ येऽतोऽन्यथा तद्यथा सेळगा वा पापकृतो वा पशुं विमथ्नीरंस्तादृक्तत् ॥ इति ।

'अथ' उक्तविभागप्रशसानन्तरम् इतरनिन्दोच्यत इति शेष । 'ये' सत्रिण 'अतः' पूर्वोक्तविभागाद् 'अन्यथा' प्रकारान्तरेण, विभजन्त इत्यनुवर्तते 'तत्' तेषां निदर्शनमुच्यते । इळाशब्देनान्नमुच्यते । तेन सह वर्तत इति सेळमन्नबहुलो देशस्तं गच्छन्तीति 'सेळगा.' विहितकर्माननुष्ठायिन केवलोदरपोषणपरायणा इत्यर्थ । 'पापकृत' प्रतिषिद्धकर्मकारिण । ते च द्विविधा यथा पशुं 'विमथ्नीरन्' केवल मासभक्षणार्थमेव हन्युः तादृगेव 'तत्' अन्यथाविभजन द्रष्टव्यम् ॥

और जो पूर्वोक्त विभाग से अन्य प्रकार द्वारा विभाग करते हैं तो यह उसी प्रकार होता है जैसे विहित कर्म का अनुष्ठान न करने वाले[2] [अर्थात् मात्र उदर का पोषण करने वाले] या पाप कर्म करने वाले पशु को मात्र मांसभक्षण के लिए ही मारते हैं।

---

१ 'स्व सु'याया पशु अशितव्य चैव लोप्सितव्य च'—इति तु० इत पूर्वम्, २०९ पृ० ।

२ नास्तिका सळगा नाम शिश्नोदरपरायणा ।
इळाऽन्न तेन सहित देशाद्देशेऽभिगम्यते (?) ।
गोवधात् तु हि जीवन्त प्रोक्ता पापकृतस्त्विति ।
वाशब्दरित्वह गृह्णाति दस्यून् म्लेच्छांश्च निर्घृणान् ॥
—इति षड्गुरुशिष्य ।

उक्त पशुविभाग तद्द्रष्टृमहर्षिद्वारा प्रशंसति—

तां वा एतां पशोर्विभक्तिं श्रौत ऋषिर्देवभागो विदाचकार, तामु हाप्रोच्यैवास्माल्लोकादुच्चक्रामत् ॥ इति ॥

'तामेतां' पूर्वोक्तां पशुविभक्तिं श्रुतनामकस्य[1] मुनेः पुत्रो महर्षिर्देवभागाख्यो महर्षि 'विदाचकार' ज्ञातवान् । 'तामु ह' तामेव स्वेन ज्ञातां विभक्तिम् 'अप्रोच्यैव' रहस्यविद्येति मत्वा कस्मैचिदप्यकथयित्वैवास्माल्लोकात् 'उच्चक्रामत्' उत्क्रान्तवान् मृत इत्यर्थः ॥

उस इस [पूर्वोक्त] पशु के विभाग को श्रुत[2] ऋषि के पुत्र महर्षि देवभाग ने [प्रथम ] जाना । किन्तु उस [अपने द्वारा ज्ञात विभाग] को [यह गोपनीय है यह मानकर] बिना किसी को बताए ही इस लोक को छोड़ दिया अर्थात् मर गए ।

कथं तर्हि तत्सम्प्रदाय ? इत्याशङ्क्याह —

तामु ह गिरिजाय बाभ्रव्यायामनुष्य प्रोवाच, ततो हैनामेतदर्वाङ् मनुष्या अधीयतेऽधीयते ॥ १ ॥ इति ।

'तामु ह' तामेव पशुविभक्तिम् 'अमनुष्य' मनुष्यव्यतिरिक्तः, कश्चिद्गन्धर्वादि 'बाभ्रव्याय' बभ्रोरपत्याय गिरिजनामकाय[3] महर्षये प्रोवाच । 'एतदर्वाङ्मनुष्या' एतस्माद् गिरिजाख्यात् महर्षेरर्वाचीनाः सर्वे मनुष्याः 'ततः' तस्य गिरिजाख्यस्य सकाशात् 'एनां' पशुविभक्तिमधीयते । पदाभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायाः प्रथमाध्याये (एकत्रिंशाध्याये) प्रथमः खण्डः[4] ॥ १ ॥ [२२४]

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यादेशतो श्रीमत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश' नामभाष्ये ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायाः प्रथमाध्यायः (एकत्रिंशोऽध्यायः) ॥ १ ॥

---

१ 'श्रुतर्षि'—इति ऋ० १० ७ ३, तै० ब्रा० २ ५ ६ १ ।

२ 'श्रौत ऋषि श्रुतिमधीते वेत्ति वा स श्रौत ऋषि, श्रुतिसिद्धो वा'—इति गोविन्दस्वामी ।

३ गिरिजा एवयामरुत् – इति ऋ० ५ ८७ १ ।

४ एष खण्डस्तूद्धृतो यथावदाश्वलायनीयश्रौतसूत्रे १२ ९ १–१८ ।

पुनः उसी [पशु विभाग] को किसी मनुष्येतर[1] [गन्धर्व आदि] ने बभ्रु के पुत्र गिरिज नामक महर्षि को बताया। उसी [गिरिज नामक महर्षि] से इन सभी अर्वाचीन मनुष्यों ने ज्ञात किया।

॥ इस प्रकार ऐतरेय ब्राह्मण के सप्तम पञ्चिका के प्रथम (इकतीसवें)
अध्याय की सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ १ ॥

— o —

१ (i) 'स पुनरुत्क्रान्तोऽपि सन्नमनुष्यशरीरो बाभ्रव्याय मुनये प्रोवाच' इति गोविन्दस्वामी।

(ii) तत पशु विभागज्ञे देवभागे दिव गते।
अलब्धविद्ये भूलोके कश्चिद्गन्धर्वसत्तम।
देवभागात् स्वर्गगतादिमा विद्यामधीत्य वै।
भूमिमागम्य मुनये बभ्रुगोत्रोद्भवाय तु॥
गिरिजाख्यायोक्तवान् वै पुरैत्येव ब्रवीत्यथ। इति षड्गुरुशिष्य।

# अथ द्वितीयोऽध्यायः

## प्रथमः खण्डः

—: ० :—

# [अथ द्वात्रिंशोऽध्यायः

## प्रथमः खण्डः]

सप्तिणा वर्णितं कार्यं प्रायश्चित्तं ब्रवीत्यथ ।
चोद्योत्तरप्रकारेण सुस्पष्टमिति गृह्यताम् ॥ १ ॥

तत्र प्रथमे चोद्योत्तरे दर्शयति—

**तदाहुर्य आहिताग्निरुपवसथे म्रियेत कथमस्य यज्ञ स्यादिति, नैन याजये-दित्याहुरनभिप्राप्तो हि यज्ञ भवतीति ॥ इति ।**

तत्र यज्ञवैकल्यविषये कचिद्‌ब्रह्मवादिन पृच्छन्ति 'य' पुमानाहिताग्नि सपुपव-सथाख्ये सुत्यादिनात् पूर्वदिने म्रियेत, अस्य यज्ञ कथ प्रवर्तते?' इति प्रश्न.। एतस्येद-मुत्तरम् 'एन' मृत न याजयेदित्यभिज्ञा आहु.। तत्रैवमुपपत्ति —सुत्याया अनुपक्रान्तत्वादय यज्ञमनभिप्राप्त एव भवति, तस्माद्यागो न युक्त ॥

१II.२ [XXXII.१] [यज्ञ वैकल्य के विषय में] कुछ ब्रह्मवादी (प्रथम) प्रश्न करते हैं कि जो पुरुष अग्नि स्थापन के बाद उपवसथ [सुत्या दिन से पूर्व] के दिन यदि मर जाय तो इसके यज्ञ का क्या हो? उत्तर—कुछ अभिज्ञ जन कहते हैं कि इस [मृत व्यक्ति] का यज्ञ न करे, क्योंकि [सुत्या के उपक्रान्त न होने से] यह यज्ञ उसको प्राप्त हो नहीं होता[1]।

द्वितीयप्रश्नोत्तरे दर्शयति—

**तदाहुर्य आहिताग्निरधिश्रितेऽग्निहोत्रे सान्नाय्ये वा हविःषु वा म्रियेत, का तत्र प्रायश्चित्तिरित्यन्नैवैनान्यनुपर्यादध्याद् यथा सर्वाणि सदह्येरन्, सा तत्र प्रायश्चित्ति. ॥ इति ॥**

---

१. (i) अनभिप्राप्त. प्राप्तुमनर्हं, मृतस्यानधिकारात् सर्वत्वारे तु प्रतो आपदव्यदानाम्य 'ब्राह्मणा समापयत मे यज्ञमिति' प्रैषोक्तेरनुष्ठान स्यादेव ।
(ii) प्राप्तो नाप्तस्तस्य चित्ति समाधानम् । गणसूत्रात् ('प्राप्तस्य चितिचित्ता' इति गणसूत्रेण सुट् इत्यर्थ.)। इति षड्गुरुशिष्य ।

'अग्निहोत्रे' तत्साधनभूते पयसि कार्यार्थं वह्नावधिश्रिते सति, तथा 'सान्नाय्ये' दर्शपूर्णमासार्थं क्षीरेऽधिश्रिते सति, तथा 'हविष्षु' पुरोडाशादिष्वधिश्रितेषु, यजमानस्य मरणे किं प्रायश्चित्तम् ? इति प्रश्नः । प्रायो नाशस्तस्य चित्तं समाधानम् । 'अत्रैव' यजमानदहनदेश एव 'एतानि' क्षीरादीनि 'अनुपर्यादध्यात्' । यजमानमनु परितः प्रक्षिपेत् । येन प्रकारेण सर्वाणि तानि यजमानेन सम्भूय दह्येरन् तथा प्रक्षिपेत् । 'सा' तादृशी क्रिया 'तत्र' दोषे प्रायश्चित्तिर्भवति ॥

कुछ ब्रह्मवादी (द्वितीय) प्रश्न करते हैं कि यदि कोई अग्निहोत्री अग्निहोत्र के [अर्थात् उसके साधनभूत दुग्ध के वह्नि पर अधिश्रित करने के] बाद या सान्नाय्य [अर्थात् दर्शपूर्णमास के लिए दुग्ध के दही बनाने के लिए अधिश्रित करने] के बाद अथवा [पुरोडाश आदि] हवि के अधिश्रित करने के बाद मर जाय तो क्या प्रायश्चित्त है ? उत्तर—उसी जगह [यजमान के जलाने के स्थान पर ही] इन [क्षीर आदि] को यजमान के चारों ओर रखना चाहिए जैसे कि सभी [यजमान के साथ साथ] जल जाँय । यही [क्रिया] उस दोष में प्रायश्चित्त है ।

तृतीये प्रश्नोत्तरे दर्शयति—

तदाहुर्यं आहिताग्निरासन्नेषु हविष्षु म्रियेत, का तत्र प्रायश्चित्तिरिति, याभ्य एव तानि देवताभ्यो हवींषि गृहीतानि भवन्ति, ताभ्यः स्वाहेत्येवैनान्याहवनीये सर्वहुन्ति जुहुयात्, सा तत्र प्रायश्चित्तिः ॥ इति ।

'हविष्षु' पुरोडाशादिषु वेद्यामासन्नेषु यजमानमरणे । याभ्यो देवताभ्यः पूर्वं तानि हवींष्युपक्लृप्तानि ताभ्यः तद्देवतानामानि चतुर्थ्यन्तान्युच्चार्य स्वाहेत्यनेनैव मन्त्रेण एतानि हवींषि 'सर्वहुन्ति' निःशेषं यथा सर्वाणि हुतानि भवन्ति तथा आहवनीये जुहुयात् ॥

कुछ ब्रह्मवादी (तृतीय) प्रश्न करते हैं कि यदि कोई अग्निहोत्री वेदी पर पुरोडाश आदि हवियों के इकट्ठे करने के बाद मर जाय तो वहाँ क्या प्रायश्चित्त है ? उत्तर-जिन देवताओं के लिए वे हवियाँ लाई गई थी, चतुर्थ्यन्त में उन देवों के नाम का उच्चारण करके 'स्वाहा' इस मन्त्र से इन सब का आहवनीय अग्नि में हवन कर देते हैं । यही वहाँ प्रायश्चित्त है ।

चतुर्थे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निः प्रवसन् म्रियेत, कथमस्याग्निहोत्रं स्यादित्यभिवान्यवत्साया पयसा जुहुयादन्यदिवैतत्पयो यदभिवान्यवत्साया अन्यदिवैतदग्निहोत्रं यत्प्रेतस्य ॥ इति ।

---

१ (i) अनुपर्याधानं वाह्ये परित आधानम् —इति गोविन्दस्वामी ।

(ii) 'अत्रास्मिन् यजमानशरीरे दह्यमाने एतानि पय आदीनि अनुपर्याधाय् प्रक्षेपार्थं । स = सह यथा सन्दह्येरन् तथा । इति षड्गुरुशिष्य ।

पुनरपि पक्षान्तरमाह—

अथाप्याहुरेवमेवैनानजस्रानगुह्वत इन्धीरन्ना शरीराणामाहर्तोरिति ॥ इति ।

अपि चान्ये याज्ञिका पक्षान्तरमाहु । देशान्तरे मृतस्य प्रेतस्य शरीराणाम् अस्थ्यादिप्रेतावयवानाम् 'आहर्तो' आहरणपर्यन्तम् एनान्' आहवनीयादीस्त्रीनग्नीन् 'अजस्रान् उपशमरहितान् अजुह्वत' होमरहितान् 'एवमेव' अग्निहोत्रे प्रकारेण 'इन्धीरन्' प्रज्वालयेयुरिति । होमाभावेऽपि अग्निरनया यथा नायशाम्यति । तथा प्रेतास्थिसमानयनपर्यन्त प्रज्वालयेदित्यर्थ ॥

अन्य याज्ञिक इस प्रकार से अन्य पक्ष करके कहते हैं कि मृत अग्निहोत्री के बन्धु-बान्धव उन आहवनीय आदि तीनों अग्नियों को होमरहित भी जलता हुआ रक्खें जब तक कि विदेश में मृत उस प्रेत के शरीर की अस्थियाँ संचित न हो जायें ।

प्रेतास्थिविनाशे किं कर्तव्यमित्याशङ्क्याऽऽह—

यदि शरीराणि न विन्देरन् पर्णशर षष्टिस्त्रीणि च शतान्याहृत्य तेषां पुरुषरूपकमिव कृत्वा तस्मिंस्तामावृत कुर्युरथैनान्छरीरैराहृतै सस्पर्श्योद्वासयेयु ॥ इति ।

यदि कथंचित् शरीराणि अस्थ्यादीनि न विन्देरन् विनश्येयु, तदा 'पर्णशर'[1] पलाशवृक्षस्य च्छिन्नान् वृन्तान् षष्ट्युत्तरशतत्रयसङ्ख्याकानाहृत्य तेषां वृन्तानां सबन्धि पुरुषरूपकमिव कृत्वा मनुष्यसदृशं किंचिद्रूपं निर्माय, 'तस्मिन्' रूपे तामावृत प्रेतशरीरोचित प्रकारं दहनपिण्डदानादिरूप कुर्यु । अथ तदानीं कृत्रिमरूपदहनकाले 'एनान्' आहवनीयाद्यग्नीन्श्मशाने नीत्वा समाहृतैस्तैः पलाशवृन्तनिर्मितैः शरीरावयवैः 'सस्पर्श्य' सस्पृष्ट कृत्वोद्वासयेयु[2] ॥

और यदि [प्रेत के] शरीरावयव [अस्थि आदि] न मिलें तो तीन सौ साठ पलाश वृक्ष क [छिन्न वृन्त अर्थात् कटे हुए पत्तों वाली] छड़ियों को लेकर एक पुरुष की आकृति की तरह का रूप बनाकर उस [रूप] में प्रेतशरीर का उचित कृत्य दहन एवं पिण्ड दान आदि करना चाहिए । और, तब उस कृत्रिम रूप के जलाने के समय इन आहवनीय आदि

---

१ षष्ठ्यर्थे प्रथमा इति गोविन्दस्वामी ।

२ शरीरनाशे त्रीणि षष्टिशतानि पलाशवृन्ताना कृष्णाजिने पूर्ववत् —इति कात्या० श्रौ० २५ ८ १५ ।

अग्नि को श्मशान में लाकर समाहृत उन पलाश की छड़ियों से निर्मित शरीरावयवों से मिलाकर अन्त्येष्टि संस्कार कर विसर्जन करे[1]।

*पुरुषरूपनिर्माणप्रकारं दर्शयति—*

**अध्यर्धशतं काये, सक्थिनी द्विपञ्चाशे च विंशे, चोरू द्विपञ्चविंशे, शेषं तु शिरस्युपरि दध्यात् ॥ इति ।**

आनीतानां पलाशवृन्तानाम् 'अध्यर्धशतम्' अधिकेनार्धेन पञ्चाशद्रूपेण युक्तं शतं 'काये' मध्यशरीरस्थाने 'दध्यात्' परितः प्रक्षिपेत् । पञ्चाशत्संख्याकानां वृन्तानां समूहरूपं 'पञ्चाशं', द्विसंख्याके पञ्चाशे 'द्विपञ्चाशे', विंशतिसंख्याकानां समूहरूपं विंशं द्विपञ्चाशे च विंशे च सक्थिनी[2] 'दध्यात्' चत्वारिंशदधिकेन शतेन सक्थिद्वयं निष्पादयेदित्यर्थः । पञ्चविंशतिसंख्याकानां समूहरूपं पञ्चविंशं, द्विसंख्याके पञ्चविंशे, ते 'ऊरू दध्यात्' पञ्चाशत्संख्याकैर्वृन्तैरूरुद्वयं निष्पादयेदित्यर्थः । एवं नवत्य (चत्वारिंशद)धिकशतद्व(य)स्य गते सति 'शेषं' सप्त(विंश)तिसंख्याकं शिरस्युपरि प्रक्षिपेत् ॥

[पुरुष-रूप निर्माण का प्रकार यह है कि] एक सौ पचास छड़ियों से धड़, एक सौ चालीस छड़ियों से जाँघें और पचास छड़ियों से दोनों ऊरुओं को बनावे एवं शेष [बीस] छड़ियों को सिर पर रखें ।

---

१ (i) पर्णशर. = शरपर्णं तु । पलाशवृन्तानि त्रिशतद्विशतानि, तेषां तैः, मिश्र आम, आवृत् प्रयोग । कथमावृत ? अथ एनान् = अग्नीन्, शरीरैर्लुप्तोपमम्, आहृतशरीरास्थिमिरिव । सरपर्यं = सगमय्य । उद्वासनम् = त्यागः । " (काये = ) स्यर्थं हि ।
(ii) 'Leaf stalks' इति कीथमहोदयः । Tc3 sasth is one of the extra ordinary forms of the tradition : sustim must no doubt be read

२. 'सक्थ्यूरुशब्दयोरपि विभक्तिव्यत्ययेन सप्तम्यर्थो द्रष्टव्यः । सक्थ्नोरूर्वोरिति क्रमः कल्प्यः'–इति गोविन्दस्वामी ।

३. (i) कायः पलाशवृन्तानां पञ्चाशदधिकं शतम् ।
एकं सक्थि द्विपञ्चाशदपरं चैव विंशति. ।
केचित्तु द्विपञ्चाशे विंशे चैवेति मिंशते ॥
सहविंशतियुक्तौ तु स्यातामूरू उभावपि ।
ग्रीवे द्वे पञ्चविंशतिस्च द्वन्द्वाड्ङति विंशते. (?) ।
सचतुश्चाशीतिसंख्यवृन्तानि तु शिरो भवेत् । इति षड्गुरुशिष्य ।

(ii) अध्यर्धशतं पञ्चाशच्छतं काये शरीरे । अवशिष्टानां द्विपञ्चाशत् । द्वौ च पञ्चाशच्च द्विपञ्चाशत् । तदेतत्सक्थ्न पादस्य भवति । तावदेवापरस्य विंशे विंशतिश्च यदपि तयोरेवोपसमस्यते । इति गोविन्दस्वामी ।

प्रवसतो मृतस्याग्निहोत्रवैकल्यप्रायश्चित्त निगमयति—

**सा तत्र प्रायश्चित्ति ॥२॥ इति ।**

'सा' पोक्तक्रिया 'तत्र' वैकल्ये 'प्रायश्चित्तिः' समाधानकरणम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया द्वितीयाध्याये (द्वात्रिंशाध्याये) प्रथम खण्ड ॥ १ ॥ ( २ ) [२२५]

यही यहां [उस प्रवास पर गए मृत व्यक्ति के अग्निहोत्र का] प्रायश्चित्त है ।

॥ इस प्रकार बत्तीसवें (द्वितीय) अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

पञ्चमे प्रश्नान्तरे दर्शयति—

**तदाहुर्यस्याग्निहोत्र्युपावसृष्टा, दुह्यमानोपविशेत्, का तत्र प्रायश्चित्तिरिति तामभिमन्त्रयेत ॥ इति ।**

अग्निहोत्रहविरर्थं दोग्धव्या धेनु 'अग्निहोत्री' । 'यस्य' अग्निहोत्रिण सबन्धिनी सा धेनु 'उपावसृष्टा' वत्सेन सयोजिता दुह्यमाना सती दोहनस्य विघ्न कृत्वा यद्युपविशेत्, तदानी वक्ष्यमाणेन मन्त्रेण तामभिमन्त्रयेत । यद्यप्येतद् पञ्चविंशाध्यायस्य द्वितीयखण्डे[1] वर्णित, तथाऽपि तत्र बुद्धिस्थसगति । अत्र तु प्रायश्चित्तप्राधा येनोपक्रमात् साक्षादेव सगतमित्यभिप्रेत्य पुनरप्याम्नातम् ॥

VII ३[XXXII.२] इस सम्बन्ध में कुछ याज्ञिक (पाँचवाँ) प्रश्न करते हैं कि जिस [यजमान] की अग्निहोत्र के लिए सम्पादित गाय यदि दोहन के लिए बछड़े से संयोजित होने के बाद दुहने के मध्य ही बैठ जाय तो उसका क्या प्रायश्चित्त है ? उस अग्निहोत्री गाय को तब इस मन्त्र से अभिमन्त्रित करे—

तत्रोत्तरखेप दर्शयति—

**यस्माद्भीपा निषीदसि, ततो नो अभय कृधि । पशूंश्च सर्वान् गोपाय नमो रुद्राय मीहळुष इति तामुत्थापयेदुदस्याद्देव्यदितिरायुर्यज्ञपतावधात् । इन्द्राय कृण्वती भाग, मित्राय वरुणाय चेत्यथास्या उदपात्रमूधसि च मुखे चोपगृह्णीयादथैना ब्राह्मणाय दद्यात्, सा तत्र प्रायश्चित्ति. ॥ इति ।**

एतत्सर्वं पूर्वमेव[2] व्याख्यातम् ॥

---

१ द्र० इस पूर्वम्, ८५९-८६२ पृ०, आश्व० श्रौ० ३ ११ १-३ । आप० श्रौ० ९ ५ ।

२ द्र० इतः पूर्वम्, ८५९-८६२ पृ० । आश्व० श्रौ० ३ ११ १—३ ।

'हे अग्निहोत्रि गौ, जिस [व्याघ्र आदि] के भय से तुम बैठती हो उससे हमें अभय करो और हमारे सभी पशुओं की रक्षा करो, सेचन—समर्थ [पशुओं के स्वामी पशुपति] रुद्र के लिए नमस्कार होवे।' [अभिमन्त्रण के बाद] उस [मन्त्र] से उठावे। [तब उठाने के लिए यह मन्त्र पढ़े] 'इन्द्र, मित्र और वरुण के लिए हविर्भाग का सम्पादन करती हुई अदिति देवता रूप [अग्निहोत्री गौ] उठी और उठकर यज्ञ के पति यजमान में आयु को दिया।' अथवा, [उठने के बाद] इस [अग्निहोत्री गौ] के थन में [छिड़का देने के लिए गृहीत] जल पात्र को उसके मुख के समीप ले जाकर [जल पिलाकर फिर] उसे ब्राह्मण को दान में दे दे। यही [विकल्प में] यह प्रायश्चित्त है।

षष्ठे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना वाश्येत, का तत्र प्रायश्चित्तिरित्यशनाया ह वा एषा यजमानस्य प्रतिख्याय वाश्यते, तामन्नमप्यादयेच्छान्त्यै, शान्तिर्वा अन्नं, सूयवसाद्भगवती हि भूया इति, सा तत्र प्रायश्चित्ति. ॥ इति।

एतदपि पूर्वत्र[1] व्याख्यातम् ॥

इस विषय में यतिकजन (छठा) प्रश्न इस प्रकार करते हैं कि जिस यजमान की अग्निहोत्र के लिए सम्पादित गाय बछड़े के छोड़े जाने पर दुहते समय यदि रँभाये तो उसका क्या प्रायश्चित्त है? वह अपनी क्षुधा को यजमान से ज्ञापन के लिए रम्भाती है। अतः उस [क्षुधार्त अग्निहोत्री गौ] को अन्न और तृणादि भी खिलावे। [इस प्रकार यह भक्षण क्षुधा की] शान्ति के लिए ही होता है, [क्योंकि] अन्न शान्ति [के हेतु रूप में प्रसिद्ध ही] है। 'सूयवसाद्' आदि मन्त्र से अन्न दे 'हे अग्निहोत्री, पूज्य! तुम सुन्दर जौ के तृण को खाती हो।' इस प्रकार वह [अन्न भक्षण ही] यहाँ प्रायश्चित्त है।

सप्तम प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्निहोत्र्युपावसृष्टा, दुह्यमाना स्पन्देत, का तत्र प्रायश्चित्तिरिति, सा यत्तत्र स्कन्दयेत्तदभिमृश्य जपेद्यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः। पयो गृहेषु पयो अघ्न्यायां, पयो वत्सेषु पयो अस्तु तन्मयीति, तत्र यत्परिशिष्टं स्यात्, तेन जुहुयाद्, यद्यल होमाय स्याद्, यद्यु वै सर्वं सिक्तं स्यादथान्यामाहूय तां दुग्ध्वा तेन जुहुयादा त्वेव श्रद्धायै होतव्यं, सा तत्र प्रायश्चित्तिः ॥ २ ॥ इति।

---

1 द्र० द्रष्ट० पूर्वम् ८६२ पृ०। आश्व० श्रौ० ३।११।४।

एतदपि पूर्वत्र[1] व्याख्यातम्[2] ॥

॥ इति श्रीमत् सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये सप्तम पञ्चिकाया द्वितीयाध्याये (द्वात्रिंशाध्याये) द्वितीय खण्ड ॥२॥ (३) [२२६]

इस विषय में याज्ञिकजन (सातवां) प्रश्न करते हैं कि जिस यजमान की अग्निहोत्री गौ बछड़े के छोड़े जाने पर दुहते समय यदि कुछ विचलित हो अर्थात् छटक जाय तो उसका क्या प्रायश्चित्त है? वह चलती हुई यदि भूमि पर दूध छलका दे तो उस [दूध] को हाथ से स्पर्श करके मन्त्र जपे। 'दूध जो पृथ्वी पर फैल गया या जो [तृणादि] वनस्पति में मिल गया अथवा जो जल में मिल गया वह सब दूध हमारे गृहों में, वह दूध हमारी गायों में, वह दूध हमारे बछड़ों में या मेरे [उदर] में होवे।' उस [दोहन पात्र] में [भूमि से गिरने के बाद] यदि इच दूध होम के लिए पर्याप्त होए तो उससे आहुति दे, और यदि सभी दूध [भूमि पर गिरकर] सिक्त हो गया हो तो दूसरी गाय बुलाकर एव उसे दुहकर तब उससे आहुति दे। [यदि दूसरी गाय न प्राप्त हो तो भी अग्निहोत्र को न छोड़े, किन्तु] श्रद्धा से ही हवन करना चाहिए। वहां यही प्रायश्चित्त है।

॥ इस प्रकार बत्तीसवें (द्वितीय) अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

अष्टमे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्य सायं दुग्धं सान्नाय्यं दुष्येद्वाऽपहरेद्वा, का तत्र प्रायश्चित्तिरिति, प्रातर्दुग्धं द्वैधं कृत्वा तस्यान्यतरां भक्तिमातच्य तेन यजेत, सा तत्र प्रायश्चित्तिः ॥ इति।**

दर्शपूर्णमासयोर्दध्यर्थं सायंकाले दुग्धं पयः सान्नाय्यरूपं[3] केशकीटादिभिर्दुष्येत्, य

---

१ द्र० इत० पूर्वम् ८६१, ८६२ पृ०। आश्व० श्रौ० ३ ११ ७—१०।

२ सर्व-तत् पञ्चमपञ्चिकाया पञ्चमाध्यायायद्वितीयखण्ड द्रष्टव्यम् ८५९ पृ०।
　　पूर्वमुक्तार्थक　　खण्डास्त्रिस्तदाहुरिहाधिकम्।
　　पुनरुक्तं किं फलं स्यादिति चेत् पृच्छ तां श्रुतिम् ॥ इति षड्गुरुशिष्य ।

३ 'स प्रजापति पशून् अब्रवीद् एतदस्मै सन्नयतेति, तत् पशव ओषधीभ्योऽध्यात्मन् सम-मनयन् तत् प्रत्यदुहन् यत् समनयन् तत् सान्नायस्य सान्नाय्यत्वम्'—इति तै० स० २ ५ ३ ३। तदेतस्मात् पशुपयसा सान्नाय्यत्वमवगम्यते। गोरस इति एतत्-ब्राह्मणवचनव्याख्यया सायण। 'सोम खलु वै सान्नाय्यम् –इति तै० ब्रा० ३ २ ३ ११। पौर्णमासं हविः सान्नाय्यम्'—इति शत० ब्रा० १ ६ २ ६। 'सान्नाय्य' 'दधिपयोलक्षणम्'–इति,शत० ब्रा० ११ २ ६ ६ भाष्ये सायण। 'सम्यङ् नीयते होमार्थ मग्निं प्रति इति सान्नाय्य हविर्विशेष '—इति पा० ३ १ १२९ सूत्रवृत्तौ दीक्षित। 'सान्नाय्य दुग्धदधिरूप हवि' इति कात्या० श्रौ० ४ २ १७ सूत्रवृत्तौ याज्ञिकदेवश्च।

कश्चिदपहरेद्वा, तदानीं परेद्युः प्रातर्दुग्धं पयो भागद्वयं कृत्वा तत्रैकमागमातच्य,[1] तस्य दधिस्थानीयेन तेन यजेत ॥

vii.४ [xxxii.३] ब्रह्मवादी (आठवाँ) प्रश्न करते हैं कि दर्शपूर्णमास याग में दही के लिए जिस [अग्निहोत्री] का सायंकाल में दुहा हुआ दुग्ध सान्नाय [= हवि के लिए रात में जमाई जाने वाली दही] यदि [केश कीट आदि के द्वारा] दूषित हो जाय या किसी के द्वारा चुरा लिया जाय तो वहाँ क्या प्रायश्चित्त है ? उत्तर—तब दूसरे दिन प्रातःकाल के दुग्ध का दो भाग करके उसके एक भाग को लेकर उस [दधि स्थानीय] से यजन करे। यहाँ यही प्रायश्चित्त है।

नवमे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्य प्रातर्दुग्धं सान्नाय्यं दुष्येद्वाऽपहरेद्वा, का तत्र प्रायश्चित्ति-रित्यैन्द्रं वा माहेन्द्रं वा पुरोळाशं तस्य स्थाने निरुप्य तेन यजेत, सा तत्र प्रायश्चित्तिः ॥ इति।

प्रातर्दुग्धरूपस्य सान्नाय्यस्य दोषापहारान्यां वैकल्ये सति, तस्य दुग्धस्य स्थाने इन्द्रदेवताकं महेन्द्रदेवताकं वा पुरोळाशं कृत्वा, तेन यजेत। इन्द्रियाग्निमहेन्द्रयाजि-भेदाद्देवताव्यवस्था ॥

ब्रह्मवादी (नवाँ) प्रश्न करते हैं कि जिस [अग्निहोत्री] का प्रातःकाल दुहा हुआ सान्नाय्य [हव्यर्थ दधि] रूप दुग्ध यदि [कीड़े मकोड़े गिरने से] दूषित हो जाय अथवा [किसी चोर द्वारा] चुरा लिया जाय तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उस दुग्ध के स्थान में इन्द्रदेवताक या महेन्द्रदेवताक पुरोडाश बनाकर उस [पुरोडाश] से यजन करे। यहाँ यही प्रायश्चित्त है।

दशमे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्य सर्वमेव सान्नाय्यं दुष्येद्वाऽपहरेद्वा; का तत्र प्रायश्चित्तिरित्यैन्द्रं वा माहेन्द्रं वेति समान, सा तत्र प्रायश्चित्तिः ॥ इति।
सायं दुग्धं प्रातर्दुग्धं चेत्युभयं 'सर्वम्' ॥

ब्रह्मवादी (दसवाँ) प्रश्न करते हैं कि जिस [अग्निहोत्री] का सभी [सायंकालीन और प्रातःकालीन दोनों ही] सान्नाय्य दुग्ध [कीटादि द्वारा] दूषित हो जाय या चुरा लिया जाय तो वहाँ क्या प्रायश्चित्त है ? उत्तर [उस दुग्ध के स्थान में] इन्द्रदेवताक अथवा महेन्द्र-

---

१. अपहरेत् = परस्वम्, तस्य लिङ्, अपह्रियेत चोरादिभिः। द्वेध = द्विधा। द्विच्योश्च धमुञ् (पा० सू० ५. ३. ४५)। भक्ति = भागम्। आतच्य = आतञ्चनं कृत्वा। इति षड्गुरुशिष्यः।

देवताक [पुरोडाश बनाकर यजन करे। जैसे ऊपर कहा है उसी के] समान कर्म है।[1] वहाँ यही प्रायश्चित्त है।

एकादशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्य सर्वाण्येव हवींषि दुष्येयुर्वाऽपहरेयुर्वा, का तत्र प्रायश्चित्तिरिरत्याज्यस्यैनानि यथादेवत परिकल्प्य तयाऽऽज्यहविषेष्ट्या यजेतातोऽन्यामिष्टिमनुल्बणां तन्वीत यज्ञो यज्ञस्य प्रायश्चित्तिः ॥ ४ ॥ इति।**

पुरोडाशदधिपयोरूपाणि हवींषि 'सर्वाणि' इत्युच्यन्ते। आज्यस्य सम्बन्धीनि 'एतानि' त्रीणि हवींषि, तत्तद्देवतामनतिक्रम्य तदनुसारेण परिकल्प्याऽऽज्यहविर्युक्तया तयेष्ट्या यजेत। इष्ट्वा च तत्तदूर्ध्वमन्यामिष्टिम् 'अनुल्बणाम्' अन्यूनानधिकां यथाशास्त्रं 'तन्वीत' विस्तारयेत्[2]। यथाशास्त्रमनुष्ठितो 'यज्ञ' पूर्वस्य विकलस्य यज्ञस्य' प्रायश्चित्तिः[3] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायां द्वितीयाध्याये (द्वात्रिंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (४) [२२७]

ब्रह्मवादी (ग्यारहवाँ) प्रश्न करते हैं कि जिस [अग्निहोत्री] का [पुरोडाश, दधि, और दुग्ध रूप] सभी हविर्द्रव्य दूषित हो जाय[4] या किसी के द्वारा उठा ले जाया जाय तो वहाँ क्या प्रायश्चित्त है। उत्तर—आज्य से सम्बन्धित ये [तीन पुरोडाश, दधि और दुग्ध रूप] हवियाँ उन-उन देवताओं के अनुसार परिकल्पित करके उस आज्ययुक्त हवि की इष्टि से यजन करे। उस [इष्टि] के बाद अन्य इष्टियों को कम या अधिक किए बिना जैसे शास्त्र में कहा है वैसे ही विस्तारपूर्वक करे। इस प्रकार शास्त्र के अनुसार अनुष्ठान ही पूर्व के विकृत यज्ञ का प्रायश्चित्त है।

॥ इस प्रकार बत्तीसवें (द्वितीय) अध्याय के तीसरे खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

द्वादशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत, का तत्र प्रायश्चित्तिरिति, सर्वमेवैनत्स्रुच्यभिपर्यासिच्य प्राङुदेत्याऽऽहवनीये हैता समिधमभ्यादधात्य-**

---

१ हविरित्यर्थः। ऐन्द्रं वा माहेन्द्रं वा पुरोळाशं तस्य स्थाने निरुप्य तेन यजेतेत्युक्तमत्रापि तुल्यमित्यर्थः। इति षड्गुरुशिष्यः।

२ द्र० आश्व० श्रौ० ३ १० १९।

३ अन्या = तामेव हविर्भेदभिन्नाम्। अनुल्बणा = अन्यूनाधिकाम्।
　　यज्ञस्य न्यूनता सम्यग्यज्ञेन खलु पूर्यते।
　　जलोत्पन्नपङ्कशुद्धिर्जलेनैव हि दृश्यते॥ इति षड्गुरुशिष्यः।

४. अपह्रियेरन् दुष्येरन् प्राप्तेऽन्यच्छान्दस त्विह॥ इति षड्गुरुशिष्यः।

थोत्तरत आहवनीयस्योष्णं भस्म निरूह्य जुहुयान् मनसा वा प्राजापत्यया वर्चा तद्धुत चाहुत च; स यद्येकस्मिन्नुन्नीते यदि द्वयोरेष एव कल्पस्त-च्चेद्व्यपनयितुं शक्नुयान्नि.षिच्यैतद्दुष्टमदुष्टमभिपर्यासिच्य तस्य यथोन्नीतो स्यात् तथा जुहुयात्, सा तत्र प्रायश्चित्ति ॥ इति ।

अग्निहोत्रार्थं पयो गार्हपत्ये पाकार्थं यदधिश्रित, तद्यदि किंचिद् अमेध्यं यज्ञानर्हं केशकीटादिकम् 'आपद्येत' प्राप्नुयात् तदानीम् 'एतत्' हवि सर्वमप्यग्निहोत्रहवण्या 'स्रुचि' साकल्येन सिक्त्वा, प्राङ्मुख 'उदेत्य' उत्थायाऽऽहवनीय प्रति गत्वा, तस्मिन् 'एता' नित्या समिधमादध्यात् । 'अथ' अनन्तरमाहवनीयस्योत्तरभागे किंचिदुष्ण भस्म ततो निःसार्य तस्मिन् 'मनसा' नित्याग्निहोत्रमन्त्रमनुस्मृत्य 'वर्चा वा' 'प्रजापते न त्वदेतानि' इति मन्त्रमुच्चार्य जुहुयात् । तत्' एतद्भस्मन उष्णत्वाद्धुतमपि भवति । अग्निराहित्यादहुत-मपि भवति । न केवलमधिश्रित एवामेध्यनया एत प्रायश्चित्त, किं तर्हि ? चतुरुन्नयना-वस्थाया यद्येकस्मिन्नुन्नीते, यदि वा द्वयोरुन्नीतयोरमेध्यपात, तदानीमेष एव 'कल्प.' प्रकार. । उन्नयन नामाग्निहोत्रहवण्या सेचनम् । ततो यदि कीटादिदूषितमग्निहोत्रहवण्यामुन्नीत यदपनेतु शक्नुयात्, तदानीमेतद्दुष्ट नि षिच्य' नि सार्य, स्थाल्यामवस्थितम् 'अदुष्ट' क्षीर-मग्निहोत्रहवण्यामभिपर्यासिच्य यथोन्नीती स्यात्' उन्नीती यत्र प्रकारेण भवति, तेन प्रकारेण जुहुयात् । 'अदुष्ट' द्रव्यान्तरमधिश्रयणादिना संस्कृत्य जुहुयादित्यर्थः[२] ॥

१॥ ५ [XXXII ४] ब्रह्मवादियों का (बारहवाँ) प्रश्न है कि अग्निहोत्र के लिए दुग्ध जब गार्हपत्य अग्नि पर पकाने के लिए रखा जाय और कोई [केश कीटादि] अमेध्य [=मेध अर्थात् यज्ञ उसे दूषित करने वाला कोई] द्रव्य गिर जाय तो वहाँ क्या प्रायश्चित्त है ? उत्तर—सभी हविर्द्रव्य को [अग्निहोत्रहवणी] स्रुवा में भरकर पूर्व में उठकर [गार्हपत्य से] आहवनीय अग्नि के प्रति जाकर उसमें इस नित्य समिधा को डाल दे । इसके बाद आहवनीय के उत्तर की ओर कुछ गर्म भस्म निकालकर या तो नित्य प्रति के तरह अग्निहोत्र मन्त्र को मन में स्मरण करके अथवा प्रजापति देवताक ['प्रजापते न त्वदेतानि' आदि] ऋचा का उच्चारण करके आहुति दे । उस [भस्म की उष्णता] से वह हवन किया हुआ भी होता है और [अग्निविहीन होने से] अहुत [हवन न किए हुए] के समान भी होता है । [यह प्रायश्चित्त मात्र हविर्द्रव्य में अमेध्य वस्तु गिरने का ही नहीं है अपितु] यदि उन्नयन [अग्निहोत्रहवणी में सिंचन] को [चार अवस्थाओं में से] एक भी अवस्था में अथवा दूसरे बार उन्नयन की अवस्था में भी

१. ऋ० १०.१२१.१० । तु० सं० ब्रा० १५५.३, शत० ब्रा० १२.४.२४ ।

२ ध्यानप्राणानि हवींषि केशनखकीटपतङ्गैरन्यैर्वा बीभत्सैः' प्रजापते न त्वदेतान्यन्य इति "जुहुयात्'—इति आश्व० श्रौ० ३.१०.२०–२३ । तु० तै० ब्रा० २.१.३.५ ।

यदि अमेध्य वस्तु गिर जाय तो यही प्रायश्चित्त है, और उस [अग्निहोत्रहवणी] में गिरे हुए [केश कीट आदि] को यदि हटाया[1] जा सके तो उस दूषित द्रव्य को निकालकर [थाली में अवस्थित] शुद्ध [दुग्ध] को [अग्निहोत्रहवणी में] पुन भरकर जैसे उन्नयन होता है वैसा करके आहुति दे। यहाँ यही प्रायश्चित्त है।

त्रयोदशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्निहोत्रमधिश्रितं स्कन्दति वा विष्यन्दते वा, का तत्र प्रायश्चित्तिरिति, तदद्भिरुपनिनयेच्छान्त्यै, शान्तिर्वा आपोऽथैनद्दक्षिणेन पाणिनाऽभिमृश्य जपति ॥ इति ।

अग्निहोत्रद्रव्यं गार्हपत्ये पाकार्थमधिश्रितं सत् कदाचित् 'स्कन्दति' स्खलति, क्षीरबिन्दुरधः पततीत्यर्थः । 'विष्यन्दते' विशेषणं स्यन्दनं दाहाधिक्येन स्थालीमुखस्योपर्युद्गमनम् । तत्स्कन्नं विष्यन्दितं वा द्रव्यं दक्षिणेन पाणिना स्पृष्ट्वा वक्ष्यमाणं मन्त्रं जपेत् ॥

ब्रह्मवादियों का (तेरहवाँ) प्रश्न है कि अग्निहोत्र के लिए गार्हपत्य अग्नि पर पकाने के लिए अवस्थित दुग्ध यदि उबल कर नीचे गिरने लगे या उबलकर गिरते हुए बह चले तो वहाँ क्या प्रायश्चित्त है? उत्तर—तब उसे शान्त करने के लिए उस पर जल से छींटा दे। जल शान्ति है। अतः इस उबले हुए द्रव्य को वह दाहिने हाथ से स्पर्श करते हुए जपता है—

तं दर्शयति—

दिवं तृतीयं देवान्यज्ञोऽगात्, ततो मा द्रविणमाष्टान्तरिक्षं तृतीयं पितॄन्यज्ञोऽगात् ततो मा द्रविणमाष्ट, पृथिवीं तृतीयं मनुष्यान् यज्ञोऽगात् ततो मा द्रविणमाष्ट[2] ॥ इति ।

अस्य स्कन्नस्य विष्यन्दितस्य वा पयसः 'तृतीयम्' अंशस्वरूपं 'दिवं' स्वर्गलोकम् 'अगात्' प्राप्नोतु । तेन यज्ञोऽपि देवान् प्राप्नोतु । प्रापणाद् वैकल्यपरिहारे सति 'मा' मामग्निहोत्रिणं 'द्रविणमाष्ट' धनं प्राप्नोतु । तथैवापरं 'तृतीयं' द्रव्यांशस्वरूपमन्तरिक्षमगात् । तेन यज्ञोऽपि पितॄन् प्राप्नोतु । ततः प्रापणात् मा धनं प्राप्नोतु । पुनरप्यपरं 'तृतीयं' द्रव्यांशस्वरूपं पृथिवीमगात् । तेन यज्ञोऽपि मनुष्यान् अगात् । ततस्तदुभयप्रापणात् मा 'द्रविणं' धनम् 'आष्ट' प्राप्नोतु ॥

[इस उबले हुए दुग्ध का] 'तृतीय [अंश] स्वर्गलोक को प्राप्त हुआ और उससे यज्ञ भी देवों को प्राप्त हुआ। उस [वैकल्य के परिहार] से मुझ [अग्निहोत्री] को धन प्राप्त हो।

---

१ 'व्यपनेतुम्' इति षड्गुरुशिष्यसम्मतः पाठः । 'तुमन् इच्छार्थेषु, अपनेतुम्' इति षड्गुरुशिष्यः ।

२ संहितायां नाम्नात इति ब्राह्मणे श्रुतोऽयं मन्त्रः ।

[उसी प्रकार उस दूध का अन्य] तृतीय [अंश] अन्तरिक्ष को प्राप्त हुआ। उससे वह भी पितरों को प्राप्त हुआ और उस [पितृ को पहुँच] से मुझको धन प्राप्त होए। [उस दूध का अन्य] तृतीय [अंश] पृथ्वी को प्राप्त हुआ। उससे यह भी मनुष्यों को प्राप्त हुआ। अब उस [प्राप्ति] से मुझे धन प्राप्त होए।'

मन्त्रान्तरजपं विधत्ते—

**ययोरोजसा स्कभिता रजांसीति वैष्णुवारुणीमृचं जपति, विष्णुर्वै यज्ञस्य दुरिष्टं पाति, वरुणः स्विष्टं, तयोरुभयोरेव शान्त्यै ॥ इति।**

'ययोरोजसा'-इत्याद्युक्तृचं पठेत्[1]। तस्याश्चार्थवादे विष्णुश्च वरुणश्च पूर्वहूतौ इति श्रुतत्वादियं वैष्णुवारुणदेवताका। यज्ञस्य यद् दुरिष्टम् अङ्गवैकल्यं, तत्समाधिना विष्णुः पाति। यज्ञस्य यत् स्विष्टं यथाशास्त्रमनुष्ठितमङ्गं तद्वरुणः पाति। फलप्रतिबन्धनिवारणं तत्परिपालनम्। तस्मादयं जपः तयोरुभयोः दुरिष्टस्विष्टयोर्वैकल्यराहित्ये शान्त्यै सम्पद्यते॥

अब वह [दूसरे मन्त्र] 'ययोरोजसा (जिनके पराक्रम से अन्तरिक्ष आदि लोक प्रतिष्ठित हैं') आदि विष्णु और वरुण देवताक ऋचा का जप करता है। क्योंकि यज्ञ का जो वैकल्य है उसका शमन करके विष्णु ही उसकी रक्षा करते हैं, और [फलप्रतिबन्धक का निवारण करते हुए] वरुण यज्ञ के शास्त्रानुसार अनुष्ठित अङ्ग की [रक्षा करते हैं]। इसलिए यह जप उन दोनों दुरिष्ट और स्विष्ट अर्थात् अङ्ग वैकल्य युक्त इष्टि और वैकल्य रहित इष्टि) के शान्ति के लिए ही सम्पादित है।

उत्तरवाक्यमुपसंहरति—

**सा तत्र प्रायश्चित्तिः ॥ इति।**

वही यहाँ प्रायश्चित्त है।

अथान्ये प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्याग्निहोत्रमधिश्रितं प्राङुदायन् स्कन्दते पाऽपि वा भ्रंशते, का तत्र प्रायश्चित्तिरिति, स यद्युपरिवर्तयेत् स्वर्गाल्लोकाद् यजमानमावर्तयेदथ यास्य उपविष्टार्थमग्निहोत्रपरीशेषमाहरेयुस्तस्य यथोन्नीतं स्याद्, तथा जुहुयात्, सा तत्र प्रायश्चित्तिः ॥ इति।**

---

१ (i) ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा।
या पत्येते अप्रतीता सहोभिर्विष्णू अगन् वरुणा पूर्वहूतौ ॥
(ii) द्र० आश्व० श्रौ० ५.२०.६।
(iii) द्र० शत०ब्रा० ४.५.७.७। 'यज्ञो वै विष्णुः' इत्यादि च तत्र उक्तम्।

२ द्र० इत पूर्वम्, पृ० ५१७।

अग्निहोत्रद्रव्यं गार्हपत्येऽधिश्रित, पाकाद्रूर्ध्वमादाय प्राङ्मुख आहवनीय प्रति उदायन्' उदग्गच्छन्नध्वर्युर्यदा भवति, तदानी तद्द्रव्य 'स्खलते' यद्वा 'भ्रशते', बिन्दुपतन बलन, साकल्येन द्रव्यपतन भ्रशः। पुनरप्यग्निहोत्रस्थाल्या द्रव्य ग्रहीतुं सोऽध्वर्युर्यदि श्चिमाभिमुखो निवृत्तो भवेत्, तदानी स्वर्गप्राप्त यजमान,[1] तस्माल्लोकादावर्तयेत्। अतो वृत्तिमकृत्वा स्खलन भ्रशदेश एवोपविश्याय 'अस्मै' अध्वर्यवे स्थालीगतमग्निहोत्रद्रव्यशेष न्ये[2] पुरुषाः 'आहरेयु'। 'तस्य' द्रव्यस्य स्वीकारेणाध्वर्युर्यथोन्नीती स्यात्, तथा जुहुयात्। न्नीतम्' उन्नयन स्थालीगतस्य द्रव्यस्याग्निहोत्रहवण्या चतुर्वार प्रक्षेप, 'चतुरुन्नयतीति' तत्वात्। उन्नयनादिसंस्कारपूर्वकं जुहुयादित्यर्थः[3] ॥

ब्रह्मवादियों का (चौदहवाँ) प्रश्न है कि अग्निहोत्र के लिए हवि तैयार करके जब अध्वर्यु र्य को मुख करके आहवनीय अग्नि के प्रति उठकर ले जाते हुए यदि वह हविर्द्रव्य छलक ाय अथवा सभी गिर जाय तो यहाँ क्या प्रायश्चित्त है? यदि वह उसे पुनः ले आने के ए [पश्चिमाभिमुख] लौटता है तो वह यजमान[2] को स्वर्ग लोक से लौटा लाता है। तः उसे न लौटकर] यहीं हवि के गिरने के स्थान में ही बैठ जाना चाहिए और ई अन्य पुरुष इस [अध्वर्यु] के लिए [थाली में रखे हुए] अग्निहोत्रद्रव्य के शेष ग[3] को लाए और उसे चाहिए कि जैसे उन्नयन होता है उसी प्रकार उस [द्रव्य] की हुति दे। यहाँ यही प्रायश्चित्त है।

पञ्चदशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्य यदि स्रुग्भिद्येत, का तत्र प्रायश्चित्तिरित्यन्या स्रुचमाहृत्य जुहुयाद-थैना स्रुच भिन्नामाहवनीयेऽभ्यादध्यात् प्राग्दण्डा प्रत्यक्पुष्करा, सा तत्र प्रायश्चित्तिः ॥** इति।

'स्रुग्' अग्निहोत्रहवणी। तद्भेदे स्रुगन्तरेण हुत्वा भिन्ना स्रुचमाहवनीये प्रक्षिपेत्। ानी तदीयो दण्डः प्राच्यामवस्थित, तदीय 'पुष्कर' बिल प्रतीच्यामवस्थितम्, यथा ति तथा प्रक्षिपेत् ॥

अब ब्रह्मवादियों का (पन्द्रहवाँ) प्रश्न है कि यदि स्रुक् [=अग्निहोत्रहवणी] टूट जाय यहाँ क्या प्रायश्चित्त है? उत्तर—दूसरा स्रुक् लाकर उससे आहुति दे और तब इस हुए स्रुक् को आहवनीय अग्नि में उसके दण्ड को आगे और पुष्कर अर्थात् प्याले को छे की ओर करके छोड़े। यहाँ यही प्रायश्चित्त है।

---

'he would turn the sacrifice away from the world of heaven' – इति कीथमहोदय।

परिशेषम् उन्नीतशिष्टम्। 'उपसर्गस्य घञि' (पा० सू० ६ ३ १२२) इति परे-दीर्घः। इति षड्गुरुशिष्य।

द्र० आश्व० श्रौ० सू० ३ १०.३१।

षोडशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्याऽऽहवनीये ह्याग्निर्विद्येताथ गार्हपत्य उपशाम्येत् का तत्र प्रायश्चित्तिरिति, स यदि प्राञ्चमुद्धरेत् प्राऽऽयतनाच्च्यवेत, यत्प्रत्यञ्चमसुरवद्यज्ञं तन्वीत, यन्मन्थेद् भ्रातृव्यं यजमानस्य जनयेद्, यदनुगमयेत् प्राणो यजमानं जह्यात् सर्वमेवेन सह भस्मानं समोप्य, गार्हपत्यायतने निधायाथ प्राञ्चमाहवनीयमुद्धरेत्, सा तत्र प्रायश्चित्तिः ॥ ५ ॥ इति ।**

प्रतिदिनमाहवनीयाग्निर्होमोर्ध्वमुपशाम्यति । गार्हपत्याग्निस्तु सर्वदा धार्यते। तस्माद् गार्हपत्यात् तत्तद्धोमकाल आहवनीयार्थमग्निं विहरेदित्येषोऽनुष्ठानक्रमः । एवं सति यदि कदाचिदाहवनीयस्य स्थानेऽग्निरनुपशान्तो विद्यते, तदानीं गार्हपत्यश्चोपशाम्येत्। तत्र यस्य वैकल्यस्य परिहाराय पक्षाः पञ्चविधाः सम्भवन्ति । विद्यमानमाहवनीयं गार्हपत्यतया सम्भाव्य ततोऽपि पूर्वदेश आहवनीयं कर्तुं तस्मात् पूर्वसिद्धाहवनीयात् प्राञ्चमग्निमुद्धरेदिति प्रथमः पक्षः । तस्मिन् पक्षे यजमानः आयतनात्' स्वकीयस्थानात् 'प्रच्यवेत' आहवनीयस्थानात् प्रच्युतत्वात् । अथ गार्हपत्यार्थं पूर्वसिद्धादाहवनीयात् प्रत्यञ्चमग्निमुद्धरेदिति द्वितीयः पक्षः । अस्मिन् द्वितीयपक्षे यज्ञ एषोऽसुरयज्ञसमानः स्यात् । असुरयज्ञशाखान्तरे तानसुरान् प्रकृत्यैवमाम्नायते—'त आहवनीयमग्र आदधत । अथ गार्हपत्यम् । अथान्वाहार्यपचनम्'[1] इति । तदीयदोषोऽपि तत्रैवाऽऽम्नातः—'पराभूत्वा परा भविष्यन्ति' इति । गार्हपत्यार्थमग्निमथनं कर्तव्यमिति तृतीयः पक्षः । तदानीं विद्यमान आहवनीये तद्विरोधिनोऽन्यतरस्य मथनाद् यजमानस्य शत्रुमुत्पादयेत् । पुनराधानं कर्तुं विद्यमानमाहवनीयम् 'अनुगमयेत्' उपशमयेदिति चतुर्थः पक्षः । तस्मिन् पक्षे विद्यमानस्य विनाशनात् प्राणो यजमानं परित्यजेत् । आहवनीयगतं भस्मसहितं सर्वमप्यग्निं कस्मिंश्चित्पात्रे प्रक्षिप्य, नीत्वा, गार्हपत्यस्थाने प्रक्षिप्य अनन्तरं ततो गार्हपत्यात् प्राञ्चमाहवनीयमुद्धरेदिति पञ्चमः पक्षः । अस्मिन् पक्षे दोषाभावात् सैव प्रायश्चित्तिर्भवति[2] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया द्वितीयाध्याय (द्वात्रिंशाध्याय) चतुर्थः खण्डः ॥ ४ ॥ (५) [२२८]

[प्रतिदिन होम के बाद आहवनीय की अग्नि को शान्त कर देते हैं और गार्हपत्य को प्रज्ज्वलित रखते हैं । होम के समय आहवनीय के लिए गार्हपत्य से अग्नि लाते हैं । यही अनुष्ठान का क्रम है ।] ब्रह्मवादियों का (सोलहवाँ) प्रश्न है कि यदि आहवनीय की अग्नि ही जलती हो और गार्हपत्य की बुझ गई हो तो वहाँ क्या प्रायश्चित्त है ? उत्तर–१ यदि वह [पूर्वसिद्ध आहवनीय के] पूर्व से अग्नि लावे तो वह यजमान अपने स्वकीय आहवनीय

---

१ तै० ब्रा० १ १ ४ ४ ।

२ द्र० आश्व० श्रौ० सू० ३ १२ । इह खण्डसमाप्तिर्मुद्रितषड्गुरुभाष्ये न दृश्यते ।

स्थान से प्रच्युत होता है और २. यदि पश्चिम भाग से [गार्हपत्य के लिए] अग्नि लावे तो वह असुरों के समान यज्ञ करता है और ३. यदि अग्निमन्थन करके उत्पन्न करे तो वह यजमान के शत्रुओं को उत्पन्न करेगा और ४ यदि वह [पुनः अग्नि का आधान करने के लिए आहवनीय की अग्नि को] बुझा दे तो वह यजमान के प्राणों का विनाश करेगा। ५ अतः आहवनीय की भस्म सहित सभी अग्नि को किसी पात्र में लेकर उसे गार्हपत्य के स्थान में रखकर तब इस [गार्हपत्य] के पूर्व भाग से आहवनीय को ले आवे। वहाँ यही प्रायश्चित्त है।

॥ इस प्रकार बत्तीसवें (द्वितीय) अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

सप्तदशे प्रश्नोत्तरे दर्शयति—

*तदाहुर्यस्याग्नावग्निमुद्धरेयु, का तत्र प्रायश्चित्तिरिति, स यद्यनुपश्येदुद्धृत्य पूर्वमपरं निदध्याद् यद्यनानुपश्येत् सोऽग्नयेऽग्निवतेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'अग्निनाऽग्निः समिध्यते' 'त्वं ह्यग्ने अग्निनेत्या-हुतिं वाऽऽहवनीये जुहुयादग्नयेऽग्निवते स्वाहेति, सा तत्र प्रायश्चित्तिः* ॥ इति।

सायंप्रातराहवनीयेऽग्नौ स्थित एव सति पुनरपि गार्हपत्याग्निं च उद्धरेयुस्तदानीमुद्धृतस्याग्नेः प्रक्षेपात् पूर्वमेव विद्यमानस्याग्नेर्दर्शने त 'पूर्व' विद्यमानमग्निम् 'उद्धृत्य' तस्मादाहवनीयस्थानादुद्धृत्य, तस्मिन् स्थाने पुनः 'अपरम्' इदानीमानीतमग्निं निदध्यात्। यद्' यदि तु। विद्यमानं ('अनानुपश्येत्') नानुपश्येत् तदानीमानीतमग्निं तत्र प्रक्षिप्य, पश्चादग्निद्वयमवगत्य 'अग्निवतेऽग्नये' देवतायै पुरोळाशं निरुप्य, तस्यैते याज्यानुवाक्ये कुर्यात्। 'अग्निनाऽग्निरिति'[1] पुरोनुवाक्या। त्वं ह्यग्ने अग्निनेति[2] याज्या। सोऽयमेकः पक्षः। दर्विहोमवद्याज्यानुवाक्ये परित्यज्य 'अग्नयेऽग्निवते स्वाहेति'[3] मन्त्रेणाऽऽहवनीय आज्यं जुहुयादिति[4] द्वितीयः पक्षः ॥

VII ६ [XXXII .५] अब ब्रह्मवादियों का (सत्रहवाँ) प्रश्न है कि किसी अग्निहोत्री की अग्नि में से अग्नि ले लें तो उसका क्या प्रायश्चित्त है? उत्तर-वह [सायं-प्रातः आहवनीय अग्नि के होने पर भी जो गार्हपत्य अग्नि को लाता है और उस लाई गई अग्नि के प्रक्षेप के पूर्व ही विद्यमान] अग्नि के दिखलाई पड जाने पर उस पहले से ही विद्यमान

१ ऋ० १ १२ ६।  २ ऋ० ८ ४३ १४।

३. याज्यान्ते स्वाहेति जुहुयात्। सूच्यते हि—'अपि वा प्रायश्चित्तेष्टीनां स्थाने तस्यै तस्यै देवतायै पूर्णाहुतिं जुहुयादिति विज्ञायते' इति (आश्व० श्रौ० ३ १३ १४)

४ आग्नेयीष्विष्टिषु एषा अन्यतमाग्निवतीष्टिः। तथाहि—'अथाग्नेय्य इष्टय'—इत्यधिकारे 'साग्नावग्निप्रणयनेऽग्निवते'—इति आश्व० श्रौ० सू० ३ १३ ३,१२।

अग्नि को [उस आहवनीय स्थान से] लाकर उस स्थान में पुनः इस लाई गई] अन्य अग्नि को रखे, और यदि विद्यमान अग्नि को न देख पाए[1] तो [उस आनीत अग्नि को वहाँ रखकर बाद में दोनों ही अग्नि को जानकर] १ अग्नि देव के लिए अग्नि से आठ कपालों के पुरोडाश का उसे निर्वपन करना चाहिए। उसकी 'अग्निना अग्निः समिध्यते' (अग्नि से अग्नि प्रज्वलित की जाती है) आदि पुरोनुवाक्या है, और 'त्वं ह्यग्ने' (हे अग्नि! तुम्हारे लिए अग्नि से) आदि याज्या है। २ अथवा, उसे आहवनीय अग्नि में ['दविहोम की तरह याज्यानुवाक्या छोड़कर] 'अग्नये अग्निवते स्वाहा' (अग्नि से अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए।[3] यहाँ यही प्रायश्चित्त है।

अष्टादशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्य गार्हपत्याहवनीयौ मिथः संसृज्येयातां, का तत्र प्रायश्चित्तिरिति, सोऽग्नये वीतयेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'अग्न आयाहि वीतये' यो अग्निं देववीतय इत्याहुतिं[4] वाऽऽहवनीये जुहुयादग्नये वीतये स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति ।

अग्न्युद्धरणादूर्ध्वं व्यवस्थितयोराहवनीयगार्हपत्ययोः सतोर्यदि गार्हपत्यगतोऽङ्गार आहवनीये प्रमादात् पतेत्, आहवनीयगतो वा गार्हपत्ये पतेत्, सोऽयं 'मिथः संसर्गः'। तत्र प्रायश्चित्तार्थस्य पुरोडाशस्य 'वीति' गुणयुक्तोऽग्निर्देवता[5]। अन्यत् पूर्ववद् व्याख्येयम् ॥

---

१ यदि च = सम्यङ् नानुपश्येत्। पूर्वनिहितम्। अग्निवते। 'छन्दसीरः' (पा० सू० ८ २ १५) इति षड्गुरुशिष्यः।

२ प्रायश्चित्तप्रकरणे या इष्टय इष्टिशब्देनैव चोद्यन्ते, याश्च ब्राह्मणोक्तास्तासामय वैकल्पिको विधिरुच्यते। यास्तासामिष्टीनां देवतास्तासामकैकस्य देवताया एकैका पूर्णाहुतिं जुहुयात्। चतुर्गृहीतेन स्रुचं पूरयित्वा यद्धूयते सा पूर्णाहुतिरित्युच्यते। अथ पुनरनुपशान्तदर्शपूर्णमासस्य भवति, दविहोमध्ये च नान्यत्र भवति' इति आश्व० श्रौ० सूत्रे नारायणः।

३ आहवनीये जुहुयादित्येव। स्रुवाहुतिरेषा। बौधायनो हि ज्योतिष्मतीमिष्टिमुक्त्वा—'अपि वा ज्योतिष्मत्यैवर्चा पूर्णाहुतिं जुहुयात्। ज्योतिष्मतीह स्रुवाहुतिरिति वदति। इष्टिपूर्णाहुतिस्रुवाहुतीनां पूर्वं पूर्वं विधिं बलीयांसमाचार्या ब्रुवत इति। पुरोनुवाक्यामनूच्य याज्यया जुहोति' इति च वदन् इष्ट्यभावे पूर्णाहुतिं, तदभावे स्रुवाहुतिरिति दर्शयति।

इति कल्पास्त्रय प्रोक्ता इष्टिपूर्णाहुतिस्रुवाः।
उत्तरोत्तरमेषां त्रयाणामुक्तिरिष्यताम् ॥ इति षड्गुरुशिष्यः।

४ ऋ० ६ १६ १०, १ १२ ९।

५ 'गार्हपत्याहवनीययोर्वीतये'—इति आश्व० श्रौ० सू० ३ १३ ६।

ब्रह्मवादियों का (अट्ठारहवाँ) प्रश्न है कि यदि [अग्नि के उद्धरण के बाद व्यवस्थित हुई] किसी की आहवनीय और गार्हपत्य अग्नियाँ [प्रमाद से इधर का उधर अङ्गारे डाल देने से] परस्पर मिल जायें तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे 'वीति' गुण' (वीतिमत्तात्मक गुण) से युक्त अग्निदेव के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'अग्न आयाहि' ( हे अग्नि ! वीति के लिए आओ ) आदि और 'यो अग्नि' ( जो अग्नि देवों को वीति के लिए ) आदि। अथवा, [याज्यानुवाक्या को छोड़कर] उसे आहवनीय अग्नि में 'अग्नये वीतये स्वाहा' ( वीतिमान अग्नि के लिए स्वाहा ) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

एकोनविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्य सर्व एवाग्नयो मिथः संसृज्येरन्, का तत्र प्रायश्चित्तिरिति; सोऽग्नये विविचयेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'स्वर्णवस्तोरुषसामरोचि' 'त्वामग्ने मानुषीरीळते विश इत्याहुतिं' वाऽऽहवनीये जुहुयादग्नये विविचये स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति।

आहवनीय-गार्हपत्य-दक्षिणाग्नीनां सर्वेषां परस्परसंसर्गे सति 'विविचिगुणयुक्तोऽग्निः पुरोडाशदेवता[2]। अन्यत् पूर्ववद् व्याख्येयम् ॥

अब ब्रह्मवादियों का (उन्नीसवाँ) प्रश्न है कि जिस अग्निहोत्री की सभी [आहवनीय, गार्हपत्य और दक्षिणाग्नि रूप] अग्नियाँ परस्पर एक में मिल जायें तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे 'विविचि' (विवेचक) गुण युक्त अग्निदेव के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार है—'स्वर्णवस्तो' (अग्नि दिन में उषा के सामने सूर्य के समान दीप्त होते हैं) आदि, और 'त्वामग्ने' (हे अग्नि ! तुम्हारो यजमान स्तुति करते हैं) आदि। अथवा, उसे आहवनीय अग्नि में 'अग्नये विविचये स्वाहा' (सत् असत् के विवेचक अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुती देनी चाहिए। वहां यही प्रायश्चित्त है।

विंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नयोऽन्यैरग्निभिः संसृज्येरन्, का तत्र प्रायश्चित्तिरिति, सोऽग्नये क्षामवतेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'अक्रन्ददग्नि-

---

१. ऋ० ७.१०.२; ५.८.३।

२. 'मिथश्चेद् विविचये'—इति आश्व० श्रौ० सू० ३.१३.५।

**स्तनयन्निव द्यौर्'–'अधा यथा न. पितर. परास' इत्याहुतिं[1] वाऽऽहवनीये जुहुयादग्नये क्षामवते स्वाहेति, सा तत्र प्रायश्चित्ति ॥ ६ ॥** इति ।

'यस्य' अग्निहोत्रिण सबन्धिन आहवनीयाद्यग्नयोऽन्यदीयैराहवनीयादिभिर्लौकिकाग्निभिर्वा संसृज्येरन्, तस्य प्रायश्चित्तार्थे पुरोडाशे 'क्षामवद्'–गुणयुक्तोऽग्निर्देवता[2] । अन्यत् पूर्ववद् व्याख्येयम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तम पञ्चिकाया द्वितीयाध्याये (द्वात्रिंशाध्याये) पञ्चम खण्ड ॥ ५ ॥ (६) [२२९]

अब ब्रह्मवादियों का (बीसवाँ) प्रश्न है कि जिस अग्निहोत्री को आहवनीय आदि अग्नियाँ अन्य आहवनीयादि अग्नियों से अथवा अन्य लौकिक अग्नियों से मिल जायँ तो वहाँ क्या प्रायश्चित्त है ? उत्तर–उसे 'क्षामवत' गुण युक्त अग्नि देव के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए । उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'अक्रन्दद्' (दावाग्नि का गर्जन इस प्रकार हुआ जैसे आकाश में बिजली कड़कती हो) आदि, और 'अधा यथा न ' (हे अग्नि ! जिस प्रकार हमारे पुरातन पूर्वजों ने) आदि । अथवा, उसे आहवनीय अग्नि में 'अग्नये क्षामवते स्वाहा' (क्षामवत[3] अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए । यहाँ यही प्रायश्चित्त है ।

॥ इस प्रकार बत्तीसवें (द्वितीय) अध्याय के पाँचवें खण्ड की हिन्दी पूर्ण हुई ॥ ५ ॥

## अथ षष्ठः खण्डः

एकविंशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्याग्नयो ग्राम्येणाग्निना संदह्येरन्, का तत्र प्रायश्चित्तिरिति, सोऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'कुवित्सु**

---

१ ऋ० १० ४५ ४, ४ २ १६ । आश्व० श्रौ० सू० ३ १३ ४,१२ । शाङ्खा० श्रौ० सू० ३ ३ १३ । तु० अथर्व प्रायश्चित्त २ ७, ५ ४, ५ ।

२ 'क्षामायागारदाहे' इति आश्व० श्रौ० सू० ३ १३ ४ । तै० ब्रा० ३ ७ ४ ५ । तै० स० २ २ ३ ४, ५ , जै० न्या० वि० ६ ४ ५ १७-२१ । क्षामवत्यादिना यद्वत् कर्मणा प्रवर्तनापते । देवदोषादकरणे जात दोषवदम्बके । होमेनैतेन दोषाणा सर्वेषा शमनं भवेद्'–इति भ० पु० । 'एवञ्च एक प्रायश्चित्तेनानेकदोषशमाय क्षामवतीष्टि सर्वत्र दृष्टान्त '–इति भा० टि० ।

३ 'Agni the charred' इति कीथमहोदय , टि० ५ (Ksamavant is doubtful cf NS 1 8 9, Sayana takes it as=ksamavant, 'patient' or 'forgiving', ApCs ix 3 17 has a different use of it, cf Atharva prayascitta v 4 ) । किन्त्वत्र सायणभाष्ये 'क्षमावत' न दृश्यते ।

नो गविष्टये', 'मा नो अस्मिन् महाधन इत्याहुतिं'[1] वाऽऽहवनीये जुहुयादग्नये सवर्गाय स्वाहेति; सा तत्र प्रायश्चित्तिः ॥ इति ।

'ग्राम्योऽग्नि.' महानसादिगतः । स कदाचित्प्रमादेन प्रवृद्धो ग्रामगतानि गृहाणि दहन्नग्निहोत्रशालागतानाहवनीयादीनग्नीन् सम्यग्दहति, तदानीं प्रायश्चित्तस्य पुरोडाशस्य 'सवर्गः' गुणयुक्तोऽग्निर्देवता[2] । अन्यत् पूर्ववत् ॥

VII.७ [XXXII.६] ब्रह्मवादियों का (इक्कीसवाँ) प्रश्न है कि जिस अग्निहोत्री की [आहवनीय आदि] अग्नियाँ [किसी प्रकार प्रमाद से रसोई की] ग्राम्य अग्नि के साथ यदि सम्यक् रूप से दहक जायें तो वहाँ क्या प्रायश्चित्त है ? उत्तर–उसे 'सवर्ग' गुण वाले अग्नि देव के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए । उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'कुविन्सु' (हे अग्नि ! हमारे पशुओं के गोष्ठ में) आदि और 'मा नो अस्मिन्' (हम लोगों को इस महासंग्राम में) आदि । अथवा, उसे आहवनीय अग्नि में 'अग्नये सवर्गाय स्वाहा' (संवर्ग अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिये । वहाँ यही प्रायश्चित्त है ।

द्वाविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नयो दिव्येनाग्निना संसृज्येरन्, का तत्र प्रायश्चित्तिरिति; सोऽग्नयेऽप्सुमतेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'अप्स्वग्ने सधिष्टव', 'मयो दधे मेधिरः पूतदक्ष इत्याहुतिं'[3] वाऽऽहवनीये जुहुयादग्नयेऽप्सुमते स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति ।

'दिव्याग्नि.'वैद्युत. । अशनिपाते सति तदीयेनाग्निनाऽऽहवनीयादीनां संसर्गे प्रायश्चित्तस्य पुरोडाशस्य 'अप्सुमान्' अग्निर्देवता[4] । अन्यत् पूर्ववत् ॥

ब्रह्मवादियों का (बाइसवाँ) प्रश्न है कि जिस अग्निहोत्री की [आहवनीय आदि] अग्नियाँ, दिव्याग्नि [अर्थात् तड़क कर विद्युत गिरकर उस वज्रपात] से सम्पृक्त हो जाय तो वहाँ क्या प्रायश्चित्त है । उत्तर–उसे 'अप्सुमान्' गुण वाले अग्निदेव के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए । उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार है—'अप्स्वग्ने' (हे अग्नि ! जल में तुम्हारा प्रवेश करने का स्थान है) आदि, और 'मयो दधे' (मेधावी, शुद्ध बल युक्त, स्वर्ग के सुख का विधान करने वाले) आदि ।

---

१. ऋ० ८.७५.११, १२ । आश्व० श्रौ० ३.१३.७, १२, शाङ्खा० श्रौ० सू० ३.४.५; ५.४, शत० ब्रा० १२.४.४.३ ।
२. 'ग्राम्येण सवर्गाय'–इति आश्व० श्रौ० सू० ३.१३.७ ।
३. ऋ० ८.४३.९, ३.१.३ । तु० शाङ्खा०श्रौ०सू० ३.४.७, शत० ब्रा० १२.४.४.४ ।
४. 'वैद्युतेऽप्सुमते'–इति आश्व० श्रौ० सू० ३.१३.८ ।

अथवा, उसे आहवनीय अग्नि में 'अग्नयेऽप्सुमते स्वाहा' (अप्सुमान् अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

त्रयोविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नयः शवाग्निना संसृज्येरन्, का तत्र प्रायश्चित्तिरिति; सोऽग्नये शुचयेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'अग्निः शुचिव्रततम'–'उदग्ने शुचयस्तवेत्याहुतिं'[1] वाऽऽहवनीये जुहुयादग्नये शुचये स्वाहेति; सा तत्र प्रायश्चित्तिः ॥ इति।

प्रेतदहनाय प्रवृत्तोऽग्निः 'शवाग्निः'। तत्संसर्गे पुरोडाशस्य 'शुचि'गुणयुक्तोऽग्निर्देवता[2]। अन्यत् पूर्ववद् व्याख्येयम् ॥

ब्रह्मवादियों का (तेइसवाँ) प्रश्न है कि जिस [अग्निहोत्री] की [आहवनीय आदि] अग्नियाँ शव को जलाने वाली श्मशान की अग्नि से मिल जायें तो वहाँ क्या प्रायश्चित्त है? उत्तर—उसे 'शुचि' गुण युक्त अग्निदेव के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'अग्निः शुचिव्रततम्' (अत्यन्त शुद्ध कर्मों वाले अग्नि) आदि, और 'उदग्ने शुचयः' (हे अग्नि! तुम्हारी निर्मल और शुभ्र) आदि। अथवा, उसे आहवनीय अग्नि में 'अग्नये शुचये स्वाहा' (शुचि गुण वाले अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

चतुर्विंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नय आरण्येनाग्निना संदह्येरन्, का तत्र प्रायश्चित्तिरिति; समेवाऽऽरोपयेदरणी वोल्मुकं वा मोक्षयेद्, यद्याहवनीयाद्यदि गार्हपत्याद्, यदि न शक्नुयात्, सोऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्, तस्योक्ते याज्यानुवाक्ये[3] आहुतिं वाऽऽहवनीये जुहुयादग्नये संवर्गाय स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ ७ ॥ इति।

दावाग्निररण्यादागत्याग्निहोत्रशाला दहन्नाहवनीयादीन् यदा सम्यग्दहति, तदानीं तद्दहनात् पूर्वमेवाग्नीन् 'अरणी' द्वयोररण्योः सह समारोपयेदेव। तदशक्तौ गार्हपत्याहवनीयाद् 'उल्मुकं मोक्षयेत्'। सहसोल्मुकमादाय परितो गच्छेत्। समारोपणं वोल्मुक-

१. ऋ० ८.४४.२१, १७।
२. 'शुचये संसर्जनेनाग्निनान्येन' इति आश्व० श्रौ० सू० ३.१३.४। शाङ्खा० श्रौ० सू० ३.४.६। तु० शत० ब्रा० १२.४.४.५।
३. ऋ० ८.४४.२१,१७।

मोचन वेति पक्षद्वयस्याग्निदाह्‌वरया यदा न शक्ति, तदा 'संवर्ग' गुणयुक्तोऽग्नि पुरोडाश-देवता[1]। तदीययाज्यानुवाक्ये च पूर्वमेवाभिहिते[2] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तम-पञ्चिकाया द्वितीयाध्याये (द्वात्रिंशाध्याये) षष्ठ खण्डः ॥ ६ ॥ ( ७ ) [ २३० ]

ब्रह्मवादियों का (चौबीसवाँ) प्रश्न है कि जिस [अग्निहोत्री] की [आहवनीय आदि] अग्नियाँ यदि दावाग्नि के साथ सम्यक् रूप से दहक जायँ [अर्थात् अग्निहोत्र की यज्ञशाला को जलाते हुए आहवनीय आदि में मिल जायँ] तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे दो अरणियों से [उसके दहन से पूर्व ही] अग्नि रख लेना चाहिए, और यदि यह न हो सके तो आहवनीय या गार्हपत्य अग्नि से सहसा एक जलती हुई लकड़ी लेकर बचा ले। यदि ये दोनों ही पक्ष भीषण अग्निकाण्ड के कारण न हो सकें तो उसे 'संवर्ग' गुण युक्त अग्नि के लिए आठ कपालों वाले पुरोडाश का उपरोक्त पुरोनुवाक्या और याज्या से निर्वपन करना चाहिए। अथवा, उसे आहवनीय अग्नि में 'अग्नये संवर्गाय स्वाहा' (संवर्ग गुण वाले अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

॥ इस प्रकार बत्तीसवें (द्वितीय) अध्याय के छठवें खण्ड की हिन्दी पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

पञ्चविंशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्य आहिताग्निरुपवसथेऽश्रु कुर्वीत, का तत्र प्रायश्चित्तिरिति, सोऽग्नये व्रतभृतेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'त्वमग्ने व्रत-भृच्छुचिर्'-व्रतानि बिभ्रद् व्रतपा अदब्ध इत्याहुतिं, वाऽऽहवनीये जुहुया-दग्नये व्रतभृते स्वाहेति, सा तत्र प्रायश्चित्तिः ॥** इति।

'उपवसथे' यजनीयदिनात् पूर्वदिने शिरोव्यथादिना मृतबन्धुस्मरणादिना वा नेत्रयो रश्रुमोचन पुरोडाशस्य 'व्रतभृद्'-गुणकोऽग्निर्देवता। त्वमग्ने व्रतभृदित्यादिके सूत्रकारेण पठिते याज्यानुवाक्ये[3] ॥

---

१ 'अग्नये संवर्गाय प्रदव्याच्चेत्'—इति कात्या० श्रौ० २५ ४ ३२। तु० शत० ब्रा० ४ ३ १०, ४ १, ५ २ १　१३ ६ २ २०, ४ ६ ८ ३, शाङ्खा० श्रौ० सू० ३ १७ १ ५।

२ द्र० इत० पूर्वम्, पृ० १११६।

३ अग्निर्व्रतभृद्। त्वमग्ने व्रतभृच्छुचिरग्ने व्रतानि बिभ्रद् व्रतपा एषैवाहुर्निश्रुपाते'—इति आश्व० श्रौ० सू० ३ १२ १३-१५। तै० ब्रा० २ ४ १ ११। शाङ्खा० श्रौ० सू० ३.४ १२, ५ ९।

VII.८ [XXXII.७] ब्रह्मवादियों का (पचीसवाँ) प्रश्न है कि यदि उपवसथ [अर्थात् यजनीय दिन के पूर्व] दिन कोई अग्निहोत्री [सरदर्द से व्यथित हो या मृतबन्धु के स्मरण के कारण] आँसू बहा दे तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे 'व्रतभृत' गुण युक्त अग्निदेव के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'त्वमग्ने व्रतभृच्छुचि.' (हे अग्नि ! तुम व्रत के धारक एवं शुद्ध) आदि और 'व्रतानि बिभ्रद्' (व्रतों को धारण कर, व्रतों के पालक, अर्धपति) आदि। अथवा, उसे आहवनीय अग्नि में 'अग्नये व्रतभृते स्वाहा' (व्रतभृत अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

षड्विंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निरुपवसथेऽव्रत्यमापद्येत, का तत्र प्रायश्चित्तिरिति, सोऽग्नये व्रतपतयेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'त्वमग्ने व्रतपा असि'–'यद्वो वयं प्रमिनाम व्रतानीत्याहुति'[1] वाऽऽहवनीये जुहुयादग्नये व्रतपतये स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति ।

व्रतविरुद्धं निषिद्धाचरणम् 'अव्रत्यं' दिवास्वापादिकम् 'आपद्येत' प्राप्नुयात्। तत्र 'व्रतपति'-गुणयुक्तोऽग्निः पुरोडाशदेवता[2] ॥

ब्रह्मवादियों का (छब्बीसवाँ) प्रश्न है कि यदि उपवसथ के दिन व्रत के विरुद्ध [कोई निषिद्ध] आचरण [दिन में सोना आदि] यदि हो जाय तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे 'व्रतपति' गुण युक्त अग्निदेव के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार है—'त्वमग्ने व्रतपा असि' (हे अग्नि ! तुम व्रत के पालक हो) आदि और 'यद्वो वयम्' (यदि हम आपके व्रतों का उल्लङ्घन) आदि। अथवा, उसे आहवनीय अग्नि में 'अग्नये व्रतपतये स्वाहा' (व्रतपति अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

सप्तविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निरमावास्यां पौर्णमासीं वाऽतीयात्, का तत्र प्रायश्चित्तिरिति; सोऽग्नये पथिकृतेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानु-

१. ऋ० ८.११.१, १०.२.४। आश्व० श्रौ० सू० ३.११.२,१२, शाङ्खा० श्रौ० सू० ४.४.११।

२. 'व्रताविपत्तौ व्रतपतय'—इति आश्व० श्रौ० सू० ३.१.२।

**याक्ये 'वेत्था हि वेधो अध्वन', 'आ देवानामपि पन्थामगन्मेत्याहुतिं' वाऽऽहवनीये जुहुयादग्नये पथिकृते स्वाहेति, सा तत्र प्रायश्चित्ति ॥ इति ।**

आहिताग्निरमावास्येष्टिं पौर्णमासेष्टिं वा यदि कदाचिदतिक्रामेत् तदा 'पथिकृद्' गुणयुक्तोऽग्नि पुरोडाशदेवता[2] ॥

ब्रह्मवादियों का (सत्ताइसवां) प्रश्न है कि यदि किसी अग्निहोत्री की अमावस्या की इष्टि और पूर्णमासी की इष्टि ही बीत जाय, तो वहाँ क्या प्रायश्चित्त है ? उत्तर— उसे 'पथिकृत्' गुण युक्त अग्निदेव के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'वेत्था हि' (हे यज्ञविधाता अग्नि ! तुम मार्गों को जानते हो) आदि और 'आ देवानामपि' (हम देवों के मार्ग पर चलें) आदि। अथवा, उसे आहवनीय अग्नि में 'अग्नये पथिकृते स्वाहा (पथिकृत अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

अष्टाविंशं प्रश्नोत्तरं दर्शयति —

**तदाहुर्यस्य सर्व एवाग्नय उपशाम्येरन्, का तत्र प्रायश्चित्तिरिति, सोऽग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं पुरोळाशं निर्वपेत् तस्य याज्यानुवाक्ये 'आयाहि तपसा जनेष्वा नो याहि तपसा जनेष्वित्याहुतिं[3] वाऽऽहवनीये जुहुयादग्नये तपस्वते जनद्वते पावकवते स्वाहेति, सा तत्र प्रायश्चित्ति ॥ ८ ॥ इति ।**

आहवनीय गार्हपत्य दक्षिणाग्नीनां सर्वेषामुपशान्तौ 'तपस्वज्जनद्वत्पावकवद्' गुणत्रय युक्तोऽग्नि पुरोडाशदेवता[4] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये सप्तम पञ्चिकाया द्वितीयाध्याये (द्वात्रिंशाध्याये) सप्तम खण्ड ॥ ७ ॥ ( ८ ) [ २३१ ]

ब्रह्मवादियों का (अट्ठाइसवां) प्रश्न है कि जिस [अग्निहोत्री] की यदि सभी [गार्हपत्य, आहवनीय और दक्षिणाग्नि रूप तीनों ही] अग्नियां शान्त हो जायें तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे तपस्वत्, जनद्वत और पावकवत् गुण युक्त अग्नि के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'आयाहि तपसा' (हे अग्नि ! मनुष्यों में ताप के साथ आओ) आदि और

---

१ ऋ० ६ १६ ३, १० २ ३ । तु० शाङ्खा० श्रौ० सू० ४ ४ २ ५ ७ ।

२ यदि त्वतीयाद्यमावास्या पौर्णमासी वा'—इति आश्व० श्रौ० ३ १० १०-१२ ।

३ द्र० आश्व० श्रौ० सू० ३ १२ २७ ।

४ 'तत्र इष्टिरग्निस्तपस्वान् जनद्वान् पावकवान्' इति आश्व० श्रौ० सू० ३ १२ २६ ।

'आ नो याहि' (हे अग्नि हमारे पास ताप के साथ मनुष्यों के बीच आओ) आदि। अथवा, उसे आहवनीय अग्नि में 'अग्नये तपस्वते जनद्वते पावकवते स्वाहा' (तपस्वत् जनद्वत् और पावकवत् अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

॥ इस प्रकार बत्तीसवें (द्वितीय) अध्याय के सातवें खण्ड की हिन्दी पूर्ण हुई ॥ ७ ॥

## अथ अष्टमः खण्डः

एकोनत्रिंशे प्रश्नोत्तरे दर्शयति

तदाहुर्य आहिताग्निराग्रयणेनानिष्ट्वा नवान्न प्राश्नीयात्, का तत्र प्रायश्चित्तिरिति, सोऽग्नये वैश्वानराय द्वादशकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'वैश्वानरो अजीजनत्' 'पृष्टो दिवि पृष्टो अग्निः पृथिव्यामित्याहुतिं' वाऽऽहवनीये जुहुयादग्नये वैश्वानराय स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति।

गृहेषु नवधान्ये समागते सत्याग्रयणेष्टिं कृत्वा पश्चान्नवान्नं भोक्तव्यम्, तस्या इष्टेरकरणे 'वैश्वानर' गुणयुक्तोऽग्निः[1] पुरोडाशदेवता ॥

VII.९[XXXII.८] ब्रह्मवादियों का (उन्तीसवाँ) प्रश्न है कि यदि कोई अग्निहोत्री आग्रयण इष्टि किए बिना ही नए अन्न [गृह में आए हुए नवान्न] का भक्षण कर ले तो वहाँ क्या प्रायश्चित्त है? उत्तर—उसे वैश्वानर गुण युक्त अग्नि के लिए बारह कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'वैश्वानरो अजीजनत्' (वैश्वानर अग्नि ने उत्पन्न किया) आदि और 'पृष्टो दिवि' (अग्नि आकाश में सूर्य रूप से, भूमि पर गार्हपत्यादि रूप से वर्तमान है) आदि अथवा, उसे आहवनीय अग्नि में 'अग्नये वैश्वानराय स्वाहा' (वैश्वानर अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

त्रिंशे प्रश्नोत्तरे दर्शयति—

*तदाहुर्य आहिताग्निर्यदि कपालं नश्येत्, का तत्र प्रायश्चित्तिरिति; सोऽश्विभ्यां* द्विकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'अश्विना वर्तिरस्मद्'–'आ गोमता नासत्या रथेनेत्याहुतिं'[3] वाऽऽहवनीये जुहुयादश्विभ्यां स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति।

---

१. द्र० आश्व० श्रौ० सू० २.१५.२।

२ द्र० आश्व० श्रौ० सू० ३.१३.८, आश्व० गृ० सू० ३.६८।

३. ऋ० १.९२.१६, ७.७२.१।

'स आहिताग्निः' यस्याऽऽहिताग्नेः पुरोडाशनिष्पादकं 'कपालं' यदि नश्येत्, तदानीमश्विनौ पुरोडाशदेवता[1] ॥

ब्रह्मवादियों का (तीसवाँ) प्रश्न है कि यदि किसी अग्निहोत्री का कपाल [मिट्टी का बना हुआ तावा जिस पर रोटी सेंकी जाती है] टूट जाय तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे अश्विन देवता के लिए दो कपालों वाले पुरोडाश का निर्वपन करना चाहिए उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'अश्विना वर्तिरस्मद्' (हे अश्विनों ! तुम हमारे गृह में) आदि और 'आ गोमता' (हे नासत्या पशुओं से रथ के साथ आओ) आदि । अथवा, उसे आहवनीय अग्नि में 'अश्विभ्यां स्वाहा' (अश्विनों के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए । वहाँ यही प्रायश्चित्त है ।

एकत्रिंशं प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्यदि पवित्रं नश्येत्, का तत्र प्रायश्चित्तिरिति; सोऽग्नये पवित्रवतेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'पवित्रं ते विततं ब्रह्मणस्पते'-'तपोष्पवित्रं विततं दिवस्पद इत्याहुतिं'[2] वाहवनीये जुहुयादग्नये पवित्रवते स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति ।

आहिताग्नेः पवित्रनाशे 'पवित्रवद्'-'गुणयुक्तोऽग्निः[3] पुरोडाशदेवता ॥

ब्रह्मवादियों का (इकतीसवाँ) प्रश्न है कि यदि किसी अग्निहोत्री का पवित्र [कुश की बना हुआ अंगूठी की तरह अँगुली में पहनने की वस्तु] नष्ट हो जाय तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे 'पवित्रवत्' गुण युक्त अग्नि के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए । उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'पवित्रं ते वितत' (हे मन्त्रों के स्वामी सोम ! तुम्हारा पवित्र अंश सभी जगह विस्तृत है) आदि और 'तपोष्पवित्रं' (शत्रुओं को कष्ट देने वाले सोम का पवित्र अंश द्युलोक के ऊँचे स्थान पर विस्तृत है) आदि अथवा, उसे आहवनीय अग्नि में 'अग्नये पवित्रवते स्वाहा' (पवित्रवद्गुण युक्त अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए । वहाँ यही प्रायश्चित्त है ।

द्वात्रिंशं प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्यदि हिरण्यं नश्येत्, का तत्र प्रायश्चित्तिरिति; सोऽग्नये हिरण्यवतेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'हिरण्यकेशो रजसो विसारे'-'आ ते सुपर्णा अमिनन्तं एवैरित्याहुतिं'[4] वाहवनीये जुहुयादग्नये हिरण्यवते स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति ।

---

१. आश्व० श्रौ० सू० ३.१३.९,१० ।　　२. ऋ० ९.८३.१,२ ।
३. आश्व० गृ० सू० ३.२ ।　　४. ऋ० १.७९.१,२ ।

आहिताग्नेर्हिरण्यनाशे 'हिरण्यवद्'-गुणयुक्तोऽग्निः पुरोडाशदेवता ॥

ब्रह्मवादियों का (बत्तीसवाँ) प्रश्न है कि यदि किसी अग्निहोत्री का सुवर्ण नष्ट (खो) जाय तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे 'हिरण्यवद्'गुण युक्त अग्नि के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं 'हिरण्यकेशो रजसो' (हिरण्यकेश विद्युत रूप अग्नि, मेघों को कम्पित करने वाले) आदि और 'आ ते सुपर्णा' (हे अग्नि ! तुम्हारी शोभन पतनशील किरणें मरुतों के साथ मिलकर) आदि। अथवा, उसे आहवनीय अग्नि में 'अग्नये हिरण्यवते स्वाहा' (हिरण्यवत् अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। यहाँ यही प्रायश्चित्त है।

त्रयस्त्रिंशं प्रश्नोत्तरं दर्शयति—

तदाहुर्यं आहिताग्निर्यदि प्रातरस्नातोऽग्निहोत्रं जुहुयात्, का तत्र प्रायश्चित्तिरिति; सोऽग्नये वरुणायाष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'त्वं नो अग्ने वरुणस्य विद्वान् 'स त्वं नो अग्नेऽवमो भवोतीत्याहुतिं' वाहवनीये जुहुयादग्नये वरुणाय स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति।

आहिताग्नेः स्नानमन्तरेणाग्निहोमे 'वरुण'-गुणकोऽग्निः पुरोडाशदेवता ॥

ब्रह्मवादियों का (तैंतीसवाँ) प्रश्न है कि यदि कोई अग्निहोत्री प्रातःकाल स्नान किए बिना ही अग्निहोत्र करे तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे 'वरुण' गुण वाले अग्नि के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'त्वं नो अग्ने' (हे विद्वान् अग्नि ! तुम हमारे ऊपर होने वाले वरुण देव के क्रोध को दूर करो) आदि और 'स त्वं नो अग्ने' (हे अग्नि ! तुम रक्षा करने के लिए हमारे पास आओ) आदि। अथवा, उसे आहवनीय अग्नि में 'अग्नये वरुणाय स्वाहा' (वरुण रूप अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। यहाँ यही प्रायश्चित्त है।

चतुस्त्रिंशं प्रश्नोत्तरं दर्शयति—

तदाहुर्यं आहिताग्निर्यदि सूतकान्नं प्राश्नीयात्, का तत्र प्रायश्चित्तिरिति; सोऽग्नये तन्तुमतेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्या याज्यानुवाक्ये 'तन्तुं तन्वन् रजसो भानुमन्विहि'-'अक्षानहो नह्यतनोत सोम्या' इत्याहुतिं' वाहवनीये जुहुयादग्नये तन्तुमते स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति।

आहिताग्नेः सूतकान्नप्राशने 'तन्तुमद्'-गुणकोऽग्निर्देवता[3] ॥

---

१. ऋ० ४.१४.५। २. ऋ० १०.५३.६,७।

३. द्र० आश्व० श्रौ० सू० ३.८.५। द्राह्या० श्रौ० ५.४।

अब ब्रह्मवादियों का (चौंतीसवाँ) प्रश्न है कि यदि कोई अग्निहोत्री सूतकान्न [अर्थात् सूतक वाली रजस्वला या जनना शौच वाली स्त्री द्वारा पकाया अन्न] भक्षण कर ले तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे 'तन्तुमत्' गुण वाले अग्निदेव के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'तन्तुं तन्वन्' (हे अग्नि ! तुम यज्ञ का विस्तार करते हुए लोक भासक सूर्य का अनुगमन करो) आदि और 'अक्षानहो' (हे सोमरस के योग्य देवों, तुम रथों में घोड़ों को जोड़ो) आदि। अथवा, उसे आहवनीय अग्नि में 'अग्नये तन्तुमते स्वाहा' (तन्तुमान् अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

पञ्चत्रिंशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्य आहिताग्निर्जीवे मृतशब्दं श्रुत्वा, का तत्र प्रायश्चित्तिरिति, सोऽग्नये सुरभिमतेऽष्टाकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'अग्निर्होता न्यसीदद्यजीयान्साध्वीमकर्देववीतिं नो अद्येत्याहुतिं'[1] वाहवनीये जुहुया-दग्नये सुरभिमते स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति।**

आहिताग्निः स्वस्मिञ्जीवत्येव स्वकीयमरणशब्दं यदा द्वेषिमुखाच्छृणुयात् तदानीं 'सुरभिमद्'-गुणयुक्तोऽग्निर्देवता[2] ॥

ब्रह्मवादियों का (पैंतीसवाँ) प्रश्न है कि यदि कोई अग्निहोत्री स्वयं जीवित होते हुए भी अपने मरण का शब्द (किसी शत्रु के मुख द्वारा) सुनें तो वहाँ क्या प्रायश्चित्त है ? उत्तर—उसे 'सुरभिमत्' गुण युक्त अग्निदेव के लिए आठ कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'अग्नि-होंता' (अग्निदेव होता एवं यजनीय के रूप में बैठते हैं) आदि और 'साध्वीमकर्देववीतिं' (आज हम लोगों के देवागमन रूप यज्ञ कार्य को अग्नि भली प्रकार से पूर्ण करें) आदि। अथवा, उसे आहवनीय अग्नि में 'अग्नये सुरभिमते स्वाहा' (सुरभिमान गुण युक्त अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

षट्त्रिंशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्य आहिताग्निर्यस्य भार्या गौर्वा यमौ जनयेत्, का तत्र प्रायश्चित्तिरिति, सोऽग्नये मरुत्वते त्रयोदशकपालं पुरोळाशं निर्वपेत्, तस्य याज्यानुवाक्ये 'मरुतो यस्य हि क्षयेऽरा इवेदचरमा अहेवेत्याहुतिं'[3] वाहवनीये जुहुया-दग्नये मरुत्वते स्वाहेति, सा तत्र प्रायश्चित्तिः ॥ इति।**

---

१ ऋ० ५ १ ६, १० ५३ ३ ।

२ 'सुरभय एव यस्मिञ्जीवे मृतशब्द'—इति आश्व० श्रौ० सू० ३ १३ ११ ।

३ ऋ० १ ८६ १, ५ ५८ ५ ।

आहिताग्निर्योऽस्ति, तस्येत्यस्मिन्नर्थे यस्येति शब्दः प्रयुक्तः। 'तस्य' आहिताग्नेर्भार्या वा तद्गृहावस्थिता गौर्वा 'यमौ' अपत्यद्वयं सह जनयेत्, तदानीं 'मरुत्वद्'-गुणयुक्तोऽग्नि-र्देवता[1] ॥

ब्रह्मवादियों का (छत्तीसवाँ) प्रश्न है कि यदि किसी अग्निहोत्री की स्त्री, या उसकी गाय जुड़वाँ बच्चे उत्पन्न करे तो वहाँ क्या प्रायश्चित्त है? उत्तर—उसे 'मरुत्वद्' गुण युक्त अग्निदेव के लिए तेरह कपालों वाले पुरोडाश का निर्वपन करना चाहिए। उसके पुरोनुवाक्या और याज्या मन्त्र इस प्रकार हैं—'मरुतो यस्य हि क्षये' (हे मरुतो तुम जिस यजमान के गृह में) आदि और 'अरा इवेदचरमा' (घोड़ों के समान तेज चलने वाले मरुद्गण) आदि। अथवा, उसे आहवनीय अग्नि में 'अग्नये मरुत्वते स्वाहा' (मरुत्वत् गुण युक्त अग्नि के लिए स्वाहा) आदि मन्त्र से [आज्य की] आहुति देनी चाहिए। वहाँ यही प्रायश्चित्त है।

सप्तत्रिंशे पर्याये कञ्चिद्विचारमुद्भावयति—

**तदाहुरपत्नीकोऽप्यग्निहोत्रमाहरेऽत्। नाऽऽहरेऽत्॥ इति।**

पुरुषे जीवति सति यदा भार्या म्रियते, तदानीमाहितैरग्निभिर्भार्याया दाह इत्येकः पक्षः। तथा च मनुः[2]—

"भार्यायै पूर्वमारिण्यै दत्त्वाऽग्नीनन्त्यकर्मणि।
पुनर्दारक्रियां कुर्यात् पुनराधानमेव च" ॥ इति ॥

आहितेभ्योऽग्निभ्योऽन्येनाग्निना भार्यां दहेदिति द्वितीयः पक्षः। तथा च आश्वलायनः— 'आहार्येणानाहिताग्निपत्नी च' इति[3]। भारद्वाजोऽप्याह—'निर्मन्थ्येन पत्नीम्' इति। अस्मिन् पक्षे पुनरपि विवाहेच्छारहितश्चायमपत्नीक एव वर्तते, सोऽग्निहोत्रम् 'आहरेत्' अनुतिष्ठेत् वेति प्लुतिद्वयं विचारार्थम्[4] ॥

ब्रह्मवादियों का (सैंतीसवाँ) प्रश्न है कि [पुरुष के जीवित रहते ही यदि स्त्री मर जाय तो उस] अपत्नीक को अग्निहोत्र का अनुष्ठान करना चाहिए अथवा नहीं?

तत्र निर्णयं दर्शयति—

**आहरेदित्याहुः॥ इति।**

कुछ याज्ञिकों का मत है कि उसे अग्निहोत्र का अनुष्ठान करना चाहिए।

अननुष्ठाने बाधं दर्शयति—

**यदि ना हरेदनद्धा पुरुषः॥ इति।**

---

1. 'यस्य भार्या गौर्वा यमौ जनयेदिष्टिर्भवति'—इति आश्व० श्रौ० सू० ३.१३.१२।
2. मनु० ५.१६८।
3. आश्व० श्रौ० सू० ६.१०.९,१०।
4. विचार्यमाणानाम्—इति पा० सू० ८.२.९७।

अद्धेति सत्यनाम[1] । तद्वैपरीत्यादनृत पुरुष 'अनद्धा पुरुष' अननुष्ठानेनानृतो भवेदित्यर्थः ॥

क्योंकि यदि अग्निहोत्र का यह अनुष्ठान नहीं करता है तो वह सत्य पुरुष[2] नहीं है ।

प्रश्नोत्तराभ्यां शब्दार्थं निश्चिनोति—

**कोऽनद्धा पुरुष इति, न देवान्न पितॄन् मनुष्यानिति ॥ इति ।**

'अनद्धापुरुष' शब्देन को विवक्षित ? इति प्रश्न । य पुमान् 'देवान्' पूजयेदिति शेष । पितॄनपि न पूजयेत् । 'मनुष्यान्' अतिथीनपि न पूजयेत् । तादृश पुमान् 'अनद्धा-पुरुष' इत्युत्तरम् ॥ अग्निहोत्रस्याननुष्ठाने सत्यनद्धा पुरुषो भवेदिति[3] ॥

असत्य पुरुष कौन है ? जो पुरुष देवताओं की पूजा न करे, जो पितरों की भी न पूजा करे और जो [अतिथि रूप में ] मनुष्य की भी पूजा न करे[4] ।

विपक्षे बाधमुक्त्वा स्वपक्षमुपसंहरति—

**तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेत् ॥ इति ।**

इसलिए अपत्नीक को भी अग्निहोत्र करना चाहिए ।

उक्तार्थदाढर्याय शाखान्तरगता गाथामुदाहरति—

**तदेषाऽभि यज्ञगाथा गीयते ॥ इति ।**

'तत्' तस्मिन्नवश्यानुष्ठानरूपेऽर्थे 'एषा' वक्ष्यमाणा 'यज्ञम्' अभिलक्ष्य सर्वैर्गीयमाना 'यज्ञगाथा' याज्ञिकै 'गीयते' पठ्यते ॥

याज्ञिकों के द्वारा इस [अवश्य अनुष्ठान करने] के सम्बन्ध में एक यज्ञगाथा का गान किया जाता है ।

---

१ निघ० ३ १० ४ ।

२ अनद्धेत्यसत्यनाम । अनृतपुरुष स्यादिति यद्वद्—इति गोविन्दस्वामी ।

३ अनद्धापुरुष पुरुषादेव ह वा अनद्धापुरुषो यो न देवानवति, न पितॄन् न मनुष्यान्—इति शत० ब्रा० ६ ३ १ २४ । 'अनद्धापुरुषमीक्षते देवपितृमनुष्यानर्चकम्'—इति कात्या० श्रौ० १६ २ १३ ।

४ असत्यमे भवेदद्धा नञ् 'तस्मान्नुडची'ति नुट । (पा० सू० ६ ३ ७४)
मनुष्याज्जस् शसर्थेऽत्र शेषो य सोऽभिपूजयेत् ॥ इति ।
न पूजयति यो देवान् पितॄश्च मनुजानपि ।
सोऽनद्धा पुरुषो नास्य पुरुषत्व सुनिश्चितम् ॥
पुरु भूरि सनोतीति पुरुषोऽद्धा निरुच्यते ॥ इति षड्गुरुशिष्य. ।

तां गाथां दर्शयति—

> यजेत् सौत्रामण्यामपत्नीकोऽप्यसोमपः ।
> 'मातापितृभ्यामनृणार्थाद्यजेति' वचनाच्छ्रुतिरिति ॥ इति ।

अपत्नीकोऽपि पुमान् 'सौत्रामण्या यजेत्' सौत्रामणीयागमपि कुर्यात्, किमुताग्निहोत्रादिकम् ? हविर्यज्ञेष्वस्याधिकारोऽस्तीत्यर्थः [१] । तद्वदसोमयागेष्वधिकारशङ्कायां तद्व्यावृत्त्यर्थमसोमप इत्युच्यते । यथा पत्नीरहितोऽपि मात्रे पित्रे चाशनाच्छादनादिकं ददाति, तद्वदग्निहोत्रमपि कुर्यादिति शेषः । अत्र हेतुः 'अनृणार्थात्' इति ऋणपरिहारनिमित्तम् । तथा च शाखान्तरे श्रूयते— जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते । ब्रह्मचर्येणर्षिभ्यो, यज्ञेन देवेभ्यः प्रजया पितृभ्यः एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासी इति । अनेनैवाभिप्रायेण श्रुतिः । श्रुतेः यजेति वचनमस्ति यज देवान् अधीष्व वेदान् प्रजामुत्पादयेति शाखान्तरे वचनमस्ति । तस्माद्वचनादनुष्ठानपक्ष एव युक्त इति गाथाया अर्थः ॥

'अपत्नीक पुरुष को भी और सोम न पीने वाले को भी 'सौत्रामणी' याग में यजन करना चाहिए । वस्तुतः माता और पिता के ऋण से उऋण होने के लिए उसे यजन करना चाहिए ।' इस श्रुति के वचन से भी उसे अनुष्ठान करना चाहिए ।

तथा च विष्णुः[३] स्मरति—

> 'मृतायामपि भार्यायां वैदिकं न त्यजेद् द्विजः ।
> उपाधिनाऽपि यत्कर्म यावज्जीवं समापयत्' ॥ इति ।

उपाधिः कुशमयादिपत्नीकल्पना । यथा च स्मृत्यन्तरम्[४]—

> 'अथ कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः ।
> अग्निहोत्रमुपासन्त यावज्जीवमनुव्रताः ॥' इति ।

---

१ 'सायंप्रातर्होमौ स्थालीपाको नवश्च यः ।
बलिश्च पितृयज्ञश्चाष्टका सप्तमः पशुः ॥—इत्येते पाकयज्ञाः ।
अग्न्याधेयमग्निहोत्रं पौर्णमास्यमावास्ये ।
नवेष्टिश्चातुर्मास्यानि पशुबन्धोऽत्र सप्तमः ॥—इत्येते हविर्यज्ञाः ।
अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशिमांस्ततः ।
वाजपेयोऽतिरात्रश्चाप्तोर्यामात्र सप्तमः ॥—इत्येते सुत्याः —इति गा० ग्रा० १ २३ ।
अष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः ।
अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः '—इति गौ० धर्म० ८ । चापि द्रष्टव्य सायणभाष्यम् द्र० द्र० पूर्वम् ८८७ पृ० । २ तै० सं० ६ ३ १० ५ ।

३, ४ आकरे नोपलभ्येते ।

यथा च मैत्रायणीयश्रुतौ अप्याम्नायते[1]—

"यस्तु स्वैरग्निभिर्भार्यां संस्करोति कथचन ।
असौ मृत. स्त्री भवति स्त्री चैवास्य पुमान् भवेत्" ॥

तस्मान्मृतभार्योऽपि स्वकीयानग्नीनवस्थाप्याग्निहोत्रमाहरेत् ॥

तदेतदभिप्रेत्योपसहरति—

**तस्मात् सौम्यं याजयेत् ॥ ९ ॥** इति ।

ऋणापाकरणार्थी दोषराहित्यात् 'सौम्य.' । तादृशमवश्यमग्निहोत्राद्यनुष्ठापयेत् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीय 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तम-पञ्चिकाया द्वितीयाध्याय (द्वात्रिंशाध्याय) अष्टम खण्ड ॥ ८ ॥ ( ९ ) [ २३२ ]

इसलिए [ऋण से मुक्ति प्राप्त करने के लिये अग्निहोत्र आदि] उसे सोम से सम्बन्धित यजन करना चाहिए ।

॥ इस प्रकार बत्तीसवें (द्वितीय) अध्याय के आठवें खण्ड की हिन्दी पूर्ण हुई ॥८॥

## अथ नवमः खण्डः

अत ऊर्ध्वं खण्डद्वयं देशविशेषेण केचिदामनन्ति, केचिन्नाऽऽमनन्ति । अत एव पूर्वनिबन्धकारा पाठरहितदेशानुसारेण तद्व्याख्यानमुपेक्षितवन्त । अस्माभिस्तु पाठोपेतदेशानुसारेण तद्व्याख्यायते—

पूर्वम् अपत्नीकस्याग्निहोत्रादिहविर्यज्ञानुष्ठान प्रतिपादितम् । अथ तस्यैवापत्नीकस्य वाचिक मानस च द्विविधमग्निहोत्र प्रतिपादनीयम् । तत्र वाचिकविषय प्रश्नमुद्भावयति—

**तदाहुर्वाचाऽपत्नीकोऽग्निहोत्र कथमेव जुहोति ॥** इति ।

योऽपत्नीक पुरुष , तस्य वाचा निष्पाद्यं यदग्निहोत्र तत् केन प्रकारेणानुष्ठातव्यम् ? इति प्रश्नः ॥

vii,१० [xxxii,९] अब ब्रह्मवादियों का [अपत्नीक के वाचिक अग्निहोत्र के सम्बन्ध में] प्रश्न है कि अपत्नीक पुरुष का वाणी से निष्पन्न अग्निहोत्र किस प्रकार से अनुष्ठित होना चाहिए ?

तमेव प्रश्न पुनर्विस्पष्टयति—

**निविष्टे मृता पत्नी नष्टा वाऽग्निहोत्र कथमग्निहोत्रं जुहोति ?** इति ।

नैष्ठिकब्रह्मचर्यादावप्यपत्नीकत्वमस्ति, तत्राग्निहोत्रप्रसङ्ग एव नास्ति, विध्यभावात् । अतोऽपत्नीकत्वं विशेष्यते । विवाहादूर्ध्वमग्निहोत्रे 'निविष्टे' अनुष्ठातुमुपक्रान्ते सति, पश्चात्

1. मैत्रायणीयशाखाया ब्राह्मणं चामनन्ति ।

पत्नी मृता भवति । सोऽयमपत्नीकः । तस्याग्निहोत्रं 'नष्टा वा' नष्टमेव भवति, पूर्वसिद्धैरग्निभिः पत्नीदाहपक्षे पुनरग्निहोत्रहेतूनामग्नीनामभावात् । अतोऽपत्नीकः कथमग्निहोत्रं जुहोति ? इति प्रश्नः ॥

[क्योंकि विवाह के बाद] अग्निहोत्र में अनुष्ठान के उपक्रम होने के बाद पत्नी के मर जाने पर जब उसका अग्निहोत्र नष्ट ही हो जाता है तो [अपत्नीक] कैसे अग्निहोत्र का अनुष्ठान करे ?

तस्योत्तरमाह—

पुत्रान् पौत्रान्नप्तॄनित्याहुरस्मिंश्च लोकेऽमुष्मिंश्चास्मिंल्लोकेऽयं स्वर्गोऽस्वर्गेण स्वर्गं लोकमारुरोहेत्यमुष्यैव लोकस्य संततिं धारयति, यस्यैवा पत्नी नैच्छेत्, तस्मादपत्नीकस्याऽऽधानं कुर्वन्ति ॥ इति ।

योऽपत्नीकोऽग्निरहितः स्वाशक्तत्वेनानुष्ठातुमशक्तश्च, तादृशः पुमान् पुत्रादीन् प्रत्येवं ब्रूयात् । आहुरिति बहुवचनं छान्दसम् । हे पुत्रपौत्रप्रपौत्राः ! शृणुत । अस्मिंल्लोके, 'अमुष्मिन्' स्वर्गे लोके च श्रेयः संपादनीयम् । अस्मिंल्लोके तु स्थितैः पुत्रैर्योऽयं स्वर्गः शास्त्रेण श्रुत इति शेषः । तं स्वर्गलोकम् 'अस्वर्गेण' स्वर्गविलक्षणेन कामकर्मानुष्ठानेन 'आरुरोह' आरोहेदित्येवं पुत्रादीन् प्रति वाचोपदिशति । एतदेव वाजसनेयिभिरपि समाम्नायते—'तस्मात् पुत्रमनुशिष्टं लोक्यमाहुः । तस्मादेनमनुशासति'[1] इति । अनेन पुत्राद्यनुशासनेनामुष्यैव लोकस्य 'संततिम्' अविच्छेदं 'धारयति' संपादयति । कुलपरम्परयाऽग्निहोत्रानुष्ठानेन सर्वेषां स्वर्गप्राप्तौ तद्विच्छेदाभावात् । 'यस्य' यः पुमान् 'एषा पत्नी नैच्छेत्' स्वस्यानुष्ठातुमशक्तत्वेन पुनर्विवाहसाध्यामेतां पत्नीं नापेक्षेत् । तस्मात्तस्यापत्नीकस्य वाचा प्रेरिताः पुत्रपौत्रादय आधानं कुर्वते । तदाधानपूर्वकमग्निहोत्रमपत्नीकस्य वाचिकमित्युच्यते ॥

उत्तर—[अपत्नीक एवं वृद्ध अनुष्ठान में अशक्त हो तो] वह अपने पुत्रों पौत्रों और प्रपौत्रों से कहे—[हे पुत्र, पौत्र और प्रपौत्र ! सुनो] । इस लोक में और उस स्वर्ग लोक में [श्रेय का सम्पादन करना चाहिए] । इस लोक में [ही स्थित होकर पुत्रों के द्वारा जो] यह स्वर्ग [शास्त्र में सुना जाता है] उस स्वर्ग लोक पर वह स्वर्गविलक्षण कर्मानुष्ठान के द्वारा चढ़ता है । इस प्रकार [पुत्र आदि को अनुशासन के द्वारा] वह उस [स्वर्ग] लोक का अविच्छेद सम्पादित करता है [अर्थात् कुलपरम्परा से चले आ रहे अग्निहोत्र के द्वारा सभी को स्वर्ग प्राप्ति में विच्छेदराहित्य होने से वह भी स्वर्ग पहुँचता है] जो पुरुष [स्वयं अनुष्ठान में अशक्त होने से पुनः विवाह के लिए] इस [दूसरी] पत्नी की अपेक्षा न करे । इसलिए उस अपत्नीक पुरुष का [वाणी से प्रेरित

---

१. शत० ब्रा० १४.४.३.२६ ।

पुत्र पौत्र आदि] आधान करते हैं। [इस प्रकार उस आधान से अपत्नीक का वाचिक अग्निहोत्र कहते हैं]।

अथ मानसमग्निहोत्रं प्रश्नोत्तराभ्यां दर्शयति—

**अपत्नीकोऽग्निहोत्रं कथमग्निहोत्रं जुहोति? श्रद्धा पत्नी, सत्यं यजमानः, श्रद्धा सत्यं तदित्युत्तमं मिथुनं, श्रद्धया सत्येन मिथुनेन स्वर्गाँल्लोकाञ्जयतीति ॥ १० ॥** इति।

पूर्वोक्तर्त्विरोऽपत्नीको वा अग्निहोत्रं स्वयमेव मनसा जुहोमीति यदीच्छेदिति शेष। तदानीं केन प्रकारेण तस्य मानसो होम? इति प्रश्न। श्रद्धेत्यादिकं तदुत्तरम्। येयं कर्मश्रद्धा, सैव पत्नी। यत् सत्यं सत्यवाक्यं वैदिकमन्त्रोच्चारणं, स एव यजमानः। श्रद्धा सत्यं चेति यदुभयमस्ति तदुक्तेन प्रकारेण भावितं सदुत्तमं मिथुनं भवति। तादृशेन श्रद्धासत्यरूपेण मिथुनेन मानसमनुष्ठानं निष्पाद्य स्वर्गाँल्लोकाञ्जयतीत्येवमुत्तरं सपन्नम्॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया द्वितीयाध्याये (द्वात्रिंशाध्याये) नवम खण्ड ॥ ९ ॥ (१०) [२३३]

वह युद्ध अपत्नीक अग्निहोत्र को [स्वयमेव मन में यदि इच्छा करे कि मैं आहुति देता हूँ] तब वह किस प्रकार [मन से] अग्निहोत्र का अनुष्ठान करता है? उत्तर—जो यह [कर्म रूप] श्रद्धा है वही पत्नी है और जो [वैदिक मन्त्रोच्चार रूप] सत्य है वह यजमान ही है। श्रद्धा और सत्य का जो जोड़ा है वह [उक्त प्रकार के भाव से भावित] उत्तम जोड़ा है। अतः उस श्रद्धा और सत्य रूप जोड़े के द्वारा वह [मानसिक अनुष्ठान का निष्पादन करके स्वर्ग लोकों को प्राप्त करता है—इस प्रकार उत्तर हुआ।

॥ इस प्रकार बत्तीसवें (द्वितीय) अध्याय के नौवें खण्ड की हिन्दी पूर्ण हुई ॥९॥

## अथ दशमः खण्ड

तद्व्रतनिमित्तमुपवासं विधत्ते—

**तदाहुर्यद्दर्शपूर्णमासयोरुपवसति, न ह वा अव्रतस्य देवा हविरश्नन्ति, तस्मादुपवसत्युत मे देवा हविरश्नीयुरिति ॥** इति।

तत् तस्मिन्निष्टयनुष्ठान विषये ब्रह्मवादिन एवमाहु। य कोऽप्यनुष्ठाता दर्शपूर्णमासयोरुपवासं कुर्यात्। यागरूपं व्रतं निश्चित्य गार्हपत्याद्यग्निसमीपे यो वास स उपवास। यद्वा, देवा अस्यापि यज्ञे समीपे वसन्तीत्येतदीयोऽनुष्ठानसकल्प उपवास। अभ्युपस्तरणादिना तदीयोऽनुष्ठाननिश्चयो वगन्तव्य। अत एव शाखान्तरे श्रूयते—उपास्मिञ्छ्वो

यक्ष्यमाणे देवतावसन्ति। य एव विद्वानग्निमुपस्तृणाति'—इति। 'अव्रतस्य' नियमविशेष स्वीकाररूपव्रतरहितस्य पुरुषस्य हविर्देवा नैव स्नन्ति। तस्मात्कारणादुत 'मे' मदीयं हविर्देवा अश्नीयुरित्यभिप्रेत्य नियमं स्वीकृत्याग्निसमीप उपवसेत्। एतदेवाभिप्रेत्य आपस्तम्ब आह—'आहवनीयागारे गार्हपत्यागारे वा शेते'[२] इति। यद्वा, ग्राम्याशनपरि-त्याग उपवास। तत्परित्यज्याऽऽरण्याशनरूप नियमं स्वीकुर्यात्। अत एव शाखान्तरीया आह—यद्ग्राम्यानुपवसति तेन ग्राम्यानवरुन्धे यदारण्यस्याश्नाति, तेनारण्यान् यदनाश्वानुपवसेत् पितृदेवत्यः स्यादारण्यस्याश्नाति[३]—इति॥

VII ११[xxxii १०] अब ब्रह्मवादियों का प्रश्न है कि जो कोई अनुष्ठान करने वाला पुरुष दर्शपूर्णमास में उपवास [अर्थात् याग रूपी व्रत का निश्चय करके गार्हपत्य आदि अग्नि के समीप निवास] करता है, क्योंकि विशेष नियम रूप व्रत के स्वीकार से रहित पुरुष के हवि का देवता भक्षण नहीं करते। इसलिए मेरी भी हवि का देव भक्षण करें— इस अभिप्राय से [समीप में वास करता है]।

*अथोपवासविधिविषयं शाखाभेदवचनमाश्रित्य विकल्पं दर्शयति—*

**पूर्वां पौर्णमासीमुपवसेदिति पैङ्ग्यमुत्तरामिति कौषीतकं, या पूर्वा पौर्ण-मासी साऽनुमतिर्योत्तरा सा राका॥ इति।**

चतुर्दशीतिथिवशाद् यदा दिनद्वये पौर्णमासी तिथिः सम्पद्यते, तदानीं पूर्वां 'पौर्णमासी मुपवसेत् पूर्वदिने उपवासं कृत्वा परेद्युर्यजतेति शाखाध्यायप्रवर्तकस्य पैङ्ग्यमहर्षेर्मतम्[४]। 'उत्तरां पौर्णमासीमुपवसेद् उत्तरस्मिन्दिने उपवासं कृत्वा ततोऽपि परेद्युर्यजेतेत्येवंशाखा प्रवर्तकस्य कौषीतकिमहर्षेर्मतम्[५]॥

---

१ तै० सं० १.६.७.३।

२ आप० श्रौ० ४.३.१७। 'अह ग्राम्यानुपवसामि'—त्याह्येति एतदादि सूत्राणि च द्रष्टव्यानि।

३ तै० सं० १.६.७.३।

४ पा० सू० ४.३.१०५। 'पिङ्गेन प्रोक्त पैङ्ग्यकल्पः।' अनु० सू० १.२, ४, १०, ६.७, ११.८। शाङ्खा० ब्रा० ३.१, १९, २४.९। शाङ्खा० श्रौ० ४.२.११ इत्यादि। 'मधुक पैङ्ग्य' इति शत० ब्रा० १४.९.२.१७। 'मधुक कोयष्टिकाख्य पक्षी, तद्वल्लाक्ष्यते यस्य, मध्येव प्रथमः श्रौत, तद्वद् पिङ्गनरः इति वा'—इति महाभारत १३.११८७ श्लोकव्याख्याने नीलकण्ठ।

५ ऋग्वेदस्तु एकविधशाखोऽपि सन्नुभौ द्विविध। तत्र शैशिरीयादयः पञ्चशाखभेदाः, कौषीतक्यादयस्तु षोडश शाङ्खायनभेदाः।

एतदेव मतद्वयमुपजीव्य स्मार्ता एवं वर्णयन्ति—

"पर्वप्रतिपदोः संधिर्मध्याह्ने पूर्वतोऽपि वा।
अन्वाधानं पूर्वदिने तद्दिने याग इष्यते॥
परतश्चेत्परेऽह्नीष्टिस्तद्दिनेऽन्वाहितिर्भवेत्" इति॥

एतच्च पौर्णमासीद्वयसद्भावे वेदितव्यम्। अनुमतिराकाशब्दाभ्यां पौर्णमासीभेदस्य सर्वत्र व्यवहृतत्वात्। तयो स्वरूपमभिधानकार आह—"कलाहीने साऽनुमतिः, पूर्णे राका निशाकरे"[1] इति। चतुर्दशीसंयोगाच्चन्द्रमसि कलाहीने सत्यनुमतिरित्युच्यते। तद् संयोगाभावेन चन्द्रमण्डले पूर्वे सति रात्रेरुच्यते॥

[दो दिन पूर्णमासी तिथि यदि हो तो] 'पूर्व दिन की पूर्णमासी को उप अर्थात् समीप में निवास करे' [और दूसरे दिन यजन करे। सामशाखा के प्रवर्तक आचार्य] पैङ्गी महर्षि का यह मत है। 'दूसरे दिन की पूर्णमासी को उप-वास करे' [उसके बाद भी दूसरे दिन यजन करे]—इस प्रकार [ऋक्शाखा के प्रवर्तक आचार्य] कौषीतकि महर्षि का मत है। वस्तुतः जो पूर्व वाली पूर्णमासी है वह [चतुर्दशी के संयोग एवं चन्द्रमा के कलाविहीन होने पर] 'अनुमति' कही जाती है और बाद वाली दूसरे दिन की पूर्णमासी [चन्द्रमण्डल के पूर्ण होने पर] 'राका' कही जाती है।

पौर्णमासीन्यायममावास्यायामपि दर्शयति—

**या पूर्वाऽमावास्या सा सिनीवाली, योत्तरा सा कुहूः॥ इति।**

अत्रापि चतुर्दशीसंयोगाच्चन्द्रदर्शने सत्यमावास्या सिनीवाल्युच्यते। तद्योगराहित्येन चन्द्रदर्शनाभावे कुहूरिति। तदप्यभिधानकारेणोक्तम्—सा दृष्टेन्दुः सिनीवाली, सा नष्टेन्दुकला कुहूः[2] इति। अत्राप्युपवासयागनिश्चये मतभेदः पूर्ववद्द्रष्टव्यः॥

इसी प्रकार जो पहले दिन की अमावास्या है वह [चतुर्दशी से संयुक्त होने से चन्द्रदर्शन होने पर] 'सिनीवाली' कही जाती है, और जो बाद वाली दूसरे दिन की अमावास्या है वह [चन्द्रदर्शन के अभाव में] 'कुहू' नाम से अभिहित होती है।

अत्र पूर्वोत्तरविभागनिर्णयाय कर्मोपयोगिन्यास्तिथेः स्वरूपं दर्शयति—

**यां पर्यस्तमियादभ्युदियादिति सा तिथिः॥ इति।**

अमावास्यां पौर्णमासीं वा, यां परिप्राप्य सूर्योऽस्तमियात्। तथा यामभिलक्ष्य सूर्य उदियात् सेयमुदयास्तमयव्यापिनी कर्मोपयुक्ता तिथिः। तादृश्यां तिथौ उदयास्तमययोर्मध्ये पूर्वोत्तराभ्यां चतुर्दशीप्रतिपद्भ्यां मिश्रणे सति पर्वणो द्वैविध्यं भवति। तस्मिन् द्वैविध्ये पूर्वोक्तमतद्वयं द्रष्टव्यम्॥

---

१. अमरकोश १.४.८। २. अमरकोश १.४.९।

[अमावास्या अथवा पूर्णमासी] जिसको प्राप्त करके सूर्य अस्त होए वह तथा जिसको अभिलक्ष्य करके सूर्य उदित होए वह [उदयास्तमयव्यापिनी कर्म के उपयुक्त] तिथि है। [इस प्रकार दो तिथि के उदय और अस्त के मध्य पहली और दूसरी तिथि क्रमशः चतुर्दशी और प्रतिपद् तिथि से मिलने पर पर्व का दो प्रकार हो जाता है]।

तदेतदुपाहरति—

पूर्वां पौर्णमासीमुपवसेदनिर्ज्ञाय पुरस्तादमावास्यायां चन्द्रमसं यदुपैति, यद् यजते, तेन सोमं क्रीणन्ति, तेनोत्तरामुत्तरामुपवसेदुत्तराणि ह वै सोमो यजते, सोममनु दैवतमेतद्वै देवसोमं यच्चन्द्रमास्तस्मादुत्तरामुपवसेत् ॥ ११ ॥ इति।

पूर्वामिति पैङ्गिमतस्योपसंहारः। अमावास्यादिने 'पुरस्तात्' पूर्वस्यां दिशि चन्द्रमसम् 'अनिर्ज्ञाय' च शास्त्रमार्गेण चन्द्रमदृष्ट्वा चन्द्रोदयो न भविष्यतीति निश्चित्य 'यदुपैति' उपवसति प्रारभत इति यदस्ति, 'यद्यजते' परेद्युर्याग करोतीति यदस्ति, 'तेन' उपवासेन यागेन च 'उत्तरामुत्तराम्' आगामिपक्षगतां पौर्णमासीममावास्यां चोपवसेत्। 'उत्तराणि' उपवासदिनादुत्तरेषु दिनेषु यजते। स यागः 'सोमो' भवति। सोमयागसदृशो भवति। त सोममनु सर्वमपि दैवतं तृप्यतीति शेषः। योऽयं चन्द्रमा अस्ति, एतदेव 'सोमं' देवानामपेक्षितं सोमद्रव्यसदृशं वस्तु। यस्माच्चन्द्रमण्डलं देवानां प्रियं, तस्मात्मंडलं सपूर्णमभिलक्ष्योत्तरां पौर्णमासीमुपवसदिति कौषीतकिमतस्योपसंहारः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया द्वितीयाध्याये (द्वात्रिंशाध्याये) दशमः खण्डः ॥ १० ॥ (११) [२३४]

[पैङ्गी आचार्य का मत है कि] पहले दिन की पूर्णमासी को उप अर्थात् समीप में वास करे जब [अमावास्या के दिन] पूर्व दिशा में चन्द्र को शास्त्रानुसार न देखकर चन्द्रोदय होगा ऐसा निश्चय करके जो उप-वास का आरम्भ करता है और जो दूसरे दिन याग करता है—यह जो है उस [उपवास] से सोम खरीदते हैं और उस [उपवास रूप याग] से आगामी पक्ष की पूर्णमासी और अमावस्या में उपवास करे और उसके बाद के दिनों में यजन करे। [वह याग सोम सदृश होता है] उस सोम से सभी देवता तृप्त होते हैं। जो यह चन्द्रमा है, वही देवताओं का सोम द्रव्य सदृश अपेक्षित वस्तु है। क्योंकि चन्द्रमण्डल देवों का प्रिय है अतः उस मण्डल को सम्पूर्ण रूप से अभिलक्षित करके बाद की पूर्णमासी को उपवास [अर्थात् साथ रहना] करे—इस प्रकार कौषीतकि आचार्य का मत है।

॥ इस प्रकार बत्तीसवें (द्वितीय) अध्याय के दसवें खण्ड की हिन्दी पूर्ण हुई ॥ १० ॥

## अथ एकादश खण्डः

इत्यमग्निहोत्रप्रायश्चित्तप्रसङ्गादागतमपत्नीकाग्निहोत्रादिक परिसमाप्य प्रकृतमेव प्रायश्चित्तमनुसरन् प्रश्नमुत्थापयति—

**तदाहुर्यस्याग्निमनुद्धृतमादित्योऽभ्युदियाद्वाऽभ्यस्तमियाद्वा प्रणीतो वा प्राग्घोमादुपशाम्येत् का तत्र प्रायश्चित्तिरिति ॥ इति ।**

सायंकाले आदित्यस्यास्तमयात् पुराऽग्निहोत्रार्थं गार्हपत्यादग्निमुद्धरेत् । प्रातःकाले, तु सूर्योदयात् पुरोद्धरेदित्याम्नातम्[1] । एवं सति 'यस्य' अग्निहोत्रिणोऽनुद्धृतमग्निमभिलक्ष्याऽऽदित्यः 'उदियाद्वाऽस्तमियाद्वा' अग्न्युद्धरणात् प्रागेवोदयास्तमयौ भवत इत्यर्थः । अथवा स्वस्वकाले प्रणीतोऽग्निराहवनीयदेशे स्थित्वा होमात् पूर्वमुपशाम्येत् । तेषु त्रिषु विषयेषु प्रायश्चित्तं पृच्छति ॥

VII १२[XXXII ११] अब ब्रह्मवादियों का प्रश्न है कि [जब नियम यह है कि सायंकाल सूर्यास्त से पहले अग्निहोत्र के लिए गार्हपत्य से अग्नि लाना चाहिए और प्रातःकाल सूर्योदय से पहले । तो] यदि किसी अग्निहोत्री की अग्नि के न ला सकने के पहले ही आदित्य का उदय हो जाय अथवा अस्त हो जाय, या अग्नि प्रणयन हो भी जाय किन्तु होम के ही पहले [आहवनीय प्रदेश में ही] वह बुझ जाय तो वहाँ क्या प्रायश्चित्त है ?

तस्योत्तरमाह—

**हिरण्यं पुरस्कृत्य सायमुद्धरेज्ज्योतिर्वै शुक्रं हिरण्यं, ज्योतिः शुक्रमसौ, तदेव तज्ज्योतिः शुक्रं पश्यन्नुद्धरति, रजतमन्तर्धाय प्रातरुद्धरेदेतद् रात्रिरूपम्, पुरा सभेदाच्छायानामाहवनीयमुद्धरेन्मृत्युर्वै तमश्छाया, तेनैव तज्ज्योतिषा मृत्युं तमश्छायां तरति, सा तत्र प्रायश्चित्तिः ॥ इति ।**

यदा सूर्यास्तमयादूर्ध्वमुद्धरणीयः, तदानीं हिरण्यं 'पुरस्कृत्य' उपर्यवस्थाप्य, वह्निमुद्धरेत् । यदेतद्धिरण्यमस्ति, तदेतत् 'शुक्रं ज्योतिर्वै' अत्यन्तभास्वरं प्रकाशः । 'असौ' आदित्योऽपि 'शुक्रं ज्योतिः' अत्यन्तं भास्वरः प्रकाशः । तथा सति 'तदेव' हिरण्यमेव 'तज्ज्योतिः' आदित्यप्रकाशः । अतः 'शुक्रं' दीप्तिमद्धिरण्यं पश्यन्नेवाग्निमुद्धरेत् । प्रातःकाले तु रजतम् 'अन्तर्धाय' उपर्यवस्थाप्याग्निमुद्धरेत् । 'एतत्' च रजतं रात्रेः स्वरूपम् । रात्रौ हि च द्वतारादिकं रजतसमानं दृश्यते । अतो रजतेन सूर्योदयात् प्राचीनो रात्रिकाल एव सम्पद्यते । यद्यप्येतावतैव त्रिविधप्रश्नोत्तरं सम्पन्नम्, तथापि तत्प्रसङ्गान्नित्यमुद्धरणं पुरेत्यादिना प्रदर्श्यते । छायानां 'सभेदः' एकीभावः । सूर्यास्तमये सत्येषा मनुष्यच्छाया एषा वृक्षच्छायेति विभागो न ज्ञायते, सोऽयं सभेदः । तस्मात् पुरा सूर्यप्रकाशवशाच्छाया

---

1 आश्व० श्रौ० २ २ १-१८ ।

विशेषो विज्ञायते । तस्मिन्नेव काले सायंहोमार्थमाहवनीयमुद्धरेत् । तत्रोपपत्तिर्मृत्युरित्यादिः । यदिदं तम, या च च्छाया, तदुभयं मृत्युस्वरूपमेव । अतः सत्यादित्यप्रकाशे तेनैव ज्योतिषा मृत्युरूपं तमस्तद्रूपा छाया च 'तरति' उल्लङ्घयति ।[1] सेयमुक्ता तत्र वैकल्ये प्रायश्चित्तिः । नित्योद्धरणस्यापि वैकल्यविरोधित्वादुपचरितं प्रायश्चित्तत्वम् । पूर्वत्र सप्तत्रिंशे पर्याये पत्नीरहितस्याग्निहोत्रं विधाय, अष्टात्रिंशे पर्याये दर्शपूर्णमासयोरुपवासनिर्णयः, एकोनचत्वारिंशे पर्याये वाचिकं मानसं वाऽग्निहोत्रमपत्नीकस्य विधाय, चत्वारिंशे बहुधुद्धरणकालातिक्रमे प्रायश्चित्तमुक्तम् ॥

(i) सायंकाल [सूर्यास्त के बाद जब अग्नि का उद्धरण करना हो तो] स्वर्ण को सामने रखकर अग्नि लाना चाहिए; क्योंकि यह जो सुवर्ण है यह अत्यन्त दीप्तिमान प्रकाश है और यह [आदित्य भी अत्यन्त भास्वर प्रकाश है। इस प्रकार यह [सुवर्ण] ही उस [आदित्य] का प्रकाश है। अतः दीप्तियुक्त सुवर्ण को देखते हुए ही अग्नि का प्रणयन करना चाहिए। (ii) प्रातःकाल [सूर्योदय के बाद] चाँदी ऊपर में स्थापित करके अग्नि का उद्धरण करे। यह [रजत = चाँदी] रात्रि स्वरूप है [क्योंकि रात में चन्द्र और तारे आदि चाँदी के ही समान प्रतीत होते हैं। अतः चाँदी द्वारा सूर्योदय से पूर्व का रात्रिकाल ही सम्पादित होता है]। (iii) [सायंकाल के होम के लिए] आहवनीय अग्नि का [गार्हपत्य से] उद्धरण छाया के सभेद अर्थात् सूर्यास्त के समय मनुष्य एवं वृक्ष की छाया के एकीभाव के समय [अर्थात् जब दोनों की छाया का विभाग न हो सके] तब तक कर लेना चाहिए। (क्योंकि) यह जो अँधेरा है और यह जो छाया है यह दोनों ही मृत्यु स्वरूप है। अतः सूर्य के प्रकाश में उसी [चाँदी की] ज्योति से मृत्यु रूप अन्धकार या छाया को यह पार करता है। यहाँ यही प्रायश्चित्त है। [इस प्रकार यहाँ पर सैंतिसवें पर्याय में अपत्नीक के अग्निहोत्र का विधान, अड़तीसवें पर्याय में दर्शपूर्णमास के उप अर्थात् समीप में निवास का निर्णय और उन्तालिसवें पर्याय में अपत्नीक के वाचिक अथवा मानसिक अग्निहोत्र का विधान है। चालिसवें पर्याय में अग्नि के निकालने में कालातिक्रम में प्रायश्चित्त कहा गया है]।

अथैकचत्वारिंशे प्रश्नोत्तरे दर्शयति—

**तदाहुर्यस्य गार्हपत्याहवनीयावन्तरेणानो वा रथो वा श्वा वा प्रतिपद्येत, का तत्र प्रायश्चित्तिरिति? नैनन्मनसि कुर्यादित्याहुरात्मन्यस्य हि ता भवन्तीति, तच्चेन्मनसि कुर्वीत, गार्हपत्यादविच्छिन्नामुदकधारां हरेत्तन्तुं तन्वन् रजसो भानुमन्विहीत्याहवनीयात्, सा तत्र प्रायश्चित्तिः ॥** इति ।

---

1. आश्व० श्रौ० ३.१२.१६–२० ।

गार्हपत्याहवनीययोर्मध्ये शकट वा रथो वाऽश्वो वा यदा गच्छेत्, तदानीमेतच्छकटादिव मनसि न कुर्यात्। 'अस्य' अनुष्ठातु 'आत्मनि' स्वकीय पारमार्थिकस्वरूपे वेदान्तप्रतिपाद्ये वस्तुनि 'हि ता भवति' तानि शकटादीन्यवतिष्ठन्ते। अत शकटादिरूपबुद्धि परित्यज्य परमात्मबुद्धि कुर्यात्। यद्यात्मविवेकाभावेन तच्छकटादिक मनसि कुर्वीत, शकटादिबुद्धि न परित्यजत्, तदानी गार्हपत्यादारभ्याऽऽहवनीयपर्यंतमविच्छिन्नामुदकधारा हरेत्[1]। तत्र 'तन्तु तन्वन्निति' मन्त्र[2]॥

अब ब्रह्मवादियों का (इकतालिसवाँ) प्रश्न है कि जिस अग्निहोत्री के गार्हपत्य और आहवनीय अग्नियों के मध्य से गाड़ी, रथ या घोड़ा[3] निकल जाय तो वहाँ क्या प्रायश्चित्त है? उत्तर—कुछ याज्ञिकों का मत है कि इसका मन में विचार नहीं करना चाहिए, क्योंकि इस [अनुष्ठाता] के स्वय [पारमार्थिक स्वरूप] में अर्थात् वेदान्त प्रतिपादित वस्तुओं में ये [शकट आदि] रहते हैं। [अत शकट रूप बुद्धि का त्याग करके परमात्म बुद्धि से कार्य करे] और यदि मन में विचार करे तो गार्हपत्य से आरम्भ करके आहवनीय पर्यन्त अविच्छिन्न रूप से लगातार जल की धारा 'तन्तु तन्वन्' (हे अग्नि! तुम यज्ञ का विस्तार करते हुए लोक भासक सूर्य का अनुगमन करो) आदि मन्त्र बोलते हुए गिरावे। वहाँ यही प्रायश्चित्त है।

अथ द्विचत्वारिंशे पर्याये कंचिद्विचारमुद्भावयति—

तदाहुः कथमग्नीनन्वादधानोऽन्वाहार्यपचनमाहारयेद्, नाऽऽहारयेद्? इति॥ इति।

अन्वाहार्यनामक ओदन पच्यते यस्मिन् दक्षिणाग्नौ, सोऽयम् 'अन्वाहार्यपचन'। तस्य 'आहरणम्' अभिज्वलनम्। इष्टेरादावन्वाधानकाले दक्षिणाग्नेरभिज्वलन कुर्यान्न वेति विचारार्थं प्लुतिद्वयम्॥

अब ब्रह्मवादी (बयालिसवाँ) प्रश्न करते हैं कि [इष्टि के आदि में] अन्वाधान के समय [अन्वाहार्य नामक भात जिस दक्षिणाग्नि में पकता है उस] 'अन्वाहार्यपचन' रूप दक्षिणाग्नि को प्रज्वलित करे अथवा प्रज्वलित न करे?

---

१ आश्व० श्रौ० ३ १० १५। शाङ्खा० श्रौ० २ ६ १३।   २ ऋ० १० ५३ ६।

३ (i) कुर्यान्मनसि नैवैनद् गमन श्वादिभि कृतम्। इति षड्गुरुशिष्य।

(ii) a dog' इतिकाय महाशय। इ० टि० २ Asva in Aufrecht's edition is improbable though śva occurs in M. S, S as the verb is singular and śvā seems clearly right, aśvah is also used by Hung, Sayana does not interpret, naturally enough cf Ā S iii 10 10 15 where śvā is mentioned So San 11 6 13 śvāpade gate, ĀSS ix 10.15, ŚB xii 4-1 4 ii 1 51 4

तत्र निर्णयं दर्शयति—

**आहारयेदित्याहुः, प्राणान् वा एषोऽस्यात्मन् धत्ते, योऽग्नीनाधत्ते तेषामेषोऽन्नादतमो भवति, यदन्वाहार्यपचनस्तस्मिन्नेतामाहुतिं जुहोत्यग्नयेऽन्नादायान्नपतये स्वाहेति ॥** इति ।

'आहारयेत्' प्रज्वलयेदित्येवमभिज्ञा आहुः । तत्रेयमुपपत्तिः—'यः' पुमानग्नीनाधत्ते, 'एषः' एव पुमान् 'अस्यात्मन्'[1] स्वात्मस्वरूपे प्राणानेव धारयति । 'यः' अयमन्वाहार्यपचनोऽस्ति, एषः 'तेषाम्' आहितानां चाग्नीनां मध्येऽतिशयेनान्नादः । तस्मात् प्राणधारिणामन्नभक्षणसिद्धये सोऽयं प्रज्वलनीयः । प्रज्वलिते 'तस्मिन्' दक्षिणाग्नौ 'अग्नयेऽन्नादाय' इत्यादिमन्त्रेणैतामाहुतिं जुहुयात्[2] ॥

कुछ याज्ञिकों का मत है कि अवश्य ही प्रज्वलित करे, क्योंकि जो पुरुष अग्नियों का आधान करता है वही पुरुष स्वयं अपने आत्मस्वरूप में प्राणों को ही रखता है। और जो अन्वाहार्यपचन है वह उन [आहिताग्नियों] के मध्य अत्यन्त अन्न को देनेवाला है [अतः प्राणधारियों के अन्न भक्षण हेतु उसे प्रज्वलित करना चाहिए]। उस [प्रज्वलित अन्वाहार्यपचन रूप दक्षिणाग्नि] में 'अग्नये अन्नादाय अन्नपतये स्वाहा' (अन्न को भक्षण करने वाले और अन्न के स्वामी अग्नि के लिए स्वाहा) आदि मन्त्र से आहुति देना चाहिए।

वेदनं प्रशंसति

**अन्नादो हान्नपतिर्भवत्यश्नुते प्रजयाऽन्नाद्यं य एवं वेद ॥** इति ।

वेदिता स्वयम् 'अन्नादः' रोगराहित्येन भोक्तुं समर्थः, 'अन्नपतिः' अन्नस्वामी च भवति । तथा 'प्रजया' हि पुत्रादिरूपया सहान्नाद्यं प्राप्नोति ॥

जो इस प्रकार (रहस्य को) जानता है वह स्वयं [रोग मुक्त होकर] भोजन के भक्षण में समर्थ होता है और अन्न का स्वामी होता है तथा उस भक्षण में समर्थ अन्न के साथ [पुत्र पौत्रादि रूप] प्रजा को प्राप्त करता है।

पूर्वं गार्हपत्याहवनीययोर्मध्ये श्वकटादिगमनं निषिद्धम्, तद्वद्यागकर्तुरपि मध्ये संचारनिषेधशङ्कायां तद्व्यावर्तयितुमाह—

**अन्तरेण गार्हपत्याहवनीयौ होष्यन् संचरेतैतेन ह वा एनं संचरमाणमग्नयो विदुरयमस्मासु होष्यतीत्येतेन ह वा अस्य संचरमाणस्य गार्हपत्याहवनीयौ पाप्मानमपहतः सोऽपहतपाप्मोर्ध्वः स्वर्गं लोकमेतीति वै ब्राह्मणमुदाहरन्ति ॥** इति ।

यः पुमान् होष्यति स पुमान् 'गार्हपत्याहवनीयावन्तरेण' तन्मध्यगतेन मार्गेण संचरेत । 'एतेन' मार्गेण संचरमाणम् 'एनं' होमकर्तारमग्नयः स्वमन्तरीयं विदुः । 'अयमस्मासु

---

१. 'अस्यात्म' इति मूले, 'अस्या(स्या)त्मं' इति भाष्ये आनन्दाश्रमसंस्करणे मुद्रितपाठः ।

२. ब्राह्मणोक्त एष एव मन्त्रः ।

होष्यति'–इति । तस्मादग्नीनामभीष्टत्वात् तस्य सचारो युक्त । किंच होमार्थं संचरमाणस्य पाप्मानममुमायग्नी विनाशयत. । स च पापरहित ऊर्ध्वंगामी स्वर्गं लोक प्राप्नोति । अस्मिन्नर्थे शाखान्तरगतं बहुविध ब्राह्मणमभिज्ञा उदाहरन्ति ॥

जो पुरुष हवन करने चले वह गार्हपत्य और आहवनीय के बीच के मार्ग से सचरण करे । इस प्रकार उस [होमकर्ता] को चलते हुए देखकर अग्नियाँ अपने मन में यह सोचती हैं कि 'यह हमारे में होम करेगा ।' इस प्रकार होम के लिए सचरण करने वाले इस [पुरुष] के पापों को दोनों गार्हपत्य और आहवनीय अग्नियाँ दूर कर देती हैं, और वह पापरहित ऊर्ध्वगामी स्वर्ग लोक को प्राप्त करता है इस प्रकार के अर्थ में ही अन्य शाखा के ब्राह्मण को अभिज्ञजन उदाहरित करते हैं ।

अथ त्रिचत्वारिंशे प्रश्नोत्तरे दर्शयति—

**तदाहुः कथमग्नीन् प्रवत्स्यन्नुपतिष्ठेत, प्रोष्य वा, प्रत्येत्याहरहर्वेति ? तूष्णीमित्याहु; तूष्णीं वै श्रेयस आकाङ्क्षन्ते, अथाप्याहुरहरहर्वा एते यजमानस्याश्रद्धयोद्वासनात् प्रप्लावनाद् बिभ्यति, तानुपतिष्ठेतैवाभय वोऽभय मेऽस्त्वित्यभय हैवास्मै भवत्यभय हैवास्मै भवति ॥ १२ ॥** इति ।

यदाऽग्निहोत्री स्वगृह एवाग्नीनवस्थाप्य स्वय ग्रामान्तर प्रति प्रवसति, तदानी 'प्रवत्स्यन्' अग्निहोत्री प्रवासवाले कथमग्नीनुपतिष्ठेत ? अथवा 'प्रोष्य' ग्रामान्तरे गत्वा 'प्रत्येत्य' पुनरागत्य कथमुपतिष्ठेत ? अथवा स्वगृहे विद्यमानोऽपि 'अहरह' प्रतिदिन कथमुपतिष्ठेत ? इत्येतस्य प्रश्नत्रयस्य तूष्णीमित्यादिकमुत्तरम् । नात्र मन्त्रपाठ कश्चिदस्ति, किंतु तूष्णीमेवाञ्जल्यादिना विनय प्रदर्शयन्नुपतिष्ठेत । लोकेऽपि सेवकास्तूष्णीभूता एव सन्तो विनीता 'श्रेयस' श्रेष्ठान् राजगुर्वादीन् पुरुषान् 'आकाङ्क्षन्ते' आगत्य स्वाभीष्टं प्रार्थयन्ते । तस्मात्तूष्णीमुपस्थानमित्येकः पक्ष ॥

'अथाप्याहु' अपि चाभिज्ञा केचिदेवं पक्षान्तर वदन्ति—'अहरहर्वै' प्रतिदिनमेव 'एते' अग्नयो 'बिभ्यति' । भयकारण, यजमानस्येत्यादिनाच्यते । होमे निष्पन्ने सति पश्चादुपयोगाभावाद् यजमानस्याग्निष्वश्रद्धा भवति, अतोऽयमग्नीनुद्वासयेदित्येको भयहेतु[1] । 'प्रप्लावयेत्' लौकिकपाकार्थं नीत्वा प्रप्लावन[2] वा कुर्यादिति द्वितीया भयहेतु । अतो

---

१ प्रगाणणादिवधान्तेषु निशद्वचनामगु पठितगमर्सिहेन उद्वासनमिति (२ ८ ११२–११५) । वस्तुत उद्वासन निर्वासनमित्यनर्थान्तरम् । 'प्रोषितश्चेन् प्रेयात् प्राचीनावीती निवान्या दुग्ध्वा दक्षिणतोऽधिश्रयणोद्वासने'–इति कात्या० श्रौ० २५ ८ ९ । 'उष्णे भस्मन्यधिश्रयणमुद्वासन च गार्हपत्याद् दक्षिणस्या दिशि कुर्यात्'–इति तट्टीकायाम् ।

२ प्रप्लावनशब्दार्थं द्रष्टव्य, इत पूर्वम्, पृ० ९९८ । यस्मिन् कुम्भ महजीप गवति, त प्रप्लावयति समुद्रे'–इति शत० ब्रा० ४. ४ ५. २० ।

भयपरिहाराय सानेतेन मन्त्रेण सर्वत्रोपतिष्ठेत । हे अग्नयः ! मत्तः सकाशाद् 'वः' युष्माकम-भयमस्तु । युष्मत्सकाशान्ममाप्यभयमस्त्विति मन्त्रार्थः । एवमुपस्थानं कुर्वते 'अस्मै' यजमानायाभयमेव भवति । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तम-पञ्चिकाया द्वितीयाध्याये (द्वात्रिंशाध्याये) एकादश खण्डः ॥११॥ (१२) [२३५]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ।

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवा-चार्यादेशतो सायणाचार्येणविरचिते माधवीये 'वेदार्थप्रकाश' नाम भाष्ये ऐतरेय-ब्राह्मणभाष्ये सप्तमपञ्चिकाया द्वितीयोध्याय (द्वात्रिंशोऽध्याय) ॥३२॥

अब ब्रह्मवादियों का (तिरालिंगवर्ती) प्रश्न है कि जब कोई अग्निहोत्री अपने गृह में अग्नियों को स्थापित करके स्वयं दूसरे गाँव को प्रवास में चला जाय तो इस प्रवास में गए हुए अग्निहोत्री का प्रवासकाल में अग्नियों का उपस्थान कैसे होगा ? अथवा, प्रवास में जाकर पुनः आकर कैसे उपस्थान होगा ? अथवा अपने ही गृह में रहकर भी प्रति-दिन कैसे उपस्थान होगा ? [इन तीनों प्रश्नों का] उत्तर—उसे चुपचाप [अञ्जलि आदि से विनय प्रदर्शित करते हुए] उपस्थान करना चाहिए—ऐसा कुछ याज्ञिकों का मत है, क्योंकि [लोक में भी] सेवक चुपचाप ही रहकर [विनीतभाव से राजा गुरु आदि] श्रेष्ठों के पास आकर अपने अभीष्ट की प्रार्थना करते हैं, और कुछ अभिज्ञजन अन्य पक्ष भी बतलाते हैं – 'प्रतिदिन ही वे अग्नियां इसलिए डरती हैं कि [होम होने के बाद उसके उपयोग के अभाव में] यजमान की अश्रद्धा से कहीं वे उद्वासित न कर दी जायँ या लौकिक पाकादि कार्य के लिए न ले ली जायँ'[1]। अतः भय के परिहार के लिए सर्वत्र ही 'अभय वोऽभय' (हे अग्नियों, मुझसे आप भयभीत न होवें और आप से मुझे भी अभय प्राप्त होवे) आदि मन्त्र से उपस्थान करना चाहिए। इस प्रकार [उपस्थान करने वाले] इस [यजमान] को अभय ही होता है।

॥ इस प्रकार सप्तम पञ्चिका के द्वितीय (बत्तीसवें) अध्याय की सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ २ ॥

—.०:—

१. एतेऽग्नय. अश्रद्धा = उपेक्षा । उद्वासन = नाशनम् । प्रप्लवः = पर्युक्षणादि व्याजे-नोपरि जलप्रक्षेप. । पुद्भिश्छान्दसी । बिभ्यति = 'अदभ्यस्तात्' (पा० सू० ७ १.४) इति षड्गुरुशिष्यः ।

# अथ तृतीयोऽध्यायः

## प्रथमः खण्डः

—: ० :—

# [अथ त्रयस्त्रिंशोऽध्यायः

## प्रथमः खण्डः]

आहिताग्नेर्मृतावग्निहोत्राङ्गे विकले तथा ।
प्रायश्चित्तमपत्नीकहोम इत्यादि वर्णितम् ॥ १ ॥
उक्त द्वात्रिंशदध्याये. कर्मवर्णत्रयान्वितम् ।
अथ त्वष्टमिरध्यायैर्वर्ण्यते राजकर्मकम्[1] ॥ २ ॥
तत्र क्रतौ राजसूय बह्विष्टिपशुसोमके ।
मध्यऽभिषेचनीयेऽह्नि शौन शेप श्रुत श्रुतौ ॥ ३ ॥
त्रयस्त्रिंशोऽयमध्याय शौन शेपेति नामवान् ।
हरिश्चन्द्रकथा तत्र वर्णिता बहुपुत्रदा ॥ ४ ॥

तदेतदुपाख्यान दर्शयति—

**हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस, तस्य ह शत जाया बभूवु-स्तासु पुत्र न लेभे, तस्य ह पर्वतनारदौ गृह ऊषतुः, स ह नारद पप्रच्छ ॥ इति ।**

हरिश्चन्द्रो नाम राजर्षि, 'प्रस्कण्वहरिश्चन्द्रावृषी' इति पाणिनिना[2] सूत्रितत्वात् । स च वेधसो नृपते पुत्र, इक्ष्वाकुवंशोद्भवो राजा 'अपुत्र' पुत्रहीन 'आस'। स च शतसख्याना जायाना मध्य कस्याचिदपि जायाया पुत्र न लेभे। तस्य राज्ञो गृहे पर्वत-नारदनामानौ यावृषी, तौ निवास चक्रतु । तयोर्मध्ये नारदमृषिमेतया गाथया राजा पप्रच्छ ॥

VII.१३ [XXXIII.१] इक्ष्वाकुवंशी वेधस राजा के पुत्र राजर्षि हरिश्चन्द्र नि सतान थे। उनकी सौ पत्नियाँ थीं। किन्तु उनमें से किसी को भी पुत्र न हुआ। उन राजा के

---

१. 'राजकर्मकम्' इति साम० सपा० ऐब्रा० सस्करण मुद्रितपाठ ।

२. द्र० पा० सू० ६ १.१५३ ।

घर पर पर्वत और नारद नामक दो ऋषियों ने निवास किया। [उन दोनों में से] नारद से [निम्न गाथा के द्वारा] उन राजा ने इस प्रकार पूछा—

तां गाथां दर्शयति—

यं न्विमं पुत्रमिच्छन्ति, ये विजानन्ति, ये च न।
किंस्विद् पुत्रेण विन्दते, तन्म आचक्ष्व नारदेति॥ इति।

'ये' देवमनुष्यादयो 'विजानन्ति' विवेकज्ञानयुक्ताः। 'ये' च पश्वादयो 'न विजानन्ति' विवेकज्ञानरहिताः। ते सर्वेऽपि 'नु' क्षिप्रं 'यमिमं' पुत्रमिच्छन्ति, तेन पुत्रेण 'किंस्विद्विन्दते' किंनाम फलं पिता लभते? हे नारद! 'मे' मह्यं 'तत्' फलमाचक्ष्व 'इति' राज्ञः प्रश्नः॥

जो [देव एवं मनुष्य आदि] विवेकज्ञान से युक्त हैं, या जो [पशु आदि विवेकज्ञान से] रहित हैं वे सभी पुत्र की इच्छा करते हैं तो 'उस पुत्र से पिता कौन सा लाभ प्राप्त करता है'? हे नारद मुझसे उस [फल] को आप बताएँ।

तस्योत्तरमवतारयति—

स एकया पृष्टो दशभिः प्रत्युवाच॥ इति।

'सः' नारदः 'एकया' गाथया पृष्टः सन् 'दशभिः' गाथाभिः प्रत्युत्तरमुक्तवान्॥

उन [नारद] ने एक गाथा द्वारा पूछे गए प्रश्न का दस गाथाओं द्वारा उत्तर दिया।

तत्र प्रथमां गाथामाह—

ऋणमस्मिन् संनयत्यमृतत्वं च गच्छति।
पिता पुत्रस्य जातस्य, पश्येच्चेज्जीवतो मुखम्॥ इति।

उत्पन्नस्य सुखेन जीवतः पुत्रस्य मुखं पिता यदि पश्येत्, तदानीम् 'अस्मिन्' पुत्रे स्वकीयमृणं लौकिकं वैदिकं च 'संनयति' सम्यगवस्थापयति। लौकिकस्यावस्थापनात् पुत्रपौत्रादिभिऋणं प्रत्यर्पणीयमिति स्मृतिकारा आहुः। वैदिकं तु 'त्रिभिर्ऋणैर्ऋणवा जायते' इत्यादिश्रुत्युक्तं पूर्वमेवोदाहृतम्[1]। तस्य च पुत्रावस्थापनं संप्रत्तिनामकेन कर्मणा सम्पद्यते। तच्च कर्म वाजसनेयिभिराम्नातम्—'अथातः संप्रत्तिः यदा प्रैष्यन् मन्यते, अथ पुत्रमाह, त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति। स पुत्रः प्रत्याह—अहं ब्रह्म अहं यज्ञोऽहं लोकः[2] इति।

१. द्र० इत. पूर्वम्, ११२६ पृ०।
२. शत० ब्रा० १४.४.३.२५। 'अथ त्रयो वाव लोकाः। मनुष्यलोकः, पितृलोको देवलोक इति। सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो, नान्येन कर्मणा, कर्मणा पितृलोको, विद्यया देवलोको, देवलोको वै लोकानां श्रेष्ठस्तस्माद् विद्यां प्रशंसन्ति' इति च तत्पुरस्तात् सन्नेव।

'ब्रह्म' मया कर्तव्य वेदाध्ययन, मयाऽनुष्ठेया यज्ञाश्च मया सपाद्या उत्तमा लोकाश्चेत्येतत्सर्वं पुत्रेण त्वयैव सपादनीयमिति पितृवाक्यस्यार्थ । सर्वमह सपादयिष्यामीति पुत्रवाक्यस्यार्थ । *अत्रापि आरण्यककाण्डे सक्षिप्य सदर्शयिष्यते—'सोऽस्यायमात्मा पुण्येभ्य कर्मभ्य प्रतिधीयते' इति*[1] । एवमृण पुत्रे समर्पयति । तथैव 'अमृतत्व' मरणरहित मुक्तिपद च गच्छति । पुत्रार्पितलौकिकवैदिकभारस्याविघ्नेन तत्त्वज्ञानसपादनात् ॥

यदि पिता जीते हुए सुखपूर्वक उत्पन्न पुत्र का मुख देख ले तो वह अपने [लौकिक एव वैदिक] ऋण को इस [पुत्र] में सम्यक् रूप से स्थापित कर देता है [अर्थात् स्वकीय ऋण से मुक्त हो जाता है] और इस प्रकार वह [पुत्र को लौकिक एव वैदिक भार अर्पित कर] अमृतत्व को प्राप्त करता है।

द्वितीया गाथामाह—

यावन्तः पृथिव्या भोगा, यावन्तो जातवेदसि ।

यावन्तो अप्सु प्राणिना, भूयान्पुत्रे पितुस्तत ॥ इति ।

पृथिव्या भोगा ' सस्यनिवासादय । 'जातवेदसि' अग्नो भोगा दहनपचनादय । 'अप्सु' भोगा स्नानपानादय । प्राणिनामेते सर्वे भोगा यावन्त सन्ति । ततस्तावद्भ्यः सर्वेभ्यो भोगेभ्यो भूयान्' अभ्यधिक पितु पुत्रे भोगो विद्यते, अस्य तत्सुखहेतुत्वात् ॥ तथा च आहु—

'पुत्रोत्पत्तिविपत्तिभ्या नापर सुखदु खयो ' इति ।

पृथिवी में प्राणियों के लिए जितने भी भोग हैं और जितने भी [भोग] जातवेद [अग्नि] में हैं तथा जितने भी [स्नान पान आदि] भोग जल में है उन [सभी भोगों] से भी *अधिक पिता के लिए पुत्र में भोग होते हैं।*

तृतीया गाथामाह—

शश्वत् पुत्रेण पितरोऽत्यायन् बहुल तम ।
आत्मा हि जज्ञ आत्मन• स इरावत्यतितारिणी ॥ इति।

'पितर ' जनका , उत्पन्नेन पुत्रेण 'शश्वत्' सर्वदा लोकद्वयेऽपि 'बहुलम्' अभ्यधिक 'तम ' ऐहिकामुष्मिक च दु खम् 'अत्यायन्' अतिक्रामन्ति । तथा च बौधायन आह—

'पुदिति नरकस्याऽऽख्या, दु ख च नरक विदु ।
पुतस्त्राणात्तत पुत्रमिहेच्छन्ति परत्र च' ॥ इति[2]

---

१. ऐ० आ० २ ५ ४ १० ।

२ एष श्लोको हरिवशेऽप्युद्धृत । मनु० ९ १३८ । महा० भा० १४ २७५२ । वा० रामा० २.१०७.१२ । मार्क० पु० ७५ १६ ।

किंच 'हि' यस्मात्कारणात् पितुः पुत्र उत्पन्न इत्युक्ते सति पिता स्वस्मात् स्वयमेव 'जज्ञे' उत्पन्न इत्युक्तं भवति । तत्र पिता यथा 'स्वयं' स्वकीयं दुःखं विनाशयति, तथा पुत्रोऽप्येतद्दुःखं विनाशयतीति द्रष्टव्यम् । तस्मात् 'सः' पुत्रः 'इरावती' अन्नयुक्ता 'अतितारिणी' नदीसमुद्रादेरतितरणहेतुर्नौरिति शेषः । यथा नौर्दुर्घटं नद्यादिकं तारयति एवं पुत्रोऽप्यैहिकमामुष्मिकं च दुःखं तारयतीत्यर्थः ॥

सर्वथा माता पिता पुत्र के द्वारा [दोनों ही लोकों में] अत्यन्त [ऐहिक और आमुष्मिक तमरूप] दुःख [=नरक] को पार करते हैं, क्योंकि पिता स्वयमेव अपने से ही अपने को [पुत्र रूप में] उत्पन्न करता है। इसलिए वह [पुत्र] [नदी एवं समुद्र को] ठीक से पार करने के लिए अन्नयुक्त नौका के समान है [अर्थात् समुद्र को पार करने के लिए जैसे कई दिन के लिए अन्न आदि सभी सामग्रियों को इकट्ठा करके तब सतरण करते हैं उसी प्रकार ठीक से जगत्‌रूप दुःख के सागर से सतरण के लिए पुत्र नौका ही है और वह नौका भी अन्न से युक्त है]।

चतुर्थीं गाथामाह—

किं नु मलं, किमजिनं, किमु श्मश्रूणि, किं तपः ।
पुत्रं ब्रह्माण इच्छध्वं, स वै लोकोऽवदावदः ॥ इति ।

अत्र मलाजिनश्मश्रुतपःशब्दैराश्रमचतुष्टयं विवक्षितम् । मलरूपाभ्यां शुक्रशोणिताभ्यां संयोगात् 'मल'शब्देन गार्हस्थ्यं विवक्षितम् । कृष्णाजिनसंयोगादजिनशब्देन ब्रह्मचर्यं विवक्षितम् । क्षौरकर्मराहित्याच्छ्मश्रुशब्देन वानप्रस्थ्यं विवक्षितम् । इन्द्रियनियमसद्भावात् तपःशब्देन पारिव्राज्यं विवक्षितम् । 'मलं' गार्हस्थ्यं 'किं नु' किं नाम सुखं करिष्यति ? न किंचिदित्यर्थः । एवमुत्तरत्रापि योज्यम् । हे 'ब्रह्माणः' विप्राः, विप्रक्षत्रियाद्याः सर्वे यूयं सुखहेतुत्वात् पुत्रमिच्छध्वम् । 'स वै' स एव पुत्रः 'अवदावदो लोकः' वदितुमयोग्यानि निन्दावाक्यान्यवदाः तैर्वाक्यैर्नोद्यते न कथ्यत इत्यवदावदः । एवं प्रघट्टेन तेन कथ्यत इति—'अवदावदः' दोषराहित्यान्निन्दानर्ह इत्यर्थः । तादृशो 'लोकः' भोगहेतुः पुत्रः । तस्मादाश्रमेभ्योऽप्यधिकत्वेन पुत्रेच्छा कर्तव्या । यद्यपि हरिश्चन्द्र एवात्र प्रष्टा, तथापि तेन सह ऋषीणां बहूनां सभायामवस्थानात् ब्रह्माण इति सम्बोधनम् ॥

[शुक्र एवं शोणित का संयोग रूप] मल अर्थात् गृहस्थाश्रम क्या सुख देगा ? [कृष्ण] मृगचर्म अर्थात् ब्रह्मचर्याश्रम क्या सुख देगा ? [क्षौरकर्मरहित] दाढ़ी-मूँछ अर्थात् वानप्रस्थाश्रम से क्या लाभ है ? [इन्द्रियों के नियमन रूप] तप अर्थात् सन्यासाश्रम से क्या लाभ ? अर्थात् कुछ भी लाभ नहीं है। अतः हे ब्राह्मण, क्षत्रिय, आदि आप सभी लोग [सुख के हेतुभूत] पुत्र की इच्छा करें, क्योंकि वह पुत्र दोषरहित होने से अनिन्दनीय लोक है अर्थात् भोग का हेतु है। [यहाँ मात्र हरिश्चन्द्र ही यद्यपि पूछने वाले

हैं, तथापि ऋषियों की सभा में अवस्थित होने से 'ब्राह्मणो' यह सम्बोधन किया गया है ]।

पश्चमी गाथामाह—

अन्न ह प्राण , शरण ह वासो, रूपं हिरण्य, पशवो विवाहा ।
सखा ह जाया, कृपण ह दुहिता, ज्योतिर्हं पुत्र परमे व्योमन् ॥ इति ।

अन्नादयो लोके सुखहेतुत्वेन प्रसिद्धा । तथा हि शरीरे प्राणावस्थितिहेतुत्वादन्नमेव प्राण । वास शीतोपद्रवाद् रक्षकत्वेन 'शरण' गृहसमानम् । 'हिरण्य' कर्णाभरणादिक दृष्टिप्रियत्वाद् रूपसपादकम् । पशव:' गवाश्वादयो विवाहविशेषेण निर्वाहका. । जाया भोगे सहकारित्वात् सखा ह' सखिस्वरूपैव । एवमेते सुखहेतुत्वेन प्रसिद्धा अपि तात्कालिकमल्पमेव सुख प्रयच्छन्ति । 'दुहिता ह पुत्री इति 'कृपण' 'केवलदु खकारित्वाद् दैन्यहेतु । तथा च स्मयते—

"सभवे स्वजनदु खकारिका सप्रदानसमयेऽर्थहारिका ।
यौवनेऽपि बहुदोपकारिका दारिका हृदयदारिका पितु ॥" इति ।

'पुत्रो ह' पुत्रस्तु ज्योति स्वरूप तमोनिवारकत्वेन प्रकाशरूपत्वेन स हि पितर 'परमे व्योमन्' उत्कृष्टे आकाशे परमब्रह्मस्वरूपेऽवस्थापयति । 'आकाशस्तल्लिङ्गात्' इत्यनेन व्याससूत्रेण[1] आकाशव्योमादिशब्दाना ब्रह्मपरत्व निर्णीतम्[2] । पुत्रस्य च ब्रह्मज्ञानहेतुत्व पूर्वमेवामृतत्व च गच्छतीत्यत्र प्रतिपादितम्[3] ॥

[शरीर में प्राणों की रक्षा का हेतुभूत होने से] अन्न ही प्राण है। [शीत आदि उपद्रवों से रक्षा करने के कारण] वस्त्र [गृह के समान] शरण है और सुवर्ण [के आभरण देखने में सुन्दर लगने के कारण] रूप है, [गौ एव अश्व आदि] पशु विवाह विशेष [के द्वारा निर्वाहक] हैं। पत्नी [भोग में सहायक होने से] सखा स्वरूप है। [इस प्रकार यद्यपि य वस्तुएँ सुख की हेतुभूत हैं फिर भी अल्प कालिक ही सुख देती हैं]। पुत्री [केवल दु खदायक होने से] दैन्य ही है। किन्तु पुत्र तो [अन्धकार का निवारक होने से]ज्योति स्वरूप ही है। अत वह [प्रकाश रूप से पिता को परब्रह्म स्वरूप से] उत्कृष्ट आकाश में [अवस्थापित करता] है।

---

१ ब्रह्म० सू० १.१ २२ ।

२ आकाश इति होवाचेत्यत्र ख ब्रह्म नान्न खम् ।
शब्दस्य तत्र रूढत्वात् वाय्वादे सर्जनादपि ॥
साकाशजगदुत्पत्तिहेतुत्वाच्छ्रौतरूढित ।
एवकारादिना चात्र ब्रह्मैवाकाशशब्दितम् ॥—इति तत्राष्टमाधिकरणम् ।

३ द्र० इत पूर्वम्, १०४० पृ० ।

षष्ठी गाथामाह—

पतिर्जायां प्रविशति, गर्भो भूत्वा स मातरम् ।
तस्यां पुनर्नवो भूत्वा, दशमे मासि जायते ॥ इति ।

पत्युराकारद्वयमस्ति,—वर्तमानपुरुषाकार एक, रेतोरूपेण गर्भाकारो द्वितीयः। जायाया अप्याकारद्वयमस्ति,—पतिरूपमाकारं प्रति जाया भवति । गर्भरूपमाकारं प्रति माता भवति । अतः 'सः' तादृशः पतिः स्वयं रेतोरूपेण गर्भो भूत्वा, पूर्वमवस्थिता जाया भविष्यदाकारेण मातरं सती प्रविशति । 'तस्यां' मातरि 'पुनर्नवो भूत्वा' पूर्वमन्यस्यां मातर्युत्पन्नो जरठः। इदानीं पुनर्नूतनबालो भूत्वा 'तस्याम्' इदानीतन्यामस्यां मातरि गर्भपाके सति दशमे मास्युत्पद्यते । तस्मात् पुत्र स्वस्माद् अन्यो न भवति ॥

पति ही [रेत रूप से] पत्नी में प्रवेश करता है और वह [पति स्वयं ही रेत द्वारा] गर्भ रूप में होकर और जाया अर्थात् माता जन्म देनेवाली हो आकार-प्रकार रूप से होकर प्रविष्ट होती है। उस माता में पुनः नवीन [बालक] होकर [पूर्ण गर्भ काल में] दसवें मास में [वह स्वयं ही] उत्पन्न होता है। [अतः पुत्र अपने से अन्य नहीं होता]।

सप्तमी गाथामाह—

तज्जाया जाया भवति, यदस्यां जायते पुनः ।
आभूतिरेषा भूतिर्बीजमेतन्निधीयते ॥ इति ।

'यद्' यस्मात्कारणाद् 'अस्या' गर्भधारिण्याम् 'अय' पिता पुत्ररूपेण पुनर्जायते, 'तत्' तस्मात्कारणात् लोकप्रसिद्धा या जायाऽस्ति, सा जायतेऽस्यामिति व्युत्पत्त्या जायाशब्दवाच्या भवति । किं चैषा भूत्याभूतिशब्दाभ्यामभिधीयते । भवत्यस्यां पुत्ररूपेण पतिरित्येषा 'भूति'शब्दवाच्या, रेतोरूपेणाऽऽगत्यास्यां पुत्ररूपेण भवति 'आभूति'शब्दवाच्या। 'एतत्' एतस्यां स्त्रियां 'बीजं' रेतोरूपं 'निधीयते' प्रक्षिप्यते । तस्मादुक्तः शब्दा उपपद्यन्ते ॥

क्योंकि इस [गर्भ धारण करने वाली जाया] में यह [पिता पुत्र रूप से] पुनः उत्पन्न होता है इसलिए यह [पत्नी] जाया [अर्थात् पति इसमें उत्पन्न होने से] जाया [शब्द की वाचक] होती है। 'भूति' अर्थात् पति ही इसमें पुत्र रूप से होने के कारण रेत रूप से आकर 'आभूति' अर्थात् इसमें पुत्र रूप में उत्पन्न होने से इन [स्त्रियों] में बीज का प्रक्षेप किया जाता है। [इसलिए उक्त शब्दों का उपपादन है]।

अष्टमी गाथामाह—

देवाश्चैतामृषयश्च, तेजः समभरन् महत् ।
देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः ॥ इति ।

'एताम्' एतस्यां योषिति देवाश्च महर्षयश्च स्वकीयं महत्तेज' रेतोरूपं सारं 'समभरन्' पुत्रोत्पादनाय सपादितवन्तः । स्वयमेव सपाद्य तदा मनुष्यानित्यब्रुवन्—हे मनुष्याः! येयमिदानी जायारूपेण वर्तते, सेयं पुनः 'व' युष्माकं पुत्ररूपे जन्मनि जननी भवति ॥

इस [स्त्री] में देवों और ऋषियों ने अपना महान् रेत रूप सार पुत्रोत्पादन के लिए ही सपादित किया है, और फिर मनुष्यों से कहा—हे मनुष्यों! जो यह जाया रूप से है वही पुन. पुत्र को जन्म देन से आप लोगों की 'जननी' होती है।

नवमी गाथामाह—

नापुत्रस्य लोकोऽस्तीति, तत्सर्वं पशवो विदु.।
तस्मात्तु पुत्रो मातरं, स्वसारं चाधिरोहति ॥ इति ।

'लोक' लोकजन्य सुखम्, अपुत्रस्य नास्ति । न हि पुत्रदर्शनेन यत्सुखं तदन्यदर्शनेन क्वचिदपि दृश्यते । 'इति' यदस्ति तत् 'सर्वं' गोमहिष्यादयो जानन्ति यस्माद्, तस्मादेव कारणात्पशुजातो जातः 'पुत्र' वत्स. स्वकीयां मातरं भगिनीं वा पुत्रोत्पादनार्थमधिरोहति ॥

जिसके पुत्र नहीं है उसके इहलोक [जन्य कोई सुख] नहीं है [क्योंकि पुत्र दर्शन में जो सुख है वह और कहीं भी नहीं है]। अत इसे सभी [गो, महिष आदि] पशु भी जानते हैं। इसी कारण से पशुओं में उत्पन्न पुत्र अपनी ही माता में अथवा अपनी ही बहन में पुत्रोत्पादन के लिए वीर्य का आधान करता है।

दशमी गाथामाह—

एष पन्था उरुगायः सुशेवो, यं पुत्रिण आक्रमन्ते विशोकाः ।
तं पश्यन्ति पशवो वयासि च, तस्मात्ते मात्राऽपि मिथुनीभवन्ति ॥ इति ।

'पुत्रिण' पुत्रवन्तो देवमनुष्यादयो 'विशोका' शोकरहिताः सन्तो 'य' पन्थानं सुखानुभवरूपं मार्गम् 'आक्रमन्ते' प्राप्नुवन्ति, 'एष पन्थाः' पुत्रसुखानुभवरूपो मार्गः 'उरुगायः' उरुभिर्महद्भिः शास्त्रज्ञै राजामात्यादिभिश्च गीयते । तथा 'सुशेव' सुष्ठु सेवितु योग्य, सुखाधिक्यस्य विद्यमानत्वात् । 'तं' पुत्रसुखानुभवरूपं 'पशव' गवादयो 'वयांसि' पक्षिणः 'पश्यन्ति' जानन्ति । तस्मात् 'ते' पशुपक्ष्यादयः पुत्रसुखार्थं 'मात्रा' सह मिथुनीभवन्ति, किं किमुतान्यया स्त्रिया सहेत्यर्थः ॥

*पुत्रवान् [देव मनुष्य आदि] शोकरहित होकर जिस सुख के अनुभव रूप मार्ग को* प्राप्त करते हैं उस [पुत्र जन्य सुख के अनुभव रूप] मार्ग का महान् व्यक्तियों [राजा, मन्त्री एवं शास्त्रज्ञों] के द्वारा गान किया जाता है, और [सुख की अधिकता होने से] अच्छी प्रकार से सेवा करने के योग्य उस [पुत्र जन्य सुख के अनुभव] को [गाय बैल आदि]

पशु और पक्षी जानते हैं। इसलिए वे [पशु पक्षी आदि पुत्र सुख के लिए ही] जब माता के साथ भी मैथुन करते हैं [तो स्त्री के साथ किया गया मैथुन उससे भिन्न कुछ नहीं है]।

नारदेनोक्ता दशगाथा निगमयति—

**इति हास्मा आख्याय ॥ १३ ॥ इति।**

'इति ह' अनेनैव प्रकारेण 'अस्मै' तस्मै हरिश्चन्द्राय 'आख्याय' उत्तरमभिधाय, अवस्थित इति शेष ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया तृतीयाध्याये (त्रयस्त्रिंशाध्याये) प्रथम खण्ड ॥ १ ॥ (१३) [२३६]

इस प्रकार से इन [हरिश्चन्द्र] के लिए प्रत्युत्तर कहकर [महर्षि नारद चुप हो गए]।

॥ इस प्रकार तैंतीसवें (तृतीय) अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

पुत्रनिमित्तलाभप्रतिपादिका नारदोक्ता दश गाथा उदाहृत्य पुत्रजन्मोपायावदसरं नारदवाक्यमवतारयति—

**अथैनमुवाच,—वरुण राजानमुपधाव, पुत्रो मे जायतां तेन त्वा यजा इति ॥ इति।**

'अथ' पुत्रेच्छानिमित्तवचनानन्तरम् 'एनं' पुत्रार्थिनं हरिश्चन्द्रं नारद उवाच—हे हरिश्चन्द्र, वरुणं राजानम् 'उपधाव' प्रार्थयस्व। अनेन प्रकारेण प्रार्थनीयः, सोऽभिधीयते। हे वरुण त्वत्प्रसादात् मे पुत्रो जायताम्, ततस्तेन पुत्रेण 'त्वा यजै' त्वामुद्दिश्य यज्ञं करवाणीति ॥

१॥ १४ [xxxiii.२] इस [पुत्रेच्छा रूप कारण के कथन] के बाद इन [पुत्रार्थी राजा हरिश्चन्द्र] से नारद ने इस प्रकार कहा—'हे हरिश्चन्द्र, राजा वरुण से प्रार्थना करो कि मुझे पुत्र उत्पन्न होए, मैं उससे तुम्हारा यजन करूँगा।'

प्रार्थनाप्रकारं नारदोपदेशमुक्त्वा हरिश्चन्द्रवृत्तान्तं दर्शयति—

**तथेति, स वरुणं राजानमुपससार, पुत्रो मे जायतां तेन त्वा यजा इति, तथेति, तस्य ह पुत्रो जज्ञे रोहितो नाम ॥ इति।**

नारदोपदेशमङ्गीकृत्य हरिश्चन्द्रो वरुणम् 'उपससार' प्रार्थयामास। 'स' वरुणोऽपि तथास्त्विति तदीयपुत्रोत्पत्त्यर्थं वरं दत्तवान्। तेन च वरेणोत्पन्नस्य 'रोहित'—इत्येतन्नामाभूत् ॥

उन्होंने कहा—'अच्छा।' और [नारद के उपदेश से प्रेरित होकर] उन्होंने राजा वरुण से प्रार्थना की कि 'मुझे पुत्र उत्पन्न होए तो उससे मैं आपका यजन करूँगा। [राजा वरुण ने वर देते हुए कहा]—'वैसा ही हो।' [उस वर के प्रभाव से] उन्हें रोहित नाम का पुत्र उत्पन्न हुआ।

अथ बहुभि पर्यायैर्वरुणस्योक्तिर्हरिश्चन्द्रस्य प्रत्युक्तिश्चेत्युभय प्रतिपाद्यते। तत्र प्रथम पर्याय दर्शयति—

**तं होवाचाजनि वै ते पुत्रो यजस्व माऽनेनेति, स होवाच, यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति, निर्दशो न्वस्त्वथ त्वा यजा इति, तथेति ॥** इति।

'त' हरिश्चन्द्र वरुण उवाच—हे हरिश्चन्द्र, ते पुत्र 'अजनि वै' उत्पन्न एव, अनेन पुत्रेण मामुद्दिश्य याग कुर्विति। एव वरुणेनोक्ते हरिश्चन्द्र पुनः प्रत्युवाच। यागार्थः पशुर्यदा निर्दशो भवति, तदा स पशु 'मेध्यः' यागयोग्यो भवति। निर्गतान्यशौचदिनानि दशसख्याकानि यस्मात् पशो सोऽय 'निर्दश'। तस्मादय 'नु' क्षिप्र निर्दशोऽस्तु, 'अथ' अनन्तर त्वा प्रति अह 'यजै' इत्येतद्वाक्यम्। वरुण· 'तथाऽस्तु' इत्यङ्गीचकार ॥

उन [हरिश्चन्द्र] से वरुण ने कहा—'हे हरिश्चन्द्र! तुम्हें पुत्र उत्पन्न हो गया। तुम अब इससे मेरे लिए याग करो।' [इस प्रकार वरुण के कहने पर पुन.] हरिश्चन्द्र ने कहा—'जब याग के लिए पशु दस दिन का [अशौच से निवृत्त] होता है, तब वह पशु याग के योग्य होता है। अत. यह शीघ्र ही दस दिन का हो जाय, तब इससे तुम्हारा यजन करूँ।' वरुण ने कहा—'वैसा ही हो।'

द्वितीयमुक्तिप्रत्युक्तिपर्याय दर्शयति—

**स ह निर्दश आस त होवाच निर्दशो न्वभूद्यजस्व माऽनेनेति, स होवाच, यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति, दन्ता न्वस्य जायन्तामथ त्वा यजा इति, तथेति ॥** इति।

दशदिनाशौचापगमे शुद्धत्वाद् यथा यागयोग्यत्व, तथा दन्तोत्पन्नत्वादवयवसपूर्त्या यागयोग्यत्वमित्यभिप्राय। स्पष्टमन्यत् ॥

जब वह दस दिन का हो गया तब उन [हरिश्चन्द्र] से वरुण ने कहा—'यह दस दिन का हो गया अब इससे मेरा यजन करो।' उन [हरिश्चन्द्र] ने कहा—'जब पशु के दाँत हो जाते हैं तब वह [अवयवों के पूर्ति के कारण] यज्ञ के योग्य होता है। अतः उसके दाँत जब निकल आवें, तब मैं आपका यजन करूँगा।' वरुण ने कहा—'वैसा ही हो।'

तृतीय पर्याय दर्शयति—

**तस्य ह दन्ता जज्ञिरे, त होवाचाज्ञत वा अस्य दन्ता यजस्व माऽनेनेति, स होवाच, यदा वै पशोर्दन्ता पद्यन्तेऽथ स मेध्यो भवति; दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति, तथेति ॥ इति ।**

'अज्ञत वै' जाता एव । 'पद्यन्ते' पतन्ति । प्रथमोत्पन्नाना दन्तानामस्थायित्वेन मुख्यपश्ववयवत्वाभावात् तत्पाते सति पशोर्मेध्यत्वम् ॥

उसके दाँत निकल आए । उन [हरिश्चन्द्र] से वरुण ने कहा—'अब इसके दाँत निकल आए । अत इससे मेरा यजन करो ।' उन [हरिश्चन्द्र] ने कहा 'जब पशु के [प्रथमोत्पन्न] दाँत गिर जाते हैं, तब वह [मुख्य पशु] यज्ञ के योग्य होता है । अत इसके [प्रथमत उत्पन्न दूध के] दाँत अभी गिर जायेंगे, तभी मैं आपका यजन करूँगा ।' वरुण ने कहा—'वैसा ही हो ।'

चतुर्थं पर्याय दर्शयति—

**तस्य ह दन्ता पेदिरे, त होवाचापत्सत वा अस्य दन्ता, यजस्व माऽनेनेति, स होवाच, यदा वै पशोर्दन्ता पुनर्जायन्तेऽथ स मेध्यो भवति, दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति, तथेति ॥ इति ।**

'अपत्सत वै' पतिता । पुनरुत्पन्नाना दन्ताना स्थिरत्वेन सपूर्णावयवत्वात् पशोर्मेध्यत्वम् ॥

उसके दाँत गिर गए । उन [हरिश्चन्द्र] से वरुण ने कहा—'अब इसके दाँत गिर गए हैं । अत. इससे मेरा यजन करो ।' उन [हरिश्चन्द्र] ने कहा—'जब पशु के दाँत पुन निकल आते हैं तब [सम्पूर्ण अवयव होने से] वह यज्ञ के योग्य होता है । अत इसके पुन दाँत निकल आएं, तब मैं इससे आपका यजन करूंगा ।' वरुण ने कहा—'वैसा ही हो ।'

पञ्चम पर्याय दर्शयति

**तस्य ह दन्ता पुनर्जज्ञिरे, त होवाचाज्ञत वा अस्य पुनर्दन्ता, यजस्व माऽनेनेति, स होवाच, यदा वै क्षत्रिय. सान्नाहुको भवत्यथ स मेध्यो भवति, सन्नाह नु प्राप्नोत्वथ त्वा यजा इति, तथेति ॥ इति ।**

'अज्ञत वै' जाता एव । पश्वन्तरस्य पुनर्दन्तोत्पत्तिमात्रेण मेध्यत्वेऽप्यस्य पशो क्षत्रियत्वात् स्वजात्युचितधनुर्बाणकवचादिसन्नाहधारित्वे सति जात्युचितव्यापारसपूर्णत्वम्, तस्मात् 'नु' क्षिप्रमयमसौ सन्नाह प्राप्नोतु, अनन्तरमेव यजा इत्युत्तरं वरुणोऽङ्गीचकार ॥

उसके दाँत भी पुनः निकल आए। उन [हरिश्चन्द्र] से वरुण ने कहा—'अब इसके पुनः दाँत भी निकल आए। अतः अब इससे मेरा यजन करो।' उन [हरिश्चन्द्र] ने कहा—'जब क्षत्रिय [स्व जाति के उचित धनुष, बाण एवं कवच आदि रूप से] शस्त्रधारी हो जाता है तब वह यज्ञ के योग्य हो जाता है। अतः यह शीघ्र ही शस्त्रधारी हो जाय, तब मैं आपका यजन करूँगा।' वरुण ने कहा—'ऐसा ही हो।

षष्ठ पर्याय दर्शयति—

**स ह सन्नाह प्रापत्, तं होवाच, सन्नाह नु प्राप्नोद्यजस्व माऽनेनेति, स तथेत्युक्त्वा पुत्रमामन्त्रयामास, तताय वै मह्य त्वामददाद्धन्त त्वयाऽहमिम यजा इति ॥** इति।

सन्नाहप्राप्तेरूर्ध्वं 'स' हरिश्चन्द्रो वरुणोक्तिमङ्गीकृत्य पुत्रमामन्त्र्यैवमुवाच। उपलालनार्थं पुत्रे पितृवाचि ततशब्दप्रयोग। हे 'तत' हे पुत्र। 'अयम्' एव वरुणो मह्य 'त्वा' पुत्रवरेण दत्तवान् 'हन्त' दुष्टोऽहम् 'इम' वरुण यत् त्वया पुत्रेण यजे' यागरूपा पूजा करवाणीति हरिश्चन्द्रस्योक्ति ॥

अब वह शस्त्रधारी हो गया। उन [हरिश्चन्द्र] से वरुण ने कहा—'अब यह शस्त्रधारी हो गया। अतः इससे मेरा यजन करो।' उन [हरिश्चन्द्र] ने 'ठीक है'—ऐसा कहकर पुत्र को आमन्त्रित किया। हे पुत्र! इन [वरुण] ने तुम्हें मुझे दिया है। अतः पापी मैं तुमसे इन [वरुण] का यजन करूँगा।'

अथ रोहितनाम्न पुत्रस्य कृत्य दर्शयति—

**स ह नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ, स सवत्सरमरण्ये चचार ॥ १४ ॥** इति।

'स ह' स खलु रोहिताख्य पुत्र पितुर्वाक्य निषिध्य, स्वरक्षणार्थं धनु स्वीकृत्यारण्य प्रत्युपगतोऽभूत्। कस्मिश्चिदरण्ये नैरन्तर्येण 'स.' रोहित सवत्सर चचार ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया तृतीयाध्याये (त्रयस्त्रिंशाध्याये) द्वितीय खण्ड ॥२॥ (१४) [२३७]

वह [रोहित नामक पुत्र] अस्वीकार करके धनुष लेकर वन में चला गया। वहाँ किसी अरण्य में वह एक वर्ष तक घूमता रहा।

॥ इस प्रकार तैंतीसवें (तृतीय) अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥ २ ॥

## अथ तृतीयः खण्डः

रोहितस्यारण्ये संवत्सरचरणानन्तरभाविनं हरिश्चन्द्रादीनां वृत्तान्तं दर्शयति—

**अथ हैक्ष्वाकं वरुणो जग्राह, तस्य होदरं जज्ञे तदु ह रोहितः शुश्राव सोऽरण्याद् ग्राममेयाय, तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—**

**नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुम।**
**पापो नृषद्वरो जन, इन्द्र इच्चरतः सखा, चरैवेति॥ इति।**

'अथ' रोहितस्यारण्ये संवत्सरवासानन्तरमेव 'ऐक्ष्वाकम्' इक्ष्वाकुवंशोत्पन्नं हरिश्चन्द्रं 'वरुणः' देवो रोगरूपेण जग्राह। वरुणेन गृहीतस्य हरिश्चन्द्रस्य 'उदरं जज्ञे' जलेन पूरितमुच्छूनं महोदरनामकं रोगस्वरूपमुत्पन्नम्। 'तदु ह' तदपि सर्वमरण्ये स्थितो 'रोहितः' पुत्रो मनुष्यमुखाच्छुश्राव। श्रुत्वा च 'सः' रोहितः पितरं द्रष्टुमरण्याद् ग्रामं प्रत्याजगाम। आगच्छन्तं रोहितं मार्गमध्ये इन्द्रः केनचिद्ब्राह्मणपुरुषरूपेण प्राप्येदमुक्तवान्—आ समन्ताच्छ्रान्तः, आश्रान्तः, सर्वत्र पर्यटनेन श्रान्तिं प्राप्तः, तद्विपरीतोऽनाश्रान्त एकत्रैव निवासशीलः, तादृशाय, तथाविधस्य पुरुषस्य 'श्रीः' बहुविधा संपन्नास्ति। यद्वा, नानेति पदच्छेदः। 'श्रान्ताय' सर्वत्र पर्यटनेन श्रान्तस्य 'नाना श्रीः' बहुविधा संपदस्ति 'इति' अनेन, प्रकारेण रोहित! वयं नीतिकुशलानां पुरुषाणां मुखाच्छुश्रुम। 'वरो जनः' विद्यादिभिः श्रेष्ठोऽपि पुरुषो 'नृषत्सु' नृषु मनुष्येषु सीदतीति नृषत्'। श्रेष्ठोऽपि बन्धुगृहेषु सर्वदाऽवस्थितस्तैरवज्ञातः 'पापः' तुच्छो भवेत्। अतस्तव पितृगृहे वासो न युक्तः। न चारण्ये चरतो मम सहायो नास्तीति शङ्कनीयम्। 'इन्द्र एव' परमेश्वर एव 'चरतः' तव सखा भविष्यति। तस्मात् 'चरैव' सर्वथाऽरण्ये चरस्वेत्येवमुवाच। एवं बहुष्वपि पर्यायेषु द्रष्टव्यम्॥

VII.१५ [XXXIII.३] अब इस [रोहित के अरण्य में जाने] के बाद इक्ष्वाकु वंश में उत्पन्न राजा हरिश्चन्द्र को वरुण देव ने [रोग रूप से] पकड़ लिया। उन्हें जलोदर नामक रोग हो गया। उसे भी [अरण्य में स्थित] रोहित ने [मनुष्यों के मुख से] सुना। [सुनकर] वह [पिता को देखने के लिए] अरण्य से ग्राम में आ गया। उसको [आते हुए देखकर मार्ग में] पुरुष रूप से इन्द्र ने पास आकर कहा—

हे रोहित! हमने नीतिकुशल विद्वानों के मुख से सुना है कि अविश्रान्त रहने वाले अर्थात् सर्वत्र पर्यटन करने वाले को अनेक प्रकार की सम्पत्ति प्राप्त होती है। [विद्या आदि से] श्रेष्ठ भी पुरुष [बन्धु-बान्धवों के बीच गृहस्थ] मनुष्यों में [सर्वदा एक ही स्थान पर अवस्थित रहने वाला] तुच्छ हो जाता है। [अतः तुम्हारा पिता के पास रहना ठीक नहीं है और तुम्हें यह भी नहीं सोचना चाहिए कि अरण्य में घूमते हुए मेरा सहायक कोई नहीं है क्योंकि] इन्द्र ही अर्थात् परमेश्वर ही घूमते हुए तुम्हारा मित्र होगा। अतः तुम सर्वथा अरण्य में ही विचरण करो।'

तत्रैन्द्ररोहितयो सवादे प्रथम पर्याय दर्शयित्वा द्वितीय पर्याय दर्शयति—

**चरैवेति वै मा ब्राह्मणोऽवोचदिति ह द्वितीय संवत्सरमरण्ये चचार, सोऽरण्याद् ग्राममेयाय, तमिन्द्र पुरुषरूपेण पर्येत्योवाच—**

**पुष्पिण्यौ चरतो जङ्घे, भूष्णुरात्मा फलग्रहि ।**
**शेरेऽस्य सर्वे पाप्मानः, श्रमेण प्रपथे हतश्चरैवेति ॥ इति ।**

ब्राह्मणरूपस्येन्द्रस्य वाक्य श्रुत्वा ब्राह्मणोऽयमरण्ये चरैवेत्येव मामुक्तवानिति मनसि ब्राह्मणवाक्ये महान्तमादर कृत्वा पुनरप्येक सवत्सरमरण्ये चरित्वा पश्चात् पितर द्रष्टु तमागच्छन्त पुनरपीन्द्रो ब्राह्मणरूपेणाऽऽगत्यैवमुवाच । चरत ' पर्यटन कुर्वत पुरुषस्य जङ्घे' 'पुष्पिण्यो' भवत । यथा पुष्पयुक्तो वृक्ष शाखा लता वाऽथवा सुगन्धोपेता सेव्या भवति । एव चरतो जङ्घे श्रमजयेन सेव्ये भवत । तथैव आत्मा' मध्यदेहो 'भूष्णु ' वर्धिष्णु 'फलग्रहि' आरोग्यरूपफलयुक्तो भवति । यथा वर्धमानो वृक्ष कालेन फलानि गृह्णाति एव चरत पुरुष पुरुषस्य बीजादिदीपनादिपाटवेन मध्यदेह आरोग्यरूप फल गृह्णाति । तथैव अस्य चरत पुरुषस्य सर्वे पाप्मान सर्वपापानि प्रपथे' प्रकृष्टे तीर्थक्षेत्रादिमार्गे श्रमेण' तत्तद्देवतादिदर्शने तीर्थयात्रादिप्रयासेन 'हता ' विनाशिता सन्त 'शेरे' शेरते, शयाना इव भवन्ति । यथा शयाना पुरुषाः स्वकार्यं कृषिवाणिज्यादिक कर्तुमशक्ता , एव पुण्येन विनष्टा पाप्मानो नरक दातुमसमर्था इत्यर्थं । तस्मात् सर्वथाऽरण्ये चर, न पितुर्गृहेऽवतिष्ठस्व ॥

रोहित ने [ब्राह्मण रूप इन्द्र के वचनों को सुनकर उसका बडा आदर करके यह] मन में विचार किया कि 'यह ब्राह्मण है जिसने मुझसे कहा है कि विचरण करो । अत पुन दूसरे वर्ष भर वह अरण्य में विचरण करता रहा । पुन जब वह [पिता को देखने के लिए] अरण्य से ग्राम में आया, तब उससे पुरुष रूप में पास आकर इन्द्र ने कहा—

'पर्यटन करने वाले पुरुष की जाँघे पुष्प युक्त सुगन्धित वृक्ष अथवा लता जैसे सेव्य होती है वैसे ही विचरण से श्रम के कारण वह अत्यन्त सेव्य होती हैं । वैसे ही आत्मा रूप शरीर का मध्य भाग भी वर्धित होता हुआ आरोग्य रूप फल से युक्त होता है [जैसे बढ़ता हुआ वृक्ष समय से फल प्राप्त करता है, वैसे ही विचरण करते हुए पुरुष का मध्य-देह बीज आदि की पटुता से आरोग्यरूप फल को प्राप्त करता है] । उसी प्रकार इस [विचरण करने वाले पुरुष] के सभी पाप प्रकृष्ट [तीर्थों एव क्षेत्रादि रूप] मार्ग में [उन-उन देवी देवताओं के दर्शन रूप तीर्थयात्रा के] श्रम से नष्ट होकर सो जाते हैं [अर्थात् जैसे सोया हुआ पुरुष कृषि या व्यापार आदि काय करने में अशक्त होता है, वैसे ही पुण्य से नष्ट हुए पाप वाला मनुष्य नरक में जाने में असमर्थ होता है] । इसलिए तुम सर्वथा ही [अरण्य में] विचरण करो ।'

तृतीयं पर्यायं दर्शयति—

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह तृतीयं संवत्सरमरण्ये चचार;
सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः।
शेते निपद्यमानस्य चराति चरतो भगश्चरैवेति ॥ इति।

'भग' सौभाग्यम् 'आसीनस्य' उपविष्टस्य 'आस्ते' तथैव तिष्ठति, न तु वर्धते। अभिवृद्धिहेतोरुद्योगस्याभावात्। 'तिष्ठतः' उपवेशनं परित्यज्योत्थानं कुर्वतः पुरुषस्य भगः 'ऊर्ध्वः' अभिवृद्ध्युन्मुखस्तिष्ठति। कृषिवाणिज्याद्युद्योगस्य संभावितत्वात्। 'निपद्यमानस्य' भूमौ शयानस्य भगः 'शेते' निद्रां करोति, विद्यमानधनरक्षादिचिन्ताया अप्यभावात् सर्वमेव विनश्यति। 'चरतः' तेषु तेषु देशेष्वर्जनाय पर्यटनं कुर्वतः पुरुषस्य 'भगः' सौभाग्यं 'चराति' दिने दिने वर्धते। तस्मात्त्वं चरैवेति, न त्वेकत्र तिष्ठ॥

रोहित ने [उनका बहुत आदर करके] सोचा कि ब्राह्मण ने मुझे विचरने को कहा है। इसलिए वह तीसरे वर्ष भी अरण्य में घूमता रहा। पुनः जब वह [पिता को देखने के लिए] जङ्गल से गाँव में आया तब पुरुष रूप में पास आकर उससे इन्द्र ने कहा—

'बैठे हुए व्यक्ति का भाग्य भी [उद्योग के अभाव में] बैठ जाता है और खड़े हुए व्यक्ति का भाग्य भी वृद्धि की ओर उन्मुख होता है। भूमि पर शयन करने वाले व्यक्ति का भाग्य भी सो जाता है; और [दिग-दिगन्त में] पर्यटन करने वाले पुरुष का भाग्य भी दिन प्रतिदिन बढ़ता जाता है। अतः तुम विचरण ही करते रहो।'

चतुर्थं पर्यायं दर्शयति—

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह चतुर्थं संवत्सरमरण्ये चचार;
सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

कलिः शयानो भवति, संजिहानस्तु द्वापरः।
उत्तिष्ठंस्त्रेता भवति, कृतं संपद्यते चरंश्चरैवेति ॥ इति।

चतस्रः पुरुषस्यावस्थाः। निद्रा, तत्परित्यागः, उत्थानं, संचरणं चेति। तास्चोत्तरोत्तरश्रेष्ठत्वात् कलि-द्वापर-त्रेता कृतयुगैः समानाः। अतएव सञ्चरणस्य सर्वोत्तमत्वाच्चरैवेति'

रोहित ने [उनका बहुत आदर करके] सोचा कि ब्राह्मण ने मुझे विचरने को कहा है। इसलिए वह चौथे वर्ष भी अरण्य में घूमता रहा। पुनः जब वह [पिता को देखने के लिए] जङ्गल से गाँव में आया, तब पुरुष रूप में पास आकर उससे इन्द्र ने कहा—

कलियुग सोया हुआ रहता है और द्वापर जगा हुआ रहता है। त्रेता युग उठा रहता है और सत्ययुग सञ्चरण करता रहता है। अत [कलियुग, द्वापर, त्रेता, और सत्युग के समान उत्तरोत्तर श्रेष्ठ होने से] तुम विचरण करते ही रहो।[1]

पञ्चम पर्याय दर्शयति—

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह पञ्चम संवत्सरमरण्ये चचार, सोऽरण्याद् ग्राममेयाय, तमिन्द्र पुरुषरूपेण पर्येत्योवाच—

चरन् वै मधु विन्दति चरन् स्वादुमुदुम्बरम्।
सूर्यस्य पश्य श्रेमाण यो न तन्द्रयते चरंश्चरैवेति ॥ इति ।

'चरन्' एव पुरुष क्वचिद्वृक्षाग्रे 'मधु' माक्षिक लभते। क्वचित् 'स्वादु' मधुरमुदुम्ब रादिफलविशेष लभते। एतदुभयमुपलक्षणम्। तत्र तत्र विद्यमान भोगविशेष लभते। तत्र सूर्यो दृष्टान्त। 'य' सूर्य सर्वत्र चरन्नपि 'न तन्द्रयते' कदाचिदप्यलसो न भवति। तस्य सूर्यस्य 'श्रेमाण' श्रेष्ठत्व जगद्वन्द्यत्व पश्य। तस्माच्चरैव ॥

रोहित ने [उनका अत्यन्त आदर करके] सोचा कि ब्राह्मण ने मुझे विचरण करने को कहा है। इसलिए वह पाँचवें वर्ष भी अरण्य में घूमता रहा। पुन जब वह [पिता को देखने के लिए] जङ्गल से गाँव में आया, तब पुरुष रूप में पास आकर उससे इन्द्र ने कहा—

'पुरुष विचरण करते हुए ही मधु और विचरण करते हुए ही मधुर उदुम्बर आदि फलों को प्राप्त करता है। सूर्य सर्वत्र विचरण करते हुए भी कभी भी आलस्य युक्त नहीं होता। उस सूर्य के जगद् वन्दनीयत्व को देखो। अत तुम विचरण करते ही रहो[2]।'

---

१ यत स्वपन् पुरुष कलि पापो भवति। सजिहानो निद्रा परित्यजन् द्वापरोऽपापो भवति। उत्थित ऊर्ध्वं स्थित त्रिपाद्धर्मस्त्रेता भवति। चरन् चलन् चतुष्पाद्धर्म कृतयुग सपद्यते। इति मन्त्रार्थबोधपूर्वं सबोध्योवाचेन्द्र। इति शाङ्खायनश्रौतसूत्रे आनर्तीयभाष्य।

२ (।) चरन्नुद्यम कुर्वन् मधु अमृत मोक्ष विन्दति स निश्चयेन योक्तव्यो योगोऽनिर्विण्ण-चेतसा इति स्मरणात्। यथा पक्व पच्यते स्म क्रमफलम् उदुम्बर फलकाल एव व्यक्त भोगरूप चरन्नुद्यमवान् प्राप्नोति। 'अनिर्वेद श्रियो मूलम्' इत्यादेशागमेन सबोध्य साम्प्रत प्रत्यक्षेण प्रमाणेन बोधयन्नाह—सूर्यस्येति। हे रोहित पश्य प्रत्यक्षा सूर्यस्य श्रीमत्ता यो न तन्द्रयते चरन्न कदाचनालस्य करोतीत्यभिप्राय। इति शाङ्खायन श्रौतसूत्रे आनर्तीयभाष्य।

इत्थमिन्द्रकृतेन रोहितोपदेशेन चरतो रोहितस्य स्वजीवने पितुरारोग्ये च कारणभूतं श्रेयोलाभं दर्शयति—

**चरैवेति वै मा ब्राह्मणोऽवोचदिति ह षष्ठं संवत्सरमरण्ये चचार, सोऽजीगर्तं सौयवसिमृषिमशनया परीतमरण्य उपेयाय ॥** इति ।

षष्ठे संवत्सरे पूर्ववदरण्यसंचारी 'स ह' रोहितः कंचिदृषिं तस्मिन्नरण्ये 'उपेयाय' प्राप्तवान् । कीदृशमृषिम् ? अजीगर्तनामकं सूयवसस्य पुत्रम्, 'अशनया परीतम्' अन्नालाभेन क्षुत्पीडितम् ॥

रोहित ने [उनका अत्यन्त आदर करके] सोचा कि ब्राह्मण ने मुझे विचरण करने को कहा है । इसलिए वह छठवें वर्ष भी अरण्य में विचरण करता रहा । उस अरण्य में उसने भूख प्यास से पीड़ित सूयवस के पुत्र ऋषि अजीगर्त को पाया ।

अथाजीगर्तरोहितयोः संवादं दर्शयति—

**तस्य ह त्रयः पुत्रा आसुः, शुनःपुच्छः शुनःशेपः शुनोलाङ्गूल इति, तं होवाच, ऋषेऽहं ते शतं ददाम्यहमेषामेकेनाऽऽत्मानं निष्क्रीणा इति, स ज्येष्ठं पुत्रं निगृह्णान उवाच, नन्विममिति, नो एवेममिति कनिष्ठं माता, तौ ह मध्यमे संपादयाचक्रतुः शुनःशेपे, तस्य ह शतं दत्त्वा स तमादाय सोऽरण्याद् ग्राममेयाय ॥** इति ।

'तस्य' अजीगर्तस्य शुनःपुच्छादिनामकास्त्रयः पुत्रा आसुः । 'तं' पुत्रवन्तमृषिं रोहित उवाच—हे ऋषे 'ते' तुभ्यमहं गवां शतं ददामि । [दत्त्वा] चाहमेषां पुत्राणां मध्ये एकेन केनचित्पुत्रेणाऽऽत्मानं मद्देहं वरुणान्निष्क्रीणै मूल्यं दत्त्वाऽऽत्मानं मोचयामीति । एवमुक्तः सोऽजीगर्तो 'ज्येष्ठपुत्रं' शुनःपुच्छनामकं हस्तेन 'निगृह्णानः' स्वसमीपे समाकर्षन् रोहितं प्रत्येवमुवाच—तुभ्यमेव पुत्रो दीयते, 'इमं नु' शुनःपुच्छं तु 'न' ददामि, मम प्रियत्वादिति । ततो माता कनिष्ठं हस्तेन गृहीत्वैवमुवाच—'इमं' शुनोलाङ्गूलं तु मम प्रियं 'नो एव' सर्वथा न ददामीति । ततः तौ उभौ मातापितरौ 'मध्यमे' पुत्रे शुनःशेपे दानं 'संपादयाचक्रतुः' अङ्गीकृतवन्तौ । ततः तस्मै अजीगर्ताय 'स' रोहितो गवां शतं दत्त्वा

---

(१) अपिचोऽत्र श्लोकः शाङ्खायनश्रौतसूत्रे (१५.१९) ।

'चरन्वै मधु विन्दत्याप्निचरन्पहारकम् ।
उत्तिष्ठन् विन्दते श्रियं न निषण्णश्चरावति ।'

'यतो वनेचरो वने चरन् मधुकरो वा मधु विन्दति न निषण्णः । अपथिकः नारूपकं विन्दति । यः तमावर्त्तिलोनि वने स एव तस्य कारस्य फलं विन्दति । न तु निषण्णो निरुद्यमः । उत्तिष्ठन् विन्दति श्रियम् । उद्यमं कुर्वन् श्रियं लभते । निषण्णस्तु किमपि न लभते तस्मात् । इति तत्र आनर्तीयभाष्यं ।

'त' शुन शेपम् आदायावस्थिता'। तत 'स' रोहित तेन शुन शेपेन सहारण्यात् स्वकीय ग्राम प्रत्याजगाम ॥

उनके तीन लड़के थे :—शुन पुच्छ, शुन शेप और शुनोलाङ्गूल। उसने उन [ऋषि] से कहा—हे ऋषि ! मैं तुमको सौ [गाएँ] दूंगा। इन पुत्रों में से किसी एक पुत्र के द्वारा निष्क्रय कर मैं अपने को [वरुण से] छुड़ाऊंगा। उसने ज्येष्ठ पुत्र [शुन पुच्छ] को हाथ से अपने पास करते हुए [रोहित से] कहा—[तुम्हें एक पुत्र देता है, किन्तु मेरा प्रिय होने से] इस [ज्येष्ठ पुत्र] को तो न लो। इसी प्रकार माता ने छोटे पुत्र के हाथ को पकड़ कर कहा—इसे मैं नहीं ही दूंगी [क्योंकि यह मेरा प्रिय है]। इसके बाद वे दोनों [माता पिता] मध्यम पुत्र शुन शेप को देने के लिए राजी हो गए। तब उन [अजीगर्त] को सौ [गाएँ] देकर वह [रोहित] उस [शुन शेप] को लेकर उन शुन-शेप के साथ अरण्य से ग्राम को आए।

तदागमनादूर्ध्वकालीन वृत्तान्त दर्शयति—

**स पितरमेत्योवाच,—तत हन्ताहमनेनाऽऽत्मान निष्क्रीणा इति, स वरुण राजानमुपससारानेन त्वा यजा इति, तथेति, भूयान् वै ब्राह्मणः क्षत्रिया-दिति वरुण उवाच, तस्मा एत राजसूय यज्ञक्रतु प्रोवाच, तमेतमभिषेचनीये पुरुष पशुमालेभे ॥ १५ ॥** इति।

'स' रोहित पितरमागत्यैवमुवाच। हे 'तत' पित 'हन्त' आवयोर्हर्षः सपन्न। अहम् 'अनेन' शुन शेपरूपेण मूल्येन 'आत्मान' मद्देह वरुणात् निष्क्रीणे' मूल्य दत्त्वाऽऽ-त्मान मोचयामीत्यर्थः। तथोक्ते 'स' हरिश्चन्द्रो वरुणमुपेत्य 'अनेन' शुन शेपेन ब्राह्मणेन 'त्वा' त्वा यक्ष्यामीत्युक्तवान्। 'स' वरुणोऽपि तथेत्यङ्गीकृत्यैवमुवाच—'क्षत्रियात्' तव पुत्राद् रोहितादप्यय ब्राह्मणो 'भूयान्' अभ्यधिक एव मम प्रिय, इति, उक्त्वा 'तस्मै' हरिश्चन्द्राय कर्तव्यत्वेन राजसूयमुपदिदेश च। स' हरिश्चन्द्रो राजसूय प्रक्रम्य तस्य

१ 'षष्ठ्या आक्रोशे' इति पा० सू० ६ ३ २१। 'शेपपुच्छलाङ्गूलेषु शुन'–तत्रैव वा० ५। 'उभे वनस्पत्यादिषु युगपत्'–इति पा० सू० ६ २ १४०। शुन शेपम्। 'शुन शेफ'–इति वा पाठ (महा० मा० १३ ३ ६)। शेप इति, वैतस इति च द्वे परे निघण्टसमाम्नाये पठिते। 'शेपो वैतस इति पुस्प्रजननस्य। 'शेप शपते स्पृशतिकर्मणो, वैतसो वितस्त भवति'–इति निरु० ३ ४ ४। स्त्रीणा दानविक्रयाति-सर्गा विद्यन्ते, न पुस, पुसोऽपीत्येके, शौन शेपे दर्शनात्'—इति यास्क (निरु० ३ १ ४)।

मध्ये योऽयमभिषेचनीयाख्य[1] एकाहः सोमयागः, तस्मिन् 'तमेत' शुनःशेपं पुरुष पशुम् 'आलेभे' सवनीयपशुत्वेनाऽऽलब्धुं निश्चितवान् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तम-पञ्चिकाया तृतीयाध्याये (त्रयस्त्रिंशाध्याय) तृतीयः खण्डः ॥ ३ ॥ (१९) [२१८]

तब रोहित ने पिता के पास आकर कहा—हे तात ! हर्ष की बात है कि मैं इस [शुनःशेप रूप] मूल्य से निश्चय कर वरुण से अपने को छुड़ाता हूँ। उन हरिश्चन्द्र ने राजा वरुण के पास आकर कहा—'मैं इस [ब्राह्मण बालक शुनःशेप] से तुम्हारा यजन करूँगा।' वरुण ने कहा—'ठीक है, [क्योंकि] क्षत्रिय [बालक] से तो ब्राह्मण बालक मुझे अधिक प्रिय है।' तब वरुण ने उस [हरिश्चन्द्र] को राजसूय यज्ञ की विधि का उपदेश किया। [उन हरिश्चन्द्र ने राजसूय यज्ञ का उपक्रम करके उसके मध्य] जो यह अभिषेचनीय [नामक एकाह सोमयाग] है उसमें इस शुनःशेप पुरुष रूप पशु का आलम्भन करने का निश्चय किया।

॥ इस प्रकार तैंतीसवें (तृतीय) अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

हरिश्चन्द्रस्य राजसूयानुष्ठानं दर्शयति—

तस्य ह विश्वामित्रो होताऽऽसीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्माऽयास्य उद्गाता, तस्मा उपाकृताय नियोक्तारं न विविदुः, स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं नियोक्ष्यामीति, तस्मा अपरं शतं ददुस्तं स निनियोज ॥ इति ।

विश्वामित्रादयो महर्षयः 'तस्य' हरिश्चन्द्रस्य यागे राजसूये होत्रादयश्चत्वारो महर्त्विज आसन्। तत्र जमदग्निरध्वर्युरभिषेचनीये सोमयागे 'तं' शुनःशेपं सवनीय-पशुत्वेनोपाकृतवान्। बर्हिर्मुक्तया प्लक्षशाखया मन्त्रपुरःसरं समुपस्पृश्य स्वीकार 'उपा-करणम्'। तत ऊर्ध्वं यूपबन्धनं 'नियोजनं', तस्य शूद्रकर्मत्वादध्वर्युं नियोक्तुं प्रवृत्तः।

1. संवत्सरान्ते समानपक्षेऽभिषेचनीय दर्शयेयो, 'उपश्यो बृहत्पृष्ठ उभयसामाभिषेचनीय'—इति आश्व० श्रौ० ९.३.७.८। तत्रापि अभिषेकार्थानामपां ग्रहणं भवति। तद्-विशेषास्तु कात्या० श्रौ० १५.४.२१–५६ सूत्रेषु द्रष्टव्यानि। 'राजानो भविष्य-न्त्यभिषेचनीया ·· वियोजनभिषेचनीया'—इति च शत० ब्रा० ११.४.२.१७।

तत 'उपाकृताय तस्मै'[1] उपाकरणेन संस्कृतस्य शुनःशेपस्य 'नियोक्तारं' यूपे बन्धनकर्तारं क्रूरं कंचिदपि पुरुषं 'न विविदुः' न लेभिरे। तदानीं सूयवसस्य पुत्रः शुनःशेपस्य पिता 'सः' 'अजीगर्तः' [उवाच] मह्यं पूर्वस्माच्छतादन्यत् 'अपरं' गोशतं हे यजमानर्त्विजः, दत्त, ततोऽहम् एनं शुनःशेपं यूपे नियोक्ष्यामि' रशनया कटयां शिरसि पादयोर्बद्ध्वा रशनाग्रस्य यूपे बन्धनं 'नियोजनं' तदहं करिष्यामीति। 'तस्मै' अजीगर्तायापरं गोशतं ददुः। 'तं' च शुनःशेपं 'सः' अजीगर्तो 'निनियोज'। धातोर्द्विर्भाव परित्यज्योपसर्गस्य द्विर्भावश्छान्दसः ॥

VII १६ [XXXII ४] उन [हरिश्चन्द्र] के [राजसूय यज्ञ में] विश्वामित्र होता थे, जमदग्नि अध्वर्यु, वसिष्ठ ब्रह्मा और अयास्य ऋषि उद्गाता थे। किन्तु [कुशयुक्त प्लक्ष की शाखा से मन्त्र द्वारा] उपाकरण से संस्कृत उस [सवनीय पशु रूप शुनःशेप] को यूप में बाँधने वाला कोई भी [क्रूर] पुरुष उन्हें न मिला। [तब शुनःशेप के पिता] सूयवस के पुत्र उन अजीगर्त ने कहा—'हे यजमान और ऋत्विजो! यदि आप मुझे सौ [गाएँ] और दें तो मैं इस [शुनःशेप] को [रस्सी से सिर, पैर और कमर बाँध कर] यूप में बाँध दूँगा।' उस [अजीगर्त] को और सौ [गाएँ उन्होंने] दीं। तब उन [अजीगर्त] ने उस [शुनःशेप] को यूप में नियोजित कर दिया।

अथ विशसनप्रवृत्तिं दर्शयति—

**तस्मा उपाकृताय नियुक्तायाऽऽप्रीताय पर्यग्निकृताय विशसितारं न विविदुः; स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति, तस्मा अपरं शतं ददुः, सोऽसिं निःशान एयाय ॥** इति।

उपाकरणनियोजने पूर्वमुक्ते। आप्रीसंज्ञिताभिरेकादशभिः प्रयाजयाज्याभिर्यद् यजनं तद् 'आप्रीणनम्'। दर्भरूपेणोल्मुकेन त्रिः प्रदक्षिणीकरणं तत् 'पर्यग्निकरणम्'। तथाविधसंस्कारचतुष्टययुक्ताय[2] 'तस्मै' तस्य शुनःशेपस्य 'विशसितारं' हिंसितारं पुरुषं क्रूरात्मानं कंचिदपि पुरुषं न लेभिरे। ततोऽजीगर्तं पूर्ववदपरं गोशतं गृहीत्वा मारयितुम् 'असिं' खड्गं 'निःशानः' निशितं तीक्ष्णं कुर्वन्नेव 'एयाय' जगाम ॥

[सवनीय पशु रूप शुनःशेप के] उपाकरण से संस्कृत होने पर यूप में बाँधे जाने के बाद, आप्री संज्ञक [ग्यारह प्रयाज याज्या] मन्त्रों के पाठ पूर्ण होने पर और [दर्भ रूप उल्मुक से तीन बार प्रदक्षिणा रूप] पर्यग्निकरण के बाद उसका वध करने वाला कोई [क्रूर] पुरुष न मिला। तब सूयवस के पुत्र उन अजीगर्त ने कहा—'हे यजमान एवं

---

१, ३ 'पश्यर्येति चतुर्थीति वाच्यम्'—इति पा० सू० २ ३ ६२ वा०।

२ तदेतच्चतुष्टयविध्यादिकम् १ भा० १९१–२७९ पृष्ठेषु द्रष्टव्यम्।

ऋत्विजों ! यदि आप मुझे सौ [गाएँ] और दें तो मैं इस [शुनःशेप] का वध कर दूँगा।' उन्होंने उस [अजीगर्त] को सौ [गाएँ] और दीं। तब वे तलवार लेकर उसे तीक्ष्ण करने लगे।

पितुरजीगर्तस्य (शुनःशेपस्य) वृत्तान्तं दर्शयति

अथ ह शुनःशेप ईक्षाञ्चक्रेऽमानुषमिव वै मा विशसिष्यन्ति, हन्ताहं देवता उपधावामीति स प्रजापतिमेव प्रथमं देवतानामुपससार, कस्य नूनं कतमस्यामृतानामित्येतयर्चा ॥ इति।

'अथ' पितुः पुत्रमारणोद्योगानन्तरं शुनःशेपः' पुत्रो मनस्येव 'ईक्षाञ्चक्रे' विचारितवान्। 'अन्यत्र पर्यग्निकृतं पुरुषमारण्याश्चोत्सृजन्त्यहिंसायै' इतिश्रुतेः पर्यग्निकरणादूर्ध्वं मनुष्यं परित्यजन्ति। एते तु 'मा' मां 'अमानुषमिव' मनुष्यव्यतिरिक्तमजादिपशुमिव 'विशसिष्यन्ति' मारयिष्यन्ति। 'हन्त' हा कष्टमेतत्सपद्मम्। अहमितः परं रक्षार्थं देवता 'उपधावामि' भजामि 'इति' एतद् विचार्य देवानां मध्ये 'प्रथमं' मुख्यं प्रजापतिमेव 'कस्य नूनम्'[1]—इत्यृच उपससार' सवितवं ॥

इस [पिता द्वारा किए गए मारण रूप उद्योग] के बाद शुनःशेप ने मन में सोचा कि ['पर्यग्नि के बाद मनुष्य को तो अरण्य में छोड देते हैं'—ऐसी श्रुति है। किन्तु] ये लोग तो मनुष्य से अतिरिक्त [बकरे आदि] पशु के समान मुझे मार डालेंगे। यह अत्यन्त कष्टप्रद हुआ। अतः मैं रक्षा के लिए देवताओं के पास भागूँ। इस प्रकार विचार करके वह देवों के मध्य पहले प्रजापति के ही पास इस 'कस्य नूनम्' (मैं देवों में किस श्रेणी के किस देवता का सुन्दर नाम पुकारूँ ?) आदि इस ऋचा को पढ़ते हुए गया।

तस्य प्रजापतेः सहकारित्वेनाग्नेः सवा दर्शयति -

तं प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा ॥ इति।

'तं' सेवकं शुनःशेपं प्रजापतिरेवमुक्तवान्। अग्निः सर्वेषां देवानां 'नेदिष्ठः' हविर्वहनेनातिसमीपवर्ती। अतस्तमेवोपासस्वेत्युक्तः 'सः' शुनःशेपः 'अग्नेर्वयम्'[2]-इत्यृचाऽग्निमुपासितवान् ॥

उस [सेवक शुनःशेप] से प्रजापति ने कहा—'सभी देवों में अग्नि सबसे निकट हैं। अतः तुम उन्हीं के पास जाओ।' तब वह [शुनःशेप] अग्नि के पास 'अग्नेर्वयम्' (मैं देवों में सबसे पहले अग्नि का नाम पुकारता हूँ) आदि इस ऋचा से गए।

---

१. ऋ० १.२४.१। २. ऋ० १.२४.२।

तस्य चाग्ने सहकारित्वेन सवितुरुपासन दर्शयति —

**तमग्निरुवाच, सविता वै प्रसवानामीशे तमेवोपधावेति, स सवितारमुपससाराभि त्वा देव सवितरित्येतेन तृचेन ॥ इति ।**

'प्रसवाना' सर्वेपु कार्येपु प्रेरणारूपाणामनुज्ञानात् सविता ईशे' स्वामी भवति । तस्मात्तमेवोपधावेत्यग्निनोपदिष्ट 'अभि त्वा'[1] इति तृचन सवितारमुपासितवान् ॥

उन [सेवक शुन शेप] से अग्नि ने कहा —'प्रेरक रूप में [अनुज्ञा देने के कारण] सविता सभी कार्यों के स्वामी हैं । अत तुम उन्हीं के पास जाओ ।' तब वह [शुन शेप] सविता के पास 'अभि त्वा देव सवित ' (हे सदा रक्षा करने वाले सविता देव) आदि इस तृच से गए ।

तस्य च सवितु सहकारित्वेन वरुणस्योपासन दर्शयति—

**त सवितोवाच, वरुणाय वै राज्ञे नियुक्तोऽसि, तमेवोपधावेति, स वरुण राजानमुपससारात उत्तराभिरेकत्रिंशता ॥ इति ।**

हे शुन शेप वरुणार्थं त्व यूपे बद्धोऽसि, अतो वरुणमुपास्स्वेति सवित्रोक्त पूर्वस्मात् सवितृविषयात् तृचाद् उत्तराभिरेकत्रिंशत् सख्याकाभिर्ऋग्भिर्वरुणमुपासितवान् । 'नहि ते क्षत्रम्' इत्याद्या[2] सूक्तशेषभूता दशर्चो 'यच्चिद्धि ते विश ' इत्यादिकमेकविंशत्यृच सूक्तम्[3] इत्येवमेकत्रिंशत् सख्या द्रष्टव्या ॥

उन [सेवक शुन शेप] से सविता ने कहा—'तुम राजा वरुण के लिए [यूप में] बाँधे गए हो । अत तुम उन्हीं के पास जाओ ।' तब उन [शुन शेप] ने [पहले कही गई सविता देवताक तृचा के] बाद को इकतिस ऋचाओं द्वारा राजा वरुण की उपासना की ।

तस्य च वरुणस्य सहकारित्वेन पुनरप्यग्नेरुपासन दर्शयति—

**त वरुण उवाचाग्निर्वै देवाना मुख सुहृदयतमस्त नु स्तुह्यथ त्वोत्स्रक्ष्याम इति, सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या ॥ इति ।**

अयमग्नि सर्वेषा देवाना 'मुख मुखस्थानीय । अग्निद्वारेणैव सर्वैर्देवैर्हवि स्वीकारात् । अत एव प्रीत्या हविर्वहनातिशयेन सुहृदय । 'सुहृदयतम.' 'तम्' अग्नि 'नु' क्षिप्र स्तुहीति वरुणेनोक्त पूर्वोक्तास्य ऋग्भ्य उत्तराभिर्द्वाविंशतिसख्याकाभिर्ऋग्भिरग्नि तुष्टाव । 'वसिष्वा हि –इत्यादिक दशर्चं सूक्तम्'[4], अश्व न त्वा' इत्यादिक त्रयोदशर्चं सूक्तम्[5] । तत्राद्यां परित्यज्य वसिष्वसूक्तद्वयगता ऋचो द्वाविंशतिसख्याका ॥

---

१ ऋ० १ २४ ३–४ । २ ऋ० १ २४ ६–१५ । ३ ऋ० १ २५ ।
४ ऋ० १.२६ । ५ ऋ० १ २७ ।

तब राजा वरुण ने उन [शुन शेप] से कहा—[हवि वहन के कारण] यह अग्नि ही सभी देवों में मुखस्थानीय है, और अत्यन्त सुहृदय है। अत. तुम उन्हीं की स्तुति करो। तब हम तुम्हे छोड देंगे।' उन [शुन शेप] ने [उन पूर्वोक्त वरुण देवताक ऋचाओं के] बाद की बाइस ऋचाओं द्वारा अग्नि की स्तुति की।

अग्ने सहकारित्वेन विश्वेषा देवानामुपासन दर्शयति—

**तमग्निरुवाच, विश्वान्नु देवान् स्तुह्यथ त्वोत्स्रक्ष्याम इति, स विश्वान् देवास्तुष्टाव, नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा ॥ इति।**

यद्यपि वरुणपाशेन बद्धत्वाद् वरुण एव शुन शेपमुत्स्रष्टु समर्थ तथाऽप्यग्न्यादीना सहकारित्ववचन दार्ढ्यार्थं द्रष्टव्यम्। विश्वे देवा गणरूपा न भवन्ति किंतु सर्वे देवास्तान् 'नमो महद्भ्य' इत्यतयर्चा[1] उपासितवान् ॥

उन [सेवक शुन शेप] से अग्नि ने कहा—विश्वे देवों की स्तुति करो। तब हम तुम्हे छोडेंगे। उन [शुन शेप] ने सभी देवों को 'नम महद्भ्य' (महान्, बालक, युवा एव वृद्ध सभी देवों को हम नमस्कार करते हैं) आदि इस ऋचा से प्रसन्न किया।

तेषा च विश्वेषा दवाना सहकारित्वेनेन्द्रस्योपासन दर्शयति –

**त विश्वे देवा ऊचुरिन्द्रो वै देवानामोजिष्ठो बलिष्ठ. सहिष्ठः सत्तम. पारयिष्णुतमस्त नु स्तुह्यथ त्वोत्स्रक्ष्याम इति, स इन्द्र तुष्टाव यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनोत्तरस्य च पञ्चदशभि ॥ इति।**

ओजोबलादिशब्दा पूर्वाचार्यैरेव व्याख्याता

"ओजो दीप्तिर्बल दाढ्य प्रसह्यकरण सह।
सुजन सम्पारयिष्णुत्वपर्यान्तसमाश्रित ॥" इति।

इष्ठप्रत्यय-तमप्प्रत्ययाभ्या तत्र तत्रातिशय उच्यते। तादृशमिन्द्र 'यच्चिद्धि सत्य सोमपा:' इत्यनेन सप्तर्चेन सूक्तेन[2] उत्तरस्मिन्नपि 'आ त इन्द्रम्' इत्यादिके द्वाविंशत्यृचे सूक्ते[3] पञ्चदशभिर्ऋग्भिश्च तुष्टाव ॥

उन [शुन शेप] से विश्वेदेवों ने कहा—देवों में इन्द्र सबसे अधिक ओजवान्, बलवान्, सहिष्णु, वीर्यवान् और पार लगाने वाले हैं। अत तुम उन्हीं की स्तुति करो। तब हम तुम्हें छोडेंगे। उसने इन्द्र की 'यच्चिद्धि' (हे इन्द्र! तुम सोम पान करने वाले एव सत्यवादी हो) आदि इस [सात ऋचा के] सूक्त से और उसके बाद के [तीसवें] सूक्त की पन्द्रह ऋचाओं से स्तुति की।

---

१. ऋ० १.२७.१३। २. ऋ० १.२९। ३. ऋ० १.३०।

पूर्वमप्यनुग्रहेण चरैवेत्येवमिन्द्रो रोहितं प्रत्युपदिदेश । तस्योपदेशस्य फलपर्यवसायित्वमनुस्मरतः तस्येन्द्रस्य शुनःशेपस्तुतौ प्रीत्यतिशयं दर्शयति

**तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ, तमेतया प्रतीयाय शश्वदिन्द्र इति ॥** इति ।

शुनःशेपेनेन्द्रः स्तूयमानः प्रीतो भूत्वा 'तस्मै' शुनःशेपाय सुवर्णमयं दिव्यं रथमारोहणार्थं स्वकीयेन मनसैव ददौ । शुनःशेपोऽपि तदीयमनुग्रहमवगम्य पूर्वोक्ताभ्यः पञ्चदशभ्य 'उत्तरया' 'शश्वदिन्द्र' इत्येतयर्चा 'तं' रथं 'प्रतीयाय' मनसैव प्रतिजग्राम[1] ॥[2]

[शुनःशेप से] स्तुत इन्द्र ने प्रसन्न होकर उस [शुनःशेप] के लिए एक सुवर्णमय दिव्य रथ को [आरोहण के लिए] अपने मन से ही दे दिया । [शुनःशेप ने भी उनके अनुग्रह को जानकर पूर्वोक्त पन्द्रह ऋचाओं के बाद की] 'शश्वदिन्द्र' आदि इस ऋचा से उस [रथ] को मन से ही स्वीकार किया ।

इन्द्रस्य सहकारित्वेनाश्विनोरुपासनं दर्शयति

**तमिन्द्र उवाचाश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति, सोऽश्विनौ तुष्टावात उत्तरेण तृचेन ॥** इति ।

पूर्वोक्ताया शश्वदिन्द्र इत्यस्या 'उत्तरेण' 'आश्विनावश्वावत्या' इति तृचेन[3] अश्विनौ स्तुतवान् ॥

तब उन [शुनःशेप] से इन्द्र ने कहा—'अश्विनों की तुम स्तुति करो । तब हम तुम्हें छोड़ेंगे ।' उसने अश्विनों को [पूर्वोक्त 'शश्वदिन्द्र' के] बाद के तृच से सन्तुष्ट किया ।

अश्विनोः सहकारित्वेनोषस उपास्ति दर्शयति

**तमश्विना ऊचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति, स उषसं तुष्टावात उत्तरेण तृचेन ॥** इति ।

'कस्त उषः' इत्यादिक उत्तरस्तृचः[4] ॥

उन [शुनःशेप] से अश्विनों ने कहा—'तुम उषा की स्तुति करो । तब हम तुम्हें छोड़ेंगे ।' उसने उषा की [पूर्वोक्त "आश्विनावश्वावत्या" के] बाद के तृच ['कस्त उषः'] से स्तुति की ।

---

१ ऋ० १.३०.१६ ।

२ स्तूयमानः शश्वदिति प्रीतस्तु मनसा ददौ ।
शुनःशेपाय दिव्यं तु रथं सर्वं हिरण्मयम् ॥—इति बृहद्दे० ३.१०१ ।

३ ऋ० १.३०.१७–१९ ।　　४ ऋ० १.३०.२०–२२ ।

अथोक्तानां सर्वासां देवतानामनुग्रहेण शुनःशेपस्य बन्धमोक्षं हरिश्चन्द्रस्याऽऽरोग्यं च दर्शयति—

**तस्य ह स्मर्च्यृच्युक्तायां वि पाशो मुमुचे, कनीय ऐक्ष्वाकस्योदरं भवत्युत्तमस्यामेवर्च्युक्तायां वि पाशो मुमुचेऽगद ऐक्ष्वाक आस ॥ १६ ॥** इति ।

'तस्य' पूर्वोक्तस्य तृचस्य सम्बन्धिन्याम् 'ऋचि ऋचि' एकैकस्यामृच्युक्तायां क्रमेण शुनःशेपस्य पाशो 'विमुमुचे' विशेषेण मुक्तोऽभूत्[1] । 'ऐक्ष्वाकस्य' हरिश्चन्द्रस्य यन्महोदरं, तदपि क्रमेण 'कनीय' अत्यल्पं भवति । उत्तमस्यामृच्युक्तायां पाशो विमुमुचे, एवं सर्वात्मना मुक्तोऽभूत् । ऐक्ष्वाकोऽपि 'अगद' निःशेषं रोगरहित आस[2] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायां तृतीयाध्याये (त्रयस्त्रिंशाध्याये) चतुर्थः खण्डः ॥ ४ ॥ (१६) [२३९]

उस [पूर्वोक्त तृच] के एक-एक ऋचा के पाठ करने के साथ-साथ उसके बन्धन खुलते गए, और हरिश्चन्द्र का पेट क्रम से पचकता गया। अन्तिम मन्त्र के पढ़ते-पढ़ते उसके सभी बन्धन खुल गए और हरिश्चन्द्र निरोग हो गए।

॥ इस प्रकार तैंतिसवें (तृतीय) अध्याय के चतुर्थ खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥४॥

## अथ पञ्चमः खण्डः

बन्धनान्मुक्तस्य शुनःशेपस्योत्तरकालीनं वृत्तान्तं दर्शयति—

**तमृत्विज ऊचुस्त्वमेव नोऽस्याह्नः संस्थामधिगच्छेत्यथ हैतं शुनःशेपोऽञ्जःसवं ददर्श तमेताभिश्चतसृभिरभिसुषाव, 'यच्चिद्धि त्वं गृहेगृह' इत्यथैनं द्रोणकलशमभ्यवनिनायोच्छिष्टं चम्वोर्भरेत्येतयर्चाऽथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवाञ्चकारायैनमवभृथमभ्यवनिनाय, 'त्वं नो अग्ने वरुणस्य विद्वानि'त्येताभ्यामथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयाञ्चकार', 'शुनश्चिच्छेपं निदितं सहस्रादिति ॥** इति ।

देवतानुग्रहयुक्तं 'तं' शुनःशेपं विश्वामित्रादयः सर्वे 'ऋत्विज' एवमूचुः—हे शुनःशेप, त्वमेव 'नः' अस्माकम् 'अस्याह्नः' अभिषवनीयाख्यस्य 'संस्थां' समाप्तिम् *अधिगच्छ'*

१ शुनःशेपमाजीगर्तिं वरुणोऽगृह्णात्, स एतां वारुणीमपश्यत्, तया वै स आत्मानं वरुणपाशादमुञ्चद्'–इति तै० सं० ५ २ २ ३ । 'शौनःशेपमाख्यापयते, वरुणपाशादेवैनं मुञ्चति'–इति तै० ब्रा० १ ७ १० ६ ।

२ रामायणेऽपि (१६१,६२ सर्गयोः) इदमुपाख्यानं बहु व्यतिक्रम्य आख्यातम् । महाभारतेऽपि १३ ३ ६–८, हरिवंशेऽपि २७ ५७–६०, भागवतेऽप्यस्त्येतदुपाख्यानम् (९ ८,१६ अध्याययोः) ।

प्राप्नुहि, अनुष्ठापयेत्यर्थः । तैरेवमुक्ते सत्यनन्तरं शुनःशेप 'एतम्' अभिषेचनीयाख्य सोमयागम् 'अञ्जःसव' ददर्श । 'अञ्जसा' ऋजुमार्गेण 'सव' सोमाभिषवो यस्मिन् यागे सोऽञ्जःसवः, तादृशं प्रयोगप्रकारं निश्चितवान् । निश्चित्य च 'तं' सोमं 'यच्चिद्धि' इत्यादिभिश्चतसृभिर्ऋग्भि[1] अभिषुतं कृतवान् । अथ 'एनम्' अभिषुतं सोमम् 'एतया' 'उच्छिष्टं चम्वो' इत्यृचा[2] द्रोणकलशमभिलक्ष्य 'अवनिनाय' द्रोणकलशे प्रक्षिप्तवान् । 'अथ' अनन्तरम् 'अस्मिन्' हरिश्चन्द्रे 'अन्वारब्धे' शुनःशेपदेहमुपस्पृष्टवति सत्युक्ताश्च ऋग्भ्य 'पूर्वाभि' यत्र ग्रावेत्यादिभिश्चतसृभिर्ऋग्भि[3] स्वाहाकारसहिताभि सोमं जुहवाञ्चकार । यत्र ग्रावेत्यादिकं सूक्तं नवर्चं, तत्र यच्चिद्धीति पञ्चमी, तामारभ्य चतसृभिर्ऋग्भिरभिषवः । उच्छिष्टमित्यादिका नवमी तया द्रोणकलशे प्रक्षेप । यत्र ग्रावेत्यादिभिश्चतसृभिर्होम, इत्येवं कृत्स्नस्य सूक्तस्य विनियोग । अथ' होमानन्तरमेव कर्तव्यमवभृथमभिलक्ष्य 'अवनिनाय' सर्वमवभृथसाधनं तद्देशे नीत्वा 'त्वं नो अग्ने' इत्यादिकाभ्याम्[4] ऋग्भ्यामवभृथयाग कृतवान् । 'अथ' तथा कृत्वा, तत ऊर्ध्वम् 'एनम्' आहवनीयमग्निं 'शुनश्चित्' इत्यादिना 'उपस्थापयाञ्चकार' हरिश्चन्द्रमुपस्थाने प्रेरयामास । सोऽयमञ्जःसव, इष्टिपशुसाकर्यमन्तरेण 'अञ्जसा' ऋजुमार्गेणानुष्ठितत्वात् ॥

vii.१७ [xxxiii ५] [देवताओं के अनुग्रह से युक्त] उस [शुन शेप] से [विश्वामित्र आदि] सभी ऋत्विजों ने कहा—हे शुन शेप ! तुम हमारे इस [अभिषेचनीय नामक] अह्न की संस्था [अर्थात् समाप्ति] को प्राप्त करो [अर्थात् अनुष्ठान करो] । उनके इस प्रकार कहने पर शुन शेप ने इस [अभिषेचनीय नामक सोमयाग] के अञ्जःसव अर्थात् सरल मार्ग से सोमरस निकालने की विशेष विधि का दर्शन किया । उस [सोम] को 'यच्चिद्धि' (हे ऊखल ! यद्यपि घर-घर में तुम्हारा प्रयोग किया जाता है) आदि इन चार ऋचाओं से अभिषुत किया । इसके बाद इस [अभिषुत सोम] को 'उच्छिष्ट चम्वो.' (सोमरस निचोड़ने वाले फलकों से बचे हुए सोम को उठाकर) आदि इस ऋचा से द्रोणकलश में अभिलक्ष्य करके छोड़ दिया । इसके बाद इस [हरिश्चन्द्र] के शुन शेप के देह का स्पर्श करने पर [पूर्वोक्त सूक्त के] पहले ['यत्र ग्राव' इत्यादि] चार मन्त्रों से स्वाहाकार के सहित सोम याग किया । इस [होम] के बाद अवभृथ अर्थात् यज्ञ के अन्तिम कृत्य को अभिलक्षित करके उसके सभी साधनों को वहाँ लाकर 'त्वं नो अग्ने' (हे उपायों को जानने वाले अग्नि ! तुम हमारे ऊपर होने वाले वरुण के क्रोध को) आदि दो ऋचाओं से अवभृथ याग किया । इस प्रकार कृत्य करने के बाद इस आहवनीयाग्नि को 'शुनश्चिद्' (हे अग्नि ! तुमने भली प्रकार से बँधे हुए शुन शेप को हजारों रूप वाले यूप से छुड़ाया था) इत्यादि ऋचा से हरिश्चन्द्र के प्रति प्रेरित किया ।

---

१. ऋ० १.२८.५-८ ।    २ ऋ० १.२८.९ ।    ३ ऋ० १.२८.१-४ ।
४. ऋ० ४.१.४, ५ ।

विश्वामित्राजीगर्तयोः कश्चित्संवाद दर्शयति—

अथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद, स होवाचाजीगर्तः सौयवसि-ऋषे पुनर्मे पुत्रं देहीति, नेति होवाच विश्वामित्रो, देवा वा इमं मह्यमरासतेति, स ह देवरातो वैश्वामित्र आस, तस्यैते कापिलेय बाभ्रवा ॥ इति ।

'अथ' अभिषेचनीयसमाप्तेरनन्तरं हरिश्चन्द्रसहितेष्वृत्विक्षु विस्मितेषु, स शुनःशेप इत ऊर्ध्वं कस्य पुत्रोऽस्त्विति विचारे सति तदीयेच्छैव नियामिकेति महर्षीणां वचनं श्रुत्वा शुनःशेपः स्वेच्छया विश्वामित्रमुनिचमक्षीरस्य सहसा तदीयमङ्कमाससाद। पुत्रो हि सर्वत्र पितुरङ्कं निषीदति। तदानीं सूयवसपुत्रोऽजीगर्तो विश्वामित्रं प्रत्येवमुवाच। हे महर्षे, मदीयमुत्तमेन पुनरपि मह्यं देहीति स विश्वामित्रो नेति निराकृत्यैवमुवाच। प्रजापत्यादयो 'देवा' एव 'इमं'। शुनःशेपं मह्यम् 'अरासत' दत्तवन्त, तस्मात् तुभ्यं न दास्यामीति। 'स' च शुनःशेपो देवैर्दत्तत्वाद् 'देवरात'—इतिनामधारो विश्वामित्रपुत्र एवाऽऽस। 'तस्य' च देवरातस्य 'एते कपिलगोत्रोत्पन्ना बभ्रुगोत्रोत्पन्नाश्च बन्धवोऽभवन् ॥

[अभिषेचन समाप्ति के बाद] अब शुनःशेप विश्वामित्र ऋषि की गोद में आकर बैठ गए। तब उन सूयवस के पुत्र अजीगर्त ने [विश्वामित्र से] कहा—हे ऋषि! मेरे पुत्र को पुनः हमें दीजिए।' विश्वामित्र ऋषि ने कहा 'नहीं। देवों ने इसे मुझे दिया है।' और वह शुनःशेप देवों के द्वारा प्रदत्त होने से देवरात नामक विश्वामित्र के पुत्र हुए। उस [देवरात] के ये कपिल गोत्र में उत्पन्न और बभ्रु गोत्र में उत्पन्न बन्धु बान्धव हुए।

अथ शुनःशेपाजीगर्तयोः संवादं दर्शयति—

स होवाचाजीगर्तः सौयवसिस्त्वं वेहि विह्वयावहा स होवाचाजीगर्तः सौयवसि —

> आङ्गिरसो जन्मनाऽस्याजीगर्तिः श्रुतः कविः ।
> ऋषे पैतामहात्तन्तोर्माऽपगाः पुनरेहि मामिति,

स होवाच शुनःशेप —

> अदर्शुस्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत ।
> गवां त्रीणि शतानि त्वमवृणीथा मदङ्गिरः ॥ इति ।

विश्वामित्रेण निराकृतः सोऽजीगर्तः शुनःशेपं प्रत्येवमुवाच—हे पुत्र, 'त्वं वा' त्वमेव विश्वामित्रादपगतः सन् 'एहि' अस्मद् 'गृहे गच्छ। त्वदीयमाता चाहं चोभावावां 'विह्वया

वहै' विशेषेण तवाह्वानं करवावहै । इत्युक्त्वा तूष्णीमवस्थितं तं शुनःशेपं प्रति पुनरपि कयाचिद् गाथयैवमुवाच—हे शुनःशेप त्वं जन्मना आङ्गिरसः अङ्गिरोगोत्रोत्पन्न आजीगर्तिः अजीगर्तस्य पुत्र, 'कविः' विद्वान् 'श्रुतः' इत्येव सर्वत्र प्रसिद्ध । अतो 'ऋषे' हे महर्षे शुनःशेप 'पैतामहात्' पितामहेन प्रजापतिना सपादितात् 'तन्तो' सतानादङ्गिरोवंशात् 'माऽपगा' अपगतो मा भव । तस्मात्पुनरपि 'मामेहि' मद्गृहं समागच्छेत्युक्त शुनःशेप स्वयमपि गाथया प्रत्युत्तरं ददौ । शासो विशसनहेतु खङ्ग । हेऽजीगर्त मद्वधाय 'शासहस्तं' खङ्गहस्तं त्वा सर्वेऽपि 'अदर्शु'[१] दृष्टवन्त । 'यत्' क्रूरं कर्म शूद्रेष्वप्यन्वेष्वपि नालप्सत[२] न लब्धवन्तो लौकिका जना तादृशं क्रौर्यं त्वया कृतम् । हे 'अङ्गिर' आङ्गिरसगोत्रो त्पन्नाजीगर्त 'मत्' मां निमित्तीकृत्य त्वं गवां शतानि त्रीणि अवृणीथा वृतवानसि । तदिदमत्यन्तकष्टम् 'इति' उक्तवान् ॥

[विश्वामित्र से निराकृत] सूयवस के पुत्र उन अजीगर्त ने कहा—'हे पुत्र ! तुम विश्वामित्र को छोड़कर हमारे पास आओ । हम और तुम्हारी माता दोनों ही तुम्हें विशेषरूप से बुलाते हैं ।' [इस प्रकार कहने के बाद चुपचाप बैठे हुए उस शुनःशेप के प्रति पुनः] सूयवस के पुत्र अजीगर्त ने [निम्न गाथा को] कहा—हे पुत्र ! तुम जन्म से अङ्गिरा गोत्र में उत्पन्न [आङ्गिरस] हो । तुम अजीगर्त के पुत्र ऋषि रूप से प्रसिद्ध हो । अतः हे ऋषि ! तुम अपने पिता पितामह की सन्तान अङ्गिरा वंश को मत छोड़ो । इसलिए तुम पुनः हमारे पास आ जाओ ।' [इस प्रकार अजीगर्त के कहने पर] उन शुनःशेप ने [गाथा में उत्तर देते हुए] कहा—हे तात आपके हाथ में [मेरे वधार्थ गृहीत] तलवार सभी ने देखी है जिसे कोई [नीच] शूद्र भी नहीं लेता [अर्थात् ऐसे क्रूर कर्म को आपने किया है जिसे कोई भी लौकिक जन नहीं करते] । हे अङ्गिरा गोत्र में उत्पन्न तात, आपने तो मेरे निमित्त तीन सौ गाएँ भी प्राप्त कर ली हैं ।

पुनरप्यजीगर्तशुनःशेपयोरुक्तिप्रत्युक्ती दर्शयति—

स होवाचाजीगर्तः सौयवसिः –

तद्वै मा तात तपति, पापं कर्म मया कृतम् ।

तदहं निह्नुवे तुभ्यं प्रतियन्तु शता गवामिति ॥

स होवाच शुनःशेपः —

यः सकृत्पापकं कुर्यात् कुर्यादेनत्ततोऽपरम् ।

नापागाः शौद्रान्न्यायादसंधेयं त्वया कृतमिति ॥ इति ।

१ 'अद्राक्षु' इति वा पाठः शाङ्खायनश्रौतसूत्रे ।

२. शाङ्खा० श्रौ० सू० 'अलिप्सत' इति वा पाठः ।

शुन शेपेनोपालब्धोऽजीगर्तः स्वकीयमनुतापं दर्शयितुं काचिद्गाथामेवमुवाच—हे तात पितृवदुपलालनीय शुन शेप 'मया यत्पापं कृत' तदेव मा तपति' तदेव मा मनसि सतप्तं करोति। 'अहं' तत्पापं 'निह्नुवे' परिहरामि। गवा शतानि पूर्वं मया गृहीतानि त्रीणि यानि तानि तुभ्य त्वदर्थं प्रतियन्तु' प्रत्येकमेव प्राप्नुवन्तु।[1] इतरयो पुत्रयोर्गावो मा भूवंस्त्वयैव सर्वा सन्त्विति। तत स शुन शेपो गाथया प्रत्युत्तर ददौ। 'य ' पुमान् धर्मशास्त्र भीतिरहित' सकृत्पापक कुर्यात्' स पुमास्तत पापादन्यद् 'एनत्' पाप तदभ्यासवशात् कुर्यादेव। त्व तु 'शौद्रान्न्यायात्' नीचजातिसम्बन्धिन क्रूरादाचरणात् 'नापागा' अपगतो न भवसि। 'असधेय' प्रतिसधानरहित पाप त्वया कृतमित्येषा शुन शेपस्य प्रत्युक्ति ॥

सूयवस के पुत्र उन अजीगर्त ने शुन शेप से कहा—'हे पितृवत् लालन पालन के योग्य शुन शेप ! मैंने जो पाप कर्म किया है वह मेरे मन को सतप्त कर रहा है। मैं उस पाप का निवारण करता हूँ। [जो तीन सौ गाएँ ली गई है वह] सैकड़ों गाएँ तुम्हारे लिए होवें।' तब उन शुन शेप ने इस प्रकार कहा—'जो [धर्मशास्त्र के भय से रहित] एकबार पाप कर सकता है। वह व्यक्ति [अभ्यासवशात्] उस [पाप] से अन्य पाप भी कर सकता है। अत. नीच जाति से सम्बन्धित क्रूर कर्म से आप निवृत्त नहीं हो सकते। क्योंकि, आप द्वारा बिना सोचे विचारे कार्य किय गया है।'

अथ विश्वामित्रकृत्य दर्शयति –

असंधेयमिति ह विश्वामित्र उपपपाद, स होवाच विश्वामित्र —

भीम एव सौयवसि. शासेन विशिशासिषु.।
अस्थान्मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रतामिति ॥ इति।

'असधेयम्' प्रतिसमाधेय पापमिति शुन शेपेन यदीरित तदतदप्रतिसमाधेयत्व विश्वामित्र 'उपपपाद' युक्तिमिरुपपादितवान्। तदुपपादनार्थमेव विश्वामित्र इमा गाथामुवाच—सूयवसस्य पुत्रोऽजीगर्तो भीम एव भयहेतुरेव सञ्शासन हस्तगतखड्गन स विशिशासिषुरस्थाद् विशसनकर्तुमिच्छुरवस्थितवान्। अतो हे शुन शेपैतस्य पापिष्ठस्य पुत्रो मा भू किंतु ममैव पुत्रतामुपेहि ॥

'हाँ, [इस पाप की] निवृत्ति नहीं हो सकती'—इस प्रकार [निम्न युक्तियों से] विश्वामित्र ने उपपत्ति दी। उन विश्वामित्र ने कहा—'जब सूयवस का पुत्र यह [अजो-

१ 'विदस्मरणमस्ति 'पाप कृत्वाभितप्तस्य तस्मात् पापात् प्रमुच्यते' इति। सते वदामि हे तात दुश्चरितम् मा तपति यत्पाप कर्म मया कृत तदह निह्नुवे तुभ्यम्, तुभ्य क्षमापयामि। प्रवियन्तु गवा त्रीणि शतानि।' इति शाङ्खायनश्रौतसूत्रे आनर्तीयभाष्य ।

गर्त] हाथ में खड्ग लिए [तुम्हें] मारने को उद्यत था तो वह उस समय बड़ा ही भयानक लगता था। अतः हे शुन शेप तुम इस [प्रकार के पापिष्ठ] के पुत्र न बनो। किन्तु मेरे ही पुत्र बनो।'

अथ शुन शेपविश्वामित्रयोरुक्तिप्रत्युक्ती दर्शयति—

स होवाच शुन शेप —

स वै यथा नो ज्ञपयाऽऽराजपुत्र तथा वद।
यथैवाऽऽङ्गिरस सन्नुपेया तव पुत्रतामिति॥

स होवाच विश्वामित्र —

ज्येष्ठो मे त्व पुत्राणा स्यास्तव श्रेष्ठा प्रजा स्यात्।
उपेया दैव मे दाय तेन वै त्वोपमन्त्रये, इति॥ इति।

विश्वामित्रेणैव बोधित शुन शेप पुनरपि गाथया विश्वामित्र प्रत्येवमुवाच अथ विश्वामित्रो जन्मना क्षत्रिय सन् स्वकीयेन तपोमहिम्ना ब्राह्मण्य प्राप्तवानित्येव तद्वत्ता त सूचयितु हे राजपुत्रेति सबोधितवान्। स वै तथाविधो राजजातीय एव सन् 'यथा' येन प्रकारेण 'न' अस्मानि सर्वान् समन्ताज्ज्ञपय ब्राह्मणत्वेन ज्ञापय तथैवास्मद्विषयेऽपि त्व वद। कथ वदितव्यमिति? तदुच्यते अहमिदानीमङ्गिरोगोत्र सस्तत्परित्यागेन तव पुत्रत्व येनैव प्रकारेणोपेया तथैवानुगृहाणेति शेष। एतद्वाक्यमभिप्राय पूर्वं सक्षिप्य दर्शित —

'पुराऽस्मान् नृप विप्र तपसा कृतवानसि।
एवमाङ्गिरस मा त्व वैश्वामित्रमृषे कुरु॥ इति।

ततो विश्वामित्रो गाथया प्रत्युत्तरमुक्तवान्। हे शुन शेप त्व मे पुत्राणा मध्य ज्येष्ठ स्या ज्येष्ठो भव। तव पुत्रादिरूपा प्रजाऽपीतरस्या श्रेष्ठा स्यात्। मे मह्य विश्वामित्राय दैव' देवै प्रसन्नैर्दत्त दाय' पुत्रत्वरूप लाभम् 'उपया' प्राप्नुहि। तेन वै तेनैव प्रकारेण त्वोपमन्त्रये' त्वा पुत्रत्वेन व्यवहरामि॥

उस शुन शेप ने कहा—'हे राजपुत्र! कहिए, जैसा आपने कहा है वैसे [अर्थात् उस प्रकार के राजजातीय होकर आपने जैसे ब्राह्मणत्व प्राप्त किया उस प्रकार से] हम अङ्गिरा गोत्र में उत्पन्न होकर कैसे आपकी पुत्रता प्राप्त करें? तब उन विश्वामित्र ने कहा—हे शुन शेप, तुम मेरे पुत्रों में ज्येष्ठ हाओ। तुम्हारी पुत्र रूप प्रजा भी श्रेष्ठ होए। मुझ विश्वामित्र के लिए देवों के द्वारा प्रसन्नता से दिए गए [पुत्रत्वरूप] उत्तराधिकार को तुम प्राप्त करो। उसी प्रकार से तुम्हें मैं पुत्रत्व रूप में आमन्त्रित करता हूँ।'

पुनरपि शुनःशेपविश्वामित्रयोर्वृत्तान्तं दर्शयति—

स होवाच शुनःशेपः—

सञ्ज्ञानानेषु वै ब्रूयात् सौहार्द्याय मे श्रियै ।
यथाऽहं भरतऋषभोपेयां तव पुत्रतामिति ॥

अथ ह विश्वामित्रः पुत्रानामन्त्रयामास—

मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः ।
ये के च भ्रातरः स्थ नास्मै ज्यैष्ठ्याय कल्पध्वमिति ॥ इति ।

विश्वामित्रेण प्रलोभितः शुनःशेपः स्वकार्यदार्ढ्यार्थं गाथयैवमुवाच । सञ्ज्ञानानेषु मद्विषयैकमत्यं प्राप्तेषु त्वदीयपुत्रेषु सर्वोऽपि मां ब्रूयात् । ज्येष्ठभ्रातृत्वेन व्यवहरतु । तच्च मे मम सौहार्द्याय भ्रातृभिरितरैः स्नेहातिशयाय श्रियै धनलाभाय च सम्पद्यते । हे भरतऋषभ भरतवंशश्रेष्ठ विश्वामित्राहं तव पुत्रतां यथोपेयां तथैवैतेषां पुत्राणामग्रेऽनुगृहाणेति शेषः । ततो विश्वामित्र इतरान् पुत्रानाहूय गाथयैवमाज्ञापितवान्—यो मधुच्छन्दा नाम[1] यश्चर्षभो, योऽपि रेणुः, योऽप्यष्टकः, एते मुख्याः[2] हे पुत्रकाः 'शृणोतन' मदीयामाज्ञां शृणुत । 'ये' केचिद्यूयं सर्वे भ्रातरः स्थ ते सर्वेऽपि 'अस्मै' शुनःशेपादस्मादपि 'ज्यैष्ठ्याय न कल्पध्वं' ज्येष्ठत्वाभिमानं मा कुरुत । किन्त्वसावेव युष्माकं मध्ये ज्येष्ठो भूत्वाऽवतिष्ठतामिति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायास्तृतीयाध्याये (त्रयस्त्रिंशाध्याये) पञ्चमः खण्डः ॥५॥ (१७) [२४०]

तब शुनःशेप ने कहा—'हमारे विषय में एकमत हुए अपने पुत्रों से मेरे सौहार्द और धनलाभ के लिए आप उन्हें अवगत करा दें । हे भरत वंश में श्रेष्ठ ! जैसे मैं आपकी पुत्रता प्राप्त करूँ, वैसे आप मुझे पुत्रों के सामने स्वीकार करें । तब विश्वामित्र ने अपने पुत्रों को बुलाया—'हे मधुच्छन्दा, ऋषभ, रेणु और अष्टक [आदि मुख्य] पुत्रो !

---

१. अग्निमीळे इत्यादि प्रथमं मण्डलं प्रति ।
शतर्चिनस्तु विज्ञेया ऋषयः सुखसिद्धये ॥
तेषां पूर्वो मधुच्छन्दा, मेधातिथिरनन्तरः ।
शुनःशेपस्तृतीयोऽयं, हिरण्यस्तूप उत्तरः ॥ इत्यादि आर्षानु० १.२,३ ।

२. ऋक्संहिता-सूक्तेषु येषाञ्चिद् द्रष्टारोऽमी वैश्वामित्राः श्रूयन्ते आर्षानुक्रमण्यादितः । तत्र मधुच्छन्दसः १.१–१०,९.१ । ऋषभस्य ३.१३,१४,९.७१ । रेणोः ९.७०, १०.८९ । अष्टकस्य १०.१०४ । प्रजापतेः ३.३८,५४–५६ । पूरणस्य १०.१६० । कतस्य ३.१७,१८ । देवरातस्य (शुनःशेपस्य) १.२४–३० ।

[मेरी आज्ञा] सुनो, और जो कोई भी तुम्हारे भाई हैं वे सभी इन [शुनःशेप] से अपने को ज्येष्ठ न समझें [किन्तु तुम्हारे मध्य यही ज्येष्ठ होए]।

॥ इस प्रकार तैंतीसवें (तृतीय) अध्याय की पाँचवें खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥५॥

## अथ षष्ठः खण्डः

अथ विश्वामित्रपुत्राणां वृत्तान्तमाह—

**तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः ॥ इति ।**

मधुच्छन्दोनामकः कश्चित्पुत्रो मध्यमस्ततोऽपि ज्येष्ठाः कनिष्ठाश्च प्रत्येकं पञ्चाशत्संख्याका इत्येवमेकशतं तस्य पुत्राः ॥

VII १८ [XXXIII ६] उन विश्वामित्र ऋषि के सौ पुत्र थे। पचास मधुच्छन्दा से बड़े और पचास छोटे।

तेषां मध्ये ज्येष्ठानां वृत्तान्तमाह—

**तद्ये ज्यायांसो न ते कुशलं मेनिरे तानन्वनुव्याजहारान्तान् वः प्रजा भक्षीष्टेति त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो वैश्वामित्रा दस्यूनां भूयिष्ठाः ॥ इति ।**

'तत्' तेष्वेकशतसंख्याकेषु पुत्रेषु मध्ये 'ये' मधुच्छन्दसो ज्येष्ठाः पञ्चाशत्संख्याकाः सन्ति 'ते' शुनःशेपस्य विश्वामित्रपुत्रत्वं 'कुशलं न मेनिरे' इदं समीचीनमित्येव नाङ्गीकृतवन्तः। तान्ज्येष्ठान् पञ्चाशत्संख्याकाननुलक्ष्य विश्वामित्रो व्याजहार व्याहरणं शापरूपं वाक्यमुक्तवान्। हे ज्येष्ठपुत्रा युष्माकं मदीयाज्ञातिलङ्घिनां प्रजाः पुत्रादिकाः अन्तान्भक्षीष्ट चण्डालादिरूपान्नीचजातिविशेषान् भजतामिति। त एते शप्ताः सन्तोऽन्ध्रत्वादि पञ्चविधनीचजातिविशेषा भवन्ति। 'इति' शब्दस्य तत्प्रदर्शनार्थत्वादन्येऽपि नीचजातिविशेषाः सर्वे विवक्षिताः। उद्गतोऽन्तः उदन्तोऽत्यन्तनीचजातिस्तत्र भवा 'उदन्त्या'। ते बहवोऽनेकविधा वैश्वामित्रा विश्वामित्रसन्ततिजा दस्यूनां तस्कराणां मध्ये भूयिष्ठा अत्यधिकाः ॥

उन [एक सौ पुत्रों] में जो मधुच्छन्दा से बड़े थे उन्होंने [शुनःशेप का विश्वामित्र का पुत्र होना] स्वीकार नहीं किया। तब विश्वामित्र ने [उन पचास ज्येष्ठ पुत्रों] को लक्ष्य करके इस प्रकार [शाप रूप] वचन कहे—'हे ज्येष्ठ पुत्रो! तुम्हारी पुत्रादि प्रजाएँ चाण्डाल आदि रूपों वाली नीच जाति की होएँ।' वे [अभिशप्त हुए] ये अन्ध्र, पुण्ड्र, शबर, पुलिन्द और मूतिब नामक पाँच प्रकार की नीच जातियाँ हुईं और वे बहुत प्रकार के दस्युओं के मध्य अत्यन्त नीच जाति के लोग विश्वामित्र की सन्तान हुईं।

ज्येष्ठाना वृत्तान्तमुक्त्वा मधुच्छन्दसस्तत्कनिष्ठाना च वृत्तान्त गाथया दर्शयति—

स होवाच मधुच्छन्दा पञ्चाशता सार्धं—

यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम्।
पुरस्त्वा सर्वे कुर्महे त्वामन्वञ्चो वय स्मसीति ॥ इति।

कनिष्ठपुत्राणा पञ्चाशता सह मधुच्छन्दोनामक स मध्यम पुत्र शुन शेप प्रत्येवमुवाच। हे शुन शेप न 'अस्माक पिता विश्वामित्रो य कार्यं त्वदीयज्येष्ठपुत्रत्वरूपं सजानीते सम्यग्जानात्यङ्गीकरोति तस्मिन् कार्ये वय तिष्ठामहे तत्कार्यमङ्गीकुर्मं। सर्वे वय 'त्वा' शुन शेपनामान त्वा 'पुरस्कुर्महे' पुरस्कृत्य ज्येष्ठ कृत्वा वर्तामहे। 'त्वामन्वञ्च' शुन शेप मनुगच्छन्त स्मसि' भवाम इत्युक्तवान् ॥

किन्तु पचास [कनिष्ठ भाइयों] के साथ में उन मधुच्छन्दा ने कहा—'हे शुन शेप, हमारे पिता विश्वामित्र ज्येष्ठ पुत्रत्व रूप तुम्हारे जिस कार्य को भलीभाँति जानकर अङ्गीकार करते हैं उस कार्य को हम सभी स्वीकार करते हैं। हम सब [शुन शेप नामक] तुम्हे [ज्येष्ठ रूप में] आगे करके प्रवर्तित हैं और तुम्हारा हो अनुसरण करते हुए रहेंगे।'

विश्वामित्रवृत्तान्त दर्शयति—

अथ ह विश्वामित्र प्रतीत• पुत्रांस्तुष्टाव ॥ इति।

अथ मधुच्छन्द सहिताना पञ्चाशत्कनिष्ठपुत्राणा शुन शेपविषयज्येष्ठपुत्रत्वाङ्गीकारानन्तर स विश्वामित्र 'प्रतीत' तेषु प्रत्यय मदनुकूला इति विश्वास प्राप्त प्रोप्या 'पुत्रान्' गाथाभिस्तुष्टाव ॥

तब विश्वामित्र ने इस [मधुच्छन्दा सहित पचास कनिष्ठ पुत्रों द्वारा शुन शेप को ज्येष्ठ मान लेने] के बाद [उन पुत्रों में विश्वास प्राप्त करके] प्रसन्न होकर [पाँच गाथाओं से उन] पुत्रों की स्तुति की।

तत्र प्रथमा गाथामाह—

ते वै पुत्रा· पशुमन्तो वीरवन्तो भविष्यथ।
ये मान मेऽनुगृह्णन्तो वीरवन्तमकर्त मा ॥ इति।

हे मधुच्छन्द प्रमुखा कनिष्ठपुत्रा 'ये' यूय 'मे मान' मदीय मतम् 'अनुगृह्णन्त' आनुकूल्येन स्वीकुर्वन्तो 'मा' विश्वामित्र 'वीरवन्त' स्वपर्मशूरपुत्रयुक्तम् 'अकर्त' कृतवन्त'। 'ते वै' तादृशा यूय बहुविधपशुयुक्ता बहुविधानुकूलपुत्रयुक्ताश्च भविष्यथ ॥

'हे मधुच्छन्दा प्रमुख कनिष्ठ पुत्रो! जो तुम लोगों ने मेरे अभिमत के अनुकूल स्वीकार करते हुए मुझ [विश्वामित्र] को शूरवीर पुत्र युक्त किया है ऐसे तुम सब बहुविध पशु धन से युक्त और बहुत से अनुकूल पुत्रों से युक्त होओ।'

द्वितीयां गाथामाह—

पुर एत्रा वीरवन्तो देवरातेन गाथिना[1]।
सर्वे राध्या स्थ पुत्रा एष व सद्विवाचनम् ॥ इति ।

गाथिनशब्दो विश्वामित्रस्य पितरमाचष्टे । हे 'गाथिना' गाथिपौत्रा 'पुर एत्रा' युष्माक पुरतो गन्त्रा मुख्येन देवरातेन सह यूय सर्वे 'वीरवन्त' श्रेष्ठपुत्रयुक्ता 'राध्या' 'स्थ' सर्वे पुरुषैराराधनीया पूज्या भवथ । हे 'पुत्रा' मधुच्छन्द प्रभृतय । 'एष' देवरातो 'व' युष्माक 'सद्विवाचन सन्मार्गस्य विशेषतोऽध्यापन करिष्यतीति शेष ॥

हे गाधि के पुत्रो ! अग्रगामी देवरात के सान्निध्य में तुम सभी वीरवान् पुत्रों से युक्त होकर सभी पुरुषों से आराध्य होओ । हे मधुच्छन्दा प्रभृति पुत्रो ! यह देवरात तुम्हें सन्मार्ग का विशेष रूप से अध्यापन करेगा ।'

तृतीया गाथामाह –

एष व कुशिका वीरो देवरातस्तमन्वित ।
युष्मांश्च दाय म उपेता विद्या यामु च विद्मसि ॥ इति ।

हे कुशिका कुशिकनाम्नो मत्पितामहस्य सम्बन्धिनो मधुच्छद प्रभृतय एष देवरातो वो युष्माक ज्येष्ठभ्रातेति शेष । त देवरात यूयमन्वितानुगता भवत । मे मदीय 'दाय' धन युष्मांश्चोपेता प्राप्स्यति । चकाराद्देवरात च । यामु च यामपि काचिद् वेदशास्त्रादिरूपा 'विद्यां विद्मसि' वय जानीम , साऽपि युष्मानुपेता प्राप्स्यति ॥

'हे कुशिक [नामक मेरे पितामह] से सम्बन्धित पुत्रो, यह देवरात [तुम्हारा बड़ा भाई है] उस वीर देवरात का तुम सब अनुगमन करो । मेरा उत्तराधिकारी होकर वह तुम्हे प्राप्त करेगा और हम जो कुछ भी [वेदशास्त्र आदि] विद्या को जानते हैं वह भी तुमसे युक्त होकर प्राप्त करेगा ।

चतुर्थी गाथामाह—

ते सम्यञ्चो वैश्वामित्रा सर्वे साक सरातय ।
देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिना ॥ इति ।

हे वैश्वामित्रा विश्वामित्रस्य मम पुत्रा ये गाथिना गाथिपौत्रास्ते यूय सर्वेऽपि सम्यञ्च समीचीनबुद्धयो ये साक देवरातेन सार्ध सरातयो रातिर्धनसंपत्तिस्तया युक्ता सन्तो देवराताय मदीयश्रेष्ठपुत्रस्य देवरातस्य 'धृत्यै धारण युष्मत्पोषणं 'श्रैष्ठ्याय' युष्माक मध्ये श्रेष्ठत्व च तस्थिरेऽङ्गीकृतवन्त ॥

हे मुझ विश्वामित्र के पुत्रो और हे गाथि के पौत्रो ! तुम सभी समीचीन बुद्धि वालों ने देवरात के साथ धन सम्पत्ति से युक्त होकर मेरे श्रेष्ठ पुत्र देवरात के संरक्षण में अपना पालन पोषण एवं श्रेष्ठत्व अङ्गीकार किया है ।

---

१ 'रेणूना वैश्वामित्रगाथिनरेणवेति'–इति आश्व० श्रौ० १२ १४ ६ ।

पञ्चमी गाथामाह

अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः ।
जह्नूना चाऽऽधिपत्ये दैवे वेदे च गाथिनाम् ॥ इति ।

इकस्मरण इति धातुः । अधीयत स्मृतिकारैर्महर्षिभिः स्मर्यते । कथमिति तदुच्यते । अयं देवरातो द्व्यामुष्यायणत्वादुभयोरजीगर्तविश्वामित्रयोः सम्बन्धिनी ये रिक्थे धने तयोर्ऋषिर्द्रष्टा तद्‌द्वयमर्हतीत्यर्थः । अजीगर्तस्य कूटस्थः ऋषिर्जह्नुसंज्ञकस्तस्य वंशे जाताः सर्वे जह्नवस्तेषां चाऽऽधिपत्ये स्वामित्वे देवरातो योग्य । तथा दैवे देवसम्बन्धिनि यागादिकर्मणि वेदे च मन्त्ररूपे समर्थः । गाथिनामस्मत्पितृवंशोत्पन्नानां च सर्वेषामाधिपत्ये योग्य ॥

इस प्रकार स्मृतिकारों के द्वारा कहा जाता है कि यह देवरात दोनों ऋषियों [अजीगर्त और विश्वामित्र] के धन का उत्तराधिकारी है। जह्नु ऋषि के वंश में उत्पन्न होने वालों में स्वामित्व का और हमारे पिता गाथि के वंश में उत्पन्न होने वालों के [विद्या रूप] स्वामित्व का यह देवरात योग्य है और दैव अर्थात् देव सम्बन्धी [यज्ञयागादि] कर्मों में और [मन्त्र रूप] वेद में भी यह समर्थ है।

उक्तमुपाख्यानमुपसंहरति—

तदेतत्परऋक्शतगाथं शौनःशेपमाख्यानम् ॥ इति ।

'कस्य नून' मित्यारभ्यन्ता सप्ताधिकनवतिसंख्याका ऋचः,[1] 'त्व न.' 'स त्वम्' इत्यादिकास्तिस्र ऋचः,[2] एवमृचां शतम् । 'पर.' शब्दोऽधिकवाची । पूर्वोक्तादृक्शतात् परोऽधिका एकत्रिंशत्संख्याकाः 'य न्विमम्'–इत्याद्या गाथाः[3] यस्मिन्नाख्याने तदेतत् 'परऋक्शतगाथम्' । शुनःशेपेन दृष्टाः सप्ताधिकनवतिसंख्यायुक्ता ऋचो याः सन्ति, अन्येन दृष्टास्तिस्र ऋचो याः सन्ति, ब्राह्मणे प्रोक्ता एकत्रिंशद्गाथाविशेषा याः सन्ति, तैः सर्वैरुपेतं 'हरिश्चन्द्रो ह वैधसः' इत्यादिक[4] सर्वं शुनःशेपविषयमाख्यानम् ॥

---

१. ऋक्संहितायां शुनःशेपेन दृष्टानि अष्टौ सूक्तान्याम्नातानि । तत्र प्रथममण्डलस्य पञ्चानुवाकात्मकानि सप्त, नवममण्डलीयमृतीयश्चैकम् । इह प्रथममण्डलीयानां ग्रहणमिष्टम्, तेषामेवात्र प्रतीकग्रहणादित समुल्लेखात् । तदत्र कस्य नूनमिति प्रथमसूक्तादिभाग. निधारयेति तु सप्तमसूक्तान्तभाग इति बोध्यम् । तदेव सू० १.२४ ऋ० + २. २१+३ १०+४ १३+५ ९+६ ७+७ २२=सङ्ख्याया ९७ ऋचो भवन्ति ।

२ तत्र त्व न इत्यस्याः ऋ० ४ १.४, स त्वमिति तदुत्तरस्यास्त्व वामदेवऋषिः तृतीयस्याः शुनश्शेपोऽमिरस्या (५ २ ७) कुमारो वृशो वामो वा ऋषी ।
कुमारश्चिद्र पैरस्मिन् कुमारो वा वृशोऽथवा ।
वृशो जार इति शेय उभौ वात्र समुच्चितौ ॥ इति तत्र 'आर्षानुक्रमणी' ५ ३ ।

३. य न्विमं पुत्रमिच्छन्तीति द्रष्टव्यम् इतः पूर्वम् ११४० पृष्ठे ।

४. द्र० इतः पूर्वम्, ११४० पृ० ।

['कस्य नून' से लेकर 'निधारय' तक सत्तानवें ऋचाएँ हैं। 'स्व न' और 'स त्व' आदि तीन ऋचाएँ मिलकर सौ ऋचाएँ हुई। इसके अतिरिक्त 'य न्विम' आदि इकतीस गाथाएँ मिलकर] शुन शप का आख्यान सौ ऋचाओं से अधिक में एव गाथाओं में कहा गया है।

तस्याऽऽख्यानस्य राजसूययज्ञे विनियोग दर्शयति—

**तद्धोता राज्ञेऽभिषिक्तायाऽऽचष्टे ॥ इति ।**

राजसूयक्रतावभिषवनीयाख्ये कर्मणि यदा राजाभिषिक्तो भवति, तदानी तस्मै राज्ञे 'तत्' आख्यान होता कथयत्[१] ॥

राजसूय क्रतु में राजा के अभिषेक के समय होता इस आख्यान को राजा से कहता है।

तत्रेतिकर्तव्य दर्शयति—

**हिरण्यकशिपावासीन आचष्टे, हिरण्यकशिपावासीन प्रतिगृणाति। यशो वै हिरण्य, यशसैवैन तत्समर्धयति ॥ इति[२] ।**

होता यदाख्यान कथयति, तदानी 'हिरण्यकशिपौ' सुवर्णनिर्मितसूत्रैर्निष्पादिते कशिपौ[३] स होतोपविशेत्। तदाख्यानमध्येऽध्वर्युश्च हिरण्यकशिपावासीनो वक्ष्यमाण प्रतिगर' ब्रूयात्। हिरण्यस्य यशोहेतुत्वात् यशस्त्वम्। तथा सति 'एन' राजान यशसैव समृद्ध करोति ॥

[होता जब इस आख्यान को कहता है तब उसे] सुवर्णनिर्मित सूत्र से बने हुए आसन पर बैठकर आख्यान कहना चाहिए। उस आख्यान के मध्य अध्वर्यु भी सुवर्ण निर्मित सूत्र से बने हुए आसन पर बैठकर प्रतिगरण करता है। वस्तुत सुवर्ण यश है। अत वह इस प्रकार इस [राजा] को यश से ही समृद्ध करता है।

अध्वर्युणा प्रयोक्तव्य प्रतिगरविशेष दर्शयति—

**ओमित्यृच• प्रतिगर, एव तथेति गाथाया, ओमिति वै दैव, तथेति मानुष, दैवेन चैवैन तन्मानुषेण च पापादेनस प्रमुञ्चति ॥ इति[४] ।**

---

१ 'अथ राजसूया'—इति प्रकृत्य गोत्रमाश्वलायनेन सस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शौन शेपमाचक्षीत'— इति आश्व० श्रौ० ९ ३ ९।

२ एव एव पाठ आश्वलायनेन समुद्धृत । द्र० आश्व० श्रौ० ९ ३ १०।

३ कशिपु' आसनम्, हिरण्यस्य कशिपु हिरण्यकशिपु। इति शाङ्खा० श्रौ० सूत्रे (१५ २७) आनर्तीयभाष्य ।

४ उद्धृतश्चैव पाठ आश्व० श्रौ० ९ ३ ११,१२।

होत्रा प्रयुक्ताया एकैकस्या ऋचोऽन्तेऽध्वर्योरोमित्येतादृश प्रतिगरो भवति[1]। ओमित्येतच्छन्दोरूप 'दैव' देवैरङ्गीकारार्थे प्रयुज्यते। तत्तथेत्यन्त (तथेति) 'मानुष' मनुष्या अङ्गीकारे तथेतिशब्द प्रयुञ्जते[2]। 'तद्' तेन प्रतिगरेण दैवेन मानुषेण चाध्वर्यु 'एन' राजान 'पापात्' ऐहिकादपकीर्तिरूपात् 'एनस' नरकहेतोश्च 'प्रमुञ्चति' प्रमुक्त करोति ॥

[होता द्वारा प्रयुक्त] एक एक ऋचा के अन्त में [अध्वर्यु का] 'ओम'—इस प्रकार प्रतिगर होता है और इसी प्रकार गाथा के प्रयुक्त होने पर 'तथा' 'ऐसा ही हो'—यह प्रतिगर होता है। वस्तुत 'ओम्'—यह दैवी है [अर्थात् यह देवो के अङ्गीकारार्थ प्रयुक्त होता है और 'तथा'—मनुष्यो द्वारा अङ्गीकारार्थ प्रयुक्त है अत ] 'तथा'—यह मानुषी है। इस प्रकार उस दैवी और मानुषी प्रतिगर के द्वारा [अध्वर्यु] इस [राजा] को [अपकीर्ति रूपी ऐहिक] पाप से और [नरक रूपी आमुष्मिक] पाप से प्रकृष्ट रूप से मुक्त करता है।

प्रत्यर्थत्वेनोपाख्यान विधाय क्रतुनिरपेक्षपुरुषार्थत्वेन विधत्ते—

तस्माद्यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौन शेपमाख्यान, न हास्मिन्नल्प चनैन परिशिष्यते[3] ॥ इति।

यस्मादुपाख्यान पापप्रशमनहेतु 'तस्माद्' अयजमानोऽपि राजसूयक्रतुरहितोऽपि 'राजा विजिती' यदि विजयोपेत स्यात् तदानीमप्येतच्छौन शेपमाख्यानम् 'आख्यापयेत्' तस्य

1 'एवम् ऋचि नाय प्रतिगर प्रतिगरावयवो वा, तस्मादेवमर्थ। यथा 'ओम्' शब्द ऋक्षु प्रतिगरो भवति, एवमेव 'तथा' शब्दो गाथासु प्रतिगरो भवति। अस्मिन्नाख्याने 'यस्य नूनम्' इत्येवमाद्या ऋच। 'य िवम पुत्रमिच्छन्ति' इत्येवमाद्या गाथा। सर्वत्र च ब्राह्मणजा श्लोका गाथा इत्युच्यते। ऋचा गाथाना प्रतिगरविधानाद् ब्राह्मणवाक्येषु प्रतिगरो नास्ति। 'हरिश्चन्द्रो ह वैधस' इत्यारभ्य 'स ह नारद पप्रच्छ' इत्येवमन्तमुक्त्वाऽऽङ्गिरसाय 'य न्विमम्' इत्यारभ्य नारदस्येवमन्तमुक्त्वा वाऽवसिते तथेत्यध्वर्यु प्रतिगृणाति। सर्वत्र च गाथान्त ऋगन्ते च प्रतिगरो नान्यत्र भवति। तत्र 'स एकया पृष्टो दशभि प्रत्युवाच' इति ब्राह्मणवाक्यमुक्त्वाऽऽङ्गिरसाय दश गाथा ब्रूयात्। दशसूत्वश्च प्रतिगृणाति एव सर्वत्राऽऽवृष्टे प्रतिगृणाति च।' इति आश्व० श्रौ० सूत्रे नारायण।

2 दैवशब्देन वैदिकमुच्यते। ओमिति=वैदिकवचनमिदमनुग्राहकमित्यर्थ। तथेति मानुष=मानुषमिति लौकिकमिदमनुग्राहकवचनमित्यर्थ। ताभ्या लौकिकवैदिकाभ्यामाभ्या शब्दाभ्या प्रतिगरभूताभ्यामेन राजान पापादस्मात् प्रमुञ्चति। 'पाप'शब्देनात्र महत्पापमुच्यते, 'एन'—शब्देनाल्पम्। महत पापादल्पाच्च पापात् प्रमुञ्चति—इत्यर्थ। इति तत्रैव नारायण।

3 आश्व० श्रौ० (९ ३ १३) एव एव पाठोऽस्ति।

राजा यः कश्चिद्ब्राह्मण उपाख्यानं ब्रूयात्। तथा सति 'तस्मिन्' राजनि 'अल्प चन' किंचिदपि 'एन.' पाप 'न ह वै परिशिष्यते' सर्वं पाप नश्यतीत्यर्थः ॥

[क्योंकि यह आख्यान् पाप का नाशक है] अत [राजसूय क्रतु से रहित] अयजमान भी जो कोई राजा यदि विजयी हो[1] तो उसे भी इस शुन शेप का आख्यान कहलाना चाहिए। इस प्रकार करने से उसमें पाप का लेशमात्र भी शेष न रहेगा अर्थात् राजा में सभी पाप नष्ट हो जाते हैं।

आख्यानप्रयुक्तां दक्षिणा विधत्ते—

सहस्रमाख्यात्रे दद्याच्छत प्रतिगरित्र एते चैवाऽऽसने श्वेतश्चाश्वतरीरथो होतु.[2] ॥ इति।

योऽयमाख्याता होता, तस्मै ऋत्वर्थदक्षिणामन्तरेणाख्यानप्रयुक्ता दक्षिणा गोसहस्ररूपा दद्यात्। 'प्रतिगरित्रे' अध्वर्यवे गोशत दद्यात्। य हिरण्यकशिपुरूपे द्वे 'आसने' स्त, एते अपि ताभ्यामेव दद्यात्। अश्वतरीभ्यां स्त्रीणांनानियुक्ताभ्यामधिकशक्तिभ्या युक्तो रथ अश्वतरीरथ '। स च रजतेनालङ्कृतत्वाच्छ्वेत । सोऽपि तादृशो होतुर्देय ॥

उस वाचक [होता] के लिए [दक्षिणा रूप में] सहस्र गाएँ देनी चाहिए, और प्रतिगर कहने वाले [अध्वर्यु] के लिए सौ गाएँ देनी चाहिए। उन्हीं दोनों को वे [सुवर्णमय] आसन भी दे देना चाहिए। इसके अतिरिक्त होता को [चाँदी से अलंकृत] श्वेत और अत्यन्त शक्तिशाली अश्वों से युक्त रथ को भी देना चाहिए।

पूर्वमयमसयुक्त वक्ता विजयिनो राज्ञोऽभिहित । इदानी पुत्रकामानामपि सर्वेषामपि विधत्ते—

पुत्रकामाः हाप्याख्यापयेरल्लँभन्ते ह पुत्राल्लँभन्ते ह पुत्रान् ॥ १८ ॥ इति।

ये पुत्रकामा. सन्ति, ते 'ह' प्रसिद्धमतदुपाख्यानम् आख्यापयरन्' ब्राह्मणमुखाच्छृणुयुरित्यर्थं । ते पुत्राल्लँभन्ते । अभ्यासोऽध्यायसमाप्त्यर्थ ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया तृतीयाध्याय (त्रयस्त्रिंशाध्याये) षष्ठ खण्ड. ॥ ६ ॥ (१८) [२४१]

---

१. यस्मादाख्यानप्रतिगरणे सर्वस्मादेनस सप्रमुच्यते। तस्माद् यो राजा 'अविजितो' विजयासमर्थोऽप्ययजमानो राजसूयेन बहिरपि क्रतोराख्यापयतैवैतच्छौन शेपमाख्यानम्। इति आनर्तीयभाष्य । (शाखा० श्रौ० १५ २७)।

२. सहस्रमाख्यात्रे दद्याच्छत प्रतिगरित्रे यथास्वमासने'—इति आश्व०श्रौ० ९ ३ १४-१६।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तक श्रीवीरबुक्कभूपालसाम्राज्यधुरंधर-माधवाचार्यादिष्टतो श्रीमत्सायणाचार्येणविरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये ऐतरेयब्राह्मणे सप्तमपञ्चिकायां तृतीयोऽध्याय. (त्रयस्त्रिंशोऽध्याय) ॥३३॥

जो पुत्रों की कामना वाले हैं उन्हे भी शुनःशेप की कथा [ब्राह्मण के मुख से] सुनना चाहिए। इस प्रकार उन्हे पुत्रों की प्राप्ति होती है।

॥ इस प्रकार ऐतरेयब्राह्मण के सातवीं पञ्चिका के तृतीय (तैंतीसवें) अध्याय की डॉ० सुधाकर मालवीय कृत हिन्दी पूर्ण हुई ॥ ३ ॥

—·०·—

# अथ चतुर्थोऽध्यायः

## प्रथमः खण्डः

—: ० :—

# [अथ चतुस्त्रिंशोऽध्यायः

## प्रथमः खण्डः]

शौनःशेपप्रसङ्गेन या क्रिया राजकर्तृका ।
तद्विशेषविधानार्थमध्यायोऽत्र प्रवक्ष्यते ॥ १ ॥

तत्रादौ किंचिदुपाख्यानमाह –

**प्रजापतिर्यज्ञमसृजत यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येतां, ब्रह्मक्षत्रे अनु द्वय्यः प्रजा असृज्यन्त हुतादश्चाहुतादश्च, ब्रह्मैवानु हुताद. क्षत्रमन्वहुताद एता वै प्रजा हुतादो यद्ब्राह्मणा, अथैता अहुतादो यद्राजन्यो वैश्यः शूद्रः ॥ इति ।**

पुरा प्रजापतिर्ज्योतिष्टोमाख्यं यज्ञं सृष्ट्वा तदनन्तरं ब्राह्मणक्षत्रियजातिद्वयं तत ऊर्ध्वं हुतादश्चाहुतादश्चेत्युभयविधा प्रजा असृजत । तत्र ब्राह्मणजातिमेवानु तद्व्यक्तिभूता हुताद. सृष्टा । क्षत्रियजातिमनु तद्व्यक्तिसजातीया अहुताद प्रजा सृष्टा । ये ब्राह्मणा सन्त्येता. प्रजा आर्त्विज्यसद्भावाद्धुतशेषमदन्ति भक्षयन्तीति हुताद । ये राजन्यवैश्यशूद्रा एता. प्रजा आर्त्विज्याभावाद्धुतशेष न भक्षयन्तीत्यहुताद[1] । इत्थं यज्ञं चतुरो वर्णांश्च स प्रजापति. सृष्टवान् ॥

राजसूय क्रतु—

VII.19 [XXXI 1] प्राचीन काल में प्रजापति ने [ज्योतिष्टोम नामक] यज्ञ की सृष्टि की। यज्ञ की सृष्टि करने के बाद 'ब्राह्मण' और 'क्षत्रिय' इन दो जातियों की सृष्टि की। ब्राह्मण एवं क्षत्रिय जाति की सृष्टि के बाद दो प्रकार की प्रजाओं की सृष्टि की—एक तो हवि शेष का भक्षण करने वाली (हुताद) और दूसरी हवि शेष का भक्षण न करने वाली (अहुताद)। ब्राह्मण जाति के पीछे अर्थात् उन ब्राह्मणों से सम्बन्धित हुताद की [सृष्टि की] और क्षत्रिय जाति के पीछे अर्थात् उन क्षत्रियों से सम्बन्धित

---

1. तु० शत० ब्रा० ४ ५ २ १६ ।

अहुताद [हुतशेष का भक्षण न करने वालों] की [सृष्टि की]। जो ये ब्राह्मण हैं, वे ही ये प्रजाएँ [आर्त्विज्य के कारण] हुतशेष का भक्षण करती हैं और जो ये क्षत्रिय, वैश्य एवं शूद्र हैं वे [आर्त्विज्य के अभाव के कारण] हुतशेष का भक्षण नहीं करती हैं। [इस प्रकार यज्ञ और चारों वर्णों की प्रजापति ने सृष्टि की]।

अथ सृष्टस्य यज्ञस्य वृत्तान्तमाह—

ताभ्यो यज्ञ उदक्रामत् तं ब्रह्मक्षत्रे अन्वैतां, यान्येव ब्रह्मण आयुधानि तैर्ब्रह्मान्वैद्यानि क्षत्रस्य तैः क्षत्रमेतानि वै ब्रह्मण आयुधानि यद्यज्ञायुधान्यथैतानि क्षत्रस्याऽऽयुधानि यदश्वरथः कवच इषुधन्व ॥ इति।

स यज्ञ 'ताभ्यः' प्रजाभ्यः ऽपरक्त उत्क्रम्य दूरेऽगच्छत्। तं 'गच्छन्तं' यज्ञं ब्राह्मणजाति क्षत्रियजाती द्वे 'अन्वैतां' पश्चादगच्छताम्। ब्राह्मणस्य योग्यानि यान्यायुधानि तैः सह ब्राह्मणजातिर्यज्ञमन्वगच्छत्। क्षत्रियस्य योग्यानि यान्यायुधानि तैः सह क्षत्रियजातिर्यज्ञमन्वगच्छत्। यानि यज्ञायुधत्वेन शाखान्तरे श्रूयन्ते—स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि' इति[1], तान्येव ब्राह्मणजातेरुचितान्यायुधानि। योऽयमश्वयुक्तो रथो यश्च कवचो यदपि बाणयुक्तं धनुः, एतान्यपि क्षत्रियजातेरुचितान्यायुधानि ॥

[यज्ञ-सृष्टि का वृत्तान्त यह है कि वह] यज्ञ उन [प्रजाओं] से उपरत हो दूर चला गया। उस दूर जाते हुए यज्ञ के पीछे ब्राह्मण और क्षत्रिय—इन दो जातियों ने अनुगमन किया। ब्राह्मणों के योग्य जो आयुध थे, उन्हें लेकर ब्राह्मणों ने अनुगमन किया और क्षत्रियों के योग्य जो आयुध थे उन्हें लेकर क्षत्रियों ने अनुगमन किया। जो यज्ञ के [स्फ्य, कपाल, अग्निहोत्रहवणी, सूप, कृष्णाजिन, शम्या, उलूखल, मुसल और दृषद् एवं उपल आदि दस] आयुध हैं वे ही ब्राह्मणों के [उचित] आयुध हैं और जो अश्व युक्त रथ हैं और जो कवच एवं बाण युक्त धनुष हैं वे ही क्षत्रियों के [उचित] आयुध हैं।

यज्ञमनुगच्छन्त्योर्ब्राह्मणक्षत्रियजात्योर्मध्ये ब्राह्मणजातेर्यज्ञप्राप्तिं दर्शयति—

तं क्षत्रमनन्वाप्य न्यवर्तताऽऽयुधेभ्यो ह स्मास्य विजमानः पराङेवैत्यथैनं ब्रह्मान्वैत्, तमाप्नोत्, तमाप्त्वा परस्तान्निरुध्यातिष्ठत् स आप्तः परस्तान्निरुद्धस्तिष्ठञ्ज्ञात्वा स्वान्यायुधानि ब्रह्मोपावर्तत; तस्माद्धाप्येतर्हि यज्ञो ब्रह्मण्येव ब्राह्मणेषु प्रतिष्ठितः ॥ इति।

'क्षत्रं' क्षत्रियजातिः 'तं' यज्ञम् 'अनन्वाप्य' अनुगमनेन प्राप्तिमलब्ध्वा, तस्मादनुगमनान्न्यवर्तत। यज्ञोऽस्य क्षत्रियस्याऽऽयुधेभ्यो धनुरादिभ्यो 'विजमानः' भीतिं प्राप्नुवन्

---

1. तै० सं० १.६.८.२,३।

'पराङेव' पुनरावृत्तिरहित एव 'एति स्म' पलाय्य दूरे गतः । 'अथ' अनन्तरम् 'एनं' यज्ञं 'ब्रह्म' ब्राह्मणजातिः 'अन्वैत्' अन्वगच्छत् । अनुगम्य च 'तं' यज्ञमाप्नोति स्म । आप्त्वा च 'तं' यज्ञमतिक्रम्य 'परस्तात्' परभागे 'निरुध्य' यज्ञगमनं प्रतिबुध्यातिष्ठत् । अत्र यज्ञ आह , तया ब्राह्मणजात्या प्राप्तः, 'परस्तात्' परभागे निरुद्धः गमनात्प्रतिबद्धः । तत्रैव तिष्ठन् ब्राह्मणस्य हस्ते स्फ्यकपालादीनि स्वकीयान्यायुधानि ज्ञात्वा ब्राह्मणजातिं प्रति 'उपावर्तत्' समीपम् आगच्छत् । यस्मादेवं तस्मादिदानीमपि यज्ञो ब्रह्मण्येव' आत्विज्ययोग्यायां ब्राह्मणजातावेव, तत्रापि प्रयोगकुशलेषु ब्राह्मणेषु प्रतिष्ठितो वर्तते ॥

क्षत्रिय जाति उस [यज्ञ] का पीछा करके उसे न प्राप्त कर लौट आयी । वस्तुतः यज्ञ इस [क्षत्रिय जाति] के [धनुष आदि] आयुधों से भयभीत होकर और दूर ही भाग गया । इसके बाद इस [यज्ञ] का ब्राह्मण जाति ने पीछा किया और उसको प्राप्त कर लिया । प्राप्त करके उस [यज्ञ] के रास्ते को आगे से घेर कर वह खड़े हो गए । वह ब्राह्मण जाति द्वारा प्राप्त और आगे से अवरुद्ध यज्ञ वहीं खड़ा हो गया । [ब्राह्मण के हाथ में स्फ्य, कपाल आदि] अपने ही आयुधों को देखकर ब्राह्मण जाति के पास ही वह लौट आया । इसीलिए अभी भी यज्ञ [आर्त्विज्य के योग्य] ब्राह्मणजाति में और उनमें भी ब्राह्मणों में [प्रयोग की कुशलता के कारण] प्रतिष्ठित है ।

अथ क्षत्रियस्य यज्ञप्राप्तिं दर्शयति—

अथैनत् क्षत्रमन्वागच्छत्तदब्रवीदुप माऽस्मिन् यज्ञे ह्वयस्वेति, तत् तथेत्यब्रवीत्, तद्वै निधाय स्वान्यायुधानि ब्रह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तस्वेति, तथेति, तत्क्षत्रं निधाय स्वान्यायुधानि ब्राह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तत, तस्माद्धाप्येतर्हि क्षत्रियो यजमानो निधायैव स्वान्यायुधानि ब्रह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तते[1] ॥ १९ ॥ इति ।

'अथ' ब्राह्मणस्य यज्ञप्राप्तेरनन्तरम् 'एनत्' ब्रह्म ब्राह्मणजातिं 'क्षत्रं' क्षत्रियजातिः 'अन्वागच्छत्' । आगत्य च 'तद्' ब्रह्म प्रत्येवमब्रवीत् । हे ब्राह्मण ! मा क्षत्रियमस्मिन् यज्ञे 'उपह्वयस्व' अनुजानीहि मामाहूय यज्ञेन संयोजयस्वेति । 'तत्' उक्तं कार्यं तथैवास्त्विति ब्राह्मणोऽब्रवीत् । उक्त्वा च क्षत्रियायैवं बुद्धिप्रदानं कृतवान् । हे क्षत्रिय ! 'तद्वै' तथा सति तव यज्ञप्राप्त्यपेक्षायां सत्यां स्वकीयानि धनुरादीनि 'आयुधानि' यज्ञविरस्थापनी यानि । तानि यज्ञस्थाप्य ब्राह्मण्यैव योग्यं स्फ्यकपालाद्यायुधैर्ब्राह्मणस्य योग्येन शान्तिश्रद्धालुत्वयुक्तेन 'रूपेण' वेषेण च युक्तो 'ब्रह्म भूत्वा' ब्राह्मणसदृशो भूत्वा यज्ञं प्रत्युपावर्तस्वेति । 'तत्' तत्र स च क्षत्रिय 'तथेति' अङ्गीकृत्य स्वकीयानि धनुरादीन्यायुधानि

---

1 अतएवैवमाम्नातम्—'स एष यज्ञायुधी यजमान'—इति शत० ब्रा० १२५२८ ।

'निधाय' परित्यज्य ब्राह्मणवेषेण यज्ञं प्राप्तवान् । यस्मादादिसृष्टावेवं सम्पन्नं, तस्मादिदानीमपि क्षत्रियो ब्राह्मणवेषेण धनुरादिरहितेन यज्ञमनुतिष्ठति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया चतुर्थाध्याये (चतुस्त्रिंशाध्याये) प्रथमः खण्डः ॥ १ ॥ (१९) [२४२]

इस [ब्राह्मण द्वारा यज्ञ की प्राप्ति] के बाद इस [ब्राह्मणजाति] का क्षत्रियजाति ने अनुगमन किया। उन्होंने उन [ब्राह्मणजाति] के प्रति कहा—'हे ब्राह्मण, तुम मुझ [क्षत्रिय जाति] को इस यज्ञ में संयोजित करो।' ब्राह्मणजाति ने कहा—'वैसा ही हो।' [किन्तु] हे क्षत्रिय उस [यज्ञ की प्राप्ति] के लिए तुम्हें [धनुष आदि] आयुध यहीं रख कर ब्राह्मणजाति के योग्य स्फ्य कपाल आदि लेकर शान्ति और श्रद्धा से युक्त रूप एवं वेष में ब्राह्मण सदृश होकर यज्ञ के पास आओ।' 'ठीक है।'—ऐसा कहकर उन क्षत्रियजाति ने अपने [धनुष आदि] आयुधों को छोड़कर ब्राह्मण जाति के ही [स्फ्य, कपाल आदि] आयुधों से युक्त होकर ब्राह्मण के [सदृश] रूप में ब्राह्मण होकर यज्ञ को प्राप्त किया। [सृष्टि के आदि में इस प्रकार होने के कारण] इसीलिए आज भी क्षत्रिय यजमान अपने आयुधों को रखकर ब्राह्मणों के [स्फ्य, कपाल आदि] आयुधों से युक्त होकर ब्राह्मण जाति के वेष में ब्राह्मण होकर यज्ञ का अनुष्ठान करता है।

॥ इस प्रकार चौंतीसवें (चतुर्थ) अध्याय के प्रथम खण्ड की हिन्दी पूर्ण हुई ॥१॥

## अथ द्वितीयः खण्डः

क्षत्रियस्य यज्ञप्राप्तिमुक्त्वा देवयजनलाभं वक्तुं प्रश्नमुद्भावयति—

अथातो देवयजनस्यैव याच्ञस्तदाहुर्यद्ब्राह्मणो राजन्यो वैश्यो दीक्षिष्यमाणं क्षत्रियं देवयजनं याचति, कं क्षत्रियो याचेदिति ॥ इति ।

'अथ' क्षत्रियस्य यज्ञेच्छानन्तरं, यतो देवयजनमपेक्षितम् 'अतः' कारणात् 'देवयजनस्यैव' देवा इज्यन्ते यस्मिन् देशे स देवयजनस्तस्यैव 'याच्ञः'[1] याचनप्रकारोऽभिधीयत इति शेषः । 'तत्' तत्र देवयजने ब्रह्मवादिनः प्रश्नमाहुः । 'यद्' यस्मात्कारणाद् ब्राह्मणादयस्त्रयो वर्णाः क्षत्रियम् 'दिक्षिष्यमाणं' राजानं प्रति देवयजनं याचन्ति । तस्मात्तेनापि देवयजनो याचितव्यः । क्षत्रियो राजा 'कम्' अन्यं स्वामिनं याचेदिति प्रश्नः ॥

॥ २० [xxxiv. २] इस [क्षत्रिय द्वारा यज्ञ में इच्छा] के अनन्तर देवयजन स्थान की याचना को कहते हैं। इस [देवयजन] में ब्रह्मवादियों का प्रश्न है कि जब

---

१ 'याच्ञाय कृणुते'—इति अथर्व० १२ ४ ३० । 'याच्ञा'—इति शत० ब्रा० ३ ३ ४४।

दीक्षा लेने वाला ब्राह्मण, क्षत्रिय एवं वैश्य देवयजन प्रदेश की याचना [अभिषिक्त] क्षत्रिय राजा से करता है, तो क्षत्रिय राजा किस [अन्य स्वामी] से [यजन प्रदेश की] याचना करे ?

तस्योत्तरमाह—

**दैवं क्षत्रं याचेदित्याहुरादित्यो वै दैवं क्षत्रमादित्य एषां भूतानामधिपतिः ॥ इति ।**

राज्ञो मनुजेषु मध्ये स्वाम्यन्तराभावेऽपि देवसम्बन्धिक्षत्रियसद्भावे स्वामित्वात् तत्रैव याचनमुचितमित्युत्तरमाहुः । योऽयमादित्योऽस्ति, असावेव दैवं देवसम्बन्धि 'क्षत्रं' क्षत्रियजातिः । अयमादित्य 'एषां' प्राणिनां तमोनिवारणेनाधिष्ठाता पालयिता । अतः स्वामित्वात् तत्सम्भावे याचनमुचितम् ॥

इस प्रकार उत्तर देते हुए कुछ लोग कहते हैं कि 'उसे दिव्य क्षत्रिय जाति से ही याचना करनी चाहिए।' जो यह आदित्य है वही देव सम्बन्धी क्षत्रिय जाति है, क्योंकि यह आदित्य इन प्राणियों का अधिपति [पालक] है [अतः स्वामी होने से उसकी याचना उचित है]।

तस्य प्रकारं दर्शयति—

**स यदहर्दीक्षिष्यमाणो भवति, तदहः पूर्वाह्ण एवोद्यन्तमादित्यमुपतिष्ठेतेदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमम्। देव सवितर्देवयजनं मे देहि देवयज्यायां इति देवयजनं याचति ॥ इति ।**

'स' राजा यस्मिन्नेवाहनि दीक्षितुमुद्युक्तः, तस्याह्नः पूर्वाह्णकाल एव 'उद्यन्तम्' ऊर्ध्वं गच्छन्तमादित्यमृग्यजुर्भ्यामुपतिष्ठेत् । 'इदं श्रेष्ठ'-इत्यृच प्रतीकः, 'देव सवित' इत्यादिकं यजुः । हे देव सवितः 'देवयज्यायै' देवसम्बन्धियागार्थं 'मे मह्यं देवयजनं' तद्योचितयागदेशं देहि, 'इति' अनेन प्रकारेण देशं याचेत् । ऋचोऽस्थाने यजुषा याचनमिति व्यवस्थया द्रष्टव्यम् ॥

वह राजा जिस दिन दीक्षित होना चाहे उस दिन पूर्वाह्ण में [सवेरे] ही उदित होते हुए सूर्य का 'इदं श्रेष्ठ' आदि से उपस्थान करे—'यह ज्योतियों में श्रेष्ठ और उत्तम ज्योति है' और 'देव सवित' आदि अर्थात् 'हे देव सविता, देवसम्बन्धी यज यागादि के लिए मुझे देवोचित याग प्रदेश को दो'—इस यजुष् से देवयजन स्थान की याचना करता है।

राज्ञा याचितस्याऽऽदित्यस्य प्रत्युत्तरं सम्पादयति—

**स यस्तत्र याचित उत्तरां सर्पत्यो तथा ददामीति हैव तदाह ॥ इति ।**

आदित्यो 'यद्' यदि 'तत्र' तदानीमनेन राज्ञा याचितः सन् 'उत्तरां' यत्र स्वयं तिष्ठति तस्मादनन्तरभाविनीं दिशं प्रति 'सर्पति' गच्छेत्, तदानीं 'तत्' तेन सर्पणेन 'ॐ

तथा ददामि' इत्येवमुत्तरम् 'आह' ब्रूते। तोऽपि पृष्टः पुरुषो वाचा वा हस्तचिरचालनादिना वोत्तरं प्रयच्छति, तदुदकस्यापि सर्पणमेवोत्तरमस्तु। सर्पणस्याभिप्राय ओं तथा ददामि इत्यनेन कथितः। 'ओं' त्वदुक्तमङ्गीकरोमि, 'तथा' तेनैव प्रकारेण देवयजनं ददामि ॥

वह [आदित्य] यहाँ पर [इस राजा से] याचित होकर जो उत्तर [अर्थात् वह जिधर को मुख करके उपस्थान करता है उसके उलटे तरफ] को सर्पण करता है तो मानो उस [सर्पण] से यह कहता हुआ जाता है कि 'हाँ, मैं तुम्हें देता हूँ।'

तामेवां देवयजनयाचनां प्रशंसति—

तस्य ह न काचन रिष्टिर्भवति, देवेन सवित्रा प्रसूतस्योत्तरोत्तरिणीं ह श्रियमश्नुतेऽश्नुते ह प्रजानामैश्वर्यमाधिपत्यं य एवमुपस्थाय याचित्वा देवयजनमध्यवसाय दीक्षते क्षत्रियः सन् ॥ २० ॥

'यः' पुमान् 'क्षत्रियः' स्वयं राजा सन् 'एवम्' ऋचाऽऽदित्यमुपस्थाय, यजुषा याचित्वा, ततो देवयजनं निश्चित्य, 'दीक्षते' दीक्षां प्राप्नोति, 'तस्य' राज्ञः सवित्रा देवेन 'प्रसूतस्य' अनुज्ञातस्य 'रिष्टि' हिंसा 'काचन' काचिदपि न भवति। न केवलं हिंसाराहित्यं, किन्तु 'उत्तरोत्तरिणीं' दिने दिने वर्धमानां 'श्रियम् 'अश्नुते' प्राप्नोति। किं च 'प्रजानां' सर्वासाम् 'ऐश्वर्यम्' ईश्वरत्वं नियमनसामर्थ्यम्, आधिपत्यम्, अधिकाय पालयितृत्वं, तत्तद्योगक्षेमसंपादनम् 'अश्नुते' प्राप्नोति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायाः चतुर्थाध्याये (चतुस्त्रिंशाध्याये) द्वितीयः खण्डः ॥ २ ॥ (२०) [१६३]

जो क्षत्रिय स्वयं राजा होकर इस प्रकार ऋचा से आदित्य का उपस्थान करके और [यजुष् से] याचना करके तब देवयजन स्थान का निश्चय करके दीक्षा ग्रहण करता है; उस [राजा] का सविता देव की अनुज्ञा से कोई भी अहित नहीं होता है। इतना ही नहीं अपितु उसे दिन प्रतिदिन बढ़ने वाली श्री की प्राप्ति होती है और उसे सभी प्रजा को नियमन करने का सामर्थ्य एवं आधिपत्य अर्थात् उनके योग क्षेम का सम्पादन भी प्राप्त होता है।

॥ इस प्रकार चौंतीसवें (चतुर्थ) अध्याय के द्वितीय खण्ड की हिन्दी पूर्ण हुई ॥२॥

## अथ तृतीयः खण्डः

तस्यैव क्षत्रियस्य होमं विधत्ते—

अथात इष्टापूर्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य; स पुरस्ताद्दीक्षाया आहुतिं जुहुयाच्चतुर्गृहीतमाज्यमाहवनीय इष्टापूर्तस्यापरिज्यान्यै ॥ इति।

'अथ' देवयजननिश्चयानन्तरम्, यस्मादनुष्ठेयस्येष्टापूर्तस्य 'अपरिज्यानि.' विनाशाभावोऽपेक्षितः। 'अत.' कारणाद्यजमानस्य 'क्षत्रियस्य' राज्ञ इष्टापूर्तापरिज्यानिसंज्ञको होमः, अभिधीयत इति शेष. ॥

इष्टापूर्तशब्दार्थः पूर्वाचार्यदर्शितः—

"वर्णाश्रमान्वयो धर्म इष्ट, पूर्तमथेतरत्।
प्रपा तटाकादिरूप तच्च सर्वत्र दृश्यते ॥
स्मार्तं पूर्तं श्रौतमिष्टमिति केचिद्विदाविरे ॥" इति ।

'स' राजा दीक्षायाः पूर्वमाहुतिं जुहुयात्। 'चतुर्गृहीतमाज्य' द्रव्यम्, 'आहवनीय.' होमस्थानम्, अनुष्ठेयस्येष्टापूर्तस्य फलपर्यवसायित्वलक्षणो विनाशाभाव प्रयोजनम् ॥

xxx.२१ [x xiv.३] इस [देवयजन स्थान के निश्चय] के अनन्तर [क्योंकि अनुष्ठेय इष्टापूर्त का विनाश न होना अपेक्षित है] इसलिए क्षत्रिय जाति के राजा यजमान के 'इष्टापूर्तपरिज्यानि' संज्ञक होम को कहते हैं—उस राजा को दीक्षा से पूव अनुष्ठित इष्टापूर्त के फल प्राप्ति तक विनाश के अभाव के लिए आहवनीयाग्नि में घी की चार आहुतियाँ देनी चाहिए।

होमे मन्त्र दर्शयति—

**पुनर्न इन्द्रो मघवा ददातु, ब्रह्म पुनरिष्टं पूर्तं दात् स्वाहेति ॥ इति ।**

'पुनर्न' इत्यादिकमृच. प्रतीकं, 'ब्रह्म' इत्यादिर यजु। 'ब्रह्म' वेदरूपो मन्त्रः, 'इष्टपूर्तं' यथोक्तलक्षण 'पुनर्दात्' भूयो भूयो ददातु। तदर्थमिद 'स्वाहा' स्वाहुतमस्तु ॥

[दीक्षणीयेष्टि के पूर्वकालीन होम में] 'पुनर्न.' (बहुत देने वाले इन्द्र हम लोगों को पुनः दें) आदि ऋचा और 'ब्रह्म' (वेद रूप मन्त्र पुन. पुन. इष्ट [=यज्ञ] और पूर्त [=फल] दे उसके लिए 'स्वाहा' अर्थात् हुत होए) आदि यजुष् मन्त्र हैं।

दीक्षणीयेष्टे. पूर्वकालीन होम विधायानुबन्ध्याख्यपशोरुत्तरकालीन होम विधत्ते—

**अथानूबन्ध्यायै समिष्टयजुषामुपरिष्टात् पुनर्नो अग्निर्जातवेदा ददातु। क्षत्र पुनरिष्टं पूर्तं दात् स्वाहेति ॥ इति ।**

'अथ' प्राचीनहोमकथनानन्तरम् उच्यते-इति शेषः। 'अनुबन्ध्यायै' अनुबन्ध्याख्यपशोः सम्बन्धीनि यानि त्रीणि समिष्टयजूंषि सन्ति, तेषामुपरिष्टाज्जुहुयादिति शेष.[१]। 'पुनर्नः' इत्यृच. प्रतीकम्। इयं पूर्वोक्ता चेत्यृग्द्वयं शाखान्तरगतम्[२]। 'क्षत्र' क्षत्रियजातिरिष्टं पूर्तं च 'पुनर्दात्' भूयो ददातु तदर्थं स्वाहुतमिदमस्तु ॥

---

१. द्र० इत पूर्वम्, पृ० ७२, ३१०, ५६०।
२. 'संस्थिताया मैत्रावरुण्यनूबन्ध्या'-इति आश्व० श्रौ० ६ १४.७। अथ प्रात.…'मैत्रावरुणी वशामनूबन्ध्यामालभते'-इति शत० ब्रा० २ ४.५.१४।

इस [दीक्षणीयेष्टि के पूर्वकालीन होम के कथन] के बाद अनुबन्ध्याहव्य पशु[1] सम्बन्धी तीन समिष्ट यजुष्[2] [ = उपसंह्रियमाण यजुष्] मन्त्रों के बाद इन मन्त्रों से आहुति देनी चाहिए—'पुनर्नो अग्नि.' (सभी कुछ जानने वाले अग्नि हमें पुनः दें) आदि और 'क्षत्रं पुनरिदं' (क्षत्रियजाति इष्ट और पूर्त को पुनः दे) आदि। उसके लिए स्वाहा अर्थात् हुत होए।

पूर्वोत्तरकालीनमाहुतिद्वयं प्रशंसति—

सैवेष्टापूर्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य, यदेते आहुती तस्मादेते होतव्ये ॥ २१ ॥

योऽयं क्षत्रियो राजा यजमानः, तस्य एते पूर्वोत्तरकालीने 'आहुती' विद्येते। 'सैषा' आहुतिक्रियेष्टस्य पूर्तस्य च 'अपरिज्यानि' अविनाशहेतुः, तस्मात्कारणात् 'एते' उभे आहुती होतव्ये ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया चतुर्थाध्याये (चतुस्त्रिंशाध्याये) तृतीय खण्ड ॥ ३ ॥ (२१) [२४४]

जो ये दोनों [पूर्व और उत्तरकालीन] आहुतियाँ हैं वे इस क्षत्रिय राजा यजमान की हैं। वह यह [आहुतियाँ] इष्ट और पूर्त के विनाशरहित होने के लिए ही होती हैं। इसलिए इन दोनों ही आहुतियों को देना चाहिए।

॥ इस प्रकार चौंतीसवें (चतुर्थ) अध्याय के तृतीय खण्ड की हिन्दी पूर्ण हुई ॥३॥

## अथ चतुर्थः खण्ड

अथ प्रकारान्तरेणाहुतिद्वयं विधत्ते—

तदु ह स्माऽऽह सौजात आराह्ळिरजीतपुनर्वण्यं वा एतद् यदेते आहुती इति; यथा ह कामयेत तथैते कुर्याद् य इतोऽनुशासनं कुर्यादितीमे त्वेव जुहुयात् ॥ इति।

'तदु ह' तत्रैव पूर्वोक्तहोमस्थाने, सौजातनामकः कश्चिदृषिः, स च आराह्ळनामकस्य पुत्रः, एवमुवाच। कथमिति? तदुच्यते—'एते' वक्ष्यमाणे आहुती 'इति' यदस्ति, तदेतद् 'अजीतपुनर्वण्यं वै' नष्टमप्राप्तं वा यद्वस्तु तदेतदजीतं, तस्य पुनरपि वननसाधनं प्राप्तिकारणमजीतपुनर्वण्यम्, वक्ष्यमाणमाहुतिद्वयमेतत्प्राप्तमिरर्थः। 'इति' यदेतत्सौजातस्य मतं, तदेव यथेत्यादिना प्रशस्यते। 'यः' पुमान् 'इतः' सौजातवचनाद् 'अनुशासनम्'

---

1. 'final offering of a cow' इति कीथमहोदयः।
2. द्र० सं० सं० १.४.४४.३।

उपदिष्टमनुष्ठानं कुर्यात्, स पुमान् 'यथा' येनैव प्रकारेण कामयेत, 'तथा' तेनैव प्रकारेण सिद्धं फलमुद्दिश्य 'एते कुर्यात्' एतदनुष्ठानेन काम्यमानं फलं सिध्यति। तस्मात्कारणात् 'इमे' एवाऽऽहुती जुहुयात्, न तु पूर्वे ॥

vii.२२ [xxxii.४] इस [पूर्वोक्त होम] के विषय में आराळह के पुत्र सौजात नामक ऋषि का यह कथन है कि ये दोनों [वक्ष्यमाण] आहुति जो हैं वे नष्ट हुई या न प्राप्त होने वाली वस्तुओं को पुन प्राप्त कराने वाली हैं [अर्थात् आगे कही जाने वाली आहुति द्वय 'अजीतपुनवंण्य' नामक हैं] सौजात का मत है कि जो पुरुष इस [सौजात] के उपदेश के अनुसार अनुष्ठान करे वह उसी प्रकार से फल के उद्देश्य से करे जिस प्रकार से उसकी कामना हो अर्थात् इसके अनुष्ठान से मनोरथ की सिद्धि हो जाता है। इसलिए इन दोनों आहुतियों को दे [पहले वाली आहुतियों को न दे]।

तत्र दीक्षणीयेष्टेः प्राचीनहोममन्त्रं दर्शयति—

**ब्रह्म प्रपद्ये, ब्रह्म मा क्षत्राद् गोपायतु, ब्रह्मणे स्वाहेति ॥** इति।

'ब्रह्म' ब्राह्मणजातिं 'प्रपद्ये' रक्षकत्वेन प्राप्नोमि। 'ब्रह्म मा' ब्राह्मणजातिर्मां 'क्षत्रात्' क्षत्रियजातेः 'गोपायतु' पालयतु। 'ब्रह्मणे' ब्राह्मणजातये स्वाहुतमिदमस्तु। अनेन मन्त्रेणाऽऽहवनीये चतुर्गृहीतमाज्यं जुहुयात् ॥

[दीक्षणीयेष्टि के पूर्वकालीन होम का मन्त्र 'ब्रह्मप्रपद्ये' आदि है अर्थात् [ब्राह्मण जाति को मैं [राजा] रक्षक रूप से प्राप्त करता हूँ। ब्राह्मण जाति मुझ क्षत्रिय जाति का पालन करे। ब्राह्मण जाति के लिए यह 'स्वाहा' अर्थात् हुत होए [इस प्रकार इस मन्त्र से आहवनीयाग्नि में चार आज्य की आहुतियाँ दे]।

अस्याऽऽहुतेः पूज्यतां दर्शयति—

**तत्तदितीँ३ ॥** इति।

सर्वेऽपि याज्ञिकाः पूज्यहोमप्रसङ्गे तदा तदा 'तत्तत् इति' एवमेतदेवानुष्ठानमुदाहरन्ति। पूजार्था सानुनासिका प्लुतिः ॥

[सभी याज्ञिक पूज्य होम के प्रसङ्ग में] वहाँ वहाँ इसी [अनुष्ठान] का उदाहरण देते हैं।

अथ मन्त्रतात्पर्यं दर्शयति—

**ब्रह्म वा एष प्रपद्यते, यो यज्ञं प्रपद्यते, ब्रह्म वै यज्ञो, यज्ञादु ह वा एष पुनर्जायते, यो दीक्षते, तं ब्रह्म प्रपन्नं क्षत्रं न परिजिनाति, ब्रह्म मा क्षत्राद् गोपायत्वित्याह, यथैनं ब्रह्म क्षत्राद् गोपायेद् ब्रह्मणे स्वाहेति तदेनत् प्रीणाति, तदेनत्प्रीतं क्षत्राद् गोपायति ॥** इति। ३

'य' पुमान् 'यज्ञं' 'प्रपद्यते' प्रारभते, एष पुमान् 'ब्रह्म वै' ब्राह्मणजातिमेव प्रारभते। 'ब्रह्म वै' ब्राह्मणजातिरेव यज्ञ, तया जात्या साध्यत्वात्। एवं सति 'य.' पुमान् 'दीक्षते' दीक्षां प्राप्नोति, 'एष' पुमान् पूर्वं जातोऽपि 'यज्ञाद् ह वै' अनुष्ठीयमानात् यज्ञादेव पुनरपि जायते। 'ब्रह्म प्रपन्न' यज्ञोपक्रमेण यज्ञरूपब्राह्मणजाति प्रपन्न 'त' यजमान क्षत्र' क्षत्रियजाति 'न परिजिनाति' नैव हिनस्ति। एतावता 'ब्रह्म प्रपद्ये'-इत्यस्य मन्त्रपादस्य तात्पर्यं दर्शितम्। यस्तु मध्यमो मन्त्रभागो 'ब्रह्म मा क्षत्राद् गोपायतु'-इत्येव ब्रूते, तस्मिन्भागे ब्राह्मणजाति 'एन' यजमान क्षत्रियजातेर्यथा 'गोपायत्' रक्षेत् तथा स मध्यमभागो ब्रूते। 'ब्रह्मणे स्वाहा'-इत्यतादृशो यस्तृतीयभाग, 'तत्' तेन भागेन 'ब्रह्म' ब्राह्मणजाति 'प्रीणाति' तर्पयति। 'तदेनत्' ब्रह्म प्रीत सयजमान क्षत्रियजाते 'गोपायति' रक्षति ॥

जो पुरुष यज्ञ का प्रारम्भ करता है वही ब्राह्मण जाति को भी प्रतिपादित करता है और ब्राह्मण जाति ही यज्ञ है [क्योंकि इस जाति से ही यह साध्य है]। इस प्रकार जो व्यक्ति दीक्षा को प्राप्त करता है वह पहले से उत्पन्न होकर भी इस अनुष्ठीयमान यज्ञ से पुन उत्पन्न होता है। उस यज्ञ रूप से उत्पन्न हुए ब्राह्मण जाति को क्षत्रिय जाति नहीं मारती—[इस प्रकार यह 'ब्रह्म प्रपद्ये' आदि पाद का अर्थ है] अब 'ब्रह्म मा क्षत्राद् गोपायतु' इस पाद का अर्थ कहते हैं कि जिस प्रकार से ब्राह्मण जाति इस क्षत्रिय जाति की रक्षा करे, वैसा वह कहे। 'ब्रह्मणे स्वाहा' (ब्राह्मण जाति के लिए स्वाहा होए) मन्त्र के इस [तृतीय] भाग से वह ब्राह्मण जाति को प्रसन्न करता है। इससे प्रसन्न होकर यह [ब्राह्मण जाति] इस [यजमान] की क्षत्रिय जाति से रक्षा करता है।

पूर्वकालीन होम विधायोत्तरकालीन होम विधत्ते—

अथानूबन्ध्यायै समिष्टयजुषामुपरिष्टात् ॥ इति।

पूर्ववद् व्याख्येयम्[1] ॥

इसके बाद अनुबन्ध्यास्य पशु सम्बन्धी तीन समिष्ट यजुष् मन्त्रों के बाद इन मन्त्रों से आहुति देनी चाहिए।

तस्मिन् होमे मन्त्र तदीयतात्पर्यं च दर्शयति—

क्षत्रं प्रपद्ये, क्षत्रं मा ब्रह्मणो गोपायतु, क्षत्राय स्वाहेति, तत्तदितीरे, क्षत्रं वा एष प्रपद्यते, यो राष्ट्रं प्रपद्यते; क्षत्रं हि राष्ट्रं, न क्षत्रं प्रपन्नं ब्रह्म न परिजिनाति, क्षत्रं मा ब्रह्मणो गोपायत्वित्याह, यथैनं क्षत्रं ब्रह्मणो गोपायेत्, क्षत्राय स्वाहेति तदेनत्प्रीणाति, तदेनत्प्रीतं ब्रह्मणो गोपायति ॥ इति।

---

१. द० इतः पूर्वम्, ११८३ पृष्ठे।

पालनीयो देशो 'राष्ट्र' शब्द क्षत्रियेण पालनीयत्वात् क्षत्रस्वरूपम्। अयमर्थं शाखान्तरवद् व्याख्येयम्॥

मैं [अर्थात् राजा] क्षत्रिय [रूप राष्ट्र] को प्राप्त करता हूँ। ब्राह्मण जाति मुझ क्षत्रिय [राजा यजमान] की रक्षा करे। क्षत्रिय [रूप राष्ट्र] के लिए स्वाहा होए। [सभी याज्ञिक पुरुष होम के प्रसङ्ग में] वहाँ वहाँ इसी अनुष्ठान का उदाहरण देते हैं। जो व्यक्ति राष्ट्र को प्रतिपादित करता है वही क्षत्रिय जाति को प्रतिपादित करता है [अर्थात् शासक क्षत्रिय है] क्योंकि क्षत्रिय जाति ही राष्ट्र है। उस प्रतिपादित क्षत्रिय जाति को ब्राह्मण जाति नहीं मारती है। [यहाँ तक 'क्षत्र प्रपद्य' आदि पाद का अर्थ है]। अब 'क्षत्र मा ब्रह्मणो गोपायतु' इस पाद का अर्थ कहते हैं कि जिस प्रकार से ब्राह्मण जाति इस क्षत्रिय जाति की रक्षा करे वैसा वह कहे। अतः 'क्षत्रिय [रूप राष्ट्र] के लिए स्वाहा होए' इस वाक्य से वह इस प्रकार इस [क्षत्रिय रूप राष्ट्र] को प्रसन्न करता है और इससे प्रसन्न होकर वह [क्षत्रिय जाति] उस [यजमान] की ब्राह्मण जाति से रक्षा करता है।

तदेतदाहुतिद्वयं प्रशंसति—

**सैषेप्राप्तस्यैवापरिज्यानि क्षत्रियस्य यजमानस्य यदेते आहुती तस्मादेते एव होतव्ये॥ २२॥ इति।**

पूर्वोक्ताहुतिद्वयविषयमप्यन्यवद् व्याख्येयम्[1]। एवकारः पूर्वोक्ताहुतिद्वयव्यावृत्त्यर्थः। एतदेव सौजातात्यस्य महर्षेर्मतं प्रशस्तम्॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायां चतुर्थाध्याये (चतुस्त्रिंशाध्याये) चतुर्थः खण्डः॥ ४॥ (२२) [२४५]

जो ये दोनों [पूर्व और उत्तरकालीन] आहुतियाँ हैं वे इस क्षत्रिय राजा यजमान की हैं। वह यह [आहुतिक्रिया] इष्ट और पूर्त के विनाशरहित होने के लिए ही होती हैं। इसलिए इन्हीं दोनों आहुतियों को देना चाहिए।

॥ इस प्रकार चौंतीसवें (चतुर्थ) अध्याय के चतुर्थ खण्ड की हिन्दी पूर्ण हुई॥ ४॥

## अथ पञ्चमः खण्डः

क्षत्रियस्याऽऽहवनीयोपस्थानं विधातुं प्रस्तौति—

**अथैन्द्रो वै देवतया क्षत्रियो भवति, त्रैष्टुभश्छन्दसा, पञ्चदशः स्तोमेन, सोमो राज्येन, राजन्यो बन्धुना, स ह दीक्षमाण एव ब्राह्मणतामभ्युपैति,**

---

१, २. द्र० इत पूर्वम् ११८५, ११८४ पृष्ठे।

यत्कृष्णाजिनमध्यूहति, यद्दीक्षितव्रतं चरति, यदेनं ब्राह्मणा अभिसंगच्छन्ते, तस्य ह दीक्षमाणस्येन्द्र एवेन्द्रियमादत्ते, त्रिष्टुब्वीर्यं, पञ्चदशस्तोम आयु' सोमो राज्य, पितरो यशस्कीर्तिमन्यो वा अयमस्मद्भवति, ब्रह्म वा अयं भवति, ब्रह्म वा अयमुपावर्तत इति वदन्त ॥ इति ।

'अथ' होमकथनानन्तरमुपस्थानमुच्यत इति शेषः। योऽयं क्षत्रियोऽस्ति सोऽयं देवतया ऐन्द्रो वै' इन्द्रसम्बन्धी एव भवति। देवतानां मध्ये इन्द्र क्षत्रियस्याभिमानिनी देवतेत्यर्थः। तथा 'छन्दसा त्रैष्टुभ' छन्दसां मध्ये त्रिष्टुबेतदभिमानिनी। स्तोमानां मध्ये 'पञ्चदश' एतदभिमानी। राज्येन निमित्तेनायं सोमरूप, सोम एव तदीयराज्याभिमानी। 'बन्धुना' पितृपितामहादिरूपवर्गेण 'राजन्यो' राजजातीयः। एवं सति 'स ह' स खलु क्षत्रियो 'दीक्षमाण एव' दीक्षां स्वीकुर्वन्नेव ब्राह्मणत्वजातिं प्राप्नोति। कथमिति तदुच्यते—ब्राह्मणयजमानवत्कृष्णाजिनम् 'अध्यूहति' आच्छादयतीति यदस्ति, तथा 'दीक्षितव्रतं' मुष्टिबन्धनवाङ्नियमादिकं चरतीति यदस्ति, तथा 'ब्राह्मणा' ऋत्विजो भूत्वा 'एनं' क्षत्रियमभितः 'समच्छन्ते' संगता भवन्तीति यदस्ति, तन सर्वेण संस्कारेण अयं क्षत्रियो ब्राह्मण्यं प्राप्नोति। 'तस्य ह' तादृशस्यैव क्षत्रियस्य 'दीक्षमाणस्य' दीक्षां प्राप्नुवत 'इन्द्रियं' चक्षुरादिपाटवमिन्द्र एव 'आदत्ते' अपहरति। तथा वीर्यं' युद्धादिसामर्थ्यं त्रिष्टुप् 'अपहरति। पञ्चदशस्तोम आयुरपहरति। सोमो राज्यमपहरति। पितरो यशस्कीर्तिमपहरन्ति। ऐहिकं युद्धादिविषयं यशः। आमुष्मिकी यज्ञदानविषया कीर्तिः। एवमपहरतामिन्द्रत्रिष्टुबादीनां कोऽभिप्राय ? इति सोऽभिधीयते — अयं' क्षत्रियः 'अस्मत्' इन्द्रादिभ्यः अन्य एव संजातः एव भवति। पूर्वमस्मदधीनः सन्निदानीं यागं कुर्वन् ब्रह्म वै' ब्राह्मण एवायं भवति। कथमिति ? तदुच्यते—'अयं' क्षत्रियो 'ब्रह्म वै' ब्राह्मणजातिमेव कृष्णाजिनाच्छादनादिभिः प्रत्येत्य वर्तते। तथा सत्यस्मदनुग्रहमन्तरेणैव सर्वपुरुषार्थसाधनसमर्थत्वादस्मदधीनतां परित्यज्यायं एव स्वतन्त्रो भवतीति स्वाभिप्रायं परस्परं वदन्त सर्वमस्यतद्यमपहरन्ति ॥

VII. ३३ [XXXIV. ५] अब इस [होम के कथन] के बाद [उपस्थान कहते हैं।] देवों के मध्य इन्द्र क्षत्रियों के अभिमानी देवता हैं। छन्दों के मध्य त्रिष्टुप्, स्तोमों के मध्य पञ्चदश स्तोम, राज्य के निमित्त से यह सोम रूप है [अर्थात् सोम ही उस राज्य का अभिमानी है]। पिता पितामह आदि रूप से बन्धुवर्ग के निमित्त से राजजातीय [क्षत्रिय] है। इस प्रकार वही क्षत्रिय दीक्षा स्वीकार करते ही ब्राह्मण जाति को प्राप्त करता है—जब वह 'ब्राह्मण यजमान' के समान कृष्णाजिन का आच्छादन करता है और जब वह दीक्षित यजमान का [मुट्ठी बाँधे रखना एवं वाणी का संयमन आदि] व्रत ग्रहण करता है, और जब [ऋत्विज होकर] ब्राह्मण इस [क्षत्रिय] के चारों ओर संगत होते हैं [तब उन संस्कारों से ब्राह्मणत्व को प्राप्त करता है]। उसी प्रकार के

क्षत्रिय के दीक्षा प्राप्त करते हुए इन्द्रिय [जैसे चक्षु आदि की पटुता] को इन्द्र ही ले लेता है, और [युद्ध आदि की सामर्थ्य] वीर्य को त्रिष्टुप् [ले लेता है], पञ्चदश स्तोम आयु का अपहरण कर लेता है, सोम राज्य का, पितर यश एवं कीर्ति का [वस्तुतः यश युद्ध आदि विषयक होने से इहलोक से सम्बन्धित हैं और कीर्ति, यज्ञ एवं दान विषयक होने से स्वर्ग लोक से सम्बन्धित हैं। अतः उन दोनों का] यह कहते हुए अपहरण कर लेना है, कि 'यह [क्षत्रिय] हम [इन्द्र आदि] से स्वतन्त्र [अलग] ही होता है, यह [यज्ञ करते हुए] ब्राह्मण ही होता है और यह [क्षत्रिय] [कृष्णाजिन के] आच्छादन आदि से युक्त होकर ब्राह्मणजाति में आता है।

तस्योपद्रवस्य शान्त्यर्थमुपस्थानं विधत्ते —

स पुरस्ताद्दीक्षाया आहुतिं हुत्वाऽऽहवनीयमुपतिष्ठेत ॥ इति।

दीक्षणीयेष्टेः पूर्वोक्तामाहुतिं हुत्वा, तत्राऽऽहवनीयं वक्ष्यमाणेन मन्त्रेणोपतिष्ठेत् ॥

उसे दीक्षणीयेष्टि के पहले [पूर्वोक्त] आहुति देकर आहवनीय का [वक्ष्यमाण मन्त्र से] उपस्थान करना चाहिए।

तं मन्त्रं दर्शयति

नेन्द्राद्देवताया एमि, न त्रिष्टुभश्छन्दसो न पञ्चदशात् स्तोमान्न सोमाद्राज्ञो, न पित्र्याद् बन्धोर्मा म इन्द्र इन्द्रियमादित, मा त्रिष्टुब्वीर्यं, मा पञ्चदश-स्तोम आयुर्मा सोमो राज्यं, मा पितरो यशस्कीर्तिं, सहेन्द्रियेण वीर्येणाऽऽयुषा राज्येन यशसा बन्धुनाऽग्निं देवतामुपैमि, गायत्रीं छन्दस्त्रिवृतं स्तोमं सोमं राजानं ब्रह्म प्रपद्ये, ब्राह्मणो भवामीति ॥ इति।

क्षत्रियोऽहमिन्द्ररूपाया मदीयदेवताया 'नैमि' पृथग्भूतो न गच्छामि। तथा त्रिष्टुभमिमानित्र्यदच्छन्दस्तोमराजबन्धुभ्यो नापगच्छामि। अयमिन्द्रो मदीयमिन्द्रियं 'माऽऽदित' माऽपहरतु। तथा त्रिष्टुबादयो वीर्यादीन् माऽपहरन्तु। तेषामिन्द्रादीनामनुग्रहादहमिन्द्रियादिभिः सहावस्थितो भूत्वा तत्पालनसमर्थमग्निं देवतामुपैमि। तथा गायत्री त्रिवृत्स्तोम-ब्राह्मणजातीः 'प्रपद्ये' प्राप्नोमि। तेषामग्न्यादीनामनुग्रहाद् ब्राह्मणो भवामि ॥

मैं [क्षत्रिय] इन्द्र रूप अपने देव को छोड़कर नहीं जाता हूँ, न तो त्रिष्टुप् छन्द से ही अलग होता हूँ, न तो पञ्चदश स्तोम से, न सोम राजा से, न पितरों से और न ही अपने [रक्त] बन्धुओं से मैं अलग होता हूँ। यह इन्द्र मेरी इन्द्रिय शक्ति का अपहरण न करे, और त्रिष्टुप् मेरे वीर्य [=बल] का अपहरण न करे, न पञ्चदश स्तोम मेरी आयु का, न सोम मेरे राज्य का, न पितर मेरे यश एवं कीर्ति का [अपहरण करें]। [उन इन्द्र आदि के अनुग्रह से] मैं इन्द्रिय, वीर्य, आयु, राज्य, यश और बन्धुओं से युक्त होकर [उनके

पालन में समर्थ] अग्निदेव के सान्निध्य में जाता हूँ। मैं गायत्री छन्द, त्रिवृत्-स्तोम, सोम राजा और ब्राह्मण जाति को प्राप्त करता हूँ और [उन अग्नि आदि के अनुग्रह से] 'ब्राह्मण' होता हूँ।

अनेन मन्त्रेण यदुपस्थान, तत्प्रशंसति—

**तस्य ह नेन्द्र इन्द्रियमादत्ते, न त्रिष्टुब्वीर्यं, पञ्चदशस्तोम आयुर्न सोमो राज्य, न पितरो यशस्कीर्ति, य एवमेतामाहुतिं हुत्वाऽऽहवनीयमुपस्थाय दीक्षते क्षत्रियः सन् ॥ २३ ॥** इति ।

'य.' पुमान् क्षत्रियजातियुक्त सन्नुक्तक्रमेण दीक्षायाः प्राचीनामाहुतिं हुत्वा 'नेन्द्रात्'-इत्यादिमन्त्रेणाऽऽहवनीयमुपस्थाय पश्चाद्दीक्षा प्राप्नोति, 'तस्य' क्षत्रियस्येन्द्रियादीनिन्द्रादयो नापहरन्ति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया चतुर्थाध्याये (चतुस्त्रिंशाध्याये) पञ्चमः खण्डः ॥५॥ (२३) [२४६]

जो [व्यक्ति] क्षत्रिय होकर भी [उक्त क्रम से दीक्षा की पहले की] इन आहुतियों को देकर 'नेन्द्रात्' (इन्द्र से नहीं) आदि मन्त्र से आहवनीय का उपस्थान करके तब दीक्षा प्राप्त करता है, उस [क्षत्रिय राजा] से इन्द्र इन्द्रिय का आहरण नहीं करते, न त्रिष्टुप् छन्द वीर्य का, न पञ्चदशस्तोम आयु का, न सोम राज्य का, न पितर यश एवं कीर्ति का।

॥ इस प्रकार चौतीसवें (चतुर्थ) अध्याय के पाँचवें खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥५॥

## अथ षष्ठः खण्डः

पूर्वहोमानन्तरमुपस्थानं विधायोत्तरहोमादूर्ध्वमुपस्थानं विधातु प्रस्तौति—

**अथाऽऽग्नेयो वै देवतया क्षत्रियो दीक्षितो भवति, गायत्रश्छन्दसा त्रिवृत्स्तोमेन ब्राह्मणो बन्धुना, सहोदवस्यन्नेव क्षत्रियतामभ्युपैति तस्य होदवस्यतोऽग्निरेव तेज आदत्ते, गायत्री वीर्यं, त्रिवृत्स्तोम आयुर्ब्राह्मणा ब्रह्म यशस्कीर्तिमन्यो वा अयमस्मद्भवति, क्षत्रं वा अयं भवति, क्षत्रं वा अयमुपावर्तत इति वदन्त ॥** इति ।

'अथ' पूर्वोपस्थानानन्तरम्, उत्तरोपस्थान वक्ष्यत इति शेषः। अय यजमान. पुरा क्षत्रियोऽपीदानी दीक्षित. सन् ब्राह्मण्य प्राप्य देवतयाऽग्निसंबद्धो भवति। अग्निरस्य ब्राह्मणस्य स्वामी। एव गायत्रीत्रिवृद्ब्राह्मणजातिसम्बन्धो द्रष्टव्य.। तादृश इदानी ब्राह्मण सन् 'उदवस्यन्' उदवसानीयेष्ट्या सोमयाग समापयन्नेव ब्राह्मण्य परित्यज्य

क्षत्रियत्वं प्राप्नोति[1]। 'तस्य' उदवसानीयेष्टिं कुर्वतो यजमानस्य तेजःप्रभृतीनग्न्यादयोऽपहरन्ति। 'ब्रह्म' वेदः, तदध्ययनमैहिकं 'यशः' तदनुष्ठाननिमित्ताऽऽमुष्मिकी 'कीर्तिः'। अपहरतामग्न्यादीनां कोऽभिप्राय ? सोऽभिधीयते–'अयम्' इदानीं ब्राह्मणः सन् 'अस्मदन्यः' स्वतन्त्रो भवति। अथ 'क्षत्रं वै क्षत्रिय एव भवति'। तदपि कथमिति ? तदुच्यते। 'अयं' यागकाले ब्राह्मणः सन् यागादूर्ध्वं ब्राह्मण्यं परित्यज्य स्वकीयां क्षत्रियजातिमेवोपेत्य वर्तते। तस्मादस्यास्मत्तोऽन्यत्वमिति परस्परं वदन्तोऽग्न्यादयस्तेज आदीनपहरन्ति ॥

VII २४ [XXXIV ६] इस [पूर्व होम के बाद का उपस्थान कहकर उत्तरकालीन होम] के बाद का [उपस्थान कहते हैं]। [यह यजमान पहले क्षत्रिय होकर भी] अब दीक्षित होकर [ब्रह्मत्व को प्राप्तकर] देवता के रूप में अग्नि से सम्बद्ध होता है। गायत्री छन्द से, त्रिवृत् स्तोम से और ब्राह्मण-जाति के सम्बन्ध से [सम्बद्ध होता है]। [वैसा] यह [ब्राह्मण होकर] उदवसानीयेष्टि द्वारा सोमयाग को समाप्त करते हुए [ब्राह्मण्य को छोड़कर पुनः] क्षत्रियत्व को प्राप्त करता है। उस उदवसानीयेष्टि करने वाले यजमान के तेज का अग्नि अपहरण कर लेते हैं, गायत्री वीर्य का, त्रिवृत् स्तोम आयु का और ब्राह्मण वेद और उसके यश एवं कीर्ति का यह कहते हुए अपहरण कर लेते हैं कि 'अब यह [ब्राह्मण होकर] हम [अग्नि] से भिन्न होता है, यह क्षत्रिय ही होता है, यह [यज्ञ के समय ब्राह्मण होकर यज्ञ के बाद ब्राह्मण्य त्याग कर] अपनी क्षत्रिय जाति से ही युक्त होता है।'

तच्छान्त्यर्थमुपस्थानं विधत्ते—

सोऽनूबन्ध्यायै समिष्टयजुषामुपरिष्टाद्धुत्वाऽऽहुतिमाहवनीयमुपतिष्ठत ॥ इति।

पूर्ववद् व्याख्येयम्[2] ॥

अनुबन्ध्यारूप पशु सम्बन्धी समिष्ट [= उपसंह्रियमाण] यजुषों के बाद उसे आहुति देकर आहवनीय का उपस्थान [इस मन्त्र को पढ़ते हुए] करना चाहिए

तत्रोपस्थाने मन्त्रमाह—

नाग्नेर्देवताया एमि, न गायत्र्याश्छन्दसो, न त्रिवृतः स्तोमान्न ब्रह्मणो बन्धोर्मा मेऽग्निस्तेज आदित, मा गायत्री वीर्यं, मा त्रिवृत्स्तोम आयुर्मा ब्राह्मणा ब्रह्म यशस्कीर्तिं, सह तेजसा वीर्येणाऽऽयुषा ब्रह्मणा यशसा

---

१ इतः परं वक्ष्यति— अवभृथादुदेत्य अनूबन्ध्ययेष्ट्वोदवस्यति —इति ८ २ १। द्र० अथो ये दीर्घसत्रमासीरन् संवत्सरं वा भूयो वा । अथोदवसानीयेष्ट्या यजते अथ यदेवैषोदवसानीयेष्टिः सन्तिष्ठते य सायमाहुतिं जुहोति काल एव प्रातराहुतिम्'– इति शत० ब्रा० ४ ५ १ १२-१६।

२ द्र० इतः पूर्वम् पृ० ११८३,११८६।

कीर्त्यैन्द्रं देवतामुपैमि, त्रिष्टुभं छन्दः, पञ्चदशं स्तोमं, सोमं राजानं क्षत्रं प्रपद्ये, क्षत्रियो भवामि। देवाः पितरः पितरो देवा योऽस्मि सन् यजे। स्वं म इदमिष्टं, स्वं पूर्तं, स्वं श्रान्तं, स्वं हुतम्। तस्य मेऽयमग्निरुपद्रष्टाऽयं वायुरुपश्रोताऽसावादित्योऽनुख्यातेदमहं य एवास्मि सोऽस्मीति॥ इति।

अत्र नाग्नेर्देवताया इत्यादि क्षत्रियो भवामीत्यन्तं पूर्ववन्नव्याख्येयम्[1]। हे 'देवा' अग्न्यादय, 'पितर' पालका, यूयं शृणुतेति शेषः। पितरो देवा इति पुनर्वचनमादरार्थम्। भवदनुग्रहात् कृष्णाजिनाच्छादनादिसंस्कारेण 'य' ब्राह्मणोऽस्मि यज्ञसमाप्तिपर्यन्तं, स एव ब्राह्मण सन् 'यजे' याग कुर्वे। 'मे' ममेदम् 'इष्टं' श्रौत कर्म 'स्व' स्वाधीन जातम्। तथा 'पूर्तं' स्मार्तमपि कर्म 'स्वं' स्वाधीनं जातम्। तथा 'श्रान्तं' श्रमरूपं तपोऽपि 'स्व' स्वाधीनं जातम्। 'हुतम्' अन्यदपि बाह्यहोमादिक 'स्व' स्वाधीन जातम्। 'तस्य' तादृशेष्टापूर्तादियुक्तस्य 'मे' मम 'अय' भूलोकावस्थितोऽग्निः 'उपद्रष्टा' समीपे स्थित्वा साक्षित्वेनावलोकयिता। 'अयम्' अन्तरिक्षावस्थितो वायु. 'उपश्रोता' अस्याग्नेर्मुखादस्मद्वृत्तान्तं श्रोष्यति। 'असौ' द्युलोकावस्थित आदित्य, तं वायुम् 'अनु' पश्चात् 'ख्याता' स्वर्गलोके कथयिष्यति–इदं कर्माहं कृतवानिति। एवं फलपर्यन्ते कर्मणि समाप्ते सति कर्मोपक्रमात् पूर्वं य एव क्षत्रियोऽस्मि स एवोर्ध्वं क्षत्रियो भूत्वा तिष्ठामीति॥

मैं [क्षत्रिय] अग्नि रूप से अपने देव को छोड़कर नहीं जाता हूँ; न तो मैं गायत्री छन्द से ही अलग होता हूँ, न तो त्रिवृत्स्तोम से, न तो ब्राह्मण बन्धु से ही अलग होता हूँ। यह अग्नि मेरे तेज का अपहरण न करे, न तो गायत्री मेरे वीर्य का, न त्रिवृत्स्तोम मेरी आयु का, और ब्राह्मण वेद, यश एवं कीर्ति का अपहरण न करे। [उन अग्नि आदि के अनुग्रह से] मैं तेज, वीर्य, आयु, ब्रह्म [= वेद], यश और कीर्ति से युक्त होकर इन्द्र देवता के पास आता हूँ। मैं त्रिष्टुप् छन्द, पञ्चदशस्तोम, सोम राजा और क्षत्रिय जाति को प्राप्त करता हूँ; और [उन अग्नि आदि के अनुग्रह से] क्षत्रिय होता हूँ। हे अग्नि आदि देवों और पालक पितर आदि देव आप सुनें। [आपके अनुग्रह रूप कृष्णाजिन के आच्छादन आदि संस्कार से] जो मैं [ब्राह्मण] हूँ वह [यज्ञ समाप्ति पर्यन्त ब्राह्मण] होकर ही याग करूँ। मेरा यह [श्रौत] कर्म स्वाधीन है, मेरा यह पूर्त [=स्मार्त कर्म] भी स्वाधीन है, तथा श्रम रूप तप भी स्वाधीन है बाह्य होम आदि अन्य हुत भी स्वाधीन है। उस [इष्टापूर्त आदि] से युक्त मेरा यह [भूलोक में अवस्थित] अग्नि समीप में स्थित होकर साक्षी रूप से द्रष्टा होए। यह [अन्तरिक्ष स्थित] वायु [उस अग्नि के मुख से मेरे वृत्तान्त को] सुने। यह [द्युलोक में स्थित] आदित्य उस वायु के बाद स्वर्ग लोक में कहने वाला होगा कि 'मैंने यह कर्म किया है।' [कर्म के उपक्रम के पूर्व] जो मैं [क्षत्रिय] हूँ वही मैं बाद में भी [क्षत्रिय होकर ही] स्थित हूँ।

१. द्र० इतः पूर्वम् पृ० ११८९।

अनेन म न्त्रेण यदपरधा तदत्र दर्शयति—

**तस्य ह नाग्निस्तेज आदत्ते, न गायत्री वीर्यं, न त्रिवृत्स्तोम आयुर्न ब्राह्मणा ब्रह्म यशस्कीर्ति, य एवमेतामाहुतिं हुत्वाऽऽहवनीयमुपस्थायोदवस्यति क्षत्रियः सन् ॥ २४ ॥** इति ।

पूर्वं 'तस्य ह न ते द इन्द्रियम्'–इत्यादि यद्वाक्यमुक्तं तद्व्याख्येयम्' ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीय 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया चतुर्थाध्याय (चतुस्त्रिंशाध्याये) षष्ठ खण्डः ॥ ६ ॥ (२४) [२४७]

जो [व्यक्ति] क्षत्रिय होकर भी [उक्त क्रम से उपस्थान को] इन आहुतियों को देकर 'नाग्नेर्देवतायाः' आदि मन्त्र से आहवनीय का उपस्थान करके, तब उदवसानीयेष्टि सम्पादित करता है, उस [व्यक्ति] का तेज अग्नि नहीं अपहृत करते न गायत्री वीर्य का, न त्रिवृत् स्तोम आयु का, न ब्राह्मण वेद, यश एवं कीर्ति का ।

॥ इस प्रकार चौंतीसवें (चतुर्थ) अध्याय के षष्ठ खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥६॥

## अथ सप्तम खण्ड

क्षत्रियस्य दीक्षितत्वावेदनमन्त्रे सन्देहात् प्रश्नमुद्भावयति—

**अथातो दीक्षाया आवेदनस्यैव, तदाहुर्यद् ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयन्ति, कथं क्षत्रियस्यावेदयेदिति ॥** इति ।

'अथ दीक्षानन्तरम् देवाना मनुष्याणा चाग्रे यत एतदीयदीक्षा कथनीया, अत ' कारणाद्दीक्षाया आवेदनस्य प्रकटीकरणस्यैव कश्चिन्निर्णय उच्यते । तत् तस्मिन्नावेदने सदिहाना ब्रह्मवादिन प्रश्नमाहु —ब्राह्मणस्य दीक्षाया ऊर्ध्वम् अदीक्षिष्टाय ब्राह्मण ' इति[2] मन्त्रेण दीक्षा प्रख्यापनीया । तथा च तैत्तिरीया आमनन्ति— अदीक्षिष्टाय ब्राह्मण इति त्रिरुपांश्वाऽऽह देवेभ्य एवैनं प्राह त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्य प्राह इति[3] । एव सति क्षत्रियस्य दीक्षावेदनं त्स्मिन् मन्त्रे ब्राह्मणशब्द क्षत्रियपरत्वेनोहनीय , आहोस्विदविकृत एव पठनीय ' इति प्रश्नाभिप्राय ॥

v १२५ [ xxiv ७] इस [क्षत्रिय की दीक्षा] के अनन्तर [देवों और मनुष्यों के सामने क्योंकि यह दीक्षा कहनी है] इस कारण से दीक्षा के प्रकटीकरण के लिए कुछ

---

१ द्र० इत पूर्वम् पृ० ११९० ।

२ अदीक्षिष्टाय ब्राह्मण —एतन्मात्रमेव मन्त्रस्वरूपम् । न च एष मन्त्र साहितिक , तदुक्तं तैत्तिरीयसहिताभाष्ये सायणेन— अध्वर्यो कश्चिन्मन्त्रमुत्पाद्य विनियुङ्क्ते अदीक्षिष्टाय ब्राह्मण इति ।' इति (१ २ २) एतदेव दीक्षितावेदनमुच्यते ।

३ तै० स० ६ १ ४ ३ ।

निर्णय कहते हैं—उस [आवेदन] में सन्देहयुक्त ब्रह्मवादियों ने प्रश्न किया कि जब ब्राह्मण को दीक्षा के समय 'यह ब्राह्मण दीक्षित हुआ है'—इस मन्त्र से दीक्षा की घोषणा करते हैं तो क्षत्रिय की दीक्षा के समय कैसे आवेदन [=घोषणा] करेंगे ? [क्या ब्राह्मण शब्द से ही क्षत्रिय परक अर्थ का ऊह करेंगे या कुछ बदलकर मन्त्र बोलेंगे ?]।

अत्रोत्तरमाह—

यथैवैतद् ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयन्त्येवमेवैतत् क्षत्रियस्याऽऽवेदयेत् पुरोहितस्याऽऽर्षेयेणेति ॥ इति ।

अत्र शब्दो नोहितव्य । अविकृत एव ब्राह्मणशब्द क्षत्रियदीक्षावेदनेऽपि प्रयोक्तव्य । यदि ब्राह्मणप्रवरोऽपेक्षित , तदानी 'पुरोहितस्य' ब्राह्मणस्य सबन्धिनाऽऽर्षेयेण प्रयोग कर्तव्य । तथा च आपस्तम्ब क्षत्रियवैश्ययोरपि ब्राह्मणशब्देनैवाऽऽवेदन दर्शयति—'अदीक्षिष्टाय ब्राह्मणोऽसावमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ताऽमुष्या. पुत्रोऽमुष्या पौत्रोऽमुष्या नप्तेति, ब्राह्मणो वा एष जायते, यो दीक्षते[१], तस्माद् राजन्यवैश्या अपि ब्राह्मण इत्येवाऽऽवेदयति[२] इति ॥

जैसा कि ब्राह्मण को दीक्षा के समय 'यह ब्राह्मण दीक्षित हुआ है'—इस प्रकार दीक्षा का आवेदन करते हैं, उसी प्रकार इस क्षत्रिय की दीक्षा का आवेदन करना चाहिए, [और यदि ब्राह्मण के प्रवर की अपेक्षा हो तो] उसे पुरोहित के ऋषि का प्रयोग करना चाहिए ।

ईदृशस्यावेदनस्य पूज्यता दर्शयति—

तत्तदितीँ३ ॥ इति ।

पूर्ववद् व्याख्येयम्[४] ॥

वे कहते हैं—'यही, यही [आवेदन पूजनीय है']।

ब्राह्मणत्वेनाऽऽवेदनमुपपादयति—

निधाय वा एष स्वान्यायुधानि ब्रह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तत, तस्मात् तस्य पुरोहितस्याऽऽर्षेयेण दीक्षामावेदयेयु, पुरोहितस्याऽऽर्षेयेण प्रवर प्रवृणीरन् ॥ २५ ॥ इति ।

---

१ मातुरग्रेऽधिजनन द्वितीय मौञ्जिबन्धने ।
तृतीय यज्ञदीक्षाया, द्विजस्य श्रुतिचोदनात् ॥ मनु० २ १६९ ।

२ आप० श्रौ० १० ११ ५,६ । 'अथैन निष्पारवावेदयति, त्रिरुच्चै '—इति एतत्सूत्रीय ।

३ आश्व० श्रौ० १ ३ ३, १२ १५ ४ ।

४ द्र० इत पूर्वम्, पृ० ११८५ ।

'स्वान्यायुधानि' धनुरादीनि, 'ब्रह्मण आयुधानि' स्फ्यकपालादीनि[1]। यस्मात् स्वायुधपरित्यागपूर्वकं ब्रह्मायुधस्वीकारेण ब्राह्मणा भूत्वा यज्ञं प्राप्तवान्, तस्मात् 'तस्य' यजमानस्य पुरोहितसबन्धिना गोत्रेण दीक्षावेदनम्, तथा प्रवरोऽपि विज्ञेय.[2] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया चतुर्थाध्याये (चतुस्त्रिंशाध्याये) सप्तम खण्ड. ॥ ७ ॥ (२५) [ २५८]

[क्षत्रिय का ब्राह्मणत्वेन आवेदन का कारण यह है कि] इतने अपने [धनुष आदि] आयुधों को एक तरफ रखकर, ब्राह्मण के [स्फ्य, स्रुक् आदि] आयुधों के द्वारा ब्राह्मण रूप से ब्राह्मण होकर यज्ञ का अनुष्ठान किया। इसीलिए उस [यजमान] के पुरोहित के ऋषि गोत्र के द्वारा दीक्षा का आवेदन करना चाहिए और उसके पुरोहित के ऋषि के प्रवर को [अर्थात् उन्हीं के ऋषि प्रवर को] भी कहना चाहिए।

॥ इस प्रकार चौंतीसवें (चतुर्थ) अध्याय के सातवें खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥७॥

## अथ अष्टमः खण्डः

दर्शपूर्णमासयोर्यजमानभागप्राशन विहित[3] तदत्र दीक्षणीयादीष्टिषु चोदकप्राप्त[4] क्षत्रियस्य तत्प्राशने निर्णयं वक्तु विचारमवतारयति—

**अथातो यजमानभागस्यैव, तदाहु॰ प्राश्नीयात् क्षत्रियो यजमानभागा३म्, न प्राश्नीया३त् ? इति ॥ इति।**

'अथ' दीक्षावेदननिर्णयानन्तरं, दीक्षणीयादीष्टयो यतो बुद्धिस्था, 'अत' कारणात्, तत्र यजमानभागस्यैव, प्रकारविशेष उच्यत इति शेष। 'तत्' तस्मिन् भागे ब्रह्मवादिनो विचारमाहु। क्षत्रियो ब्राह्मणवत् कि यजमानभागं प्राश्नीयात् उत नेति विचारार्थं प्लुतिद्वयम् ॥

vii.२६ [xxxiv.८] [दर्श और पूर्णमास याग में यजमान के भाग का भक्षण विहित है। अतः यहाँ दक्षिणीया आदि इष्टियों में क्षत्रिय के द्वारा उसका प्राशन हो अथवा न हो—इस सम्बन्ध में प्रश्न करते हैं] —

इस [दीक्षा के आवेदन के निर्णय] के अनन्तर [क्योंकि यह दीक्षणीय आदि इष्टियाँ हैं] इस कारण से उस [यज्ञ] में यजमान के भाग का [प्रकार विशेष] कहते हैं—

---

१ द्र० इत पूर्वम्, पृ० ११७८ 'एतानि वै' इत्यादि पर्यन्तेयन्तम्।
२ इत पर वक्ष्यति 'पुरोधयैव दीक्षयैव प्रवरेणैव' इति पञ्चमाध्यायीयपञ्चमखण्डे।
३ 'पश्चात् कुशेषु यजमानभागम्' - इति आश्व० श्रौ० १ ११.३। 'अथ यद् पूर्वार्धं पुरोडाशस्य प्रशीर्य पुरस्ताद् ध्रुवायै निदधाति, यजमानो वै ध्रुवा, तद् यजमानस्य प्राशितं भवति'—इति० शत० ब्रा० १ ८ १ ३९।
४ 'पौर्णमासेनेष्टिपशुसोमा उपदिष्टा.'—इति आश्व० श्रौ० २ १ १।

उस [यजमान के भाग] के सम्बन्ध में ब्रह्मवादी प्रश्न करते हैं कि क्षत्रिय क्या [ब्राह्मण के ही समान] यजमान के भाग का प्राशन करे अथवा प्राशन न करे ?

पक्षद्वये दोषमुद्भावयति—

यत्प्राश्नीयादहुताद्धुत प्राश्य पापीयान् स्याद्, यन्न प्राश्नीयाद् यज्ञादात्मान-मन्तरियाद्, यज्ञो वै यजमानभागः ॥ इति ।

हुतमस्तीति 'हुतात्' तादृशो न भवतीति 'अहुतात्' । ''अपेता अहुतादो यज्ञात्क्षत्रियो वैश्यः शूद्र'' इति पूर्वमुक्तम्[1] । अतोऽत्र क्षत्रिय 'अहुताद्' योग्यतारहितो यदि हुतशेषं प्राश्नीयात्, तदानीं 'पापीयान्' अत्यन्तपापयुक्तो भवेत् । अप्राशनपक्षे तु यज्ञादात्मानम् 'अन्तरियाद्' विच्छिन्द्यात्, यजमानभागस्य यज्ञहेतुत्वेन यज्ञस्वरूपत्वात्तद्भागराहित्ये यज्ञात् स्वयं विच्छिन्नो भवति ॥

यदि हुतशेष का भक्षण कर ले तो अहुताद [अर्थात् क्षत्रिय, वैश्य और शूद्र हुतशेष के भक्षण के अधिकारी नहीं हैं—इस प्रकार के पूर्व कथन के होने से] वह उसका प्राशन करके पापी ही होए और यदि उस हुतशेष का वह प्राशन न करे तो अपने को उस यज्ञ से बाहर कर ले क्योंकि [यज्ञ स्वरूप होने से] यजमान का भाग ही यज्ञ है ।

उक्तदोषद्वयं परिहर्तुं पक्षान्तरमाह

स ब्रह्मणे परिहृत्यः ॥ इति ।

'स' यजमानभाग ऋत्विग्विशेषाय 'ब्रह्मणे' 'परिहृत्यः' परितः सर्वात्मना समर्पणीय ॥

उस [यजमान के भाग] को [किसी विशेष ऋत्विज्] ब्रह्मा को सम्पूर्ण रूप से दे देना चाहिए ।

तत्समर्पणे दोषद्वयराहित्यं दर्शयति—

पुरोहितायतनं वा एतत्क्षत्रियस्य, यद्ब्रह्माऽर्धात्मो ह वा एष क्षत्रियस्य, यत्पुरोहित उपाहु परोक्षेणैव प्राशितरूपमाप्नोति, नास्य प्रत्यक्षं भक्षितो भवति ॥ इति ।

ऋत्विग्रूपो 'ब्रह्मेति' यदस्त्येतत्क्षत्रियस्य पुरोहितायतनं पुरोहितस्थानम् । पुरोहितो योऽस्त्येष क्षत्रियस्य 'अर्धात्मो ह वै' अर्धदेह एव । 'उ ह वा' इति निपातसमूहोऽव-धारणार्थः । अर्धशरीरस्थानीयपुरोहितरूपेण ब्रह्मणा तस्मिन् भागे भक्षिते सति 'परोक्षेणैव' व्यवधानेनैव 'प्राशितरूपं' प्राशितसादृश्यं प्राप्नोत्येव । अहशब्द उपशब्दश्च मिलित्वाऽ-वधारणार्थो । 'अस्य' क्षत्रियस्य 'प्रत्यक्षम्' अव्यवधानेन स्वमुखेन स भागो भक्षितो न भवति । एवं सति व्यवधानेन भक्षितत्वाद् यज्ञान्तरायो न भविष्यति, स्वमुखेन भक्षणा-भावादयं पापीयानपि न भविष्यति ॥

---

१. द्र० इतः पूर्वम्, पृ० ११७७ ।

[इसमें दोष भी नहीं है क्योंकि ऋत्विज रूप] यह जो ब्रह्मा है, वह क्षत्रिय के पुरोहित का ही स्थान है, और जो यह पुरोहित है वह क्षत्रिय के शरीर का अर्धभाग ही है। इस प्रकार [अर्धशरीर स्थानीय पुरोहित रूप ब्रह्मा के द्वारा उस भाग के भक्षण कर लेने पर] यह परोक्षरूप से प्राशन के सादृश्य को प्राप्त कर लेता है, और [व्यवधान होने से] इसका भक्षण प्रत्यक्ष भी नहीं होता है।

ब्रह्मणस्तद्भागप्रदाने प्रशंसति—

*यज्ञ उ ह वा एष प्रत्यक्षं यद्ब्रह्मा, ब्रह्मणि हि सर्वो यज्ञः प्रतिष्ठितो, यज्ञे यजमानो, यज्ञ एव तद्यज्ञमप्यर्जन्ति, यथाऽप्स्वापो यथाऽग्नावग्नि, तद्धै नातिरिच्यते, तदेनं न हिनस्ति, तस्मात्तद् ब्रह्मणे परिहृत्य ॥ इति ।*

यो ब्रह्माऽस्त्येष 'प्रत्यक्षम्' अव्यवधानं यथा भवति तथा यज्ञ उ ह वै' यज्ञस्वरूप एव तत्साधकत्वात् । किंच ब्रह्मण्येव सर्वो यज्ञः प्रतिष्ठितः वेदत्रयवैकल्यपरिहर्तृत्वेन ब्रह्मणो नियन्तृत्वस्योक्तत्वात्[1] । तस्मिंश्च प्रतिष्ठिते यज्ञे यजमानोऽपि प्रतिष्ठितः । तत्फल भागित्वात् । एवं सति 'तत्' तेन भागप्राशनेन 'यज्ञे एव' ब्रह्मरूपे भागरूपं यज्ञम् अपि 'अप्यर्जन्ति' सम्यक् प्रक्षिपन्ति । तत्र दृष्टान्त —यथा लोकेऽप्सु प्रक्षिप्ता आप एकत्वेन समुज्यन्ते, यथा चाऽग्नौ प्रक्षिप्तमग्निमेकीभूतं पश्याम, 'तद्धै' तथा ब्रह्मणा प्राशितं हविः 'नातिरिच्यते' अतिरिक्तं न भवति । किंतु यज्ञरूपेण ब्रह्मणा सहैकी भवति । तदेकीभूतं हविः 'एनं' क्षत्रियं 'न हिनस्ति' न बाधते। तस्मात् स' यजमानभागो ब्रह्मणे 'परिहृत्य' समर्पणीयः ॥

यह जो ब्रह्मा [नामक ऋत्विज] है, वह साक्षात् यज्ञस्वरूप ही है। [क्योंकि वह यज्ञ का साधक है] और सब यज्ञ ब्रह्मा में ही प्रतिष्ठित है तथा [उसके फल का भागी होने से] यजमान यज्ञ में [प्रतिष्ठित है]। इस प्रकार उस [हुतशेष के प्राशन से ब्रह्मरूप] यज्ञ में ही [भाग रूपी] यज्ञ को सम्यक् रूप से डालते हैं, जैसे लोक में पानी में पानी [डालने से और] जैसे, अग्नि में अग्नि [डालने से सभी मिलकर एक हो जाते हैं] उसी प्रकार उस [ब्रह्मा] से [प्राशित हवि] अतिरिक्त नहीं होती है [अपितु यज्ञ रूपी ब्रह्मा से मिलकर एक हो जाती है]। वह [एकीभूत हुआ हवि ] इस [क्षत्रिय] को नहीं मारता है। इसलिए उसे वह यजमान का भाग ब्रह्मा को समर्पित कर देना चाहिए।

पक्षान्तरमुपन्यस्य दूषयति—

*अग्नौ हैके जुह्वति, प्रजापतेर्विभागोऽसि लोकस्तस्मिंस्त्वा दधामि सह यजमानेन स्वाहेति, तत्तथा न कुर्याद्, यजमानो वै यजमानभागो यजमानं ह सोऽग्नौ प्रवृणक्ति, य एनं तत्र ब्रूयाद् यजमानमग्नौ प्रावार्क्षीत् प्रास्याग्निः प्राणान् धक्ष्यति, मरिष्यति यजमान इति, शश्वत्तथा स्यात्, तस्मात्तस्याऽऽशां नेयादाशां नेयात् ॥ २६ ॥ इति ।*

---

१ द्र० इत पूर्वम्, पृ० ८९४ (५५९)।

'एके' याज्ञिकास्त यजमानभागमग्नौ जुह्वति। तत्र 'प्रजापते' इत्यादिको मन्त्र। प्रजापते सम्बन्धी यो लोक तस्य 'विभान्' इत्येतन्नामधेय विशेषेण भातीति तद्व्युत्पत्ते.। हे यजमानभाग, यजमानेन सह त्वा तस्मिँल्लोके 'दधामि' प्रक्षिपामि। तदर्थमिद स्वाहुतमस्तु। अनेन मन्त्रेण यद्धोमानुष्ठानमस्ति, तत्तथा न कुर्यात् यजमानभागस्य यजमानस्वरूपत्वेन तस्य भागस्य होमे 'स' होमकर्ता यजमानमेवाग्नौ 'प्रवृणक्ति' प्रवृक्त दग्धं करोति। 'तत्र' तदानी 'य' कश्चिदागत्य 'एन' कर्तार 'ब्रूयात्' शपेत। कथमिति तदुच्यते—हे होमकर्तस्त्व यजमानमग्नौ 'प्रावार्क्षी' प्रवृक्तवान् दग्धवानसि। 'अस्य' यजमानस्य प्राणानग्नि प्रकर्षेण धक्ष्यति, स यजमानो मरिष्यतीति स शापोऽवश्य तथैव स्यात्। तस्मात् 'तस्य' होमस्य 'आशाम्' इच्छामपि 'नेयात्' न प्राप्नुयात्। अभ्यासोऽध्यायसमाप्त्यर्थ ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीय वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया चतुर्थाध्याय (चतुस्त्रिंशाध्याय) अष्टम खण्ड ॥ ८ ॥ (२६) [२४९]

वेदार्थस्य प्रकाशेन तमो हार्द निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरा-माधवचार्यादेशतो श्रीमद्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया चतुर्थोऽध्याय (चतुस्त्रिंशोऽध्याय) ॥३४॥

[इस विषय में दूसरा विकल्प यह है कि] कुछ याज्ञिक [उस यजमान भाग को] अग्नि में इस मन्त्र से आहुति देते हैं—'प्रजापतेर्विभात्' प्रजापति सम्बन्धी जो लोक है वह [विशेष भासक होने से] 'विभात' नामक है। हे यजमान भाग मैं तुम्हें यजमान के साथ उस लोक में डालता हूँ, उसके लिए 'स्वाहा' होए। इसीलिए उसे इस प्रकार [मन्त्र से होमानुष्ठान] नहीं करना चाहिए, क्योंकि यजमानभाग यजमान ही है। अत यह [होमकर्त्ता यजमान रूपी उसके भाग को होम में डालकर मानो] यजमान को ही अग्नि में जला देता है। यहाँ यदि कोई [शत्रु आकर] इस प्रकार इसे शाप दे कि 'हे होमकर्त्ता, तुमने यजमान को ही अग्नि में जला डाला है, तो इस [यजमान के प्राणों को अग्नि प्रकृष्ट रूप से जला ही डालेगा और यजमान मर जायगा'—इस प्रकार [वह शाप] सत्य ही हो जाता है। इसलिए उसे उस [होम] की इच्छा भी नहीं करनी चाहिए।

॥ इस प्रकार ऐतरेयब्राह्मण के सातवीं पञ्चिका के चतुर्थ अध्याय की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ४ ॥

—.०:—

# अथ पञ्चमोऽध्यायः

## प्रथमः खण्डः

—॰—

# [अथ पञ्चत्रिंशोऽध्यायः

## प्रथमः खण्डः]

क्षत्रियो यजमानो यस्तस्य होमादि वर्णितम् ।
फलनामा तु भक्षस्तस्यैवात्रोपवर्ण्यते ॥ १ ॥

अत्राऽऽदौ क्षत्रियस्य सोमभक्षराहित्यप्रदर्शनार्थमुपाख्यानमाह—

**विश्वन्तरो ह सौषद्मनः श्यापर्णान् परिचक्षाणो विश्यापर्णं यज्ञमाजह्रे, तद्धानुबुध्य श्यापर्णास्तं यज्ञमाजग्मुस्ते ह तदन्तर्वेद्यासांचक्रिरे, तान् ह दृष्ट्वोवाच,—पापस्य वा इमे कर्मणः कर्तार आसतेऽपूतायै वाचो वदितारो यच्छ्यापर्णा, इमानुत्थापयतेमे मेऽन्तर्वेदि माऽऽसिषतेति[1], तथेति, तानुत्थापयांचक्रुः ॥ इति ।**

शोभनं सद्म राजगृहं यस्य राज्ञः, सोऽयं 'सुषद्मा', तस्य पुत्रः 'सौषद्मनः'। स च 'विश्वन्तर' नामकः। स कदाचिद्यागं चिकीर्षुः 'श्यापर्णान्' तन्नामकान् ब्राह्मणविशेषान् 'परिचक्षाणः' आर्त्विज्ये निराकुर्वन् 'विश्यापर्णं यज्ञमाजह्रे' श्यापर्णनामकब्राह्मणविरहितमेव यज्ञमनुष्ठितवान्। 'तद्ध' तत्सर्वं श्यापर्णनामका ब्राह्मणा 'अनुबुध्य' मनुष्यमुखादवगत्य, विश्वन्तरेण राज्ञा तदानीमनाहूता एव तं यज्ञमाजग्मुः। आगत्य 'ते ह' त एव श्यापर्णा 'तदन्तर्वेदि' तस्य यज्ञस्य वेदिमध्ये 'आसांचक्रिरे' राजानुज्ञामन्तरेण स्वयमेवोपविष्टवन्तः। राजा 'तान्' उद्दण्डाञ्श्यापर्णान् दृष्ट्वा स्वकीयान् वेत्रपाणीन् पुरुषानुवाच। 'यद्' ये श्यापर्णाः सन्ति, इमे अपूतायै वाचो 'वदितारः' अपूतां वाचं मदीयावज्ञारूपां वदन्तः 'पापस्य कर्मणः कर्तारः' धौर्त्यरूपं व्यापारं कर्तुमुद्यता इहाऽऽसते। 'इमे' श्यापर्णा 'मेऽन्तर्वेदि' मदीयाया वेदेर्मध्ये 'माऽऽसिषत' स्वयमेवोपविष्टाः, इमान् धूर्तान् हे वेत्रपाणयः उत्थापयत। 'इति' एवं राज्ञोक्ता वेत्रपाणयः 'तथा'-इत्यङ्गीकृत्य 'तान्' श्यापर्णानुत्थापयांचक्रुः ॥

---

१ 'मा आसिषत' स्वयमेवोपविष्टा मा भवन्त्वित्यर्थ एवात्र न्याय्यः स्यात्, अन्यथा मूले 'मा' शब्दोऽव्याहृतार्थ एव भवेदिति बोध्यम् ।

[क्षत्रिय राजा का सोम के बदले भक्ष्य]—

VII.२७ [xxxv. १] [शोभन राजगृह है जिसका ऐसे राजा] सुदास के पुत्र विश्वन्तर ने किसी समय श्यापर्ण नामक ब्राह्मणों को यज्ञ में आर्त्विज्य से वंचित कर दिया और श्यापर्ण नामक ब्राह्मणों से रहित हो यज्ञ का अनुष्ठान किया। इस सब बात को [मनुष्यों के मुख से] जानकर [विश्वन्तर से अनाहूत भी] श्यापर्ण उनके यज्ञ में आए और वे सब उस यज्ञ के वेदी के भीतर ही राजा की अनुज्ञा के बिना ही स्वयमेव बैठ गए। उन [उद्दण्ड श्यापर्णों] को देखकर [राजा ने अपने रक्षकों से] कहा—'ये [मेरी अवज्ञा करके] पाप कर्म करने वाले धूर्ततायुक्त कर्म करने के लिए यहाँ बैठे हैं, ये जो श्यापर्ण हैं ये अपवित्र वाणी बोलने वाले हैं, इन्हें निकाल दो, मेरी यज्ञ वेदी के मध्य [स्वयमेव ही आकर बैठ हुए] इन [धूर्तों] को यहाँ मत बैठने दो'—इस प्रकार राजा के कहने पर 'जैसी आज्ञा'—इस प्रकार रक्षकों ने कहकर उन श्यापर्णों को वहाँ से उठा दिया।

*तेऽपा श्यापर्णा वृता तमाहृ*

ते ह्रोत्याप्यमाना रुरुविरे, ये तेभ्यो भूतवीरेभ्योऽसितमृगा कश्यपाना सोमपीयमभिजिग्यु पारिक्षितस्य जनमेजयस्य विकश्यपे यज्ञे तैस्ते तत्र वीरवन्त आसु, क स्वित्सोऽस्माका[1](कम)स्ति वीरो य इम सोमपीथमभिजेष्यतीति ॥ इति ।

वेत्रपाणिभिरुत्थाप्यमाना ते श्यापर्णा ब्राह्मणा 'रुरुविरे' रव शब्द परस्परमुच्चैर्ध्वनि कृतवन्त । तत्र दृष्टा कंचिदर्थान् प्रति काचिद्गुरातनी कथामूचु । परिक्षित पुत्रो जनमेजयाख्यो यो राजा, स कदाचित् कश्यपवंशो यज्ञात् ब्राह्मणान् विहाय 'विकश्यप' यज्ञ भूतवीराख्यब्राह्मणैर्ऋत्विग्भि कारयामास । तदानी कश्यपाना मध्ये 'ये' केचिद सितमृगनामका पुरुषा 'सोमपीथ' जनमेजयसम्बन्धिन सोमयाग 'तेभ्य' भूतवीरसज्ञकेभ्यो ब्राह्मणेभ्यो बलादाकृष्य स्वयम् 'अभिजिग्यु' अभितो जय प्राप्ता । बहुषु यज्ञप्रयोगेषु विजिगीषुत्वा कृत्वा 'तान्' भूतवीरान् ब्राह्मणान् पराजय प्रापय्य स्वयमसितमृगनामानो य जितवन्त, 'तै' असितमृगै 'ते' कश्यपा 'तत्र' जनमेजयस्य यज्ञे 'वीरवन्त' शूरपुरुषोपेता आसु । एता कथामुदाहृत्य श्यापर्णा स्वकीयानेव पृच्छन्ति,—'अस्माक' राजा तिरस्कृतानामस्माकं मध्ये 'य' पुमान् 'इम सोमपीथ' विश्वन्तरस्य राज सोमयागमभिजेष्यति, स तादृशो वीर 'कश्चिदस्ति' य कोऽपि किम् अस्ति ? 'इति' एवमुच्चै शब्द चक्रु ॥

---

१. (i) अस्माकेत्यदन्तच्छन्दोऽस्मदीयवचन, ततो विभक्तेर्लुकि रूपम् (ऋ० १ ९७ ३)।
(ii) Bohtlingk (BKSGW 15 Dec 1900, p 419) suggests asmāko—इति कीथमहोदय ।

[रक्षकों से] उठाए जाते हुए वे [परस्पर] जोर से चिल्लाने लगे—'परीक्षित के पुत्र जनमेजय के, कश्यप यज्ञीरहित ब्राह्मणों से विहीन यज्ञ में, इन श्यापर्णों के मध्य जिन असितमृग नामक पुरुषों ने, उन भूतवीर नामक [यज्ञ करवाने वाले] ब्राह्मणों से बलात् सोम पेय को जीत लिया सो वे वहाँ [जनमेजय के यज्ञ में] शूरता से युक्त पुरुष हुए। अतः आज हम लोगों के मध्य कौन वीर पुरुष है जो इस सोम पेय को जीतेगा ?

तस्य प्रश्नस्य श्यापर्णानां मध्ये केनचिदुत्तरमुत्तरं दर्शयति—

**अयमहमस्मि यो वीर इति होवाच रामो मार्गवेय ॥ इति।**

मृगवुर्नाम काचित्स्त्र्यस्ति, तस्याः पुत्रो रामनामा कश्चिद्ब्राह्मण एवमुवाच—हे श्यापर्णा 'वः' युष्माकं मध्ये 'वीरः' परबलीयान् विजेतुं शूर 'अहमयमस्मि' भवतां पुरो वर्तमानोऽस्मीति ॥

'हे श्यापर्णो ! आप लोगों के बीच में यह मैं वीर पुरुष हूँ'—इस प्रकार 'मृगवु' [नामक किसी स्त्री] के पुत्र 'राम' नामक ब्राह्मण ने कहा।

तस्य रामस्य वृत्तान्तमाह—

**रामो हास मार्गवेयोऽनूचानः श्यापर्णीयस्तेषां होत्तिष्ठतामुवाचापि नु राजन्नित्थंविदं वेदेरुत्थापयन्तीति, यस्त्वं कथं वेत्थ ब्रह्मबन्धविति ॥ २७ ॥ इति।**

'श्यापर्णीय' श्यापर्णानां ब्राह्मणानां सम्बन्धी[1] मृगवुपुत्रो राम 'अनूचान' साङ्गवेदशास्त्रपारगत आस। तत्रावस्थितानां तदा श्यापर्णानां वेदेरुत्तिष्ठतां मध्येऽवस्थितो रामो विश्वन्तरं प्रत्येवमुवाच,—हे राजन्, 'इत्थंविदं' यागसम्बन्धिप्रयोगप्रकाराभिज्ञं मामपि त्वदीया वेत्रपाणयः 'नु' क्षिप्रं वेदेरुत्थापयन्ति, तदेतदयुक्तमिति। तच्छ्रुत्वा विश्वन्तरो राजैवमुवाच हे 'ब्रह्मबन्धो' ब्राह्मणाधम राम यस्त्वं धाष्ट्र्यादब्रवीपि, स त्वं कथं वेत्थेति। अथ राजोवाचेत्यध्याहर्तव्यम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायाः पञ्चमाध्याये (पञ्चत्रिंशाध्याये) प्रथमः खण्डः ॥ १ ॥ (२७) [२५०]

श्यापर्णीय ब्राह्मणों में मृगवु के पुत्र राम साङ्ग वेदशास्त्र में पारगत थे। वेदी के मध्य उठते हुए उन श्यापर्णों के मध्य राम ने विश्वन्तर से कहा—'हे राजन् ! याग

1 अस्ति श्यापर्णशब्दो बिदाद्यन्तर्गण-गोपवनादिगणे पठितः (पा० सू० २ ४ ६७)। कार्तकौजपादिगणे च 'पैङ्गरश्यापर्णेयाः कपिश्यापर्णेयाः' इति (पा० सू० ६ २ ३७)। 'तद्विद्वावाच्छ्यापर्णः सायकायन आह'—इति शत० ब्रा० १० ४ १ १०। तत्रैवान्यत्रान्यत्र च ६ २ १ ३९, ९ ५.२ १।

सम्बन्धी प्रयोग के प्रकार को जानने वाले मुझ जैसे जनों को भी आपके रक्षक इतनी नीचता से वेदी से उठा रहे हैं' [यह ठीक नहीं है]। इस पर राजा ने कहा—हे ब्राह्मणाधम! जो तुम [धृष्टतापूर्वक कह रहे] हो, उसे तुम क्या जानते हो?

॥ इस प्रकार पैंतीसवें (पञ्चम) अध्याय के प्रथम खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥१॥

## अथ द्वितीयः खण्डः

अथ राम. स्वकीय वेदन राज्ञोऽग्रे प्रकटयति—

**यत्रेन्द्रं देवता पर्यवृञ्जन् विश्वरूपं त्वाष्ट्रमभ्यमंस्त, वृत्रमस्तृत यतीन् सालावृकेभ्यः प्रादादरुर्मघानवधीद्, बृहस्पतेः प्रत्यवधीदिति; तत्रेन्द्र सोमपीथेन व्यार्ध्यतेन्द्रस्यानु व्यृद्धि क्षत्त्रं सोमपीथेन व्यार्ध्यतापीन्द्रः सोमपीथेऽभवत्, त्वष्टुरामुष्य सोम तद् व्यृद्धमेवाद्यापि क्षत्त्रं सोमपीथेन; स यस्त भक्ष विद्यात् क्षत्त्रस्य सोमपीथेन व्यृद्धस्य येन क्षत्त्र समृध्यते कथं ते वेदेरुत्थापयन्तीति ॥ इति ।**

हे विश्वन्तर, मदीय वेदन शृणु । पुरा कदाचिद्देवता इन्द्रस्योपरि पञ्चापराधान् सम्पाद्येन्द्र 'पर्यवृञ्जन्' यज्ञेषु परितो वर्जितवन्तः । 'यत्र' यदा वर्जनं कृतं, तत्र तत्रेन्द्र. 'सोमपीथेन व्यार्ध्यत' सोमपानेन वियुक्तोऽभूत् । इन्द्रस्य येऽपराधास्तेऽभिधीयन्ते—त्वष्टुः पुत्र विश्वरूपनामान ब्राह्मणम् 'अभ्यमंस्त' इन्द्रो हिंसितवान् । तथा तेन त्वष्ट्रोत्पादित वृत्रनामानं ब्राह्मणम् 'अस्तृत' हिंसितवान् । एतदुभयं तैत्तिरीयैः—'विश्वरूपो वै त्वाष्ट्रः' 'त्वष्टा हतपुत्रः' इत्यनुवाकद्वये विस्पष्टमाम्नातम्[1] । तथा यतिवेषधरानसुरान्यस्मैण च्छित्वा 'सालावृकेभ्य.' अरण्यश्वभ्य. प्रादात्[2] । तथाऽन्यानरुर्मघनामकान् ब्राह्मणवेषान-सुरान् अवधीत् । तथा स्वगुरोर्बृहस्पतेर्विषयं स्वकीयेन वाक्येन प्रत्यवधीत् । सोऽयं प्रति-घातो न युक्तः । तथा च आपस्तम्बः स्मरति—'वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेच्छ्रेयसां च'[3] इति । ऐते पञ्चापराधास्तन्निमित्तभूतैरिन्द्रस्य सोमपाने निवारिते सति 'व्यृद्धि' तन्निवारणमनु 'क्षत्त्र' सर्वोऽपि क्षत्त्रियजातिः 'सोमपीथेन' 'व्यार्ध्यत' सोमपानेन वियुक्तोऽभूत् । तदूर्ध्वं 'सोमपीथे' सोमपानेऽपि स प्रवृत्तोऽभूत् । कथमिति ? तदुच्यते—

---

१. तै० सं० २.५.१.१.; २.१ । कौ० उ० ३.१ ।

२. 'इन्द्रो यतीन्सालावृकेभ्यः प्रायच्छत्'–इति तै० सं० ६.२.७.५ । ता०ब्रा० ८.१.४ । 'वेदविरुद्धनियमोपेतान् यतीन्' - इति तत्र सायणः । ता० ब्रा० १३.४.१७ । 'यतीन्–एतन्नामकान् यज्ञविरोधिजनान्'–इति तु तत्र सायणः ।

३. आप० धर्म० २.२.५.११ ।

'अमुष्य त्वष्टुः सोमम् आ', बलादपिबदिति शेषः । तथा च तैत्तिरीया आमनन्ति—'स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्'[1] इति । 'तत्' तथा सति इन्द्रेण बलात् सोमे पीते सति क्षत्रियजातेरस्य तत्सामर्थ्याभावादिदानीमपि क्षत्रं 'सोमपीथेन व्यृद्धमेव' सोमपानरहितमेवावतिष्ठते । 'येन' भक्षविशेषेण क्षत्रं समृद्धं भवति, तादृशो योऽयो भक्षः, सोमपानेन वियुक्तस्य क्षत्रस्य समभवत्, स भक्षः यः पुमान् विद्यात्, 'तं' तादृशं क्षत्रियभक्षविदमस्मदादिपुरुषं कथमेते येऽत्रपाणयो वेदेऽस्त्यपयन्तीति रामस्योपालम्भः ॥

vii.२ [xxxv २] [हे विश्वतर मेरा कथन सुनो—प्राचीन काल में] जब देवताओं ने इन्द्र को [पाँच अपराधों के कारण] यज्ञ में परिवर्जित कर दिया तब वहाँ इन्द्र सोमपान से वियुक्त हो गए । [उन इन्द्र के निम्न पाँच अपराध थे]—१ त्वष्टा के पुत्र विश्वरूप नामक ब्राह्मण को इन्द्र ने मार डाला, और [उन त्वष्टा से उत्पन्न] २ वृत्र नामक ब्राह्मण का वध किया, तथा ३ साधु वेषधारी [असुरों] को [शस्त्र से छिन्न भिन्न करके] अरण्यचारी कुत्तों को दे दिया और ४ अन्य भी, अरुमर्घों [नामक ब्राह्मणों के वेषधारी असुरों] को मार डाला, तथा [अपने गुरु] ५ बृहस्पति के वाक्यों को अपने वाक्यों से काट दिया । [इस प्रकार पाँच अपराधों के कारण] इन्द्र के [सोमपान से] वर्जित कर दिए जाने पर सभी क्षत्रिय जाति भी सोमपान से वियुक्त हो गई । फिर भी इन्द्र सोमपान में प्रवृत्त हुए । एसे [इन्द्र] ने त्वष्टा के सोम को बलात् पी लिया । किन्तु क्षत्रिय तो आज भी [उस सामर्थ्य के अभाव के कारण] सोमपान से वञ्चित ही हैं । जिस [भक्ष्य विशेष] से क्षत्रिय समृद्ध होता है, उस सोमपान से वियुक्त क्षत्रिय का अन्य हो भक्ष्य है, और उस भक्ष्य को जो व्यक्ति जानता है एसे जानकार को आपके रक्षक कैसे वेदी के पास से उठा रहे हैं ?

अथ रामविश्वतरयोरुक्तिप्रत्युक्ती दर्शयति—

वेत्थ ब्राह्मण त्वं तं भक्षा३म्, वेद हीति, तं वै नो ब्राह्मण ब्रूहीति, तस्मै वै ते राजन्निति होवाच ॥ २८ ॥ इति ।

हे ब्राह्मण' राम त्वं तादृशं भक्षं किं वेत्थेति विश्वतरस्य प्रश्नः । तदर्था प्लुतिः 'वेद हि' जानाम्येवेति रामोऽब्रवीत् । हे ब्राह्मण 'तं वै' तमेव क्षत्रियभक्षं 'नः' अस्माकं ब्रूहीति विश्वतरः पप्रच्छ । हे राजन्, 'तस्मै ते वै' तादृशाय पृच्छते तुभ्यमेव कथयामीति राम उवाच ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायाः पञ्चमाध्याये (पञ्चत्रिंशाध्याये) द्वितीयः खण्डः ॥ २ ॥ (२८) [२५१]

---

१ तै० सं० २५२१ । 'इन्द्रो यज्ञवेशस—इत्यादि संहितापाठः । 'इन्द्राणी देवी प्रासहा ददाना'–इति तै० ब्रा० २४२७ । 'इन्द्रस्य प्रिया जाया वावाता प्रासहा नाम'–इति, इत पूर्वम् आम्नातम् इहैव (४५९ पृ०) ।

हे ब्राह्मण ! क्या तुम उस भक्ष्य को जानते हो ? 'हाँ जानता हूँ'—इस प्रकार [राम ने कहा]। 'हे ब्राह्मण ! उस [क्षत्रिय के भक्ष्य] को हम लोगों से कहो'—इस प्रकार [विश्वन्तर ने पूछा]। 'हे राजन् ! उस प्रकार के आप पूछने वाले के लिए मैं कहता हूँ'—इस प्रकार [राम ने कहा]।

॥ इस प्रकार पैंतीसवें (पञ्चम) अध्याय के द्वितीय खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥२॥

## अथ तृतीयः खण्डः

क्षत्रियस्य हेया भक्षास्त्रिविधा, उपादेयो भक्ष एकः, तत्र हेयान् भक्षान् दर्शयति—

त्रयाणां भक्षाणामेकमाहरिष्यन्ति, सोमं वा दधि वाऽपो वा ॥ इति।

हेयानां त्रयाणां मध्ये अन्यमेकं क्षत्रियस्य तवानभिज्ञा ऋत्विज आहरिष्यन्ति। तं भक्षमित्याशङ्क्य सोमं वा दधि वा जलं वेत्युक्तम् ॥

VII.29 [xx. 3] वस्तुतः क्षत्रिय के लिए तीन भक्षण वर्जित हैं, मात्र एक ही भक्ष्य उपादेय है। [अतः उन] तीन [हेय] भक्षणों में से एक को तुम्हारे ऋत्विज लेंगे—१ सोम को, या २ दही को अथवा ३ जल को।

तत्र सोमपक्षे दोषं दर्शयति—

स यदि सोमं, ब्राह्मणानां स भक्षो, ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि, ब्राह्मणकल्पस्ते प्रजायामाजनिष्यत—आदाय्यापाय्यावसायी यथाकामप्रयाप्यो, यदा वै क्षत्रियाय पापं भवति ब्राह्मणकल्पोऽस्य प्रजायामाजायत, ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युपैतोः, स ब्रह्मबन्धवेन जिज्यूषितः ॥ इति।

'सः' अनभिज्ञ ऋत्विग्यदि ते विप्रवर्तरस्य क्षत्रियस्य 'सोमं' भक्षम् आहरेदिति दोषः। 'स' सोमो ब्राह्मणानां योग्यो भक्षः तेन भक्षेण ब्राह्मणान् 'जिन्विष्यसि' प्रीणयिष्यसि। न तु क्षत्रियस्य तव प्रीतिः। तथा सति 'ते' तव राज्ञः 'प्रजायां' सन्ततौ 'ब्राह्मणकल्पः' ईषदसमाप्तो ब्राह्मणः[1] आजनिष्यते। क्षत्रियधर्मेण शौर्येण रहितत्वात्तस्य ब्राह्मणसदृशत्वम्। स च पुत्रो ब्राह्मणवद् वक्ष्यमाणगुणचतुष्टयोपेतो भवति। आदानं प्रतिग्रहः तच्छीलः। 'आदायी'। प्रतिग्रहश्च ब्राह्मणगुणः। ऋत्विग्भूत्वा सोमं सम्यक् पाययतीति 'आपायी'। तदेतद्याजनमपि ब्राह्मणगुणः। अवसानं तस्य सर्वत्र याचनमाश्रयः, तमाव समवि प्राप्नोतीति 'आवसायी'। परगृहे सदा भोजनयाचनमपि ब्राह्मणगुणः। कामभिच्छा मनतिक्रम्य यथाकामं तदनुसारेण 'प्रयाप्यः' निर्वासयितुं शक्यः, क्षत्रियवैश्यादिवच्छौर्य-

---

१ 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः।'—इति पा० सू० ५.३.६७।

धनाद्यभावाद् यः कोऽप्यागत्य दुर्बलं ब्राह्मणं स्वद् गृहाद् तदीयग्रामाद्वा निष्कासयितुमिच्छति, तदानीमयं ब्राह्मणो दुर्बलत्वात्तेन निःसारयितुं शक्यते। एवमेते चत्वारो धर्मा ब्राह्मण-गुणाः। सोमं भक्षयतो राज्ञ एतद् गुणकः पुत्रो जायते। किंच यदा प्रमादात् 'क्षत्रियाय पापं' क्षत्रियस्य किंचिन्निषिद्धाचरणं भवति, तदानीं तेन पापेन तस्य क्षत्रियस्य 'प्रजायां' संततौ 'ब्राह्मणकल्प.' शौर्यराहित्यादिना ब्राह्मणसदृशः पुत्र आजायते। 'अस्मात्' पापिन. क्षत्रियात् 'द्वितीयो वा तृतीयो वा' पुत्रो वा पौत्रो वा 'ब्राह्मणतामभ्युपैतो' शौर्यादिगुण-रहितं ब्राह्मण्यं प्राप्तुमीश्वर.[1] समर्थो भवति। 'सः' ब्राह्मणसदृश. क्षत्रियपुत्रो 'ब्राह्मण-बन्धवेन' ब्राह्मणानां क्रमबन्धुत्वेन ब्राह्मणोचितयाच्ञादिना 'जिज्यूषित.' जीवितुमिष्टो नीचवृत्त्यैन्यवृत्त्या जीवितुं प्रवृत्तो भवतीत्यर्थ.॥

यह [अनभिज्ञ ऋत्विज] यदि सोम को लेंगे तो वह ब्राह्मणों के योग्य भक्षण है। उस भक्षण से वह ब्राह्मणों को ही प्रसन्न करेंगे। इस प्रकार उनकी सन्तति ब्राह्मणों के गुणों से युक्त जन्म लेगी [क्योंकि उसमें क्षात्र धर्म-शौर्य गुण न होकर ब्राह्मणत्व सदृश निम्न चार गुण होंगे]—१. वे दान लेने को इच्छा वाले होंगे; २. यजन याजन अर्थात् किसी दूसरे के यज्ञ-यागादि कराने वाले होंगे ३. दूसरे के घर में सदा भोजन को याचना करने के गुण से युक्त होंगे। ४. इच्छानुसार निःसारित करने योग्य [अर्थात् क्षत्रिय और वैश्य के समान शौर्य एवं धन आदि के अभाव में यदि कोई दुर्बल ब्राह्मण को उसके घर या ग्राम से निकालना चाहे तो यह ब्राह्मण दुर्बल होने के कारण उनसे निकाला जा सकने वाला] होगा। और, यदि क्षत्रिय से [प्रमादवशात्] कोई निषिद्धाचरण होता है तो उस पाप से उस क्षत्रिय को संतति में शौर्यविहीन ब्राह्मणसदृश पुत्र उत्पन्न होता है। इस [पापी] क्षत्रिय से द्वितीय अथवा तृतीय पीढ़ी अर्थात् पुत्र या पौत्र [शौर्यादि गुणविहीन] ब्रह्मत्व को प्राप्त करने में भी समर्थ होता है, वह [ब्राह्मण सदृश क्षत्रिय का पुत्र] ब्राह्मणों के बन्धुत्व क्रम में [ब्राह्मणोचित माँगना आदि गुणों से निकृष्ट दैन्य वृत्ति से] जीने को इच्छा वाला होता है।

सामस्य भक्षत्वे दोषमुक्त्वा दध्नो भक्षत्वे दोषमाह—

**अथ यदि दधि, वैश्यानां स भक्षो, वैश्यांस्तेन भक्षेण जिन्विष्यसि, वैश्य-कल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य बलिकृदन्यस्याऽऽद्यो यथाकामज्येयो; यदा वै क्षत्रियाय पापं भवति, वैश्यकल्पोऽस्य प्रजायामाजायत, ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा वैश्यतामभ्युपैतोः, स वैश्यतया जिजयूषितः॥ इति।**

---

१. 'ईश्वरे तोसुन्कसुनौ'—इति पा० सू० ३.४.१३।

यदि ते दधिरूपं भक्षमाहरेत् तदा दध्नो वैश्यभक्षत्वात् तेन वैश्यान् प्रीणयिष्यसि । ततस्तव संततौ वैश्यसमानः पुत्रः आजनिष्यते । वैश्यश्च वाणिज्यं कुर्वन् 'अन्यस्य' राज्ञो 'बलिकृद्' बलि पूजां करोति, कर प्रयच्छतीत्यर्थः । अत एव 'अन्यस्य' राज्ञः 'आद्यः' भक्ष्योऽधीनो भवतीत्यर्थः । तस्य राज्ञः काममिच्छामनतिक्रम्य 'ज्येयः' अभिभवनीयो भवति । 'ज्याऽभिभवे' इति धातुः[1] । त एते करप्रधानपराधीनत्वऽतिरस्कार्यत्वाख्या वैश्यगुणाः । यदा क्षत्रियस्य किंचित्पापं संभवति, तदा तस्य संततौ वैश्यसदृशो जायते । 'अस्माद्' क्षत्रियात् पापिनोऽन्यः पुत्रः पौत्रो वा वैश्यतां प्राप्तुं समर्थो भवति । स च 'वैश्यतया' वैश्यवृत्त्या करप्रदानादिना 'जिज्यूषितः' जीवितुं प्रवृत्तो भवति ॥

और, यदि वह [अनभिज्ञ ऋत्विज] दही लेगा तो यह वैश्यों का भक्ष्य है। उस भक्ष्य से वह वैश्यों को ही प्रसन्न करेगा और उनकी सन्तति वैश्यों के समान उत्पन्न होगी [क्योंकि उसमें क्षात्र धर्म न होकर वैश्यों के सदृश निम्न तीन गुण होंगे]—१.[व्यापार करते हुए वैश्य] अन्य [राजा] को [कर आदि देकर] पूजा करता है; २. इसलिए दूसरे राजा का वह अन्न खाने वाला [और उसे खाकर वह उसके अधीन] होता है और ३. उस राजा के इच्छानुसार वह अभिभवनीय होता है [इस प्रकार वह कर देकर पराधीन और तिरस्कृत होने के गुण से युक्त होता है]। और जब किसी क्षत्रिय से कोई पाप [अर्थात् निषिद्धाचरण] हो जाता है तो उसकी सन्तति में तब वैश्यसदृश पुत्र उत्पन्न होते हैं और इस पापी क्षत्रिय के अन्य दूसरे अथवा तीसरे पीढ़ी में अर्थात् पुत्र या पौत्र वैश्यत्व को प्राप्त करने में समर्थ होते हैं और वह वैश्यवृत्ति से कर प्रदान आदि से जीवन यापन करने में प्रवृत्त होता है।

दधिभक्षे दोषमुक्त्वा जलभक्षे दोषमाह –

अथ यद्यपः, शूद्राणां स भक्षः, शूद्रांस्तेन भक्षेण जिन्विष्यसि, शूद्रकल्पस्ते प्रजायामाजनिष्यते,ऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यो; यदा वै क्षत्रियाय पापं भवति, शूद्रकल्पोऽस्य प्रजायामाजायत, ईश्वरो हास्माद्‌द्वितीयो वा तृतीयो वा शूद्रतामभ्युपेतोः स शूद्रतया जिज्यूषितः ॥ २९ ॥ इति ।

यदि ते क्षत्रियस्य कश्चिदृत्विक् 'अपः' जलं भक्षमाहरेत्, तदानीं 'सः' जलात्मकः शूद्राणां भक्षः, तेन भक्षेण शूद्रान् प्रीणयिष्यसि । ततस्तव संततौ शूद्रसदृशः पुत्र उत्पद्यते । शूद्रश्च 'अन्यस्य' उत्तमवर्णत्रयस्य 'प्रेष्यः' प्रेषणीयो भृत्यो भवति । तथा 'कामोत्थाप्यो'

1. धनुर्भिर्धर्मैर्ब्राह्मण्यं भुनक्ति—अर्चया च दानेन च, अज्येयतया च अवध्यतया च'— इति शत० ब्रा० ११.५.७.१ । ज्यानिर्हानिस्तद्विषयमज्येयता' इति तु तत्र सायणः ।

मध्यरात्रादौ यदाकदाचिद्दिने इच्छा भवति, तदानीमयमुत्थाप्यते। तथा तदीय 'कामम्' इच्छामनतिक्रम्य 'वध्य' कुपितेन स्वामिना तडघो भवति। एते शूद्रगुणाः। क्षत्रियस्य कदाचित् पापे सति शूद्रसमान पुत्रो जायते। 'अस्मात्' क्षत्रियात् अन्य पुत्र पौत्रो वा शूद्रत्व प्राप्तु समर्थो भवति। 'स' पुत्रः 'शूद्रतया' शूद्रवर्णतया दासत्ववृत्त्या 'जिज्यूषित' जीवतु प्रवृत्तो भवति॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तम पञ्चिकाया पञ्चमाध्याये (पञ्चत्रिंशाध्याये) तृतीय खण्ड ॥ ३ ॥ (२९) [२५२]

और, यदि वह [अनभिज्ञ ऋत्विज] जल लेगा तो वह शूद्रों का भक्ष्य है। उस भक्षण से वह शूद्रों को ही प्रसन्न करेगा। उनकी सन्तति शूद्रों के समान जन्म लेगी [क्योंकि उसमें क्षात्रधर्म न होकर शूद्रों के सदृश निम्न तीन गुण होंगे]—१ शूद्र अन्य तीन वर्णों का प्रेषणीय सेवक होता है तथा २ वह कभी भी [मध्य रात्रि आदि में] इच्छानुसार उठाने योग्य होता है और ३ वह इच्छानुसार कुपित स्वामी से प्रताडित भी होता है। जब किसी क्षत्रिय से कोई पाप [निषिद्ध आचरण] हो जाता है तो उसकी सन्तति में तब शूद्र के सदृश पुत्र उत्पन्न होते हैं। इस पापी क्षत्रिय के अन्य दूसरे अथवा तीसरे पीढ़ी में अर्थात् पुत्र या पौत्र शूद्रत्व को प्राप्त करने में समर्थ होते हैं, और वह शूद्र वृत्ति से [अर्थात् दासत्व आदि से] जीवन यापन करने में प्रवृत्त होता है।

॥ इस प्रकार पैंतीसवें (पञ्चम) अध्याय के तृतीय खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥ ३ ॥

## अथ चतुर्थः खण्डः

अथ क्षत्रियोचित भक्ष दर्शयितुमुक्ताना भक्षाणा क्षत्रियेण हेयता सगृह्याऽऽह—

**एते वै ते त्रयो भक्षा राजन्निति होवाच, येषामाशां नेयात् क्षत्रियो यजमानः ॥ इति।**

क्षत्रियो याग कुर्वन् येषा' भक्षाणाम् 'आशाम्' इच्छामपि 'नेयात्' न प्राप्नुयात्। हे 'राजन्' विश्वन्तर, ते त्रयोऽपि 'एते' पूर्वमुक्ताः॥

VII ३० [XXXV ४] 'हे राजन् ये तीन भक्ष्य पदार्थ हैं'—इस प्रकार [राम ने कहा]। किन्तु याग करते हुए क्षत्रिय यजमान को इन्हें लेने की इच्छा भी नहीं करनी चाहिए।

उपादेय भक्ष दर्शयति—

**अथास्यैष स्वो भक्षो न्यग्रोधस्यावरोधाश्च फलानि चौदुम्बराण्याश्वत्थानि प्लाक्षाण्यभिषुणुयात्तानि भक्षयेत्, सोऽस्य स्वो भक्षः॥ इति।**

'अथ' हेयभक्षकथनानन्तरम्, उपादेयो भक्ष कथ्यत इति शेषः। 'अस्य' राज्ञ एव वक्ष्यमाण स्वो भक्ष । कोऽसाविति ? सोऽभिधीयते। 'न्यग्रोधस्यावरोधा' शाखाभ्योऽवाङ्मुखत्वेन प्ररोहन्तो मूलविशेषा । तथैवोदुम्बराश्वत्थप्लक्षाख्यानां वृक्षाणां फलानि च, 'तानि' सर्वाणि 'अभिषुणुयात्'। अभिषुत्य च यो रसो भवति, स रस भक्षणम्। 'स' अयम् 'अस्य' क्षत्रियस्य स्वोचितो भक्ष ॥

इस [क्षत्रिय के हेय भक्षण के कथन] के बाद इसका अपना [उपादेय] भक्ष्य है—न्यग्रोध (= बड के पेड) की शाखाओं से निकलकर नीचे लटकने वाली जड़ों [=बरोहों] को और उसी प्रकार गूलर, पीपल और पाकड़ [= प्लक्ष] के फलों को लेकर सभी को एक साथ अभिषुत करे तथा उससे निकले रस का पान करे। यही इस [क्षत्रिय] का अपना भक्ष्य है।

अथ न्यग्रोधप्रशंसार्थं तदुत्पत्तिं दर्शयति—

यतो वा अधि देवा यज्ञेनेष्ट्वा स्वर्गं लोकमायंस्तत्रैतांश्चमसान्न्युब्जंस्ते न्यग्रोधा अभवन्, न्युब्जा इति हाप्येनानेतर्ह्याचक्षते, कुरुक्षेत्रे ते ह प्रथमजा न्यग्रोधानां तेभ्यो हान्येऽधिजाता ॥ इति ।

देवा पुरा 'यतो वा अधि' यस्य कुरुक्षेत्रस्योपरि यज्ञेनेष्ट्वा स्वर्गं लोकम् 'आयन्' प्राप्नुवन्, 'तत्र' तस्मिन् यजदेशे 'एतान्' सोमचमसान् 'न्युब्जन्' अधोमुखान् अस्थापयन्। अधोमुखा ते चमसा न्यग्रोधवृक्षा अभवन्। 'एतर्हि' इदानीमपि तस्मिन् कुरुक्षेत्रे 'एनान्' न्यग्रोधवृक्षान् 'न्युब्जा' इति अनेन नाम्नाऽऽचक्षते। 'ते' कुरुक्षेत्रदेशस्था वृक्षा भूलोकवर्तिनां सर्वेषां न्यग्रोधवृक्षाणां मध्ये 'प्रथमजा' प्रथमत उत्पन्ना। 'तेभ्य' तद्देशवर्तिन्यग्रोधवृक्षेभ्य 'अन्ये' देशान्तरवर्तिनो न्यग्रोधाः 'अधिजाता' आधिक्येनोत्पन्ना ॥

देवों ने प्राचीन काल में जिस [कुरुक्षेत्र] के ऊपर यजन करके यज्ञ के द्वारा स्वर्ग लोक को प्राप्त किया था, उस [यज्ञ] प्रदेश में उन्होंने इन [सोम के] चमसों को उलट कर रख दिया। वे ही अधोमुख अवस्थित चमसों से सोम जो नीचे गिरे थे] न्यग्रोध हो गए। आज भी वहाँ उस [कुरुक्षेत्र] में इन [न्यग्रोध वृक्षों] को 'न्युब्जा' [अर्थात् नीचे को मुड़ने वाला] ही कहते हैं। वे [कुरुक्षेत्र देशस्थ] वृक्ष [भूलोक के] सभी न्यग्रोध के वृक्षों के मध्य प्रथमतः उत्पन्न हुए। [उस देश के] उन [न्यग्रोध वृक्षों] से अन्य देशान्तरवर्ती न्यग्रोध उत्पन्न हुए।

न्यग्रोधशब्द निर्वक्ति—

ते यन्न्यञ्चोऽरोहंस्तस्मान्न्यङ् रोहति न्यग्रोहो, न्यग्रोहो वै नाम, तन्न्यग्रोहं सन्तं न्यग्रोध इत्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवाः ॥ ३० ॥ इति ।

'ते' चमसा 'यद्' यस्मात्कारणात् 'न्यञ्च' अधोमुखाः 'अरोहन्' प्रादुर्भूताः 'तस्मात्' कारणात् 'न्यङ्' अधोमुखो 'रोहति' प्रादुर्भवतीति व्युत्पत्त्या 'न्यग्रोह' सम्पन्न । स च

वस्तुतो न्यग्रोह इत्येव नामार्हति, तस्य नाम्नो व्युत्पत्त्यनुसारित्वात्। तथाऽपि न्यग्रोह इत्य वृक्ष लौकिका हकारस्य धाकारादेश कृत्वा न्यग्रोध इति परोक्षनाम्ना व्यवहरन्ति, 'देवाना' पूज्यानामाचार्योपाध्यायादीनां परोक्षनामप्रियत्वात् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकाया पञ्चमाध्याये (पञ्चत्रिंशाध्याय) चतुर्थः खण्ड ॥४॥ (३०) [२१३]

वे [चमस] क्योंकि अधोमुख करके प्रादुर्भूत हुए थे, इसीलिए यह [बरगद भी] अधोमुख होकर ही प्रादुर्भूत होते हैं। इसी कारण इनका नाम 'न्यग्र-रोह' [नीचे उगना] हुआ। वस्तुत [*व्युत्पत्ति के अनुसार उसका नाम 'न्यग्रोह' ही होना चाहिए किन्तु*] 'न्यग्रोह' होते हुए भी, जो इसे [लोक में] लोग [हकार का पकार आदेश करके] 'न्यग्रोध' इस परोक्ष [छिपे हुए] नाम से व्यवहार करते हैं, वह इसलिए कि देव [पूज्य आचार्य और उपाध्याय आदि] परोक्ष [= छिपे हुए, रहस्य युक्त] नाम के [उच्चारण] प्रिय होते हैं।

॥ इस प्रकार पैंतीसवें (पाचवें) अध्याय के चतुर्थ खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥ ४ ॥

## अथ पञ्चमः खण्डः

न्यग्रोधवृक्षस्योत्पत्तिमुक्त्वा तदीयानामवरोधानां फलानां चोत्पत्तिं दर्शयति—

**तेषां यश्चमसानां रसोऽवाङैत्, तेऽवरोधा अभवन्नथ य ऊर्ध्वस्तानि फलानि ॥ इति।**

'तेषाम्' अधोमुखत्वेनावस्थितानां चमसानां वटवृक्षत्वे सति चमसगतो यो रसः स 'अवाङैत्' अधोमुखोऽगच्छत्। 'ते' रसविशेषा 'अवरोधा' अधोमुखत्वेनोत्पन्ना वटशाखाभ्यो निर्गता मूलविशेषा अभवन्। 'अथ' तद्विलक्षणतो यो रस ऊर्ध्वो निरगच्छत्, 'तानि' रसरूपाणि वटफलान्यभवन् ॥

VII.31 [XXXV.5] उन [अधोमुख अवस्थित] चमसों का जो [वट वृक्ष होने के बाद चमस गत] रस अधोमुख गया, वे ही [बड़ की शाखाओं से निकलने वाली] बरोहें हुईं और जो [रस की विलक्षणता] ऊपर में गई वे [वटवृक्ष के] फल हुए।

तेषामेवावरोधानां फलानां च क्षत्रियभक्ष्यत्वं प्रशंसति—

**एष ह वाव क्षत्रियः स्वाद्भक्षादेति, यो न्यग्रोधस्यावरोधांश्च फलानि च भक्षयत्युपाह परोक्षेणेव सोमपीथमाप्नोति, नास्य प्रत्यक्षं भक्षितो भवति, परोक्षमिव ह वा एष सोमो राजा यन्न्यग्रोधः, परोक्षमिवैव ब्रह्मणो रूपमुपनिगच्छति यत्क्षत्रियः, पुरोधयैव दीक्षयैव प्रवरेणैव ॥ इति।**

'यः' पुमान्न्यग्रोधवृक्षस्य 'अवरोधान्' अधोमुखानि मूलानि च, तत्फलानि च भक्षयति, एष एव क्षत्रियः स्वोचिताद्भक्षान्नापैति। किंचाय क्षत्रियः 'परोक्षेणैव' न्यग्रोधस्याव-

पानेनैव 'सोमपीथं' सोमपानम् 'उपाहं' 'प्राप्नोति' सर्वथा प्राप्नोति । 'अस्य' क्षत्रियस्य 'प्रत्यक्षम्' अव्यवधानं यथा भवति तथा सामो भक्षितो न भवति, न्यग्रोधेन व्यवहितत्वात् । योऽयं न्यग्रोधः, एष परोक्षमेव यथा भवति तथा वर्तमानः सोमो राजा । योऽयं क्षत्रियोऽस्ति, एषोऽपि 'परोक्षमिव' व्यवधानेनैव ब्राह्मणो भूत्वा 'रूपं' तदीयमेवमुपनिगच्छति । 'पुरोधयैव' पुरोहितद्वारेण, 'दीक्षयैव' दीक्षारूपसंस्कारेण च, 'प्रवरेणैव' पुरोहितगोत्रेण च, ब्राह्मण्यस्य सपादितत्वादिति शेषः ॥

जो पुरुष इस न्यग्रोध वृक्ष को वरोहों को और उसके फलों का भक्षण करता है वही क्षत्रिय अपने स्वोचित भक्ष्य से वंचित नहीं होता है और वह क्षत्रिय [न्यग्रोध के व्यवधान द्वारा] परोक्ष रूप से सोमपान को ही प्राप्त करता है । इस प्रकार इस [क्षत्रिय] का [सोमपान रूप] प्रत्यक्ष भक्षण भी नहीं होता । जो यह न्यग्रोध है वह परोक्ष रूप से वही सोम राजा है; और जो यह क्षत्रिय है वह परोक्ष रूप से [ब्राह्मण होकर] ब्राह्मण के रूप को प्राप्त करता है; अर्थात्—पुरोहित के द्वारा, दीक्षा रूप संस्कार के द्वारा और पुरोहित के गोत्र [उच्चारण] के द्वारा ।

प्रकारान्तरेण न्यग्रोधक्षत्रिययोः साम्यमापाद्य प्रशंसति—

क्षत्रं वा एतद्वनस्पतीनां यन्न्यग्रोधः, क्षत्रं राजन्यो, नितत इव हीह क्षत्रियो राष्ट्रे वसन् भवति प्रतिष्ठित इव, नितत इव न्यग्रोधोऽवरोहैर्भूम्यां प्रतिष्ठित इव ॥ इति ।

यो न्यग्रोधाऽस्ति 'एतद्' न्यग्रोधस्वरूप वनस्पतीना मध्ये 'क्षत्रं वै' क्षत्रियजातिरेव । 'राजन्य.' देशाधिपतिरपि 'क्षत्र' मनुष्याणां मध्ये क्षत्रियजातिः । किंचायं क्षत्रियः 'इह राष्ट्रे' स्वदेशे वसन् 'नितत इव हि' तत्तद् ग्रामेषु संचरणेन नितरां संतत एव भवति । तथा 'प्रतिष्ठित इव' राज्यस्थैर्येण चलनरहित एव भवति । न्यग्रोधवृक्षोऽप्यधोमुखैः 'अव-रोधैर्नितत इव' नितरा व्याप्त एव भवति । तथा 'भूम्यां प्रतिष्ठित इव' स्थिर एव भवति । तस्मादस्त्युभयो. साम्यम् ॥

जो यह न्यग्रोध है, वह वनस्पतियों में क्षत्रिय है और [देशाधिपति] राजा मनुष्यों के मध्य क्षत्रियजाति है; और यह क्षत्रिय अपने राष्ट्र में रहते हुए [उन-उन ग्रामों में जाते हुए] निरन्तर संचरणशील ही रहता है और वह [राज्य की स्थिरता के कारण चलायमान न होकर] प्रतिष्ठित के समान ही होता है; और न्यग्रोध वृक्ष भी अधोमुख वरोहों से निरन्तर व्याप्त होता है; और भूमि में प्रतिष्ठित अर्थात् स्थिर भी होता है ।

न्यग्रोधभक्षमुपसंहरति—

तद्यत्क्षत्रियो यजमानो न्यग्रोधस्यावरोधांश्च फलानि च भक्षयत्यात्मन्येव तत्क्षत्रं वनस्पतीनां प्रतिष्ठापयति, क्षत्र आत्मानम् ॥ इति ।

'तत्' तस्मान्न्यग्रोधक्षत्रिययोः सादृश्यसद्भावाद् यः क्षत्रियः पुरुषो यागं कुर्वन् न्यग्रोधवृक्षस्यावरोधान् फलानि च भक्षयेत् । तदानीं वनस्पतीनां सबद्ध 'क्ष त्र' क्षत्रियजातिम् 'आत्मन्येव' स्वोदरमध्य एव प्रतिष्ठापयति । तथैव 'आत्मानं' स्वस्वरूपं वनस्पतिसबन्धिनि 'क्षत्रे' न्यग्रोधे प्रतिष्ठापयति ॥

जो यह क्षत्रिय यजमान [याग करते हुए] न्यग्रोध के बरोहों का और फलों का भक्षण करता है तो वह वनस्पतियों में उस क्षत्रिय [रूप न्यग्रोध] को ही अपने [उदर] में प्रतिष्ठित करता है। उसी प्रकार वह अपने स्वरूप को उस [वनस्पति से सम्बद्ध] क्षत्रिय [न्यग्रोध] में प्रतिष्ठित करता है।

उपसहृतं त भक्षं पुनरपि प्रशसति—

**क्षत्रे ह वै स आत्मनि क्षत्रं वनस्पतीनां प्रतिष्ठापयति, न्यग्रोध इवावरोधैर्भूम्यां प्रति राष्ट्रे तिष्ठत्युग्रं हास्य राष्ट्रमव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानः ॥ ३१ ॥** इति ।

'यः' क्षत्रियो यागं कुर्वन् 'एतं' न्यग्रोधसबन्धिनं भक्षं भक्षयति, स क्षत्रियः स्वयं वनस्पतीनां सबन्धिनि 'क्षत्रे' न्यग्रोधे प्रतिष्ठितः सन् 'आत्मनि' स्वस्मिन् वनस्पतीनां सबन्धि क्षत्रं न्यग्रोधं प्रतिष्ठापयति । यथा न्यग्रोधोऽवरोधैर्भूम्यां प्रतिष्ठितः, एवमयं राजा राष्ट्रे प्रतितिष्ठति । अस्य राष्ट्रम् 'उग्रं' तेजस्वि सत् 'अव्यथ्यं' केनापि व्यथितुमशक्यं भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायाः पञ्चमाध्याये (पञ्चत्रिंशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ (३१) [२५४]

जो क्षत्रिय यजमान [याग करते हुए] इस [न्यग्रोध रूपी] भक्ष्य का भक्षण करता है, वह [क्षत्रिय] स्वयं [वनस्पति सम्बन्धी] क्षत्रिय [रूप न्यग्रोध] में प्रतिष्ठित होकर अपने में वनस्पति सम्बन्धी क्षत्रिय [रूप न्यग्रोध] को प्रतिष्ठित करता है। जैसे न्यग्रोध जड़ों से भूमि में जाकर प्रतिष्ठित होता है, वैसे ही यह राजा राज्य में प्रतिष्ठित होता है, और इसका राष्ट्र तेजस्वी एवं किसी से भी नष्ट न होने योग्य हो जाता है।

॥ इस प्रकार पैंतीसवें (पाँचवें) अध्याय के पाँचवें खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥५॥

## अथ षष्ठः खण्डः

न्यग्रोधस्यावरोधान् फलानि च प्रशस्य, औदुम्बरादिप्रशसां क्रमेण दर्शयति—

**अथ यदौदुम्बराण्यूर्जो वा एषोऽन्नाद्याद्वनस्पतिरजायत यदुदुम्बरो, भौज्यं वा एतद्वनस्पतीनामूर्जमेवास्मिंस्तदन्नाद्यं भौज्यं च वनस्पतीनां क्षत्रे दधाति ॥** इति ।

'अथ' न्यग्रोधप्रशंसानन्तरम्, उदुम्बरप्रशंसा क्रियते। 'यद्' यानि 'औदुम्बराणि' फलानि भक्षत्वेनोक्तानि, तेषामुत्पादको यदुदुम्बरोऽस्ति, एषः 'ऊर्जः' रसादन्नाद्याच्च वनस्पतिरूपोऽजायत। 'एतद्' उदुम्बरफलं वनस्पतीनां मध्ये 'भौज्यं वै' भोजनार्हमेव। 'तद्' तेनौदुम्बरभक्षेण 'अस्मिन् क्षत्रे' 'ऊर्जमेव' रसमेव तथाऽन्नाद्यं वनस्पतीनां मध्ये भोजनयोग्यं द्रव्यमवस्थापयति ॥

VII.32 [XXXV.6] और, जो यह गूलर [के फलों का भक्षण कहा गया] है [उनका उत्पादक] जो उदुम्बर है, वह अन्न के रस से वनस्पतियों में भोजन के योग्य हो है। अतः उस [उदुम्बर] के भक्षण से वह इस क्षत्रिय में रस को ही और अन्न को एवं वनस्पतियों के मध्य भोजन योग्य द्रव्य को स्थापित करता है।

अश्वत्थफलानि प्रशंसति—

अथ यदाश्वत्थानि, तेजसो वा एष वनस्पतिरजायत यदश्वत्थः, साम्राज्यं वा एतद्वनस्पतीनां, तेज एवास्मिंस्तत्साम्राज्यं च वनस्पतीनां क्षत्रे दधाति ॥ इति।

'अथ' औदुम्बरप्रशंसानन्तरम् अश्वत्थफलानि प्रशस्यन्ते। यान्यश्वत्थफलानि सन्ति, तेषां जनको योऽश्वत्थः, एष वनस्पतिस्तेजस एवोदपद्यत। 'एतद्' अश्वत्थफलं वनस्पतीनां संबन्धि साम्राज्यस्वरूपमेव। 'तद्' तेनाश्वत्थफलभक्षेण तेज एव वनस्पतीनां साम्राज्यं च अस्मिन् 'क्षत्रे' स्थापयति ॥

और, जो यह पीपल के फल हैं, [उनका उत्पादक] जो अश्वत्थ है, वह तेज से वनस्पति रूप में उत्पन्न हुआ है। यह [पीपल का फल] वनस्पति सम्बन्धी साम्राज्य स्वरूप ही है। अतः उस [पीपल के गोदा] के भक्षण द्वारा वह तेज का ही एवं उन वनस्पतियों के साम्राज्य को इस क्षत्रिय में स्थापित करता है।

प्लक्षफलानि प्रशंसति—

अथ यत्प्लाक्षाणि, यशसो वा एष वनस्पतिरजायत यत्प्लक्षः, स्वाराज्यं च ह वा एतद्वैराज्यं च वनस्पतीनां, यश एवास्मिंस्तत्स्वाराज्यवैराज्ये च वनस्पतीनां क्षत्रे दधाति ॥ इति।

'अथ' अश्वत्थप्रशंसानन्तरं यानि प्लक्षफलानि विद्यन्ते, तानि प्रशस्यन्ते। योऽयं प्लक्षोऽस्ति एष वनस्पतिर्यशस एवोत्पन्नः। 'एतद्' प्लक्षफलं वनस्पतीनां संबन्धि स्वाराज्य-वैराज्यरूपम्। स्वातन्त्र्येण राजत्वं 'स्वाराज्यं' विशेषेण राजत्वं वैराज्यम्। 'तद्' तेन प्लक्षफलेन 'अस्मिन्' क्षत्रे यशश्च स्वाराज्यवैराज्ये च संपादयति ॥

और, जो प्लक्ष [= पाकड़] का फल है [उसका उत्पादक] जो प्लक्ष है वह यश से वनस्पति रूप में उत्पन्न हुआ है। यह [प्लक्ष का फल] वनस्पतियों का स्वाराज्य

[ = स्वतन्त्रतापूर्वक राज्य करना] और वैराज्य [विशेष रूप से राज्य करना] है। अत उस [फलस के फल] के भक्षण द्वारा यह यश को ही और वनस्पतियों के स्वाराज्य एव वैराज्य को इस क्षत्रिय [यजमान] में स्थापित करता है।

मखाद्रव्य प्रशस्य तस्य प्रयोगमाह

**एतान्यस्य पुरस्तादुपक्लृप्तानि भवन्त्यथ सोम राजान क्रीणन्ति, ते राज्ञ एवाऽऽवृतोपवसथात् प्रतिवेशैश्चरन्त्यथौपवसथ्यमहरेतान्यध्वर्यु पुरस्तादुपकल्पयेताधिषवण चर्माधिषवणे फलके द्रोणकलश दशापवित्रमद्रीन् पूतभृत चाऽऽधवनीय च स्थालीमुदञ्चन चमस च तद्यदेतद्राजान प्रातरभिषुण्वन्ति, तदेनानि द्वेधा विगृह्णीयादन्यान्यानि, सुनुयात्, माध्यदिनायान्यानि परिशिष्यात् ॥ ३२ ॥ इति।**

'एतानि' न्यग्रोधावरोधादीन् 'अस्य' राज्ञोऽर्थे सोमक्रयात्पूर्वम् उपक्लृप्तानि' सपादितानि भवन्ति। तत् ऊर्ध्वं सोमक्रय। तत्र ते अध्वर्युप्रभृतयो राज्ञ एवाऽऽवृता सोमस्यैव प्रकारेणोपवसथदिनात् पूर्वं प्रतिवेशं प्रसिद्धं क्रियाविशेषैश्चरन्ति' अनुतिष्ठेयु[1]। 'अथ' अनन्तरमौपवसथ्यमह। औपवसथ्येऽह्न्यध्वर्यु 'पुरस्तात्' प्रथम 'एतानि' वक्ष्यमाणानि चर्मादीनि 'उपकल्पयत्' सपादयत्। यस्मिश्चर्मणि सोमोऽभिषूयते, तच्चर्माधिषवणाख्यम्[2]। ययो फलकयोरभिषूयते ते फलके अधिषवणसज्ञके[3]। द्रोणकलश

---

१ "प्रतिवेश पचेयु। तस्याश्नीयात्। गृहमेध्येव भवति। नास्य यज्ञो व्यृध्यते"—इति तै० ब्रा० १ ६ ७ १। प्रातिस्विकत्वेन पत्नी विशतीति प्रतिवेश। पत्न्यर्थं ओदन, त दक्षिणाग्नौ पक्त्वार पचेयु'—इत्यादि तद्भाष्यम् (तै० स० १ ८ ४)। दक्षिणाग्नौ पत्नया प्रतिवेशमोदन पचति"—इति आप श्रौ० ८ १० १०। "प्रतिवेशा अपि पचन्ते'—इति च तत्रैव ८ ११ ११। इह तु महानसपाचका प्रतिवेशा विवक्षिता।

२ "अधिषवण परिकृत्त भवति"—इत्यादि शत० ब्रा० ३ ५ ३ २२। 'अधि उपरि सोम सुयत इत्यधिषवणम्। सर्वरोहित भवति वचनाद् गोचर्म इत्यादि का० श्रौ० ८ ५.२६ सूत्रे याज्ञिकदेव। नाभिप्रमाणा अरत्निमात्राङ्गी मुञ्जरज्जुव्यूता औदुम्बरी मञ्चिका आस दीत्युच्यते। तस्यामासन्द्या अधिषवणफलकयोरुपरि प्राग्ग्रीवमुत्तरलोम यत् चर्म आस्तृणाति, तदेवाधिषवणाख्यम्। अस्मिन्नेवास्तीर्णे चर्मणि वासोवद्धमेव सोम स्थापयति। तदेतत् कात्या० श्रौ० ७ ९ २७–३०सूत्रषु स्पष्टम्।

३ उपरवाणामुपरि अस्थूलान् प्रागग्रानुदगग्रान् वा दर्भानास्तीर्य अधिषवणफलके उपदधाति। अधि उपरि सूयते सोमो यया, ते। ते च वारणे प्रादेशपरिमितस्थूले अरत्निपरिमितदीर्घे भवत। तदेवमादिक वर्णन कात्या० श्रौ० ८ ५ २५ सू० टी० द्रष्टव्यम्। "अथाधिषवणे फलके उपदधाति"—इत्यादि च शत० ब्रा० ३ ४ ५ २२।

प्रोऽदारुपात्रम्[1] । दशापवित्र वस्त्रम्[2] । अद्रयोऽभिषवणार्था ग्रावाण[3] । पूतभृदाधवनीयौ पात्रविशेषौ[4] । स्थाली कुम्भ[5] । 'उदञ्चनम्' उन्नयनपात्रम्[6] । चमसो भक्षार्थं दारुपात्रम्[7] । एतान्यध्वर्यु सपाद्य तत ऊर्ध्वं 'यद्' यदा 'एतद्' एव राजान प्रात कालेऽभिषुण्वन्ति, 'तत्' तदानीम् 'एतानि' न्यग्रोधावरोधादीनि द्वेधा विभजेत् । तत्र 'अन्यानि' 'एकभाग

---

१ 'द्रोणकलश —द्रुममय कलशाकारो वैकङ्कत, यस्योपरि धाराग्रहा गृह्यन्ते"—इत्यादि का० श्रौ० ८ ७ ५ याज्ञिकदेव । धाराग्रहाणा परिचयस्तूक्तपूर्वं —(द्र० इत पूर्वम् पृ० ३७९) ।

२ जीवमेषाणा श्वेतरोमग्रथितसूत्रनिर्मिते सोमरसपावनार्थे ऊर्णापवित्रे द्वे भवत । तत्रैक यजमानस्यारत्निमात्रम् तदेव द्रोणकलशे स्थाप्यते, अथापर प्रादेशमात्रम्, तदेव परिप्लवाया युज्यते । तदेतद् द्वितीयमूर्णापवित्र भवत्युभयतोदशमिति दशापवित्र चोच्यते । का० श्रौ० ९ २ १६,१७ द्रष्टव्यम् ।

३ "अप ग्रावण उपावहरति"—इत्यादि शत० ब्रा० ३ ५ ४ २४ । "तस्मिन् ग्रावण पञ्च, वैष्णवा स्थेति (वा० स० ५ २५ )"—इति कात्या० श्रौ० ८ ५ २८ ।

४ पूतभृद् आधवनीयौ—पूत सोम बिभर्तीति पूतभृत् । एतत् सज्ञ पृथुमुखो महाकलशो भवति । आधवनीयश्च तद्रूप एव, आधूयते प्रक्षाल्यते सोमोऽस्मिन्नित्येव तत्र प्रकृतिप्रत्ययगतोऽर्थविशेष (का० श्रौ० ९ २ २०) । यज्ञे यद्यपि आधवनीयकुम्भस्यैव प्राधान्यम्, तथापि 'अल्पाच्तर (पूर्वम्)'–इति शब्दानुशासनाद् (पा० सू० २ २ ३४) द्वन्द्वे तस्य परप्रयोग पूतभृदाधवनीयाविति ।

५ स्थाल्यश्चतस्र —'आग्रयणोक्थ्यादित्यध्रुवाणाम्'–इति का० श्रौ० ९ २ १४ सूत्रव्याख्याया याज्ञिकदेव ।

६ उदञ्चनो —पूतभृदाधवनीययो कुम्भयो सोमोदकग्रहणसाधनपात्रभूतौ जलभाण्डविशेषौ । का० श्रौ० ९ २ २१, ९ ६ १५, १० ५ १ भाष्याणि द्रष्टव्यानि । 'उदकोऽनुदके'–इति पा० सू० ३ ३ १२३ । 'घृतोदङ्कश्चर्ममय भाण्डम् । अनुदके किम् ? 'उदकोदञ्चन '–इति तत्र दीक्षित (सि० कौ०) ।

७ दश चमसा —सोमपानपात्राणि । 'चमसो देवपान '–इति ऋ० १० १६ ८ । 'औदुम्बरेण चमसेन चतु स्रक्तिना'–इति शत० ब्रा० ७ २ ११ २ । 'दश चमसान्प्रवृत्तानध '–इति का० श्रौ० ९ २ २२ । प्रसृमत '–इति च मानवसूत्रम् । तथा च मुष्टियुक्तानि । न्यग्रोधरहितकपर्णान्यतमकाष्ठनिर्मितानि । होतु, ब्रह्मण, उद्गातु, सुन्वत, प्रशास्तु, ब्राह्मणाच्छसिन, पोतु, नेष्टु, आग्नीध्रस्य, अच्छावाकस्येति दश । कात्या० श्रौ० (९ ९ २५, १२ १३ ) भाष्य द्रष्टव्यम् ।

गतानि 'तस्मिन्' प्रातःसवनेऽभिषुणुयात्। इतरस्यागनानि तु माध्यंदिनसवनाय स्थापयेत्॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये सप्तम-पञ्चिकायाः पञ्चमाध्याये (पञ्चत्रिंशाध्याये) षष्ठः खण्डः ॥ ६ ॥ (३२) [ २५६ ]

इन [न्यग्रोध की बरोहों] को [राजा के लिए सोम क्रय से] पहले सम्पादित करते हैं। तब सोम राजा को खरीदते हैं। इसके बाद वे अध्वर्यु आदि राजा को ही घेर कर सोमयाग के ही समान उपवसथ [उपवास के] दिन के पूर्व की क्रियाओं द्वारा अनुष्ठान करते हैं। इसके बाद औपवसथ्य [= उपवास के] दिन अध्वर्यु को अपने सामने इन निम्न सामानों को उपस्थित रखना चाहिए—१. अधिषवण [= सोम जिस पर कूटते हैं वह] चर्म, २. अधिषवण-फलक [दो तख्ते जिससे अभिषुत करते हैं], ३. द्रोण-कलश [मजबूत लकड़ी का घड़ा], ४. दशापवित्र [छन्ना], ५ पत्थर [कूटने के लिए लोढ़ा] ६. पूतभृत् (छने हुए सोम को रखने के लिए पात्र विशेष), ७. आधवनीय [सोम को धोने का पात्र], ८. स्थाली [चार घड़े], ९. उदञ्चन [उन्नयन अर्थात् सोम निकालने का] पात्र, और १०. चमस [सोम भक्षण का लकड़ी का पात्र]। जब वे इस सोम राजा को प्रातःकाल अभिषुत करते हैं, तो उसे इन [न्यग्रोध की बरोहों] का दो भाग करना चाहिए। उनमें से एक भाग प्रातःसवन में अभिषुत करे और दूसरा भाग माध्यन्दिन सवन के लिए रख ले।

॥ इस प्रकार पैंतीसवें (पञ्चम) अध्याय के छठें खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

अथास्य फलचमसस्य उन्नयनादिप्रयोगं दर्शयति—

**तद्यत्रैतांश्चमसानुन्नयेयुस्तदेतं यजमानचमसमुन्नयेत्, तस्मिन् द्वे दर्भतरुणके प्रास्ते स्यातां, तयोर्वषट्कृतेऽन्तःपरिधि पूर्वं प्रास्येद्, दधिक्राव्णो अकारिषमित्येतयर्चा सस्वाहाकारयाऽनुवषट्कृतेऽपरमा दधिक्राः शवसा पञ्च कृष्टीरिति ॥ इति।**

तत ऊर्ध्वं 'यत्र' यदा 'एतान्' ब्रह्महोत्रादिचमसान् दशसंख्याकानुन्नयेयुः[1]। 'तद्' तदानीं 'यजमानस्य' राजचमसम् 'उन्नयेत्' अभिषुतेन न्यग्रोधावरोधादिना पूरयेत्।

---

१. न्यग्रोधफलान्यङ्कुरांश्चाहृत्य सम्पिष्य चूर्णयित्वा दध्ना मिश्रणं कृत्वा राजन्यवैश्ययो-रन्यतरस्य यजमानस्य भक्षणाय चमसनामपात्रे रक्षितो भवति, स एव यजमानचमसः 'फलचमस' इत्युच्यते, तच्च इतरान् सोमचमसाननु उन्नेयो भवति। द्र० कात्या० श्रौ० १०.९.३०–३२ सूत्रेषु।

'तस्मिन्' पूरिते चमसेऽल्पं दर्भद्वयं प्रक्षिप्य तयोर्मध्ये प्रथमप्रक्षिप्तं दर्भं 'वषट्कृते' वषट्कारे कृते सति 'दधिक्राव्ण.' इत्येतयर्चा स्वाहाकारसहितया परिधीनामन्तः प्रक्षिपेत्। 'अनुवषट्कृते' अनुवषट्कारे कृते सत्यपर दर्भम् 'आ दधिक्रा.' इत्यनयर्चा पूर्ववत् स्वाहाकारसहितया परिधीनामन्तः प्रक्षिपेत्[1]।

[फलचमस का उन्नयनादिक प्रयोग]

VII.३२ [XXXV.७] जब वे [ब्रह्मा और होता आदि के रस] चमसों का उन्नयन [अर्थात् सोम से भरने का कार्य] करते हैं, तब उसे यजमान [राजा] के चमस का भी उन्नयन करना चाहिए [अर्थात् उन अभिषुत न्यग्रोध की बरोहों आदि के रस से उसे भर देना चाहिए]। उस [भरे हुए चमस] में दो छोटे छोटे दर्भ के टुकड़े डाल दे। उनके मध्य प्रथम प्रक्षिप्त दर्भ को वषट्कार करके वेदी की परिधि के अन्दर 'दधिक्राव्णो अकारिषम्' (मैंने दधिक्रा देव की स्तुति की है) आदि ऋचा से अनुवट्कार करके डाल दे। उसी प्रकार वषट्कार एवं अनुवषट्कार पूर्वक दूसरे दर्भ के टुकड़े को भी 'दधिका शवसा' (दधिक्रा देव अपने बल से पाँचों प्रकार की प्रजाओं की वृद्धि करते हैं) आदि ऋचा से डाल दे।

अथास्य फलचमसस्य भक्षणं विधत्ते –

तद्यत्रैताँश्चमसानाहरेयुस्तदेतं यजमानचमसमाहरेद्, तान्यत्रोदगृह्णीयुस्तदेनमुपोदगृह्णीयात्, तद्यदेळां होतोपह्वयेत, यदा चमसं भक्षयेदथैनमेतया भक्षयेत् ॥ इति।

ततो होमादूर्ध्वं 'यत्र' यदा 'एतान्' होत्रादीनां चमसानृत्विज आहरेयुः। 'तत्' तदानीमेव 'यजमानस्य' राजचमसमाहरेत्। 'तान्' आहृतान् होत्रादिचमसान् 'यत्र' यदा उद्गृह्णीयु.' भक्षणार्थमूर्ध्वं धारयेयु.। 'तत्' तदानीम् 'एतं' यजमानस्य राजचमसम् 'उपोदगृह्णीयात्' ऊर्ध्वं धारयेत्। तत ऊर्ध्वं यदा होतेळामुपह्वयेतोपहूय च स्वकीयं चमसं यदा भक्षयेत्। 'अथ' तदानीम् 'एनं' यजमानचमसम् 'एतया' वक्ष्यमाणयर्चा राजा भक्षयेत्॥

जब वे [होम के बाद] चमसों को लेते हैं; तभी उसे [राजा] यजमान के चमस को भी लेना चाहिए। जब होता आदि के आहृत चमसों को जब भक्षण के लिए ऊपर उठाते हैं; तभी इस [राजा] यजमान को भी चमस ऊपर उठाना चाहिए। उसके बाद जब होता इळाह्वान करे; तब [इळाह्वान करके] अपने चमस का जब वह भक्षण करे; तब इस [राजा] यजमान को भी अपने चमस का भक्षण [निम्न ऋचा से] करना चाहिए–

१. 'इतरेषु सोमचमसेषु हूयमानेषु एतं फलचमसं चमसाध्वर्युरेव कुशतरुणेन चमसाद् गृहीत्वा जुहोति'–इति कात्या० श्रौ० १०.९.३२ सू० याज्ञिकदेवः।

सामूचं पठति—

यदत्र शिष्टं रसिनः सुतस्य, यदिन्द्रो अपिबच्छचीभिः।
इदं तदस्य मनसा शिवेन, सोमं राजानमिह भक्षयामीति ॥ इति ।

'रसिनः' रसयुक्तस्य 'सुतस्य' अभिषुतस्यावरोधादिद्रव्यस्य 'अत्र' पात्रे 'यच्छिष्टं' योऽवशिष्टो भागो 'यत्' च पात्रस्थं द्रव्यमिन्द्रः 'शचीभिः' कर्मविशेषैः संस्कृतमपिबत्। शचीशब्दः कर्मनामसु पठितः[1]। 'अस्य' द्रव्यस्य सम्बन्धि 'तदिदं' शिष्टं 'शिवेन' भक्तियुक्ततया मङ्गलेन मनसा 'इह' कर्मणि 'सोमं राजानं' सोमराजरूपं भावयित्वा भक्षयामि ॥

'रसयुक्त अभिषुत [वरोह आदि] द्रव्य का इस [पात्र] में जो अवशिष्ट [रस] है और कर्म विशेषों से संस्कृत[2] जिस [पात्रस्थ रस] का इन्द्र ने पान किया, इस [द्रव्य सम्बन्धी रस] के उस अवशिष्ट भाग को मैं भक्तिपूर्वक एवं प्रसन्न मन से इस [कर्म] में सोम राजा को भावनापूर्वक पीता हूँ।'

तदिदं सम्यक्भक्षणं प्रशंसति—

शिवो ह वा अस्मा एष वानस्पत्यः, शिवेन मनसा भक्षितो भवत्युग्रं हास्य राष्ट्रमव्यथ्यं भवति, य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानः ॥ इति ।

'यः' क्षत्रियो यजमानः 'एवम्' उक्तेन प्रकारेण 'एतं' फलचमसरूपं भक्षं भक्षयति, 'अस्मै' यजमानायैष 'वानस्पत्यः' भक्षः 'शिवो ह वै' मङ्गलो हितकारी भूत्वा 'शिवेन मनसा' भक्तियुक्तेन मङ्गलेन मनसा भक्षितो भवति। 'अस्य' राज्ञो राष्ट्रम् 'उग्रं' शत्रूणामभिभवनायोग्ररूपं भूत्वा केनापि 'अव्यथ्यं' व्यथयितुमशक्यं भवति। भयं चलनं वा कदाचिदपि नास्य राष्ट्रस्य भवतीत्यर्थः ॥

जो क्षत्रिय यजमान इस प्रकार इस [फलचमसरूप] भक्ष्य का भक्षण करता है, तो इस [यजमान] के लिए यह वनस्पति सम्बन्धी भक्ष्य मंगलकारी होकर भक्ति युक्त मन से भक्षित होता है, और इस राजा का राष्ट्र [शत्रुओं के अभिभवन के लिए] उग्र रूप धारण करके किसी से भी व्यथित होने में असमर्थ होता है।

भक्षणादूर्ध्वं मन्त्रेणाऽऽत्मस्पर्शं विधत्ते—

शं न एधि हृदे पीतः, प्र ण आयुर्जीवसे सोम तारीरित्यात्मनः प्रत्यभिमर्शः ॥ इति ।

---

१ निघण्टौ वाङ्नामसु ( १ ११ ) ४९, कर्मनामसु ( २ २ ) २२, प्रज्ञानामसु च ( ३ ९ ८ ) ।

२ (i) 'with his hosts' इति हाग महोदय ।
(ii) 'drank mightly' इति कीथ महोदय ।

हे 'सोम' सोमस्थानीयावरोधादिभक्ष, अस्माभिः पीतः सन् 'नः' अस्माकं हृदये 'शमेधि' सुखहेतुर्भव 'जीवसे' चिरजीवनाय 'नः' अस्माकमायुः 'प्रतारीः' प्रकर्षेण संपादय 'इति' अनेन मन्त्रेण 'आत्मन' स्वकीयहृदयस्य 'प्रत्यभिमर्शः' हस्तेन संपूर्णः स्पर्शः कर्तव्यः ॥

'हे सोम [अर्थात् सोमस्थानीय बरोहों आदि के रस] हम से पीए जाकर हमारे हृदय में सुखकारक होओ और चिरजीवन के लिए हमारी आयु को प्रकृष्ट रूप से सम्पादित करो'—इस मन्त्र से अपने हृदय का स्पर्श करना चाहिए।

अथान्वयव्यतिरेकाभ्यामभिमर्शं प्रशंसति—

ईश्वरो ह वा एषोऽप्रत्यभिमृष्टो मनुष्यस्याऽऽयुः प्रत्यवहर्तोरनर्हन् मा भक्षयतीति, तद्यदेतेनाऽऽत्मानमभिमृशत्यायुरेव तत्प्रतिरते ॥ इति ।

'एषः' अवरोधादिभक्षः 'अप्रत्यभिमृष्टः' मन्त्रपूर्वकात्मस्पर्शरहितः सन् 'मनुष्यस्य' राज्ञ आयुः 'प्रत्यवहर्तोः' विनाशयितुमीश्वरः समर्थो भवति । केनाभिप्रायेणेति, सोऽभिधीयते—'अनर्हन्' भक्षयितुमयोग्यः सन् मा भक्षयतीति तस्य भक्षस्याभिप्रायः । सोऽयं व्यतिरेकः, तद्यदित्यादिरन्वयः । 'तत्' तदा भक्षणादूर्ध्वं यदा 'एतेन' श न इत्यादिमन्त्रेणाभिमृशति 'तत्' तेनाभिमर्शनेनाऽऽयुरेव 'प्रतिरते' प्रकर्षेण वर्धयति ॥

यह [बरोह भक्षण] मन्त्र सहित आत्मस्पर्श न होने से मनुष्य [=राजा] की आयु का विनाश करने में सक्षम होता है, क्योंकि यह [सोमस्थानीय रस] यह सोचता है कि 'भक्षण के योग्य न होकर भी यह मुझे पीता है।' अतः [भक्षण के बाद] जब वह इस ['श नः' आदि मन्त्र] से अभिमर्शन करता है, तब वह उस [अभिमर्शन] से [अपनी] आयु को ही बढ़ाता है।

ऋग्भ्यामृग्भ्या तस्य चमसस्य पूरणं विधत्ते—

आप्यायस्व समेतु ते,[1] स ते पयांसि समु यन्तु वाजा[2] इति चमसमाप्याययत्यभिरूपाभ्या, यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ ३२ ॥ इति ।

प्रथमायामृच्याप्यायस्वेति श्रवणाद्, द्वितीयस्यास्तृतीयपादे वाऽऽप्यायमान इति श्रवणादिद मन्त्रद्वयमाप्यायनस्य 'अभिरूपम्' अनुकूलम् । यज्ञे 'यद्' अङ्गम् 'अभिरूपम्' अनुकूलं क्रियते 'तद्' अङ्गं 'समृद्धं' सम्पूर्णं भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायाः पञ्चमाध्याये (पञ्चत्रिंशाध्याये) सप्तमः खण्डः ॥७॥ (३२) [२५६]

'आप्यायस्व समेतु ते' (हे सोम! तुम वृद्धि को प्राप्त करो। तुम्हारा सामर्थ्य सर्वतः तुमसे युक्त होए) आदि में और 'स ते पयांसि' (हे सोम! तुम में दूध एवं अन्न

१. ऋ० १.९१.१६ । २. ऋ० १.९१.१८ ।

सम्मिलित होए) आदि [ऋचाओं में 'आप्यायस्व' और 'आप्यायमान' शब्द होने से चमस भरने के लिए] अनुकूल दो मन्त्रों से वह चमसों को भरता है। वस्तुत जो यज्ञ के अनुकूल किया जाता है, उसी से यज्ञ समृद्धि [=सम्पूर्णता] को प्राप्त होता है।

॥ इस प्रकार पैतीसवें (पञ्चम) अध्याय के सातवें खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥७॥

## अथ अष्टमः खण्डः

भक्षिताप्यायितस्य नाराशसज्ञस्य चमसस्य[1] प्रयोग विधत्ते —

तद्यत्रैताश्चमसान् सादयेयुस्तदेत यजमानचमस सादयेत्, तान्यत्र प्रकम्पयेयुस्तदेनमनु प्रकम्पयेदथैनमाहृत भक्षयेन्नराशसपीतस्य देव सोम ते मतिविद ऊमै· पितृभिर्भक्षितस्य भक्षयामीति प्रात सवने नाराशसो भक्ष, ऊर्वैरिति माध्यदिने, काव्यैरिति तृतीयसवने ॥ इति ।

'तत्' तस्मादाप्यायनादूर्ध्वं 'यत्र' यदा 'एतान्' होत्रादीना चमसानाप्यायितान् सादयेयु, तदानीमत 'यजमानस्य' राजचमस सादयत्। तान्' होत्रादीना चमसान् यदा प्रकम्पयेयु तदैव 'एन' राजचमसम् 'अनु' प्रकम्पयत्। 'अथ अनन्तरमेन चमस भक्षणार्थं माहृत नराशसेत्यादिमन्त्रेण भक्षयेत्। हे 'सोम' सोमवद्य फलचमसदेव, 'नराशसपीतस्य' नरा मनुष्या ऋभुप्रमुखा शस्यन्ते यस्मिन् सवनविशेष सोऽय नराशस, तत्र देवै पीतस्य, ऊमनामभि पितृभिश्च भक्षितस्य, 'मतिविद' अस्मदभिप्रायाभिज्ञस्य ते भक्षयामि 'इति' अनेन मन्त्रेण प्रात सवने नाराशसचमसमन्त्रधो भक्ष कर्तव्य। इतरयोस्तु सवनयोस्तस्मिन्मन्त्रे 'ऊमैरिति' अस्य पदस्य स्थाने 'ऊर्वै' 'काव्यै' इति पदद्वय क्रमेण पठनीयम् ॥

VII ३४ [XXXV.८] उस [आप्यायन] के बाद जब वे इन [होत्रादि के भरे हुए] चमसों को रखते हैं, तभी इस यजमान राजा के भी चमस को उसे रख देना चाहिए। जब वे उसे सामने लाते हैं, उसके बाद तब उस [राजा के चमस] को भी सामने लाते हैं। इसके बाद भक्षण के लिए सम्मुख लाए गए इन चमसों का [निम्न मन्त्र से] भक्षण करे। 'हे सोम [अर्थात् सोम सदृश फलचमस] देव, [ऋभु आदि जिस सवन में शसित होते हैं उस] नराशस द्वारा पीए गए तुम और 'ऊम' नामक पितरों द्वारा पीए गए हम लोगों के अभिप्राय को जानने वाले तुमको मैं पीता हूँ'—इस मन्त्र से उसे प्रात सवन में नराशस से सम्बन्धित चमस का भक्षण करना चाहिए, और [शष दो सवनों में से] माध्यन्दिन सवन में [उस मन्त्र में 'ऊम' के स्थान पर] 'ऊर्वै' कहना चाहिए और तृतीय सवन में 'काव्यै' कहना चाहिए।

---

१ 'आप्यायिताश्चमसान् सादयति, ते नराशसा भवन्ति—इति आश्व० श्रौ० ४५६, २०। 'हुतशिष्टा भक्षिता आप्यायिताश्चमसा नाराशसा—इति सायण. (ता० ब्रा० १७ ११, तै० ब्रा० २७)।

त्रिविधमन्त्रतात्पर्यं दर्शयति—

**ऊमा वै पितरः प्रातःसवने, ऊर्वा माध्यंदिने, काव्यास्तृतीयसवने, तदेतत् पितॄनेवामृतान् सवनभाजः करोति ॥ इति ।**

ऊमा, ऊर्वा, काव्याः - इत्येते सवनत्रयगता पितृविशेषाः, अतस्तच्छब्दप्रयोगेण तान् पितॄन् सवनभाजः करोति । पितरश्च द्विविधाः, मृता अमृताश्च । इदानी मनुष्याः सन्तो मरणादूर्ध्वं पितृलोकं प्राप्ताः 'मृताः', सृष्टिमारभ्य पितृलोकेऽवस्थिताः 'अमृताः', ऊमादय यथाविधरं दमृतशब्देन विशेष्यन्ते ॥

'ऊमा' [सहायक] नामक पितर प्रातःसवन में 'ऊर्वा' [महान्] नामक पितर माध्यन्दिनसवन में और 'काव्याः' [ऋषि गण] नामक पितर तृतीयसवन में जो [ऋत्विजों द्वारा] उक्त होते हैं उस [शब्द के प्रयोग] से यह उन अमृत [मरणरहित] पितरों को सवन में भागीदार बनाता है। [वस्तुतः पितर दो प्रकार के कहे गए हैं १. मृत और २. अमृत। यहाँ पर मनुष्य योनि में जन्म लेकर मरने के बाद पितृलोक को प्राप्त हुए पितर 'मृत' हैं और सृष्टि के आरम्भ से पितृलोक में रहने वाले 'ऊम' आदि पितर अमृत हैं]

अथ मन्त्रतात्पर्ये मतान्तरं दर्शयति—

**सर्वो हैव सोऽमृत इति ह स्माऽऽह प्रियव्रतः सोमापो यः कश्च सवनभागिति ॥ इति ।**

न केवलमूमादय एव पितर प्रसिद्धा अमृताः । किंतु यः कोऽपि पिता सवनभाग्भवति, स सर्वोऽप्यूमादिवर्न्दलक्षितत्वादमृत एव भवतीति' 'सोमापः' सोमपः प्रियव्रताख्यो महर्षिराह स्म ॥

[मात्र 'ऊम' आदि पितर ही अमर नहीं हैं; किन्तु] 'जो कोई भी सवन में भागीदार होकर पान करता है, वह सभी अमर ही होते हैं'—इस प्रकार सोमाप [=सोमपान करने वाले] प्रियव्रत नामक महर्षि ने कहा है।

इदानी नराशंसचमसभक्षं प्रशंसति—

**अमृता ह वा अस्य पितरः सवनभाजो भवन्त्युग्रं हास्य राष्ट्रमव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानः ॥ इति ।**

'अस्य' राज्ञो भक्षयितुः 'पितरः' पितृपितामहादयः सर्वेऽपि सवनभाजः सन्तः 'अमृताः' मरणरहिता देवा भवन्ति । उग्रमित्यादि पूर्ववत्[2] ॥

---

१. तथाहि—'नराशंसपीताः स्थाम सोमममृता अभूम, शन्नो भव हृद आपीत इन्दविति मुखहृदये अभिमृशेरन्'–इति आश्व० श्रौ० ५.६.२६ ।

२. द्र० इतः पूर्वम्, पृ० १२११, १२१७ ।

[अत यहाँ नाराशस भक्ष्य में भी] इस [भक्षण करने वाले राजा] के पितृ पितामह आदि सभी सवन में भागीदार होकर मरणरहित देव ही होते हैं और इस [राजा] का राष्ट्र तेजस्वी एवं किसी से भी नष्ट न होने योग्य होता है जो क्षत्रिय यजमान [याग करते हुए] इस [नराशस चमस के] भक्ष्य का भक्षण करता है ।

या न इत्यादिमन्त्रेण स्वदेहस्पर्शनम्, आप्यायस्वेति मन्त्रद्वयेन चमसपूरण च प्रात सवने यदुक्त तदुत्तरयो सवनयोरतिदिशति—

समान आत्मन प्रत्यभिमर्शं, समानमाप्यायन चमसस्य ॥ इति ।

अपने शरीर का स्पर्श [=आत्मनः प्रत्यभिमर्श] वैसे ही होता है [जैसा पहले कहा गया है] और आप्यायन [चमस का भरना] भी वैसा ही होता है जैसा पहले कहा गया है ।

फलचमसे विद्यमान प्रयोगविशेषमभिधायावशिष्ट सोमचमसगतं प्रयोग सवनत्रयेऽप्यतिदिशति—

प्रात सवनस्यैवाऽऽवृता प्रात सवने चरेयुर्माध्यंदिनस्य माध्यदिने, तृतीयसवनस्य तृतीयसवने ॥ इति ।

सोमविषयस्य प्रात सवनस्यैव आवृता' प्रकारेण फलचमसविषयप्रात सवने 'चरेयु' अनुतिष्ठेयु । एवमितरत्रापि योज्यम् ॥

[फल चमस में विद्यमान प्रयोग की विशिष्टता को कहकर अब अव शिष्ट सोमचमस गत प्रयोग को कहते हैं कि] प्रात सवन में उसी प्रकार कार्य करना चाहिए जैसे सोम रस निकालने में करते हैं, इसी प्रकार मध्यन्दिनसवन में माध्यन्दिन के और तृतीयसवन में तृतीयसवन के वैसे ही कार्य करने चाहिए [अर्थात् असली सोम रस को निकालने में जैसा कर्मकाण्ड करते हैं वैसा ही कर्मकाण्ड यहाँ न्यग्रोध के वरोह के रस को भी निकालने में करना चाहिए] ।

उक्त फलचमसमन्त्रमुपसहरति—

तमेवमेत भक्ष प्रोवाच रामो मार्गवेयो विश्वतराय सौवद्मनाय ॥ इति ।

इस भक्ष्य [की विधि] को इस प्रकार राम मार्गवेय ने सुवद्मन के पुत्र विश्वतर से कहा था ।

अथ विश्वतरस्य वाक्य दर्शयति—

तस्मिन् होवाच प्रोक्ते सहस्रमु ह ब्राह्मण तुभ्य दद्म, सश्यापर्णं उ मे यज्ञ इति ॥ इति ।

'तस्मिन्' राजभक्षे रामेण 'प्रोक्ते' सति स राजा राम प्रत्येवमुवाच । हे 'ब्राह्मण' राम ! तुभ्य वय 'सहस्रमु ह' गवा सहस्र सपूर्णं दद्म । पुरा मे यज्ञो विश्यापर्णं आसीत्[1] ।

---

१ तदुक्तम् इत पूर्वम्— विश्यापर्णं यज्ञमाजह्रे'–इति ११९९ पृ० पञ्चमाध्याय ।

इदानीं तु 'सत्यापर्णः' एवास्तु, भवदीयाः श्यापर्णनामकाः सर्वे ब्राह्मणा अस्मिन् यज्ञे वसन्त्विति ॥

उस [राजभक्ष्य] के [राम द्वारा] कथनोपरान्त [राजा ने राम से] कहा—हे *ब्राह्मण ! मैं तुम्हें सम्पूर्ण रूप से हजार गाएँ दूँगा।* [पहले तो मेरा यज्ञ श्यापर्णों से रहित ही था किन्तु] अब यह मेरा यज्ञ श्यापर्णों से युक्त ही होगा। [अर्थात् आप सभी श्यापर्ण नामक ब्राह्मण इस यज्ञ में रहें]।

इदानीं संप्रदायश्रपनेन भक्षं प्रशंसति—

एतमु हैव प्रोवाच तुरः कावषेयो जनमेजयाय पारिक्षिताय; एतमु हैव प्रोचतुः पर्वतनारदौ सोमकाय साहदेव्याय; सहदेवाय साञ्जंयाय, बभ्रवे दैवावृधाय, भीमाय वैदर्भाय, नग्नजिते गान्धाराय एतमु हैव प्रोवाचाग्निः सनश्रुतायारिंदमाय, क्रतुविदे जानकये; एतमु हैव प्रोवाच वसिष्ठः सुदासे पैजवनाय; ते ह ते सर्वे एव महज्जग्मुरेतं भक्षं भक्षयित्वा सर्वे हैव महाराजा आसुरादित्य इव ह स्म श्रियां प्रतिष्ठितास्तपन्ति, सर्वाभ्यो दिग्भ्यो बलिमावहन्तः ॥ इति।

'एतं' पूर्वोक्तमेव भक्षं कवषस्य पुत्रस्तुरनामको महर्षिः, परिक्षित्पुत्राय जनमेजयसंज्ञकाय प्रोवाच। अयमेकः सप्रदायः। तथैव 'एतमेव' भक्षं पर्वतनारदाख्यावृषी सहदेवस्य पुत्राय सोमकाय प्रोचतुः। सोमकश्चान्यस्मै सहदेवाय प्रोवाच। सहदेवश्च साञ्जंयाय प्रोवाच, साञ्जंयश्च बभ्रवे प्रोवाच। बभ्रुश्च दैवावृधाय प्रोवाच। दैवावृधश्च भीमाय प्रोवाच। भीमश्च वैदर्भाय प्रोवाच। वैदर्भश्च नग्नजिते प्रोवाच। नग्नजिच्च गान्धाराय प्रोवाच। अथ द्वितीयः संप्रदायः। तथा 'एतम्' एव भक्षमग्निनामको महर्षिः सनश्रुताय प्रोवाच। सनश्रुतश्चारिंदमाय प्रोवाच। अरिंदमश्च क्रतुविदे प्रोवाच। क्रतुविच्च जानकये प्रोवाच। अयं तृतीयः संप्रदायः। तथा 'एतम्' एव भक्षं वसिष्ठो महर्षिः सुदासे महर्षये प्रोवाच। सुष्ठु धनं दासतीति सुदाः। अथवा सुष्ठु शत्रून् दस्यत्युपक्षयतीति सुदाः। स च पैजवनाय प्रोवाच। यद्वा[1] सहदेवाय साञ्जंयायेत्यादिषु वाक्येषु सहदेवादिनाम्ना साञ्जंयादिपदानि विशेषणतया योज्यानि। द्वितीयस्तच्छब्द एतच्छब्दार्थः। 'ते ह' एते तुरादयः पैजवनान्ता

1. सुदा एवं पैजवनोऽन्यत्र प्रसिद्धः। तथाहि—ऋ० ७.१८.२२-२५ ऋक्षु 'सुदासः पैजवनस्य'—इति। 'विश्वामित्र ऋषिः सुदासः पैजवनस्य पुरोहितः'—इत्यादिनिरुक्तग्रन्थश्च (२.७.२)। अतएव पूर्वोक्तस्य 'सहदेवश्च साञ्जंयाय'—इत्यादि व्याख्यानस्यायुक्तत्वमनुभूय सुयुक्तं व्याख्यानं वक्तुं प्रक्रमते यद्वेति। सहदेवस्य सृञ्जयापत्यत्वेन साञ्जंयत्वम्, नग्नजितश्च गन्धारदेशवासित्वेन गान्धारत्वं शतपथे प्रसिद्धम् (२.४.४.४, ८.१.४.१०)। एवमन्येष्वपि तत्तद् विशेषणनिदानान्यन्वेष्टव्यानि।

सर्वे एव पुरुषा 'एतं' फलचमसभक्षं भक्षयित्वा 'महज्जग्मुः' महत्त्वं प्राप्ताः । महत्त्वस्यैव सर्वे हेत्यादिकं विवरणम् । सर्वेऽप्येते 'महाराजाः' सार्वभौमा आसुः । यथाऽऽदित्यो द्युलोके प्रतिष्ठितस्तपति, एवमेते 'श्रिया' गजाश्वादिकाया सपदि प्रतिष्ठिताः सन्तः 'तपन्ति' चक्षुणा तापं कुर्वन्ति । तथा 'सर्वाभ्यो दिग्भ्यः' सर्वदिगवस्थितेभ्यो राजभ्यः सकाशाद् 'बलिमाव हृताः' करमाददाना स्वामिनो भवन्ति ॥

[प्रथम सम्प्रदाय में] इसी [पूर्वोक्त भक्ष] को कवष के पुत्र तुर नामक महर्षि ने परिक्षित के पुत्र जनमेजय को कहा और [द्वितीय सम्प्रदाय में]—इसी [भक्ष] को पर्वत एवं नारद महर्षि ने सहदेव के पुत्र सोमक से कहा। फिर सोमक ने [अन्य] सहदेव से [कहा और इसी प्रकार] सहदेव ने साञ्जय को, साञ्जय ने बभ्रु को, बभ्रु ने दैवावृध को, दैवावृध ने भीम को भीम ने वैदर्भ को, वैदर्भ ने नग्नजित को, नग्नजित ने गन्धार को कहा। [तृतीय सम्प्रदाय में]—इसी [भक्ष] को अग्नि नामक महर्षि ने सनश्रुत को, सनश्रुत ने अरिन्दम को अरिन्दम ने क्रतुविद को, क्रतुविद ने जानक को कहा। [चतुर्थ सम्प्रदाय में]—इसी [भक्ष] को वसिष्ठ महर्षि ने सुदास को और [सुदास ने] पैजवन को कहा। इस प्रकार उन [तुर से लेकर पैजवन तक] सभी ने फलचमस भक्ष का भक्षण करके महत्त्व को प्राप्त किया। ये सभी महाराजा [अर्थात् सार्वभौम पुरुष] थे, जैसे आदित्य [द्युलोक में प्रतिष्ठित होकर तपता] है इसी प्रकार ये [घोड़े, हाथी आदि] सम्पत्ति में प्रतिष्ठित होकर [शत्रुओं को] तप्त करते हैं और सभी दिशाओं में अवस्थित राजाओं से कर लेते हुए स्वामी होते हैं।

नराशसभक्ष पुनरपि फलकथनेन प्रशंसति—

**आदित्य इव ह वै श्रिया प्रतिष्ठितस्तपति, सर्वाभ्यो दिग्भ्यो बलिमावहत्युग्र हास्य राष्ट्रमव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानो यजमानः ॥ ३४ ॥ इति ।**

॥ इति 'ऐतरेयब्राह्मणे' सप्तमपञ्चिकायाः पञ्चमोऽध्यायः ॥ ५ ॥

पूर्ववद्व्याख्येयम् । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये सप्तम पञ्चिकायाः चतुर्थाध्याये (चतुस्त्रिंशाध्याये) अष्टमः खण्डः ॥ ८ ॥ (३४) [२५७]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधर माधवाचार्यादिष्टेन श्रीमत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश'नामभाष्ये ऐतरेयब्राह्मणभाष्ये सप्तमपञ्चिकायाः पञ्चमोऽध्यायः (पञ्चत्रिंशोऽध्यायः) ॥ ५ ॥

जो क्षत्रिय यजमान इस प्रकार से इस [फलचमस रूप] भक्ष्य का भक्षण करता है, वह [द्युलोक में प्रतिष्ठित] आदित्य के समान धन-सम्पत्ति में प्रतिष्ठित होकर तपता है और सभी दिशाओं में अवस्थित राजाओं से कर लेते हुए [स्वामी होता है]; तथा इस राजा का राष्ट्र [शत्रुओं के अभिभवन के लिए] उग्र रूप धारण करके किसी से भी व्यथित होने में अशक्य होता है।

॥ इस प्रकार ऐतरेयब्राह्मणके सातवीं पञ्चिका के पञ्चम (पैंतीसवें) अध्याय की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ५ ॥

—: ० :

[अथातः पशोरेकः (१)। तदाहुर्य आहिताग्निरेकादश (२)। हरिश्चन्द्रः षट् (३)। प्रजापतिर्यज्ञमष्टौ (४)। विश्वन्तरोऽष्टौ (५) ॥ ७ ॥[1]

अथातः पशोः, तदाहुर्यद्दर्शपूर्णमासयोर्, अथात इष्टापूर्तस्य, तेषां यश्चमसानां चत्वारि ॥ ७ ॥[2]]

॥ इत्यैतरेयब्राह्मणे सप्तमपञ्चिका समाप्ता ॥ ७ ॥

(पञ्चिकाङ्काः—७। अध्यायाङ्काः—३५। खण्डाङ्काः -२५७)

[सातवीं पञ्चिका में 'अथातः' इत्यादि एक खण्ड का प्रथम (इकतीसवाँ) अध्याय है। 'तदाहुर्यः' इत्यादि ग्यारह खण्डों का द्वितीय (बत्तीसवाँ) अध्याय है। 'हरिश्चन्द्रः' इत्यादि छः खण्डों का तृतीय (तैंतीसवाँ) अध्याय है। 'प्रजापतिर्यज्ञम्' इत्यादि आठ खण्डों का चतुर्थ (चौंतीसवाँ) अध्याय है। 'विश्वन्तरः' इत्यादि आठ खण्डों का पाँचवाँ (पैंतीसवाँ) अध्याय है।

इस प्रकार 'अथातः' इत्यादि खण्डों का प्रथम दशक है। 'तदाहुर्यद्दर्शपूर्णमासयोः' इत्यादि खण्डों का द्वितीय दशक है। 'अथात इष्टापूर्तस्य' इत्यादि खण्डों का तृतीय दशक है और 'तेषां यश्चमसानाम्' इत्यादि खण्डों का चतुर्थ चतुर्थक है, अर्थात् सप्तमपञ्चिका में कुल चौंतीस खण्ड हैं]।

॥ इस प्रकार ऐतरेय ब्राह्मण को डॉ० सुधाकर मालवीय कृत सप्तम पञ्चिका की हिन्दी व्याख्या पूर्ण हुई ॥ ७ ॥

—: ० :—

१. १०८८, १०९६, ११३६, ११७७, ११९९ [१ + ११ + ६ + ८ + ८=३४ ख०]

२. १०८८, ११२९, ११८२, १२०९ [१०+१०+१०+४=३४ ख०]। द्र० १ भाग० द्वत्र पूर्वम् १९० पृष्ठे टिप्पणी द्वयम्।

# अथ अष्टमपञ्चिका

## तत्र

## प्रथमाध्यायस्य

### प्रथमः खण्डः

— ० —

## [अथ षट्त्रिंशोऽध्यायः

### प्रथमः खण्डः]

फलाख्यचमसो भक्षो राज्ञो यज्ञे प्रकीर्तितः।
उच्यते राजयज्ञेऽस्मिन् विशेष स्तोत्रशस्त्रयोः ॥ १ ॥

तदेतत्प्रतिजानीते—

**अथात स्तुतशस्त्रयोरेव ॥ इति ।**

'अथ' राज्ञो यज्ञे भक्षविशेषकथनानन्तर, यत स्तुतशस्त्रयोर्विशेषो जिज्ञासित, 'अत' कारणात्तयोरेव, विशेष उच्यत इति शेष ॥

सोमयाग के शस्त्र और स्तोत्र—

viii १ [xxxvi १] इस [राजा के भक्ष्य के कथन] के अनन्तर [क्योंकि राजसूय यज्ञ के स्तोत्र और शस्त्र का विशेष कथन वाञ्छित है] अत स्तोत्र और शस्त्र के विषय में ही [विशेष] प्रतिपादन करते हैं—

त विशेष वक्तुमादौ विशेषरहितमश दर्शयति—

**ऐकाहिक प्रात सवनमैकाहिक तृतीयसवनमेते वै शान्ते क्लृप्ते प्रतिष्ठिते सवने यदैकाहिके, शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्यै ॥ इति ।**

एकाहे प्रकृतिभूते[1] यत्प्रात सवन यच्च तृतीयसवनमुक्त[2] तदुभय राज्ञो विकृतावपि तथैव प्रयोक्तव्यम् । न तु तयोः कश्चिद्विशेषोऽस्ति । ऐकाहिके ये उभे प्रात सवनतृतीयसवने स्त, ते 'एते' एव 'शान्ते' सुखकरे 'क्लृप्ते' स्वभ्यस्ते 'प्रतिष्ठिते' सपन्ने । अतस्तयो प्रकृति वदनुष्ठान 'शान्त्यै' सुखार्थं, 'क्लृप्त्यै' स्वभ्यासार्थं 'प्रतिष्ठित्यै' च सपत्त्यर्थम् 'अप्रच्युत्यै' विनाशराहित्यार्थं भवति ॥

---

१ द्र० इतः पूर्वम्, ९२८ पृ० ।

२ द्र० इतः पूर्वम्, पृ० २८६–४२०, पृ० ४७१–५२२ ।

[विशेषतारहित अर्थ यह है कि प्रकृतिभूत सोमयाग के] एकाह के ही समान [यहाँ विकृतिभूत भी इस राजसूय याग में] प्रातःसवन और एकाह के ही समान तृतीयसवन [के स्तोत्र और शस्त्र] होते हैं। जो ये दोनों एकाह से सम्बन्धित [प्रातः और सायं] सवन हैं वे शान्त, क्रमबद्ध और प्रतिष्ठित हैं। अतः [प्रकृति के ही समान] वे दोनों शान्तिकारक, क्रमबद्धतायुक्त, [सम्पत्ति में] प्रतिष्ठित और विकाररहित ही होते हैं।

यथा प्रातःसवनतृतीयसवनयोः प्राकृताद्विशेषो नास्ति, तथा माध्यंदिनसवनेऽपि मरुत्वतीयमैकाहिकं होत्रकशस्त्राणि चैकाहिकानि[1], स्तोत्रे तु विशेषोऽस्ति, तमिमं दर्शयति—

उक्तो माध्यंदिनः पवमानो य उभयसाम्नो बृहत्पृष्ठस्योभे हि सामनी क्रियेते ॥ इति।

बृहद्रथंतरं चेत्युभयविधं साम यस्मिन्नभिजिदादौ सोऽयमुभयसामा, बृहत्साम पृष्ठस्तोत्रे यस्मिन्नभिजिदादौ सोऽयं 'बृहत्पृष्ठः' तादृशस्य 'उभयसाम्नो 'बृहत्पृष्ठस्य' अभिजिदादेर्यो माध्यंदिनः पवमान उक्तः[2], स एवात्र राजसूये माध्यंदिनः पवमानो द्रष्टव्यः। न चोभयसामत्वं बृहत्पृष्ठत्वं चोभयं व्याहतमिति शङ्कनीयम्। माध्यंदिनपवमानस्तोत्रे रथंतरं साम, पृष्ठस्तोत्रे बृहत्सामेत्येवमुभयसामत्वस्य व्यवस्थितत्वात्। 'उभे हि'—इत्यनेनेयमेव व्यवस्था स्पष्टीक्रियते। यद्यपि मरुत्वतीयशस्त्रावयवाः प्रतिपदादयः प्राकृता एव, तथाऽपि तदनुवादेनात्र प्रशंसा क्रियते ॥

[जैसे प्रातःसवन और सायंसवन में प्रकृतिभूत सोमयाग से विशेषता नहीं होती है उसी प्रकार मध्यन्दिन सवन में भी होत्रक के शस्त्र एकाह के ही समान होते हैं किन्तु स्तोत्र में विशेषता यह है कि अभिजिद् आदि यागों में प्रयुक्त होने वाला बृहत् और रथन्तर नामक] जो उभय साम हैं उनके सहित और [अभिजिद् आदि यागों में प्रयुक्त होने वाले] जो बृहत् साम पृष्ठस्तोत्र हैं उनके सहित मध्यन्दिन पवमान का वर्णन पहले जो किया गया है उन्हीं दोनों [अर्थात् मध्यन्दिन पवमान स्तोत्र में रथन्तर साम और पृष्ठस्तोत्र में बृहत् साम] का प्रयोग समान रूप से [यहाँ राजसूय में भी] किया जाता है।

तत्र प्रतिपदनुचरौ दर्शयति—

आ त्वा रथं यथोतय, इदं वसो सुतमन्ध इति राथंतरौ प्रतिपदनुचरौ, पवमानोक्थं वा एतद् यन् मरुत्वतीयं, पवमाने वा अत्र रथंतरं कुर्वन्ति, बृहत्पृष्ठं, सर्वोयथतायै, तदिदं रथंतरं स्तुतमान्यां प्रतिपदनुचराभ्यामनुशंसति ॥

---

१ द्र० इतः पूर्वम्, पृ० ४२१–५७०।
२ द्र० इतः पूर्वम्, पृ० ४३०।

'आ त्वा रथम्' इति[1] यद् तृच सोऽस्य मरुत्वतीयशस्त्रस्य प्रतिपत्[2], तस्मिंस्तृचे रथंतर सामोद्गातृभिर्गीयते। तस्मादियं प्रतिपत् 'राथंतरी'। 'इदं वसो सुतमन्ध' इत्ययं[3] तृचोऽनुचर, छन्दोदेवतादिना पूर्वेण समानत्वात्[4]। रथंतरसामाधारस्य पूर्वस्य तृचस्यानुसारित्वादस्यापि राथंतरत्वम्। यत् मरुत्वतीय शस्त्रमस्ति, 'एतत् पवमानोक्थं वै' पवमान स्तोत्रानुसारेण शस्यमानत्वात्। 'उक्थ' शस्त्रम्। तच्च द्विविधम्—पवमानोक्थं ग्रहोक्थं च। अतोऽत्र पवमानोक्थमिति विशेष्यते। अस्मिंश्च माध्यंदिनपवमानस्तोत्रे सामगा रथंतर साम कुर्वन्ति। पृष्ठस्तोत्रे तु बृहत्सामोपेतं कुर्वन्ति, तदेतदुभयं 'सवीवधतायै' संपद्यते। उभयतः शिक्यद्वयेन जलकुम्भद्वयं वोढुं य काष्ठविशेष पुरुषाणामंसे स्थाप्यते, स वीवध इत्युच्यते। सामद्वयोपेतस्य माध्यंदिनसवनप्रयोगस्य वीवधसदृशत्वाद् वीवधेन सह वर्तत इति सवीवधत्वम्[5]। यदिदं रथंतरं साम माध्यंदिने पवमाने स्तुत, तदिदम् 'आभ्याम्' आ त्वा रथमिदं वसो सुतमित्येताभ्यां प्रतिपदनुचराभ्यामनुशंसेत्॥

'आ त्वा रथ' आदि तृच [जिसमें उद्गाताओं द्वारा रथन्तर साम का गान किया जाता है वह तृच [मरुत्वतीयशस्त्र को] राथन्तरी प्रतिपद् है, और 'इदं वसो सुतमन्धः' आदि तृच [छन्द एवं देवता आदि के समान होने के कारण] अनुचर है [पूर्व तृच के ही अनुसार रथन्तर साम के ऊपर आधारित होने से राथन्तर यह भी अनुचर है]। जो मरुत्वतीय [शस्त्र] है वह पवमान स्तोत्र है [क्योंकि यह पवमान स्तोत्र के ही अनुसार शंसित होता है] [वस्तुतः उक्थ अर्थात् शस्त्र दो प्रकार के होते है। १. पवमान उक्थ और २ ग्रह उक्थ। यहाँ पर मात्र पवमान उक्थ की विशेषता कहते है]। इस [मध्यन्दिन] पवमान स्तोत्र में ही [सामगान करने वाले रथन्तर साम करते हैं, और पृष्ठस्तोत्र को तो बृहत् साम से युक्त करते हैं। [जो दोनों सामों से युक्त करते हैं तो वे मानो] वीवध अर्थात् बहगी के सदृश सतुलन बनाए रखने के लिए करते हैं। जब यह रथन्तर साम [माध्यन्दिन पवमान में] स्तुत होता है तब ['आ त्वा रथ' और 'इदं वसो'] इन दो प्रतिपद् और अनुचर तृचों द्वारा वह अनुशंसन करता है।

---

१ ऋ० ८.६८.१।　　　　२ द्र० इतः पूर्वम् पृ० ४३२।

३ ऋ० ८.२.१।　　　　४ द्र० इत पूर्वम्, पृ० ४३३।

५ 'विवधन हरति विवधिक। पक्षे ठक्, वैवधिक। एकदेशविकृतस्यानन्यत्वाद् वीवधादपि ष्ठन्, वीवधिका, वीवधिकी। विवधवीवधशब्दो उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तते'—इति (सि० कौ०) दीक्षित, पा० सू० ४.४.१७ सूत्रे। द्र० ता० ब्रा० ४.५.१९, १४.१.१०। आश्व गृ० १.१२.३। 'विवध' इति ह्रस्वादिपाठ तैत्तिरीयाणाम्, ७.३.५.४, ७.६। 'विबध' इति पवर्ग्यमध्यपाठोऽपि क्वाचित्कः।

ब्रह्मानपृथिवीरूपत्वेन रथतरं प्रशसति—

**अयो ब्रह्म वै रथतरं, क्षत्रं बृहद्, ब्रह्म खलु वै क्षत्रात् पूर्वं, ब्रह्म पुरस्तान्म उग्रं राष्ट्रमव्यथमसदित्यथास्मै वै रथतरमसमेवास्मै तत्पुरस्तात्कल्पयत्यथेयं वै पृथिवी रथतरमियं खलु वै प्रतिष्ठा, प्रतिष्ठामेवास्मै तत्पुरस्ताद् कल्पयति ॥ इति ।**

यद् 'रथतरं' साम तद्ब्राह्मणजातिस्वरूपम्, उभयोः प्रजापतिमुखजत्वात् । तथा '*बृहद्' सामक्षत्रियजात्यो. प्रजापतेर्बाहुजत्वसाम्यादेकत्वम् । ब्राह्मणजाति. क्षत्रियजाते* पूर्वभाविनी । अतो बृहत्सामसाध्यात्पृष्ठस्तोत्रात् पूर्वं रथतरसामसाध्यस्य पवमानस्तोत्रस्या नुष्ठानेऽयमभिप्राय' । 'ब्रह्म' ब्राह्मणजाति 'पुरस्तात्' पूर्वकाले यस्य राष्ट्रस्य, यदिदं 'ब्रह्म' पुरस्ताद् यदिदं 'मे' राज्ञो राष्ट्रमुग्रमव्यथम् 'असद्' भवेदित्यभिप्राय.[1] । किंचान्न-हेतुत्वाद् 'रथतरं' सामान्नात्मक, 'तत्' तेन रथतरप्रयोगेण 'अस्मै' राज्ञेऽन्नमेव 'पुरस्तात्' 'कल्पयति' प्रथमत सपादयति । किंच यद् 'रथतरं' साम 'इयं' 'पृथिवी' भूमिस्वरूपमेव । इयं च भूमि प्राणिना 'प्रतिष्ठा' आधार । 'तत्' तेन रथतरप्रयोगेण 'अस्मै' यजमानाय राज्ञे प्रतिष्ठामेव कल्पयति ॥

[दोनों ही प्रजापति के मुख से उत्पन्न होने के कारण] जो रथन्तर साम है, वह ब्राह्मणजाति [का स्वरूपभूत] है और [प्रजापति के बाहुओं से उत्पन्न होने के कारण] बृहत् [साम] क्षत्रिय जाति है । इस प्रकार ब्राह्मणजाति क्षत्रियजाति की पूर्ववर्ती है । अत पूर्ववर्ती ब्राह्मणजाति वाला मेरा राष्ट्र उग्रता एवं व्यथारहित होए । रथन्तर साम अन्नात्मक है । इस प्रकार वस्तुतः उस [रथन्तर साम के प्रयोग] से वह इस [राजा] के लिए अन्न को ही प्रथमतः सपादित करता है । और, जो यह रथन्तर [साम] है वह इस भूमि का ही स्वरूप है, और यह भूमि प्राणियों के लिए प्रतिष्ठा अर्थात् आधारभूत है । इस प्रकार वस्तुतः उस [रथन्तर साम के प्रयोग] से वह इस यजमान [राजा] के लिए सम्मुखतः प्रतिष्ठा [ = आधार] को ही सपादित करता है ।

'इन्द्र नेदीय एदिहि' 'उत्तिष्ठ ब्रह्मणस्पते' इत्येतत्प्रगाथद्वयं[2] प्रशसति—

**समान इन्द्रनिहवोऽविभक्त; सोऽह्नामुद्वान्, ब्राह्मणस्पत्य उभयसाम्नो रूपमुभे हि सामनी क्रियेते ॥ इति ।**

इन्द्रो नितरामाहूयते यस्मिन्द् प्रगाथे, सोऽत्र च प्रकृतौ च 'समानः' एक एव । तस्यैवेद व्याख्यानम् 'अविभक्तः' इति, अविकृत इत्यर्थ[3] । 'स.' च प्रगाथः 'अह्ना' रूप-

---

१. द्र० शा० ब्रा० ११.१ २-४ । २ ऋ० ८ ५३.५, ६; १.४०.१०२ ।

३. द्र० इत: पूर्वम्, पृ० ४३३-४४० ।

मिति शेष । अह्न प्रयोगस्य निष्पादकत्वात्तद्रूपत्वम् । य प्रगाथ 'उद्वान्' उच्छब्दयुक्तो 'ब्राह्मणस्पत्य' ब्रह्मणस्पतिदेवताकश्च, 'उत्तिष्ठ ब्रह्मणस्पते' इत्येव श्रुतत्वात् । सोऽपि शसनीयः । किंचासौ प्रगाथ उभयसाम्नो रूप, हि' यस्मात् 'उभे' ये बृहद्रथंतरे सामनी, तस्मिन्प्रगाथे सामगैर्गीयेते[1] ॥

इन्द्र निहृव प्रगाथ [अर्थात् जिसमें इन्द्र का निरन्तर आह्वान होता है वह भी] यही है अर्थात् यह भी अविहृत [बिना किसी अदला बदली के] ही हैं । वह [प्रगाथ अह्न प्रयोग का निष्पादक होने से] अह्न का रूप है । जो प्रगाथ 'उद्' शब्द से युक्त एव ब्रह्मणस्पतिदेवताक है उसका भी शसन करना चाहिए । यह [प्रगाथ] दोनों [बृहद् एव रथन्तर] साम के रूप हैं, क्योंकि दोनों [बृहद् और रथन्तर] साम इस प्रगाथ में [साम गायकों के द्वारा] अनुष्ठित होते हैं ।

धाय्यानामृचा प्रकृतौ विकृतौ चैकत्वमाह—

**समान्यो धाय्या अविभक्तास्ता अह्नाम् ॥ इति ।**

'समान्य' इत्यस्य व्याख्यानम् 'अविभक्ता' इति । तावचाह्नविशेषनिष्पादकत्वात् तत्स्वरूपाः[2] ॥

धाय्या ऋचाएँ भी यही हैं और वे बिना किसी विकृति के [पढ़ी जाती] हैं और [अह्न विशेष की निष्पादक होने से] वे उन दिनों की लक्षक हैं ।

'प्र व इन्द्राय बृहते'[3]–इत्यस्य मरुत्वतीयप्रगाथस्य प्रकृतिविकृत्योरेकत्व दर्शयति—

**ऐकाहिको मरुत्वतीय प्रगाथ[4] ॥ १ ॥**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टम-पञ्चिकाया प्रथमाध्याये (षट्त्रिंशाध्याये) प्रथम खण्ड ॥ १ ॥ [ २५८ ]

मरुत्वती प्रगाथ उसी ऐकाह [यज्ञ] का ही यहाँ प्रयुक्त होता है ।

॥ इस प्रकार छत्तीसवें (प्रथम) अध्याय के प्रथम खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥१॥

## अथ द्वितीयः खण्डः

मरुत्वतीये शस्त्रे निविद्धानीय सूक्त प्रशसति—

**जनिष्ठा उग्र. सहसे तुरायेति सूक्तमुग्रवत्सहस्वत्तत्क्षत्रस्य रूप, मन्द्र ओजिष्ठ इत्योजस्वत्तत्क्षत्रस्य रूप, बहुलाभिमान इत्यभिवदभिभूत्यै रूप, तदेकादशर्चं भवत्येकादशाक्षरा वै त्रिष्टुप्, त्रैष्टुभो वै राजन्य, ओजो वा इन्द्रिय**

१ 'सामगैरभिधीयते'–इति वा पाठ ।
२ द्र० इत पूर्वम्, पृ० ४४०–४४५ ।
३ ऋ० ८.८९.३, ४ ।
४ द्र० इत पूर्वम्, पृ० ४४५ ।

**वीर्यं त्रिष्टुबोजः क्षत्रं वीर्यं राजन्यस्तदेनमोजसा क्षत्रेण वीर्येण समर्धयति, तद्गौरिवीतं भवत्येतद्वै मरुत्वतीयं समृद्धं यद्गौरिवीतं, तस्योक्तं ब्राह्मणम् ॥ इति ।**

'जनिष्ठा' इत्यस्मिन्पादे[1] उग्रशब्दसह शब्दयोर्विद्यमानत्वात् तदेतत् सूक्तम् 'उग्रवत् सहस्वत्' तच्चोभयं क्षत्रियजातेः स्वरूपम् । क्षत्रियोऽपि क्रूरो बलवांश्च । द्वितीयपादस्य[2] पूर्वभागे 'मन्द्र ओजिष्ठ' इति श्रुतत्वात् सूक्तम्[3] 'ओजस्वद्' ओज शब्दोपेतम् । ओजो नाम बलहेतुरष्टमो धातुः । तस्य च धातोः क्षत्रिये सपूर्णत्वाद् ओज शब्दोपेतं सूक्तं क्षत्रियस्य स्वरूपम् । तदुत्तरभागे 'बहुलाभिमानः' इति श्रुतत्वात् 'अभिवद्' अभिशब्दोपेतम् । तच्च 'अभिभूत्यै' शत्रूणामभिभवस्य स्वरूपम् । किंच तद्' सूक्तमेकादशर्चं भवति । त्रिष्टुप् चैकादशाक्षरा । राजन्यश्च त्रिष्टुप्सम्बन्धी तयोः प्रजापतिबाहुजत्वात् । किंच यत्त्रिष्टुबोज-प्रभृतीनां हेतुत्वात् तत्स्वरूपम् । ओजो' बलहेतुरष्टमो धातुः । 'वीर्यं' शरीरादिबलम् । 'इन्द्रियं' चक्षुरादिपाटवम् । राजन्यश्चोज प्रभृतीनां स्वरूपभूत तच्चौज पूर्वमेवोक्तम् । 'क्षत्रं' क्षत्रियजातियुक्तत्वम् । वीर्यं शरीरादिबलम् । एवं च राजयज्ञे 'तद्' तेन त्रिष्टुप्छन्दस्क-सूक्तपाठेन 'एनं' राजानमोज क्षत्रवीर्यैः समृद्धं करोति । किंच 'एतत्' सूक्तं गौरिवीत्या-ख्येन महर्षिणा दृष्टत्वाद् गौरिवीताख्यं भवति[4] । यस्मादेतद् गौरिवीतं, तस्माद् एतत्' मरुत्वतीयशस्त्रं 'समृद्धं' सपूर्णं भवति । तस्य' च गौरिवीतनाम्नः सूक्तस्य 'ब्राह्मणं' 'तद्वा एतद्यजमानजननम्'–इत्यादिना पूर्वमेवोक्तम्[5] ॥

मरुत्वतीयशस्त्र के निविद्धानीय सूक्त—

VII २ [xxxvi २] 'उग्र' शब्द से युक्त और सह [= बल] शब्द से युक्त 'जनिष्ठा उग्र' आदि सूक्त क्षत्रिय जाति का उपलक्षक है [क्योंकि क्षत्रिय भी क्रूर और बलवान् ही होते हैं] । 'ओज' शब्द से युक्त [इसका द्वितीय पाद का पूर्वभाग] 'मन्द्र ओजिष्ठ' आदि क्षत्रियजाति का उपलक्षक है । [इसके द्वितीय पाद के उत्तरभाग का] 'बहुला-भिमान' [= अत्यन्त अभिमान से युक्त] शब्द 'अभि' शब्द से युक्त शत्रुओं के अभिभवन का उपलक्षक है । यह सूक्त ग्यारह ऋचाओं का है और त्रिष्टुप् छन्द भी ग्यारह अक्षर का होता है । [दोनों ही प्रजापति के बाहु से उत्पन्न होने के कारण] राजन्य त्रिष्टुप् से सम्बन्धित है । त्रिष्टुप् ओज, इन्द्रिय और वीर्य [शक्ति] है । राजन्य भी ओज, क्षत्र [क्षत्रियत्व] और वीर्य [शक्ति] है । इस प्रकार [राजसूय याग में] उस [त्रिष्टुप् छन्दस्क सूक्त के पाठ] से वह इस राजा को ओज, क्षत्र [क्षत्रियत्व] और

---

१, २ सोऽयमपर्चः—'जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः' ।

३ ऋ० १० ७३ १–११ । द्र० आश्व० श्रौ० ५ ४ १९ ।

४ द्र० इतः पूर्वम्, पृ० ४४६ । ५ द्र० इत पूर्वम्, पृ० ४४५ ।

वीर्य [शक्ति] से समृद्ध करता है। यह गौरवीति ऋषि द्वारा दृष्ट सूक्त है, क्योंकि यह गौरिवीति ऋषि द्वारा दृष्ट सूक्त है। अत यह मरुत्वतीयशस्त्र से समृद्ध होता है। उस [गौरिवीत नामक सूक्त] का ब्राह्मण [=व्याख्यान] [पहले 'तद्वा एतद् यजमानजननम्' आदि के द्वारा ४४५ पृष्ठ में] कह दिया गया है।

अथ निष्केवल्यशस्त्रमाह—

त्वामिद्धि हवामह इति बृहत्पृष्ठ भवति, क्षत्रं वै बृहत् क्षत्रेणैव तत्क्षत्र समर्धयत्यथो क्षत्रं वै बृहदात्मा यजमानस्य निष्केवल्य, तद्यद्बृहत्पृष्ठ भवति, क्षत्रं वै बृहत् क्षत्रेणैवेन तत्समर्धयत्यथो ज्यैष्ठ्यं वै बृहज्ज्यैष्ठ्येनैवैन तत्समर्धयत्यथो श्रैष्ठ्यं वै बृहच्छ्रैष्ठ्येनैवैन तत्समर्धयति ॥ इति ।

'त्वामिद्धि'—इत्यादिकस्तृचो निष्केवल्यशस्त्रस्य स्तोत्रियप्रतिपद्रूप, बृहत्साम्न आधारत्वाद् बृहद्रूप । तेन च साम्ना पृष्ठस्तोत्रस्य निष्पाद्यत्वात् पृष्ठस्वरूपश्च भवति[1]। 'त्वामिद्धि'-इत्यस्यामृच्युत्पन्न बृहन्नाम 'क्षत्र वै' क्षत्रियजातिरूपमेव । अत 'क्षत्रेणैव' 'त्वामिद्धि'-इति तृचरूपेण 'तद्' क्षत्रं यजमानरूप समृद्ध करोति । 'अथो' अपि चोक्तरीत्या क्षत्रमेव बृहद्रूप निष्केवल्यशस्त्र यजमानस्य 'आत्मा' देहभूत । 'तद्' तथा सति 'यद्' यदि बृहत्पृष्ठशब्दद्वयवाच्य त्वामिद्धीत्यादिक निष्केवल्य भवेत् । 'तत्' तेन निष्केवल्येन, क्षत्रं वै बृहदिति पूर्वमुक्तत्वात् 'क्षत्रेणैव' त्वामिद्धीत्यादिना बृहद्रूपेण निष्केवल्येनैव 'एन' यजमान समृद्ध करोति । 'अथो' अपि च त्वामिद्धीत्यादिक बृहद्रूप 'ज्यैष्ठ्य वै' वयोवृद्धस्वरूपम् । अतो 'ज्यैष्ठ्येनैव' वयोवृद्धयैव 'एन' राजान समृद्ध करोति । 'अथो' अपि च त्वामिद्धीत्यादिक बृहद्रूप 'श्रैष्ठ्य वै' गुणोत्कर्ष एव । तथा सति 'श्रैष्ठ्येनैव' गुणोत्कर्षेणैव यजमान समृद्ध करोति ॥

निष्केवल्यशस्त्र—

'त्वामिद्धि हवामहे' आदि [तृच निष्केवल्यशस्त्र का स्तोत्रिय और प्रतिपद् रूप से] बृहत् पृष्ठ होता है। ['त्वामिद्धि' में उत्पन्न] बृहत् साम क्षत्रियजाति स्वरूप ही है। अत उस ['त्वामिद्धि' आदि तृच रूप] क्षत्रिय से वह उस क्षत्रिय यजमान को ही समृद्ध करता है। और, इस प्रकार बृहत् क्षत्रिय ही है और निष्केवल्य [शस्त्र] यजमान की आत्मा अर्थात् देहस्वरूप है। इस प्रकार उसमें वह बृहत्पृष्ठ होता है और बृहत् क्षत्रिय जाति का रूप है। इस प्रकार वस्तुतः वह क्षत्रिय से ही इस [यजमान] को समृद्ध करता है। ['त्वामिद्धि' आदि] बृहद् वयोवृद्ध स्वरूप है। अत वयोवृद्ध रूप से वह इस

१. (i) ऋ० ६ ४६ १,२ । आश्व० श्रौ० ५ १५ ३ । द्र० ५ १५ १६–१८ ।
(ii) 'it has the Bṛhat as Pṛstha,' bṛhatpṛṣṭham is here taken as a compound by Sāyaṇa, Weber and Aufrecht, but it may not be so इति कीथमहोदय द्र० note २ ।

[राजा] को समृद्ध करता है। ['त्वामिद्धि' आदि] बृहत् [गुणोत्कर्ष रूप से] श्रेष्ठ स्वरूप है। अत. यह [गुणोत्कर्ष रूप] श्रेष्ठता से ही उस [यजमान] को समृद्ध करता है।

निष्केवल्यशस्त्रस्य प्रतिपदमुक्त्वाऽनुरूपमाह—

अभि त्वा शूर नोनुम इति रथंतरमनुरूपं कुर्वन्त्ययं वै लोको रथंतरमसौ लोको बृहदस्य वै लोकस्यासौ लोकोऽनुरूपोऽमुष्य लोकस्याय लोकोऽनुरूपस्तद्यद्रथंतरमनुरूपं कुर्वन्त्युभावेव तल्लोकौ यजमानाय सभोगिनौ कुर्वन्त्यथो ब्रह्म वै रथंतरं, क्षत्रं बृहद्, ब्रह्मणि खलु वै क्षत्रं प्रतिष्ठितं, क्षत्रे ब्रह्माथो साम्न एव स सयोनितायै ॥ इति ।

'अभि त्वा शूर' इत्येष तृचो निष्केवल्यशस्त्रस्यानुरूपं कार्यं । यद्यपि त्वामिद्ध्यमि त्वेत्येतौ प्रगाथावृग्द्वयात्मकौ तथाऽपि प्रग्रथनेन तृचत्वं संपाद्य प्रतिपदनुचरत्वं द्रष्टव्यम् । अभि त्वेत्ययं तृचो रथंतरसाम्न आधारत्वाद् रथंतरमित्युच्यते । बृहद्रथंतरशब्दाभ्यां विवक्षितं त्वामिद्ध्यमि त्वेति तृचद्वयं मिलित्वा प्रशस्यते । भूलोको रथंतरस्वरूप, स्वर्गलोको बृहत्स्वरूप, तावेतौ लोकौ परस्परानुरूपौ । अस्मिंल्लोके दत्तेन हविषा देवा स्वर्गे जीवन्ति । स्वर्गादागतया वृष्ट्या मनुष्या जीवन्ति । तदेतत्परस्परमनुरूपत्वम् । एवं सति बृहद्रथंतररूपाभ्यां प्रतिपदनुचराभ्यामुभावेव लोकौ यजमानार्थं समीचीनभोगयुक्तौ कुर्वन्ति । 'अथो' अपि च प्रजापतिमुखजत्वसाम्येन रथंतरस्य ब्राह्मणरूपत्वाद् तदीयबाहुजत्वसाम्येन बृहत. क्षत्रियरूपत्वाच्च[1] बृहद्रथंतराभिधानयोस्तृचयोरनुष्ठानेन ब्रह्मक्षत्रयो परस्परं प्रतिष्ठा भवति । 'अथो' अपि च तृचद्वयानुष्ठानं निष्केवल्यशस्त्रस्य तृचद्वयाश्रितसाम्नश्च 'सयोनितायै' समानस्थानत्वाय संपद्यते ॥

'अभि त्वा शूर' आदि रथन्तर को [निष्केवल्यशास्त्र का] अनुरूप[2] तृच करते हैं; [अब बृहद् और रथन्तर से विवक्षित 'त्वामिद्धि और 'अभि त्वा' आदि दो तृचों की साथ में प्रशंसा करते हैं]। यह [भू] लोक रथन्तर स्वरूप है, और वह [स्वर्ग] लोक बृहद् स्वरूप है। इस लोक का वह लोक अनुरूप है, और उस [स्वर्ग] लोक का यह [भू] लोक अनुरूप है [अर्थात् इस लोक में प्रदत्त हवि से देवता स्वर्ग में जीवित रहते हैं और स्वर्ग से आई वृष्टि से हम मानव जीवित रहते हैं। यही दोनों का परस्पर अनुरूपत्व है] उसमें जो वे रथन्तर को अनुरूप करते हैं तो वस्तुतः इस प्रकार वे यजमान के लिए इन दोनों लोकों को समीचीन रूप से भोगयुक्त बनाते हैं। और, [प्रजापति के मुख से उत्पन्न होने के साम्यत्व के कारण] रथन्तर ब्राह्मण रूप है और [उन प्रजापति के बाहु से उत्पन्न होने के साम्य के कारण] बृहत् क्षत्रिय रूप है। इस प्रकार [बृहद्

१. द्र० इत पूर्वम्, पृ० १७, १६३ । तु० तै० स० ७.१.१.४ ।
२. ऋ० ७. ३२ २२, २३ । आश्व० श्रौ० ५. १५. २ ।

और रथन्तर के अनुष्ठान से परस्पर] ब्राह्मण में क्षत्रिय ही प्रतिष्ठित होता है और क्षत्रिय में ब्राह्मण। फिर वह [बृहद् एवं रथन्तर नामक तृच द्वय का अनुष्ठान] और [निष्केवल्य शस्त्र के तृच द्वय पर आश्रित] साम वस्तुतः समानस्थानत्व के लिए सम्पादित होते हैं।

धाय्यां दर्शयति—

यद्वावानेति[1] धाय्या, तस्या उक्तं ब्राह्मणम् ॥ इति।

'तस्या' धाय्याया प्रशंसारूपं 'ब्राह्मणं' 'ते देवा अब्रुवन् सर्वं वा अवोचथा'—इत्यादिना पूर्वमेवोक्तम्[2] ॥

'यद्वावान' आदि धाय्या ऋचा है। उस [धाय्या] का [प्रशंसापरक] ब्राह्मण [=व्याख्यान] ['ते देवा अब्रुवन्' आदि के द्वारा पृष्ठ ४५६ में] कहा गया है।

सामाधारभूतं प्रगाथं दर्शयति—

उभयं शृणवच्चन इति सामप्रगाथ उभयसाम्नोरूपमुभे हि सामनी क्रियेते ॥ २ ॥ इति।

उभयमित्यादिप्रगाथो बृहद्रथन्तरसामद्वयस्य स्वरूपम्। यस्मादेते उभयसामनी अस्मिन् प्रगाथे सामगैर्गीयेते, तस्मात्तद्रूपत्वं युक्तम्[3] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये अष्टम पञ्चिकाया प्रथमाध्याये (षट्त्रिंशाध्याये) द्वितीय खण्ड ॥ २ ॥ [ २५९ ]

'उभय शृणवच्चन' आदि साम प्रगाथ दोनों [बृहद् एवं रथन्तर] साम का स्वरूप है, क्योंकि ये दोनों साम [इस प्रगाथ में साम गायकों के द्वारा] अनुष्ठित होते हैं। [अतः उनका तद्रूपत्व युक्तियुक्त है]।

॥ इस प्रकार छत्तीसवें (प्रथम) अध्याय के द्वितीय खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥२॥

## अथ तृतीयः खण्डः

निष्केवल्यशस्त्रे निविद्धानीयं सूक्तं दर्शयति—

तमु ष्टुहि यो अभिभूत्योजा[4] इति सूक्तमभिवदभिभूत्यै रूपम् ॥ इति।

'अभिवत्' अभिशब्दोपेतं सूक्तं, तस्माद् 'अभिभूत्यै' शत्रूणामभिभवस्य स्वरूपम्[5] ॥

---

१ ऋ० १०।७४।६।        २ द्र० इतः पूर्वम् पृ० ४५६। (३।२।१०)।
३ द्र० इतः पूर्वम्, पृ० ४६२–४७०।        ४ ऋ० ६।१८।१–१५।
५ प्रकृतौ तु इन्द्रस्य नू वीर्यमिति विहितम् (द्र० इतः पूर्वम्, पृ० ४७०)।

निष्केवल्यशस्त्र के निविद्धानीय सूक्त—

VIII.३ [XXXVI. ३] 'तमु ष्टुहि' आदि 'अभि' शब्द से युक्त सूक्त शत्रुओं के अभिभव का स्वरूपभूत है।

तस्या ऋचस्तृतीयपादमनूद्य प्रशंसति—

अषाह्ळमुग्रं सहमानमाभिरित्युग्रवत् सहमानवत् तत्क्षत्रस्य रूपम् ॥ इति।

उग्रशब्दसहमानशब्दयुक्तमिदं सूक्तम्। तच्च शब्दद्वयवाच्यं क्षत्रियजाते स्वरूपम्। क्षत्रियो ह्युग्रो भूत्वा शत्रूनभिभवति ॥

उसका तृतीय पाद 'अषाह्ळमुग्र' आदि पाद 'उग्र' शब्द और 'सहमान' शब्द से युक्त क्षत्रिय का स्वरूप है [क्योंकि उग्र होकर क्षत्रिय शत्रुओं का अभिभव करते हैं]।

तत्सूक्तगतामृक्संख्यां प्रशंसति—

तत्पञ्चदशर्चं भवत्योजो वा इन्द्रियं वीर्यं पञ्चदश, ओजः क्षत्रं वीर्यं राजन्यस्तदेनमोजसा क्षत्रेण वीर्येण समर्धयति ॥ इति।

पूर्वोक्तत्रिष्टुप्प्रशंसावाक्यवद्[१] इदं पञ्चदशस्तोमप्रशंसावाक्यं व्याख्येयम्[२] ॥

यह [सूक्त] पन्द्रह ऋचाओं का है। पञ्चदश [स्तोम] ओज, इन्द्रिय और वीर्य [= शक्ति] है। राजन्य ओज, क्षत्र [क्षत्रियत्व] और वीर्य [= शक्ति] है। इस प्रकार वह इस [यजमान] को ओज, क्षत्र [क्षत्रियत्व] और वीर्य से समृद्ध करता है।

ऋषिद्वारा सूक्तं प्रशंसति—

तद्भारद्वाजं भवति, भारद्वाजं वै बृहदार्षेयेण सलोमा ॥ इति ॥

भरद्वाजेन दृष्टत्वाद् इदं सूक्तं 'भारद्वाजं' 'बृहद्' सामापि तथा भारद्वाजम्। तादृग्बृहद्योगादयं क्रतुः 'आर्षेयेण सलोमा'। आर्षेयो भरद्वाजमुनिसंबन्धः, लोमशब्देन केशयुक्तो मूर्धोपलक्ष्यते। 'सलोमा' सशिरस्कः, संपूर्ण इत्यर्थः। भरद्वाजमुनिदृष्टस्य बृहतः संपूर्णत्वाद् बृहद्द्वारा भरद्वाजमुनिसंबन्धे[३] सति क्रतोरपि संपूर्णत्वं द्रष्टव्यम् ॥

यह [सूक्त] भरद्वाज ऋषि द्वारा दृष्ट है। उसी प्रकार बृहत् साम भी भरद्वाज द्वारा दृष्ट है। इस प्रकार यह [क्रतु] भरद्वाज के आर्षत्व से केशयुक्त [अर्थात् सिर से युक्त] [= सम्पूर्ण] होता है।

---

१ द्र० इत पूर्वम्, पृ० १२२९।

२ 'पिबा सोमं त मु ष्टुहीति मध्यन्दिन, तयोरैन्द्राहिके पुरस्तादन्ये वा शंसेयु'—इति आश्व० श्रौ० ८.५.४,५।

३ सम्पूर्णत्वाद् भरद्वाजमुनिसम्बन्धे'—इति वा पाठः।

इदानीं बृहद्रथंतरसामोपेतप्रकृतयज्ञक्रतुसमृद्धि[1]मुपजीव्यैकसामकेऽपि क्षत्रिययज्ञे पृष्ठस्तोत्रस्य बृहत्सामसाध्यत्वं विधत्ते—

**एष ह वाव क्षत्रिययज्ञः समृद्धो यो बृहत्पृष्ठस्तस्माद्यत्र क्व च क्षत्रियो यजेत, बृहदेव तत्र पृष्ठं स्यात्, तत्समृद्धम् ॥**

'य' क्रतुर्द्विसामकत्वेन[2] बृहत्पृष्ठोपेतः, एष एव क्षत्रिययज्ञ 'समृद्धः' संपूर्णः। यस्मादेव, तस्माद् 'यत्र क्व च' एकसामकेनापि क्रतुना क्षत्रियो यजेत, तत्र पृष्ठस्तोत्रं बृहत्सामयुक्तमेव कुर्यात्। 'तत्' एतदनुष्ठानं 'समृद्धं' संपूर्णं भवति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकायाः प्रथमाध्याये (षट्त्रिंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ [२६०]

जो [क्रतु दो साम] बृहत् और पृष्ठ से युक्त होता है, वही क्षत्रिय का यज्ञ सम्पूर्ण होता है। क्योंकि ऐसा है इसलिए जहाँ कहीं भी एक साम के क्रतु से भी यदि क्षत्रिय यजन करें तो वहाँ पृष्ठ [स्तोत्र] को बृहत् [साम] से युक्त ही करें। इस प्रकार वह [अनुष्ठान] समृद्ध होता है।

॥ इस प्रकार छत्तीसवें (प्रथम) अध्याय के द्वितीय खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥२॥

## अथ चतुर्थः खण्डः

माध्यंदिने सवने होतुः शस्त्रविशेषमभिधाय होत्रकाणां विशेषाभावं दर्शयति—

**ऐकाहिका होत्रा, एता वै शान्ताः क्लृप्ताः प्रतिष्ठिता होत्रा, यदैकाहिकाः शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्यै, ताः सर्वरूपा भवन्ति सर्वसमृद्धाः, सर्वरूपतायै सर्वसमृद्ध्यै, सर्वरूपाभिर्होत्राभिः सर्वसमृद्धाभिः, सर्वान् कामानवाप्नवामेति, तस्माद्यत्र क्व चैकाहा असर्वस्तोमा असर्वपृष्ठा, ऐकाहिका एव तत्र होत्राः स्युस्तत्समृद्धम् ॥ इति।**

मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां याः क्रियास्ताः 'होत्राः'[3]। ताश्च 'ऐकाहिकाः' एकाहे प्रकृतिरूपे विहिता एवात्र विकृतिरूपेण क्षत्रिययज्ञे कर्तव्याः। 'एताः' च होत्राः शान्त्यादिगुणिकाः। शान्त्यादिशब्दार्थाः पूर्ववद् व्याख्येयाः[4]। 'ताः' चैकाहिका होत्राः 'सर्वरूपाः सर्वसमृद्धाश्च भवन्ति' तत्तद्विकृतिषु होत्रकाणां ये ये विशेषा उक्ताः, तद्रूपत्वं सर्वरूपत्वं, तत्फलसमृद्धिः सर्वसमृद्धिः। एतच्चोभयमिन्द्राभिष्टवनेन क्षत्रियप्रतिपादनसामर्थ्यात् संपद्यते। अतः 'सर्वरूपतायै' सर्वलोकप्राप्त्यर्थम्, तत्र च सर्वभोगसमृद्ध्यर्थम् उक्ता

1. 'क्रतुसम्बन्धः'—इति वा पाठः।
2. 'द्विसामको'—इति वा पाठः।
3. द्र० इतः पूर्वम्' पृ० ९२७, ९५४।
4. द्र० इतः पूर्वम्, पृ० १२२५।

होत्रकाः संपद्यन्ते । ततः क्षत्रियाः पुरुषाः सर्वरूपाभिः सर्वसमृद्धाभिरैकाहिकाभिर्होत्राभिः सर्वान् कामानवाप्नवामेत्यभिप्रायेणैकाहिकहोत्रानुष्ठानं[1] कुर्युः । एकाहाश्च द्विविधाः-सर्वस्तोमसर्वपृष्ठाः तद्विपरीताश्च, पृष्ठ्ये षडहे प्रतिपादिताः, त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशरूपाः षट्संख्याकाः सर्वे स्तोमाः । तस्मिन्नेव पृष्ठ्यषडहे रथंतरबृहद्वैरूपवैराजशाक्वररैवतानि षट्संख्याकानि सर्वपृष्ठानि[2] । तैः सर्वैः स्तोमैः पृष्ठैश्च युक्तेभ्य एकाहेभ्यो व्यतिरिक्ता कतिपयस्तोमपृष्ठयुक्ता एकाहाः 'असर्वस्तोमा असर्वपृष्ठाः' च । यस्मादैकाहिका होत्राः पूर्वोक्तरीत्या प्रशस्ताः तस्माद्यत्र क्वापि असर्वस्तोमा असर्वपृष्ठाश्चैकाहा अनुष्ठीयन्ते, तत्र सर्वत्रैकाहिका एव होत्राः स्युः । न तु नूतनो विशेषः कश्चिदस्ति । 'तत्' तादृशं कर्म 'समृद्धं' फलेन संपूर्णम् ॥

[माध्यन्दिन सवन में होता के शस्त्र विशेष का कथन और विशेष होत्रकों का अभाव]—

॥॥ ४ [xxxvi. ४] [राजसूय यज्ञ के] होत्रकों [मैत्रावरुण, ब्राह्मणाच्छंसी और अच्छावाक] की क्रियाएँ वही हैं जो एकाह यज्ञों में होती हैं [अर्थात् एकाह में प्रकृति रूप से विहित क्रियाएँ यहाँ क्षत्रिय के राजसूय यज्ञ में विकृति रूप से की जाती हैं]। ये होत्रकों की क्रियाएँ शान्त, क्रमबद्ध और प्रतिष्ठित हैं । ये जो एकाहिक कृत्य हैं वे शान्ति के लिए तथा क्रमबद्धता एवं प्रतिष्ठित होने के लिए एवं विनाशराहित्य के लिए ही होते हैं । वे क्रियाएँ [उन-उन विकृतियों में होत्रकों के जो विशेष कृत्य कहे गए हैं वे सभी क्रियाएँ] सर्वरूप और सर्वसमृद्ध होती है । अतः सभी लोकों की प्राप्ति के लिए और वहाँ सभी भोगों की समृद्धि के लिए [वे होत्रकों की क्रियाएँ होती हैं] । उससे 'हम [क्षत्रिय पुरुष] सर्वरूप और सर्वसमृद्ध होत्रकों की [ऐकाहिक] क्रियाओं के द्वारा सभी कामनाओं को प्राप्त करें'-इस अभिप्राय से [ऐकाहिक होत्रकों की क्रियाओं का अनुष्ठान करना चाहिए] ।

[वस्तुतः एकाह यज्ञ दो प्रकार का है १. सर्वस्तोम-सर्वपृष्ठ और २. उसके विपरीत पृष्ठ्य षडह में प्रतिपादित त्रिवृत्, पञ्चदश, सप्तदश, एकविंश, त्रिणव और त्रयस्त्रिंश रूप से सर्वस्तोम छः प्रकार के हैं, और, उसी पृष्ठ्य षडह में रथन्तर, बृहद्, वैरूप, वैराज; शाक्वर और रैवत नामक छः प्रकार के सर्वपृष्ठ हैं । उन सभी स्तोमों और पृष्ठों से युक्त एकाह से अतिरिक्त कतिपय स्तोम और पृष्ठ युक्त एकाह सर्वस्तोमरहित और सर्वपृष्ठरहित हैं; क्योंकि ऐकाहिक होत्रकों की क्रियाएँ पूर्वोक्त रीति से प्रशस्त हैं] ।

इसलिए जहाँ कहीं भी सर्वस्तोमरहित और सर्वपृष्ठरहित एकाहों का अनुष्ठान करते हैं वहाँ सभी होत्रकों की क्रियाएं ऐकाहिक ही होती हैं [अर्थात् कोई विशेष बात नहीं है] । इस प्रकार का कर्म सम्पूर्ण होता है ।

---

१. 'ऐकाहिकहोत्रानुष्ठान'-इति आ० मु० पाठः ।

२. द्र० इतः पूर्वम्, पृ० ४९६ ।

अथ क्षत्रिययज्ञस्य संस्थाविशेषो निर्णेतव्यः। तदर्थमादौ केषाञ्चित्पक्षमुपन्यस्यति—

उक्थ्य एवायं पञ्चदशः स्यादित्याहुरोजो वा इन्द्रियं वीर्यं पञ्चदश, ओजः क्षत्रं वीर्यं राजन्यस्तदेनमोजसा क्षत्रेण वीर्येण समर्धयति ॥ इति ।

'अय' क्षत्रिययज्ञ उक्थ्यसंस्थ एव[1], सर्वेष्वपि स्तोत्रेषु पञ्चदशस्तोम एव स्यादित्येव मेके ब्रह्मवादिन आहुः। 'ओजो वा' इत्यादिकं पूर्ववद्व्याख्येयम्[2] ॥

'यह [क्षत्रिय यज्ञ] उक्थ्यसंस्थ ही होए और सभी स्तोत्रों में पञ्चदश स्तोम ही होए'—इस प्रकार कुछ ब्रह्मवादियों का कथन है। वस्तुतः पञ्चदश स्तोम ओज, इन्द्रिय और वीर्य हैं। राजन्य भी ओज, क्षत्र और वीर्य है। इस प्रकार वह इस [यजमान] को ओज, क्षत्र एवं वीर्य से समृद्ध करता है।

उक्थ्ये स्तोत्रशस्त्रसंख्या प्रशंसति—

तस्य त्रिंशत्स्तुतशस्त्राणि भवन्ति; त्रिंशदक्षरा वै विराड्, विराळन्नाद्यं विराज्येवैनं तदन्नाद्ये प्रतिष्ठापयति, तस्मात्तदुक्थ्यः पञ्चदशः स्यादित्याहुः ॥ इति ।

'तस्य' उक्थ्यस्य पञ्चदश स्तोत्राणि, पञ्चदश शस्त्राणीत्येव[3] त्रिंशत्संख्या। तथा सत्यक्षरद्वारा 'विराड्'रूपत्वाद्, विराजश्चान्नसाधनत्वात् 'एनं' यजमानं विराट्साम्येनान्नाद्ये प्रतिष्ठापयति। 'तस्मात्' एवं पञ्चदशस्तोत्रशस्त्रत्वात् 'तदुक्थ्यः' स क्षत्रिययज्ञ उक्थ्यसंस्थः पञ्चदशस्तोमयुक्तः स्यादित्येव केचिदाहुः ॥

उस [उक्थ्य] के [पञ्चदशस्तोत्र और पञ्चदश शस्त्र मिलकर] त्रिंशत् स्तोम एवं शस्त्र होते हैं, और विराट् छन्द भी तीस अक्षरों का ही होता है। विराट् अन्न है। इस प्रकार [अक्षरों के द्वारा] वह विराज् में इस [यजमान] को उस [विराट् साम्य] से भोज्य अन्न के रूप में प्रतिष्ठित करता है। अतः [इस प्रकार पञ्चदशस्तोत्र और शस्त्र होने से] 'उक्थ्यसंस्थ [वह क्षत्रिय यज्ञ] पञ्चदश स्तोम से युक्त होए'—ऐसा कुछ याज्ञिक कहते हैं।

अथ स्वपक्षमाह—

ज्योतिष्टोम एवाग्निष्टोमः स्यात् ॥ इति ।

योऽयं क्षत्रियाणां ज्योतिष्टोमः[4], सोऽग्निष्टोमसंस्थ एव स्यात् ॥

१. उक्थ्यक्रतुप्रयोगः द्र०, इतः पूर्वम्, पृ० ५४८–५७२। (३.५)

२. द्र० इतः पूर्वम्, पृ० १२२५।

३ 'पञ्चदशोक्थ्यस्य स्तोत्राणि पञ्चदश शस्त्राणि'–इति द्र० इतः पूर्वम्, पृ० ५३०।

४. 'पञ्चदशस्तोत्राणि पञ्चदश शस्त्राणि, स मासः'–इति ता० ब्रा० ४ २.९।

जो यह क्षत्रियों का ज्योतिष्टोम है वह अग्निष्टोमसत्य ही होए।

इहिमग्निष्टोमे ये त्रिवृदादयश्चत्वारः स्तोमास्तान् ब्राह्मणादिवर्णचतुष्टयरूपेण तेज आदिगुणचतुष्टयरूपेण च प्रशंसति—

**ब्रह्म वै स्तोमानां त्रिवृत्, क्षत्रं पञ्चदशो, ब्रह्म खलु वै क्षत्रात् पूर्वं, ब्रह्म पुरस्तान्म उग्रं राष्ट्रमव्यथ्यमसदिति, विशः सप्तदश, शौद्रो वर्ण एकविंशो विशं चैवास्मै तच्छौद्रं च वर्णमनुवर्त्मानौ कुर्वन्त्यथो तेजो वै स्तोमानां त्रिवृद्, वीर्यं पञ्चदशः, प्रजातिः सप्तदशः, प्रतिष्ठैकविंशस्तदेनं तेजसा वीर्येण प्रजात्या प्रतिष्ठयाऽन्ततः समर्धयति, तस्माज्ज्योतिष्टोमः स्यात् ॥** इति।

प्रजापतेर्मुखबाहूमध्यदेहपादेभ्य उत्पत्तिसाम्यात् त्रिवृदादिस्तोमानां ब्राह्मणादिवर्णचतुष्टयरूपत्वम्[1]। तत्र ब्राह्मणपूर्वकं राष्ट्रं मदीयमुग्रमव्यथनीयं वाऽस्त्वित्यभिप्रायेण क्षत्रियस्य त्रिवृत्पञ्चदशौ क्रमेणानुष्ठेयौ। सप्तदशैकविंशयोरनुष्ठानं वैश्यशूद्रौ वर्णौ क्षत्रियस्यानुगामिनौ कुर्वन्ति। त्रिवृदादिस्तोमानां तेजोवीर्यप्रजननप्रतिष्ठासाधनत्वात् तद्रूपत्वम्। तेषामनुष्ठानेन 'एनं' क्षत्रियम् 'अन्ततः' क्षत्रिययज्ञस्यान्ते तेजआदिभिः समृद्धं करोति। तस्मात्क्षत्रियस्य त्रिवृदादिस्तोमचतुष्टयविशिष्टो ज्योतिष्टोमः स्यात् ॥

[दोनों के प्रजापति मुख से उत्पन्न होने के कारण] स्तोमों में त्रिवृत् स्तोम ब्राह्मण [जाति का स्वरूप] है और [प्रजापति के बाहुओं से उत्पन्न होने के कारण] पञ्चदशस्तोम क्षत्रिय [जाति का स्वरूप] है। ब्राह्मण जाति क्षत्रिय जाति की पूर्ववर्ती है। अतः पूर्ववर्ती ब्राह्मण जाति वाला मेरा राष्ट्र उग्रता एवं व्यथाविहीन ही होवे'—इसी अभिप्राय से [उस क्षत्रिय का त्रिवृत् और पञ्चदश स्तोम क्रम से अनुष्ठित होता है]। सप्तदश स्तोम प्रजा है। एकविंश स्तोम शूद्र वर्ण है। वस्तुतः इस प्रकार वे प्रजा और शूद्र वर्ण को उस [क्षत्रिय जाति] का अनुगामी बनाते हैं, और फिर स्तोमों में त्रिवृत् स्तोम तजस्थानीय है, पञ्चदश स्तोम वीर्य है। सप्तदश स्तोम सन्तति है और एकविंश स्तोम प्रतिष्ठा है। इस प्रकार वह उस [अनुष्ठान] से इस [क्षत्रिय यजमान] को तेज, वीर्य, सन्तति और [यज्ञ के] अन्त में प्रतिष्ठा से समृद्ध हो करता है। इसलिए [क्षत्रिय का त्रिवृत् आदि स्तोम चतुष्टय से विशिष्ट] ज्योतिष्टोम होए।

अग्निष्टोमसस्ये तस्मिन् स्तोत्रशस्त्रसंख्यां प्रशंसति—

**तस्य चतुर्विंशतिः स्तुतशस्त्राणि भवन्ति, चतुर्विंशत्यर्धमासो वै संवत्सरः, संवत्सरे कृत्स्नमन्नाद्य, कृत्स्न एवैनं तदन्नाद्ये प्रतिष्ठापयति, तस्माज्ज्योतिष्टोम एवाग्निष्टोमः स्यादग्निष्टोमः स्यात् ॥ ८ ॥** इति।

---

१ द्र० इतः पूर्वम्, पृ० १७,१६३। तु० तै० सं० ७।१।१।४।

'तस्य' अग्निष्टोमसस्थस्य ज्योतिष्टोमस्य द्वादश स्तोत्राणि द्वादश शस्त्राणि, एव चतुर्विंशतिसंख्या। तावोऽर्धमासद्वारा संवत्सरत्वम्। संवत्सरे च द्वि. सस्यानां पच्यमानत्वादन्नाद्य 'कृत्स्न' सम्पूर्णं भवति[1]। तेन 'एनं' यजमानं सम्पूर्णं एवान्नाद्ये प्रतिष्ठापयति। तस्मात् क्षत्रियस्य ज्योतिष्टोमोऽग्निष्टोमसस्थ एव स्यात्। न तूक्थ्यसस्थ इति। अभ्यासोऽध्यायसमाप्त्यर्थं[2] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकायां प्रथमाध्याये (षट्त्रिंशाध्याये) चतुर्थ खण्डः ॥ ४ ॥ [२९१]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यादेशतो भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश'नामभाष्ये ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया प्रथमोऽध्यायः (षट्त्रिंशोऽध्यायः) ॥ १ ॥

उस [अग्निष्टोमसस्थ ज्योतिष्टोम] के चौबीस स्तोत्र और शास्त्र होते हैं। एक संवत्सर में चौबीस अर्धमास [पक्ष] होते हैं। संवत्सर में [दो फसल होने से] सम्पूर्ण भोज्य अन्न होता है। वस्तुत. इस प्रकार यह उस [अनुष्ठान] से इस [यजमान] को सम्पूर्ण भोज्य अन्न में स्थापित करता है। इसलिए जो यह क्षत्रिय का ज्योतिष्टोम है वह अग्निष्टोमसस्थ ही होए [अर्थात् उक्थ्यसस्थ क्षत्रियपरक न होए]।

॥ इस प्रकार ऐतरेय ब्राह्मण के आठवीं पञ्चिका के प्रथम (छत्तीसवें) अध्याय की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ १ ॥

---

१ चतुर्विंशतिरग्निष्टोमस्य स्तुतशस्त्राणि'-इति द्र० इत पूर्वम् पृ० ५२६। अपि च ता० ब्रा० ४ २ १२ एवमेव।

२ 'अथ राजसूया'-(९ ३ १) इत्याद्याश्वलायनग्रन्थ इहालोच्यः।

— .० —

# अथ द्वितीयोऽध्यायः

## प्रथमः खण्डः

—: ० :—

# [अथ सप्तत्रिंशोऽध्यायः

## प्रथमः खण्डः]

स्तुतशस्त्रविशेषोऽस्य क्षत्रियस्योपवर्णितः ।
क्रतौ समाप्तेऽस्य पुनरभिषेकोऽत्र वर्ण्यते ॥ १ ॥

तमेतमभिषेकं प्रतिजानीते—

**अथातः पुनरभिषेकस्यैव ॥ इति ।**

'अथ' क्रतुसमाप्त्यनन्तरं, यतः क्षत्रियोऽभिषेकमर्हति । 'अतः' कारणात्पुनरभिषेकस्यैव, विधिरुच्यत इति शेषः[1] । राज्ञः पूर्वमभिषिक्तत्वादयं पुनरभिषेको भवति । इतरस्यापि क्षत्रियस्य माहेन्द्रग्रहाय प्रस्तुते साम्न्यभिषेकस्याऽऽध्वर्यवस्य विद्यमानत्वात्[2] अयं पुनरभिषेको भवति ॥

[पुन: अभिषेक]

VIII.५ [XXXVII.१] इस [क्रतु की समाप्ति] के बाद [क्योंकि क्षत्रिय अभिषेक के योग्य है] अतः पुनः अभिषेक की ही [विधि कहते हैं]। [राजा का पूर्व में माहेन्द्र साम के बाद अध्वर्यु द्वारा अनुष्ठित अभिषेक होने के कारण यह पुन: अभिषेक होता है[3]]।

तं विधत्ते—

**सूयते ह वा अस्य क्षत्रं यो दीक्षते क्षत्रियः सन् स यदाऽवभृथादुदेत्यानूबन्ध्ययेष्ट्वोदवस्यत्यथैनमुदवसानीयायां संस्थितायां पुनरभिषिञ्चन्ति ॥ इति ।**

---

१. तं वै प्राञ्चं तिष्ठन्तमभिषिञ्चति पुरस्ताद् ब्राह्मणोऽभिषिञ्चत्यध्वर्युर्वा, यो वास्य पुरोहितो भवति, पश्चाद् इतरे इदं सर्वं यो राजसूयेन यजते'—इत्यादि शत० ब्रा० ५.४.२.१–५ ।

२. 'तं वै माध्यन्दिने सवनेऽभिषिञ्चति······अगृहीते माहेन्द्रे—इत्यादि शत० ब्रा० ५.३.५ १ । माहेन्द्रे ग्रहे अगृहीते सोमरसेनापूर्णे, मरुत्वतीयान्ते इत्यर्थः'—इति च तत्र सायणः ।

३. द्रष्टव्य आप० श्रौ० १८-१५-१० ।

'यः' पुमान् क्षत्रियः सन् 'दीक्षते' दीक्षां प्राप्नोति । 'अस्य' क्षत्रस्य पुरुषस्य 'क्षत्र' सर्वेषां प्राणिनां क्षतात् त्राणं 'सूयते' प्रवर्तते 'तस्मात्' क्षत्रियो यदा 'अवभृथादुदेत्य' अवभृथाख्यं कर्म समाप्तं कृत्वा ततो 'नूबन्ध्यया' तदाख्यया कयाचित्पशुस्थानीयया 'इष्ट्वा' याग कृत्वा पश्चात् 'उदवस्यति' उदवसानीयाख्ययेष्ट्या कर्मावसानं करोति । 'अथ' तदानीम् 'एनं' क्षत्रियमुदवसानीयेष्टौ समाप्तायां पुनरपि कर्माङ्गत्वेनर्त्विजोऽभिषिञ्चेयुः ॥

जो पुरुष क्षत्रिय होकर दीक्षा प्राप्त करता है, उसका क्षत्रियत्व [सभी प्राणियों की रक्षा करना आदि ही] दीक्षित होता है । इसलिए वह क्षत्रिय जब अवभृथ नामक कर्म को समाप्त करके, अनूबन्ध्याख्य [कर्म द्वारा किसी पशुस्थानीय] याग करके, [उदवसानी येष्टि नामक कर्म से] समाप्ति करता है । तब इसके बाद इस [क्षत्रिय] को उदवसानीयेष्टि की समाप्ति पर पुनः [कर्म के अङ्ग के रूप में ऋत्विज] अभिषेचन करते हैं ।

तस्याभिषेकसाधनानि विधत्ते—

**तस्यैते पुरस्तादेव सभारा उपक्लृप्ता भवन्त्यौदुम्बर्यासन्दी, तस्यै प्रादेशमात्राः पादाः स्युररत्निमात्राणि शीर्षण्यानूच्यानि, मौञ्जं विवयनं, व्याघ्रचर्माऽऽस्तरणमौदुम्बरश्चमस, उदुम्बरशाखा, तस्मिन्नेतस्मिंश्चमसेऽष्टातयानि निषुतानि भवन्ति,—दधि मधु सर्पिरातपवर्ष्या आपः शष्पाणि च तोक्मानि च सुरा दूर्वा ॥** इति ।

'तस्य' पुनरभिषेक्त्यस्य 'एते' वक्ष्यमाणाः 'सभाराः' संपादनीया द्रव्यविशेषाः 'पुरस्तादेवोपक्लृप्ताः' अभिषेककालात् प्रागेव संपादिता भवेयुः । के वस्तुविशेषाः संपादनीयाः ? तेऽभिधीयन्ते । उदुम्बरकाष्ठैर्निर्मिता काचिदासन्दी । 'तस्यै' तस्या आसन्द्याश्चत्वारः पादाः प्रादेशपरिमिताः । तेषां पादानां शिरस्युपरिभागेऽवस्थितानि 'शीर्षण्यानि'[1] अन्वक्तिर्यग-वस्थितानि काष्ठानि 'अनूच्यानि', तानि शीर्षण्यानूच्यानि' अरत्निपरिमितानि । प्रादेशद्वयमरत्निः । 'विवयनं' विविधं वयनं रज्जुनामोलप्रोतरूपेण संयोजनम् । तच्च 'मौञ्जं' मुञ्जतृणेन निर्मितम् । ईदृश्या आसन्द्या उपर्यास्तरणं व्याघ्रचर्म । दध्यादिप्रक्षेपार्थं प्रौढ उदुम्बरकाष्ठनिर्मितश्चमसः । तथा काचित्सूक्ष्मा 'उदुम्बरशाखा' । 'तस्मिन्नेतस्मिन्नौदुम्बरे' प्रौढे चमसे वक्ष्यमाणं दध्यादिद्रव्याणि 'अष्टातयानि' । अत्र द्वितयत्रितयादिवत् संख्याया

---

१ इत पर वक्ष्यति तृतीयाध्यायीयाद्यखण्डभाष्ये —'अनूच्ये पार्श्वद्वयवर्तिनी फलके'— इति । आसन्दी सममरत्न् । तस्या ग्रीष्मश्च वसन्तश्च द्वौ पादावास्तां, शरच्च वर्षाश्च द्वौ । बृहच्च रथन्तरं चानूच्ये, आस्ताम्, यज्ञायज्ञियं च वामदेव्यं च तिरश्च'— इति अथर्व० १५ ३ ३–५ । 'चतुःसक्तय पादा भवति, चतुःसक्तीन्यनूच्यानि'— इति शत० ब्रा० ६ ७ १ १५ । 'चत्वारः पादाश्चत्वार्यनूच्यानि'—इति च तत्रैव २८ ।

अवयवे 'तयप्' इति सूत्रेण[1] तयप्प्रत्ययः। अष्टसंख्याका अवयवा येषां दध्यादीनां तान्यष्टातयानि। दीर्घश्छान्दसः। तानि च 'निधुतानि' नितरां सुतानि प्रक्षिप्तानि भवन्ति। चमसे प्रक्षेपणीयान्यष्ट द्रव्याणि कानीति तान्युच्यन्ते,—दधि, मधु, सर्पिरित्येतानि त्रीणि प्रसिद्धानि,। आतपयुक्तवर्षमंबा 'आतपवर्ष्या'[2] तादृश्य आपश्चतुर्थं द्रव्यम्। 'शष्पाणि' श्यामतृणानि, पञ्चम द्रव्यम्। 'तोक्मानि' अङ्कुराणि षष्ठ द्रव्यम्। सुरा, दूर्वेति द्रव्यद्वयं प्रसिद्धम् ॥

[उन अभिषेक के साधनों को कहते हैं]—

उस [पुनः अभिषेक] के इन [वक्ष्यमाण] सपादनीय द्रव्य विशेषों का [अभिषेक के] पहले ही सपादन कर लेना चाहिए—१ गूलर के काष्ठ का बना हुआ एक सिंहासन। उस सिंहासन के [चारों] पाए प्रादेश परिमित [अंगूठे और उसके पास की अंगुली के स्थान के बराबर] माप के हों। उन पैरों के सिर के ऊपरी भाग में अवस्थित तिरछे काष्ठ अरत्निमात्र [दो प्रादेश के बराबर] माप के हों। उसको बिनावट मूंज को घनी रस्सी से हो, व्याघ्र [=शेर] चर्म का बिछावन हो, [दधि आदि द्रव्यों के प्रक्षेप के लिए एक प्रौढ़] उदुम्बर के काष्ठ से निर्मित चमस और [कोई एक छोटी] गूलर के वृक्ष की शाखा हो। उस इस उदुम्बर के प्रौढ़ चमस में [दधि आदि निम्न] आठ वस्तुएँ डाली जाती हैं—१ दही, २ शहद, ३ घी, ४ धूप में बरसने वाले मेघ का पानी, ५ घास, ६ जो का अकुर[3], ७ सुरा [=शराब] और ८ दूर्वा।

सपादिताया आसन्द्या प्रतिष्ठापन विधत्ते—

तस्यैषा दक्षिणा स्फ्यवर्तनिर्वेदेर्भवति, तत्रैता प्राचीमासन्दीं प्रतिष्ठापयति, तस्या अन्तर्वेदि द्वौ पादौ भवतो बहिर्वेदि द्वावियं वै श्रीस्तस्या एतत्परिमितं रूपं यदन्तर्वेद्यथैष भूमाऽपरिमितो यो बहिर्वेदि, तद्यदस्या अन्तर्वेदि द्वौ पादौ भवतो, बहिर्वेदि द्वा, उभयो. कामयोरुपाप्त्यै यश्चान्तर्वेदि यश्च बहिर्वेदि ॥ ५ ॥ इति।

पुरा वेदिपरिग्रहार्थं स्फ्येन रेखात्रयं कृतं—दक्षिणा 'प्रतीच्युदीची च। तत्र देवयजनदेशे येयं वेदे सबन्धिनी दक्षिणा 'स्फ्यवर्तनि.' स्फ्यस्य रेखा भवति 'तत्र' तस्यां

१ पा० सू० ५ ३ ४२।

२ 'अन्तरिक्षात् प्रतिगृह्यातपवर्ष्या'—इति कात्या० श्रौ० १५ ४ ५। 'अतपे वर्षन्ति, ता अन्तरिक्षात् प्रतिगृह्य भूमिपतनात् प्रागेव आकाशात् पततीरादाय गृह्णाति'—इति तद् व्याख्यानम्।

३ मनुस्तोक्मेव रोहतु 'जलबिलम्र बीजम्' इति ऋ० १० ६२ ८। शत० ३२ ४ व्रीहितोक्मान् कुर्वन्ति 'व्रीह्यङ्कुराणि विरोहयन्ति।'

रेखायाम् 'एवाम्' आसन्दी 'प्राची' प्राग्ग्रामवस्थापयेत् । तस्या ' च आऽऽसन्द्या उत्तरदिग्गतौ द्वौ पादावन्तर्वेदि विहत । दक्षिणदिग्गतौ द्वौ पादौ बहिर्वेदि स्थापनीयौ । 'इय' भूमि. 'श्रीर्वै' सपद्रूपैव । 'तस्या ' भूमेरन्तर्वेदि यद्रूपमस्ति, एतत् परिमितम्' अल्पम् । अथ बहिर्वेदि 'य ' प्रदेशोऽस्ति, एष 'भूमा' बहुल । अत एव अपरिमित ' इयानिति परिच्छेदरहित । एव सति वेदेर्मध्ये बहिश्चाऽऽसन्द्या द्वौ द्वौ पादाविति यदस्ति, तदुभयो कामयो प्राप्त्यै भवति,—यश्च कामो वेदिमध्ये लभ्यत । यश्चान्य कामो वेदेर्बहिर्लभ्यते, तदुभयसिद्ध्यर्थमेव स्थापनम् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीय 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टम पञ्चिकाया द्वितीयाध्याये (सप्तत्रिंशाध्याय) प्रथम खण्ड ॥ १ ॥ (५) [२६२]

[पहले वेदी के परिग्रह के लिए स्पय से तीन रेखा दक्षिण, पश्चिम और उत्तर में खींची जाती है] उस [देवयजन प्रदेश] में जो यह वेदी से सम्बन्धित दक्षिण की स्पय से खींची गई रेखा होती है वहाँ [उस रेखा] पर इस सिंहासन को पूर्व की ओर मुख करके स्थापित करता है । उस [सिंहासन] के [उत्तर के] दो पाए वेदी के भीतर होते हैं और [दक्षिण के] दो वेदी के बाहर। यह [भूमि] समृद्धि रूप ही है, उस [भूमि] के वेदी के भीतर जो रूप है, वह परिमित [ = थोड़ा] है, और जो वेदी के बाहर का प्रदेश है वह अपरिमित [अत्यधिक] है । उस वेदी के भीतर जो दो पाए हैं और उस वेदी के बाहर जो दो पाए हैं वे दोनों कामनाओं की प्राप्ति के लिए होते हैं। जो वेदी के मध्य [कामना] होती है और जो वेदी के बाहर [अन्य कामना] होती है [उन दोनों कामनाओं की सिद्धि के लिए उनका स्थापन होता है] ।

॥ इस प्रकार सैंतीसवें (द्वितीय) अध्याय के प्रथम खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥१॥

## अथ द्वितीय खण्ड:

प्रतिष्ठापिताया आसन्द्या उपरि चर्मास्तरण विधत्ते—

**व्याघ्रचर्मणाऽऽस्तृणात्युत्तरलोम्ना प्राचीनग्रीवेण, क्षत्र वा एतदारण्याना पशूना यद्व्याघ्र', क्षत्र राजन्य , क्षत्रेणैव तत्क्षत्र समर्धयति ॥ इति ।**

उत्तराण्यूर्ध्वभागे लोमानि यस्य चर्मणस्तद् उत्तरलोम' । प्राच्या दिशि ग्रीवा यस्य चर्मणस्तत् 'प्राचीनग्रीव' । तादृशेन व्याघ्रचर्मणा तामासन्दीमास्तृणीयात् । अरण्य एवावस्थिता आरण्या: पशवो हरिणादय । यो व्याघ्रोऽस्त्येतदारण्याना पशूना मध्ये 'क्षत्र वै' क्षत्रियवच्छूर । योऽय 'राजन्य ' यजमान , सोऽपि 'क्षत्र' क्षत्रियजातित्वाच्छूर । अतश्चर्मास्तरणाद् व्याघ्रचर्मरूपेण 'क्षत्रेणैव' यजमानरूप 'क्षत्र' समृद्ध करोति ॥

viii.६ [xxxvii.२] वह व्याघ्रचर्म को [उस सिंहासन पर इस प्रकार] बिछाता है कि उसके रोएँ ऊपर हों और उसकी ग्रीवा पूर्व की ओर हो। यह जो व्याघ्र है वह अरण्य में रहने वाले [हिरण आदि] पशुओं में क्षत्रिय के समान [शूर] है। जो यह राजा [यजमान] वह भी क्षत्रिय जाति के समान [शूर] है। अतः इस प्रकार उस [व्याघ्र-चर्म के आस्तरण] से वह क्षत्रिय से ही [यजमान रूप] क्षत्रिय को समृद्ध करता है।

आसन्द्या अभिमन्त्रणं विधत्ते—

**ता पश्चात्प्राङुपविश्याऽऽच्य जानु दक्षिणमभिमन्त्रयत उभाभ्यां पाणिभ्या-मालभ्य ॥ इति ।**

प्रतिष्ठापिताया आसन्द्याः पश्चाद्भागे यजमानः प्राङ्मुख उपविश्य, दक्षिणं यज्जान्वस्ति तत् 'आच्य' तद्भूमिस्पृष्टं यथा भवति तथा न्यग्भूतं कृत्वा, सव्यजानूर्ध्वमुखमेवावस्थाप्यो-भाभ्यां पाणिभ्यामासन्दीम् 'आलभ्य' स्पृष्ट्वा, वक्ष्यमाणमन्त्रेणामभिमन्त्रयेत् ॥

उस [सिंहासन] के पीछे से वह [यजमान राजा] पूर्व की ओर मुख करके बैठकर, दाहिने घुटने को झुकाकर [और बाएँ घुटने को ऊपर करके] दोनों ही हाथों से [सिंहा-सन का] स्पर्श करके इन [मन्त्रों] से अभिमन्त्रण करे—

तं मन्त्रं दर्शयति—

**अग्निष्ट्वा गायत्र्या सयुवछन्दसाऽऽरोहतु, सवितोष्णिहा, सोमोऽनुष्टुभा बृहस्पतिर्बृहत्या, मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा, विश्वे देवा जगत्या, तानहमनु राज्याय साम्राज्याय भौज्याय स्वाराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठायाऽऽरोहामि ॥ इति ।**

हे आसन्दि 'त्वा' त्वा गायत्र्या छन्दसा 'सयुक्' सहितोऽग्निरारोहतु। 'उष्णिहा' छन्दसा सहितः सविताऽऽरोहतु। एवं सोमबृहस्पतिमित्रावरुणेन्द्रविश्वे(श्व)देवा अनुष्टु-बादिच्छन्दोभिः सहितास्त्वामारोहन्तु। 'तान्' अग्न्यादीन् देवान् 'अनु' पश्चादहमारोहामि। किमर्थम् ? राज्यादिसिद्ध्यर्थम्। 'राज्यं' देशाधिपत्यम्। 'साम्राज्यं' धर्मेण पालनम्। 'भौज्य' भोगसमृद्धिः। 'स्वाराज्यम्' अपराधीनत्वम्। 'वैराज्यम्' इतरेभ्यो भूपतिभ्यो वैशिष्ट्यम्। एतदुक्तमैहिकम्, अथाऽऽमुष्मिकमुच्यते—'पारमेष्ठ्य' प्रजापतिलोकप्राप्तिः। अत्र 'राज्यम्' ऐश्वर्यम्। 'माहाराज्य' तत्रत्येभ्य इतरेभ्य आधिक्यम्। 'आधिपत्य' तान् इतरान् प्रति स्वामित्वम्। 'स्वावश्यम्' अपारतन्त्र्यम्। 'आतिष्ठत्व' चिरकालवासित्वम् ॥

'हे आसन्दी, अग्नि तुम्हारे ऊपर गायत्री छन्द के साथ चढ़े, सविता उष्णिक् के साथ, सोम अनुष्टुप् के साथ, बृहस्पति बृहती के साथ, मित्र और वरुण पंक्ति के साथ, इन्द्र त्रिष्टुप् के साथ और विश्वे [सभी] देव जगती के साथ। उन [अग्नि आदि देवों] के बाद [इस लोक में] राज्य [देश पर आधिपत्य] के लिए, साम्राज्य [धर्म से प्रजा-

पालन] के लिए, भोगसमृद्धि के लिए, स्वराज्य [अपराधीनता] के लिए [अन्य राजाओं पर] प्रभुसत्ता [=वैराज्य] के लिए और [परलोक में] प्रजापति के लोक की प्राप्ति के लिए, ऐश्वर्य के लिए, महान् ऐश्वर्य के लिए, आधिपत्य के लिए, अपरतन्त्रता और चिरकाल तक वास के लिए चढ़ता हूँ।'

अनेन मन्त्रेणाभिमन्त्रणादूर्ध्वमारोहणं विधत्ते

इत्येतामासन्दीमारोहेद्दक्षिणेनाग्रे जानुनाऽथ सव्येन ॥ इति ।

'इति' शब्दः पूर्वोक्तमभिमन्त्रणमन्त्रं परामृशति । तेनैव मन्त्रेण 'एताम्' आसन्दीमारोहेत् । तत्राय प्रकारः —दक्षिणेन जानुना प्रथमं समारोहेत्, ततः सव्येनाऽऽरोहेत् ॥

इस [मन्त्र] से राजा पहले उस [आसन्दी] पर दाहिने घुटने से चढ़ता है, फिर बाएँ से।

आरोहणं प्रशंसति -

तत्तदितीँ३ ॥ इति ।

'तत्' आरोहणम्, 'तत्' आरोहणम्, 'इति' एवं सर्वे जनाः पूजयन्ति । पूजार्थेयं प्लुतिः ॥

वही, वही [आरोहण] आदरणीय है [ऐसा याज्ञिक जन कहते हैं]।

मन्त्रतात्पर्यं दर्शयति—

चतुरुत्तरैर्वै देवाश्छन्दोभिः सयुग्भूत्वैतां श्रियमारोहन् यस्यामेत एतर्हि प्रतिष्ठिता, अग्निर्गायत्र्या, सवितोष्णिहा, सोमोऽनुष्टुभा, बृहस्पतिर्बृहत्या, मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा विश्वे देवा जगत्या ॥ इति ।

चत्वार्यक्षराण्येकैकस्माच्छन्दस 'उत्तराणि' अधिकानि येषु गायत्र्यादिषु जगत्यन्तेषु च्छन्दःसु, तानि 'चतुरुत्तराणि' । तादृशैश्छन्दोभिः 'सयुग्भूत्वा' साहित्यं प्राप्य, 'देवाः' अग्न्यादयः 'एताम्' आसन्दीं 'श्रियम्' ऐश्वर्यरूपाम् 'आरोहन्' । 'यस्याम्' आसन्द्याम् 'एते' अग्न्यादयः इदानीमपि प्रतिष्ठिता वर्तन्ते । देवाश्छन्दोभिः सयुग्भूत्वेत्यस्या अर्थोऽग्निर्गायत्र्येत्यादिना स्पष्टीकृतः ॥

चार-चार अक्षरों से उत्तरोत्तर बढ़ने वाले छन्दों को साथ लेकर [अग्नि आदि] देव इस ऐश्वर्य रूप आसन्दी पर चढ़े, जिस [आसन्दी] पर वे [अग्नि आदि] अभी भी प्रतिष्ठित हैं। [छन्दों के साथ होकर देवों में] अग्नि गायत्री के साथ, सविता उष्णिक् के साथ, सोम अनुष्टुप् के साथ, बृहस्पति बृहती के साथ, मित्र और वरुण पङ्क्ति के साथ, इन्द्र त्रिष्टुप् के साथ और विश्वेदेव जगती के साथ [चढ़े]।

उक्तमर्थं मन्त्रसंवादेन द्रढयति—

ते एते अभ्यनूच्येते अग्नेर्गायत्र्यभवत्सयुग्वेति ॥ इति ।

'ते एते' देवच्छन्दसी परस्परसहिते कयाचिदृचाऽभ्यनूच्येते । सेयमृगग्नेरित्यादिका[1] । येयं गायत्री, सेयमग्नेः 'सयुग्वा' सहवासिन्यभवत् 'इति' तस्या ऋचोऽर्थः ॥

उन इन [देव और छन्दों] का परस्पर साहित्य [किसी ऋचा] 'अग्नेर्गायत्र्यभवत्' (जो यह गायत्री है वह इस अग्नि का सहवासी होता है) के द्वारा कहा गया है ।

क्षत्रियस्याऽऽरोहणं प्रशंसति—

कल्पते ह वा अस्मै योगक्षेम उत्तरोत्तरिणीं ह श्रियमश्नुतेऽश्नुते ह प्रजानामैश्वर्यमाधिपत्यं, य एवमेता अनु देवता एतामासन्दीमारोहति क्षत्रियः सन् ॥ इति ।

'यः' पुमान् स्वयं 'क्षत्रियः' सन्नारोहति एता देवता 'अनु' स्वयमप्युक्तेन प्रकारेणैतामासन्दीमारोहति । 'अस्मै' क्षत्रियाय 'योगक्षेमः' 'कल्पते' सिध्यति । अप्राप्तस्य लाभस्य प्राप्तिर्योगः । प्राप्तस्य वस्तुनो रक्षणं क्षेमः । योगसहितः क्षेमो 'योगक्षेमः' । किंचायं क्षत्रियः 'उत्तरोत्तरिणीं' दिने दिने वर्धमानां श्रियं प्राप्नोति । तथा सर्वासां प्रजानाम् 'ऐश्वर्यं' नियामकत्वम् 'आधिपत्यम्' अधिपतित्वेन पालनं च प्राप्नोति ॥

जो [पुरुष] इस प्रकार, इस आसन्दी पर स्वयं क्षत्रिय होकर, इन देवों [के आरोहण] के बाद चढ़ता है तो उस [क्षत्रिय] के लिए योग [अप्राप्त की प्राप्ति] और क्षेम [प्राप्त का रक्षण] सिद्ध होता है और वह उत्तरोत्तर बढ़ने वाली समृद्धि को प्राप्त करता है, और प्रजाओं के ऐश्वर्य [नियामकत्व] और उन पर आधिपत्य [पालन] को प्राप्त करता है ।

अभिषेककर्तुः शान्तिमन्त्रवाचनं विधत्ते—

अथैनमभिषेक्ष्यन्नपां शान्तिं वाचयति ॥ इति ।

'अथ' आसन्द्यारोहणानन्तरम् 'एनम्' आरूढं क्षत्रियं योऽन्योऽभिषेक्ष्यति, स पुमान् 'अपां' शान्तिं जलदेवतानां शान्तिकरं मन्त्रं 'वाचयेत्' । क्षत्रियस्याग्रे स्वयं सकृदुक्त्वा तं क्षत्रियं पाठयेत् ॥

इस [आसन्दी पर आरोहण] के अनन्तर इस [आरूढ़ क्षत्रिय] का जो अभिषेक करता है वह जल देवता [वरुण] के शान्तिकारक मन्त्र का पाठ करता है ।

एतं शान्तिमन्त्रं दर्शयति—

शिवेन मा चक्षुषा पश्यताऽऽपः शिवया तन्वोपस्पृशत त्वचं मे ।
सर्वाँ अग्नीँरप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्तेति ॥ इति ।

---

1. द्र० इतः पूर्वम्, पृ० १२४४ ।

हे 'आप' देवता, 'शिवेन' शान्तेनानुग्रहयुक्तेन चक्षुषा मामवलोकयत। तथा शिवया' शान्तया 'तन्वा' मदीयां त्वचमुपस्पृशत। 'अप्सु' जलेषु सीद तीति 'अप्सुषदः' और्वादयोऽग्नय' तान् अग्नीन् सर्वान् व' युष्मदर्थं 'हुवे' आह्वयामि। यूयमपि 'वर्चं' कान्ति, 'बल' शरीरबलम्, तत्कारणम् 'ओज' च मयि निधत्त' सपादयत॥

हे जल देवता, अनुग्रह युक्त नेत्रों से हमें देखो तथा मेरी त्वचा का अपने कल्याणकारी शरीर से स्पर्श करो। जलों में रहने वाली [वडवाग्नि आदि] सभी अग्नियों को मैं तुम्हारे लिए बुलाता हूँ। तुम भी कान्ति, शरीर के बल और ओज को सपादित करो।

तदेतच्छान्तिमन्त्रवाचन प्रशसति

नैतस्याभिषिषिचानस्याशान्ता आपो वीर्यं निर्हणन्निति। ६॥ इति।

'अशान्ता' उग्रा आप तथा चान्यत्र श्रूयते—दिव्या आपोऽशान्ता' इति। साश्चाऽप शान्तिवाचनाभावे 'अभिषिषिचानस्य' अभिषेक प्राप्तस्य एतस्य' क्षत्रियस्य वीर्यं 'निर्हण्यु' विनाशयेयु। सति तु शान्तिपाठे न निर्हणन्' नैव विनाशयन्ति,—'इति' अनेनाभिप्रायेण शान्ति वाचयेत्॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टम पञ्चिकाया द्वितीयाध्याय (सप्तत्रिंशाध्याये) द्वितीय खण्ड ॥२॥ (६) [२६३]

[यदि जल का शान्तिवाचन न किया जाय तो] वे जल अशान्त होकर [उग्रता में] इस [अभिषिक्त होने वाले क्षत्रिय] के वीर्य का [विनाश ही करते हैं, और यदि शान्ति पाठ किया जाता है तो उसका] विनाश नहीं हो करते हैं।

॥ इस प्रकार सैंतीसवें (द्वितीय) अध्याय के द्वितीय खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥२॥

## अथ तृतीयः खण्डः

अभिषेकप्रकार विधत्ते—

अथैनमुदुम्बरशाखामन्तर्धायाभिषिञ्चति॥ इति।

अथ' शान्तिवाचनानन्तरम् 'एन' क्षत्रियम् 'उदुम्बरशाखामन्तर्धाय' शिरस्युदुम्बर शाखया व्यवधान कृत्वा चमसस्थैर्दध्यादिभिरभिषिञ्चेत्[१]॥

VIII.७ [XXXVII.३] इस [शान्ति पाठ] के अनन्तर वह इस [क्षत्रिय] को उदुम्बर [=गूलर के वृक्ष] की शाखा से [सिर का] व्यवधान करके [चमस में रखे दधि आदि द्रव्यों से विभिन्न मन्त्रों द्वारा] अभिषेक करता है।

---

१ 'स्थित प्राश्चमभिषिञ्चति'—इत्यादि (कात्या० श्रौ० १५.५.३०–३३) पाठाच्चाभिषेकप्रकारविशेषाश्चाभिगन्तव्या।

तिस्र ऋचः; एक यजुः, व्याहृतयश्चेत्येतेऽभिषेकमन्त्राः । तत्र प्रथमामृचमाह—

इमा आपः शिवतमा इमाः सर्वस्य भेषजीः ।

इमा राष्ट्रस्य वर्धनीरिमा राष्ट्रभृतोऽमृताः ॥ इति ।

'आप.' इत्यनेन दध्यादिसर्वद्रव्याण्युपलक्ष्यन्ते । 'इमाः' दध्यादिसहिता आप. 'शिवतमाः' अतिशयेन शान्ताः । तथा 'इमा' आपः 'सर्वस्य' दारिद्र्यादिरोगस्य 'भेषजी.' औषधरूपा। । तथा 'इमाः' आपो राष्ट्रस्य 'वर्धनीः' अभिवृद्धिहेतवः । अत एव 'इमा' आपो 'राष्ट्रभृतः' राष्ट्रधारिण्य । स्वयं च 'अमृता' विनाशरहिता. ॥

ये [दधि आदि द्रव्यों के सहित] जल अत्यन्त शान्त हैं, तथा ये [जल] सब [दारिद्र्यादि रोग] की ओषधि रूप हैं, तथा ये [जल] राष्ट्र की अभिवृद्धि करने वाले हैं। अतएव ये [जल] राष्ट्र को धारण करने वाले एवं अमृत अर्थात् स्वयं विनाश-रहित हैं।

द्वितीयामृचमाह—

याभिरिन्द्रमभ्यषिञ्चत् प्रजापतिः सोमं राजानं वरुणं यमं मनुम् ।

ताभिरद्भिरभिषिञ्चामि त्वामहं राज्ञां त्वमधिराजो भवेह ॥ इति ।

पुरा प्रजापतिः 'याभि.' दध्यादिसहिताभिरद्भिरिन्द्रादीन् 'अभ्यषिञ्चत्' । हे क्षत्रिय ताभिरद्भिस्त्वामहमभिषिञ्चामि । त्वं च 'इह' लोके राज्ञां सर्वेषामधिरो राजा भव ॥

[प्राचीनकाल में] जिन [जलों] के द्वारा प्रजापति ने इन्द्र का, सोम राजा का, वरुण का, यम एवं मनु का अभिषेक किया था; उन [दध्यादि सहित] जलों से मैं तुम्हारा अभिषिञ्चन करता हूँ कि 'तुम इस लोक में राजाओं के अधिराज बनो।'

तृतीयामृचमाह—

महान्तं त्वा महीनां सम्राजं चर्षणीनाम् ।

देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत् ॥ इति ।

'जनित्री' त्वोत्पादिका मातृरूपा देवी, त्वा 'महीना' महान्तं महतामपि पुरुषाणा मध्येऽतिशयेन महान्त 'चर्षणीना' मनुष्याणा च सर्वेषा 'सम्राज' सम्यग्धर्मेण पालयितार कृत्वा 'अजीजनत्' उत्पादितवती । अतो भवदीया 'जनित्री' माता, स्वयं तदा पुण्यात्मा भूत्वोत्पादितवती ॥

तुम्हें उत्पन्न करने वाली [मातृ रूप] देवी ने महान् पुरुषों के मध्य अत्यन्त महान् तुम्हे सभी मनुष्यों के ऊपर सम्यक् रूप से पालनकर्ता उत्पन्न किया है। अतः आपकी जननी तब स्वयं पुण्यात्मा हुई।

तिस्र ऋचोऽभिधाय यजुर्दर्शयति—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्याय[1] ॥ इति ।

हे क्षत्रिय 'सवितुः' प्रेरकस्य देवस्य परमेश्वरस्य 'प्रसवे' अनुज्ञायां सत्यां त्वाम भिषिञ्चामि । केन साधनेन ? 'अश्विनोर्देवयोः संबन्धिभ्यां बाहुभ्यां, न तु मदीयाभ्याम्, तथा 'पूष्णः' देवस्य हस्ताभ्याम् । मणिबन्धपर्यन्तौ दण्डाकारौ 'बाहू' अङ्गुलिसहिताग्रभागौ 'हस्तौ' । तथाऽग्निसंबन्धिना 'तेजसा' शरीरकान्त्या । सूर्यस्य संबन्धिना 'वर्चसा' बाह्यप्रकाशेन इन्द्रसंबन्धिना 'इन्द्रियेण' चक्षुरादिपाटवेन । कस्मै प्रयोजनायायमभिषेकः । तत्र शारीरबलाय, 'श्रियै' हस्त्यश्वादिसंपदे, 'यशसे' कीर्त्यै, 'अन्नाद्याय' अन्नसमृद्धये ॥

हे क्षत्रिय, सविता देव की प्रेरणा से [मेरे नहीं अपितु] अश्विनों के बाहुओं से, पूषा देव के हाथों से, अग्नि के तेज से, सूर्य के प्रकाश से और इन्द्र की [चक्षु आदि] इन्द्रिय-शक्ति से [शरीर के] बल के लिए, [हाथी, घोड़े आदि] धन-संपदा के लिए, यश के लिए और भोज्यान्न के लिए मैं तुम्हें अभिषिंचित करता हूँ ।

अथ कामनाभेदेन व्याहृतीर्दर्शयति—

भूरिति य इच्छेदिममेव प्रत्यन्नमद्यादित्यथ य इच्छेद् द्विपुरुष भूर्भुव इत्यथ य इच्छेत् त्रिपुरुषं वाऽप्रतिमं वा भूर्भुवः स्वरिति ॥ इति ।

'यः' अभिषेक्ता 'इममेव' अभिषिच्यमानं क्षत्रियं प्रत्यसौ 'अन्नमद्यात्' नीरोगो भवेदिति 'इच्छेत्' कामयेत, तं 'भूरिति' व्याहृत्याऽभिषिञ्चेत् । अथ 'यः' अभिषेक्ता पुत्रपौत्राभ्यां द्वाभ्यां पुरुषाभ्यां 'सहितम् 'इमं' क्षत्रियं प्रत्यन्नमद्यादिति कामयेत, तदानीम् 'भूर्भुव इति' व्याहृतिद्वयेनाभिषिञ्चेत् । अथ 'यः' अभिषेक्ता पुत्रपौत्रप्रपौत्रैस्त्रिभिः पुरुषैर्युक्तम् 'इमं' क्षत्रियमिच्छेत् पुरुषत्रयपर्यन्तं जीवित्वा सुखेनान्नमद्यादिति कामयेत । अथ वा तमेतम् 'अप्रतिमं' स्वतुल्यक्षत्रियान्तररहितं कुर्यामिति कामयेत, तदानीं 'भूर्भुवः स्वरिति' व्याहृतित्रयेणाभिषिञ्चेत् ॥

[अभिषेक करने वाला] जो [पुरोहित] चाहे कि इस [अभिषिच्यमान क्षत्रिय राजा] के लिए ही यह भोज्यान्न [नीरोग] होवे तो वह 'भूः' इस [व्याहृति] से [अभिषेक करे]

---

१. एवंविधमन्त्रपाठे तैत्तिरीया दूषणमप्यामनन्ति । तद्यथा—'यद् ब्रूयात् अग्नेस्त्वा तेजसाभिषिञ्चामीति, तेजस्व्येव स्यात् दुश्चर्मा तु भवेत् । सोमस्य त्वा द्युम्नेनाभिषिञ्चामीत्याह, सौम्यो वै देवतया पुरुषः, स्वयैवैनं देवतयाभिषिञ्चति'—इति तै० ब्रा० १७८ । सोमस्य त्वेत्यादिस्तु तैत्तिरीयाणां वाजसनेयिनाञ्च अभिषेकमन्त्रः (ऋ० १.८१४, वाज० सं० १०.१७) ।

और [अभिषेक करने वाला] जो [पुरोहित] [पुत्र और पौत्र रूप] दोनों पीढ़ियों के सहित [इस क्षत्रिय के लिए भोज्यान्न की] कामना करे तो 'भूर्भुवः' इन दो व्याहृतियों से अभिषिचन करे, और जो [पुरोहित पुत्र, पौत्र और प्रपौत्र रूप से] तीनों पीढ़ियों से युक्त [इस क्षत्रिय के लिए भोज्यान्न की] कामना करे अथवा क्षत्रियों में उसे अद्वितीय बनाना चाहे; तो 'भूर्भुवः स्व' इन [तीन व्याहृतियों] से [अभिषिचन करे]।

अथ कञ्चित्पूर्वपक्षमुत्थापयति—

तद्धैक आहुः,—सर्वाप्तिर्वा एषा यदेता व्याहृतयोऽति सर्वेण हास्य परस्मै कृतं भवतीति; तमेतेनाभिषिञ्चेद्देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्यायेति ॥ इति।

'तद्' तस्मिन्नेवाभिषेके ब्रह्मवादिनः केचिदेवमाहुः—या एता व्याहृतयः सन्ति 'एषा' व्याहृतिरूपा 'सर्वाप्तिर्वै' सर्वपदार्थप्राप्तिसाधनम्। अतो व्याहृतिभिरभिषेके सति, 'अस्य' अभिषिच्यमानस्य 'परस्मै' परस्य स्वस्मादन्यस्य क्षत्रियस्य 'अति सर्वेण' तदपेक्षामात्रमतिक्रम्य कृत्स्नेनापि मन्त्रजातेनाभिषेचनं कृतं भवति। तदेतदधिकाभिषेचनमयुक्तम् 'इति' अभिप्रेत्य 'तं' क्षत्रियम् 'एतेन' देवस्य त्वेत्यादिना यजुषाऽभिषिञ्चेत्, न तु व्याहृतिभिरिति तेषां पक्षः ॥

इस [अभिषेक के सन्दर्भ] में ब्रह्मवादियों का मत है कि ये जो व्याहृतियाँ हैं, वे सभी वस्तुओं की प्राप्ति का साधन हैं। अतः [अभिषेक में व्याहृतियों का] अधिकतः प्रयोग इस [अभिषिच्यमान राजा] से अन्य के लिए होता है। [अतः सभी मन्त्रों से अधिक अभिषेक अयुक्त है। इसलिए] उस [क्षत्रिय] का इस मन्त्र से अभिषेक करे—'हे क्षत्रिय, सविता देव की प्रेरणा से [मेरे नहीं अपितु] अश्विनों के बाहुओं से, पूषा देव के हाथों से, अग्नि के तेज से, सूर्य के प्रकाश से और इन्द्र की [चक्षु आदि] इन्द्रिय-शक्ति से [शरीर के] बल के लिए, [हाथी, घोड़े आदि] धन-संपदा के लिए, यश के लिए और भोज्यान्न के लिए मैं तुम्हें अभिषिक्त करता हूँ।'

तं पक्षं दूषयति—

तदु पुनः परिचक्षते, यदसर्वेण वाचोऽभिषिक्तो भवतीश्वरो ह तु पुराऽऽयुषः प्रैतोरिति ह स्माऽऽह सत्यकामो जाबालोऽयमेताभिर्व्याहृतिभिर्नाभिषिञ्चन्तीति ॥ इति।

'तदु' तदपि पूर्वोक्तं मतं पुनरन्येऽभिज्ञाः 'परिचक्षते' निराकुर्वन्ति। 'यं' क्षत्रियम् 'एताभिः' व्याहृतिभिर्नाभिषिञ्चन्ति, 'एष' क्षत्रियो 'यद्' यस्मात्कारणाद् 'असर्वेण' सम्पूर्तिरहितेन 'वाचो' वाक्येन मन्त्रेणाभिषिक्तो भवति, 'तस्माद् 'अयं' स्वोचितादायुषः

पुरा 'प्रेतो ' प्रेतुं मर्तुम् 'ईश्वरः' समर्थो भवति। तस्मादायुःक्षयहेतुत्वादयं पक्षो न युक्त इति जाबालाया पुत्र 'सत्यकामो' महर्षिराह ॥

इस मत का भी पुनः अन्य अभिषेचन निराकरण करते हैं—वे उस [क्षत्रिय] को इन व्याहृतियों से अभिषिंचित नहीं करते हैं। 'यह [क्षत्रिय] क्योंकि असम्पूर्ण वाक्य रूप मन्त्र से अभिषिक्त होता है, इसलिए अपनी उचित आयु से पहले ही वह विपन्न होने में समर्थ होता है [इसलिए आयु के क्षय के कारण यह पक्ष युक्त नहीं है]—इस प्रकार जाबाल के पुत्र महर्षि सत्यकाम कहते हैं।

पूर्वपक्षं दूषयित्वा सिद्धान्तमाह—

**ईश्वरो ह सर्वमायुरैतो सर्वमाप्नोद्विजयेनेत्यु ह स्माऽऽहोद्दालक आरुणिर्य-मेताभिर्व्याहृतिभिरभिषिञ्चन्तीति, तमेतेनैवाभिषिञ्चेद्देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणा-भिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्याय भूर्भुवः स्वरिति ॥ इति।**

'यं' क्षत्रियम् एताभि' व्याहृतिभिरभिषिञ्चन्ति, स क्षत्रिय 'सर्वमायुरैतो' सर्वमायु 'प्राप्तुम्' 'ईश्वर' समर्थो भवति। ततो 'विजयेन' शत्रूनभिभूय सर्वं भोगम् 'आप्नोत्' प्राप्नोति। 'इति' एवमरुणपुत्र उद्दालक आह स्म। तस्मात् 'तं' क्षत्रियम् 'एतेन' व्याहृत्यन्तेनैव यजुषाऽभिषिञ्चेन्न केवलेन। सोऽयं व्याहृत्यन्तो मन्त्रो नित्यप्रयोगे द्रष्टव्य। काम्यप्रयोगे तु व्याहृतिविकल्प पूर्वमुक्त[1] ॥

[अतः सिद्धान्त पक्ष यह है कि] वे जिस [क्षत्रिय] को इन व्याहृतियों से अभिषिंचित करते हैं वह [क्षत्रिय] सम्पूर्ण आयु को प्राप्त करने में समर्थ होता है। उसके बाद शत्रुओं को अभिभूत करके वह सभी भोगों को प्राप्त करता है—इस प्रकार अरुण के पुत्र उद्दालक कहते हैं। इसलिए उस [क्षत्रिय] को इन व्याहृतियों को ही अन्त में रखकर निम्न यजुष् मन्त्र के द्वारा वह अभिषिंचित करे—'हे क्षत्रिय, सविता देव की प्रेरणा से [मैं अपने नहीं, अपितु] अश्विनों के बाहुओं से, पूषा देव के हाथों से, अग्नि के तेज से, सूर्य के प्रकाश से, और इन्द्र की [चक्षु आदि] इन्द्रिय-शक्ति से [शरीर के] बल के लिए, [हाथी, घोड़े आदि] धन सम्पदा के लिए, यश के लिए और भोज्यान्न के लिए मैं तुम्हें अभिषिंचित करता हूँ। 'भूर्भुवः स्वः' [इस प्रकार अन्त में जोड़ना चाहिए]।

अभिषेकाङ्ग होम विधत्ते—

**अथैतानि ह वै क्षत्रियादीजानाद् व्युत्क्रान्तानि भवन्ति, ब्रह्मक्षत्रे ऊर्गन्नाद्य-मपामोषधीनां रसो ब्रह्मवर्चसमिरापुष्टि प्रजातिं क्षत्ररूप, तवयो अन्नस्य**

---

१. द्र० इत पूर्वम्, 'भूरिति' इत्यादि, 'भूर्भुव इति'–इत्यादिश्च १२४९ पृ०।

**रस ओषधीनां क्षत्रं प्रतिष्ठा; तद्यदेवामू पुरस्तादाहुती जुहोति, तदस्मिन् ब्रह्मक्षत्रे दधाति ॥ ७ ॥ इति ।**

'अथ' अभिषेकानन्तरं, होम उच्यत इति शेषः । 'ईजानाद्' यागं कृतवतः क्षत्रियात् 'एतानि' वक्ष्यमाणानि 'व्युत्क्रान्तानि' अपगतानि भवन्ति । तानि निर्दिश्यन्ते—'ब्रह्मक्षत्रे' एतस्य समीपे वर्तमानं जातिद्वयम्, 'ऊर्क्' क्षीरादिरसः, अन्नाद्यम् चोदनादिकम् । तदेतदुभयमपामोषधीनां 'रसः' सारः । 'अपां रसः' क्षीरादिः । 'ओषधीनां रसः' अन्नाद्यम् । 'ब्रह्मवर्चसं' श्रुताध्ययनसंपत्तिः । 'इरापुष्टिः' अन्नसमृद्धिः । प्रजातिः' पुत्रोत्पादनम् । तच्च सर्वं क्षत्रियस्य स्वरूपम्, अत्यन्तमपेक्षितत्वात् । एतेषां व्युत्क्रान्तौ क्षत्रियस्य स्वरूपहानिरेव भवति । 'अथो' अपि च 'अन्नस्य' ओदनस्य, 'रसः' रसस्य क्षीरादेः, 'ओषधीनाम्' अन्नकारणानां व्रीहियवादीनां 'क्षत्रं प्रतिष्ठा' क्षत्रिय आश्रयः । तस्मादुक्तो व्यतिक्रमः क्षत्रियस्य न युक्तः । 'तत्' तथा सति 'यत्' यदि 'अमू' बुद्धिस्थे आहुती अभिषिक्तस्य क्षत्रियस्य पुरस्ताज्जुहुयात् । 'तत्' तदानीम् 'अस्मिन्' अभिषिक्ते ब्राह्मणजातिं, क्षत्रियजातिं, तदुपलक्षितमन्नादिकं च सर्वमवस्थापयति । 'ब्रह्म प्रपद्ये'' स्वाहा'–'क्षत्रं प्रपद्ये'' स्वाहा' इत्याहुतिद्वयं[1] जुहुयादिति तात्पर्यार्थः[2] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया द्वितीयाध्याये (सप्तत्रिंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (७) [२६४]

इस [अभिषेक] के अनन्तर [होम का विधान करते हैं]—वस्तुतः याग करने वाले क्षत्रिय से ये वक्ष्यमाण तत्त्व निकल जाते हैं—१. इसमें रहने वाले ब्राह्मण जाति और क्षत्रिय जाति, दोनों ही, २. [क्षीर आदि] रस, ३. भोजन योग्य [चावल आदि] अन्न, ४. ब्रह्मवर्चस [ = श्रुत और अध्ययन-सम्पत्ति], ५. अन्न समृद्धि, ६. पुत्रोत्पादन यह सब कुछ [अत्यन्त अपेक्षित तत्त्व होने से] क्षत्रियत्व के अनुरूप है [इनके निकल जाने से क्षत्रिय के स्वरूप की हानि ही होती है, और फिर, अन्न का, रस का, ओषधियों का, व्रीहि एवं जौ आदि अनाजों का क्षत्रिय ही आश्रय है। [अतः क्षत्रिय का उक्त व्युत्क्रम ठीक नहीं है]। इस प्रकार यदि इस [बुद्धिस्थ आहुति द्वय] को अभिषिक्त क्षत्रिय के सामने दे, तभी इस [अभिषिक्त क्षत्रिय] में ब्राह्मण जाति, क्षत्रिय जाति और उससे उपलक्षित अन्न आदि सभी को वह स्थापित करता है [अर्थात् 'ब्रह्म प्रपद्ये···' क्षत्रं प्रपद्ये···' आदि दो आहुतियों को देना चाहिए] ।

॥ इस प्रकार सैंतीसवें (द्वितीय) अध्याय के तृतीय खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥३॥

---

१. द्र० इतः पूर्वम् ७.४.४ (पृ० ११८५-११६६) ।

२. द्र० तै० सं० १८.१४; तै० ब्रा० १.७.८, वा० स० १०.१७, शत० ब्रा० ५.४.२–अभिषेकविवरणम् ।

## अथ चतुर्थः खण्डः

अभिषेकसाधनानि क्रमेण प्रशंसितुमादावासन्द्यादित्रयं प्रशंसति—

**अथ यदौदुम्बर्यासन्दी भवत्यौदुम्बरश्चमस उदुम्बरशाखोर्वा अन्नाद्यमुदुम्बर ऊर्जमेवास्मिंस्तदन्नाद्यं दधाति ॥ इति ।**

आसन्दी-चमस-शाखाना कारणभूतो य 'उदुम्बर' सोऽयं रसस्यान्नस्य स्वरूपभूत । तेन 'अस्मिन्' यजमाने रसमन्न च सपादयति ॥

VIII ८ [XXXVII ४] इस [अभिषेक होम] के अनन्तर [अब क्रमश: अभिषेक के साधनों की प्रशंसा करते हैं]। जो उदुम्बर की आसन्दी होती है, उदुम्बर का ही चमस और उदुम्बर की ही शाखा भी होती है, वस्तुत इन तीनों का कारणभूत जो उदुम्बर है, वह यह रस का अर्थात् भोज्य अन्न का स्वरूपभूत है। इस प्रकार वह उस [उदुम्बर] से इस [यजमान] में रस एव भोज्य अन्न को ही रखता है।

दध्यादित्रयं प्रशंसति—

**अथ यद्दधि मधु घृत भवत्यपा स ओषधीना रसोऽपामेवास्मिंस्तदोषधीना रसं दधाति ॥ इति ।**

दधिघृतयो पशुभक्षिततृणोदकजन्यत्वात् ओषधिरसत्वम् । मधुनो मधुकरानीतपुष्परस-जन्यत्वाद् ओषधिसारत्वम् ॥

इस [अभिषेक] में जो यह दधि, मधु एव घृत हैं, ये [पशुओं से भक्षित तृण और जल से उत्पन्न होने के कारण] जल और ओषधियों के रस हैं [अर्थात् मधुमक्खियों द्वारा पुष्प के रस से प्राप्त शहद ओषधियों का सार है]। इस प्रकार इन [दधि, मधु और घृत] के द्वारा इस [यजमान] में वह ओषधियों के रस को ही सपादित करता है।

आतपसहिता वृष्टिजन्या अप प्रशंसति—

**अथ यदातपवर्ष्या आपो भवन्ति, तेजश्च ह वै ब्रह्मवर्चसं चाऽऽतपवर्ष्या आपस्तेज एवास्मिंस्तद् ब्रह्मवर्चसं च दधाति[1] ॥ इति ।**

आतपसम्बन्धात् तेजस्त्वम् आहुतिफलरूपवृष्टिसम्बन्धाद् ब्रह्मवर्चसत्वम् ॥

---

१ आध्वर्यवेष्वभिषेकसाधनेषु सप्तदशविधा आप श्रूयन्ते । ता यथा सारस्वत्य, वृष्णऊर्मि, स्यन्दमाना, ओजस्वत्य, अपयत्य, अपापति, निवेष्य सूर्यत्वचस:, आतपवर्ष्या, वैशन्त्य, कूप्या, प्रुष्वा:, मधु, गोउल्व्या, पय, घृतम्, मरीच्य । 'स सारस्वतीरेव प्रथमा गृह्णाति'–इत्यारभ्य, 'सप्तदेशाप सभरति'–इत्यन्त शत० ब्रा० ५ ३ ४ ३–२२ कण्डिका द्रष्टव्या । षोडश वेति च तत्रास्ति पक्षान्तरम् । तै० स० १ ८ ११, तै० ब्रा० १ ७ ५ अपि एवमेव ।

इसके बाद उस [अभिषेक] में धूप के समय बरसे हुए मेघ के जो जल होते हैं, धूप के समय बरसे हुए मेघ के ये जल [आतप के सम्बन्ध से] तेज हैं और [आहुति के फल-स्वरूप हुई वृष्टि के सम्बन्ध से] ब्रह्मवर्चस हैं। इस प्रकार उस [आतप-वर्षी जल के अभिषेक] से वह इस [यजमान] में तेज और ब्रह्मवर्चस को ही स्थापित करता है।

श्यामतृणान्यङ्कुराणि च प्रशंसति—

अथ यच्छष्पाणि च तोक्मानि च भवन्तीराये तत्पुष्टयै रूपमथो प्रजात्या इरामेवास्मिंस्तत्पुष्टिं दधात्यथो प्रजातिम् ॥ इति ।

तृणानामङ्कुराणां च पश्वन्नत्वात् तद्भक्षणेन पशुषु पुष्टिप्रजोत्पादनयोर्हेतुत्वाद् इरा पुष्टिप्रजादिरूपत्वम् ॥

इसके बाद [उस अभिषेक में साधन] जो घास और जौ के अङ्कुर होते हैं वे पुष्टि और प्रजा एवं प्रजनन के भी लक्षक हैं [क्योंकि पशुभक्षित तृण और अङ्कुर से ही पशुओं में पुष्टि और प्रजोत्पादन देखा जाता है]। अतः इस प्रकार वह उस [अभिषेक साधन] से इस [यजमान] में पुष्टि और प्रजा को ही एवं प्रजनन भी सम्पादित करता है।

सुरां प्रशंसति—

अथ यत्सुरा भवति, क्षत्ररूपं तदथो अन्नस्य रसः क्षत्ररूपमेवास्मिंस्तद् दधात्यथो अन्नस्य रसम् ॥ इति ।

'सुराया' क्षत्रियस्यैव मदयोगात् क्षत्ररूपत्वं, व्रीह्याद्यङ्कुरजन्यत्वाद् अन्नरसत्वम् ॥

उस [अभिषेक] का साधन जो मदिरा होती है, वह क्षत्रिय का ही रूप है और वह अन्न का रस भी है। इस प्रकार उस [मदिरा] से वह इस [यजमान] में क्षत्रिय के ही रूप को और अन्न के रस को भी सम्पादित करता है।

दूर्वां प्रशंसति—

अथ यद्दूर्वा भवति, क्षत्रं वा एतदोषधीनां यद्दूर्वा, क्षत्रं राजन्यो, नितत इव हीह क्षत्रियो राष्ट्रे वसन् भवति, प्रतिष्ठित इव, निततेव दूर्वाऽवरोधै-र्भूम्यां, प्रतिष्ठितेव, तद्यद्दूर्वा भवत्योषधीनामेवास्मिंस्तत्क्षत्रं दधात्यथो प्रतिष्ठाम् ॥ इति ।

ओषधिजातौ दूर्वाया क्षत्रियजातित्वं राजसम्बन्धिक्षत्रियजातिसाम्यादवगन्तव्यम्[1]। तदेव साम्यं नितत इत्यादिना प्रपञ्च्यते। 'इह' राष्ट्रे क्षत्रियो वसन्, तेषु ग्रामेषु

---

१. 'अयं वाव माऽपूर्वीदिति यदब्रवीदधूर्वीन्मेति तस्माद् दूर्वा, धूर्वा ह वै ता दूर्वेत्या-चक्षते परोक्षम्, परोक्षकामा हि देवाः। तदेतत् क्षत्रम्। प्राणो ह्येष रसः'—इति शत० ब्रा० ७.४.२.१२।

संचरन् स्वपुरुषस्थापनाच्च स्वयं नितरां 'ततो' विस्तृतः 'इव' राज्यैश्वर्येण प्रतिष्ठित एव भवति । दूर्वा 'अवरोधैः' अधोमुखैः स्वकीयमूलैर्नितरां 'तता इव' व्याप्तैव, स्थैर्यादिकत्र प्रतिष्ठितेव भवति । 'तत्' तथा सति 'यद्' यत्र दूर्वा भवति, तदानीमोषधिसम्बन्धि-क्षत्रियजातिम् 'अस्मिन्' यजमाने सपादयति । अपि च 'प्रतिष्ठां' स्थैर्यमपि च सपादयति ॥

इसके बाद उस [अभिषेक] का साधन दूर्वा है। जो दूर्वा है वह ओषधियों में क्षत्रिय है। राजन्य क्षत्रिय है। यह क्षत्रिय अपने इस राष्ट्र में रहते हुए [उन-उन ग्रामों में अपने पुरुषों के होने से] निरन्तर सञ्चरणशील ही रहता है, और वह [राज्य की स्थिरता के कारण चलायमान न होकर] प्रतिष्ठित के समान ही होता है। दूर्वा भी अधोमुख जड़ों से निरन्तर व्याप्त रहती है और [स्थिर होने से] भूमि में प्रतिष्ठित होती है। अतः जो दूर्वा होती है उससे वह इस प्रकार इस [राजा यजमान] में ओषधि सम्बन्धी क्षत्रिय को और स्थिरता को भी सम्पादित करता है।

प्रत्येक प्रशस्य समुदायरूपेण प्रशसति—

**एतानि ह वै यान्यस्मादीजानाद् व्युत्क्रान्तानि भवन्ति, तान्येवास्मिस्तद्दधाति; तैरेवैन तत्समर्धयति ॥ इति ।**

'ईजानाद्' याग कृतवत 'अस्मात्' क्षत्रियाद्यान्येव 'एतानि' दध्युदुम्बरादीनि व्युत्क्रान्तानि भवन्ति, तान्येव 'अस्मिन्' क्षत्रिये सपाद्य, तैरेवैनं समृद्ध करोति ॥

याग करते हुए ये [उदुम्बर आदि] जो द्रव्य इस क्षत्रिय से निकल जाते हैं, उन्हीं को इस [यजमान] में वह उस [अभिषेक साधन] से सम्पादित करता है। इस प्रकार वह उन्हीं से इस [राजा] को समृद्ध करता है।

अभिषिक्तस्य क्षत्रियस्य पानपात्र विधत्ते—

**अथास्मै सुराकंसं हस्त आदधाति ॥ इति ।**

'अथ' अभिषेकानन्तरम् 'अस्मै' अस्य क्षत्रियस्य हस्ते सुरायुक्तकांस्यपात्रमादध्यात् ॥

इस [अभिषेक] के अनन्तर वह इस [क्षत्रिय] के हाथ में सुरा युक्त कांस्यपात्र [निम्न मन्त्र से] देता है।

तत्र मन्त्रमाह—

**स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः[1] ॥ इति ।**

हे सोम त्वत्समानसुराद्रव्य 'स्वादिष्ठया' अतिशयेन स्वादुभूतया, 'मदिष्ठया' अतिशयेन मदहेतुभूतया त्वदीयया 'धारया' 'पवस्व' यजमान शोधय । हे द्रव्यविशेष, 'इन्द्राय पातवे' इन्द्रस्य पानार्थं 'सुत.' अभिषुतः, सपादितोऽसि ॥

---

१. ऋ० ९.१.१ ।

हे सोम [ = तुम्हारे समान यह सुरा द्रव्य] अत्यन्त स्वादयुक्त और अत्यन्त मदकारक अपनी धारा से तुम यजमान को पवित्र करो। हे द्रव्य विशेष, इन्द्र के पान के लिए तुम अभिषुत हुए हो।

मन्त्रान्तरेण शान्तिवाचनं विधत्ते—

**इत्यादाय शान्तिं वाचयति ॥ इति ।**

'इति' अनेन पूर्वोक्तमन्त्रेण हस्ते सुरायुक्तं कांस्यपात्रमादाय, वक्ष्यमाणमन्त्रेण शान्तिं वाचयेत् ॥

इस [पूर्वोक्त मन्त्र] से [हाथ में कांस्य पात्र] लेकर [निम्न मन्त्र से] शान्तिवाचन करता है।

तं मन्त्रं दर्शयति—

**नाना हि वां देवहितं सदस्कृतं, मा संसृक्षाथां परमे व्योमनि ।**
**सुरा त्वमसि शुष्मिणी, सोम एष राजा मैनं हिंसिष्टं स्वां योनिमाविशन्ताविति ॥ इति ।**

हे सुरासोमौ वां युवयोः 'देवहितं' देवैः संपादितं 'सदः' स्थानं 'नाना कृतं' पृथगेव निष्पादितम्। अतः 'परमे व्योमनि' उत्कृष्टे उदराकाशे 'मा संसृक्षाथां' संसर्गं मा कुरुतम्। संसर्गे हि सोमस्य बाधा स्यात्। हे सुरे, त्वं 'शुष्मिणी' बलवती सुराऽसि। 'एष' तु 'सोमो राजा'। तौ बलवन्तौ युवामुभौ 'स्वां' योनिमाविशन्तौ उदरमध्ये विभागेन स्वं स्वं स्थानं प्रविशन्तौ 'एनं' पातारं मा 'हिंसिष्टं' हिंसितमुपद्रुतं मा कुरुतम्। 'इति' एवं मन्त्रं क्षत्रियस्याग्रे कथयित्वा, स वाचयेत् ॥

(हे सुरा और सोम) तुम दोनों के लिए देवताओं द्वारा [उदर में] अलग-अलग स्थान दिया गया है। अतः उत्कृष्ट [उदररूप] आकाश में आपस में संसर्ग मत करो [क्योंकि संसर्ग से सोम को बाधा होती है] हे सुरा ! तुम बलवती सुरा हो और यह सोम राजा हैं। तुम दोनों [बलवान्] अपने-अपने [उदर के मध्य स्थित] स्थान में प्रविष्ट होओ। इस [पीने वाले] को हिंसा मत करो।"[1]—इस [मन्त्र] को [क्षत्रिय के सामने कहकर शान्तिपाठ करे]।

तस्य मन्त्रस्य तात्पर्यं दर्शयति—

**सोमपीथस्य चैषा सुरापीथस्य च व्यावृत्तिः ॥ इति ।**

'एषा' मन्त्रप्रतिपाद्या सोमपानसुरापानयोः परस्परव्यावृत्तिः। मा संसृक्षाथामिति संसर्गस्य निषिद्धत्वात् ॥

---

१. द्र० तै० ब्रा० १.४.२.२। आश्व० श्रौ० ३.९.४। मान० १.९.७। शत० १२.७.३.१४। कात्या० श्रौ० १९.२.२१।

इस [मन्त्र प्रतिपादित] सोम पान और सुरा पान में परस्पर भिन्नता है [क्योंकि दोनों के परस्पर संसर्ग का इसमें निषेध किया गया है] ।

पीतशेषस्य दानं विधत्ते—

**पीत्वा यं राति मन्येत, तस्मा एनां प्रयच्छेत्, तद्धि मित्रस्य रूपं, मित्र एवैनां तदन्ततः प्रतिष्ठापयति, तथा हि मित्रे प्रतितिष्ठति ॥** इति ।

कांस्यपात्रगतां सुरां क्षत्रियः स्वयं पीत्वा, 'यं' पुरुषं 'रातिं' स्वस्य धनदातारं मित्रं मन्येत, 'तस्मै' पुरुषाय 'एनाम्' अवशिष्टां सुरां प्रयच्छेत् । 'तत्' एकपात्रगतद्रव्य-पानं मित्रस्य रूपम् । परस्परं मित्रयोः सहभोजनदर्शनात् । 'तत्' तेन दानेन 'अन्ततः' पानान्ते मित्र एव 'एनां' सुरां प्रतिष्ठापयति । 'तथा हि' तथैव कुर्वन् स्वयमपि मित्रे प्रतिष्ठितो भवति ॥

[कांस्यपात्रगत सुरा का क्षत्रिय स्वयं] पान करके जिस धन दाताको अपना मित्र, माने, उस [पुरुष] के लिए इस [अवशिष्ट सुरा] को देना चाहिए; क्योंकि वह [एकपात्रगत द्रव्य का पान] मित्रता का लक्षक है [क्योंकि मित्रों का परस्पर साथ में भोजन करना देखा जाता है] । अतः उस [दान] से [पान के] अन्त में वह मित्र में ही इस सुरा को प्रतिष्ठित करता है । इस प्रकार करते हुए वह स्वयं भी मित्र में प्रतिष्ठित होता है ।

वेदनं प्रशंसति—

**प्रतितिष्ठति य एवं वेद ॥ ८ ॥** इति ।

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टम-पञ्चिकाया द्वितीयाध्याये (सप्तत्रिंशाध्याये) चतुर्थः खण्डः ॥ ४ ॥ (८) [२६५]

इस प्रकार जो जानता है वह स्वयं प्रतिष्ठित होता है ।

॥ इस प्रकार सैंतीसवें (द्वितीय) अध्याय के चतुर्थ खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥४॥

## अथ पञ्चमः खण्डः

आसन्द्या अवरोहं विधत्ते—

**अथोदुम्बरशाखामभि प्रत्यवरोहत्यूर्ग्वा अन्नाद्यमुदुम्बर ऊर्जमेव तदन्नाद्य-मभि प्रत्यवरोहति ॥** इति ।

'अथ' अभिषेकपानानन्तरं, भूमावुदुम्बरशाखामवस्थाप्य, ताम् 'अभि' लक्ष्य प्रत्यवरो-हेत् । योऽयमुदुम्बरः स 'ऊर्वे' रसरूप एव, तत्फले माधुर्यसद्भावात् । तथाऽन्नाद्य-स्वरूपश्च, तद्भक्षणेनोदरपूरणात् । तस्मादुदुम्बरशाखायां प्रत्यवरोहेणोर्जमन्नाद्यं चाभिलक्ष्यावरोहति ॥

VIII.९ [XXXVII.५] इस [अभिषेक पान] के अनन्तर भूमि में उदुम्बर की शाखा को [स्थापित कर उसे] लक्ष्य करके [वह आसन्दी से नीचे] उतरता है। यह उदुम्बर [मीठा होने से] रस स्वरूप ही है, और [पेट भरने से] वह भोज्य अन्नस्वरूप है। वस्तुत: वह इस प्रकार उससे रस और भोज्यान्न को ही लक्ष्य करके उतरता है।

तत्र प्रकार विधत्ते—

उपर्येवाऽऽसीनो भूमौ पादौ प्रतिष्ठाप्य प्रत्यवरोहमाह ॥ इति ।

आसन्द्या उपर्येव स्वयमुपविष्ट:, प्रथमत पादौ भूमाववस्थाप्य प्रत्यवरोहसाधनभूत मन्त्र पठेत् ॥

[आसन्दी के] ऊपर बैठकर [प्रथमत] पैरों को भूमि पर रखकर उतरने का मन्त्र पढ़ता है—

त मन्त्र दर्शयति—

प्रतितिष्ठामि द्यावापृथिव्यो, प्रतितिष्ठामि प्राणापानयो, प्रतितिष्ठाम्यहोरात्रयो, प्रतितिष्ठाम्यन्नपानयो, प्रति ब्रह्मन्, प्रति क्षत्रे, प्रत्येषु त्रिषु लोकेषु तिष्ठामि ॥ इति ।

भूमौ यदवरोहण, तद्द्यावापृथिव्यादिषु सर्वेष्ववस्थानमिति मन्त्रार्थ. ॥

[भूमि में उतरने से] मैं द्यु और पृथ्वी में प्रतिष्ठित होता हूँ। मैं प्राणवायु और अपान वायु में प्रतिष्ठित होता हूँ। मैं रात और दिन में प्रतिष्ठित होता हूँ। मैं भोजन एवं पेय में प्रतिष्ठित होता हूँ। मैं ब्राह्मण जाति में, क्षत्रिय जाति में और इन तीनों लोकों में प्रतिष्ठित होता हूँ।

अनेन मन्त्रेण क्रियमाण प्रत्यवरोह प्रशसति —

अन्तत. सर्वेणाऽऽत्मना प्रतितिष्ठति, सर्वस्मिन् ह वा एतस्मिन् प्रतितिष्ठत्युत्तरोत्तरिणीं ह श्रियमश्नुते,ऽश्नुते ह प्रजानामैश्वर्यमाधिपत्य, य एवमेतेन पुनरभिषेकेणाभिषिक्तः क्षत्रिय. प्रत्यवरोहति ॥ इति ।

'य' क्षत्रिय उक्ताभिषेकादूर्ध्वमनेन मन्त्रेण प्रत्यवरोहति, स पुरुष 'अन्तत.' अभिषेकस्यान्ते धनित्वादिना सर्वेण रूपेण प्रतिष्ठितो भवति। 'एतस्मिन्' सर्वस्मिन् द्यावापृथिव्यादिके प्रतिष्ठितो भवति। उत्तरेत्यादि[१] पूर्ववद् योजनीयम् ॥

वह इस [अभिषेक] के अन्त में सर्वात्मना प्रतिष्ठित होता है। वह इन सभी में प्रतिष्ठित होता है और उत्तरोत्तर बढ़ने वाली समृद्धि को प्राप्त करता है और प्रजाओं के ऐश्वर्य [नियामकत्व] को और उन पर आधिपत्य [=पालन] प्राप्त करता है, जो

१. द्र० इत पूर्वम्, पृ० १२४६ ।

क्षत्रिय इस प्रकार इस पुनः अभिषेक के द्वारा अभिषिक्त होकर इस [मन्त्र] से प्रत्यवरोहण करता है।

प्रत्यवरोहादूर्ध्वं कर्तव्यं विधत्ते—

**एतेन प्रत्यवरोहेण प्रत्यवरुह्योपस्थं कृत्वा, प्राङासीनो नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मण इति त्रिष्कृत्वो ब्रह्मणे नमस्कृत्य, वरं ददामि जित्या अभिजित्यै विजित्यै संजित्या इति वाचं विसृजते ॥ इति।**

प्रत्यवरुह्येति दीर्घश्छान्दसः। 'एतेन' पूर्वोक्तेन प्रत्यवरोहमन्त्रेण 'प्रत्यवरुह्य' भूमौ 'उपस्थम्' आसनविशेषं[1] कृत्वा, प्राङ्मुख आसीनो नमस्कारमन्त्रं त्रिः पठित्वा, वरमित्यादिमन्त्रेण वाचं विसृजेत्। वाग्विसर्गो लौकिकव्यवहारः। 'जितिः' जयमात्रम्। अमितः सर्वेषु देवेषु जितिः 'अभिजितिः'। प्रबलदुर्बलशत्रूणां तारतम्येन विविधो जयो 'विजितिः'। पुनः शत्रुत्वराहित्याय सम्यग्जयः 'संजितिः'। एतत्सिद्ध्यर्थं ब्राह्मणाय 'वरं' गां ददामि[2]॥

इस [पूर्वोक्त] प्रत्यवरोह [उतरने के] मन्त्र से भूमि पर उतरकर वह पूर्व की ओर मुख करके, आसन विशेष करके, नमो ब्रह्मणे (ब्राह्मण के लिए नमस्कार है), नमो ब्रह्मणे (ब्राह्मण के लिए नमस्कार है), नमो ब्रह्मणे (ब्राह्मण के लिए नमस्कार है)—इस प्रकार तीन बार पढ़कर ब्राह्मण को नमस्कार करके तब वह 'मैं जय के लिए, [सभी देवों पर] विजय के लिए, [प्रबल एवं दुर्बल विविध प्रकार के शत्रुओं पर] विजय के लिए और [पुनः शत्रुविहीनता के लिए] सम्यक् रूप से जय के लिए ब्राह्मण को गाय देता हूँ।'— इस मन्त्र से वाणी का विसर्जन [=मौन का छोड़ना] करता है।

नमस्कारमन्त्रं प्रशंसति—

**स यन्नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मण इति त्रिष्कृत्वो ब्रह्मणे नमस्करोति, ब्रह्मण एव तत्क्षत्रं वशमेति, तद्यत्र वै ब्रह्मणः क्षत्रं वशमेति, तद्राष्ट्रं समृद्धं, तद्वीरवदाहास्मिन् वीरो जायते ॥ इति।**

१. 'समस्तजङ्घोरुरत्निभ्यां जानुभ्यां चोपस्थं कृत्वा यथा शकुनिरुत्पतिष्यन्'—इति आश्व० श्रौ० ६.५.४।

२. 'वरो दक्षिणा'—इति तै० सं० १.८.१। तै० आ० २ १६ ३। 'वरो दक्षिणा वरो हि राज्यम्'—इति तै० ब्रा० १.६.१५। 'पशुर्दक्षिणा धेनुर्वरो वा'—इति कात्या० श्रौ० ६.७.२९। 'आचार्याय वरं ददाति, गौर्ब्राह्मणस्य, ग्रामो राजन्यस्य, अश्वो वैश्यस्य'—इति पार० गृ० १.१०.१४-१६ (द्र० मत्संपादित पार० गृ०, पृ० १०० टि० १)। 'अश्वं निविदा शस्त्रे·······'वरमेव ददाति'—इति द्र० इह पूर्वम् भाग १, पृ० ४१४।

'स' क्षत्रियो मन्त्रेण नमस्करोतीति यदस्ति, तेन 'ब्रह्मण' 'एव' ब्राह्मणस्यैव क्षत्रिय जातिर्वशमेति। 'तत्' तेन ब्राह्मणाधीनत्वेन तद्राष्ट्रं सर्वसमृद्धं वीरपुरुषोपेतं च भवति। 'अस्मिन्' क्षत्रिये 'वीर' पुत्र आजायते ॥

इस प्रकार यह [क्षत्रिय] 'नमो ब्रह्मणे, नमो ब्रह्मणे, नमो ब्रह्मणे' (ब्राह्मण के लिए नमस्कार है, ब्राह्मण के लिए नमस्कार है, ब्राह्मण के लिए नमस्कार है) आदि से तीन बार जो ब्राह्मण को नमस्कार करता है तो उस [नमस्कार] से ब्राह्मण के वश में क्षत्रिय हो जाता है। इस प्रकार जब ब्राह्मण की अधीनता में क्षत्रिय हो जाता है तो वह राष्ट्र सभी धन सम्पत्ति से समृद्ध होता है और वह वीर पुरुषों से युक्त होता है तथा इस [क्षत्रिय] में वीर पुरुष उत्पन्न होते हैं।

वरदानमन्त्रं प्रशंसति—

अथ यद्वरं ददामि, जित्या अभिजित्यै विजित्यै संजित्या इति वाचं विसृजते, एतद्वै वाचो जितं यद्ददामीत्याह, यदेव वाचो जिता३म्, तन्म इदमनु कर्म संतिष्ठाता इति ॥ इति।

वरमित्यादिमन्त्रेण वाचं विसृजत इति यदस्ति, तस्मिन् मन्त्रस्वरूपे ददामीति यदाह, एतदेव वाक्यसर्वाधिजितं जयः। यदेव वाचो जितमस्ति[२]। [पूजार्थं जितामिति दीर्घः]। 'तत्' वाग्जयरूपं 'मे' मदीयम् 'इदं' 'कर्म' अनुसृत्य अनुष्ठानं 'संतिष्ठातै' समाप्तं भवति, सम्यगवतिष्ठतामिति तस्य मन्त्रस्याभिप्रायः ॥

और, जो यह मन्त्र है कि 'मैं जय के लिए, [सभी देवों पर] विजय के लिए, [प्रबल एवं दुर्बल विविध प्रकार के शत्रुओं पर] विजय के लिए और [पुनः शत्रुविहीनता के लिए] सम्यक् रूप से जय के लिए ब्राह्मण को गाय देता हूँ'—'इससे वाणी का विसर्जन करता है'—इस मन्त्र में जो यह कहता है कि 'मैं देता हूँ' यही वाणी का जय है। जो वाणी की जय होती है 'वाक्-जय-रूप मेरा यह कर्म सम्यक् रूप से समाप्त होगा'—यह [उस मन्त्र का अभिप्राय है]।

समिदाधानं विधत्ते—

विसृज्य वाचमुपोत्थायाऽऽहवनीये समिधमभ्यादधाति ॥ इति।

उक्तेन प्रकारेण वाङ्नियमं परित्यज्य, सदस आसनादुत्थितो वक्ष्यमाणमन्त्रेणाऽऽहवनीये समिधं प्रक्षिपेत् ॥

१ that Kingdom is prosperous, rich in heroes, in it a heir is born (or, as Sāyan, to him) इति कीथमहोदयः।

२ 'जिता३'—प्लुत इत्यपक्षितम्। पूजार्था प्लुतिरेवोचिता, उक्तञ्च तथा बहुशैव—द्र० इत परम्, पृ० १२६२।

इस प्रकार वाणी के नियमन का परित्याग करके [उस आसन से] उठकर [निम्न मन्त्र से] वह आहवनीय अग्नि में समिधा का आधान करता है।

त मन्त्र दर्शयति—

समिदसि सम्वेड्क्ष्वेन्द्रियेण वीर्येण स्वाहेति ॥ इति ।

हे काष्ठ, त्व 'समिदसि' समिन्धनसाधनमसि । इङ्खति धातोर्लोण्मध्यमपुरुषैकवचनम् 'एङ्क्ष्व' इति । स च गत्यर्थः[1] । उ' छान्दोऽनर्थः । इन्द्रियपाटवेन, शरीरसामर्थ्येन च 'सम्वेड्क्ष्व' सयोजय, त्वदर्थं स्वाहुतमिदमस्तु ॥

हे काष्ठ ! तुम सम्यक् इन्धन के साधन हो। इन्द्रिय की पटुता और शरीर की सामर्थ्य के द्वारा सयोजन करो,[2] तुम्हारे लिए स्वाहा हो।

मन्त्रस्य तात्पर्यं दर्शयति—

इन्द्रियेणैव तद्वीर्येणाऽऽत्मानमन्तत समर्धयति ॥ इति ।

'तत्' तेन समिदाधानमन्त्रेणाऽऽत्मानमभिषेककमन्ते वीर्येन्द्रियाभ्या समृद्ध करोति ॥

इस प्रकार उस [समिदाधानमन्त्र] से [अभिषेक के] अन्त में अपने को वीर्य और इन्द्रिय से ही समृद्ध करता है।

समिदाधानादूर्ध्वं कर्तव्य विधत्ते—

आधाय समिध त्रीणि पदानि प्राङुदङ्ङभ्युत्क्रामति ॥ इति ।

समिध प्रक्षिप्य प्राङ्मुख उदङ्मुखो वा पदत्रयमभित उत्क्रामेत् । यद्वा, प्राङुदङिति अन्तरालवर्तिनीमैशानीं दिशमभिलक्ष्योत्क्रामेत् ॥

समिधा का आधान करके [निम्न मन्त्र से] वह पूर्व में अथवा उत्तर दिशा में तीन पग चलता है [अथवा पूर्व और उत्तर के मध्य की ऐशानी दिशा की ओर चलता है]।

तत्र मन्त्र दर्शयति—

क्लृप्तिरसि दिशा मयि देवेभ्य. कल्पत ।
कल्पता मे योगक्षेमोऽभय मेऽस्तु ॥ इति ।

---

१ उख उखि '' इख इखि'' 'रिगि लिगि गत्यर्था'–इति धा० पा० भ्वा० १२८–१५५ ।

२ For सम्वेड्क्ष्व Sayana has इन्द्रियापाटवेन शरीरसामर्थ्येन च सयोजय, Aufrecht suggests सम् मेऽस्त्व as the original, with इङ्क्ष्व for इन्त्स्व like अवाक्षम् for अवात्सम् in 1 28 above (Cf Weber Ind Stud ix 245) Bohtlingk (BkSGW 15 Dec 1900, p 419) argues against 'इङ्क्ष्व' but accepts 'मा' in place of 'उ' इति कीथमहोदयः ।

दिग्विशेषमभिलक्ष्य क्रियमाण हे पदोत्क्रमण त्वं दिशां 'क्लृप्तिः' कल्पनं स्वाधीनत्व-सम्पादकमसि । अतो मयि सेवार्थं 'कल्पत' कल्पनं सामर्थ्यं कुरु । बहुवचनं छान्दसम् । 'मे' मम 'योगक्षेम' योगसहितं क्षेमं 'कल्पतां' सम्पद्यताम् । तथैव 'मे' ममाभयं भयराहित्यमस्तु ॥

'दिग्विशेष को लक्ष्य करके किये गये हे पाद प्रक्षेप, तुम दिशाओं की स्वाधीनता के सम्पादक हो। अतः मुझे सेवा के लिए समर्थ करो। मेरा योग के सहित क्षेम (रक्षण) करो और मुझे अभय प्रदान करो।'

दिगुपस्थानं विधत्ते—

इत्यपराजिता दिशमुपतिष्ठते, जितस्यैवापुनः पराजयाय, तत्तदितीँ३ ॥ ९ ॥ इति ।

'इति' अनेन पूर्वोक्तेन क्लृप्तिरसीत्यादिमन्त्रेण पराजयरहितां प्राचीमुदीचीं वा दिशमुपतिष्ठते । अथवा दिशमैशानीमपराजितामुपतिष्ठते । पूर्वं जितस्यैव दिग्विशेषस्य, पुनः पराजयराहित्यार्थमुपस्थानम् । लोकाश्च तदुपस्थानमिति सर्वे पूजयन्ति । पूजार्थेयं सानुनासिकप्लुतिः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया द्वितीयाध्याये (सप्तत्रिंशाध्याये) पञ्चमः खण्डः ॥ ५ ॥ ( १ ) [ २६६ ]

इस प्रकार [पूर्वोक्त] मन्त्र से वह पराजय से रहित प्राची अथवा उदीची दिक् का उपस्थान करता है [अथवा अपराजित ऐशानी दिक् का उपस्थान करता है] पहले जीती हुई दिक् विशेष का पुनः पराजयराहित्य के लिए [उपस्थान होता है, और लोक में] 'वही, वही' [उपस्थान] आचरणीय है।

॥ इस प्रकार सैंतीसवें (द्वितीय) अध्याय के पाँचवें खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥५॥

## अथ षष्ठः खण्डः

अपराजितां दिशमुपतिष्ठत इति यदुक्तं, तत्रैशान्या दिशो मुख्यापराजितत्वं दर्शयति—

देवासुरा वा एषु लोकेषु समयेतिरे, त एतस्यां प्राच्यां दिशि येतिरे, तांस्ततोऽसुरा अजयंस्ते दक्षिणस्यां दिशि येतिरे, तांस्ततोऽसुरा अजयंस्ते प्रतीच्यां दिशि येतिरे, तांस्ततोऽसुरा अजयंस्त उदीच्यां दिशि येतिरे, तांस्ततोऽसुरा अजयंस्त एतस्मिन्नवान्तरदेशे येतिरे, य एष प्राङुदङ् ते ह ततो जिग्यु ॥ इति ।

पुरा कदाचिद्देवाश्चासुराश्च 'एषु' भूरादिषु लोकेषु निमित्तेषु 'समेतिरे' युद्धं कृतवन्त । तत्र प्राच्यादिषु चतसृषु दिक्षु यत्र यत्र युद्धं कृतं, तत्र तत्रासुराणामेव विजयोऽभूत् । 'य एष प्राङुदङ्' दिग्द्वयस्पर्शी कश्चिदवान्तरदेश ऐशानात्मक, एतस्मिन् देशे यदा युद्धं कृतं, तदा 'ते' देवा 'तत' देशाभिमित्तभूतात् 'जिग्यु' जयं प्राप्ता । तस्मादियमैशानी दिगपराजिता पूर्वोक्तमन्त्रेणोपस्थेया ॥

१।। १० [xxxvii। ६] [प्राचीनकाल में किसी समय] देवों और असुरों ने [भू आदि] लोकों के निमित्त युद्ध किया। उन्होंने पूर्व की दिशा में युद्ध किया, असुरों ने उनको वहाँ जीत लिया। उन्होंने दक्षिण की दिशा में युद्ध किया। असुरों ने उनको वहाँ जीत लिया। उन्होंने पश्चिम दिशा में युद्ध किया। असुरों ने उनको वहाँ जीत लिया। उन्होंने उत्तर दिशा में युद्ध किया। असुरों ने उनको वहाँ जीत लिया। उन्होंने तब इस अवान्तर [मध्यवर्ती] दिशा में युद्ध किया। इस प्रकार जब उन्होंने इस प्राची और उदीची के मध्य की अवान्तर ऐशान नामक दिशा में युद्ध किया तब उन (देवों) ने विजय प्राप्त की। इसलिए यह ऐशानी दिक् पराजयरहित है।

समेतमभिषिक्तक्षत्रियवृत्तान्तं तावदवस्थाप्य, तत्प्रसङ्गागतं पुरुषान्तरवृत्तान्तं दर्शयति—

**स यदि क्षत्रिय उपधावेत् सेनयो समायत्योस्तथा मे कुरु, यथाऽहमिमां सेनां जयानीति, स यदि तथेति ब्रूयाद्, वनस्पते वीड्वङ्गो हि भूया इत्यस्य रथोपस्थमभिमृश्याथैनं ब्रूयात् ॥ इति ।**

कस्मिंश्चिद्देशे युद्धार्थमुभे सेने परस्परं समागच्छत । तयो समागच्छन्त्यो सेनयो' मध्ये य कोऽपि 'क्षत्रिय' विजयार्थी सन् तम् अभिषिक्तमैशानीदिगुपस्थानमुक्तं राजानं यदि उपधावेत्' शरणं गच्छेत् । केनाभिप्रायेणेति ? सोऽभिधीयते हेऽभिषिक्त क्षत्रिय यथाऽहमिमां शत्रुसेनां जयानि, तथा मेऽनुग्रहं कुर्विति तदभिप्राय । तदानीं 'स' अभिषिक्त क्षत्रिय यदि 'तथेति'–अङ्गीकारं ब्रूयात् । तदानीं 'वनस्पते'[१] इत्यृचा जयार्थिन पुरुषस्य रथोर्ध्वभागमभिमृश्यानन्तरम् 'एन' जयार्थिनं प्रति वक्ष्यमाणं मन्त्रं ब्रूयात् ॥

[युद्ध के लिए सन्नद्ध] दो सेनाओं के मध्य यदि कोई क्षत्रिय पुरुष विजय के लिए उस [अभिषिक्त हुए और ऐशानी दिक् का उपस्थान किए हुए राजा] के शरण में [इस अभिप्राय से] आता है कि हे अभिषिक्त क्षत्रिय, जैसे मैं इस शत्रु सेना को जीतूँ, वैसा मेरे ऊपर अनुग्रह करो।' तब वह [अभिषिक्त क्षत्रिय] यदि 'वैसा ही हो'—इस प्रकार [अङ्गीकार करके] कहे तो उसके रथ के ऊर्ध्व भाग को 'वनस्पते वीड्वङ्ग' आदि (हे ओषधि, तुम शक्तिशाली शाखाओं वाली होओ) मन्त्र से स्पर्श करे और तब इस जयार्थी के प्रति निम्न मन्त्र कहे—

१ ऋ० ६ ४७ २६ । द्र० आश्व० गृ० २ ६ ।

तं मन्त्रं दर्शयति—

आतिष्ठस्वैतां ते दिशमभिमुखः सन्नद्धो रथोऽभिप्रवर्तताम्, स उदङ् स प्रत्यङ् स दक्षिणा, स प्राङ् सोऽभ्यमित्रमिति ॥ इति ।

हे जयार्थिन् 'एताम्' ऐशानीं दिशम् 'आतिष्ठस्व' प्राप्नुहि । ते रथ 'एताम्' ऐशानीं दिशं प्रत्यभिमुखः 'सन्नद्धः' सर्वायुधादिसन्नाहोपेतोऽभितः प्रवर्तताम् । ततः 'स' रथ उदङ्मुखः प्रवर्तताम् । ततः 'स' रथः प्रत्यङ्मुखः प्रवर्तताम् । ततः 'स' रथो दक्षिणामुखः प्रवर्तताम् । ततः 'स' रथः प्राङ्मुखः प्रवर्तताम् । तत ऊर्ध्वम् 'अभ्यमित्रं' त्वदीयशत्रुं प्रति प्रवर्तताम् ॥

'हे जयार्थी, तुम इस [ऐशानी दिक्] को प्राप्त करो । तुम्हारा रथ इस [ऐशानी दिक्] के प्रति अभिमुख होकर सभी आयुध और सेनाओं से युक्त होकर चारों ओर प्रवर्तित होए । उसके बाद वह [रथ] उत्तर की ओर चले, उसके बाद वह [रथ] पश्चिम की ओर चले, उसके बाद वह [रथ] दक्षिण की ओर चले, उसके बाद वह [रथ] पूर्व की ओर बढ़े । तब वह रथ तुम्हारे शत्रुओं की ओर बढ़े ।'

जयार्थिनं प्रत्येतन्मन्त्रकथनादूर्ध्वमभिषिक्तस्य कर्तव्यं दर्शयति—

अभीवर्तेन हविषेत्येवैनमावर्तयेदथैनमन्वीक्षेताप्रतिरथेन शासेन सौपर्णेनेति ॥ इति ।

'अभिवर्तेन' इत्यादिना सूक्तेन[1] 'एनं' जयार्थिनमुक्तक्रमेण दिक्ष्वावर्तयेत् । 'अथ' अनन्तरमावर्तमानमेनं सूक्तत्रयेणान्वीक्षेत । 'आशुः शिशानः'[2] इत्यप्रतिरथं सूक्तम् । 'शास इत्था'[3] इति शाससूक्तम् । 'प्रधारयन्तु मधुनः' इति सौपर्णसूक्तम्[4] ॥

'अभीवर्तेन हविषा' इत्यादि सूक्त से इस [जयार्थी] को [उक्त क्रम से] दिशाओं में अभितः प्रवर्तित करे । इसके बाद इस [दिशाओं में प्रवर्तित होने वाले जयार्थी] को ['आशु शिशान' आदि] अप्रतिरथ सूक्त से, ['शास इत्था' आदि] शास सूक्त से और ['प्रधारयन्तु मधुनः' आदि] सौपर्ण[5] सूक्त से दृष्टिपात करे ।

अभिषिक्तस्य कृत्यमुक्त्वा जयार्थिनः कृत्यं दर्शयति—

जयति ह तां सेनाम् ॥ इति ।

[इस प्रकार] वह [जयार्थी] उस सेना को जीत लेता है ।

---

१ ऋ० १० १७४ । द्र० आश्व० गृ० ३ ११ ।

२ ऋ० १० १०३ । द्र० आश्व० गृ० ३ १२ ।

३ ऋ० १० १५२ । द्र० आश्व० गृ० ३ १२ ।

४ आश्व० गृ० ३ १२ १४, द्र० इत पूर्वम् पृ० १०२२ ।

५ तु० कौ० ब्रा० १८ ४, ऋ० खिल १ ३ ।

सेनाद्वययुद्धे जयार्थं प्रयोगमुक्त्वा पुरुषद्वययुद्धेऽपि तमाह—

**यद्यु वा एनमुपधावेत् सङ्ग्रामं संयतिष्यमाणस्तथा मे कुरु यथाऽहमिमं सङ्ग्रामं सञ्जयानीत्येतस्यामेवैनं दिशि यातयेज्जयति ह तं सङ्ग्रामम् ॥** इति ।

यः कोऽपि पुमान् 'संयतिष्यमाण' युद्धं करिष्यन्स्तं सङ्ग्रामं जेतुम् 'एनम्' अभिषिक्तं 'यदि उपधावेत्' । तथा मे कुर्विति पूर्ववत्[1] ॥

[दो पुरुषों के मध्य द्वन्द्व] युद्ध के लिए सन्नद्ध होते हुए सग्राम को जीतने के लिए यदि वह पुन. इस [अभिषिक्त क्षत्रिय] के पास [इस अभिप्राय से] आए कि 'हे अभिषिक्त क्षत्रिय, जिस प्रकार मैं इस सग्राम को सम्यक रूप से जीत सकूँ, वैसा मेरे ऊपर अनुग्रह करो।' तब उसे वह इस दिशा में ले जाए। इस प्रकार वह उस सेना को जीत लेता है।

राष्ट्राद् भ्रष्टस्य पुनरपि राष्ट्रप्राप्त्यर्थं प्रयोगं दर्शयति—

**यद्यु वा एनमुपधावेद् राष्ट्रादपरुध्यमानस्तथा मे कुरु यथाऽहमिदं राष्ट्रं पुनरवगच्छानीत्येतामेवैनं दिशमुपनिष्क्रमयेत्तथा ह राष्ट्रं पुनरवगच्छति ॥** इति ।

यथा वै सेनयोर्युद्धे पुरुषयोर्युद्धे चाभिषिक्तेनोदीचीं दिशं प्रति प्रस्थापितस्य जयः तथैव राष्ट्रभ्रष्टोऽप्यभिषिक्तेनैशानीं दिशं प्रस्थापितो राष्ट्रं पुनः प्राप्नोति ॥

राष्ट्र से च्युत होकर यदि वह पुन इस [अभिषिक्त क्षत्रिय] के पास यह कहते हुए आये कि 'हे अभिषिक्त क्षत्रिय, जिस प्रकार मैं इस राष्ट्र को पुन प्राप्त कर सकूँ, वैसा मेरे ऊपर अनुग्रह करो।' तब उसे वह इस [ऐशानी] दिक् की ओर निष्क्रमण के लिए कहे। इस प्रकार [प्रस्थान से] वह पुन इस राष्ट्र को प्राप्त करता है।

इत्थं प्रासङ्गिकं प्रयोगत्रयमुक्त्वा प्रकृतमेवाभिषिक्तविषयं प्रयोगमाह—

**उपस्थायामित्राणां व्यपनुत्तिं ब्रुवन् गृहानभ्येत्यप प्राच इन्द्र विश्वाँ अमित्रानिति सर्वतो ह्यस्मा अनमित्रमभयं भवत्युत्तरोत्तरिणीं ह श्रियमश्नुतेऽश्नुते ह प्रजानामैश्वर्यमाधिपत्यं, य एवमेताममित्राणां व्यपनुत्तिं ब्रुवन् गृहानभ्येति ॥** इति ।

पूर्वत्र[2] 'क्षत्रस्य योनिरसि'त्यादिमन्त्रेणाभिषिक्तस्य पदत्रयाभ्युत्क्रमेणैशानीदिगुपस्थानं चाभिहितम् । तां दिशमुपस्थाय, अनन्तरम् 'अमित्राणां' शत्रूणां 'व्यपनुत्तिं' विशेषेणा-

१ द्र० इतः पूर्वम्, पृ० १२६३ । २ द्र० इतः पूर्वम्, पृ० १२६१ ।

पनोदनहेतुम् अत एव व्यपनुत्त्यभिधानाम्, 'अप प्राच' इत्यादिकामृच[1] ब्रुवन् स्वगृहानभिगच्छेत् । तस्यामृचि द्वितीयपादे नुदस्वेति श्रवणादियमृगभिधाना व्यपनुत्तिः । 'अस्मै' एव गृहमागच्छतोऽस्य यजमानस्य 'सर्वतः' सर्वासु दिक्षु शत्रुराहित्यलक्षणमभयं भवति । न केवलं भयराहित्यं किंतूत्तरोत्तराभिवृद्धिसंपत्प्राप्त्युपायादिकमपि । यथोक्तमन्त्रोच्चारणेन यो गृहानभ्यागतो भवति ।

['क्लृप्तिरसि' आदि मन्त्र से प्रथमतः अभिषिक्त क्षत्रिय का जो ऐशानी दिक् की ओर तीन पग चलना और उस दिशा का उपस्थान कहा गया है उसी दिशा का अब] उपस्थान करके शत्रुओं के निष्क्रमण के लिए 'आप प्राच' (हे इन्द्र ! मेरे सभी शत्रुओं को पूर्व की ओर से निकाल दो) आदि मन्त्र पढ़ते हुए वह अपने गृह को जाता है। [इस ऋचा के द्वितीयपाद में 'नुदस्व' पद होने से यह शत्रुओं को निकालने के लिए युक्तियुक्त है] । इस प्रकार [इसके गृह पर आने पर] इस [यजमान] को सभी दिशाएं शत्रुविहीन एवं भयरहित हो जाती है । इस प्रकार जो यजमान इस शत्रुओं के निष्क्रमण [मन्त्र] को कहते हुए अपने घर पर आता है, वह उत्तरोत्तर बढ़ने वाली समृद्धि को प्राप्त करता है, और वह प्रजाओं के ऐश्वर्य एवं उनपर आधिपत्य को प्राप्त करता है ।

गृहप्राप्तेरूर्ध्वं कर्तव्यं विधत्ते—

**एत्य गृहान् पश्चाद् गृह्यस्याग्नेरुपविष्टायान्वारब्धाय ऋत्विगन्ततः कंसेन चतुर्गृहीतास्तिस्र आज्याहुतीरैन्द्रीः प्रपदं जुहोत्यनार्त्या अरिष्ट्या अज्यान्या अभयाय ॥ १० ॥ इति ।**

'एत्य' गृहान् प्रत्यागत्य, योऽयं 'गृह्य ' गृहे वर्तमान औपासनोऽग्नि , तस्य पश्चाद्भागे उपविष्टाय' आसीनाय ऋत्विजे 'अन्वारब्धाय' उपसृष्टवते क्षत्रियाय तादृशस्य क्षत्रियस्यानार्त्यादिसिद्ध्यर्थम् 'ऋत्विक्' अध्वर्यु 'अन्ततः' सर्वप्रयोगान्ते 'कंसेन' कांस्यपात्रेण 'चतुर्गृहीताश्चतुर्वार स्वीकृता 'ऐन्द्री' इन्द्रदेवताका वक्ष्यमाणैस्त्रिभिर्मन्त्रैस्तिस्र आज्याहुती प्रपदं यथा भवति तथा जुहुयात् । 'प्रपद' प्रकृष्टं पदम् । तथा च आहु॰ —

'पादा यस्यास्तु यावन्तो यावदक्षरसंमिता ।

ऋच्यध्ययनमेतेषां प्रपदं तद्विदुर्बुधा '' इति ॥

अत्र प्रपदशब्देनाक्षरपादादिवैकल्यरहितं लाक्षणिकमुच्चारणमभिधीयते । 'अनार्ति.' व्याधिपीडाराहित्यम् । 'अरिष्टि' शत्रुभिरहिंसा । 'अज्यानिः' द्रव्यहानिराहित्यम् । 'अभय' चोरादिभयराहित्यम्[2] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया द्वितीयाध्याये (सप्तत्रिंशाध्याये) षष्ठ खण्ड. ॥ ६ ॥ ( १० ) [ २६७ ]

---

१ ऋ० १० १३१ १ ।

२ द्र० तै० स० १ ८ १ ५ । तै० ब्रा० १ ७ ९ । शत० ब्रा० ५ ४ ३ । कात्या० श्रौ० १५ ६ ।

[गृह पर] आकर गृह में वर्तमान [औपासन] अग्नि [=गृह्याग्नि] के पीछे बैठकर परस्पर स्पृष्ट क्षत्रिय के लिए और उसके व्याधिजन्य पीड़ारहित्य के लिए, शत्रुओं द्वारा अहिंसा के लिए, द्रव्य हानिराहित्य के लिए और चोर आदि से अभय के लिए, अध्वर्यु नामक ऋत्विज [सभी प्रयोगों के] अन्त में कांस्यपात्र के द्वारा चार बार में गृहीत [वक्ष्यमाण तीन मन्त्रों से प्रपद अर्थात् पादादि वैकल्यरहित] प्रक्षेप-उच्चारणपूर्वक आज्य की इन्द्रदेवताक तीन आहुतियाँ देता है।

॥ इस प्रकार सैंतीसवें (द्वितीय) अध्याय के छठे खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥६॥

## अथ सप्तमः खण्डः

उक्ताहुत्यर्थं प्रथम मन्त्रमाह—

**पर्यूषु प्रधन्व वाजसातये परि वृत्रा, भूर्ब्रह्म प्राणममृत प्रपद्यतेऽयमसौ शर्म वर्माभय स्वस्तये। सह प्रजया सह पशुभिर्णि, सक्षणिर्द्विषस्तरध्या ऋणया न ईयसे स्वाहा ॥ इति।**

अत्र 'पर्यूषु' इत्यादिकाया ऋच परि वत्राणि सक्षणिरिति द्वितीय पाद[१]। तस्मिन् पादे 'वत्राणीति' पदस्य मध्ये भूरित्यादिकं पशुभिरित्यन्त पदजातं प्रक्षेप णीयम्। वृत्रेत्येतदक्षरद्वय पुरस्तात् णीत्येतत्परस्तात्, मध्ये प्रक्षेप। अत एवास्योच्चारणस्य प्रपदमिति नाम सपन्नम्। प्रक्षिप्त पदजात यस्मिन्नुच्चारणे तदुच्चारण प्रपदम्। तत्र तावत्संहितायामाम्नाताया ऋचोऽयमर्थ —हे इन्द्र 'वाजसातये' अन्नलाभाय। 'परि'-'उ' 'सु' इतिनिपातत्रयसमूहेन परित इत्येतावानेवार्थोऽभिधीयते। परित सर्वतः। 'प्रधन्व' प्रकर्षेण धारय। धारणार्थो धन्वतिधातु अस्मभ्यमन्न दातु चित्त धारयेत्यर्थ। 'वृत्राणि' शत्रून् परिसक्षणि परितो निराकरिष्णुर्भव। 'सक्षणि'-धातुरौचित्यान्निराकरण ब्रूते। 'द्विष' शत्रून् तरध्यै' तरीतुम्। 'ऋणया' प्रयत्न प्राप्त। 'न' अस्मदर्थम् 'ईयस' चेष्टसे-इति। अस्यामृचि 'वृत्राणीति' पदस्य मध्ये प्रक्षिप्तस्य भूरित्यादिपशुभिरित्यन्तपदजात स्यायमर्थ —अय क्षत्रियो 'असौ' विष्णुगुप्तादिनामको भूरादीन् 'प्रपद्यते' शरण गच्छति। 'भू' पृथिवी। 'ब्रह्म' वेद। 'प्राण' प्रसिद्ध। 'अमृत' मरणरहितम्। देवता रूप भूरादिक शरण प्रपन्नस्य क्षत्रियस्य 'प्रजया' पुत्रादिरूपया सह 'पशुभि' गवादिभिश्च सह 'स्वस्तये' क्षेमार्थं, त्व 'शर्म' सुख 'वर्म' कवचम् 'अभय' भयरहित देवतादिरूपं स्थान च कुर्विति शेषः। एतत्सिद्धयर्थं 'स्वाहा' तुभ्यमिद सुहुतमस्तु ॥

VIII ११ [XXXVII ७] ['पर्यू षु' आदि ऋचा का द्वितीय पाद 'परि वृत्राणि सक्षणि' है इस पाद के 'वृत्राणि' शब्द के मध्य 'भू' से लेकर 'पशुभि' तक के पदों

१ पर्यू षु प्र धन्व वाजसातये, परि वृत्राणि सक्षणि द्विषस्तरध्या ऋणया न ईयसे'—इति ऋ० ९।११०।१।

का प्रक्षेप करना चाहिए । 'वृत्र' इन दो अक्षरों के बाद और 'णि' इस अक्षर के पहले तक प्रक्षेप करते हैं । इसीलिए इस उच्चारण का 'प्रपद' नाम पड़ा है अर्थात् प्रक्षिप्त पद जिस उच्चारण में हो वह 'प्रपद' नामक उच्चारण है । ऋचा का अर्थ इस प्रकार है]—'हे इन्द्र, अन्न के लाभ के लिए चारों ओर से प्रकृष्टरूप से धारण करो अर्थात् हमें अन्न देने के लिए चित्त धारण करो । शत्रुओं को चारों ओर से हटाने वाले होओ । शत्रुओं को मारने के लिए प्रयत्न करने वाले मेरे लिए तुम चेष्टा करो ।'[1] ['वृत्राणि' के मध्य प्रक्षिप्त पदजात का अर्थ इस प्रकार है—यह विष्णुगुप्त आदि नामक क्षत्रिय] पृथ्वी, वेद, प्राण, मरणरहित एवं देवतादि रूप भू (लोक) की शरण में जाता है । इस [शरण में प्राप्त क्षत्रिय] को [पुत्रादि] प्रजा के साथ और [गौ आदि] पशुओं के साथ कल्याण के लिए तुम सुख, कवच, अभय और देवतादि रूप स्थान को संपादित करो'—इसकी सिद्धि के लिए हुत होए ।

प्रपदनामकं प्रथमं मन्त्रमुक्त्वा तन्नामकं द्वितीयं मन्त्रमाह—

अनु हि त्वा सुतं सोम मदामसि महे सम, भुवो ब्रह्म प्राणममृतं प्रपद्यतेऽय-मसौ शर्म वर्माभयं स्वस्तये । सह प्रजया सह पशुभि (र्भो)र्यं राज्ये वाजाँ अभि पवमान प्रगाहसे स्वाहा ॥ इति ।

अत्रापि 'अनुहित्वेत्येतस्यामृचि 'महे समर्यं राज्ये' इति द्वितीयः पादः[2] । तत्र 'समर्यं'–इति यत्पदं, तस्य समेत्यक्षरद्वयमधस्तात् कृत्वा, र्येत्येतत्तृतीयमक्षरमुपर्यवस्थाप्य, भुव इत्यादिकं पदजातं प्रक्षेपणीयम् । तस्या ऋचोऽयमर्थः –हे सोम, 'सुतम्' अभिषुतं त्वाम् 'अनुमदामसि' वयं हृष्यामः । समरं युद्धं तमर्हतीति 'समर्यः' शूरः, तथाविध हे इन्द्र. 'महे' महति राज्ये[3] । 'एनं' क्षत्रियं, स्थापयेति शेषः । हे 'पवमान' शोधक 'वाजान्' अन्नानि 'अभिप्रगाहसे' सर्वतः प्रकर्षेण गाहसे विलोडयसि, संपादयसीत्यर्थः । पदमध्ये

१ हे सोम, सु = सुष्ठु । वाजसातये = अस्मभ्यमन्नदानायैव । परि प्र धन्व = परित प्रगच्छ । यद्वा, वाजसातये = अन्नलाभाय संग्रामं प्रगच्छ । किञ्च, सक्षणिः = सहनशीलस्त्वं, वृत्राणि = शत्रून्, परिगच्छ । तदेवोच्यते । नः =अस्माकम्, ऋणया= ऋणानां यापयिता विनाशयिता त्वं । द्विषः = शत्रून् तरध्यै = तरीतुं हन्तुम्, ईयसे = परिगच्छसि । इति संहिताभाष्ये सायणः ।

२ 'अनु हि त्वा सुतं सोम मदामसि महे समर्यं राज्ये । वाजाँ अभि पवमान प्र गाहसे'–इति ऋ० ९।११०।२ ।

३ पदपाठे तु 'समर्यराज्ये'–इत्येकं पदम्, समनुष्यराज्ये इति च तद्व्याख्यानं कृतमनेनैवाचार्येण संहिताभाष्ये ।

प्रक्षिप्तस्य पदजातस्याऽर्थो 'भुव' इत्यन्तरिक्षमुच्यते । ब्रह्मेत्यादिकं स्वाहाकारान्तं पूर्ववत्[1] ॥"

[यहाँ भी 'अनु हि त्वा' ऋचा का 'महे समर्य राज्ये'—यह द्वितीय पाद है। 'समर्य' पद के मध्य में 'भुव' से लेकर 'पशुभि' तक के पदों का प्रक्षेप करना चाहिए। यह प्रक्षेप 'सम' के बाद और 'र्य' के पहले होता है। ऋचा का अर्थ इस प्रकार है]—'हे सोम, तुम्हारे अभिषुत होने पर हम लोग हृष्ट हुए हैं। [समर अर्थात् युद्ध, उसके योग्य जो है वह 'समर्य' अर्थात् हे शूर (इन्द्र), राज्य में इस क्षत्रिय को स्थापित करो हे शोधन करने वाले सोम तुम शत्रुओं को सतत प्रकृष्ट रूप से विलोडन करो अर्थात् सपादित करो। [प्रक्षिप्त पदजात का अर्थ इस प्रकार है—यह विष्णुगुप्त आदि नामक क्षत्रिय] अन्तरिक्ष, वेद, प्राण, मरणरहित एवं देवता रूप भुव [अन्तरिक्ष लोक] की शरण में जाता है। इस [शरण में प्राप्त क्षत्रिय] को [पुत्रादि] प्रजा के साथ और [गौ आदि] पशुओं के साथ कल्याण के लिए तुम सुख, कवच, अभय और देवतादि रूप स्थान को सपादित करो'—इसकी सिद्धि के लिए हुत होए।

प्रपदनात्मक तृतीय मन्त्रमाह—

**अजीजनो हि पवमान सूर्यं विधारे श, स्वर्ब्रह्म प्राणममृत प्रपद्यतेऽयमसौ शर्म वर्माभय स्वस्तये। सह प्रजया सह पशुभि, क्मना पयो गोजीरया रहमाण. पुर ध्या, स्वाहेति ॥ इति ।**

अजीजन इत्यस्यामृचि 'विधारे शक्मना'—इति द्वितीय पाद[2]। तत्रत्यस्य 'शक्मना'—इति पदस्य शेत्यक्षरमधस्तादुच्चार्य, क्मनेत्यक्षरद्वयमुपरिष्टादवस्थाप्य, मध्ये स्वरित्यादिक पशुभिरित्यन्त पदजात प्रक्षेपणीयम। तस्या ऋचोऽयमर्थ—हे 'पवमान' शोधकेन्द्र त्व सूर्यम् 'अजीजन' उत्पादितवानसि। 'शक्मना स्वशक्त्या 'पय' जल विधारे' विशेषेण मेघमध्ये धारयसि। 'गोजीरया' गवा जीवनेन निमित्तेन 'रहमाण' वृष्टिप्रदानार्थं त्वरन्, 'पुर' पूर्णफल 'ध्या' चिन्तय[4]। गोजीरयेत्युपलक्षणम्, सर्वप्राणिजीवननिमित्त-

---

१ द्र० इतः पूर्वम्, पृ० १२६७।

२ हे सोम, सुतम्=अभिषुत, त्वा=त्वा, वयम्, अनु मदामसि हि=अनुमदाम। अनुक्रमेणाभिष्टुम खलु। हे पवमान सोम स त्व, महे=महति, समर्यराज्ये=महद् समनुष्य त्वदीय राज्यमनुपालयितु, वाजान् शत्रुबलान्यभिलक्ष्य, प्र गाहसे=प्रगच्छसि। इति सहिताभाष्ये सायण।

३ 'अजीजनो हि पवमान सूर्यं, विधारे शक्मना पय। गोजीरया रहमाण पुरध्या'—इति ऋ० ९।११०।३।

४ 'पुरध्या=बहुविध प्रज्ञानेन'—इति सायण सहिताभाष्ये।

मित्यर्थः । अत्रापि शवमनेतिपदमध्ये प्रक्षिप्तस्य पदजातस्यादौ स्वरिति द्युलोकोऽभि-धीयते । ब्रह्मेत्यादिकं स्वाहाकारान्तं पूर्ववत्[1] । एतेषां प्रपदनामकानां मन्त्राणां लक्षणं पूर्वमेव 'पादा यस्यास्त्विति' श्लोकेनोदाहृतम्[2] । पर्यूष्वित्यादिकाया ऋचो मध्ये भूर्ब्रह्म प्राणेत्यादिकाया अस्या ऋचो यावन्तः पादा यावदक्षरसमिताः, तेषां सर्वेषां पतनं प्रपद-मिति तस्य लक्षणवाक्यस्यार्थः ॥

['अजीजनः' आदि ऋचा का 'विधारे शवमना' आदि द्वितीय पाद है । इस पाद के 'शवमना' पद के मध्य 'स्वः' से लेकर 'पशुभिः' तक प्रक्षेप होता है । यह प्रक्षेप 'श' के बाद और 'वमना' के पहले होता है । ऋचा का अर्थ इस प्रकार है]—हे सोम का शोधन करने वाले इन्द्र, तुमने सूर्य को उत्पन्न किया है । तुम अपनी शक्ति से मेघ के मध्य विशेष रूप से जल धारण करते हो । तुम गायों के जीवन के निमित्त से वृष्टि प्रदान के लिए संचरण करते हुए पूर्ण फल का स्थान करो[3] । [प्रक्षिप्त पद जात का अर्थ इस प्रकार है—यह विष्णुगुप्त आदि नामक क्षत्रिय] द्युलोक, वेद, प्राण, मरण-रहित एवं देवतादि रूप स्वः [द्युलोक] की शरण में जाता है । इस [शरण में प्रपन्न क्षत्रिय] को [पुत्रादि] प्रजा के साथ और [गौ आदि] पशुओं के साथ कल्याण के लिए तुम सुख, कवच, अभय और देवतादि रूप स्थान को सम्पादित करो'—इसकी सिद्धि के लिए हुत होए ।

उक्तमन्त्रसाध्या आहुतीः प्रशंसति—

अनार्तो ह वा अरिष्टोऽजीतः सर्वतो गुप्तस्त्रय्यै विद्यायै रूपेण सर्वा दिशोऽनु सञ्चरत्यैन्द्रे लोके प्रतिष्ठितो यस्मा एता ऋत्विगन्ततः कंसेन चतुर्गृहीता-स्तिस्र आज्याहुतीरैन्द्रीः प्रपदं जुहोति ॥ इति ।

'यस्मै' क्षत्रियाय 'ऋत्विक्' अध्वर्युः 'अन्ततः' अभिषेकप्रयोगान्ते यथोक्तक्रमेण जुहोति । असौ क्षत्रियः 'अनार्तः' रोगरहितः 'अरिष्टः' शत्रुभिरहिंसितः 'अजीतः' तैः शत्रुभिर्युद्धेऽप्यजितः[4] । सर्वतो 'गुप्तः' इन्द्रेण रक्षितः । केन साधनेन रक्षित इति, तदु-च्यते—'त्रय्यै विद्यायै रूपेण' वेदत्रयोक्तमन्त्रेणेत्यर्थः । तेन रक्षितः सन् 'सर्वा दिशः'

१. द्र० इतः पूर्वम्, पृ० १२६७ । २. द्र० इतः पूर्वम्, पृ० १२६६ ।

३. हे पवमान सोम त्वं, पयः=पयसः उदकस्य, विधारे=विधारकेऽन्तरिक्षे, शवमना=समर्थेन बलेन, सूर्यम् अजीजनो हि=उत्पादितवान् भवसि खलु । कीदृशः ? गोजीरया=स्तोतृभ्यो गवां प्रेरकेण । स्तोतॄणां प्रेरितपशुकेनेत्यर्थः । तादृशेन, पुरंध्या=बहुविधप्रज्ञानेन युक्तः, रंहमाणः=वेगं कुर्वाणस्त्वं सूर्यमजीजनः । इति संहिताभाष्ये सायणः ।

४. मूलपाठस्तु अजीत इति दीर्घमध्य ; तस्यैव व्याख्यानम् 'अजित' इति ।

प्राच्यादाः 'अनुसंचरति' अनुक्रमेण विजयार्थं प्रवर्तते, मरणादूर्ध्वमैन्द्रे लोके प्रतिष्ठितो भवति ॥

जिस [क्षत्रिय यजमान] के लिए अध्वर्यु नामक ऋत्विज [अभिषेक के] अन्त में कंस नामक पात्र से बार बार गृहीत, इन्द्र देवताक तीन आज्य की आहुति प्रणव उच्चारण सहित देता है; वह [क्षत्रिय] रोगरहित और शत्रुओं द्वारा अहिंसित रहता है। वह उन शत्रुओं से अजित होता है। सभी ओर से [इन्द्र से] वेद प्रयोक्त मन्त्र द्वारा रक्षित होता है। [उससे रक्षित होकर वह] सभी [पूर्व आदि दिशाओं में अनुक्रम से प्रवर्तित होता है और [मृत्यु के बाद] इन्द्र लोक में प्रतिष्ठित होता है।

होमादूर्ध्वमाशीर्मन्त्रपाठं विधत्ते—

अथान्ततः प्रजातिमाशास्ते, गवामश्वानां पुरुषाणामिह गावः प्रजायध्वमिहाश्वा इह पूरुषाः। इहो सहस्रदक्षिणो वीरस्त्राता निषीदत्विति ॥ इति।

'अथ' होमानन्तरम् 'अन्ततः' प्रयोगान्ते 'इह गावः' इत्यादिमन्त्रेण[1] गवादीनां 'प्रजातिम्' उत्पत्तिम् 'आशास्ते' प्रार्थयेत। मन्त्रस्यायमर्थः,—हे गावः 'इह' मद्राष्ट्रे 'प्रजायध्व' प्रकर्षेणोत्पन्ना भवत। एवमश्वाः, पुरुषाश्च। 'इहो' अस्मिन्नेव राष्ट्रे 'सहस्रदक्षिण' यागेषु सहस्रसंख्यदक्षिणादानशीलो 'वीरः' पुत्रः 'त्राता' प्रजानां रक्षकः सन्, निषीदतु ॥

इस [होम] के अनन्तर [प्रयोग के] अन्त में 'इह गावः' 'हे गायो, इस मेरे राष्ट्र में प्रकृष्ट रूप से उत्पन्न होओ। हे अश्वो, मेरे इस राष्ट्र में उत्पन्न होओ। हे पुरुषो, मेरे इस राष्ट्र में उत्पन्न होओ। मेरे इस राष्ट्र में, सहस्र दक्षिणा वाले यागों में दानशील, वीर और प्रजाओं के रक्षक पुत्र प्रतिष्ठित हों'[2] इस मन्त्र से गायों, अश्वों और पुरुषों की उत्पत्ति की प्रार्थना करनी चाहिए।

अनेन मन्त्रेण प्रार्थनं प्रशंसति—

बहुर्हं प्रजया पशुभिर्भवति य एवमेतामन्ततः प्रजातिमाशास्ते गवामश्वानां पुरुषाणाम् ॥ इति।

य एवमाशासानः क्षत्रियः स प्रजादिभिः 'बहुर्हं' भूत एव भवति ॥

जो [क्षत्रिय] इस प्रकार [प्रयोग के] अन्त में इन मन्त्रों से गायों, अश्वों और पुरुषों की आशंसा करता है वह [पुत्र पौत्र आदि] प्रजाओं एवं [गाय, अश्वादि] पशुओं से बहुत हो जाता है।

पुनरभिषेकपर्यन्तेऽस्मिन् क्षत्रिययागे याजयितॄणामृत्विजां वेदनं प्रशंसति—

एष ह वाव क्षत्रियोऽविकृष्टो यमेवंविदो याजयन्ति ॥ इति।

---

1. सा० म० ग्रा० १.३.१३, 'सहस्रदक्षिणोऽपि पूषा निषी०'—इति तत्र पाठः।
2. तु० अथर्व० २०.१२७.१२। शाङ्खा श्रौ० १२.१४.३।

'एवम्' उक्ताभिषेकप्रकारं जानन्त ऋत्विजो 'य' क्षत्रियं याजयन्ति। 'एष एव' क्षत्रियः सर्वेषु 'अविकृष्ट' नापकृष्टः। न ह्यस्य कदाचिदप्यपकर्षो भवति॥

इस प्रकार [अभिषेक प्रकार को] जानने वाले [ऋत्विज] जिस [क्षत्रिय] के लिए यजन करते हैं, यही क्षत्रिय सभी पुरुषों में कभी भी अपकर्ष को नहीं ही प्राप्त होता है।

ऋत्विजामभिषेकपरिज्ञानाभावं निन्दति—

**अथ ह त व्येव वर्पन्ते, यथा ह वा इद निषादा वा सेळगा वा पापकृतो वा वित्तवन्त पुरुषमरण्ये गृहीत्वा कर्तमन्वस्य वित्तमादाय द्रवन्त्येवमेव त ऋत्विजो यजमानं कर्तमन्वस्य वित्तमादाय द्रवन्ति, यमनेवविदो याजयन्ति ॥** इति।

'अनेवविद' अभिषेकप्रकारमजानन्त ऋत्विजो 'य' क्षत्रियं याजयन्ति, 'त' क्षत्रियं 'विवर्पन्त एव' विकृष्टमपकृष्टं कुर्वन्त्येव। तत्रैव निदर्शनमुच्यते— 'निषादा' नीचजातयो मनुष्या। 'सेळगा' चोराः। इळा अन्नं तया सह वर्तन्त इति 'सेळा' धनिकाः, तान् धनापहारार्थं गच्छन्तीति चोराः 'सळगा'। 'पापकृत' हिंसाकारिणः। त एते त्रिविधा दुष्टा पुरुषा 'वित्तवन्त' बहुधनोपेतं पुरुषमरण्यमध्ये गृहीत्वा 'कर्तमन्वस्य' कस्मिंश्चिदन्ध-कूपादिरूपे गर्ते त प्रक्षिप्य, तदीयं धनमपहृत्य 'द्रवन्ति' पलायन्ते। एवमेवानभिज्ञा ऋत्विजो यजमानं नरकरूपं कर्तमन्वस्य, नरकहेतोरनु दुरनुष्ठानेऽवस्थाप्य दक्षिणारूपेण तदीयं द्रव्यमपहृत्य, स्वगृहेषु गच्छन्ति॥

लेकिन, इस प्रकार [अभिषेक प्रकार को] न जानने वाले [ऋत्विज] जिस [क्षत्रिय] के लिए यजन करते हैं, तो वे उस [क्षत्रिय] का अपकर्ष ही करते हैं। जिस प्रकार नीच जाति के ये निषाद, चोर और [हिंसा करने वाले शिकारी आदि] पापी पुरुष बहुत धन से युक्त पुरुष को अरण्य के मध्य पकड़कर [किसी अन्धे कुएँ आदि] गड्ढे में फेंककर उसके धन का अपहरण करके पलायित हो जाते हैं, उसी प्रकार ये अभिषेक के प्रकार से अनभिज्ञ ऋत्विज यजमान को नरक रूप दुरनुष्ठान में स्थापित करके दक्षिणा रूपी उनके धन का अपहरण करके अपने घर चले जाते हैं।

उक्ताभिषेकपर्यन्तं क्षत्रिययागमुदाहरणमुखेन प्रशंसति—

**एतद्ध स्म वै तद्विद्वानाह जनमेजयः पारिक्षित, एवंविदं हि वै मामेवंविदो याजयन्ति, तस्मादहं जयाम्यभीत्वरीं सेनां जयाम्यभीत्वर्या सेनया न मा दिव्या न मानुष्य इषव ऋच्छन्त्येष्यामि सर्वमायुः सर्वभूमि र्भविष्यामीति ॥** इति।

परिक्षितस्य राज्ञ पुत्रो जनमेजयः, तदेतत् सर्वं प्रयोगमाहात्म्यं विद्वान् सम्यगभ्य एवमुवाच,—अहमप्येवंविद् ऋत्विजोऽप्येवंविदः तस्मादभिषेकेण तेन मार्गेण द्वन्द्वयुद्धे जयामि।

किंच 'अभीत्वरीम्' अभितो युद्धार्थमुद्युक्ता परकीया सेना तादृश्या सेनया जयामि । तथाविधं मा 'दिव्या इषव' देवप्रेरिता बाणा न प्राप्नुवन्ति, मानुष्य' चेषवो न प्राप्नुवन्ति । अपमृत्युरहित सर्वमप्यायुः प्राप्स्यामि । सर्वा चतुःसागरपरिवेष्टिता भूमिर्यस्याधीना सोऽयं 'सर्वभूमि' तादृशो भविष्यामीति ॥

उस [प्रयोग] के माहात्म्य को जानने वाले राजा परीक्षित के पुत्र जनमेजय ने [सभा के मध्य] इस प्रकार कहा—'इस प्रकार से [अभिषेक के प्रकार को] जानने वाले मुझको उस [अभिषेक के प्रकार] के ज्ञाता ऋत्विज यजन कराते हैं तब मैं [अभिषेक के अन्त में किए गए याग के द्वारा द्वन्द्व युद्ध में] जीतता हूँ। युद्ध के लिए उद्यत शत्रु सेना को जीतता हूँ, युद्ध के लिए उद्यत सेना से जीतता हूँ। इस प्रकार से [अभिषिक्त] मुझको दैवी [देव प्रेरित] बाण अथवा मनुष्य द्वारा चलाए गए बाण नहीं लग सकते। [अत अकाल मृत्युरहित] मैं पूर्ण आयु को प्राप्त करूँगा। [चारों सागरों से परिवेष्टित] सभी भूमि का स्वामी होऊँगा।'

जनमेजयवाक्योदाहरणे दृढीकृतमर्थं निगमयति—

**न ह वा एन दिव्या न मानुष्य इषव ऋच्छन्त्येति सर्वमायु, सर्वभूमिर्भवति यमेवंविदो याजयन्ति, याजयन्ति ॥ ११ ॥ इति ।**

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया द्वितीयाध्याये (सप्तत्रिंशाध्याये) सप्तम खण्ड ॥७॥ (११) [२६८]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यादेशतो भगवत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश नामभाष्ये ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया द्वितीयोऽध्याय (सप्तत्रिंशोऽध्याय) ॥ २ ॥

इस प्रकार [के अभिषेक के प्रयोग को] जानने वाले [ऋत्विज] जिस [क्षत्रिय] के लिए यजन करते हैं, उस [यजमान] को न दैवी बाण और न मानुषी बाण ही लगते हैं। अपितु वह पूर्ण आयु को प्राप्त होता है और सभी भूमि का अधिपति होता है।

॥ इस प्रकार ऐतरेय ब्राह्मण के अष्टम पञ्चिका के द्वितीय (सैंतीसवें) अध्याय की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ २ ॥

—, ० —

# अथ तृतीयोऽध्यायः

## प्रथमः खण्डः

—·०·—

# [अथ अष्टात्रिंशोऽध्यायः

## प्रथमः खण्डः]

पुन रार्योऽभिषकान्ते प्रत्वङ्गत्वेन वर्णित ।
अभिषेक पुमर्थो यस्तस्योपोद्घात उच्यते ॥ १ ॥

तत्राऽऽदाविन्द्रस्याभिषेक प्रतिजानीते—

**अयात ऐन्द्रो महाभिषेक. ॥ इति**

'अथ' मानुषक्षत्रियाभिषेकोक्त्यनन्तरम्, यता दैवोऽभिषेको वुभुत्सित. । अत. कारणाद् इन्द्रसम्बन्धी महाभिषेक, कथ्यत इति शेष । आरोहणमुत्क्रोशनाभिमन्त्रणादिभिर्वक्ष्यमाणै रस्याभिषेकस्य महत्त्व द्रष्टव्यम् ॥

इन्द्र का महाभिषेक—

VIII.१२ [XXXVIII.१] अब इस [मनुष्य रूप में क्षत्रिय राजा के अभिषेक के वर्णन] के बाद इन्द्र के महाभिषेक का वर्णन करते हैं।

तदभिषेकार्थं देवविवाद दर्शयति—

**ते देवा अब्रुवन् स प्रजापतिका,—अयं वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतम इममेवाभिषिञ्चामहा इति, तथेति, तद्ध तदिन्द्रमेव ॥ इति ।**

प्रजापतिना सह वर्तन्त इति 'सप्रजापतिका' 'ते' अग्न्यादयो देवा परस्परमिदम् 'अब्रुवन्' । हस्तेनेन्द्र प्रदर्श्य कथयन्ति । अयमेवेन्द्रो 'देवानां' मध्य 'ओजिष्ठ' अतिशयेनाष्टमधातुयुक्त । 'बलिष्ठ' अतिशयेन शरीरबलयुक्त । 'सहिष्ठ' अतिशयेन वैर्यमिमवशील । 'सत्तम' अतिशयेन स्वभक्तेषु साधु । 'पारयिष्णुतम' अतिशयेन प्रक्रान्तस्य कार्यस्य समाप्तिकृत् । तस्मादिममेव सर्वे वयमभिषिञ्चामहै । इति कैश्चिदुक्ते सति, अन्ये सर्वेऽपि 'तथा—इति' अङ्गीकृत्य 'तद्ध' तदानीमेव, 'तदिन्द्रमेव' त सर्वैरनुमतमिन्द्रमेव, अभ्यषिञ्चन्निति शेष. ॥

[अभिषेक के लिए देवों के मध्य विवाद होने पर] प्रजापति के सहित उन देवों ने कहा—'देवों के मध्य यह [पुरोवर्ती] इन्द्र अत्यन्त ओजस्वी [अर्थात् शरीर के आठवें धातु से युक्त] हैं, अत्यन्त शारीरिक बल से युक्त हैं, शत्रु को पराजय में समर्थ हैं अर्थात् अभिभव समर्थ और अपने भक्तों के लिए अत्यन्त साधु पुरुष हैं। आरम्भ किए हुए कार्य को अतिशय रूप से पार लगाने वाले हैं, इसलिए [इन्द्र] को हम लोग [राज सिंहासन पर] अभिषिक्त करें।' इस पर अन्य सभी देवों ने कहा—'ऐसा ही हो।' और उसी समय उन इन्द्र को ही अभिषिक्त किया]।

तत्र प्रकार दर्शयति

**तस्मा एतामासन्दीं समभरन्नृच नाम, तस्यै बृहच्च रथंतर च पूर्वौ पादावकुर्वन् वैरूप च वैराज चापरौ, शाक्वररैवते शीर्षण्ये, नौधस च कालेय चानूच्ये, ऋचः प्राचीनातानान् सामानि तिरश्चीनवायान् यजूंष्यतीकाशान्, यश आस्तरणम्, श्रियमुपबर्हणं, तस्यै सविता च बृहस्पतिश्च पूर्वौ पादावधारयतां वायुश्च पूषा चापरौ, मित्रावरुणौ शीर्षण्ये, अश्विनावनूच्ये, स एतामासन्दीमारोहत् ॥ इति।**

'तस्मै' इन्द्रार्थम् 'एताम्' वक्ष्यमाणां वेदमयीमासन्दी समभरन्। 'ऋच नाम'—इति, आसन्द्या विशेषणम्। ऋग्रूपामेतन्नामिकामित्यर्थः। 'तस्यै' तस्या ऋग्रूपाया आसन्द्या बृहदादीन्यष्ट सामानि पूर्वपादाद्यवयवानकुर्वन्। आसन्द्यां शयानस्येन्द्रस्य शिरोदेशस्थ फलक 'शीर्षण्यम्'। तच्च पाददेशावस्थितस्य फलकस्योपलक्षणम्। अत एव 'शीर्षण्ये' इति द्विवचनमुच्यते। 'अनूच्य' पार्श्वद्वयवर्तिनी फलके। ऋग्रूपा ये मन्त्रा सन्ति तान् प्राचीनातानान् प्रागवस्थायत्वेन विस्तारितान् दीर्घतन्तुविशेषानकुर्वन्। गीयमानानि 'सामानि' 'तिरश्चीनवायान्' तिर्यक्त्वेन वयनहेतून् रज्जुविशेषानकुर्वन्। यजूंषि 'अतीकाशान्' रज्ज्वन्तरालच्छिद्रविशेषानकुर्वन्। यद् 'यश' कीर्ति देवतारूप तदासन्द्या उपर्यास्तरणम्। 'श्रिय' या तु श्री सम्पदभिमानिनी देवता, ताम् 'उपबर्हणं' शिरस उपधानमकुर्वन्। 'तस्यै' तस्या आसन्द्याः पादादीनष्टावयवान् सवित्रादयोऽष्टौ देवा अधारयन्। इन्द्र 'एतां' वेदमयीमासन्दी वक्ष्यमाणैः षण्मन्त्रैरारोहत् ॥

वे उन [इन्द्र] के लिए ऋचाओं से अभिहित इस [वक्ष्यमाण वैदिक] सिंहासन को लाए। उस [ऋग्रूप सिंहासन] के दो आगे के पाए बृहत् और रथन्तर नाम के सामों[1] के बनाए गए, और दो पिछले पाए वैरूप और वैराज सामों के, उस [सिंहासन का पीठ का] सिर टिकाने का दोनों भाग शाक्वर और रैवत सामों के, उसकी दोनों बाँहें (बगल के तख्ते) नौधस और कालेय सामों के, उसका ताना [लम्बाई में बिना जाने

१, द्र० सामविधये पृ० ६२४।

वाला तन्तु] ऋचाओं का, उसका वाना [तिरछा तिरछा बिना जाने वाला तन्तु] सामों का, उसके [अतिकाश अर्थात् बिनने में आने वाले] छिद्र यजुओं के, यश को इस [सिंहासन] का बिछौना और पीछे टेकने का तकिया [सवति के अभिमानिनी देवता] श्री [समृद्धि] का बनाया गया। सविता और बृहस्पति ने उस [सिंहासन] के अगले पावों को थामा, वायु और पूषा देवों ने पिछले पावों को, मित्र और वरुण देवों ने शीर्ष भाग को और अश्विनों ने दोनों बगल की बाहों को थामा। [इस प्रकार आठ देवों ने आठ स्थानों को सहारा दिया और आठ सानों से आगे पीछे के पैर आदि बनाए गए]। इस [वैदिक] सिंहासन पर यह [इन्द्र] तब [इन छः मन्त्रों से] आसीन हुए।

तान् मन्त्रान् दर्शयति—

वसवस्त्वा गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्नाऽऽरोहन्तु, तानन्वारोहामि साम्राज्याय; रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नाऽऽरोहन्तु, तानन्वारोहामि भौज्यायाऽऽदित्यास्त्वा जागतेन च्छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्नाऽऽरोहन्तु, तानन्वारोहामि स्वाराज्याय, विश्वे त्वा देवा आनुष्टुभेन च्छन्दसैकविंशेन स्तोमेन वैराजेन साम्नाऽऽरोहन्तु, तानन्वारोहामि वैराज्याय; साध्याश्च त्वाऽऽप्त्याश्च देवा. पाङ्क्तेन च्छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्नाऽऽरोहन्तु, तानन्वारोहामि राज्याय; मरुतश्च त्वाऽङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा त्रयस्त्रिंशेन स्तोमेन रैवतेन साम्नाऽऽरोहन्तु, तानन्वारोहामि पारमेष्ठ्याय; माहाराज्यायाऽऽधिपत्याय स्वावश्यायातिष्ठायाऽऽरोहामी-त्येतामासन्दीमारोहत् ॥ इति।

वस्वादयो देवगणाः, गायत्र्यादिच्छन्दोभिः, त्रिवृदादिस्तोमैः, रथंतरादिसामभिश्च सह हे आसन्दि त्वा प्रथमत आरोहन्तु। तान् 'अनु' पश्चादहमारोहामि। 'आप्त्या.'–इत्यनेनापि वस्वादिशब्दवदृषिदेवगणविशेष उच्यते। साम्राज्यादीन्यारोहणप्रयोजनानि। एते च शब्दाः पूर्वाध्याये 'व्याघ्रचर्मणाऽऽस्तृणाति'–इत्यस्मिन् खण्डे[1] व्याख्याता.। एवं षड्भिर्मन्त्रैरिन्द्र उक्तामासन्दीमारोहत् ॥

हे आसन्दी, वसु [देवगण] तुम पर गायत्री छन्द, त्रिवृत् स्तोम और रथन्तर साम के साथ चढ़ें, उनके [आरोहण के] पश्चात् मैं साम्राज्य [धर्म से प्रजापालन] के लिए चढ़ता हूँ। रुद्र [देवगण] तुम पर त्रिष्टुप् छन्द, पञ्चदश स्तोम और बृहत् साम के साथ चढ़ें, उनके [आरोहण के] पश्चात् मैं भोग समृद्धि के लिए चढ़ता हूँ। [द्वादश] आदित्य [गण] तुम पर जगती छन्द, सप्तदश स्तोम और वैरूप साम के साथ चढ़ें,

१. द्र० इत. पूर्वम्, पृ० १२४३।

उनके [आरोहण के] पश्चात् मैं स्वराज्य [अपराधीनत्व] के लिए चढ़ता हूँ। विश्वे देव तुम पर अनुष्टुप् छन्द, एकविंश स्तोम और वैराज साम के साथ चढ़े, उनके [आरोहण के] पश्चात् मैं अन्य राजाओं पर प्रभुसत्ता [=वैराज्य] के लिए चढ़ता हूँ। साध्य और आप्त्य देव गण तुम पर पंक्ति छन्द, त्रिणव स्तोम और शाक्वर साम के साथ चढ़े, उनके [आरोहण के] पश्चात् मैं [इस लोक में] राज्य [देश पर आधिपत्य] के लिए चढ़ता हूँ। मरुद्गण और अङ्गिरस अतिच्छन्द नामक छन्द, त्रयस्त्रिंशस्तोम और रैवत साम के साथ चढ़ें, उनके [आरोहण के] पश्चात् मैं [परलोक में] प्रजापति के लोक की प्राप्ति के लिए, महान् ऐश्वर्य के लिए, आधिपत्य के लिए, अपरतन्त्रता और चिरकाल तक [इस लोक में] वास के लिए चढ़ता हूँ इन छ मन्त्रों से [इन्द्र उक्त] आसन्दी पर चढ़ें।

इन्द्रारोहणादूर्ध्वं देवानामभ्युत्क्रोशनं दर्शयति—

**तमेतस्यामासन्द्यामासीनं विश्वे देवा अब्रुवन्, न वा अनभ्युत्कृष्ट इन्द्रो वीर्यं कर्तुमर्हत्यभ्येनमुत्क्रोशामेति, तथेति, तं विश्वे देवा अभ्युदक्रोशन्निमं देवा अभ्युत्क्रोशत सम्राजं साम्राज्यं भोजं भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं राजानं राजपितरं परमेष्ठिनं पारमेष्ठ्यं, क्षत्रमजनि क्षत्रियोऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ताऽजनि पुरां भेत्ताऽजन्यसुराणां हन्ताऽजनि ब्रह्मणो गोप्ताऽजनि धर्मस्य गोप्ताऽजनीति ॥ इति ।**

'एतस्यां' वेदमय्यामासन्द्यामासीनं 'तम्' इन्द्रं प्रति 'विश्वे' सर्वे देवा परस्परमिदम ब्रुवन्—यथा लोके गुण बन्दिनो वचनेन राज्ञः कीर्तिं कुर्वन्ति। एवमत्रापि गुणकीर्तनम् 'अभ्युत्क्रोशनम्'। तेन रहित 'अनभ्युत्कृष्ट' इन्द्रो युद्धादौ वीर्यं कर्तुं नैवार्हति। कीर्तिमन्तरेण परेषां भीत्यनुदयात्। तस्मादमित एनम्' इन्द्रम् 'अभ्युत्क्रोशाम' उद्घोषयाम, इति विचार्य तथैवाङ्गीकृत्य, 'तम्' इन्द्रं सर्वे देवा अभ्युदक्रोशन्। इममित्यादिरभ्युत्क्रोशनप्रकार। हे देवा, 'इमम्' इन्द्रममित 'उत्क्रोशत' उद्घोषयत। कीदृशमिन्द्रं ? सम्राट्स्वरूपम्। अत एव साम्राज्य कर्तुमर्हम्। 'भोज' भोक्तारम्। अत एव 'भोजपितर' भोजपालक, स्वराड्रूपत्वादेव स्वाराज्य कर्तुमर्हं, विराड्रूपत्वादेव वैराज्य कर्तुमर्हम्, राजरूपत्वादेव 'राजपितर' सर्वेषां राज्ञां पालकम्। परमेष्ठिरूपत्वात् पारमेष्ठ्य पदमनुभवितु योग्यम्। 'क्षत्रमजनि' ईदृशी क्षत्रियजातिर्लोके समुत्पन्ना। तज्जातिमान् क्षत्रिय पुरुष समुत्पन्न। सर्वस्य प्राणिजातस्याधिपति समुत्पन्न। 'विशां' प्रजानाम् 'अत्ता' भोक्ता समुत्पन्न। 'पुरां' परकीयाणां भेत्ता' विदारयिता समुत्पन्न। असुराणां 'हन्ता' घातक समुत्पन्न। 'ब्रह्मण' वेदस्य 'गोप्ता' रक्षक समुत्पन्न। धर्मस्य वेदोक्तस्य 'गोप्ता' रक्षक समुत्पन्न। 'इति' अयमभ्युत्क्रोशनमन्त्र ॥

इस [विदमयी] आसन्दी पर आसीन उन [इन्द्र] के प्रति विश्वे देवों ने कहा—'गुणाख्यान [की घोषणा] से रहित इन्द्र [युद्धादि में] पराक्रम करने के योग्य नहीं हो सकते [क्योंकि कीर्ति के बिना शत्रुओं में भय का उदय नहीं होता]। [इसलिए] 'इस [इन्द्र] के गुणों का हम सब कीर्तन करें।' 'ऐसा ही हो'—इस प्रकार अङ्गीकार करते हुए सभी देवों ने उन [इन्द्र] की इस प्रकार जय जयकार की—

हे देवो! हम उस [इन्द्र] के गुणों का कीर्तन करते हैं जो सम्राट् स्वरूप में और साम्राज्य करने के योग्य हैं, भोक्ता, भोक्ताओं के पालक, स्वराट् स्वरूप, स्वराज्य करने योग्य, विराट् स्वरूप, वैराज्य [प्रभुत्व की व्यक्ति] करने योग्य, राजा, राजाओं के पालक, परमेष्ठि [=प्रजापति] स्वरूप और प्रजापति के पद का अनुभव करने योग्य हैं। इस प्रकार वो क्षत्रिय जाति लोक में उत्पन्न हुई है। क्षत्रिय पुरुष उत्पन्न हुआ है। सभी प्राणिजात का अधिपति उत्पन्न हुआ है। प्रजाओं का भोक्ता उत्पन्न हुआ है, दूसरों के पुरों का नाश करने वाला उत्पन्न हुआ है। असुरों का घातक पैदा हुआ है। वेदों का रक्षक उत्पन्न हुआ है। [वे के] धर्म [नियम] का रक्षक उत्पन्न हुआ है। इस प्रकार [यह गुण कीर्तन मन्त्र] है।

अभ्युत्क्रोशनादूर्ध्वं प्रजापतिवर्तव्यं दर्शयति—

तमभ्युत्क्रुष्टं प्रजापतिरभिषेक्ष्यन्नेतयर्चाऽभ्यमन्त्रयत ॥ १२ ॥ इति।

'एतया' निषसादेति[1] वक्ष्यमाणया ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टम-पञ्चिकाया तृतीयाध्याये (अष्टात्रिंशाध्याये) प्रथमः खण्डः ॥१॥ (१२) [२६९]

गुणाख्यान के बाद उस अभिषिक्त होने वाले [इन्द्र] का इस [वक्ष्यमाण 'निषसाद' इत्यादि] ऋचा से प्रजापति ने अभिमन्त्रण किया।

॥ इस प्रकार अड़तीसवें (तृतीय) अध्याय के प्रथम खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥ १ ॥

## अथ द्वितीयः खण्डः

एतयर्चाऽभ्यमन्त्रयत-इत्यत्र योऽयं मन्त्र ऋक्शब्देन विवक्षितः, स मन्त्रं दर्शयति—

निषसाद धृतव्रतो वरुणः पस्त्यास्वा। साम्राज्याय, भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाऽधिपत्याय स्वावश्यायाऽऽतिष्ठाय, सुक्रतुरिति ॥ इति।

---

१. ऋ० १.२५.१०।

'धृतव्रत' स्वीकृतनियमो 'वरुण' सर्वस्यानिष्टस्य निवारयितेन्द्र, 'पस्त्यासु' गृहेष्वागत्य, साम्राज्यादिफलसिद्ध्यर्थं 'सुक्रतुः' शोभनसंकल्पो भूत्वा 'निषसाद' अस्यामासन्द्यां निषण्णवान् ॥

VIII १३ [XXXVIII. ४] 'व्रत धारण करने वाले और सभी के अनिष्ट का निवारण करने वाले इन्द्र, गृहों में आकर साम्राज्य के लिए, भोग के लिए, स्वाराज्य [अपराधीनत्व] के लिए, वैराज्य [प्रभुत्व] के लिए, परलोक में प्रजापति के लोक की प्राप्ति के लिए, राज्य के लिए, महान् ऐश्वर्य के लिए, आधिपत्य के लिए, अपरतन्त्रता और चिरकाल तक [इस लोक में] वास के लिए शुभ सङ्कल्प करके [इस आसन्दी पर] बैठे थे।'

अनेन मन्त्रेणाभिमन्त्रितस्येन्द्रस्याभिषेकप्रकार दर्शयति—

तमेतस्यामासन्द्यामासीन प्रजापति पुरस्तात्तिष्ठन् प्रत्यङ्मुख औदुम्बर्याऽऽर्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभ्यषिञ्चद्, इमा आप शिवतमा इत्येतेन तृचेन, देवस्य त्वेति च यजुषा, भूर्भुवः स्वरित्येताभिश्च व्याहृतिभि ॥ १३ ॥ इति ।

'एतस्या' पूर्वोक्ताया वेदमय्यामासन्द्यामासीन 'तम्' 'इन्द्र प्रजापतिरभ्यषिञ्चत्। किं कुर्वन्? 'पुरस्तात्' आसन्द्या पूर्वस्यां दिशि प्रत्यङ्मुखस्तिष्ठन्। किं कृत्वा? 'आर्द्रया' आर्द्रपत्रोपेतयोदुम्बरशाखया सुवर्णमयेन च पवित्रेण 'अन्तर्धाय' व्यवधान कृत्वा। केन मन्त्रेण? 'इमा आप शिवतमा' इत्यादिकेन, ऋग्वङ्गाभिषेके प्रोक्तेन[1] त्रिविधेन मन्त्रजातेन ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये अष्टम पञ्चिकाया तृतीयाध्याये (अष्टात्रिंशाध्याये) द्वितीय खण्ड ॥२॥ (१३) [२७०]

[इस मन्त्र से अभिमन्त्रित इन्द्र के अभिषेक का प्रकार]—

इस [वेदमयी] आसन्दी पर उन [इन्द्र] के बैठ जाने पर प्रजापति ने सामने खड़े होकर पश्चिम की ओर मुख करके गूलर की पत्तेदार गीली शाखा और सोने से बने पवित्र को उसमें लपेटकर फिर उन [दोनों] से 'इमा आप शिवतमा' आदि तृच से, 'देवस्य त्वा' आदि यजु से और 'भूर्भुव स्व' इन तीन व्याहृतियों से अभिषिंचन किया।

॥ इस प्रकार अड़तीसवें (तृतीय) अध्याय के द्वितीय खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥२॥

१ द्र० इत पूर्वम्, पृ० १२४८।

## अथ तृतीयः खण्डः

इन्द्रस्य प्राजापत्यादभिषेकादूर्ध्वं दिग्भेदेन देवविशेषैरभिषेकः कृतः। तत्र प्राच्यां दिशि तमभिषेकं दर्शयति—

**अथैनं प्राच्यां दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय ॥** इति।

'अथ' प्राजापत्याभिषेकानन्तरम् 'एनम्' इन्द्रं प्राच्यां दिश्यवस्थिता वसवो देवा एकत्रिंशत्स्वहःसु पूर्वोक्तैर्मन्त्रैरभ्यषिञ्चन्। तच्च साम्राज्यसिद्धये भवति॥

VIII.१४ [XXXVIII ३] इस [प्रजापति के द्वारा किए गए अभिषेक] के अनन्तर इस [इन्द्र] का पूर्व दिशा में वसु नामक [आठ] देवों ने छः और पचीस अर्थात् इकतीस दिनों तक इसी तृच से, इसी यजु से और इन्हीं व्याहृतियों से साम्राज्य के लिए अभिषिचन किया।

इदानीन्तनलोकिकाचारप्रदर्शनेनेन्द्रस्य प्राच्यां दिशि तमभिषेकं द्रढयति—

**तस्मादेतस्यां प्राच्यां दिशि ये के च प्राच्यानां राजानः साम्राज्यायैव तेऽभिषिच्यन्ते सम्राळित्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमनु ॥** इति।

यस्माद्वसुभिः प्राच्यां दिश्यभिषेकः कृतः, 'तस्मात्' इदानीमपि 'प्राच्यानां' पूर्वदिग्वर्तिनां मनुष्याणां ये के च राजानः सन्ति, ते सर्वेऽपि 'देवानां' च वसूनां च सम्बन्धिनीम् 'एतामेव' 'विहितिं' पूर्वोक्तमेव विधानमनु 'साम्राज्याय' साम्राज्यसिद्ध्यर्थमभिषिच्यन्ते। अत एवाभिषिक्तान् 'एनान्' राजः सम्राळित्यनेन शब्देन व्यवहरन्ति॥

[क्योंकि वसुओं द्वारा पूर्व दिशा में अभिषेक किया गया] इसलिए इस पूर्व दिशा में जो कोई भी राजा हैं; उन सभी का साम्राज्य के लिए ही इन देवताओं के [पूर्वोक्त] विधान के अनुसरण में अभिषेक किया जाता है और इन्हीं अभिषिक्त राजाओं को 'सम्राट्' कहा जाता है।

दिगन्तरेऽपि देवान्तरैरिन्द्राभिषेकं दर्शयति—

**अथैनं दक्षिणस्यां दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौज्याय तस्मादेतस्यां दक्षिणस्यां दिशि ये के च सत्वतां राजानो भौज्यायैव तेऽभिषिच्यन्ते भोजेत्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनं प्रतीच्यां दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्याय तस्मादेतस्यां प्रतीच्यां दिशि**

ये के च नीच्यानां राजानो येऽपाच्यानां स्वराज्यायैव तेऽभिषिच्यन्ते स्वराळित्येनानभिषिक्तानाचक्षत एतामेव देवाना विहितिमन्वयेनमुदीच्यां दिशि विश्वे देवा. षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्याय तस्मादेतस्यामुदीच्या दिशि ये के च परेण हिमवन्त जनपदा उत्तरकुरव उत्तरमद्रा इति वैराज्यायैव तेऽभिषिच्यन्ते विराळित्येनानभिषिक्तानाचक्षत एतामेव देवाना विहितिमन्वयेनमस्यां ध्रुवायां मध्यमायां प्रतिष्ठाया दिशि साध्याश्चाऽऽप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय तस्मादस्यां ध्रुवायां मध्यमाया प्रतिष्ठाया दिशि ये के च कुरुपञ्चालाना राजान सवशोशीनराणा राज्यायैव तेऽभिषिच्यन्ते राजेत्येनानभिषिक्तानाचक्षत एतामेव देवाना विहितिमन्वयैनमूर्ध्वाया दिशि मरुतश्चाङ्गिरसश्च देवा षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभि पारमेष्ठ्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठायेति स परमेष्ठी प्राजापत्योऽभवत् ॥ इति ।

प्रथमपर्यायवद् व्याख्येयम् । सत्वता' दक्षिणस्या दिशि वर्तमाना प्राणिन सत्वन्नामका[1], तेषा ये राजानोऽभिषिक्तास्त 'भोज' 'इति' अनेन शब्देन व्यवह्रियन्ते । प्रतीच्या दिशि वर्तमाना प्राणिनो नीच्या अपाच्याश्च[2] । निकर्षमञ्चन्तीति 'नीच्या' । अपकर्षमञ्चन्तीति 'अपाच्या' । जात्या निकर्षं । व्यवहारेणापकर्ष । उभयविधाना प्राणिना ये राजान सन्ति, ते 'स्वराडिति' अनेन शब्देन व्यवह्रियन्ते । उदीच्या दिशि 'हिमवन्त परेण' हिमवत्पर्वतपरभागे 'जनपदा' ग्रामविशेषा 'उत्तरकुरव' उत्तरकुरुनामका[3], 'उत्तरमद्रा' उत्तरमद्रनामका सन्ति, तत्रत्या राजानो 'विराट्' 'इति अनेन शब्देन व्यवह्रियन्ते । 'मध्यमा दिक्' मध्यदेश । स च प्राच्यादिभिर्दिग्भि सर्वाभिरपेक्षितत्वेन 'ध्रुव' भवति । तदपेक्षयैव पूर्वा पश्चिमेत्यादिव्यवहार । स च दश सर्वेषा

१ तदेतद् गाथयाभिगीतम्—
'शतानीक समन्तामु मेध्य सात्राजितो हयम् ।
आदत्त यज्ञ काशीना भरत सत्वतामिव ॥ इति' इति शत० ब्रा० १३ ५ ४ २१ ।

२ उड्रा कुन्तलाश्च अपाच्या —इति हे० अभि० चि० ९६१ ।

३ द्र०—अहो सह शरीरेण प्राप्तोऽस्मि परमां गतिम् ।
उत्तरान् वा कुरून् पुण्यानथ वाप्यमरावतीम् ॥ इति महाभा० १३ २८४१
नैवेशिकं सर्वगुणोपपन्नं ददाति वै यस्तु नरो द्विजाय ।
स्वाध्यायचारित्रगुणान्विताय तस्यापि लोका कुरुपूत्तरेषु ॥ इति च तत्रैव २९५८

वैदिक्नामाश्रय. । तत्र ये वशदेशाः[1] उशीनरदेशैश्च सहिताः कुरुपञ्चालदेशाः सन्ति, तेषां देशानां ये राजानः, ते 'राजा' 'इति' अनेन शब्देन व्यवह्रियन्ते । 'ऊर्ध्वायां दिशि' स्वर्गरूपायाम्, मनुष्यस्य सञ्चाराभावात्तत्र राजानो नोदाहृताः । किन्त्विन्द्रस्यैवाभिषेक उक्तः । तस्या दिश्यभिषेकेण 'स.' इन्द्रः 'परमेष्ठी' परमपदेऽवस्थितः, 'प्राजापत्य.' प्रजापतिसम्बन्धी 'अभवत्' ॥

इस [वसुओं द्वारा किए गए अभिषेक] के अनन्तर इस [इन्द्र] का दक्षिण दिशा में रुद्र नामक देवों ने छः और पचीस अर्थात् इकत्तीस दिनों तक इसी तृच से, इसी यजु से और इन्हीं व्याहृतियों से भोग-समृद्धि के लिए अभिषेक किया । [क्योंकि रुद्रों द्वारा दक्षिण दिशा में अभिषेक किया गया] इसलिए इस दक्षिण दिशा में जो कोई भी सात्वत [दक्षिण में रहने वाले प्राणियों को 'सत्वत' कहते हैं उनके] राजा हैं; उन सभी का भोग समृद्धि के लिए इन [रुद्रादि] देवों के [पूर्वोक्त] विधान के अनुसार ही अभिषेक किया जाता है और ये ही अभिषिक्त राजा 'भोज' इस शब्द से अभिहित होते हैं ।

इस [रुद्रों द्वारा किए गए अभिषेक] के अनन्तर इस [इन्द्र] का पश्चिम दिशा में आदित्य नामक देवों ने छः और पचीस अर्थात् इकत्तीस दिनों तक इसी तृच से, इसी यजु से और इन्हीं व्याहृतियों से स्वराज्य के लिए अभिषेक किया । [क्योंकि आदित्यों द्वारा पश्चिम दिशा में अभिषेक किया गया] इसलिए इस पश्चिम दिशा में जो कोई भी नीच्यों और जो अपाच्यों के राजा होते हैं उन्हें स्वराज्य की प्राप्ति के लिए इन [आदित्य] देवों के [पूर्वोक्त] विधान के अनुसार ही अभिषिक्त किया जाता है और ये ही अभिषिक्त होने पर 'स्वराट्' इस शब्द से अभिहित होते हैं ।

इस [आदित्यों द्वारा किए गए अभिषेक] के अनन्तर इस [इन्द्र] का उत्तर दिशा में विश्वे देव नामक देवताओं ने छः और पचीस अर्थात् इकत्तीस दिनों तक इसी तृच से, इसी यजु से, और इन्हीं व्याहृतियों से वैराज्य [प्रभुसत्ता] के लिए अभिषेक किया । [क्योंकि विश्वे देवों द्वारा उत्तर दिशा में अभिषेक किया गया] इसलिए इस उत्तर दिशा में जो कोई भी राजा हिमालय पर्वत के ऊपरी भाग में स्थित उत्तर कुरु और उत्तरमद्र नामक ग्रामविशेषों के हैं; उन्हें वैराज्य [प्रभुसत्ता] के लिए ही इन [विश्वे देवों] के [पूर्वोक्त] विधान के अनुसार ही अभिषिक्त किया जाता है और ये ही अभिषिक्त होने पर 'विराट्' इस शब्द से अभिहित होते हैं ।

इस [विश्वेदेवों द्वारा किए गये अभिषेक] के अनन्तर इस [इन्द्र] का इस मध्य की निश्चल एवं प्रतिष्ठित दिशा में साध्य और आप्त्य नामक देवों ने छः और पचीस अर्थात्

१. मद्र इत्यस्यैवाक्षरविपर्ययेणेकारद्वययोगेन च महाभारतादौ प्रसिद्धः किं शिविरिति ? तथा ह्यादिपर्वणि 'शिविरौशीनर.' — इति ३६६९ ।

इक्कीस दिनों तक इसी तृच से, इसी यजु से और इन्हीं व्याहृतियों से राज्य के लिए अभिषेक किया। [क्योंकि साध्यों और आप्त्यों द्वारा मध्य की दिशा में अभिषेक किया गया] इसलिए इस मध्य की निश्चल एवं प्रतिष्ठित दिशा में जो कोई भी राजा वश देश और उशीनर देश के सहित कुरु पाञ्चाल देशों के हैं उन सभी के राज्य के लिए ही इन [साध्य एवं आप्त्य देवों] के [पूर्वोक्त] विधान के अनुसार ही अभिषेक किया जाता है और ये ही अभिषिक्त होने पर 'राजा' शब्द से अभिहित होते हैं।

इस [साध्यों एवं आप्त्यों द्वारा किए गये अभिषेक] के अनन्तर इस [इन्द्र] का [स्वर्ग रूपी] ऊर्ध्व की दिशा में मरुत् और अङ्गिरस देवों ने छ और पचीस अर्थात् इकतीस दिनों तक इसी तृच से, इसी यजु से और इन्हीं व्याहृतियों से प्रजापति के लोक की प्राप्ति के लिए, महान् ऐश्वर्य के लिए, आधिपत्य के लिए, अपरतन्त्रता और चिरकाल तक इस लोक में वास के लिए अभिषेक किया। उस दिशा में अभिषेक के कारण वह इन्द्र परम पद में अवस्थित होकर प्रजापति के सम्बन्धी हो गय।

कृत्स्नमिन्द्राभिषेकं निगमयति—

**स एतेन महाभिषेकेणाभिषिक्त इन्द्रः सर्वा जितीरजयत् सर्वाँल्लोकानविन्दत् सर्वेषां देवानां श्रैष्ठ्यमतिष्ठां परमतामगच्छत् साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यं जित्वाऽस्मिँल्लोके स्वयंभूः स्वराळमृतोऽमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्, समभवत् ॥ १४ ॥ इति।**

पूर्वोक्ताभिषेकेणाभिषिक्त इन्द्रो 'जितीः' जतव्याः सर्वा युद्धभूमीरजयत्। तेन जयेन सर्वाँल्लोकान् 'अविन्दत्' अलभत। देवानां मध्ये 'श्रैष्ठ्यम्' अतिशयेन प्रशस्तत्वम्, 'अतिष्ठां' सर्वानतिक्रम्यावस्थानं 'परमताम्' उत्कृष्टत्वमगच्छत्। जात्या उत्तमत्वं श्रैष्ठ्यम्। गुणैरुत्तमत्वं परमत्वम्। साम्राज्यादीनि पदानि अस्मिँल्लोके 'जित्वा' प्राप्य, 'स्वयंभूः' प्रजापतिरूपः, 'स्वराट्' स्वतन्त्रराजः, 'अमृतः' इतरमनुष्यवदल्पकाले मरणरहितः सन् 'अमुष्मिन्' परोक्षे स्वर्गे लोके सर्वान् 'कामान्' भोगान् प्राप्य 'अमृतः' मरणरहितो मुक्तः समभवत्। अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकायाः तृतीयाध्याये (अष्टात्रिंशाध्याये) तृतीयः खण्डः ॥ ३ ॥ (१४) [२७१]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यादेशतो सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाशे' नाम भाष्ये ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकायाः (अष्टात्रिंशोऽध्यायः) तृतीयोऽध्यायः ॥ ३ ॥

इस [पूर्वोक्त] महाभिषेक से अभिषिक्त उन इन्द्र ने जीतने योग्य सभी लड़ाइयों को जीता और उस [विजय] से सभी लोकों को प्राप्त किया। सभी देवों के मध्य [जातित] श्रेष्ठता, सभी के ऊपर के पद को और [गुणों में] उत्कृष्टता के पद को प्राप्त किया। इस[भू]लोक में साम्राज्य की भोग समृद्धि को, स्वराज्य को, वैराज्य [=प्रभुसत्ता] को, प्रजापति के लोक को, राज्य को, महान् ऐश्वर्य को और आधिपत्य को प्राप्त करके [वह इन्द्र] प्रजापति रूप, स्वतन्त्र राजा और [अन्य मनुष्यों के समान अल्पकाल में] मरणरहित होकर उस [स्वर्ग] लोक में सभी कामनाओं को प्राप्त करके अमर हो गये।

॥ इस प्रकार ऐतरेयब्राह्मण के अष्टमपञ्चिका के तृतीय (अड़तीसवें) अध्याय की डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ३ ॥

—:०:—

# अथ चतुर्थोऽध्यायः

## प्रथमः खण्डः

—ः०ः—

# [अथ एकोनचत्वारिंशोऽध्यायः

## प्रथमः खण्डः]

पुरुषार्थाभिषेकार्थमादावैन्द्राभिषेचनम् ।

उक्तमत्र पुमर्थोऽयमभिषेक उदीर्यते ॥ १ ॥

तमभिषेक विधत्ते—

**स य इच्छेदेवंवित् क्षत्रियमयं सर्वा जितीर्जयेतायं सर्वाँल्लोकान् विन्देतायं सर्वेषां राज्ञां श्रेष्ठ्यमतिष्ठां परमतां गच्छेत साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुष आऽन्तादा परार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराळिति तमेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वाऽभिषिञ्चेत् ॥** इति ।

'एवंविद्' इन्द्रसम्बन्धिमहाभिषेकविद् 'यः' आचार्यः क्षत्रियं प्रति सर्वजयादिफलमिच्छेत् । 'स' आचार्यः क्षत्रियमेतं 'शापयित्वा' शपथं कारयित्वा 'एतेन' पूर्वोक्तेनेन्द्रसम्बन्धिना महाभिषेकविधानेन 'तं' क्षत्रियमभिषिञ्चेत् । कीदृशी फलेच्छेति ? साऽभिधीयते—'अयं' क्षत्रियो जेतव्या सर्वा युद्धभूमीर्जयेत् । तथा 'सर्वाँल्लोकान्' देशविशेषाल्लँभेत । 'सर्वेषां' राज्ञां मध्ये श्रैष्ठ्याद्याधिपत्यान्तगुणयुक्तो भवेत् । 'समन्तपर्यायी' दशसु कालत सर्वव्यापी स्यात् । 'आ अन्तात्' समुद्रतीरपर्यन्तं सार्वभौमत्व देशव्याप्तिः 'आपरार्धात्' परार्धशब्दाभिधयकालसङ्ख्यापर्यन्तं सार्वायुष्ट्व कालव्याप्तिः । एवंविधो भूत्वा समुद्रपर्यन्ताया पृथिव्या एक एव राजा अस्तु 'इति' अनयेच्छयाऽऽचार्यो महाभिषेकेण तमभिषिञ्चेत् ॥

राजा का महाभिषेक—

VIII १५ [XXXIX १] जो पुरोहित इस प्रकार [ऐन्द्र महाभिषेक को] जानता हुआ यह चाहे कि यह क्षत्रिय सग्राम में सभी जीतने योग्य भूमि को जीत ले, सभी लोकों [देश विशेषों] को ले ले, और सभी राजाओं में श्रेष्ठ होए, और सभी राजाओं में उत्कृष्टता एव बड़प्पन को प्राप्त करे, और साम्राज्य, भोग समृद्धि, स्वराज्य, प्रभुसत्ता,

प्रजापति के लोक की प्राप्ति, राज्य, महान् ऐश्वर्य और आधिपत्य को प्राप्त करे, वह [देशत एवं कालत] सर्व व्यापी होए, सभी भूमि का स्वामी, पूर्ण आयु वाला समुद्र तीरपर्यन्त एक छोर से दूसरे छोर तक पृथ्वी पर अनन्तकाल तक एकछत्र शासक होए तो उस आचार्य को चाहिए कि इस क्षत्रिय को इस [पूर्वोक्त] इन्द्र सम्बन्धी महाभिषेक के विधान के द्वारा [निम्न प्रकार से] शपथ दिलाकर अभिषेक करे—

शापयित्वेति यदुक्तं तमेव शपथप्रकारं दर्शयति—

या च रात्रीमजायेथा या च प्रेतासि तदुभयमन्तरेणेष्टापूर्तं ते लोकं सुकृत-मायुः प्रजां वृञ्जीय यदि मे द्रुह्येरिति ॥ इति ।

अभिषिच्यमान, हे क्षत्रिय, यद्याचार्याय मे 'द्रुह्येः' द्रोहं कुर्याः, तदानीं त्वं 'या रात्रिमजायेथा' यस्यां रात्रावुत्पन्नोऽसि 'यां च रात्रिं प्रेतासि' यस्यां रात्रौ मरिष्यसि, तदुभयमन्तरेण उत्पत्तिमरणदिनयोर्द्वयोर्मध्ये 'ते' तव 'इष्टापूर्तं' श्रौतस्मार्तकर्मद्वयं, तथा पुण्यलोकं, तद्धेतुभूतमन्यदपि सुकृतं, दीर्घमायुः, 'प्रजां' पुत्रादिकां 'वृञ्जीय' त्वत्तो वर्जयेयम् 'इति' एतदाचार्यस्य वाक्यम् । तदेतदङ्गीकारयित्वा पश्चादभिषिञ्चेत् ॥

'हे अभिषिच्यमान क्षत्रिय, जिस रात्रि को तुम पैदा हुए उससे लेकर जिस [रात्रि] को तुम मरोगे उस समय तक जो कुछ तुमने इस लोक में श्रौत या स्मार्त कर्म किया है तथा जो कुछ भी सुकृत [पुण्य] किया है, या जो दीर्घ आयु प्राप्त की है, अथवा [पुत्र पौत्र आदि] प्रजा प्राप्त हुई है, उस सबको मैं छीन लूंगा, यदि तुमने मुझसे द्रोह किया। इस प्रकार उससे स्वीकारोक्ति लेने के बाद ही अभिषेक करे] ।

आचार्यः क्षत्रियार्थं यादृशीं फलपरम्परां कामयित्वा शपथं कारयति । क्षत्रियोऽपि तादृशीं फलपरम्परां कामयमानः शपथं कुर्यात् । तदेतत्क्षत्रियवाक्यं दर्शयति—

स य इच्छेदेवंवित् क्षत्रियोऽहं सर्वा जितीर्जयेयमहं सर्वाँल्लोकान् विन्देयमहं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छेयं साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यमहं समन्तपर्यायी स्यां सार्वभौमः सार्वायुष आऽन्तादा परार्धात् पृथिव्यै समुद्रपर्यन्ताया एकराळिति, स न विचिकित्सेत्, स ब्रूयात् सह श्रद्धया, यां च रात्रीमजायेऽहं, यां च प्रेतास्मि, तदुभयमन्तरेणेष्टापूर्तं मे लोकं सुकृतमायुः प्रजां वृञ्जीथा यदि ते द्रुह्येयमिति ॥ १५ ॥ इति ।

'यः' क्षत्रियः 'एवंवित्' महाभिषेकमाहात्म्याभिज्ञः, सर्वजयादिकं समुद्रपर्यन्तपृथिव्यामेकराजत्वपर्यन्तं फलजातमिच्छेत् । पूर्वत्राऽऽचार्यवाक्यत्वाज्जयेत विन्देतेत्यादिप्रथमपुरुषप्रयोगः । अत्र तु क्षत्रियवाक्यत्वाज्जयेयमित्याद्युत्तमपुरुषप्रयोगः । 'सः' क्षत्रियः फलकामी 'न विचिकित्सेत्' आचार्योक्तेऽर्थे संशयं न कुर्यात् । 'सः' क्षत्रियः आचार्यस्या

मोह शपथमेव कुर्यात्—हे आचार्या, अहं यदि ते द्रुह्येयम्, तदानीं त्वं मम जन्ममरण-मध्यवर्तीष्टापूर्तादिकं सर्वं 'वृञ्जीथा' नाशये, इति श्रद्धया सहितं शपथं ब्रूयात् ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टम-पञ्चिकाया चतुर्थाध्याये (एकोनचत्वारिंशाध्याये) प्रथम खण्ड ॥१॥ (१५) [२७२]

जो क्षत्रिय इस प्रकार से [महाभिषेक के माहात्म्य को] जानता हुआ यह चाहे कि मैं सभी संग्राम को जीत लूं, सभी लोकों को मैं प्राप्त कर लूं, मैं सभी राजाओं में श्रेष्ठता, उत्कृष्टता एवं बड़प्पन को प्राप्त करूं, मैं साम्राज्य, भोगसमृद्धि, स्वराज्य, प्रभुसत्ता, प्रजापति के लोक की प्राप्ति, ऐश्वर्य, महान् ऐश्वर्य और आधिपत्य को प्राप्त करूं, मैं सर्वव्यापी होऊं, मैं सभी भूमि का स्वामी, पूर्ण आयु वाला, समुद्रतीरपर्यन्त एक छोर से दूसरे छोर तक, पृथ्वी पर अनन्तकाल तक एकछत्र शासक होऊं तो उस क्षत्रिय को बिना शंका किए ही श्रद्धा के साथ बोलना चाहिए कि—हे आचार्य, जिस रात्रि को हमने जन्म लिया और जिस रात्रि को मैं मरूंगा उन दोनों के मध्य किए हुए श्रौत और स्मार्त कर्म, मेरे [पुण्य से] अर्जित लोक, सुकृत, आयु और मेरी प्रजा को नष्ट कर देना यदि मैं तुमसे द्रोह करूं।

॥ इस प्रकार उन्तालीसवें (चतुर्थ) अध्याय के प्रथम खण्ड की हिन्दी व्याख्या पूर्ण हुई॥१॥

## अथ द्वितीयः खण्डः

संभारान् विधत्ते—

अथ ततो ब्रूयाच्चतुष्टयानि वानस्पत्यानि सभरत—नैयग्रोधान्यौदुम्बरा-ण्याश्वत्थानि प्लाक्षाणीति ॥ इति ।

'अथ' क्षत्रियशपथानन्तरम्, यद् आचार्येणाभिषेक कर्तव्य, 'तत' कारणादाचार्यः परिचारकान् ब्रूयात्—वनस्पतिसम्बन्धीनि न्यग्रोधादीनि फलानि चतुर्विधानि हे परिचारका, संपादयतेति ॥

viii १६ [xxxix २] इस [क्षत्रिय के शपथ] के अनन्तर [क्योंकि आचार्य द्वारा अभिषेक करना है] इसलिए आचार्य [परिचारकों से] कहे—हे परिचारकों, वनस्पति सम्बन्धी चार प्रकार की सामग्री को इकट्ठा करो—१ न्यग्रोध (बरगद), २ उदुम्बर, ३ पिप्पल, ४ प्लक्ष (पकड़ी) [के फल]।

तत्र वृक्षचतुष्टयं क्रमेण प्रशंसति—

क्षत्रं वा एतद्वनस्पतीनां यन्न्यग्रोधो, यन्नैयग्रोधानि सम्भरन्ति, क्षत्रमेवा-स्मिंस्तद्दधाति, भौज्यं वा एतद्वनस्पतीनां यदुदुम्बरो, यदौदुम्बराणि सम्भरन्ति, भौज्यमेवास्मिंस्तद्दधाति, साम्राज्यं वा एतद्वनस्पतीनां यदश्वत्थो, यदाश्वत्थानि सम्भरन्ति, साम्राज्यमेवास्मिंस्तद्दधाति, स्वाराज्यं च ह वा

एतद्वैराज्यं च वनस्पतीनां यत्प्लक्षो, यत्प्लाक्षाणि सम्भरन्ति, स्वाराज्य-वैराज्ये एवास्मिंस्तद्दधाति ॥ इति ।

न्यग्रोधस्य वनस्पतीनां मध्ये राजवद् व्याप्याधिपत्यात् क्षत्रत्वम् । उदुम्बरादीनां भोज्यादिसाधनत्वात् तद्रूपत्वम् । अनन्तरोक्तफलसम्पादनेन यजमाने क्षत्रभोज्यादीनि फलानि संपादयति ॥

जो यह न्यग्रोध है, वह वनस्पतियों में क्षत्रिय है, जो न्यग्रोध को लाता है तो इस प्रकार वह वस्तुत इस [क्षत्रिय] में क्षत्रियत्व ही स्थापित करता है। जो यह उदुम्बर को लाता है, वह वनस्पतियों में भोग समृद्धि है, अत जो उदुम्बर को लाता है तो वस्तुत इस प्रकार वह इस [क्षत्रिय] में भोग समृद्धि को ही स्थापित करता है। जो यह अश्वत्थ है, वह वनस्पतियों में साम्राज्य स्वरूप है, अत जो अश्वत्थ [पीपल] को लाता है तो वस्तुत इस प्रकार वह इस [क्षत्रिय] में साम्राज्य का ही स्थापित करता है। जो यह प्लक्ष [पकडी] है वह वनस्पतियों में स्वराज्य और वैराज्य [प्रभुत्व] रूप है। अत जो प्लक्ष को लाता है तो वस्तुत वह इस प्रकार इस [क्षत्रिय] में स्वराज्य और वैराज्य को ही स्थापित करता है।

सभारान्तराणि विधत्ते—

अथ ततो ब्रूयाच्चतुष्टयान्यौषधानि सम्भरत तोक्मकृतानि,—व्रीहीणां, महाव्रीहीणां, प्रियङ्गूनां, यवानामिति ॥ इति ।

'अथ' न्यग्रोधादिफलसंपादनानन्तरं, यतो व्रीह्याद्यङ्कुरसंपादनमपेक्षितं, 'ततः' आचार्य एव ब्रूयात्,—हे परिचारकाः, तोक्मकृतानि अङ्कुरनिमित्तानि ओषधिद्रव्याणि चतुर्विधानि संपादयत। सूक्ष्मबीजरूपा 'व्रीहयः'। प्रौढबीजरूपा 'महाव्रीहयः'। प्रियङ्गवो यवाश्च प्रसिद्धाः ॥

इस [न्यग्रोध आदि फलों के संपादन] के अनन्तर [क्योंकि व्रीहि आदि अंकुर लाना है] अत आचार्य इस प्रकार कहे—हे परिचारको, चार प्रकार के अंकुर रूप ओषधि-द्रव्यों को लाओ—१ व्रीहि [चावल], २ बड़ा चावल, ३ प्रियङ्गू [एक प्रकार की लता या बड़ी पीपल] और ४ जौ।

चतुर्विधमोषधिद्रव्यं प्रशंसति—

क्षत्रं वा एतदोषधीनां यद्व्रीहयो, यद्व्रीहीणां तोक्मं सम्भरन्ति, क्षत्रमेवास्मिंस्तद्दधाति, साम्राज्यं वा एतदोषधीनां यन्महाव्रीहयो, यन्महाव्रीहीणां तोक्मं सम्भरन्ति, साम्राज्यमेवास्मिंस्तद्दधाति, भौज्यं वा एतदोषधीनां यत्प्रियङ्गवो यत्प्रियङ्गूनां तोक्मं सम्भरन्ति, भौज्यमेवास्मिंस्तद्दधाति, सैनान्यं वा एतदोषधीनां यद्यवा, यद्यवानां तोक्मं सम्भरन्ति, सैनान्यमेवास्मिंस्तद्दधाति ॥ १६ ॥ इति ।

ओषधीनां मध्ये व्रीहीणां बलहेतुत्वात् क्षत्रत्वम् । महाव्रीह्यादीनामप्यनुष्ठानद्वारा साम्राज्यहेतुत्वात्तद्रूपत्वम् । अतो व्रीह्यादितोक्मनामङ्कुराणां संपादनेन यजमाने क्षत्रसाम्राज्यादिक सर्वं संपादयति ॥

*॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया चतुर्थाध्याये (एकोनचत्वारिंशाध्याये) द्वितीय खण्ड ॥ २ ॥ (१६) [ २७३ ]*

जो यह व्रीहि है वह ओषधियों में [बलकारक होने से] क्षत्रिय है, जो व्रीहि का अंकुर लाता है तो इस प्रकार वह इस [क्षत्रिय] में वस्तुत क्षत्रियत्व को ही स्थापित करता है । जो यह महाव्रीहि है वह ओषधियों में [अनुष्ठान द्वारा] साम्राज्य रूप है, जो महाव्रीहि का अंकुर लाता है तो वस्तुत इस प्रकार वह इस [क्षत्रिय] में साम्राज्य को ही स्थापित करता है । जो यह प्रियगु है, वह ओषधियों में भोग समृद्धि है जो प्रियगु का अकुर लाता है वह इस प्रकार इस [क्षत्रिय]में भोग समृद्धि को ही स्थापित करता है । जो यह जौ है वह ओषधियों में सेनापति है अत जो जौ के अकुर को लाता है तो वस्तुत इस प्रकार वह इस [क्षत्रिय] में सेनापतित्व को ही स्थापित करता है ।

॥ इस प्रकार उन्तालीसवें (चतुर्थ) अध्याय के द्वितीय खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥२॥

## अथ तृतीय खण्ड.[1]

आसन्द्यादिसभारान् विधत्ते—

**अथास्मा औदुम्बरीमासन्दीं सम्भरन्ति तस्या उक्त ब्राह्मणमौदुम्बरश्चमसो वा पात्री वोदुम्बरशाखा, तानेतान् सम्भारान् सम्भृत्यौदुम्बर्यां पात्र्या वा चमसे वा समावपेयुस्तेषु समोप्तेषु दधि मधु सर्पिरातपवर्ष्या आपोऽभ्यानीय प्रतिष्ठाप्यैतामासन्दीमभिमन्त्रयेत ॥** इति ।

'अथ' वानस्पत्यौषधिसभारान तरम् 'अस्मै क्षत्रियायौदुम्बरीमासन्दीं सपादयेयु । 'तस्या ' चाऽऽसन्द्या विधायक 'ब्राह्मण 'प्रादेशमात्रा पादा'—इत्यादिना पूर्वमेवोक्तम्[2] । चतुष्कोणो दण्डयुक्त पात्रविशेषश्चमस [3] । आकारनियमरहिता

१ प्राय एव एव खण्ड किञ्चिद् पाठव्यत्ययेन पूर्वमपि श्रुत , पृ० १२७४ [३८ १]

२ द्र० इत पूर्वम् पृ० १२४१ (३७ १) ।

३. चमसो देवपान '—इति ऋ० १० १६ ८ । औदुम्बरेण चमसन चतुस्रक्तिना'—इति शत० ब्रा० ७ २ ११ २ । न्यग्रोध रोहितक पर्णा यतमकाष्ठनिर्मितश्च स भवति । 'दश चमसान् सवृन्ताश्च —इति कात्या० श्रौ० ९ २ २२ । दश मत '—इति च मातृवसूत्रम् । तथा च ते मुष्टियुक्ता , किञ्च होतु , ब्रह्मण , उद्गातु , मुत्वत , प्रशास्तु , ब्राह्मणाच्छसिन , पोतु , नेष्टु , आग्नीध्रस्य, अच्छावाकस्येति दश । द्र० कात्या० श्रौ० ९ ९ २१, १२ ३ भाष्यम् ।

'पात्री'[1]। तयोः पात्रीचमसयोरन्यतरदौदुम्बरं संपादयेत्। यद्वा, पात्री मृन्मयी, शाखा चौदुम्बरी संपादनीया। ततः पात्रीचमसयोरन्यतरस्मिन् वानस्पत्यौषधिसंभारान् समावपेयुः। समोतेषु तेषु संभारे दध्यादीनां सेचनं कृत्वा चमसं भूमौ प्रतिष्ठाप्यैतामासन्दीं वक्ष्यमाणमन्त्रेणाभिमन्त्रयेत् ॥

viii.१७ [xxxix.३] इस [वनस्पति और ओषधि द्रव्यों को इकट्ठा करने] के बाद इस [क्षत्रिय] के लिए वे उदुम्बर का सिंहासन लाते हैं। उस [आसन्दी] का विधायक ब्राह्मण ['प्रादेशमात्राः पादाः' आदि द्वारा उसका व्याख्यान] पहले किया जा चुका है। उदुम्बर का [चौकोर पात्र] चमस अथवा [आकार के नियम से रहित] पात्र और एक उदुम्बर की शाखा—इन सभी सामग्रियों को इकट्ठा करके [सभी को एक साथ] उदुम्बर के चमस अथवा पात्र में डालते हैं और जब ये एक साथ मिल जायें तब उसे दधि, मधु, घी और धूप में बरसने वाले मेघ का जल लाकर [भूमि पर चमस को] रखकर इस सिंहासन को निम्न मन्त्र से अभिमन्त्रित करे—

त मन्त्र दर्शयति—

बृहच्च ते रथंतरं च पूर्वौ पादौ भवतां, वैरूपं च वैराजं चापरौ, शाक्वर-रैवते शीर्षण्ये, नौधसं च कालेयं चानूच्ये, ऋचः प्राचीनातानाः सामानि तिरश्चीनवायाः, यजूंष्यतीकाशाः, यश आस्तरणं, श्रीरुपबर्हणं, सविता च ते बृहस्पतिश्च पूर्वौ पादौ धारयतां, वायुश्च पूषा चापरौ, मित्रावरुणौ शीर्षण्ये, अश्विनावनूच्ये इति ॥ इति।

इन्द्रासन्दीप्रतिपादकब्राह्मणवदयं मन्त्रो व्याख्येयः[2] ॥

उस [ऋग्रूप सिंहासन] के दो आगे के पाए बृहत् और रथन्तर नाम के सामों[3] के हों, और दो पिछले पाए वैरूप और वैराज सामों के, उस [सिंहासन का पीठ] का सिर टिकाने का दोनों भाग शाक्वर और रैवत सामों के, उसकी दोनों बाँहें (बगल के सहारे) नौधस और कालेय सामों के, उसका ताना [लम्बाई में बिना जाने वाला तन्तु] ऋचाओं का, उसका बाना [तिरछा-तिरछा बिना जाने वाला तन्तु] सामों का, उसके [अतीकाश अर्थात् बिनने में आने वाले] छिद्र यजुओं के, यश इस [सिंहा-

1. पात्री त्रिविधा भवति। तत्र 'इडापात्री' अरत्निमात्री मध्यसङ्गृहीता, 'पुरोडाश-पात्री' प्रादेशमात्री समचतुरस्रा अर्थात् षडङ्गुलपरिमिति परिमण्डलखातवती, 'पिष्ट-पात्री' हविर्धारणी अतिविपुला, सैषाकारनियमरहिता इति विवेकः। द्र० बाल्या० श्रौ० १.३.३६ वृत्ति।
2. द्र० इतः पूर्वम्, १२७५ पृ० (३८.१)। 3. द्र० सामविषये पृ० ६२४।

तन] का बिछौना और पीछे टेकने का तकिया [संपत्ति के अभिमानिनी देवता] श्री [समृद्धि] का हो। सविता और बृहस्पति उस [सिंहासन] के अगले पायों को थामें, वायु और पूषा देव पिछले पायों को, मित्र और वरुण देव शीर्ष भाग को और अश्विन दोनों बगल की बाहों को थामें। [इस प्रकार आठ देव आठ स्थानों को सहारा दें और आठ सामों के आगे पीछे के पैर आदि हों]।

अभिमन्त्रणादूर्ध्वमाचार्यकर्तव्यं दर्शयति—

अथैनमेतामासन्दीमारोहयेत् ॥ इति ।

'अथ' अभिषिक्तम् 'एनं' क्षत्रियमेतस्यामासन्द्यामारूढं कुर्यात् ॥

इस [वैदिक] सिंहासन पर वह [राजा] तब [इन छः मन्त्रों से] आसीन हों।

तत्र मन्त्रं दर्शयति—

वसवस्त्वा गायत्रेण च्छन्दसा, त्रिवृता स्तोमेन, रथंतरेण साम्नाऽऽरोहन्तु, तानन्वारोह साम्राज्याय; रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा, पञ्चदशेन स्तोमेन, बृहता साम्नाऽऽरोहन्तु, तानन्वारोह भौज्यायाऽऽदित्यास्त्वा जागतेन च्छन्दसा, सप्तदशेन स्तोमेन, वैरूपेण साम्नाऽऽरोहन्तु, तानन्वारोह स्वाराज्याय; विश्वे त्वा देवा आनुष्टुभेन च्छन्दसैकविंशेन स्तोमेन, वैराजेन साम्नाऽऽरोहन्तु, तानन्वारोह वैराज्याय, मरुतश्च त्वाऽङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा, त्रयस्त्रिंशेन स्तोमेन, रैवतेन साम्नाऽऽरोहन्तु, तानन्वारोह पारमेष्ठ्याय; साध्याश्च त्वाऽऽप्त्याश्च देवाः पाङ्क्तेन च्छन्दसा, त्रिणवेन स्तोमेन, शाक्वरेण साम्नाऽऽरोहन्तु तानन्वारोह राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठायाऽऽरोहेत्येतामासन्दीमारोहयेत् ॥ इति ।

इन्द्रारोहणमन्त्रवद् व्याख्येयम्[1]। तत्राऽऽरोहणकर्तुरप्रयोज्यत्वात् 'आरोहामि'—इत्युत्तमपुरुषः। अत्र त्वाचार्यप्रयोज्यत्वात् 'आरोह' इति मध्यमपुरुषः। तत्रत्ययोः पञ्चमषष्ठमन्त्रयोरत्र क्रमविपर्यासोऽध्ययनसंप्रदायप्राप्तः[2]। अनेन मन्त्रेणाऽऽचार्य आसन्द्यां क्षत्रियमारोहयेत् ॥

हे आसन्दी [अष्ट] वसु [देवगण] तुम पर गायत्री छन्द, त्रिवृत् स्तोम और रथन्तर साम के साथ चढ़ें; हे राजन्! उनके पश्चात् तुम साम्राज्य [धर्म से प्रजापालन] के लिए चढ़ो। रुद्र [देवगण] तुम पर त्रिष्टुप् छन्द, पञ्चदशस्तोम और बृहत् साम के साथ चढ़ें; हे राजन्! उनके पश्चात् तुम भोग-समृद्धि के लिए चढ़ो। [द्वादश] आदित्य [आदि देवगण] तुम पर जगती छन्द, सप्तदश स्तोम और वैरूप साम के साथ चढ़ें;

---

१,२. द्र० इतः पूर्वम्, पृ० १२७६ (३८.१)।

हे राजन् ! उनके पश्चात् तुम स्वराज्य [अपराधीनत्व] के लिए चढो। विश्वे देव तुम पर अनुष्टुप् छन्द, एकविंश स्तोम और वैराज साम के साथ चढ़, हे राजन् उनके पश्चात् तुम अन्य राजाओं पर प्रभुत्व प्राप्त करने के लिए चढो। मरुद्गण और अङ्गिरस आदि देवगण अतिच्छन्द नामक छन्द, त्रयस्त्रिंशस्तोम और रैवत साम के साथ चढ़ें। हे राजन्! उनके पश्चात् तुम प्रजापति के लोक की प्राप्ति के लिए चढो। साध्य और आप्त्य देवगण तुम पर पङ्क्ति छन्द, त्रिणव स्तोम और शाक्वर साम के साथ चढ़ें, हे राजन्! उनके पश्चात् तुम राज्य के लिए, महान् ऐश्वर्य के लिए, आधिपत्य के लिए, अपरतन्त्रता और चिरकाल तक [इस लोक में] वास के लिए चढो। इस प्रकार इन [छः मन्त्रों] से इस [विदमयी] आसन्दी पर उस [राजा] को [पुरोहित] बैठाए।

आरोहणादूर्ध्वमभ्युत्क्रोशनं विधत्ते

तमेतस्यामासन्द्यामासीनं राजकर्तारो ब्रूयुर्न वा अनभ्युत्क्रुष्टः क्षत्रियो वीर्यं कर्तुमर्हत्यभ्येनमुत्क्रोशामेति, तथेति, तं राजकर्तारोऽभ्युत्क्रोशन्तीमं जना अभ्युत्क्रोशत सम्राजं साम्राज्यं भोजं भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं परमेष्ठिनं पारमेष्ठ्यं राजानं राजपितरं, क्षत्रमजनि, क्षत्रियोऽजनि, विश्वस्य भूतस्याधिपतिरजनि, विशामत्ताऽजन्यमित्राणां हन्ताऽजनि, ब्राह्मणानां गोप्ताऽजनि, धर्मस्य गोप्ताऽजनीति ॥ इति।

राज्ञः कर्तारो 'राजकर्तारः' पितृभ्रात्रादयः। इन्द्रविषयाभ्युत्क्रोशनवाक्यवदिदं वाक्यं व्याख्येयम्[1] ॥

इस [विदमयी] आसन्दी पर आसीन उस [राजा] के प्रति राजा बनाने वाले पुरोहित कहें—'गुणाख्यान की घोषणा से रहित क्षत्रिय [युद्धादि में] पराक्रम करने के योग्य नहीं हो सकता [क्योंकि कीर्ति के बिना शत्रुओं में भय का उदय नहीं होता]। [इसलिए] 'इस [राजा] के गुणों का हम सब कीर्तन करें।' 'हाँ, हाँ, ऐसा ही हो'—इस प्रकार अङ्गीकार करते हुए सभी राजा बनाने वाले उस [राजा] का इस प्रकार गुणाख्यान करते हैं—

'हे मनुष्यो, हम सब जन इस [राजा] के गुणों का कीर्तन करते हैं जो सम्राट् स्वरूप और साम्राज्य करने के योग्य है, जो भोक्ता, भोक्ताओं का पालक, स्वराज स्वरूप, स्वराज्य करने योग्य, विराट् स्वरूप, प्रभुत्व प्राप्त करने योग्य, प्रजापति स्वरूप, प्रजापति के पद का अनुभव करने योग्य, राजा और राजाओं के पालक हैं। इस प्रकार की क्षत्रिय जाति लोक में उत्पन्न हुई है, क्षत्रिय पुरुष उत्पन्न हुआ है, सभी प्राणिजात का अधिपति उत्पन्न हुआ है प्रजाओं का भोक्ता उत्पन्न हुआ है, शत्रुओं का विनाश

---

१. द्र० इत पूर्वम्, पृ० १२७७ (३८.१)।

करने वाला उत्पन्न हुआ है, ब्राह्मणों का रक्षक उत्पन्न हुआ है, [वेदोक्त] धर्म [=नियम] का रक्षक उत्पन्न हुआ है। इस प्रकार यह [गुण कीर्तन मन्त्र] है।

आचार्यस्य क्षत्रियामिमन्त्रणं विधत्ते—

**तमभ्युत्क्रुष्टमेवंविदभिषेक्ष्यन्नेतयर्चाऽभिमन्त्रयेत ॥ १७ ॥ इति।**

पूर्ववद्व्याख्येयम्[1] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया चतुर्थाध्याये (एकोनचत्वारिंशाध्याये) तृतीयः खण्डः ॥३॥ (१७) [२७४]

गुणाख्यान के बाद उस अभिषिक्त होने वाले [राजा] का इस [वक्ष्यमाण 'निषसाद' इत्यादि] ऋचा से [आचार्य] अभिमन्त्रण करे।

॥ इस प्रकार उन्तालीसवें (चतुर्थ) अध्याय के तृतीय खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥३॥

## अथ चतुर्थः खण्डः[2]

एतयर्चेत्युक्त[3] मन्त्रं दर्शयति—

**निषसाद धृतव्रतो वरुणः पस्त्यास्वा। साम्राज्याय, भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठाय, सुक्रतुरिति ॥ इति।**

पूर्ववद्व्याख्येयम्[4] ॥

viii.१८ [xxxix.४] व्रत धारण करने वाले और सभी के अनिष्ट का निवारण करने वाले इन्द्र गृहों में आकर साम्राज्य के लिए, भोग के लिए, स्वराज्य [अपराधीनत्व] के लिए, वैराज्य [प्रभुत्व] के लिए, प्रजापति के लोक की प्राप्ति के लिए, ऐश्वर्य के लिए, महान् ऐश्वर्य के लिए, आधिपत्य के लिए, अपरतन्त्रता और चिरकाल तक [इस लोक में] वास के लिए शुभ सङ्कल्प करके [इस आसन्दी पर] बैठें।

अभिमन्त्रणादूर्ध्वमभिषेकप्रकारं दर्शयति—

**तमेतस्यामासन्द्यामासीनमेवंवित्पुरस्तात्तिष्ठन् प्रत्यङ्मुख औदुम्बर्याऽऽर्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभिषिञ्चतीमा आपः**

---

१ द्र० इत पूर्वम्, पृ० १२७८ (३८ १)।

२ इत पूर्वमप्याम्नात एव खण्ड। तत्र द्वयो पाठभेद च अस्ति पृ० १२७८ (३८ २)।

३ द्र० इत पूर्वम्, पृ० १२६८।

४. द्र० इत पूर्वम्, पृ० १२७९ (३८ २)।

शिवतमा इत्येतेन तृचेन, देवस्य त्वेति च यजुषा, भूर्भुव- स्वरित्येताभिश्च व्याहृतिभि ॥ १८ ॥ इति ।

इन्द्राभिषेकवाक्यवद् व्याख्येयम्[1] ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टम पञ्चिकाया चतुर्थाध्याये (एकोनचत्वारिंशाध्याये) चतुर्थं खण्ड ॥४॥ (१८) [२७५]

इस [विंशमयी] आसन्दी पर उस [राजा] के आसीन हो जाने पर इस प्रकार [अभिषेक के माहात्म्य को] जानने वाला पुरोहित सामने खडे होकर पश्चिम की ओर मुख करके गूलर को पत्ते के सहित गीली शाखा से और उसे सोने की बनी पवित्री से लपेट कर उससे 'इमा आप शिवतमा' आदि तृच से 'देवस्य त्वा' आदि यजु से और 'भूर्भुव'—इन तीन व्याहृतियों से अभिषिंचन करता है ।

॥ इस प्रकार उन्तालीसवें (चतुर्थ) अध्याय के चतुर्थ खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥४॥

## अथ पञ्चमः खण्डः

अभिषेकादूर्ध्वमभिमन्त्रणमाह—

प्राच्या त्वा दिशि वसवो देवा षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभि साम्राज्याय, दक्षिणस्यां त्वा दिशि रुद्रा देवा षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौज्याय, प्रतीच्या त्वा दिश्यादित्या देवा षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभि स्वाराज्याय, उदीच्या त्वा दिशि विश्वे देवा षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्याय, ऊर्ध्वाया त्वा दिशि मरुतश्चाङ्गिरसश्च देवा षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभि पारमेष्ठ्याय, अस्या त्वा ध्रुवाया मध्यमाया प्रतिष्ठाया दिशि साध्याश्चाप्त्याश्च देवा षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय माहाराज्यायाधिपत्याय स्वावश्यायाऽऽतिष्ठायेति स परमेष्ठी प्राजापत्यो भवति ॥ इति ।

अनेन मन्त्रेणाभिमन्त्रित क्षत्रिय परमेष्ठिपदस्य योग्यो भूत्वा प्रजापते सम्बन्धी भवतीति ॥

---

१ द्र० इव पूर्वम्, पृ० १२७९ (३८२) ।

१ ॥ १९ [xxxix ५] पूर्व दिशा में वसु नाम के देवगण छ और पचीस अर्थात् इकतीस दिनों तक इसी तृच से इसी यजु से और इन्हीं व्याहृतियों से साम्राज्य के लिए तुम्हारा अभिषिञ्चन करें। दक्षिण दिशा में रुद्र नामक देवगण छ और पचीस अर्थात् इकतीस दिनों तक इसी तृच से, इसी यजु से और इन्हीं व्याहृतियों से भोग समृद्धि के लिए तुम्हारा अभिषिञ्चन करें। पश्चिम दिशा में [द्वादश] आदित्य आदि देवगण इकतीस दिनों तक इसी तृच से, इसी यजु से और इन्हीं व्याहृतियों से स्वराज्य के लिए तुम्हारा अभिषेक करें। उत्तर दिशा में विश्वे देव इकतीस दिनों तक इसी तृच से, इसी यजु से और इन्हीं व्याहृतियों से वैराज्य [प्रभुत्व] के लिए तुम्हारा अभिषिञ्चन करें। ऊपर की दिशा में मरुद् और आङ्गिरस आदि देव इकतीस दिनों तक इसी तृच से, इसी यजु से और इन्हीं व्याहृतियों से प्रजापति के लोक की प्राप्ति के लिए तुम्हारा अभिषेक करें। इस मध्य को निश्चल एवं प्रतिष्ठित दिशा में साध्य और आप्त्य नामक देव इकतीस दिनों तक इसी तृच से, इसी यजु से और इन्हीं व्याहृतियों से राज्य के लिए, ऐश्वर्य के लिए, आधिपत्य के लिए, अपराधीनत्व और चिरकाल तक इस लोक में वास के लिए तुम्हारा अभिषिञ्चन करें। इस प्रकार [उक्त मन्त्र से अभिमन्त्रित] वह [क्षत्रिय] 'परमेष्ठी' पद के योग्य होकर प्रजापति का सम्बन्धी होता है।

महाभिषेकमुपसंहरति—

स एतेनैन्द्रेण महाभिषेकेणाभिषिक्तः क्षत्रियः सर्वा जितीर्जयति, सर्वांल्लोकान् विन्दति सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छति, साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यं जित्वाऽस्मिँल्लोके स्वयम्भूः स्वराळमृतोऽमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः सम्भवति, यमेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वाऽभिषिञ्चति ॥ १९ ॥ इति।

'य क्षत्रियमाचार्यः स्वद्रोहराहित्याय शपथं कारयित्वेन्द्रसम्बन्धिना महाभिषेकेणाभिषिञ्चति, सोऽभिषिक्तः क्षत्रिय इन्द्रवत् सर्व जयादिफलं प्राप्नोति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया चतुर्थाध्याये (एकोनचत्वारिंशाध्याये) पञ्चम खण्ड ॥५॥ (१९) [२७६]

जिस क्षत्रिय को [आचार्य स्वद्रोहराहित्य की] शपथ दिलाकर इस ऐन्द्र महाभिषेक की विधि से अभिषिक्त करता है, वह इस ऐन्द्र महाभिषेक की विधि से अभिषिक्त क्षत्रिय सभी युद्धों को जीतता है, सभी लोकों को प्राप्त करता है, सभी राजाओं में श्रेष्ठता एवं उत्कृष्ट पद को प्राप्त करता है, वह साम्राज्य, भोगसमृद्धि, स्वराज्य, वैराज्य,

प्रजापति के लोक की प्राप्ति, राज्य, महान् ऐश्वर्य और आधिपत्य को इस लोक में जीतकर उस स्वर्ग लोक में स्वयंभू, स्वराट् और अमृत होकर अपनी सब कामनाओं को प्राप्त करके अमर हो जाता है।

॥ इस प्रकार उन्तालीसवें (चतुर्थ) अध्याय के पाँचवें खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥५॥

## अथ षष्ठः खण्डः

अभिषेकसाधनानि दध्यादिद्रव्याणि प्रशंसति—

**इन्द्रियं वा एतदस्मिँल्लोके यद्दधि, यद्दध्नाऽभिषिञ्चतीन्द्रियमेवास्मिंस्तद्दधाति; रसो वा एष ओषधिवनस्पतिषु यन् मधु; यन् मध्वाऽभिषिञ्चति रसमेवास्मिंस्तद्दधाति, तेजो वा एतत्पशूनां यद्घृतं, यद्घृतेनाभिषिञ्चति तेज एवास्मिंस्तद्दधाति, अमृतं वा एतदस्मिँल्लोके यदापो, यदद्भिरभिषिञ्चत्यमृतत्वमेवास्मिंस्तद्दधाति ॥ इति ।**

दध्न इन्द्रियपाटवहेतुत्वाद् इन्द्रियत्वम् । मधुनः पुष्पजन्यत्वेनौषधिवनस्पतिरसत्वम् । घृतस्य स्निग्धभास्वरत्वेन पशुतेजस्त्वम् । जलस्य चाऽऽयुष्यहेतुत्वादमृतत्वम् । एतैर्द्रव्यैरभिषिक्ते सति यजमान इन्द्रियादीनि संपादयति ॥

VIII.२० [XXX ४ ६] जो यह दधि है, वह इस लोक में [इन्द्रियों की पटुता का हेतुभूत होने से] इन्द्रिय है; अतः जो यह दधि से अभिषिञ्चन करता है तो वस्तुतः इस प्रकार उस [अभिषेक] से वह इस [क्षत्रिय] में इन्द्रिय को ही स्थापित करता है। जो यह मधु है वह ओषधियों और वनस्पतियों में रस है। अतः जो वह मधु से अभिषिञ्चित करता है तो वस्तुतः इस प्रकार उस [अभिषेक] से वह इस [क्षत्रिय] में रस को ही स्थापित करता है। जो यह घृत है वह पशुओं का तेज है, अतः जो घृत से अभिषिञ्चित करता है तो वस्तुतः इस प्रकार उस [अभिषेक] से वह इस [क्षत्रिय] में तेज को ही स्थापित करता है। जो यह जल है वह इस लोक में अमृत है, अतः जो जल से अभिषिञ्चन करता है तो वस्तुतः इस प्रकार उस [अभिषेक] से वह इस [क्षत्रिय] में अमृतत्व को ही स्थापित करता है।

आचार्याय दक्षिणादानं विधत्ते—

**सोऽभिषिक्तोऽभिषेक्त्रे ब्राह्मणाय हिरण्यं दद्यात्, सहस्रं दद्यात्, क्षेत्रं चतुष्पाद्दद्याद्, अथाप्याहुरसंख्यातमेवापरिमितं दद्यादपरिमितो वै क्षत्रियोऽपरिमितस्यावरुद्ध्या इति ॥ इति ।**

हिरण्यस्यैव सख्या सहस्रमिति, सहस्रनिष्कपरिमितमित्यर्थः[१]। चतुष्पाच्छब्देन गवादिकमभिधीयते। पूर्वोक्तसहस्रपक्षमपेक्ष्याधिकाभिप्रायेणासख्यातमिति पक्षान्तरमुक्तम्। तस्यैव व्याख्यानमपरिमितमिति। इयदेवेति सख्यानियमो नास्ति, किंतु स्वशक्त्यनुसारेण प्रभूतमेव दद्यात्। क्षत्रियो हि देशाधिपतित्वेन 'अपरिमित' बहुधनयुक्त, अत 'अपरिमितस्य' प्रभूतस्य फलस्य सिद्धयर्थमित्यमभिप्रायेण पक्षान्तरम्॥

अभिषिक्त होने पर उसे अभिषेक कराने वाले ब्राह्मण को [दक्षिणा में] सुवर्ण देना चाहिए। उसे हजार [निष्क परिमित सुवर्ण मुद्रा] देनी चाहिए। भूमि और चौपाए पशु [गाय, घोड़े आदि] देना चाहिए। इसके अतिरिक्त ब्रह्मवादियों का भी कथन है कि उसे सख्यारहित ही अपरिमित [दक्षिणा] देनी चाहिए, क्योंकि क्षत्रिय [देशाधिपति होने से] सीमारहित [अपरिमित] धन वाला है। अत वह इस प्रकार अपरिमित फल की सिद्धि के लिए [अपरिमित दक्षिणा देता है]।

दक्षिणायां दत्तायामाचार्यकर्तव्य दर्शयति—

अथास्मै सुराकस हस्त आदधाति—

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पातवे सुत इति॥ इति।

'अथ' दक्षिणास्वीकारादनन्तरम् 'अस्मै' अस्य क्षत्रियस्य हस्ते सुरया पूर्णं कास्य पात्र 'स्वादिष्ठया' मन्त्रेण स्थापयत्। स च मन्त्र ब्रह्मकाण्डमिपके व्याख्यात[२]॥

इस [दक्षिणा दान] के अनन्तर वह इस [क्षत्रिय] के हाथ में [निम्न मन्त्र से] सुरायुक्त कांस्य पात्र देता है—

'हे सोम! [तुम्हारे समान यह सुरा द्रव्य] अत्यन्त स्वादयुक्त और अत्यन्त मदकारक अपनी धारा से यजमान को पवित्र करे। हे द्रव्यविशेष, इन्द्र के पान के लिए तुम अभिषुत हुए हो।'

क्षत्रियकर्तव्य दर्शयति—

ता पिबेद्—

यदत्र शिष्ट रसिन. सुतस्य, यदिन्द्रो अपिबच्छचीभि,।
इद तदस्य मनसा शिवेन, सोम राजानमिह भक्षयामि॥

---

१ सर्षपा षट् यवो मध्यस् त्रियव त्वेककृष्णलम्।
पञ्चकृष्णलको माषस् ते सुवर्णस्तु षोडश॥
' चतुस्सौवर्णिको निष्क'–इत्यादि मनु० ८।१३३–३८। 'अभिषेचनीये तु द्वात्रिंशत द्वात्रिंशत सहस्राणि पृथड् मुख्येभ्य, षोडश षोडश द्वितीयिभ्य, अष्टावशौ तृतीयिभ्य, चत्वारि चत्वारि पादिभ्य'–इति आश्व० श्रौ० ९।४।३–५।

२ द्र० इत पूर्वम्, पृ० १२५५ (३७४)।

अभि त्वा वृषभा सुते, सुतं सृजामि पीतये ।
तृम्पा व्यश्नुही मदमिति ॥ इति ।

'ता' कांस्यपात्रस्थां सुरां क्षत्रियो वक्ष्यमाणेन मन्त्रद्वयेन पिबेत् । 'अत्र' कांस्यपात्रे 'रसिनः' रसयुक्तस्य 'सुतस्य' अभिषुतस्य व्रीह्याद्यङ्कुरजन्यस्य पेयद्रव्यस्य, यत् 'रिप्तं' शीघ्रत्वस्थितो भागः । 'यत्' च द्रव्य 'शचीभि' कर्मविशेषैः संस्कृतमिन्द्रोऽपिबत् । शचीशब्दः कर्मनाम[1] । 'इह' अस्मिन्नभिषेककर्मणि 'सोम राजानं' सोमसदृशम् 'अस्य' पेयद्रव्यस्य, 'तदिद, स्वरूप 'शिवेन' शान्तेन भक्तियुक्तेन मनसा भक्षयामि । सोऽयमेको मन्त्र[2] । हे 'वृषभ' श्रेष्ठेन्द्र, 'त्वाऽभि' त्वामभिलक्ष्य 'सुते' अस्मिन् द्रव्येऽभिषुते सति 'पीतये' तव पानार्थं 'सुतम्' अभिषुत द्रव्य 'सृजामि' त्वद्धस्ते ददामि । 'तृम्प' तेन द्रव्येण तृप्तो भव । 'मद' हर्षं 'व्यश्नुहि' विशेषेण प्राप्नुहि । द्वितीयो मन्त्र.[3] ॥

इस [कांस्य पात्र गत सुरा] को उसे [दो मन्त्रों से] पीना चाहिए—

( ) 'रसयुक्त अभिषुत [व्रीहि आदि के अङ्कुर से निकाले गए] द्रव्य का इस [पात्र] में जो अवशिष्ट[4] रस है और [कर्मविशेषों से संस्कृत जिस [पानस्य रस] का इन्द्र ने पान किया, इस [द्रव्य सम्बन्धी रस] के उस अवशिष्ट भाग को मैं भक्तिपूर्वक एवं प्रसन्न मन से इस [कर्म] में सोम राजा को भावनापूर्वक पीता हूँ ।'

(ii) 'हे श्रेष्ठ इन्द्र ! अभिषुत होने पर तुम्हारे पान के लिए मैं अभिषुत द्रव्य को तुम्हारे हाथ में देता हूँ । अत इस द्रव्य से तृप्त होओ और विशेष रूप से हर्ष को प्राप्त करो ।'

तदिदं पानं प्रशंसति—
यो ह वाव सोमपीथः सुराया प्रविष्ट, सहैवतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य भक्षितो भवति; न सुरा ॥ इति ।

---

१. निघ० २.२.२२ । निरु० ३ १.१; १२.३८ ।
२. वा० सं० १९ ३५ ।
३. ऋ० ८. ४५ २२ ।
४ द्र० यजुर्वेद वाज० संहितायाम् 'रिप्तम्' इति तत्र पाठान्तरम् ।
५. रसोऽस्त्यस्मिन्निति रसी तस्य रसिनो रसवतः सुतस्याभिषुतस्य सोमस्य यत् । सामान्ये नपुंसकत्वम् । यो भाग॰ अत्र सुरायां रिप्तं लिप्तं सोमसम्बन्धि यत् सुराया लग्नम् । यच्च सुरालग्नं सोमांशं शचीभि. कर्मभि शुद्धं कृत्वा इन्द्रः अपिबत् । सोमं राजानमिति द्वितीये षष्ठ्यर्थे अस्य विशेषणत्वात् । अस्य सोमस्य राज्ञः तत् त सुरानिर्गतं सोम शिवेन शुद्धेन मनसा इह यज्ञेऽहं भक्षयामि । सुरासकाशाच्छुद्धं कृत्वा भक्षयामि । इति संहिताभाष्ये उव्वट. ।

'यो ह वाव' यः खलु 'सोमपीथ' सोमस्य पानविशेषः 'सुरायां' सुराद्रव्ये प्रविष्टोऽस्ति । 'एतेन' सोमपानविशेषेण सहैव पूर्वोक्तैन्द्रामिषेकविधानेनाभिषिक्तस्य क्षत्रियस्य द्रव्यविशेषो भक्षितो भवति । न तु सुरा भक्षिता भवति[1] । सोऽयं मन्त्रद्वयस्य महिमा[2] ॥

सुरा द्रव्य में जो सोम का पानविशेष प्रविष्ट है, इस [सोमपानविशेष के साथ ही [पूर्वोक्त] ऐन्द्र महाभिषेक विधान के द्वारा अभिषिक्त क्षत्रिय का द्रव्यविशेष भक्षित होता है; सुरा नहीं [यही दोनों मन्त्रों का माहात्म्य है] ।

पानादूर्ध्वमभिमन्त्रणं विधत्ते—

तां पीत्वाऽभिमन्त्रयेतापाम सोमं, शं नो भवेति ॥ इति ।

'अपाम' 'सोमम्' इत्यृगेका[3] । 'शं नो भवेति' द्वितीया[4] । ताभ्यामभिमन्त्रयेत ॥

उसको पीकर 'अपाम सोमम्' और 'शं नो भव' इन दो मन्त्रों से उसे अभिमन्त्रण करना चाहिए ।

इदानीं दृष्टान्तेन पानं प्रशंसति—

तद्यथैवादः प्रियः पुत्रः पितरं, प्रिया वा जाया पतिं, सुखं शिवमुपस्पृशत्याविस्रसं, एवं हैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य सुरा वा सोमो वाऽन्यद्वाऽन्नाद्यं सुखं शिवमुपस्पृशत्याविस्रसं ॥ २० ॥ इति ।

'तत्' तत्र पाने, अदः, लौकिकं निदर्शनमुच्यते,—यथैव प्रियः पुत्रः शिवं सुखं यथा भवति तथा पितरमुपस्पृशति । प्रिया वा जाया च पतिं यथा स्पृशति । 'शिवं' शान्तं शास्त्रनिषिद्धमार्गेण यत्सुखं, तन्नरकहेतुत्वादुग्रम् । विहितमार्गेण तु तदभावाच्छान्तम् । सुखस्पर्शस्यावधिराविस्रसं इत्यनेनोच्यते । 'आविस्रसं' आ अविस्रसनाद् देहपातपर्यन्तमित्यर्थः । यथा स्पर्शद्वयं दृष्टसुखहेतुः । 'एवं' 'हैव' अनेनैव प्रकारेण पूर्वोक्तैन्द्रमहाभिषेकविधिनाऽभिषिक्तस्य क्षत्रियस्य सुरा वा सोमो वाऽन्यान्यन्नद्रव्याणि वा देहपातपर्यन्तं शान्तसुखस्पर्शप्रदानि ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया चतुर्थाध्याये (एकोनचत्वारिंशाध्याय) षष्ठ खण्डः ॥६॥ (२०) [२७७]

१. 'न वा एतदयो न हिरण्यं, यत् सीसम्, न स्त्री न पुमान्, यत् क्लीबः, न सोमो न सुरा, यत् सौत्रामणीसमृध्यै'—इति तै० ब्रा० १ ८ ५ ३ । 'सुरा सुनोते'—इति निरु० १.४.१ ।

२. 'आम्नायवचनाद् अहिंसा प्रतीयेत'—इति, 'आम्नायवचनादेतद् भवति'—इति च निरु० १.५ १, ७ ७ १ ।

३. ऋ० ८.४८.३ ।　　४. ऋ०. ८.४८ ४ ।

जिस प्रकार लोक में प्रिय पुत्र पिता का अथवा प्रिय स्त्री पति का देहपातपर्यन्त सुखपूर्वक एवं शान्तिपूर्वक आलिङ्गन करती है उसी प्रकार [पूर्वोक्त] ऐन्द्र महाभिषेक की विधि से अभिषिक्त क्षत्रिय का सुरा या सोम अथवा अन्य भोज्यान्न देहपातपर्यन्त सुखपूर्वक एवं शान्तिपूर्वक स्पर्श करते हैं अर्थात् जीवनपर्यन्त शान्ति और सुख प्रदान करते हैं।

॥ इस प्रकार उन्तालीसवें (चतुर्थ) अध्याय के षष्ठ खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥ ६ ॥

## अथ सप्तमः खण्डः

उक्त महाभिषेकं चिरतनशिष्टाचारोदाहरणेन प्रशंसति—

**एतेन ह वा ऐन्द्रेण महाभिषेकेण तुरः कावषेयो जनमेजयं पारिक्षितमभिषिषेच, तस्मादु जनमेजयः पारिक्षितः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे ॥ इति ।**

कवषस्य पुत्रः तुरनामको महर्षिः परिक्षितपुत्रं जनमेजयम्, उक्तविधानेनाभिषिषेच । तस्मादेव कारणाज्जनमेजयः 'सर्वतः' सर्वासु 'दिक्षु पृथिवीं समन्तम्' अन्तेन समुद्रतीरेण संयुक्तं यथा भवति तथा 'जयन्' विजयं प्राप्नुवन् 'परीयाय' परितश्चचार । अभिषेकमाहात्म्येनैव दिग्विजयं कृतवानित्यर्थः । अभिषेकप्रसादादेव 'मेध्येन' यागयोग्येनाश्वेन च 'इजे' इष्टवान् । अश्वमेधं कृतवानित्यर्थः ॥

[ऐन्द्र महाभिषेक का पुरातन इतिहास]—

८।२१ [XXXIX ७] इसी ऐन्द्र महाभिषेक की विधि से कवष के पुत्र तुर नाम के महर्षि ने परीक्षित के पुत्र जनमेजय का अभिषेक किया। उसके फलस्वरूप जनमेजय ने सभी दिशाओं में समुद्रतीरपर्यन्त पृथ्वी को जीत कर चारों ओर विचरण किया [अर्थात् अभिषेक के माहात्म्य से दिग्विजय किया], और [अभिषेक के ही कारण] याग योग्य अश्व से यज्ञ किया [अर्थात् अश्वमेध यज्ञ किया]।

अस्मिन्नर्थे काचिद् गाथामुदाहरति—

**तदेषाऽभि यज्ञगाथा गीयते ॥ इति ।**

'तत्' तस्मिञ्जनमेजयवृत्तान्ते 'एषा' वक्ष्यमाणा 'गाथा' यज्ञविषया गाथाविद्भिः कैरभितो गीयते ॥

उस [जनमेजय] के सम्बन्ध में इस प्रकार यज्ञ विषयक गाथा[1] [वैदिकों द्वारा] गायी जाती है—

---

१. द्र० शत० ब्रा० १३.५.४.२, शाङ्खा० श्रौ० १६.९.१, 'अश्वमाहरद् अश्व सत्त्वम्' इति तत्र पाठान्तरम् ।

तां गाथां दर्शयति—

आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम्।
अश्वं बबन्ध सारङ्गं देवेभ्यो जनमेजय इति ॥ इति।

आसन्दीवानिति देशविशेषस्य नामधेयम्। तस्मिन् देशे जनमेजयो 'देवेभ्यो' देवार्थं यागयोग्यमश्वं बबन्ध। कीदृशमश्वं ? 'धान्यादं' धान्यमेवात्ति। 'रुक्मिणम्' रुक्मशब्देन ललाटगतं श्वेतलाञ्छनमुपलक्ष्यते। तदुक्तम्—हरितवर्णा सस्यस्यासौ 'हरितस्रक्'। पुष्पमालेव वर्णो देहं व्याप्य वर्तत इत्यर्थः। सारं कर्मसु श्रेष्ठं यागं गच्छतीति 'सारङ्गः'। 'इति' अनया गाथया जनमेजयस्याभिषेकमहिमोदाहृतः॥

'आसन्दीवत् नाम के स्थान पर जनमेजय ने धान्य [= अनाज] खाने वाले, माथे पर श्वेत चिह्न वाले, हरित वर्ण की माला के समान देह वाले और कर्मों में श्रेष्ठ याग को जाने वाले [यागयोग्य] अश्व को देवताओं के लिए बाँधा।'

जनमेजयवच्छार्यातनामकं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण च्यवनो भार्गवः शार्यातं मानवमभिषिषेच; तस्मादु शार्यातो मानवः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे देवानां हापि सत्रे गृहपतिरास॥ इति।

भृगोः पुत्रः च्यवननामको महर्षिः मनुवंशोत्पन्नं शार्यातनामकं राजानमभिषिषेच। तस्मात्फलं पूर्ववत्। किं च देवानां सम्बन्धिनि सत्रेऽपि शार्यातो गृहपतिरभूत्॥

इसी ऐन्द्र महाभिषेक की पद्धति से भृगु के पुत्र च्यवन नामक महर्षि ने मनु वंश में उत्पन्न शार्यात नामक राजा का अभिषेक किया। उसके फलस्वरूप मनुवंशोत्पन्न शार्यात ने सभी दिशाओं में समुद्रतीरपर्यन्त पृथ्वी को जीत कर चारों ओर विचरण किया और याग के योग्य अश्व से यजन किया अर्थात् अश्वमेध यज्ञ किया। इसके अतिरिक्त वह देवताओं के यज्ञ में भी गृहपति हुए।

शतानीकनामकं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण सोमशुष्मा वाजरत्नायनः शतानीकं सात्राजितमभिषिषेच, तस्मादु शतानीकः सात्राजितः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे॥ इति।

सोमशुष्मनामकः कश्चिन्महर्षिः। स च वाजरत्नस्य पौत्रः तथाविधो मुनिः सत्राजितः पुत्रं शतानीकनामकं क्षत्रियमभिषिषेच। शेषं पूर्ववत्॥

इसी ऐन्द्र महाभिषेक की पद्धति से वाजरत्न के पौत्र सोमशुष्मा ने सत्राजित के पुत्र शतानीक [नामक क्षत्रिय] का अभिषेक किया। उसके फलस्वरूप सत्राजित के पुत्र शतानीक ने सभी दिशाओं में समुद्रतीरपर्यन्त पृथ्वी को जीतकर चारों ओर विचरण किया और याग के योग्य अश्व से यजन किया अर्थात् अश्वमेध यज्ञ किया।

आम्बाष्ठ्यनामानं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदावाम्बाष्ठ्यमभिषिषिचतुस्तस्मादाम्बाष्ठ्य समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे ॥ इति ।

इसी ऐन्द्र महाभिषेक की विधि से पर्वत और नारद दो महर्षियों ने आम्बाष्ठ्य नामक राजा का अभिषेक किया। उसके फलस्वरूप आम्बाष्ठ्य ने सभी दिशाओं में समुद्रतीरपर्यन्त पृथ्वी को जीतकर चारों ओर विचरण किया और याग के योग्य अश्व से यजन किया [अर्थात् अश्वमेध यज्ञ किया]।

युधांश्रौष्टिनामकमुग्रसेनस्य पुत्रं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदौ युधांश्रौष्टिमौग्रसैन्यमभिषिषिचतुस्तस्माद् युधांश्रौष्टिरौग्रसैन्य समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे ॥ इति ।

इसी ऐन्द्र महाभिषेक की पद्धति से पर्वत और नारद दो महर्षियों ने उग्रसेन के पुत्र युधांश्रौष्टि नामक राजा का अभिषेक किया। उसके फलस्वरूप उग्रसेन के पुत्र युधांश्रौष्टि ने सभी दिशाओं में समुद्रतीरपर्यन्त पृथ्वी को जीतकर चारों ओर विचरण किया और याग योग्य अश्व से यजन किया [अर्थात् अश्वमेध यज्ञ किया]।

भुवनाख्यस्य पुत्रं विश्वकर्मनामकं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण कश्यपो विश्वकर्माणं भौवनमभिषिषेच, तस्मादु विश्वकर्मा भौवनः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन मेध्येनेजे ॥ इति ।

इसी ऐन्द्र महाभिषेक की पद्धति से कश्यप ऋषि ने भुवन के पुत्र विश्वकर्मा नामक राजा का अभिषेक किया। उसके फलस्वरूप विश्वकर्मा भौवन सभी दिशाओं में समुद्रतीरपर्यन्त पृथ्वी को जीतकर चारों ओर विचरण किया और याग योग्य अश्व से यजन [अर्थात् अश्वमेध यज्ञ] किया।

भौवनाभिषेकमाहात्म्यं प्रशंसितुं पुरातनमहर्षिप्रोक्तमुदाहरणं दर्शयति—

भूमिर्हं जगावित्युदाहरन्ति ॥ इति ।

'भूमि' देवता 'जगौ' भौवनं प्रति किंचिद्वाक्यं गाथारूपमुक्तवती 'इति' एवं पूर्वं महर्षय उदाहरन्ति ॥

[भौवन के अभिषेक के माहात्म्य की प्रशंसा में] 'भूमि देवता ने [भौवन के प्रति कुछ] गाथा रूप में कहा'—इस प्रकार कुछ पहले के महर्षि उदाहरण प्रस्तुत करते हैं।

तां गाथां दर्शयति—

न मा मर्त्यः कश्चन दातुमर्हति,
विश्वकर्मन्भौवन मां दिदासिथ।
निमङ्क्ष्येऽहं सलिलस्य मध्ये,
मोघस्त एष कश्यपायाऽऽस सङ्गर इति ॥ इति।

भुवनाख्यस्य पुत्र हे विश्वकर्मन् कश्चिदपि मनुष्यो 'मा' भूमिं दातुं नार्हति। अत एव मीमांसका विचार्य सर्वस्वदाने महाभूमिदानं निवारितवन्तः[१]। एवं सति त्वं 'मां' भूमिं 'दिदासिथ' कश्यपाय त्वदीयाचार्याय दातुमिच्छसि। अहं तु 'सलिलस्य' समुद्रस्य मध्ये 'निमङ्क्ष्ये' निमज्जनं करिष्ये। तथा सति 'ते कश्यपाय' त्वदीयाचार्यस्य कश्यपस्य 'एषः' 'सङ्गरः' भूमिप्रतिग्रहविषयो 'मोघ आस' व्यर्थ एव बभूवेति। 'इति' ईदृशमपि महाभूमिमज्जनं महाभिषेकमहिम्ना निवारितमिति तात्पर्यार्थः ॥

हे भौवन विश्वकर्मन्! मुझे कोई भी मनुष्य किसी को नहीं दे सकता और तुम मुझे दूसरे को देना चाहते हो अरे मैं [समुद्र के पानी] में डूब जाऊँगी। तुम्हारा यह कश्यप को भूमिप्रतिग्रह का प्रयत्न व्यर्थ हो जायगा। [अर्थात् इस प्रकार भूमि का डूबना भी इस महाभिषेक से निवारित हो सका]।

सुदा इत्येतन्नामकं पिजवनस्य पुत्रं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण वसिष्ठः सुदासं पैजवनमभिषिषेच, तस्मादु सुदाः पैजवनः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे ॥ इति।

इसी एन्द्र महाभिषेक की पद्धति से वसिष्ठ ने पिजवन के पुत्र सुदास नामक राजा का अभिषेक किया। उसके फलस्वरूप पैजवन सुदास ने सभी दिशाओं में समुद्रतीर-पर्यन्त पृथ्वी को जीतकर चारों ओर विचरण किया और याग योग्य अश्व से यजन किया [अर्थात् अश्वमेध यज्ञ किया]।

अविक्षिन्नामकस्य पुत्रं मरुत्तनामानं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण संवर्त आङ्गिरसो[२] मरुत्तमाविक्षितमभिषिषेच, तस्मादु मरुत्त आविक्षितः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे ॥ इति।

संवर्तनामको महर्षिरङ्गिरसः पुत्रः ॥

---

१ द्र० जै० सू० ६ ७ २ ३।

२ द्र० वा० रा० उत्तर० १८, महा० वन० १२९ १६। मार्क० १२७ १०, १२६ ११-१२।

इसी ऐन्द्र महाभिषेक की पद्धति से आङ्गिरस के पुत्र संवर्त नामक महर्षि ने अवि-क्षित के पुत्र मरुत्त नामक राजा का अभिषेक किया। उसके फलस्वरूप आविक्षित मरुत्त ने सभी दिशाओं में समुद्रतीरपर्यन्त पृथ्वी को जीतकर चारों ओर विचरण किया और याग योग्य अश्व से यजन किया [अर्थात् अश्वमेध यज्ञ किया]।

तेन कृतं मरुत्ताभिषेकं प्रशंसितुं श्लोकमुदाहरति—

**तदप्येष श्लोकोऽभिगीत ॥** इति।

'तत्' तस्मिन्नपि मरुत्ताभिषेकमाहात्म्ये 'एष' वक्ष्यमाणः 'श्लोकः' पादबद्धो मन्त्र 'अभिगीतः' अभितः सर्वैः पठितः ॥

उस [मरुत्त] के [अभिषेक के माहात्म्य के] सम्बन्ध में भी यह पादबद्धश्लोक सभी वैदिकों द्वारा गाया जाता है'—

तं श्लोकं दर्शयति—

**मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे।**
**आविक्षितस्य कामप्रेर्विश्वे देवाः सभासद इति ॥ २१ ॥** इति।

मरुत्तनाम्नो राज्ञो गृहे मरुत्संज्ञका देवा भोजनकाले परिवेषणकर्तारो भूत्वाऽवसन्। तथैव 'आविक्षितस्य' अविक्षित्पुत्रस्य 'कामप्रेः' सर्वकामपूरितस्य मरुत्तस्य गृहे 'विश्वे' सर्वे देवाः 'सभासद' सभायामुपविश्य सेवन्तः इति शेषः। 'इति' एष सर्वोऽपि महा-भिषेकस्य महिमेत्यभिप्रायः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टम-पञ्चिकाया चतुर्थाध्याये (एकोनचत्वारिंशाध्याये) सप्तम खण्डः ॥७॥ (२१) [२७८]

'मरुत्त नामक राजा के घर मरुत् संज्ञक देव भोजनकाल में घेरे रहते थे। उसी प्रकार कामनाओं की पूर्ति करने वाले अविक्षित के पुत्र मरुत्त के घर पर सभी देव सभासद थे।'

॥ इस प्रकार उन्तालीसवें (चतुर्थ) अध्याय के सातवें खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥७॥

## अथ अष्टमः खण्डः

अङ्गनामकं राजानमुदाहरति—

**एतेन ह वा ऐन्द्रेण महाभिषेकेणोदमय आत्रेयोऽङ्गमभिषिषेच; तस्मा-दङ्गः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वेन च मेध्येनेजे ॥** इति।

उदमयनामकः कश्चिन्महर्षिरत्रेः पुत्रः, अङ्गमभिषिषेच ॥

---

१. द्र० शत० ब्रा० १३.५.४.६। शाङ्खा० श्रौ० १६.९.१६।

VIII.२२ [XXXIX ८] इसी ऐन्द्र महाभिषेक की पद्धति से अत्रि ऋषि के पुत्र उदमय ने अङ्गदेश के राजा का अभिषेक किया। उसके फलस्वरूप अङ्गराज ने सभी दिशाओं में समुद्रतीरपर्यन्त पृथ्वी को जीतकर चारों ओर विचरण किया और याग योग्य अश्व से यजन किया [अर्थात् अश्वमेध यज्ञ किया]।

तस्याङ्गाभिषेकस्य माहात्म्यं दर्शयितुं कंचिद्वृत्तान्तमाह—

स होवाचालोपाङ्गो—दश नागसहस्राणि दश दासीसहस्राणि ददामि ते, ब्राह्मणोप माऽस्मिन् यज्ञे ह्वयस्वेति ॥ इति ।

योऽयमङ्गनामको राजोक्तः 'स' अयम् 'अलोपाङ्गः' सम्पूर्णावयव इत्यर्थः। महदस्याङ्गसौष्ठवम्। स कदाचित्स्वकीयाभिषेककर्तर्युदमयनामके पुरोहिते स्वार्थं यागं कुर्वाणे सति तं प्रत्येवमुवाच—हे ब्राह्मण, 'अस्मिन्' त्वदीये यज्ञे माम् 'उपह्वयस्व' समाह्वानं कुरु। अहमागत्य त्वदीययज्ञे दक्षिणासम्पूर्त्यर्थं तुभ्यं गजसहस्राणि दासीसहस्राणि च ददामीति[1]। सेयं बहुदानसम्पत्तिः, सद्बुद्धिश्च महाभिषेकप्रसादलब्धा ॥

उस सर्वाङ्गपूर्ण अवयव वाले अङ्गराज ने अपने पुरोहित से कहा कि—मैं तुम्हें दस हजार हाथी और दस हजार दासियाँ दूँगा, हे ब्राह्मण! तुम अपने इस यज्ञ में हमें बुलाना। [अर्थात् मैं वहाँ आकर उपर्युक्त दान करूँगा। इस प्रकार यह सद्बुद्धि महाभिषेक से ही प्राप्त हुई है]।

एवमेवार्थं प्रपञ्चयितुं श्लोकानुदाहरति—

तदप्येते श्लोका अभिगीताः ॥ इति ।

तस्मिन्नप्यङ्गराजपुरोहितस्य यागे दानप्रतिपादका 'एते' पञ्च श्लोकाः' 'अभिगीताः' अभितो गीताः सर्वतोऽभिज्ञैः पठिताः ॥

उस [अङ्गराज के पुरोहित] के सम्बन्ध में [याग में दान के प्रतिपादक] ये [पाँच] श्लोक अभिज्ञजनों के द्वारा इस प्रकार पढ़े जाते हैं—

तत्र प्रथमं श्लोकमाह—

यामिर्गोभिरुदमयं प्रैयमेधा अयाजयन्।
द्वे द्वे सहस्रे बद्धानामात्रेयो मध्यतोऽददात् ॥ इति ।

प्रियमेधस्य पुत्राः 'प्रैयमेधाः' महर्षयः, उदमयनामकमङ्गराजपुरोहितं 'यामिर्गोभिः' दक्षिणारूपाभिः 'अयाजयन्'। ता गावो वक्ष्यन्त इति शेषः। 'बद्धम्' इति शतकोटि-

---

१. किन्तु मूले तु 'दश नागसहस्राणि, दश दासीसहस्राणि'—इति विद्यते।

संख्याया नामधेयम्¹। 'बद्वानां' शतकोटिसंख्याकानां गवां मध्ये, प्रतिदिनं द्वे द्वे सहस्रे 'मध्यतः' माध्यंदिनसवनेऽत्रिपुत्र उदमयो दत्तवान् ॥

[प्रियमेध के पुत्रों] प्रियमेध ऋषियों ने उदमय नाम के पुरोहित को जिन गायों के द्वारा यजन कराया; उनके विषय में कहते हैं कि अत्रि के पुत्र उदमय ने सौ करोड़ गायों में से प्रतिदिन दो-दो हजार गाएँ दान कीं।

द्वितीय श्लोकमाह

अष्टाशीतिः सहस्राणि श्वेतान् वैरोचनो हयान्।
प्रष्टीन्निश्चृत्य प्रायच्छद् यजमाने पुरोहिते ॥ इति।

'वैरोचनः' विरोचनस्य पुत्रोऽङ्गनामको राजा, स्वकीयपुरोहिते उदमयनामके यजमाने यागं कुर्वाणे स्वयमागत्याष्टाशीतिसहस्रसंख्याकानश्वाञ्छ्वेतवर्णान् प्रष्टीन् पृष्ठवाहन योग्यवयस्कान्निश्चृत्य स्वकीयाश्वबन्धनस्थानात् मार्यं प्रायच्छद्दत्तवान् ॥

विरोचन के पुत्र अङ्गराज ने अपने पुरोहित उदमय नामक यजमान के याग में स्वयं आकर अट्ठासी हजार सफेद घोड़ों को [अपने घुड़साल से] निकालकर दान कर दिया।

तृतीय श्लोकमाह—

देशाद्देशात्समोहळाना सर्वासामाढ्यदुहितॄणाम्।
दशाददात् सहस्राण्यात्रेयो निष्ककण्ठ्यः ॥ इति।

---

१ दश, [शतं], सहस्रम्, अयुतम्, प्रयुतम्, नियुतम्, अर्बुदम्, न्यर्बुदम्, निखर्वम्, बद्वम्, अक्षितम्। एतास्च संख्या क्रमाद् दशगुणोत्तरा वैदिक्यः (ब्र० ता० ब्रा० १७.१४ २)। तथा च प्रयुतमिति लक्षस्यैव नामान्तरम्, अर्बुदमिति च कोटेर्नामान्तरम्, एवं शतकोटेर्नाम स्यान्निखर्वमिति, तथा बद्वमिति तु पश्चात् सहस्रकोटेरेव नामधेयमिति विचार्यम्। कस्यचिन्मते त्विह बद्वशब्दः स्यात् बद्धमिति बान्तस्यार्थे। तथा च 'बद्वानां' स्थिराणां धानामेरक्षितानां गवामिति, देवयजनमार्गस्थानां गवामिति चार्थः सम्भाव्येत। नान्तबद्वव्याख्यानम्—ता० ब्रा० १.१.६ सा० भा० द्रष्टव्यम्। "चतुरशीत्यधिकैस्त्रयोदशसहस्रैरेकं बद्वं (बद्धं) भवति। यथाहि—'हिरण्येन'''सप्त च (पृ० १३०८ इतः परम्)'—इति श्रुत्युक्तानि सप्ताधिकशतं बद्वानि श्रीगुरेनात्तरश्लोके चतुर्दशलक्षत्वेन सङ्गृहीतानि,—'उदार कर्मणि मष्णारे नियुतानि चतुर्दश'—इति (२८ श्लोक)। एवं चतुर्दशलक्षाणां सप्ताधिकशतभागो बद्वमित्युक्तं भवति। इयच्च बद्वसंख्या श्लोकेन सङ्गृह्यते—

'चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः।
बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदश ॥—इति भाग० पु० ९.२०.३६ श्लोकस्य, १०.७०.९ श्लोकस्य च व्याख्याने स्वामी श्रीधरः।

देशाद्देशाद्दिग्विजयकाले तत्तद्देशविशेषात् 'समोहळाना' सम्यगासमन्तात् ऊढानाम् आनीतानामाढ्यदुहितॄणां धनिकपुत्रीणां सर्वासां दश सहस्राण्यात्रेयोऽपि अङ्गराजपुरोहितो दत्तवान् । ताश्च दुहितरो निष्कण्ठ्य आभरणोपेतकण्ठयुक्ता ॥

[दिग्विजय के समय] देश विदेश से लायी गई सभी धनियों की पुत्रियों को, जो सख्या में दस हजार थीं और कण्ठ में आभरण पहने थीं, अत्रि के पुत्र [अङ्गराज के पुरोहित उदमय] ने दिया ।

चतुर्थं श्लोकमाह—

दश नागसहस्राणि दत्त्वाऽऽत्रेयोऽवचत्नुके ।
श्रान्तः पारिकुटान् प्रैप्सद्दानेनाङ्गस्य ब्राह्मण. ॥ इति ।

अङ्गराजस्य पुरोहितो ब्राह्मण आत्रेय , अवचत्नुकनामदेशे गजसहस्राणि दशसख्याकानि दत्त्वा दानेन श्रान्तः सन् 'पारिकुटान्' परिचारकान् 'प्रैप्सत्' प्रेषितवान् । हे परिचारका यूय दत्तेत्येवमुक्तवानित्यर्थं ॥

अङ्गराज के पुरोहित ब्राह्मण [आत्रे० उदमय] अवचत्नुक नामक प्रदेश में दस हजार हाथियों को देकर जब दान से थक गए तो परिचारकों को भेजा [कि हे परिचारकों, अब तुम दान दो] ।

पञ्चम श्लोकमाह—

शत तुभ्य शत तुभ्यमिति स्मैव प्रताम्यति ।
सहस्र तुभ्यमित्युक्त्वा प्राणान् स्म प्रतिपद्यत इति ॥ २२ ॥ इति ।

परिचारकाणामप्यत्र एकैकशो वक्तुमशक्त , तुभ्य शत तुभ्य शतमिति शतसख्या प्रोक्त्वा तत्रापि प्रताम्यति स्मैव ग्लानिमेव प्राप्तवान् । तत शतसख्यां परित्यज्य सहस्र तुभ्यमित्युक्त्वा तत्रापि सख्याया बहुश प्रोक्तायामाश्रान्त सन् प्राणान् प्रतिपद्यते स्म । मध्ये मध्ये श्रमपरिहाराय दीर्घश्वास कृतवानित्यर्थ । अङ्गराजस्य पुरोहितायाप्येतादृशसामर्थ्यं महाभिषेकप्रसादलब्धमिति तात्पर्यार्थं ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया चतुर्थाध्याये (एकोनचत्वारिंशाध्याये) अष्टम खण्ड ॥८॥ (२२) [२७९]

[परिचारकों में भी एक-एक करके दान देने में अशक्त हो] 'सौ तुमको', 'सौ तुमको'—इस प्रकार [सौ-सौ को साथ में] दान देकर भी जब ग्लानि को ही प्राप्त किया, तब [सौ सख्या छोड़कर] 'हजार तुमको'—यह कहकर [उस सख्या को भी बार-बार प्रयुक्त करने से थक कर बीच बीच में श्रमपरिहार के लिए] दीर्घ निश्वास लिया।

[अभिप्राय यह है कि अङ्गराज के पुरोहित को भी इस प्रकार की सामर्थ्य महाभिषेक के फलस्वरूप प्राप्त हुई]।

॥ इस प्रकार उन्तालीसवें (चतुर्थ) अध्याय के आठवें खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥८॥

## अथ नवमः खण्डः

दुष्यन्तस्य पुत्रं भरताख्यं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण दीर्घतमा मामतेयो भरतं[1] दौष्यन्तिमभिषिषेच, तस्माद् भरतो दौष्यन्ति. समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वैश्च मेध्यैरीजे ॥ इति ।

ममताख्याया स्त्रिया पुत्रो दीर्घतमा इत्येतन्नामा मुनिर्भरतमभिषिषेच । भरतोऽपि दिग्विजयेन पृथिवीं परीत्य मेध्यैरश्वैरपीजे । उ चेति निपातयोः समूहः समुच्चयार्थः ॥

VIII.२२ [XXXIX ९] इसी ऐन्द्र महाभिषेक की पद्धति से ममता नामक स्त्री के पुत्र दीर्घतमा नामक मुनि ने दुष्यन्त के पुत्र भरत का अभिषेक किया। उसके फलस्वरूप दुष्यन्त के पुत्र भरत ने सभी दिशाओं में समुद्रतीरपर्यन्त पृथ्वी को जीतकर चारों ओर विचरण किया और याग योग्य अश्व से यजन किया [अर्थात् अश्वमेध यज्ञ किया]।

भरताभिषेकमाहात्म्यं दर्शयितुं श्लोकानुदाहरति —

तदप्येते श्लोका अभिगीता ॥ इति ।

'तत्' तस्मिन् भरताभिषेकमाहात्म्येऽप्येते वक्ष्यमाणाः पञ्च 'श्लोकाः' अभितः परिगीयन्ते ॥

उन [भरत के अभिषेक] के माहात्म्य में भी य [पाँच] श्लोक [वैदिकों द्वारा] गाए जाते हैं[2]।

तत्र प्रथमं श्लोकमाह—

हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो मृगान्।
मष्णारे भरतोऽददाच्छतं बद्वानि सप्त च ॥ इति ।

मृगशब्देनात्र गजा विवक्षिताः । मृगवदिति बाहुल्यविवक्षया मृगशब्दः । ते च गजाः[3] हिरण्येन परीवृताः सर्वाभरणयुक्ताः, शरीरवृद्धया वर्णोत्कर्षे सत्यप्यत्र कृष्णाः प्रतिभासन्ते । शुक्लाभ्यां दन्ताभ्यां युक्ताः, तादृशान् गजान् मष्णारनामके देशे भरतो राजा दत्तवान् । शतमित्यादि तत्संख्योच्यते । 'बद्व' 'वृन्दम्' इत्येतौ पर्यायौ । वृन्दशब्दश्च शतकोटिवाचित्वेन गणिते ग्रन्थकारैर्दर्शित —

१. 'दौष्यन्ति' –इति वा पाठः ।        २. द्र० शत० ब्रा० १३.५.४.११ ।

३. अत्र किञ्चिद् मानं न पश्यामः ।

"एक दश च शतं च सहस्रं चायुतनियुते तथा ।
प्रयुतकोटयर्बुदं वृन्दं स्थानं स्थानाद्दशगुणं स्यात्"[1] ॥ इति ।

तानि च शतकोटिरूपाणि बद्वानि[2] सप्ताधिकशतसंख्याकानि । तावतो गजान् दत्तवानित्यर्थः[2] ॥

भरत ने मष्णार नाम के स्थान पर सुवर्णालङ्कारों से अलंकृत काले रंग के सफेद दाँत वाले एक सौ सात करोड़ हाथी दिए ।

द्वितीय श्लोकमाह—

भरतस्यैव दौष्यन्तेरग्निं साचीगुणे चितं ।
यस्मिन् सहस्रं ब्राह्मणा बद्वशो गा विभेजिरे ॥ इति ।

साचिगुणनामके कस्मिनश्चिद्देशे दुष्यन्तपुत्रस्य भरतस्यैवोऽग्निश्चितः । अग्निचयनं कृतवानित्यर्थः । यस्मिन् अग्निचयने सहस्रसंख्याका ब्राह्मणा 'बद्वशः' प्रत्येकं शतकोटि संख्यया गा[3] विभेजिरे' गवां विभागं कृतवन्त ॥

साचीगुण नामक किसी प्रदेश में दौष्यन्ति भरत ने अग्निचयन किया । जिसमें हजार ब्राह्मणों में से प्रत्येक ने सौ करोड़ गाएँ बाँट ली ।

तृतीय श्लोकमाह—

अष्टासप्तति भरतो दौष्यन्तिर्यमुनामनु ।
गङ्गायां वृत्रघ्नेऽबध्नात् पञ्चपञ्चाशतं हयान् ॥ इति ।

मेध्यैरश्वैरीजे' इत्युक्ते[4] तेषामश्वानां संख्याऽभिधीयते—अष्टाधिका सप्तति 'अष्टासप्तति' । तां अश्वानामष्टसप्तति दुष्यन्तपुत्रो भरतः 'यमुनामनु' यमुनायास्तीरे 'अबध्नात्' बद्धवान्, तावतोऽश्वमेधान् कृतवानित्यर्थः । 'गङ्गायां' गङ्गातीरे वृत्रघ्ननामके देशे पञ्चाधिकपञ्चाशत् संख्याकान् हयान् अबध्नात्' बद्धवान् । तावतोऽश्वमेधान् कृतवान् ॥

---

१ "एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः । अर्बुदमब्ज (पद्म) खर्वनिखर्वौ महापद्मशङ्खवस्तस्मात् । जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणोत्तरा संज्ञा संख्याया व्यवहारार्थं कृता पूर्वे—इति लीला० ।

'एकं दश शतं चैव सहस्रमयुतं तथा,
लक्षं च नियुतं चैव कोटिरर्बुदमेव च ।
वृन्दं खर्वो निखर्वश्च शङ्खपद्मौ च सागरः
अन्त्यं मध्यं परार्द्धं च दशवृद्धया यथोत्तरम् ॥ इति ब्राह्माण्ड पु० ।

२ 'बद्वानि'—इत्यस्य स्थिराणि गजरूपद्रव्याणि देवयजनस्थितानि वेति चार्थः स्यात् ।

३ 'बद्वशः'—इत्यस्य बन्धनक्रमेणेत्यप्यर्थः सुकरः स्यात्, स्थिरभावत इति वा ।

४ द्र० इतः पूर्वम्, पृ० १३०८ (२९९) ।

[जब अश्वमेध यज्ञ किया तब] दुष्यन्त के पुत्र भरत ने अट्ठहत्तर घोड़े यमुना के किनारे और पचपन घोड़े इन्द्र के लिए गङ्गा के किनारे बांधे।

चतुर्थं श्लोकमाह—

त्रयस्त्रिंशच्छतं राजाऽश्वान् बद्ध्वाऽय मेध्यान्।
दौष्यन्तिरत्यगाद्राज्ञो मायां मायवत्तरः[1] ॥ इति।

यमुनातीरे गङ्गातीरे चानुष्ठिता अश्वास्त्रयस्त्रिंशदधिकशतसंख्याकाः। तावतोऽश्वान् 'मेध्यान्' यज्ञयोग्यान् विप्रयुक्तक्रमेण बन्धनं कृत्वा, सोऽयं राजा दौष्यन्तिः 'मायवत्तरः' अतिशयेन मायावी सन्, राज्ञः स्वकीयशत्रोर्मायाम् 'अत्यगाद्' अतिक्रान्तवान् ॥

दुष्यन्त के पुत्र [भरत] ने तैंतिस सौ यज्ञ के योग्य घोड़ों को बांधकर; उस इस राजा ने अत्यन्त मायावी होकर, अपने शत्रु की माया को अतिक्रान्त कर दिया।

पञ्चमं श्लोकमाह—

महाकर्म भरतस्य न पूर्वे नापरे जनाः।
दिवं मर्त्य इव हस्ताभ्यां नोदापुः पञ्च मानवा इति ॥ इति।

'भरतस्य' राज्ञो तदेतत् 'महाकर्म', तदेतत् 'पूर्वे' पित्रादयो न कर्तुं शक्ताः। 'अपरे' जनाः पुत्रपौत्रादयश्च न कर्तुं शक्ताः। तत्र दृष्टान्तः—यथा मनुष्यो 'दिवं' स्वर्गं हस्ताभ्यां स्प्रष्टुमशक्तः, एवं 'पञ्च मानवाः' निषादपञ्चमाश्चत्वारो वर्णाः[2] 'नोदापुः' तदीयं कर्म प्राप्तुमशक्ताः सोऽयं सर्वोऽपि महाभिषेकस्य महिमेत्यर्थः ॥

भरत के बड़े कार्य को न उसके पहले के और न उसके बाद के लोगों ने पाया। जैसे कोई मनुष्य हाथों से स्वर्ग को नहीं छू सकता; वैसे ही मनुष्यों की पांच जातियों [चार वर्ण और पांचवां निषाद] में से कोई भी इसके कार्यों को बराबरी न कर सका [यह सब महाभिषेक की ही महिमा थी]।

अथ सम्प्रदायस्य कथनमुखेन महाभिषेकं प्रशंसति—

एतं ह वा ऐन्द्रं महाभिषेकं बृहदुक्थ ऋषिर्दुर्मुखाय पाञ्चालाय प्रोवाच; तस्मादु दुर्मुखः पाञ्चालो राजा सन् विद्यया समन्तं सर्वतः पृथिवीं जयन् परीयाय ॥ इति।

बृहदुक्थनामकः कश्चिदृषिः पञ्चालदेशस्वामिने दुर्मुखनाम्ने राज्ञे तमेतमिन्द्रसम्बन्धिनं महाभिषेकं प्रोवाच। तस्मादेव कारणात् स राजा सन् 'विद्यया' महाभिषेकज्ञानेनैव सर्वासु दिक्षु समन्तं समग्रां पृथिवीं जयन् 'परीयाय' परितः सञ्चचार ॥

---

१. मायावत्तरः—इति वा पाठः।

२. गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके, चत्वारो वर्णा निषादः पञ्चमः—'इत्यौपमन्यवः'—इति निरु० ३.२.२।

इसी ऐन्द्र महाभिषेक की पद्धति को बृहदुक्थ नाम के ऋषि ने दुर्मुख पाञ्चाल को बताया। उसके फलस्वरूप दुर्मुख पाञ्चाल ने राजा होकर महाभिषेक के ज्ञान से ही सभी दिशाओं में समुद्रतीरपर्यन्त समग्र पृथ्वी को जीतकर चारों ओर विचरण किया।

अथ ब्राह्मणस्योक्ताभिषेकाधिकाराभावेऽपि तद्विद्याधिकारसद्भावात् फलसिद्धिं दर्शयति—

**एतं ह वा ऐन्द्रं महाभिषेकं वासिष्ठः सात्यहव्योऽत्यरातये जानतपये प्रोवाच; तस्मादुत्यरातिर्जानतपिरराजा सन् विद्यया समन्तं सर्वतः पृथिवीं जयन् परीयाय ॥ इति ।**

वसिष्ठगोत्रोत्पन्नो 'वासिष्ठ', सात्यहव्यस्य पुत्रः 'सात्यहव्य' तादृशो मुनिरत्यराति नामकाय जनतपपुत्राय ब्राह्मणाय, इमेत महाभिषेकं प्रोवाच। तस्मादेव कारणादयमत्य-रातिर्जानतपिः स्वयमराजा सन्नप्यभिषेकविद्यया जयं प्राप्य परितो गतवान् ॥

इसी ऐन्द्र महाभिषेक की पद्धति को वसिष्ठ गोत्र में उत्पन्न सात्यहव्य ऋषि ने अत्य-राति जानतपि को बताया। उसके फलस्वरूप अत्यराति जानतपि ने स्वयं राजा न होते हुए भी इस महाभिषेक के ज्ञान से ही सभी दिशाओं में समुद्रतीरपर्यन्त समग्र पृथ्वी को जीतकर चारों ओर विचरण किया।

यथाऽभिषेके शपथं कृत्वा गुरुद्रोहो न कर्तव्य एवं विद्यायामपीति दर्शयति—

**स होवाच वासिष्ठः सात्यहव्योऽजैषीर्वै समन्तं सर्वतः पृथिवीं महन् मा गमयेति, स होवाचात्यरातिर्जानतपिर्यदा ब्राह्मणोत्तरकुरूञ्जयेयमथ त्वमु हैव पृथिव्यै राजा स्याः, सेनापतिरेव तेऽहं स्यामिति, स होवाच वासिष्ठः सात्यहव्यो देवक्षेत्रं वै तन्न वैतन् मर्त्यो जेतुमर्हत्यद्रुक्षो वै म आऽत इदं दद इति ततो हात्यरातिं जानतपिमात्तवीर्यं नि शुक्रममित्रतपनः शुष्मिणः शैब्यो राजा जघान ॥ इति ।**

सात्यहव्यो वासिष्ठो गुरुः, अत्यरातिं शिष्यमेवमुवाच – हे अत्यराते, विद्यासामर्थ्यात् पृथिवीं जितवानसि। अतो 'मा' गुरुं 'महद्गमय' महत्त्वमैश्वर्यं प्रापय। ततः शिष्योऽ-त्यरातिरेवमुवाच—मा भूदिदानीं तव महत्त्वम्, हे ब्राह्मण आचार्य यदा अहम् उत्तर-कुरून् एतन्नामकान् हिमवत्पर्वतस्योत्तरदेशाञ्जयेयं, तदानीं त्वमेव पृथिव्या राजा भव। अहं तु त्वदीयसेनापतिरेव भवामीति। ततः सात्यहव्यो वासिष्ठः 'स' गुरुरेवमुवाच,—हेऽत्यराते हिमवत्पर्वतस्योत्तरतो[1] यदस्ति, तद्देवक्षेत्रम्, अतस्तत्क्षेत्रं मनुष्यो जेतुं नैवार्हति। त्वं तु 'मे' मह्यम् 'अद्रुक्षो वै' कृतवानेव। मदपेक्षितं महत्त्वं दातुमनिच्छुः सन् वञ्चनार्थं यत्किंचिदुक्तवानसि। अतः शपथोल्लङ्घिनो गुरुद्रोहिणस्तव 'इदं' सामर्थ्यम् 'आददे

१. 'मेरोरुत्तरतो'–इति वा पाठः।

अपहरामीति । 'तत' सामर्थ्यापहरणादत्यराति जानतपि 'आतवीर्यं' गुरुणाऽपहृतवीर्यम् 'नि शुक्रम्' अपहृततेजस्क, कश्चिच्छत्रुतापन शिविपुत्र शुष्मिणाख्यो[1] राजा 'जघान' हतवान् ॥

[जैसे अभिषेक में शपथ दिलाकर गुरुद्रोह नहीं करना चाहिए वैसे ही विद्या के ज्ञात में भी गुरुद्रोह नहीं करना चाहिए] [गुरु] वासिष्ठ सात्यहव्य ने उस [शिष्य अत्यराति] से कहा—हे अत्यराति [विद्या की सामर्थ्य से ही] तुमने सभी दिशाओं में समुद्रतीरपर्यन्त समग्र पृथ्वी को जीता है । अब तुम मुझे ऐश्वर्यशाली बनाओ।' तब उन अत्यराति जानतपि ने कहा—'हे ब्राह्मण, जब हम उत्तर कुरु नामक [हिमालय पर्वत के उत्तर के] देश को जीत लूँगा, तब तुम्हीं पृथ्वी के राजा हो जाना, और मैं तुम्हारा सेनापति हो बनकर रहूँगा।' उसके बाद उन सात्यहव्य वासिष्ठ ने कहा—'अरे, यह देवक्षेत्र है। उसको कोई मनुष्य नहीं जीत सकता। तुमने मुझसे द्रोह किया है [अर्थात् मुझे जो महत्त्व देना चाहिए था उसे न देकर मात्र धोखा देने के लिए जो कुछ भी कह दिया। अतः शपथ का उल्लङ्घन करनेवाले गुरुद्रोही] तुम्हारी इस [विद्या की सामर्थ्य] को तुमसे मैं छीन लेता हूँ। उस [सामर्थ्य के अपहरण] के बाद अपहृत वीर्य वाले एवं नि तेजस्क अत्यराति जानतपि को शत्रु को पीडा देने वाले शुष्मिण नाम के शिवि देश के किसी राजा ने मार डाला।

एतद्वृत्तान्तकथनफल दर्शयति—

**तस्मादेवंविदुषे ब्राह्मणायैव चकृषे न क्षत्रियो द्रुह्येन्नेद्राष्ट्रादवपद्येय नेद्वा मा प्राणो जहदिति, जहदिति ॥ २३ ॥**

यस्माद्गुरुद्रोहे महती हानिरुक्ता, 'तस्मादेवंविदुष' महाभिषेकाभिज्ञाय 'एवंचकृष' अभिषेककर्त्रे, ब्राह्मणाय आचार्याय क्षत्रियो न द्रुह्येत् । केनाभिप्रायेणेति ? सोऽभिधीयते—'राष्ट्राद्' अस्माद्देशात् 'न इत् अवपद्येय' नैव भ्रष्टो भूयासम् । अथवा मा प्राणो न इत् जहन्नैव परित्यजत्वित्यभिप्राय । अभ्यासोऽध्यायसमाप्त्यर्थ ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया चतुर्थाध्याये (एकोनचत्वारिंशाध्याये) नवम खण्डः ॥९॥ (२३) [२८०]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर. ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरंधरमाधवाचार्यादिष्टतो भगवत्सायणाचार्येण विरचिते माधवीये 'वेदार्थप्रकाश'नामभाष्ये ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया (एकोनचत्वारिंशोऽध्याय) चतुर्थोऽध्याय ॥ ४ ॥

---

१. 'शुष्म्याख्यो'–इति वा पाठ ।

[क्योंकि गुरु से द्रोह करने में महान् हानि कही गई है] अतः इस प्रकार [महाभिषेक की विद्या के] जानने वाले और इस प्रकार के अभिषेक के कर्ता ब्राह्मण के साथ क्षत्रिय कभी भी द्रोह न करे, यह समझकर कि कहीं मैं राष्ट्र से च्युत न हो जाऊँ, अथवा कहीं मेरे प्राण न चले जायँ।

॥ इस प्रकार ऐतरेय ब्राह्मण के अष्टम पञ्चिका के चतुर्थ अध्याय की
डॉ० सुधाकर मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ४ ॥

—: ० :—

# अथ पञ्चमोऽध्यायः

## प्रथमः खण्डः

—: ० :—

# [अथ चत्वारिंशोऽध्यायः

## प्रथमः खण्डः]

महाभिषेक ऐन्द्रो यः क्षत्त्रस्यासौ पुरोहितः ।
पौरोहित्यं ब्राह्मणस्य वक्तव्यमधुनोच्यते ॥ १ ॥

तदेतत् प्रतिजानीते—

**अथातः पुरोधाया एव ॥** इति ।

'अथ' क्षत्रियस्य महाभिषेककथनानन्तरम्, यतो ब्राह्मणस्य पौरोहित्य बहुषु श्रुतं[1] भवति । अतः कारणात् 'पुरोधाया एव' पौरोहित्यस्यैव विधिः, उच्यत इति शेषः ॥

पौरोहित्य—

VIII.२ [XL.१] अब इस [क्षत्रिय के महाभिषेक के कथन] के अनन्तर [क्योंकि ब्राह्मण का पौरोहित्य अत्यन्त आवश्यक है] अतः पौरोहित्य की हो [विधि कहते हैं] ।

तद्विधिं दर्शयति—

**न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति, तस्माद् राजा यक्ष्यमाणो ब्राह्मणं पुरो दधीत,—देवा मेऽन्नमदन्निति ॥** इति ।

यस्माद् 'अपुरोहितस्य राज्ञोऽन्न देवा' 'नादन्ति' न भक्षयन्ति, 'तस्माद्' राजा यक्ष्यमाणो ब्राह्मण पुरोहितं कुर्यात् । केनाभिप्रायेणेति ? सोऽभिधीयते—देवाः मदीयमन्नमदन्त्विति तस्याभिप्रायः । 'अयक्ष्यमाणः' इति वा पदच्छेदः । यागाभावेऽपि प्रजापरिपालने धर्मबोधनाय पुरोहित. संपादनीयः ॥

पुरोहितविहीन राजा के अन्न का देवता भक्षण नहीं करते । इसलिए यज्ञ की इच्छा वाले राजा को एक ब्राह्मण [पुरोहित] रखना चाहिए कि 'देवता मेरे अन्न का भक्षण करें ।'

तदेवमेतत्प्रशंसति—

**अग्नीन् वा एष स्वर्ग्यान् राजोद्धरते, यत्पुरोहितम् ॥** इति ।

---

१. 'बुभुक्षित' इति वा पाठः ।

पुरोहित सम्पादयतीति यदस्ति, तेन 'एष' राजा स्वर्गहेतूनग्नीनेवोद्धरते ॥

जो राजा पुरोहित का सम्पादन करता है वह स्वर्ग को ले जाने वाली अग्नियों को स्थापित करता है ।

तानग्नीन् दर्शयति—

तस्य पुरोहित एवाऽऽहवनीयो भवति जाया गार्हपत्य, पुत्रोऽन्वाहार्यपचन, स यत्पुरोहिताय करोत्याहवनीय एव तज्जुहोत्यथ यज्जायायै करोति गार्हपत्य एव तज्जुहोत्यथ यत्पुत्राय करोत्यन्वाहार्यपचन एव तज्जुहोति, त एन शान्ततनवोऽभिहुता अभिप्रीता स्वर्गं लोकमभिवहन्ति,—क्षत्र च बल च राष्ट्र च विश च ॥ इति ।

'तस्य' राज्ञ पुरोहितादय एवाऽऽहवनीयाद्यग्निस्थानीया । 'अन्वाहार्यपचन' दक्षिणाग्नि । 'स' राजा पुरोहितादिभ्यो 'यत्' अपेक्षित करोति, तदेतदाहवनीयादिषु होमसमानम् । अत पुरोहितद्वारा ते अग्नय 'शान्ततनव' स्वकीयमुग्ररूपत्व परित्यज्याभीष्टहोमेन प्रीता 'एन' क्षत्रिय स्वर्गादिक प्रापयन्ति । 'क्षत्र' मानसोत्साहरूप शौर्यम् । 'बल' शारीरम् । 'राष्ट्र' देश । 'विट्' प्रजा । पुरोहितादिप्रीत्या तदेतद् सर्व प्राप्यते ॥

उस [राजा] का पुरोहित ही आहवनीय अग्नि है, स्त्री गार्हपत्य है, पुत्र अन्वाहार्यपचन अर्थात् दक्षिणाग्नि है । वह पुरोहित के लिए जो कुछ भी करता है वह आहवनीय अग्नि में होम करने के समान होता है और जो अपनी पत्नी के लिए करता है वह गार्हपत्य अग्नि में किए हुए कृत्य के समान होता है और वह जो कुछ भी अपने पुत्र के लिए करता है वह दक्षिणाग्नि में किए हुए कर्म के समान होता है । अत पुरोहित के द्वारा ये अग्नियाँ [अपने उग्र रूप को छोड़कर] शान्त शरीर से अभीष्ट होम से प्रसन्न होकर इस [क्षत्रिय] को स्वर्ग आदि पहुँचाती है और पुरोहित की प्रसन्नता से मन के उत्साह रूप शौर्य को, शारीरिक बल को, राष्ट्र को और प्रजा को प्राप्त कराने वाली होती हैं ।

विपक्षे बाधकमाह—

त एवैनमशान्ततनवोऽनभिहुता अनभिप्रीता स्वर्गाल्लोकान्नुदन्ते, क्षत्राच्च बलाच्च राष्ट्राच्च विशश्च ॥ इति ।

'त एव' पुरोहितादयोऽभीष्टहोमाभावेन प्रीतिरहिता 'अशान्ततनव' स्वर्गादे 'एन' राजानम् अपनुदन्ते ॥

वे ही [तीनों पुरोहित आदि के द्वारा] अभीष्ट होम के अभाव में यदि उग्र रूप धारण कर लें तो अप्रसन्न होकर वे ही इस [राजा] को स्वर्गलोक से ढकेल देती हैं, उसे शौर्य से, शारीरिक बल से, राष्ट्र से और प्रजा से च्युत कर देती हैं ।

पुनरपि पुरोहित प्रकारान्तरेण प्रशंसति—

**अग्निर्वा एष वैश्वानर पञ्चमेनिर्यत्पुरोहितस्तस्य वाच्येवैका मेनिर्भवति, पादयोरेका, त्वच्येका, हृदय एकोपस्थ एका, ताभिर्ज्वलन्तीभिर्दीप्यमानाभिरुपोदेति राजान, स यदाह क्व भगवोऽवात्सीस्तृणान्यस्मा आहरतेति तेनास्य ता शमयति याऽस्य वाचि मेनिर्भवत्यथ यदस्मा उदकमानयन्ति पाद्य, तेनास्य ता शमयति याऽस्य पादयोर्मेनिर्भवत्यथ यदेनमल कुर्वन्ति, तेनास्य ता शमयति याऽस्य त्वचि मेनिर्भवत्यथ यदेन तर्पन्ति, तेनास्य ता शमयति याऽस्य हृदये मेनिर्भवत्यथ यदस्यानारुद्धो वेश्मसु वसति, तेनास्य ता शमयति याऽस्योपस्थे मेनिर्भवति ॥ इति ।**

परोपद्रवकारिणी क्रोधरूपा 'शक्ति' 'मेनि'—इत्युच्यते —यथाऽग्नेर्ज्वाला, तद्वत् । अतो य पुरोहितोऽस्ति सोऽय पञ्चविधमेनियुक्तो वैश्वानरनामकाग्निसमान । वागादीनि पञ्च मेनिस्थानानि । अत पुरोहित ताभि मेनिभि ज्वलन्तीभि ज्वालासदृशीभि दीप्यमानाभि परेषु दीप्ति सताप कुर्वतीभि सह राजानाम् 'उपोदेति' समीपे प्राप्नोति । तदा 'स' राजा हे भगवन्नेतावन्त काल कुत्रावात्सी ? एतस्य पुरोहितस्योपवेशनार्थं हे परिचारका 'तृणानि' तृणनिर्मितकुशाद्यासनान्याहरत, 'इति' अनेन राजसबन्धिना प्रियवाक्येन वाच्येका या मेनि' बाधिका शक्ति ता स राजा शमयति । पाद्यार्थोदकानयनेन पादगता मेनि शाम्यति । वस्त्रगन्धाद्यलकरणेन त्वग्गता मेनि शाम्यति । धनादिना सतर्पणेन हृदयगता मेनि शाम्यति । 'अस्य' राज्ञो वेश्मसु 'अनारुद्धो.' निरोधरहित शयनादिक कुर्वन् विस्रम्भेण वसतीति यदस्ति, तेनोपस्थस्था मेनि शाम्यति । गृहे समागतस्य पुरोहितस्यैतावन्त उपचारा कर्तव्या इत्यर्थं ॥

जो यह पुरोहित है वह परोपद्रवकारिणी क्रुद्ध पाँच शक्तियों वाला वैश्वानर अग्नि है । उसकी वाणी में एक शक्ति होती है, दोनों पैरों में एक, त्वचा में एक, हृदय में एक और उपस्थ [=लिङ्ग] में एक शक्ति होती है । अत उन जलती हुई और देदीप्यमान पाँच शक्तियों के साथ पुरोहित राजा के पास आता है । जब वह [राजा] कहता है—'हे भगवन्, अब तक आप कहाँ रहे ? अरे, इसके [बैठने के] लिए हे परिचारको, तृण निर्मित [कुश आदि का] आसन लाओ ।' [तब राजा के] इन [प्रिय वचनों] से जो बाधिका शक्ति इसकी वाणी में होती है, उसका शमन होता है । इसके बाद जब उसके पैर धोने के लिए पानी लाते हैं, तो जो उसके पैर की क्रुद्ध शक्ति होती है उसे वह शान्त करता है । इसके बाद जब उसे [वस्त्र गन्धादिक द्रव्यों से] अलङ्कृत करते हैं तो उसके त्वचा में जो क्रुद्ध शक्ति होती है उसे वह उस [अलङ्करण] से शान्त करता है । इसके बाद जब उसे [धन आदि के द्वारा] तृप्त करते हैं तो उसके हृदय में जो क्रुद्ध शक्ति होती है उसे वह उस [तृप्ति] से शान्त करता है । इसके बाद

जब वह पुरोहित इस [राजा] के महल में बेरोक-टोक [शयन आदि करते हुए] रहता है; सो जो इस [पुरोहित] के उपस्थ में अग्नि होती है; उसे वह उस [निर्बाध शयनादिक] से शान्त करता है।

अन्वयव्यतिरेकाभ्यामुक्तोपचारं प्रशंसति—

स एनं शान्ततनुरभिहुतोऽभिप्रीतः स्वर्गं लोकमभिवहति, क्षत्रं च बलं च च राष्ट्रं च विशं च, स एवैनमशान्ततनुरनभिहुतोऽनभिप्रीत. स्वर्गाल्लोकान्नुदते क्षत्राच्च बलाच्च राष्ट्राच्च विशश्च ॥ २४ ॥ इति।

उक्तोपचारहोमेन प्रीतो सत्या शान्ततनु. स्वर्गादिकं प्रापयतीत्यन्वय । उक्तोपचार होमाभावे स्वर्गादेरपनुदतीति व्यतिरेक. ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया प्रथमाध्याये (चत्वारिंशाध्याये) प्रथम खण्ड. ॥ १ ॥ (२४) [२८१]

इस प्रकार [उक्त प्रकार से उपचार रूप] होम के द्वारा प्रसन्न एवं शान्त शरीर वाला वह इस [राजा] को स्वर्ग लोक पहुँचाता है और उसे शौर्य, शारीरिक बल, राष्ट्र एवं प्रजा से समृद्ध करता है। वही [पुरोहित उक्त उपचार होम] के अभाव में अशान्त शरीर एवं अप्रसन्न होकर राजा को स्वर्ग लोक से वञ्चित कर देता है और उसे शौर्य, बल, राष्ट्र एवं प्रजा से भी च्युत कर देता है।

॥ इस प्रकार चालीसवें (पञ्चम) अध्याय के प्रथम खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥१॥

## अथ द्वितीयः खण्डः

उक्तोपचारेण प्रीतं पुरोहितं दृष्टान्तेन प्रशंसति—

अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत्पुरोहितस्ताभी राजानं परिगृह्य तिष्ठति, समुद्र इव भूमिम् ॥ इति।

योऽयं पुरोहितोऽस्ति, स एष. 'पञ्चमेनि' पञ्चविधोग्रशक्तियुक्तो वैश्वानरनामकोऽग्निरेव निग्रहानुग्रहयोरग्निवच्छक्तिमत्त्वात्। पुरोहित 'ताभि' शान्ताभि शक्तिभिस्त राजानं 'परिगृह्य' परित· स्वीकृत्य तिष्ठति। यथा समुद्रो भूमिं परित स्वीकृत्य तिष्ठति, तद्वत् ॥

VIII.२५ [XL.२] जो यह पुरोहित है वह यह पाँच प्रकार की [निग्रह एवं अनुग्रह रूप] उग्र शक्तियों से युक्त वैश्वानर नामक अग्नि ही है। पुरोहित उन [शान्त शक्तियों] से उस राजा को चारों ओर से उसी प्रकार घेरे रहता है जैसे समुद्र पृथ्वी को घेरकर रहता है।

पुरोहितवशादनिष्टं परिहारयति—

**अयुवमारयस्य राष्ट्रं भवति, नैनं पुराऽऽयुषः प्राणो जहात्याजरसं जीवति, सर्वमायुरेति, न पुनर्म्रियते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥ इति ।**

'यस्य' राज्ञः 'एवं विद्वान्' वेदशास्त्रोक्तप्रकारेण धर्माधर्मौ बोधयितुमभिज्ञो ब्राह्मणो 'राष्ट्रगोपः' राज्यपरिपालनक्षमः पुरोहितो भवति । ईदृशस्याऽऽर्यस्य राज्ञो राष्ट्रम् 'अयुवं' कदाचिदपि पृथग्भावरहितं भवति । 'यु मिश्रणामिश्रणयो' इति धातु[1] अमिश्रणे वर्तते । अयुवमिति पदेन स निषिध्यते । राष्ट्रमस्थिरं न भवतीत्यर्थः । अथवा 'अस्य' राष्ट्रम् 'अयुवमारि' यवमरणरहितं भवतीत्यर्थः । 'एनं' राजानम् 'आयुषः' 'पुरा' प्राणो न परित्यजति, अपमृत्युर्न भवतीत्यर्थः । अत एव 'आजरसं' जरापर्यन्तं सुखेन जीवति । सर्वमायुरेति' प्राप्तायामपि जरायामवशिष्टं सर्वमायुः प्राप्नोति । ततः सकृन्मृत्वा 'न पुनर्म्रियते' पुरोहितमुखेन तत्त्वज्ञानं सम्पाद्य मुच्यत इत्यर्थः ॥

जिस राजा के राज्य में इस प्रकार [वेदशास्त्रोक्त प्रकार से धर्म एवं अधर्म को बताने के लिए] जानकार एवं राष्ट्र की रक्षा करने वाला ब्राह्मण पुरोहित होता है, उस [राजा] का राष्ट्र अलग अर्थात् अस्थिर नहीं होता, उस [राजा] को उसके प्राण आयु पूर्ण होने के पहले नहीं छोड़ते हैं, वह बुढ़ापे तक [सुख से] जीवित रहता है, पूर्ण आयु को प्राप्त करता है और एक बार मरकर फिर नहीं मरता है [अर्थात् पुरोहित के मुख से तत्त्वज्ञान प्राप्त कर मुक्त हो जाता है] ।

अनिष्टपरिहारं दर्शयित्वेष्टप्राप्तिं दर्शयति—

**क्षत्रेण क्षत्रं जयति, बलेन बलमश्नुते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥ इति ।**

उक्तविधपुरोहितयुक्तो राजा स्वकीयेन 'क्षत्रेण' कुमारादिना, परकीयं 'क्षत्रं' कुमारादिकं जयति । तथा स्वकीयेन 'बलेन' सैन्येन, परकीयं 'बलं' सैन्यम् 'अश्नुते' व्याप्नोति अभिभवतीत्यर्थः ॥

जिस [राजा] का इस प्रकार का जानने वाला एवं राष्ट्र की रक्षा करने वाला ब्राह्मण पुरोहित होता है वह राजा अपने क्षत्र [कुमार और सैनिकों] से दूसरे राजा के क्षत्र [सिपाहियों] को जीत लेता है, अपने [सैन्य] बल से दूसरे राजा के [सैन्य] बल को अभिभूत करता है ।

इष्टप्राप्त्यनिष्टपरिहारौ दर्शयित्वा प्रजानुरागं दर्शयति—

**तस्मै विशः संजानते, सम्मुखा एकमनसो यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥ २५ ॥ इति ।**

---

१. बदा० ११०७।

उक्तविधपुरोहितयुक्ताय 'तस्मै' तस्य राज्ञो 'विशः' प्रजाः 'संजानते' राज्ञा सहैकमत्यं प्राप्नुवन्ति । प्राप्य च परस्परमप्येकमनस्का राज्ञः सम्मुखा भवन्ति । न तु कस्मिन्नपि कार्ये विमुखा ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकायाः पञ्चमाध्याये (चत्वारिंशाध्याये) द्वितीयः खण्डः ॥ २ ॥ (२५) [२८२]

जिस [राजा] का इस प्रकार जानने वाला एवं राष्ट्र की रक्षा करने वाला ब्राह्मण पुरोहित होता है उस [राजा] की प्रजा [राजा के साथ] एकमत होती है और [परस्पर] एकमत होकर [राजा के] सम्मुख होती है [अर्थात् किसी भी कार्य में वह विमुख नहीं होती है] ।

॥ इस प्रकार चालीसवें (पञ्चम) अध्याय के द्वितीय खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥२॥

## अथ तृतीयः खण्डः

पुरोहितमहिमानं दर्शयितुं मन्त्रमुदाहरति—

**तदप्येतदृषिणोक्तम् ॥** इति ।

'तदेतत्' पुरोहितमाहात्म्यम् 'अपि' 'ऋषिणा' मन्त्रदर्शिना विश्वामित्रर्षिणा[1] उक्तम् ॥

VIII.२६ [xl ३] इस [पुरोहित के माहात्म्य] के विषय में ऋषि द्वारा भी कहा गया है ।

तत्र प्रथमाया ऋचः पूर्वार्धं दर्शयति

**स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येणेति ॥** इति ।

'स इत्' स एव पुरोहितयुक्तो राजा 'प्रतिजन्यानि' प्रतिपक्षबलानि 'विश्वा' सर्वाणि 'शुष्मेण' वीर्येण स्वकीयेनाधिकेन बलेन अभितस्थौ' अभितिष्ठति, अभिभवतीत्यर्थः ॥

वही [पुरोहित से युक्त] राजा सब प्रतिपक्षियों को [अपने] बल से और अपने पराक्रम से अभिभूत कर देता है ।

अस्यार्धस्य तात्पर्यं दर्शयति—

**सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानेव तच्छुष्मेण वीर्येणाधितिष्ठति ॥** इति ।

'जन्यानि' इत्यनेन 'सपत्ना' एवाभिधीयन्ते । सपत्नशब्दस्य व्याख्यानं द्विषन्तो भ्रातृव्या इति । तानेव भ्रातृव्यान् 'तत्' तेन 'शुष्मेण' अधिकेन 'वीर्येण' सामर्थ्येन 'अधितिष्ठति' अभिभवति ॥

---

१ ऋ० ४५०७–९ ।

'जन्यानि' इस पद से 'सपत्न' अर्थात् द्वेष करने वाले शत्रु को कहा गया है। उन्हें ही वह अपने तेज और पराक्रम से अभिभूत करता है।

तृतीय पादमनूद्य व्याचष्टे—

बृहस्पतिं यः सुभृतं बिभर्तीति, बृहस्पतिर्ह वै देवानां पुरोहितस्तमन्वन्ये मनुष्यराज्ञां पुरोहिता; बृहस्पतिं यः सुभृतं बिभर्तीति यदाह, पुरोहितं यः सुभृतं बिभर्त्यित्येव तदाह ॥ इति।

हितोपदेशेन राजानं सुष्ठु बिभर्तीति 'सुभृत्'। तादृशं 'बृहस्पतिं' बृहस्पतिसमानं पुरोहितं 'बिभर्ति' पोषयति। स इद्राजेति पूर्वेणान्वयः[1]। 'बृहस्पतिर्ह वै देवानां पुरोहितः'। यो देवानां बृहस्पतिः पुरोहितः तं बृहस्पतिम् 'अनु' पश्चान्मनुष्यराजानामन्ये पुरोहिताः वर्तन्ते। अतः पुरोहितानां बृहस्पत्यनुसारित्वाद् बृहस्पतिमित्यादिपदेन पुरोहितविषयमेवैतद्वाक्यं मन्त्र आह ॥

'जो [राजा] अपने हितोपदेशक बृहस्पति के समान पुरोहित को अच्छी तरह रखता है' [इस पाद में उक्त] जो बृहस्पति देवताओं के पुरोहित हैं; उनके पश्चात् मनुष्य और राजाओं के अन्य पुरोहित होते हैं। [ऋचा में] यह जो कहा है कि 'बृहस्पति के समान अपने पुरोहित को रखता है' उससे 'हितोपदेशक पुरोहित को जो [राजा] अच्छी तरह रखता है'—यही कहा गया है।

चतुर्थं पादमनूद्य व्याचष्टे—

वल्गूयति वन्दते पूर्वभाजमित्यपचितिमेवास्मा एतदाह ॥ इति।

स राजा 'पूर्वभाजं' प्रथमतोभजनयुक्तं पुरोहितं, स हि राजानं तदीयहितविचारेण प्रथमतो भजति, तादृशं 'वल्गूयति' राजाऽर्चयति। 'वन्दते' नमस्करोति। 'एतद्' अनेन पादेन 'अस्मै' अस्मिन् यजमाने 'अपचितिमेव' पूजामेव मन्त्र आह ॥

[वह राजा] 'सबसे पहले पूजनीय पुरोहित को प्रणाम करता है और उसकी पूजा करता है'—यह जो कहा है इससे इस पाद में पुरोहित की पूजा के विषय में ही कहा गया है।

द्वितीयस्या ऋचः प्रथमं पादमनूद्य व्याचष्टे—

स इत् क्षेति सुधित ओकसि स्व इति, गृहा वा ओकः स्वेष्वेव तद्गृहेषु सुहितो वसति ॥ इति।

---

१. यो 'बृहस्पतिं' बृहस्पतितुल्यं पुरोहितं सुभृतं यथा स्यात् सम्यगवस्थाप्येति यावत्। तथा बिभर्ति पोषयति स इद्राजेति पूर्वेणान्वयः।'—इति आन० मु० पाठः।

'स इत्' स एव राजा पूजित पुरोहितः 'सुधित' सुप्रीतः 'स्वे' स्वकीये एव 'ओकसि' गृहे 'सेति' निवसति । 'ओक' शब्दनात्र 'गृहा' एवोच्यते । तत स्वेष्वेव गृहेषु सुप्रीतो वसतीत्युक्त भवति ॥

'वही [राजा] जितने अपने पुरोहित को पूजा की है वह प्रसन्न होकर अपने ही घर में निवास करता है'—इस पाद में जो 'ओक' शब्द है उससे गृहों को ही कहा गया है । अतः वह [राजा] अपने ही उन गृहों में अच्छी तरह प्रसन्न होकर रहता है ।

द्वितीय पादमनूद्य व्याचष्टे—

तस्मा इळा पिन्वते विश्वदानीमित्यन्न या इळाऽन्नमेवास्मा एतदूर्जस्वच्छश्वद्भवति ॥ इति ।

'तस्मै' पुरोहितयुक्ताय राज्ञ 'इळा' अन्नम् । 'विश्वदानी' सर्वस्मिन्नपि काल इदानी सदानीमित्यादिवदवगन्तव्यम्[१] । 'पिन्वते' वर्धते । अन्नसमृद्धिमवति । अस्मिन् पादे 'इळा' शब्देनान्नमेवोच्यते । 'एतत्' अन्नम् 'अस्मै' अस्मिन् राजनि 'ऊर्जस्वत्' क्षीरादिरसोपेत 'शश्वत्' सर्वदा तिष्ठति ॥

'उस पुरोहित युक्त राजा को सभी समय अन्न समृद्धि होती है'—इस पाद में उक्त 'इळा' शब्द से अन्न को ही कहा गया है । अतः इस [राजा] का अन्न रस युक्त होकर सर्वदा बढ़ता है ।

तृतीय पादमनूद्य व्याचष्टे—

तस्मै विश. स्वयमेवाऽऽनमन्त इति राष्ट्राणि वै विशो राष्ट्राण्येवैन तत्स्वयमुपनमन्ति ॥ इति ।

'तस्मै' पुरोहितयुक्ताय राज्ञे 'विश' प्रजाः 'स्वयमेव' तदीयप्रयत्नमिरपेक्षा एव 'आनमन्ते' आर्ति प्राप्ता भवन्ति । अस्मिन् पादे 'विट्' शब्देन 'राष्ट्राण्यव' प्रजोपेता देशा एव विवक्षिता । तादृशानि राष्ट्राण्येव 'एन' पुरोहितयुक्त क्षत्रिय स्वयमेव प्राप्नुवन्ति ॥

'उस पुरोहित युक्त राजा को प्रजा स्वयमेव आनमन करती है अर्थात् स्वयं झुकती है'—[इस पाद में उक्त] 'विट्' शब्द से राष्ट्र की ही विवक्षा है । अतः इस पुरोहित युक्त क्षत्रिय के सामने राष्ट्र स्वयमेव झुकता है ।

चतुर्थं पादमनूद्य व्याचष्टे—

यस्मिन् ब्रह्मा राजनि पूर्व एतीति, पुरोहितमेवैतदाह ॥ इति ।

'यस्मिन्' राजनि 'ब्रह्मा' ब्राह्मणो हितमुपदिशन् 'पूर्व एति' प्रथमतो गच्छति, स इत् क्षेतीति पूर्वत्रान्वय । अनेन पादन पूर्व एतीत्यव पुरोहितमेव मन्त्रा ब्रूते ॥

---

१. अथर्व० प्राति० ४.२३ । 'विश्वदानी' सर्वदा—इति निरु० ११ ४ १० ।

'जिस राजा के सामने ब्राह्मण हितोपदेश करता हुआ प्रथमतः आता है'—इस पाद से 'पुरोहित' को ही कहा गया है।

तृतीयस्या ऋचः प्रथम पादमनूद्य व्याचष्टे—

अप्रतीतो जयति स धनानीति, राष्ट्राणि वै धनानि तान्यप्रतीतो जयति ॥ इति।

अयं पुरोहितयुक्तो राजा 'अप्रतीतः' प्रतिकूलैः शत्रुभिरितः प्राप्तः प्रतीतः तद्विपरीतो 'अप्रतीतः' शत्रुप्राप्तिरहित एव भूत्वा धनोपेतानि राष्ट्राणि सम्यक् 'जयति'। अस्मिन् पादे 'धन' शब्देन राष्ट्राण्येव विवक्षितानि। तानि स्वयं प्रतिपक्षरहित एव जयति ॥

यह पुरोहित युक्त राजा शत्रुरहित होकर सम्यक् रूप से धनों को जीतता है। यहाँ 'धन' शब्द से 'राष्ट्र' ही विवक्षित है। उन [शत्रुओं] को स्वयं प्रतिपक्षरहित हो जीतता है।

द्वितीय पादमनूद्य व्याचष्टे—

प्रतिजन्यान्युत या सजन्येति, सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानप्रतीतो जयति ॥ इति।

'जन्यानि' शत्रून् 'अप्रतीत' स्वयमप्रतिपक्षो जयतीत्यनुवर्तते। किंच 'या' सेना 'सजन्या' शत्रुसहिता, तामपि जयति। अस्मिन् पादे 'जन्य' शब्देन 'सपत्ना' अभिधीयन्ते। तस्य व्याख्यानं 'द्विषन्तो वै भ्रातृव्याः' इति। 'तान्' भ्रातृव्यान् प्रतिपक्षरहितो जयति ॥

'स्वयं शत्रुरहित होकर शत्रुओं को जीतता है और शत्रु सहित सेना को भी जीतता है'—इस पाद में 'जन्य' शब्द से 'सपत्न' अर्थात् द्वेष करने वाले शत्रु को ही कहा गया है। उन [शत्रुओं] को प्रतिपक्षरहित ही जीतता है।

तृतीय पादमनूद्य व्याचष्टे—

अवस्यवे यो वरिवः कृणोतीति यदाहावसीयसे योऽवसीयः करोतीत्येव तदाह ॥ इति।

'अवस्यवे' धनरहिताय ब्राह्मणाय पुरोहिताय 'यः' राजा 'वरिवः' 'कृणोति' परिचर्यां करोति 'इति' मन्त्रो यदाह, तत्र 'अवसीयसे' अत्यन्तदरिद्राय धनरहिताय 'यः' राजा 'अवसीयः' अतिशयेन धनिकत्वं करोति 'इति' अनेनैव प्रकारेण मन्त्रो ब्रूते ॥

'धनरहित ब्राह्मण पुरोहित की जो राजा सेवा करता है'—मन्त्र में यह जो कहा है उसका तात्पर्य यही है कि 'जो राजा धन रहित [दरिद्र] पुरोहित को धनवान् बनाता है।'

चतुर्थं पादमनूद्य व्याचष्टे—

ब्रह्मणे राजा तमवन्ति देवा इति; पुरोहितमेवैतदभिवदति ॥ २६ ॥ इति।

'ब्रह्मणे' ब्राह्मणाय पूर्वोक्तेनावस्थेव इति चतुर्थ्यन्तेनान्वेति । तथा राजेति पद य इत्यनेनान्वेति । 'त' तादृश पुरोहितपूजक राजान देवा 'अवन्ति' पालयन्ति । 'एतद्' एतेन ब्रह्मण इति पदेन पुरोहितमेव मन्त्रोऽभिवदति ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टम-पञ्चिकायां पञ्चमाध्याये (चत्वारिंशाध्याय) तृतीयः खण्ड ॥३॥ (२६) [२८३]

'उस पुरोहित पूजक राजा की देवता रक्षा करते हैं।' [इस पाद में] इस ['ब्रह्मण' पद] से पुरोहित के ही विषय में कहा गया।

॥ इस प्रकार चालीसवें (पञ्चम) अध्याय के तृतीय खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥३॥

## अथ चतुर्थः खण्डः

*अथ पौरोहित्यस्य योग्यायोग्यौ ब्राह्मणौ विविनक्ति—*

**यो ह वै त्रीन् पुरोहितांस्त्रीन् पुरोधातॄन् वेद, स ब्राह्मण पुरोहित, स वदेत पुरोधाया, अग्निर्वाव पुरोहित, पृथिवी पुरोधाता, वायुर्वाव पुरोहितो-ऽन्तरिक्ष पुरोधाताऽऽदित्यो वाव पुरोहितो, द्यौ पुरोधातैव ह वै पुरोहितो य एव वेदाथ स तिरोहितो य एव न वेद ॥ इति ।**

राजा स्वाहितोपदेशार्थं स्वस्य पुरोहितोऽवस्थापित । तस्य पुरोहितस्य योऽयमवस्था पयिता राजा, स 'पुरोधाता'। देवतासु मध्ये त्रय पुरोहिता सन्ति। ये च त्रयः पुरोधातार तानुभयविधान् यो वेद' तत्प्रतिपादक मन्त्र सवेदाऽनुसधत्त इत्यर्थ.। 'स' तादृशो ब्राह्मण 'पुरोहित' पुरोहितो भवितु योग्य.। 'स' च ब्राह्मण 'पुरोधायै' पौरोहित्यार्थं 'अग्नि' इत्यादिमन्त्र 'वदेत्' जपत्। अग्निवाय्वादित्या पुरोहितरूपा पृथिव्यन्तरिक्षद्युलोका पुरोधातृरूपा इति मन्त्रार्थ । 'य' पुमान् 'एव वेद' मन्त्रार्थमनु-सधत्ते, 'एष' एव योग्य पुरोहित । 'अथ' तद्वैलक्षण्येन 'य' पुमान् 'एव न वेद', स 'तिरोहित' पौरोहित्यादन्तर्हित तदयोग्य इत्यर्थ ॥

VIII २७ [XI ४] जो [ब्राह्मण] तीन प्रकार के पुरोहित और तीन प्रकार के पुरोहित बनाने वाले को जानता है वह ब्राह्मण पुरोहित बनाने योग्य है। वह ब्राह्मण पौरोहित्य के लिए इस प्रकार मन्त्र कहे—'यह अग्नि पुरोहित है और पृथ्वी पुरोहित रखने वाली है, यह वायु पुरोहित है और अन्तरिक्ष पुरोहित रखने वाला है तथा यह आदित्य पुरोहित है और द्यौ पुरोहित रखने वाला है।' जो इस प्रकार [मन्त्र-तत्त्व को] जानता है वह पुरोहित बनाने योग्य है और जो इस प्रकार [मन्त्र तत्त्व को] नहीं जानता है वह पौरोहित्य कर्म से तिरोहित है अर्थात् अयोग्य है।

योग्यं पुरोहितं प्रशंसति—

तस्य राजा मित्रं भवति द्विषन्तमपबाधते, यस्यैव विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥ इति ।

यस्य 'एवं' मन्त्रादिवेदित्वादिगुणयुक्तः पुरोहितो भवेत्, 'तस्य' राज्ञो देशान्तरवर्ती 'राजा' 'मित्रं' सन्पुर्सवति । तथा 'द्विषन्तम्' अन्यं राजानं पुरोहितयुक्तो राजा 'अपबाधते' विनाशयति ॥

जिस राजा का इस प्रकार से जानने वाला एवं राष्ट्र का रक्षक [योग्य] ब्राह्मण पुरोहित होता है उस [राजा] का अन्य राजा मित्र होता है तथा अन्य शत्रु [राजा] को वह [पुरोहितयुक्त राजा] विनष्ट कर देता है ।

पुनरपि द्वेधा प्रशंसति—

क्षत्त्रेण क्षत्त्रं जयति, बलेन बलमश्नुते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितस्तस्मै विशः संजानते, सम्मुखा एकमनसो, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥ इति ।

पूर्ववद् व्याख्येयम्[1] ॥

जिस [राजा] का इस प्रकार का जानने वाला एवं राष्ट्र की रक्षा करने वाला ब्राह्मण पुरोहित होता है वह राजा अपने क्षत्र [कुमार आदि] से दूसरे राजा के [कुमार आदि] क्षत्र को जीत लेता है । अपने [सैन्य] बल से दूसरे राजा के [सैन्य] बल को अभिभूत करता है । जिस [राजा] का इस प्रकार जानने वाला एवं राष्ट्र की रक्षा करने वाला ब्राह्मण पुरोहित होता है उस [राजा] की प्रजा [राजा के साथ] एकमत होती है और परस्पर एकमत होकर राजा के सम्मुख होती है [अर्थात् किसी भी कार्य में वह विमुख नहीं होती है] ।

अथ राज्ञः पुरोहितवरणमन्त्रमाह—

भूर्भुवः स्वरोममोऽहमस्मि, स त्वं; स त्वमस्यमोऽहं; द्यौरहं पृथिवी त्वं; सामाहमृक्त्वं; तावेह संवहावहै । पुराण्यस्मान् महाभयात् । तनूरसि तन्वं मे पाहि ॥ इति ।

'भूर्भुवः स्वः' इति व्याहृतिभिर्लोकत्रयाभिमानिन्यो देवता उच्यन्ते । प्रणवेन परमात्मा । एते सर्वेऽनुगृह्णन्त्वित्यभिप्रायः । पुरोहितः 'अहम्' 'अमः' द्युलोकरूपोऽस्मि, त्वं तु 'सः' भूर्लोकरूपोऽसि । पुनरपि स त्वमसि, अमोऽहम्' इत्यभिधानं दार्ढ्यार्थम् । तस्यैव व्याख्यानं 'द्यौरहं' 'पृथिवी त्वम्'—इति । तथा सामस्वरूपोऽहम्-ऋक्स्वरूपस्त्वम् असि, तौ उभावावां

---

१. द्र० द्र. पूर्वम्, पृ० १३१८ ।

'इह' राष्ट्रे, 'आ' समन्तात्, 'पुराणि' तदुपलक्षितग्रामांश्च 'संवहावहै' सम्यग्वहन पुरादि निर्वाह करवावहै। त्वं मम 'तनूः' शरीरमसि। अतो मदीयां 'तनूं' शरीरम् 'अस्मात्' ऐहिकात्, आमुष्मिकाच्च 'महाभयात्' 'पाहि' रक्ष ॥

[पुरोहित के वरण के लिए राजा इस प्रकार मन्त्र पढ़ता है]—'भूर्भुवः स्वः, ओ३म्'—'वह मैं हूँ, यह तुम हो, तुम यह हो, मैं वह हूँ। मैं द्युलोक [स्वर्ग] हूँ, तुम पृथ्वी स्वरूप हो, मैं साम हूँ तुम ऋक् हो। हम दोनों मिलकर इस [राष्ट्र] में चारों ओर से पुरों का और ग्रामों का सम्यक् रूप से निर्वाह करें। तुम मेरे शरीर हो। अतः तुम मेरे शरीर की इस [इहलौकिक और पारलौकिक] महा भय से रक्षा करो।

अनेन मन्त्रेण राज्ञा वृतो यः पुरोहितः, तस्य राजदत्तविष्टराभिमन्त्रणमाह—

या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः।
ता मह्यमस्मिन्नासनेऽच्छिद्रं शर्म यच्छत[1] ॥ इति।

सोमो राजा यासामोषधीनां ताः 'सोमराज्ञ्यः'। 'बह्व्यः' बहुजातीयाः। 'शतविचक्षणाः' शतशाखाभिन्नाः। तादृश्य ओषधयो याः सन्ति, तास्तथाविधा हे ओषधयो 'अस्मिन्नासने' तृणादिनिर्मिते कटादिरूपे 'मह्यं' पुरोहिताय 'अच्छिद्रं' छिद्ररहितं 'शर्म' दुःखस्पर्शरहितं सुखं 'यच्छत' दत्त ॥

[इस मन्त्र से पुरोहित राजा द्वारा प्रदत्त आसन का अभिमन्त्रण करता है]—'जिन ओषधियों का सोम राजा है और जो अनेक जाति वाली हैं तथा जिनमें सैकड़ों शाखाएँ हैं, वे ओषधियाँ मुझे इस आसन पर दुःखस्पर्श से रहित सुख प्रदान करें।'

अभिमन्त्रिते विष्टर उपवेशनमाह—

या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु।
ता मह्यमस्मिन्नासनेऽच्छिद्रं शर्म यच्छत[2] ॥ इति।

वंशदलादिनिर्मितविष्टरगताः 'ओषधयः' पृथिवीमनु 'विष्ठिताः' विशेषेण स्थापिताः। ता मह्यमित्यादि पूर्ववत् ॥

[अभिमन्त्रित आसन पर इस मन्त्र से बैठना है] 'जिन ओषधियों का सोम राजा है, वे ओषधियाँ पृथ्वी [अर्थात् बाँस के पत्तों से निर्मित आसन] पर विशेष रूप से स्थापित हैं। वे मुझे इस आसन पर दुःखस्पर्श से रहित सुख प्रदान करें।'

पुरोहितस्य पाद्यार्थं समानीतानामपामभिमन्त्रणमन्त्रं दर्शयति—

अस्मिन् राष्ट्रे श्रियमावेशयाम्यतो देवीः प्रतिपश्याम्यापः,[3] ॥ इति।

---

१ ऋ० १०.९७.१८। मं० ब्रा० २.८.३। गोभि० गृह्य० ४.१०.४।

२. ऋ० १०.९७.१९। वा० सं० १२.९३ (एतत्पूर्वा ऋगपि ९२ तत्र)। मं० ब्रा० २.८.४। गोभि० गृह्य० ४.१०.५।

३ मं० ब्रा० २.८.५,६। गो० गृह्य० ४.१०.७,८।

हे आप. पुरोहितोऽहमस्मिन् राष्ट्रे 'श्रियमावेशयामि' धनादिसंपदं संपादयामि। अत. कारणाद् 'देवी.' द्योतनात्मिका युष्मान् प्रति पश्यामि ॥

हे जल में [पुरोहित] इस राष्ट्र में धन-सम्पदा का संपादन करता हूँ। अतः मैं द्योतनात्मक तुम दिव्य जलों की ओर देखता हूँ।'

तामिरद्भिः पुरोहितस्य पादप्रक्षालनमन्त्रमाह—

दक्षिणं पादमवनेनिजेऽस्मिन् राष्ट्र इन्द्रियं दधामि। सव्यं पादमवनेनिजेऽस्मिन् राष्ट्र इन्द्रियं वर्धयामि। पूर्वमन्यमपरमन्यं पादाववनेनिजे। देवा राष्ट्रस्य गुप्त्या अभयस्यावरुद्ध्यै[1]॥ इति।

मदीयं दक्षिणं पादम् 'अवनेनिजे' प्रक्षालयामि। तेनास्मिन् राष्ट्रे प्राणिनामिन्द्रियपाटवहेतुं धनं संपादयामि। वामपादप्रक्षालनेन च तद् वर्धयामि। 'पूर्वं' प्रथमम् 'अन्यं' दक्षिणं पादं शोधयित्वा 'अपरं' पश्चाद् 'अन्यं' वामं पादं शोधयामि। हे देवाः, एवंभूतौ पादौ प्रक्षालयामि। तच्च राष्ट्रस्य 'गुप्त्यै' रक्षार्थम् 'अभयस्य' चौरादिभयराहित्यस्य 'अवरुद्ध्यै' संपादनाय भवति ॥

[उस जल से पुरोहित के पाद प्रक्षालन का निम्न मन्त्र है]—'दाहिने पैर को धोकर मैं इस राष्ट्र में इन्द्रिय शक्ति को स्थापित करता हूँ। बाएँ पैर को धोकर मैं इस राष्ट्र में इन्द्रिय [शक्ति] की वृद्धि करता हूँ।' प्रथमतः एक [दक्षिण पाद] को और बाद में अन्य [वाम पाद] को शोधित करता हूँ। हे देवो, इस प्रकार के दोनों पैरों को मैं धोता हूँ, जो राष्ट्र की रक्षा के लिए और चौरादि भय से राहित्य की प्राप्ति के लिए संपादित होता है।

पादप्रक्षालनावशिष्टानामपामभिमन्त्रणमाह—

आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे ॥ २७ ॥ इति।

'पादावनेजनी' पादशुद्धिकरणभूता इमा आपो 'मे' मदीयं 'द्विषन्तं' शत्रुं नितरां दहन्तु ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया पञ्चमाध्याये (चत्वारिंशाध्याये) चतुर्थ. खण्डः ॥४॥ (२७) [२८४]

पाद प्रक्षालन से अवशिष्ट जल का अभिमन्त्रण कहते हैं—'पैरों को धोने से बचा हुआ यह जल मेरे शत्रु को भस्म करे।'

॥ इस प्रकार चालीसवें (पञ्चम) अध्याय के चतुर्थ खण्ड की हिन्दी व्याख्या पूर्ण हुई ॥४॥

१. म० ब्रा० २.८.७,८। गोभि० गृह्य० ४.१०.९,१०।

## अथ पञ्चमः खण्डः

अथोक्तपुरोहितसहितस्य शत्रुमारणार्थं कंचित्प्रयोगमाह —

**अथातो ब्रह्मणः परिमरो, यो ह वै ब्रह्मणः परिमरं वेद, पर्येनं द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्ते ॥ इति ।**

'अथ' पौरोहित्यविधानानन्तरम्, यतः पुरोहितेन सपाद्यः शत्रुमारणोऽपेक्षितः अतः कारणाद् ब्रह्मणः परिमरः' एतन्नामा कर्मविशेष अभिधीयत इति शेष । ब्रह्मशब्देनात्र वायुर्विवक्षित [1] । अय व ब्रह्म योऽयं पवते इति वक्ष्यमाणत्वात्[2] । तस्य वायोः परितो विद्युदादीनां मरणप्रकारः 'परिमर' इत्युच्यते[3] । तद्भावनारूपस्य कर्मविशेषस्य तदेव नामधेयम् । यः पुमान् ब्रह्मणः परिमरं वेद मनसा भावयति । एनं परि एतस्य परितोऽवस्थितासु सर्वासु दिक्षु द्विषन्तः द्वेषं कुर्वन्तः शत्रवो म्रियन्ते द्वेषानीमेन द्विषन्तो भ्रातृव्या शत्रव सपत्ना [4] तेऽपि परितो म्रियन्ते[4] । तस्मात्तद्वेदनं सपादनीयम् ॥

viii २८ [xl ५] इस [पौरोहित्य विधान] के अनन्तर [क्योंकि पुरोहित से सवा दित शत्रु का विनाश अपेक्षित है] अतः 'ब्रह्म परिमर' [नामक कर्मविशेष का] अभिधान करते हैं । [यहाँ 'ब्रह्म' शब्द से वायु विवक्षित है उस वायु के चारों ओर विद्युत आदि मरण के प्रकार को 'परिमर' शब्द से कहते हैं] । जो इस ब्रह्मपरिमर को जानता है तो इसके चारों ओर सभी दिशाओं में अवस्थित द्वेष करने वाले शत्रु और चारों तरफ के जातिगत शत्रु भी मर जाते हैं ।

---

१ तद् ब्रह्मणः परिमर इत्युपासीत—इति तै० आ० ९ १० ४ । ब्रह्मणः परिमरः परिम्रियन्तेऽस्मिन् पञ्च देवता विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निरित्येता अतो वायुः परिमरः श्रुत्यन्तरप्रसिद्धेः (ऐ० ब्रा० ८ ५ ५) । स एष एवायं वायुराकाशेनानन्य इत्याकाशो ब्रह्मणः परिमरः तमाकाशं वाय्वात्मानं ब्रह्मणः परिमर इत्युपासीत — इति तत्र सा० भा० ।

२ अर्थात् इतः परम् पृ० १३२८ ।

३ परिमरो उभयतो मरणयुक्तो यस्य पशो अग्रजोऽपि मृतः अनुजोऽपि मृतः तादृशो — इति त० स० ५ ६ २१ सा० भा० ।

४ पर्येणं म्रियन्ते द्विषन्तः सपत्नाः परि येऽप्रिया भ्रातृव्याः —इति त० आ० ९ १० ४ । परि एनमेवंविदं प्रतिस्पर्द्धिनो द्विषन्तोऽद्विषन्तोऽपि सपत्ना यतो भवन्ति अतो विशेष्यन्ते द्विषन्तः सपत्नाः इति । ये एनं द्विषन्तः सपत्नाः ते परिम्रियन्ते प्राणान् जहति । किञ्च ये चाप्रिया अस्य भ्रातृव्याः अद्विषन्तोऽपि ते च परिम्रियन्ते — इति तत्र सा० भा० द्र० तै० उ० ३ १० ४ ।

वेदनस्वरूपमाह—

**अयं वै ब्रह्म, योऽयं पवते, तमेताः पञ्च देवताः परिम्रियन्ते,—विद्युद्वृष्टि-श्चन्द्रमा आदित्योऽग्निः ॥ इति ।**

'यः' अयं वायुः 'पवते' अन्तरिक्षे सञ्चरति, अयमेव ब्रह्मशब्देन विवक्षितः । 'एताः' विद्युदादयः पञ्च देवताः 'तं' वायुं 'परिम्रियन्ते' तस्य परितो विनाशं गच्छन्ति । तदेतदनुसन्धेयस्वरूपम् ॥

जो यह [वायु अन्तरिक्ष में] बहता है वही 'ब्रह्म' है । ये [विद्युत आदि] पाँच देवता उस [वायु] के चारों ओर विनाश को प्राप्त होते हैं—१. विद्युत, २ वृष्टि ३ चन्द्रमा, ४. आदित्य और ५. अग्नि ।

तत्राऽऽदौ विद्युतो मृतिं प्रतिपादयति—

**विद्युद्वै विद्युत्य वृष्टिमनुप्रविशति, साऽन्तर्धीयते, तां न निर्जानन्ति ॥ इति ।**

येयं विद्युदस्ति सा 'विद्युत्य' प्रकाशं कृत्वा, पश्चाद्वृष्टिमनुप्रविशति । अत एव सा 'अन्तर्धीयते' अस्माभिर्न दृश्यते । 'तां' वृष्टौ प्रविष्टां विद्युतं क्व गता, कुत्र स्थिता ? मृतेति मनुष्या निःशेषेण न जानन्ति ॥

जो यह विद्युत है वह प्रकाश करने के बाद वृष्टि में प्रविष्ट कर जाती है अतः वह अन्तर्हित हो जाती है [अर्थात् उसे हम नहीं देख पाते हैं] । उस [वृष्टि में प्रविष्ट विद्युत] को मनुष्य नहीं जान पाते हैं ।

तत्र दृष्टान्तमाह—

**यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति ॥ इति ।**

लोके यः कश्चित्पुरुषो यस्मिन् क्षणे म्रियते, तस्मिन्नेव क्षणेऽन्यैर्न दृश्यते । ततो जना विचार्यापि क्व गतः, कुत्रावस्थित इति 'एनं' पुरुषं मृतं 'न निर्जानन्ति' । यद्यपि कुणपं पश्यन्ति, तथाऽपि जीवात्मानं न जानन्त्येव । तथैव विद्युद्विनाश इति द्रष्टव्यम् ॥

[लोक में भी जैसे] कोई पुरुष जब मरता है [वह अन्य लोगों के द्वारा नहीं दिखाई पड़ता है] और अन्तर्हित हो जाता है । तब इस [मृत पुरुष] को अन्य जीवित पुरुष नहीं जान पाते हैं [वैसे ही विद्युत का भी विनाश होता है] ।

यथाव्याख्यानवतो जप्यमन्त्रमाह—

**स ब्रूयाद् विद्युतो मरणे द्विषन् मे म्रियतां, सोऽन्तर्धीयतां, तं मा निर्ज्ञासिषु-रिति ॥ इति ।**

विद्युतो मरणे सति उपासको द्विषन्नित्यादिकं मन्त्रं ब्रूयात् । तस्यायमर्थः—इयं विद्युदिव मदीयः शत्रुर्म्रियतां, स पुनः क्वापि न दृश्यताम् । अतो विचार्यापि क्व गतः, क्वाऽऽस्ते ? इति 'तं' शत्रुं सखायो बान्धवा निःशेषेण मा जानन्त्विति ॥

बिजली के विलीन हो जाने पर इस [उपासक] को निम्न मन्त्र कहना चाहिए—'मेरा शत्रु मर जाय। वह लुप्त हो जाय। उसे कोई भी [उसके बन्धु-बान्धव] न जाने।'

जपफलं[1] दर्शयति—

क्षिप्रं हैवेन न निर्जानन्ति ॥ इति।

शीघ्रमेव मृतमेनं शत्रुं तदीया बान्धवो नैव जानन्ति ॥

[इस मन्त्र के जप का फल यह है कि] इस [मरे हुए शत्रु] को शीघ्र ही [उनके बन्धु-बान्धव] लोग नहीं ही जानते हैं।

विद्युत इव वृष्टेविनाशं दर्शयति—

वृष्टिर्वै वृष्ट्वा चन्द्रमसमनुप्रविशति, साऽन्तर्धीयते, तां न निर्जानन्ति, यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति, स ब्रूयाद् वृष्टेर्मरणे द्विषन् मे म्रियतां, सोऽन्तर्धीयतां, तं मा निर्ज्ञासिषुरिति, क्षिप्रं हैवेनं न निर्जानन्ति ॥ इति।

येयं वृष्टिरस्ति, सेयं 'वृष्ट्वा' भूमौ जलं पातयित्वा स्वयमाप्यमण्डलरूपं चन्द्रमसमनुप्रविशति। अन्यत् पूर्ववद्योज्यम् ॥

वृष्टि बरस कर चन्द्रमा में प्रविष्ट हो जाती है। वह लुप्त हो जाती है। उसे कोई नहीं जानता। [संसार में] जब कोई मरता है तो वह लुप्त हो जाता है। उसे कोई नहीं जानता है। अतः वृष्टि के मर जाने पर वह [साधक] कहे कि 'मेरा शत्रु मर जाय। वह लुप्त हो जाय। उसे कोई भी न जाने।' इस प्रकार इस [मरे हुए शत्रु] को शीघ्र ही लोग नहीं ही जानते हैं।

चन्द्रमसो विनाशं दर्शयति—

चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति, सोऽन्तर्धीयते, तं न निर्जानन्ति, यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति, स ब्रूयाच्चन्द्रमसो मरणे द्विषन् मे म्रियतां, सोऽन्तर्धीयतां, तं मा निर्ज्ञासिषुरिति, क्षिप्रं हैवेनं न निर्जानन्ति ॥ इति।

अयं चन्द्रमा 'अमावास्यायां' तिथौ साकल्येनाऽऽदित्यमनुप्रविशति। अन्यत्पूर्ववत् ॥

अमावस्या के दिन चन्द्रमा आदित्य में प्रविष्ट हो जाता है। वह लुप्त हो जाता है। उसे कोई नहीं जानता है। [दुनिया में] जब कोई मरता है तो वह लुप्त हो जाता है। तब उसे कोई नहीं जानता। चन्द्रमा के लुप्त हो जाने पर वह [साधक] कहे कि 'मेरा शत्रु

---

१. 'जपमन्त्रम्' इति वा पाठः।

मर जाय। वह अन्तर्हित हो जाय। उसे कोई न जाने।' इस प्रकार इस [मरे हुए शत्रु] को शीघ्र ही लोग नहीं ही जानते हैं।

आदित्यस्य विनाशं दर्शयति—

**आदित्यो वा अस्तं यन्नग्निमनुप्रविशति, सोऽन्तर्धीयते, तं न निर्जानन्ति, यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति, स ब्रूयादादित्यस्य मरणे द्विषन् मे म्रियतां, सोऽन्तर्धीयतां, तं मा निर्ज्ञासिषुरिति, क्षिप्रं हैवैनं न निर्जानन्ति ॥ इति ।**

आदित्यो यदाऽस्तमेति तदाऽग्निमनुप्रविशति। तदेतत् तैत्तिरीये समाम्नातम्—'अग्निं वा आदित्यः सायं प्रविशति, तस्मादग्निर्दूरान्नक्तं ददृशे, उभे हि तेजसी सपद्येते'[1] इति। अन्यत्पूर्ववत् ॥

आदित्य जब अस्तगत होता है तो वह अग्नि में प्रविष्ट हो जाता है। वह लुप्त हो जाता है। उसे कोई नहीं जानता है। [संसार में] जब कोई मरता है तो वह लुप्त हो जाता है। तब उसे कोई नहीं जानता। आदित्य के अन्तर्हित हो जाने पर वह [साधक] कहे कि मेरा शत्रु मर जाय। वह अन्तर्हित हो जाय। उसे कोई न जाने। इस प्रकार इस [मरे हुए शत्रु] को शीघ्र ही लोग नहीं जानते हैं।

अग्नेर्विनाशं दर्शयति—

**अग्निर्वा उद्वान् वायुमनुप्रविशति, सोऽन्तर्धीयते, तं न निर्जानन्ति, यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति, स ब्रूयादग्नेर्मरणे द्विषन्मे म्रियतां, सोऽन्तर्धीयतां, तं मा निर्ज्ञासिषुरिति, क्षिप्रं हैवैनं न निर्जानन्ति ॥ इति ।**

'उद्वान्' अग्निरुद्वानमुपशमनं प्राप्नुवन्नग्निर्वायुमनुप्रविशति, वायुबाहुल्ये दीपविनाशदर्शनात्। अन्यत्पूर्ववत् ॥

अग्नि बुझ कर वायु में प्रविष्ट हो जाता है। वह अन्तर्हित हो जाता है। उसे कोई नहीं जानता है। [संसार में] जब कोई मरता है तो वह लुप्त हो जाता है। तब उसे कोई नहीं जानता। अग्नि के लुप्त हो जाने पर वह [साधक] कहे कि 'मेरा शत्रु मर जाय। वह अन्तर्हित हो जाय। उसे कोई न जाने।' इस प्रकार इस [मरे हुए शत्रु] को शीघ्र ही लोग नहीं ही जानते हैं।

वायौ परितो म्रियमाणानां देवतानां पुनर्वायोरेव जन्म दर्शयति—

**ता वा एता देवता अत एव पुनर्जायन्ते ॥ इति ।**

---

१ तै० ब्रा० २ १ २ १। 'उद्यन्तं वावादित्यमग्निरनुसमारोहति, तस्माद्धूम एवाग्नेर्दिवा ददृशे'—इति तत्परार्धः।

'वायोः' जगत्कारणभूतसूत्रात्मरूपत्वाज्जगदेकदेशानां विद्युदादीनां जन्मविनाशौ वाय्वधीनौ । पूर्वं विद्युदादीनामग्न्यन्तानां क्रमेण विनाशो दर्शित ॥

[वायु के चारों ओर विलुप्त होने वाले] ये ये देवता हैं अत एव ये [वायु से ही] पुनः उत्पन्न होते हैं ।

इदानीमग्न्यादीनां विद्युदन्तानां क्रमेणोत्पत्तिं विवक्षुरग्नेरुत्पत्तिं दर्शयति—

**वायोरग्निर्जायते; प्राणाद्धि बलान्मथ्यमानोऽधिजायते; तं दृष्ट्वा ब्रूयाद-ग्निर्जायतां मा मे द्विषञ्जन्यत एव पराङ्प्रजिघ्यत्वित्यतो हैव पराङ्प्रजिघ्यति ॥** इति ।

योऽयमग्निः, सोऽयं वायोर्जायते । कथमेतदिति ? तदुच्यते । 'प्राणाद्' बलात्प्राणवायुसंबन्धिशक्तिवशान्मथ्यमानोऽयमग्निरधिकत्वेन जायते[1] । 'तं' जायमानमग्निं दृष्ट्वा सोऽयमग्न्यादिजन्मध्याताऽग्निरित्यादिकं मन्त्रं जपेत् । अयमग्निर्वायोः सकाशात् सुखेन जायताम् । 'मे' 'द्विषन्' मदीयः शत्रुः 'मा जनि' मोत्पद्यताम् । अत एव मत्तः 'पराङ्-प्रजिघ्यतु' विमुखो भूत्वा प्रकर्षेण गच्छतु । 'इति' एतस्मिन् मन्त्रे जपिते सति 'अतः' जपितुः सकाशाच्छत्रुर्विमुखो भूत्वा दूरे गच्छति ॥

वायु से अग्नि उत्पन्न होता है । क्योंकि प्राण वायु की शक्ति से मथित होकर ही अग्नि उत्पन्न होता है । उस [उत्पन्न अग्नि] को देखकर वह [अग्नि आदि देवों के जन्म का ध्यान करने वाला साधक] कहे कि 'यह अग्नि [वायु के साहाय्य से सुखपूर्वक] भले उत्पन्न हो जाय किन्तु मेरा शत्रु न उत्पन्न हो । अत एव वह मुझसे पराङ्मुख होकर दूर चला जाय'–इस मन्त्र के जप होने पर जपने वाले से शत्रु विमुख होकर दूर चला जाता है ।

आदित्यस्योत्पत्तिं दर्शयति—

**अग्नेर्वा आदित्यो जायते; तं दृष्ट्वा ब्रूयादादित्यो जायतां मा मे द्विषञ्जन्यत एव पराङ्प्रजिघ्यत्वित्यतो हैव पराङ्प्रजिघ्यति ॥** इति ।

रात्रावग्निं प्रविष्ट आदित्यः परेद्युरग्नेर्जायते । अत एवाहन्यग्निस्तेजोरहितः, सूर्योऽधिकतेजा भासते[2] । अन्यत्पूर्ववत् ॥

अग्नि से आदित्य उत्पन्न होता है [रात्रि में अग्नि में प्रविष्ट आदित्य दूसरे दिन अग्नि से उत्पन्न होता है इसीलिए दिन में अग्नि तेजरहित होता है] । उस [उत्पन्न आदित्य] को देखकर वह [साधक] कहे कि 'यह आदित्य भले ही उत्पन्न हो जाय किन्तु

१. 'शमीगर्भादग्निं मन्थते'–इति तै० ब्रा० १.१.९.१ द्रष्टव्यम् ।
२ द्र० इत: पूर्वम्, पृ० १३३० टि० १ ।

मेरा शत्रु न उत्पन्न हो। अत एव वह मुझसे पराङ्मुख होकर दूर चला जाय'—इस प्रकार मन्त्र के जप से जप करने वाले के पास से शत्रु विमुख होकर दूर चला जाता है।

चन्द्रमस उत्पत्तिं दर्शयति—

आदित्याद्वै चन्द्रमा जायते;[1] तं दृष्ट्वा ब्रूयाच्चन्द्रमा जायतां मा मे द्विषञ्जन्यत एव पराङ्प्रजिष्यतित्यतो हैव पराङ्प्रजिष्यति ॥ इति ।

तिथावमावास्यायामादित्ये प्रविष्टश्चन्द्रमाः शुक्लपक्षप्रतिपद्यादित्याज्जायते । अन्यत् पूर्ववत् ॥

आदित्य से चन्द्रमा उत्पन्न होता है। [अमावस्या तिथि को आदित्य में प्रविष्ट चन्द्रमा शुक्ल पक्ष में प्रतिपदा को उत्पन्न होता है]। उस [उत्पन्न चन्द्रमा] को देखकर वह [साधक] कहे कि 'यह चन्द्रमा भले ही उत्पन्न हो जाय किन्तु मेरा शत्रु न उत्पन्न हो। अत एव वह मुझसे पराङ्मुख होकर दूर चला जाय'—इस प्रकार मन्त्र के जप से जप करने वाले के पास से शत्रु विमुख होकर दूर चला जाता है।

वृष्टेरुत्पत्तिं दर्शयति—

चन्द्रमसो वै वृष्टिर्जायते,[2] तां दृष्ट्वा ब्रूयाद् वृष्टिर्जायतां, मा मे द्विषञ्जन्यत एव पराङ्प्रजिष्यतित्यतो हैव पराङ्प्रजिष्यति ॥ इति ।

जलमये चन्द्रमण्डले प्रविष्टा वृष्टिः कालान्तरे चन्द्राज्जायते । अन्यत्पूर्ववत् ॥

[जलमय चन्द्रमण्डल में प्रविष्ट वृष्टि कालान्तर में उस] चन्द्रमा से वृष्टि उत्पन्न होती है। उस [उत्पन्न वृष्टि] को देखकर वह [साधक] कहे कि 'वृष्टि भले ही उत्पन्न हो

---

१. "अथ सोमो वृष्णो अश्वस्य रेतः'— इति ऋ० १.१६४.३५ । किञ्च 'अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते, तदेतेनोपेक्षितव्यम्, आदित्यतोऽस्य दीप्तिर्भवतीति । 'सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः' (वा० सं० १८.४०) इत्यपि निगमो भवति''' । अत्राह गोरमन्वत'–इति (ऋ० १.८४.१५)''–इति निरु० २.२.२ ।

२. 'पर्जन्याद् वै वृष्टिर्जायते —शत० ब्रा० १२.१.१.३ । रसात्मकत्वाद् चन्द्रमसः रसानुप्रदानसामर्थ्य.'—इति (नि० ११.१.६) । चन्द्रमः पदस्य निर्वचनम्—निरु० ११.१.५; तै० ब्रा० २२.१० । 'अभ्राद् वृष्टिरिवाजनि'—इति ऋ० ७.९४.१ । 'सौम्या ह्यापः'—इति द्र० इतः पूर्वम्, पृ० ५५ । वस्तुतः सूर्यस्यैव मुख्य वृष्टिप्रदत्वम् । यथाहि 'अग्निर्वा इतो वृष्टिमुदीरयति, मरुतः सृष्टां नयन्ति, यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्त्ततेऽथ वर्षति'—इत्यादि तै० सं० २.४.१० द्रष्टव्यम् । इहैव उक्तम्—'असाविमा वृष्ट्याम्युनर्थ्यभिजिघ्रति'—इति, द्र० इतः पूर्वम्, पृ० ५६ ।

जाय किन्तु मेरा शत्रु न उत्पन्न हो। अत एव वह मुझसे पराङ्मुख होकर दूर चला जाय'—इस प्रकार मन्त्र के जप से जप करने वाले के पास से शत्रु विमुख होकर दूर चला जाता है।

विद्युदुत्पत्तिं दर्शयति—

**वृष्टेर्वै विद्युज्जायते,[1] तां दृष्ट्वा ब्रूयाद् विद्युज्जायतां मा मे द्विषञ्जन्यत एव पराङ्प्रजिघ्यत्वित्यतो हैव पराङ्प्रजिघ्यति ॥ इति ।**

वृष्टौ प्रविष्टा विद्युत्पुनरपि कदाचित्प्रसक्तायाः वृष्टेर्जायते । अन्यत्पूर्ववत् ॥

[कभी वृष्टि में प्रविष्ट हुई] विद्युत वृष्टि से उत्पन्न होती है। इस [उत्पन्न विद्युत] को देखकर वह [साधक] कहे कि 'विद्युत भले ही उत्पन्न हो जाय किन्तु मेरा शत्रु न उत्पन्न हो। अत एव वह मुझसे पराङ्मुख होकर दूर चला जाय'—इस प्रकार मन्त्र के जप से जप करने वाले के पास से शत्रु विमुख होकर दूर चला जाता है।

उक्तमर्थमुपसंहरति—

**स एष ब्रह्मणः परिमरः ॥ इति ।**

यः वायुसम्बन्धी परिमरनामकः कर्मविशेष उक्तः[2], 'स एष' ध्यानरूपो जपरूपश्च इत्यर्थः ॥

वह यह [ध्यान रूप और जप रूप] 'ब्रह्म परिमर' [नामक कर्मविशेष] है।

तमेतं कर्मविशेषमुदाहरणमुखेन प्रशंसति—

**तमेतं ब्रह्मणः परिमरं मैत्रेयः कौषारवः सुत्वने कैरिशये भार्गायणाय राज्ञे प्रोवाच, तं ह पञ्च राजानः परिमम्रुस्ततः सुत्वा महज्जगाम ॥ इति ।**

उक्तं कर्मविशेषं कुषारवपुत्रो मैत्रेयनामको महर्षिः सुत्वनाम्ने राज्ञे प्रोवाच । कीदृशाय सुत्वने ? किरिशस्यापत्यं कैरिशिः, तस्मै 'कैरिशये', भर्गस्य गोत्रापत्यं भार्गायणः, तस्मै 'भार्गायणाय'। 'तं' सुत्वनामकं राजानं 'परितः' सर्वदिक्षु वर्तमानाः पञ्चसङ्ख्याकाः द्वेषिणो राजानो 'मम्रुः' मृताः । ततः 'सुत्वा' राजा 'महत्' प्रौढं निःसपत्नं पदं जगाम ॥[3]

---

१ 'विद्युद् वा अपां ज्योतिः'—इति शत० ब्रा० ७ ५ २ ४९ । 'आपो वै वृष्टिः' इति च तत्रैव ८ २ ३ ४ । 'आदित् प्रत्नस्य रेतसो ज्योतिः पश्यन्ति'—इति तै० सं० ८ २ ६ ३० । निरुक्तेऽपि ४ २ ६ द्रष्टव्यम् । आदिदितिमन्त्रस्य ब्रह्मपरं व्याख्यानमपि शङ्करेण कृतम् (छा० उप० ३ १७ ७) ।

२ द्र० इतः पूर्वम् पृ० १३२७ ।

३. 'षड् वै ब्रह्मणो द्वारोऽग्निर्वायुरापश्चन्द्रमा विद्युदादित्यः'—इत्यादि (षड्० ब्रा० ११ ४ ४ १) ग्रन्थ इहालोच्यः ।

उस इस 'ब्रह्म परिमर' को कुषारव के पुत्र मैत्रेय नामक महर्षि ने किरिश के पुत्र भर्ग गोत्र में उत्पन्न सुत्वन नामक राजा को बताया था। उसके चारों तरफ पाँच राजा मर गए। तब से 'सुत्वा' नामक राजा बड़े पद को अर्थात् शत्रुविहीन पद को प्राप्त हुए।

उक्त कर्मविशेषमनुष्ठातुर्व्रतविशेषं विधत्ते —

तस्य व्रतं,—न द्विषतः पूर्वं उपविशेद् यदि तिष्ठन्तं मन्येत तिष्ठेतैव, न द्विषतः पूर्वः संविशेद्, यद्यासीन मन्येताऽऽसीतैव; न द्विषतः पूर्वः प्रस्वप्याद, यदि जाग्रतं मन्येत जागृयादेव ॥ इति।

'तस्य' अनुष्ठानुरेतद्व्रतमुच्यते। एतदीयो द्विषन् यदोपविशति, ततः प्राक् स्वयं न 'उपविशेत्'। किंतु चारमुखेन तदीयं वृत्तान्तं विचारयेत्। यदि द्विषन्तं तिष्ठन्तं मन्येत, तदानीं स्वयमपि 'तिष्ठेतैव'। तथा यदा द्विषञ्छयनं करोति, ततः प्राक् स्वयं न 'संविशेत्' शयनं न कुर्यात्। यदि द्विषन्तमुपविष्टं मन्येत, तदानीं स्वमप्युपविशेदेव। तथा द्विषन् यदा निद्रां करोति, ततः प्राक् स्वयं न 'प्रस्वप्यात्'। किंतु यदि द्विषन्तं जाग्रतं मन्येत तदानीं स्वयमपि जागृयादेवेति ॥

[अनुष्ठान करने वाले का व्रत]—

उस [अनुष्ठान करने वाले] का व्रत कहते हैं—[साधक] द्वेष करने वाले शत्रु के [बैठने के] पहले न बैठे। यदि ऐसा समझे कि द्वेषी शत्रु खड़ा है तो स्वयं भी खड़ा रहे और द्वेष करने वाले शत्रु के [लेटने से] पहले स्वयं न लेट जाय। यदि ऐसा समझे कि [शत्रु] बैठा है, तब बैठ जाय। विद्वेषी शत्रु के [निद्रा लेने से] पहले न सोए। यदि यह समझे कि शत्रु जागता है तो स्वयं भी जागता रहे।

एवं व्रतमाचरतः फलं दर्शयति—

अपि ह यद्यस्याश्ममूर्धा द्विषन् भवति क्षिप्रं हैवैनं स्तृणुते, स्तृणुते ॥ २८ ॥

॥ इति 'ऐतरेयब्राह्मणे' अष्टमपञ्चिकायां पञ्चमोऽध्यायः ॥ ५ ॥

'अस्य' राज्ञोऽनुष्ठातुः 'द्विषन्' शत्रुर्यदि 'अश्ममूर्धा' पाषाणसदृशशिरस्को भवति, अतिप्रबल इत्यर्थः। तथाऽप्ययं कर्मविशेषः शीघ्रमेव 'एनं' शत्रुं 'स्तृणुते' हिनस्ति। अभ्यासोऽध्यायसमाप्त्यर्थः ॥

॥ इति श्रीमत्सायणाचार्यविरचिते माधवीये 'वेदार्थप्रकाशे' ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकायां पञ्चमाध्याये (चत्वारिंशाध्याये) पञ्चमः खण्डः ॥५॥ (२८) [२८५]

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वर ॥

॥ इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कभूपालसाम्राज्यधुरन्धरमाधवाचार्यादेशतो सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश' नाम भाष्य ऐतरेयब्राह्मणभाष्ये अष्टमपञ्चिकाया (चत्वारिंशाऽध्याय ) पञ्चमोऽध्याय ॥ ५ ॥

॥ चतुर्थदशक समाप्तम् ॥

इस प्रकार यदि उस [राजा के अनुष्ठाता] का द्वेषी शत्रु पत्थर के समान भी कड़े सिर वाला हो, तो भी यह [ब्रह्मपरिमर नामक कर्मविशेष] उसे शीघ्र ही मार डालता है ।

॥ इस प्रकार चालीसवें (पञ्चम) अध्याय के पाँचवें खण्ड को हिन्दी व्याख्या पूर्ण हुई ॥५॥

[अयात स्तुतशस्त्रयोश्चत्वारि (१) । अयात पुनरभिषेकस्य सप्त (२ । अयात ऐन्द्रस्त्रीणि (३) । स य इच्छेन्नव (४) । अयात पुरोधाया पञ्च (८) ॥ ५ ॥[1]

अयात स्तुतशस्त्रयो , पर्यू गु प्र धन्व, एतेन ह वा अष्टौ ॥ ८ ॥[2]]

॥ इत्यैतरेयब्राह्मणेऽष्टमपञ्चिका समाप्ता ॥ ८ ॥

(पञ्चिकाङ्का —८ । अध्यायाङ्का —४० । खण्डाङ्का —२८५)

॥ समाप्तिमगमदिद सायणाचार्यभाष्यसहितम 'ऐतरेयब्राह्मणम्' ॥

[आठवीं पञ्चिका में 'अयात स्तुतशस्त्रयो' इत्यादि चार खण्डों का प्रथम (छत्तीसवाँ) अध्याय है । 'अयात पुनरभिषेकस्य' इत्यादि सात खण्डों का द्वितीय (सैंतीसवाँ) अध्याय है । 'अयात ऐन्द्र' इत्यादि तीन खण्डों का तृतीय (अड़तीसवाँ) अध्याय है । 'स य इच्छेत्' इत्यादि नौ खण्डों का चतुर्थ (उन्तालीसवाँ) अध्याय है और 'अयातः पुरोधाया.' इत्यादि पाँच खण्डों का पञ्चम (चालीसवाँ) अध्याय है ।

इस प्रकार 'अयातः स्तुतशस्त्रयोः' इत्यादि खण्डों का प्रथम दशक है, 'पर्यू षु प्र धन्व' इत्यादि खण्डों का द्वितीय दशक है और 'एतेन ह वा' इत्यादि खण्डों का तृतीय अष्टक है, अर्थात् आठवीं पञ्चिका में कुल अट्ठाइस खण्ड हैं ।

---

१ पृ० १२२५, १२४०, १२७४, १२८५, १३१४ (४+७+३+९+५=२८ ख०)।

२ पृ० १२२५, १२६७, १३०० (१० + १० + ८ = २८ ख०) । द्र० इत पूर्वम्, पृ० १९० टि० ।

इस प्रकार सम्पूर्ण ऐतरेय ब्राह्मण में आठ पञ्चिका (= चालीस अध्याय) और कुल दो सौ पचासी खण्ड हैं ]।

॥ इस प्रकार ऐतरेय ब्राह्मण के अष्टम पञ्चिका की डॉ० सुधाकर
मालवीय कृत हिन्दी व्याख्या पूर्ण हुई ॥ ८ ॥

यज्ञरूपं परं विष्णुं नमस्कृत्य श्रियं तथा।
भागीरथ्यास्तटे काश्यां लङ्काक्षेत्रे सुशोभने ॥ १ ॥
श्रीमद्रामकुबेरस्य मालवीयस्य सूनुना।
सुधाकरेण रचिता व्याख्या हिन्दी सुसंगता ॥ २ ॥
व्याख्यातेऽस्मिन् सायणार्यैर्नूनमन्यो वदेत् किमु।
समुद्धते महावाते मुखवान् करोति किम् ॥ ३ ॥
तथापि गुरुतेलङ्ग श्रीमुखात् यच्छ्रुतं मया।
तदनुस्मृत्य रचिता हिन्दीव्याख्या यथामति ॥ ४ ॥
ब्राह्मणारण्यरद्रष्टे मातृशोकोपहारिणे।
महिदासैतरेयाय नमो भूयो नमो नमः ॥ ५ ॥

॥ इस प्रकार 'ऐतरेयब्राह्मण' के द्वितीय भाग की महाकवि प्रोफेसर प० रामकुबेर
मालवीय (भूतपूर्व साहित्यविभागाध्यक्ष, काशी हिन्दू विश्वविद्यालय एवं
सम्पूर्णानन्द संस्कृत विश्वविद्यालय) के आत्मज डॉ० सुधाकर
मालवीय कृत 'सरला' हिन्दी व्याख्या पूर्ण हुई ॥

—॰—

# परिशिष्टम्

ऐतरेय-ब्राह्मण-क्रोड़पत्रम्

ऐतरेय-ब्राह्मण-खण्डानुक्रमणिका

ऐतरेय-ब्राह्मण-ऋग्वेदमन्त्रप्रतीकानां वर्णानुक्रमणिका

ऐतरेय-ब्राह्मण-व्यक्तिसूची

पारिभाषिक-शब्द-कोशः

# ऐतरेय-ब्राह्मण-क्रोड़पत्रम्

— ० —

( शिल्पशस्त्रेषु[1] मैत्रावरुणस्य[2] )

॥ वालखिल्यशस्त्रम्[3] ॥

—: ० :—

( हिङ्कार[4] )

॥ हिं३म् ॥

( अभिहिङ्कार[5] )

॥ भूर्भुवस्स्वरो३म् ॥

( आहाव[6] )

॥ अध्वर्यो शोशोसावो३म् ॥

---

१. 'शिल्पानि शसन्ति'—इत्यादि २ भा० १०३० पृ० द्रष्टव्यम् ।

२ 'प्रशास्ता ब्राह्मणाच्छंस्यच्छावाक इति शस्त्रिणो होत्रका '—इति आश्व० श्रौ० ५-१-१० । प्रशास्तेति मैत्रावरुणस्य सञ्ज्ञान्तरम् ।

३ 'त उ तृतीयसवने वज्रेण वालखिल्याभिर्वाच कूटेनैकपदया'—इत्यादि द्वि० भा० १०१३ पृ० । हिङ्कारादिर्वषट्कारान्तो वालखिल्यशस्त्रप्रयोग एष ।

४. 'हिं३ इति हिङ्कृत्य'—इति आश्व० श्रौ० १-२-३ । 'हिङ्कार इतरासा दशम '—इति ऐ० ब्रा०, प्र० भा० ३७९ पृ० ।

५. 'हिं ३ इति हिंकृत्य भूर्भुव स्वरोमिति जपति'—इति, 'एषोऽभिहिङ्कारः'—इति, 'शस्त्रेष्वेव होत्रकाणामभिहिङ्कार '—इति च आश्व० श्रौ० १-२-३, ४, २६ । 'सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतयस्तस्मादेषैव यज्ञे प्रायश्चित्ति' कर्तव्या'—इति च ऐ० ब्रा०, द्वि० भा० ८८८ पृ० ।

६. "अध्वर्यो शोशोसावोमित्याह्वयते तृतीयसवने सप्ताक्षरेण"—इति ऐ०ब्रा० १ भा० ४२१-४२५ पृ०। "अध्वर्यो शोशोसावोमिति तृतीयसवने शस्त्रादिष्वाहाव "—इति च आश्व० श्रौ० ५.१८.४।

( प्रतिगर[1] )

॥ शंसा मोदैवो३म् ॥

( स्तोत्रिय[2] )

एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।
एभिर्वर्द्धास इन्दुभिो३म्[3] ॥
यत्र क्व च ते मनो दक्षं दधस उत्तरम् ।
तत्रा सदः कृणवसो३म् ॥
नहि ते पूर्तमक्षिपद् भुवन्नेमानां वसो ।
अथा दुवो वनवसो३म्[4] ॥

( स्तोत्रिय[5] )

अग्ने त्वं नो अन्तमः ।
उत त्राता शिवो भवा वरूथ्योे३म् ॥

१ "शसामोदैवोमिति अध्वर्यु प्रतिगृणाति पच्चाक्षरेण"—इति ऐ० ब्रा १ भा० ४२२ पृ० ।

२ 'आत्मा वै स्तोत्रिय प्राणा वालखिल्या"—इत्यादि ऐ० ब्रा० २ भा० १०२४ पृ० । "अथ कस्मादस्याग्नेयौ स्तोत्रियानुरूपौ भवत इति"—इत्यादि च २ भा० ९६२-९६३ पृ० । 'तेषा तृचा स्तोत्रियानुरूपा शस्त्रादिषु सर्वत्र"—इति आश्व० श्रौ० ५. १०. १८ । आग्नेयौ = 'एह्युषु', 'आग्निरगामि' ।

३. "समाप्तौ प्रणवेनावसानम्"—इति, "ऋगन्तमोङ्कार त्रिमात्र कृत्वा"—इति च आश्व० श्रौ० १ २. १३, १० ।

४. ऋ० ६ १६ १६, १७, १८ ।

५. षष्ठेऽहनि तृतीयसवने मैत्रावरुणस्य अग्ने त्वमिति द्वे, त त्वा शोचिष्ठेत्येका । एव मिलिता द्विपदस्तृच स्तोत्रिय । तथैव सूत्रितमाश्वलायनेन—"मैत्रावरुणस्याग्ने त्व नो अन्तम अग्ने भव सुसमिधा समिद्ध इति स्तोत्रियानुरूपौ । अथ वालखिल्या विहरेत्"—इति ८.२,१ ।

वसु॑र॒ग्निर्वसु॑श्रवाः ।
अच्छा॑ नक्षि द्यु॒मत्त॑मं र॒यिं दो३म् ॥
तं त्वा॑ शोचिष्ठ दीदिवः ।
सु॒म्नाय॒ नू॒नमी॑महे॒ सखि॑भ्योऽम्[1] ॥

( स्तोत्रिय[2] )

एह्यू॒ षु ब्रवा॑णि॒ ते ऽग्न इ॒त्येत॑रा॒ गिरः॑ ।
ए॒भिर्व॑र्द्धास॒ इन्दु भो३म् ॥
यत्र॒ क्व॑ च ते॒ मनो॒ दक्षं॑ दधस॒ उत्त॑रम् ।
तत्रा॒ सदः॑ कृणवसो३म् ॥
न॒हि ते॑ पू॒र्तम॑क्षि॒पद् भुव॑न्नेमानां वसो ।
अथा॒ दुवो॑ वनवसो३म्[3] ॥

( अनुरूप[4] )

आग्निर॑गामि॒ भार॑तो वृ॒त्रहा पु॑रु॒चेत॑नः ।
दिवो॑दासस्य॒ सत्प॑तो३म् ॥
स हि विश्वाति॒ पार्थि॑वा र॒यिं दाश॑न्महित्व॒ना ।
व॒न्वन्न॑वा॑तो अस्तृ॑तो३म् ॥
स प्र॒त्नव॒न्नवी॑यसाऽग्ने॑ द्यु॒म्नेन॑ सं॒यता॑ ।
बृ॒हत्त॑तन्थ भा॒नुनो३म्[5] ॥

---

१. ऋ० ५. २४. १, २, ४ ।

२. एष च स्तोत्रियस्तृच, अस्यानुरूप आग्निरगामीति । तथाहि—"मैत्रावरुणस्य"—इत्यधिकृत्य, 'एह्यूषु ब्रवाणि ते, आग्निरगामि भारत"—इति आश्व० श्रौ० ७ ८ १ ।

३ ऋ० ६. १६. १६, १७, १८ ।

४ "स्तोत्रिय स्तोत्रियस्यानुरूप कुर्वन्ति"—इत्यादि ऐ०ब्रा० २ग ० ९२० पृ० । पूर्व टीप्पणी २ चात्र द्रष्टव्या ।

५. ऋ० ६. १६. १९, २०, २१ ।

( अनुरूपः[1] )

अग्न॒ भर्व सु॒षमि॒धा समि॑द्धः ।
उ॒त ब॒र्हिरु॑वि॒या वि स्तृ॑णीतो३॑म् ॥
उ॒त द्वार॑ उश॒तीर्वि श्र॑यन्ताम् ।
उ॒त दे॒वाँ उ॑श॒त आ व॑हे॒ हो३म् ॥
अग्ने॑ वी॒हि ह॒विषा॒ यक्षि॑ दे॒वान् ।
स्व॑ध्व॒रा कृ॑णुहि जातवेदो३म्[2] ॥

( अनुरूप[3] )

आग्निर॑गामि॒ भार॑तो वृत्र॒हा पु॑रु॒चेत॑नः ।
दिवो॑दासस्य॒ सत्प॑तो३म् ॥
स हि विश्वाति॒ पार्थि॑वा र॒यिं दाश॑न्महित्व॒ना ।
व॒न्वन्नवा॑तो॒अ स्तृ॑तो३म् ॥
स प्र॑त्न॒वन्नवी॑यसाग्ने॑ द्यु॒म्नेन॑ सं॒यता॑ ।
बृ॒ह॑त्तत॒न्थ भा॒नुनो॑३म्[4] ॥[5]

( पुनराहाव[6] )

॥ अध्वर्यो शोशोसावो॑३म् ॥

---

१. १३४० पृष्ठाया ५ टीप्पणी द्रष्टव्या ।
२ ऋ० ७ १७ १, २. ३ ।
३. १३४१ पृष्ठाया २ टीप्पणी द्रष्टव्या ।
४. ऋ० ६. १६. १९, २०, २१ ।
५ "अत ऊर्ध्वमनुरूपेभ्यो विहृतानि शिल्पानि शंसेयु"—इति आश्व० श्रौ० ८. २. २ ।
६. स्तोत्रियानुरूपेभ्य प्रतिपदनुचरेभ्य प्रगाथेभ्यो धाय्याभ्य इति पृथगाह्वानम्—इति आश्व० श्रौ० ५. १०. १३ ।

( पुन' प्रतिगर' )

॥ शंसा मोदैवो३म् ॥

( वालखिल्याना षष्ठो विहरणम्[१] )

अभि प्र वंः सुराधंस मिन्द्रंस्य समिधो' महीः ।
शतानीका हेतयो' अस्य दु ष्टरा इन्द्रमच' यथां विदो३म् ॥
यो जंरितृभ्यो' मघवा पुरु वसुर्यं दा' सु ता अमन्दिषुः ॥
गिरिर्न भु ज्मा मघवंत्सु पिन्वत सहस्रेणेव शिक्षतो३म् ॥
इन्द्रो' विश्वस्य गोपतो४म्[२] ॥ १[३] ॥

प्र सुश्रु तं सुराधंस हन्तिं वृत्राणि दाशुषे' ।
शतानी'केच प्र जिंगाति धृष्णयार्चा शक्रमभिष्टयो३म् ॥
यः सुन्वते स्तुवते काम्य' वसु दत्राणि पुरुभो जसः ।
गिरेरिव प्र रसा अस्य पिन्विरे सहस्रेणेव मंहतो३म् ॥
इन्द्रो' विश्वस्य भूपतो४म् ॥ २ ॥

आ त्वा सु तास इन्दवो मर्व्वः क्षरन्ति धीतयः ।
अने हसं वो हवमानमू तये मदा य इन्द्र गिर्वणो३म् ॥
आपो न वज्रिन्न न्वोक्य'१ सर उपस्तोत्रेषु' दधिरे ।
आ त्वा वसो हवमानास इन्दवः पृणन्ति शूर राधसो३म् ॥
इन्द्रो' विश्वस्य चेतनो४म् ॥ ३ ॥

---

१. ऐ० ब्रा० २ भा० १०१३ पृ० १५ पक्तितो द्रष्टव्यम् ।

२ ऐ० ब्रा० २ भा० १०१५ पृ० १२-२६ पक्तयो द्रष्टव्या । सैषपदा प्रगाथान्तेऽवसानमिति चतुर्मात्र प्रणव सर्वत्र । "चतुर्मात्रोऽवसाने" —इति आश्व० श्रौ० १ २ १४ ।

३ एष प्रगाथाङ्क । वालखिल्यसूक्ताना प्रथमादिषु चतुर्षु सूक्तेषु ऋचो दश दश श्रूयन्ते, तत पञ्चमषष्ठयोरष्टावष्टाविति तासा सङ्कलनया षट्-पञ्चाशद् । तेषा द्वयोर्द्वयो प्रग्रथनेन अष्टाविंशति प्रगाथा सम्पद्यन्ते । ऋ० ८ ४९ वालखिल्यम् ।

